॥ श्रीः ॥

भट्टोजिदीक्षितप्रणीता

# सिद्धान्तकौमुदी ।

## तत्त्वबोधिनीसुबोधिनीव्याख्याविभूषिता ।



अत्र

श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानेन्द्रसरस्वतीविरचिता तत्त्वबोधिनीव्याख्या लौकिके भागे, वैदिकप्रक्रियाभागे श्रीमज्जयकृष्णकृता सुबोधिनीव्याख्या, श्रीमद्भैरवमिश्रकृता चन्द्रकलाऽऽख्या लिङ्गानुशासनव्याख्या, सभाष्या पाणिनीयशिक्षा, अष्टाध्यायीसूत्रपाठः, उणादिपञ्चपदीसूत्रपाठः, फिट्सूत्रपाठः, गणपाठः, धातुपाठः, लिङ्गानुशासनं च, अकाराद्यनुक्रमेण कौमुदीगताष्टाध्यायीसूत्राणां क्रमाङ्कसूत्राङ्कसूची, वार्तिक-गणसूत्र-परिभाषाणां समुच्चितसूची, धातूनां क्रमाङ्कसूची, उणादिसूत्राणां सूची, फिट्सूत्राणां सूची—इति कोशपञ्चकस्य च संग्रहः ।

सेयं

**परशुरामक्षेत्राभिजनजोशीत्युपाभिधश्रीभिकाजीपन्ततनयेन**
**शास्त्राचार्येण भार्गवशास्त्रिणा**

**टिप्पण्यादिभिः समलङ्कृत्य साभिप्रायं संशोधिता ।**

( अष्टमावृत्तिः । )

सत्यभामाबाई पाण्डुरङ्ग इत्येताभिः,
निर्णयसागरमुद्रणालये तत्रैव मुद्रयित्वा प्रकाशं नीता ।

शाके १८६४ खिस्ताब्दः १९४२.

# प्रास्ताविकम् ।

तत्रभवन्तः संस्कृतभाषाप्रणयिनो धीराः प्रमोदभरेणैतद्वेद्यते—यत्किल तत्त्वबोधिनीविभूषिता सिद्धान्तकौमुदी विदुषां संमोदजननी शिष्याणां व्याकरणप्रवेशदायिनी निर्णयसागराधिपतिभिर्महता प्रयत्नेन संमुद्र्य इदानीं श्रीमत्करकमलयोर्विनिवेश्यते—इति ।

नैतदविदितं विदुषां यत् मुद्रितमपि पुस्तकमशुद्धिबहुलमनर्थकरमत्यन्तोपतापवहञ्चेति । अद्य यावत् अस्मिन् मुद्रणालये बहुवारं मुद्रिताऽपीयं तत्त्वबोधिनीसंवलिता सिद्धान्तकौमुदी अशुद्धिबाहुल्यात् क्रमाङ्कमेलनाद्यभावात् ग्रन्थत्रुट्याद्यनेकदोषदूषितत्वाच्च विद्वन्मानसहंसानां वर्षारात्रिरिव क्लेशदायिन्येवाभूत्, न परं सुसुखावहा । अत एवैतन्मुद्रणालयाधिपतयो नातीवप्रसन्ना विद्वत्सेवैकासक्तमनसः शुद्धां त्रुट्यादिदोषरहितां विद्वन्मनःप्रसादिनीमेतां साधयितुमस्मान् संज्ञापयन्ति स्म ।

नन्वन्येषु मुद्रणालयेषु पण्डितकृतपरिश्रमभरेण चेयं मुद्रिता विद्वज्जनमनःसंतापहारिणी स्यात्—इति वृथैवायं परिश्रमः—इति चेन्न; अपारेऽस्मिन् भारतवर्षेऽपि न बहुत्रेयं सम्मुद्रितेति निरुपमौदासीन्येन त्रपानतं नः शिरो न किञ्चिदुच्छ्वसतीव । अपि च यत्रैवेयं महाभागैर्महता प्रयत्नेन मुद्रिताऽपि कृतबुद्धिभिरकृतप्रयत्नत्वात् समयानुकूल्याभावात् मुद्रणाक्षरविन्यासलालित्याभावाद्वा नास्यास्तुलामप्यधिरोहतीति निश्शङ्कं प्रतिब्रूमः । समधिगमिष्यन्ति चास्या दर्शनेनैव तत्रभवन्तः सुधियोऽनयोरतुल्ययोगिताम् ।

ननु 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्' इति व्याकरणप्रयोजनं निर्दिशता तत्र भगवता भाष्यकृता 'ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इत्यादिश्रुतेः सन्ध्योपासनादाविव प्रत्यवायपरिहारार्थितयैव व्याकरणेपूत्तमाधिकारिप्रवृत्तिसम्भवेऽपि मन्दाधिकारिणां प्ररोचकप्रयोजनप्रतिपत्तिप्रवणत्वात्, व्यवहितेषु स्वर्गापूर्वादिषु अनाश्वासात्, तेषामपि प्रवृत्तिः प्रवर्तितेति उत्तममध्यममन्दाधिकारिणः सर्वेऽपि व्याकरणाध्ययने बद्धपरिकराः समभूवन् । पुरातने काले ह्येतत्संवृत्तम् ।

इदानींतने कलिमलमलीमसे श्रद्धाविरहिते देहात्मवादप्रचुरे अतिकराले काले व्याकरणमेव भाषायाः प्रतिबन्धकमिति केचन वदन्ति । तेषामयमाशयः—यथा प्राकृतादिभाषाः प्रथममल्पा अपि महद्रूपमादधते । यदर्थे तासु तासु भाषासु शब्दा न भवेयुस्ते ते शब्दा अन्यभाषाभ्यो ग्रहीतव्याः, विधातव्या वा तत्तदर्थकाः शब्दाः । एवमेव सर्वासामपि भाषाणां समृद्धिरवश्यं कल्पनीया । न हि काचिदपि भाषा सम्पन्नतरैवोत्पद्यते, न वा पुरुषप्रयत्नाभावेऽपि सम्पन्ना संपत्स्यते । एवं च इदानींतनोपलभ्यमानभाषाशब्दाः सर्वे पुरुषकृता एव । न च ते केनाप्येकेन पुरुषविशेषेण कर्तुं शक्याः, न वा कतिपयैर्वा पुरुषैरेते निर्मीयन्ते । अतो यावदयं संसारः संस्थियते तावदखिलास्वपि भाषासु नूत्ना नूत्नाः शब्दाः प्रयत्नविशेषनिर्मिताः प्रभवन्तितराम् । यदि च कस्याश्चन भाषाया व्याकरणं विदधाति कश्चित् तेनापि—अस्यामेते एव शब्दाः, एतावन्तश्च धातवः, एतान्येव च तानि रूपाणि—इति कूपमण्डूकवत् नैवं वक्तुं प्राभूयेत । गीर्वाणवाण्याश्चैतद्विरूपमिव यदत्र इन्द्रचन्द्राद्यनेकैर्व्याकरणैर्निरुद्धेयं आगमनिर्गमरोधेन निरुद्धजलसंचारा सरसीव अनुपभोग्यपयःप्रसरा समजनि । पाणिनीयव्याकरणेन च संस्कृतभाषासरसः संस्राव्यमाणान् स्रावान् संरोधयितुं सुधासंक्षेपः कृत इव दृरीदृश्यते । एवं च व्याकरणेनास्याः किमिव नापकृतमिति विदाङ्कुर्वन्तु तत्त्वविदः—इति ।

नूनमयमत्युत्तर आपातरमणीयोऽयमाक्षेपो ह्याधुनिकवीराणाम् । व्याकरणेन निरुद्धसञ्चारे वाक्प्रसरे वाक्पटोः कस्य मनो न सन्ताप्येत ? कथं वा निरर्गलमनिरुद्धसञ्चारां भाषां कर्तुं स न यतेत ? अत एवेयं गीर्वाणगीर्व्याकरणशृङ्खलानिबद्धचरणा जडेव निश्चलेव न क्वापि प्रसरमलभतेति त एवात्र व्याकरणप्रणेतारः, त एवात्र व्याकरणडिण्डिममाहन्यमानाः सन्नकाशोत्तरदायिनः, न वयम्—इत्याधुनिकानामाक्षेपः ।

सत्यम् । व्याकरणेन निरुद्धः सञ्चारोऽस्या इत्येतावदापातरमणीयम् । यद्यस्यामयं प्रतिबन्धो न स्यात्, न स्याच्च यद्यस्या व्याकरणम्, तदा साम्प्रतं तत्तद्देशेषूपलभ्यमानानां महाराष्ट्र्यादिभाषाणां मृतप्रायाणां वा प्राकृतादिभाषाणां नामापि न सम्भाव्येत, यैर्नामभिस्तत्तद्देशवासिनो नरा नितरां विवदन्ति । साम्प्रतं समुपलभ्यमानानामासां पाणिनीयव्याकरणाभावेऽनुत्पत्तिरिति तु न वयं ब्रूमः, किन्तु येयं महाराष्ट्री-आङ्ग्री-वाङ्गी-मागधीत्याद्यनेकभेदभिन्ना भिन्नस्वरूपा सर्वाऽपि

संस्कृतैवेयमिति प्रव्याहरेल्लोकः । एवञ्च शुद्धा परमोदारा विशाला सर्वासां जननी चेयं गीर्वाणगीरशक्तैरभिभावुकैर्मूढैश्च विपरिवर्तिताऽद्य यावत् विलयं गताऽभूत् ।

अथ च याश्चैता अपभ्रष्टा अस्थिराः कथंचित् कतिपयधातुपरिवारभूषिताः समासाद्यनेकगुणगणरहिताः प्रयोगोपबृंहकतद्धिताद्यनेकविधप्रत्ययमण्डलशून्यास्तत्तद्देशभाषा एव सामस्त्येन शास्त्रीयलौकिकव्यवहारनिर्वाहिका अभविष्यन् । यदि चराचरनियामकेन कालेनैतत् दैवदुर्विलासादसमपादि तदा सगोत्रविवाहमभिमन्यमानानामस्पृश्यतानिर्वासनकारिबहूनां जातिभेदेष्वभेदबुद्धिं कर्तुकामानां आधुनिकऋषिब्रुवाणाञ्चपलबटूनामनायासतस्तत्कार्यं सम्पन्नमिवाभविष्यत्, यतो विलयं गतायां संस्कृतभाषायां क्व ते तत्रभवन्तो वेदाः? क्व च ता मन्वादिस्मृतयः?—इत्याद्यनेकविधा आपत्तिर्विनाशिता व्याकरणप्रणेतृभिः ।

अपिच व्याकरणकारागारपरिवर्धितेयं गीर्वाणगीर्न प्रसरमलभत, मनुष्याणामुत्क्रान्तिस्वभावात् । तथा चास्याः परिभवे न वयं दोषभाजः, किन्तु त एव व्याकरणकाराः, त एव च तदनुयायिन—इति योऽयमाक्षेप आक्षिप्यते सोऽप्यकिञ्चित्कर एव । परकीयामपभ्रष्टामुच्चारणलेखनयोर्विपर्यस्तां 'शङ्कितं भीतमुद्घुष्टमव्यक्तमनुनासिकम् । काकस्वरं शिरसिगतं तथा स्थानविवर्जितम् । उपांशुदष्टं त्वरितं निरस्तं विलम्बितं गद्गदितं प्रगीतम् ।' इत्याद्यनेकदोषपरिपूर्णामप्याङ्ग्लभाषामात्मसात्कुर्वाणैर्विद्वद्भिस्तैरेव व्यवहार्यमाणैरपि कथं व्याकरणनियमाः परिपालिताः? कथं वा तस्याः स्वरूपमविपर्यस्तम्?

ननु नैतादृशमाङ्ग्लभाषाव्याकरणं प्रभवति, किन्तु व्यवहारतो विपर्यस्तायामस्यां तदपि विपर्यस्यत्येव, इति चेत्; निपुणमवलोकनवतामेतन्निगूढं स्यात् यत् व्यवहारतो विपर्यासोऽस्या नास्मद्देशे जनिमुपयास्यति, न वा तस्याः स्वरूपविपर्यासे प्रभविष्णवो वयम् । किन्तु त एव धीरा गौरकायाः स्वदेशे प्रभविष्णवो यथारुचि विपर्यासमेष्यन्ति, न वा । वयं तु गौरकायमुखप्रेक्षिण एव इमामाङ्ग्लभाषां तथा संरक्षामो यथा श्वेतद्वीपतो भिन्नो विकारो नास्यां स्थानमपि लभेत—इति । एवञ्च द्वीपान्तरे वर्तमानानां तद्भाषाभाषिणामनेकेषां आचारमवलम्बिभिरस्माभिः किं मुनित्रयाचारा नानुवर्तयितुं शक्यन्ते, न वा मुनित्रयमात्रकृता नियमाः परिपालयितुं शक्यन्ते—इति संस्कृतद्वेषिणस्त एव प्रष्टव्याः ।

अतो नैतत्किञ्चित्—यत् व्याकरणकृतेनेयं मन्दप्रसरेति ।

अस्या मन्दप्रसरे वयमेव भारतीयाः सापराधाः, नान्ये, न च राजशासनं, नैव वा व्याकरणम् । प्रत्युत व्याकरणेन किमिव नोपकृतमस्या इति नैतन्निगूढं कृतमतीनां तद्विदाम् ।

ननु संस्कृतेयं गीरिदानीं प्रायोऽसुलभप्रचारा व्यवहाराद्विनिर्गच्छन्तीव किमिति समुपास्यते? याश्चान्या देशभाषाः सुलभप्रचाराः सुरूपा बह्वनुयायिन्यश्च भवेयुस्तासामन्यतमा काचित् देशभाषात्वेन व्यवहरणीया, तस्यामेव चाध्यात्मतत्त्वमध्ये वा मतमतान्तरीयाः सिद्धान्ता उपन्यसनीयाः । येन सा भाषाऽप्युपबृंहिता स्यात्, गीर्वाणवाण्या व्याकरणाद्यनेकक्लेशक्लिष्टाश्चास्मदीययुवानो न भवेयुः—इत्यपि नैतत्किञ्चित् । वारविलासिनीमिव अस्थिररूपां कामपि भ्रष्टभाषामाश्रित्य संस्कृतं परित्यक्तुकामास्ते काचमाश्रित्यानर्घं रत्नं सन्त्यजन्तः, चिन्तामणिं परित्यज्योपलखण्डं शिरसि दधानाः, कामदुघां गामनादृत्य स्कन्धे दण्डोपहतां गर्दभीं बहुमन्यमाना इव उपहसनीया नितरां भवेयुः ।

अपि च महानुभावा इतो दत्तदृष्टिभिर्भवद्भिर्भवितव्यम्—यत् या याः प्रातिस्विकाः संस्कृतयोऽनुजीवन्ति ताः सर्वा अपि तत्तद्भाषापरिपुष्टा एव सन्दृश्यन्ते । अत एवार्याणामप्यस्माकं भारतदेश्यानां व्यवहारभाषाविशेषवशात् संस्कृतावपि तत्तद्भाषाकृतविशेषः कश्चिदधितिष्ठत्येव । अधितिष्ठत्येव च समस्तेऽपि भारते भक्तसमाजधुरीणेषु बहुभाषापटुषु सुशिक्षितपद्मसु एकविधैव काचिद्विचाराचारयोर्नूत्ना रीतिः । तेन समाजस्थितिविषयेऽनुदासीनैरप्रयासिभिर्नैतद्विस्मर्तव्यम्—यत्—भाषाबलादेव संस्कृतिरक्षणं तद्विधानं वा सम्भवतीति । तथा च अस्मत्संस्कृतिरक्षणे देशोद्धारे च बद्धादरैः सुपुत्रैर्देववाणीप्रचारविषये एव बद्धकटिभिर्भवितव्यम्, नान्यैः परकीयेतिहासानुपदिशमानैरीदृशेष्वितरेष्वपि कश्चिन्महात्मा तत्तस्यावृधेत् । अतः सम्प्रार्थयामश्चराचरात्मानमार्यधर्मप्रवर्तकमिमं भगवन्तं गीर्वाणवाण्यौदासीन्येन संस्कृतिकाऽवसन्नाऽऽदिवराहात्मना कृपालुना तत्रभवता नचिरादभ्युद्धरणीया, यथा सेयं राष्ट्रभाषात्वं विदधती आर्यसंस्कृतिसाम्राज्येन कुसंस्कृतीरभिभावयती सुचिरं वृद्धिमेधतात् ।

तत्राचारसंरक्षणोपायश्च व्याकरणाधीन इत्यध्येयं पाणिनीयव्याकरणम् । तत्र दुरूहमहाभाष्यादिसिद्धान्तग्रन्थप्रवेशाभिलाषिणः अकुशलान् समग्रानपि निबन्धानियमतिशेते सिद्धान्तकौमुदीति आसेतुहिमाचलं विदिततरमेव । कौमुदीप्रकाशनस्य लोभाधीन इत्याकलय्य तत्त्वबोधिनीसहितामेवेमां मुद्रापयन्ति तत्रभवन्तो निर्णयसागराध्यक्षाः श्रेष्ठिनः । तत्र संशोधनकर्मणि पञ्चषाण्येवातिप्राचीनानि लिखितपुस्तकान्यस्माभिः सम्भावितानि । तेष्वपि मुम्बापुरीनिवासिनां-

सरस्वतीभवनस्य गुर्जरमुद्रणालयाधिपतिभिः प्रदत्ताहसाईविभागादुपलब्धमेकं पुस्तकं प्राचीनमपि प्रायोऽशुद्धिरहितमतीव साचिव्यमकरोदिति—एतादृशातिप्राचीनानि दुर्ललितपत्राक्षराणि दुर्लभप्रायाणि पुस्तकानि महता परिश्रमभरेण सम्पाद्य सुभृशं लोहमञ्जूषासु नियतिमिव संरक्षन्तीति किं न ते धन्यवादार्हाः पुस्तकालयाध्यक्षा 'डाक्टर' इत्युपाधिधारिणो जोशीमहोदयाः ।

पुस्तकालयाल्लिखितपुस्तकसम्पादनञ्च सिंहमुखाद्दंष्ट्रोद्धरणमिवातिकठिनतरमपि विल्सन्महाविद्यालये संस्कृतप्रधानाध्यापकपदमलङ्कुर्वतां विद्वत्तमानां वेलणकरोपाह्वदामोदरात्मजहरिशर्मणां प्रसादाच्च तत्काठिन्यलवानुभवविदो वयम् ।

मुद्रितपुस्तकसाहाय्यं अन्धेनैव नीयमानस्यान्धस्येव नातीवोपयुक्तमपि बहूपकारकमेव संमन्यामहे ।

पुस्तके चास्मिन् ग्रन्थद्वयस्यापि परमोपकारकस्यास्य शुद्धीकरण एव कृतक्षणा वयं यावच्छक्तिभरं तथाऽकरवाम यथा अशुद्धिलेशोऽपि ग्रन्थमिमं सन्दूषयितुं न प्रभवेत, तथापि टङ्कसम्मेलकानां प्रमादात्, यन्त्रदोषात्, अस्मदज्ञानाद्वा कञ्चिद्दोषाणुमपि प्रत्यक्षीकरिष्यन्ति तत्रभवन्तो वाचकमहोदयास्ते एवं विज्ञाप्यन्ते—

विद्वत्सहायैरेवास्माभिर्महतोऽस्य ग्रन्थस्य संशोधनं सुशकम्, नान्यथा; अतो गवेषिता अशुद्धयः पत्रादिद्वारा यदि आकलिता भवेयुस्तदा पुनर्मुद्रणावसरे निःसंदेहं निर्वासितास्ता भवेयुरिति ।

निर्णयसागरस्यैतद्वैशिष्ट्यमेव यत्तत्रत्या आस्थानपण्डिताः स्वे स्वे कर्मण्यभिरताः सुकुशला विराजन्ते । ते च निर्दुष्टमुद्रणविधौ विधातार एवेति किमधिकेन तत्साहाय्यदानकथनेन ?

आस्मिंश्च यास्टिप्पण्यः संविलसन्ति ता नाशेषा अस्मदीयाः । बह्व्यश्च पूर्वसंस्कारकैर्ग्रन्थान्तरत उद्धृताः केवलमसङ्गत्याविरोधनिराकरणेन तास्तथैव संरक्षिताः ।

एवञ्च विद्वत्सेवासक्तमानसेन निर्णयसागरेण समर्पितोऽयं कौस्तुभमणिर्भगवतः सारस्वतस्य हृदये सुशुभं चिरं विराजतात्—इति आशास्ते—

काशीविश्वविद्यालयविनेयाः

महामहोपाध्यायश्रीजयदेवमिश्रचरणान्तेवासिनो

**भार्गवशास्त्रिणः शास्त्राचार्याः**

मुम्बापुरी

# कामुदीस्थविषयानुक्रमः ।

॥ श्रीः ॥

## तत्त्वबोधिनीव्याख्यासंवलिता

# सिद्धान्तकौमुदी ।

## पूर्वार्धम्

### संज्ञाप्रकरणम् ।

**मुनित्रयं नमस्कृत्य तदुक्तीः परिभाव्य च । वैयाकरणसिद्धान्तकौमुदीयं विरच्यते ॥ १ ॥**

**अइउण् १ । ऋऌक् २ । एओङ् ३ । ऐऔच् ४ ।**

---

**ॐ ॥ नत्वा विश्वेश्वरं साम्बं कृत्वा च गुरुवन्दनम् ।**
**सिद्धान्तकौमुदीव्याख्या क्रियते तत्त्वबोधिनी ॥ १ ॥**

विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षार्थं निबध्नंश्चिकीर्षितं प्रतिजानीते—**मुनित्रयमित्यादिना** । त्रयोऽवयवा यस्येति त्रयम् । 'संख्याया अवयवे तयप्' 'द्वित्रिभ्यां तयस्य–' इत्ययच् । मन्तारो वेदशास्त्रार्थतत्त्वावगन्तारो मुनयः । 'मनेरुच्च' इत्यौणादिकसूत्रेण मनेरत उकारो मने. पर इन् प्रत्ययश्च । गुणस्तु नेह भवति, किदित्यनुवर्तनात्तत्परकरणाद्वा । तेषां पाणिनिकात्यायनपतञ्जलीना त्रयं मुनित्रयम् । ननु 'स्वयंभुवे नमस्कृत्य' इत्यत्रेवात्रापि 'नमःस्वस्ति–' इत्यादिना चतुर्थी स्यात् । मैवम् । 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति वक्ष्यमाणत्वात् 'नमस्करोति देवान्' इतिवद्द्वितीयाया एव युक्तत्वात् । किंच 'जहत्स्वार्था वृत्तिः' इति पक्षे नमःशब्दस्यात्र निरर्थकत्वात् तद्योगे चतुर्थी न भवति । अर्थवद्ग्रहणपरिभाषायाः प्रवृत्तेः । 'स्वयंभुवे नमस्कृत्य' इत्यत्र तु स्वयंभुवमनुकूलयितुमित्यर्थविवक्षायां 'क्रियार्थोपपदस्य–' इत्यादिना चतुर्थीति मूल एव स्फुटीभविष्यति । न चैवं 'नमःस्वस्ति–' इति सूत्रे नमःपदं व्यर्थमिति शङ्क्यम् । हरये नम इत्यत्र हरिमनुकूलयितुमित्यर्थेऽविवक्षिते संबन्धसामान्ये षष्ठ्यां प्राप्तायां तदपवादतया तस्यावश्यकत्वात् ॥—**तदुक्तीरिति** । तेषां पाणिन्यादीनामुक्तीः । सूत्रवार्तिकभाष्याणीत्यर्थः । तस्य मुनित्रयस्योक्तीरिति व्याख्यानेऽपि समुदायेन सूत्रं वार्तिकं भाष्यं वा नोक्तमिति समुदायिनां मुनीनामेवोक्तीरिति पर्यवस्यति ॥—**परिभाव्येति** । पर्यालोच्येत्यर्थः । न च परिपूर्वस्य भवतेस्तिरस्कारार्थत्वात्कथमत्र ज्ञानार्थतेति शङ्क्यम्, परीत्यस्य भावीति चुरादिणिजन्तेन योगात् । केचिदत्र भवतिना योगमभ्युपेत्याहुः—'परौ भुवोऽवज्ञाने' इति सूत्रे परौ भुव इत्यस्यावज्ञान इति विशेषणाच्च तिरस्कारार्थत्वनियमः । 'मनसा परिभाव्य किंचित्' इत्यादिश्रीहर्षप्रयोगाच्च । अत एवात्राप्रयुक्तत्वदोषशङ्काऽपि नास्तीति । अन्ये तु 'अनादरः परिभवः परीभावस्तिरस्क्रिया' इति कोशात्परिपूर्वकाद्भवतेर्घञन्तादेव तिरस्कारप्रतीतिर्नान्यस्मादित्याशङ्कैवात्र नास्तीत्याहुः । तन्मन्दम् । परिभूय, परिभवतीत्यतोऽपि तिरस्कारप्रतीतेः ॥—**वैयाकरणेति** । व्याकरणमधीयते विदन्ति वा वैयाकरणास्तत्सिद्धान्तानां कौमुदी । प्रकाशिकेत्यर्थः । निर्दुष्टसकलजनाह्लादकत्वसाम्येन कौमुदीशब्दप्रयोगः । करिष्यमाणाया अपि कौमुद्या बुद्ध्या संनिधापितत्वादियमित्यङ्गुल्या निर्देशः ॥—**विरच्यत इति** । मयेति शेषः । 'रच प्रतियत्ने' प्रतियत्नो गुणाधानम् । विपूर्वादस्माद्वर्तमानसामीप्ये भविष्यदर्थे वर्तमानप्रत्ययः ॥ **अइउणिति** । णानुबन्धोऽण्संज्ञाऽर्थः । या या संज्ञा सा सा प्रयोजनवती ॥ **ऋऌगिति** । ककारस्त्वक्हक्उक्संज्ञाऽर्थः ॥ **एओङिति** । ङकार एङ्संज्ञाऽर्थः ॥ **ऐऔजिति** । चकारस्त्वच्इच्एच्ऐच्संज्ञाऽर्थः । वर्णानामसंदिग्धत्वेन बोधनाय संहिताया अविवक्षणादेतेष्वसंधिः । स्वराणां चादिषु पाठात् 'चादयो-

---

१ **परिभाव्य**—विचार्येत्यर्थः, तिरस्कृत्येत्यर्थश्च । आद्ये स्वग्रन्थस्य समूलत्वमन्त्येऽगतार्थत्वं च बोध्यम् । २ **सिद्धान्तेति**—इत्यमत्रानुबन्धचतुष्टयम्—वैयाकरणसिद्धान्ता विषयः, तज्ज्ञानं प्रयोजनम्, तज्जिज्ञासुरधिकारी, प्रतिपाद्यप्रतिपादकभावश्च संबन्धः । ३ **अइउण्**—अत्र कारप्रत्ययो बाहुल्कान्न भवतीति केचित् । वस्तुतस्तु 'इक्श्तिपौ धातुनिर्देशे' इत्यतः 'वर्णात्कारः' इत्यत्र निर्देशपदानुवृत्तेर्न भवति । निर्देशश्च वर्णप्रतिपादनम्, स इह नास्ति किंतु आनुपूर्वीसंपादनमात्रे तात्पर्यम् । ४ समासादिवृत्तिर्द्विविधा जहत्स्वार्था, अजहत्स्वार्था च । जहति स्वार्थं यस्यां सा जहत्स्वार्था, तथा नेत्यजहत्स्वार्था । जहत्स्वार्थावृत्तौ वृत्तिघटकपदानां स्वातन्त्र्येणार्थबोधकत्वं नास्तीति नमस्कृत्येत्येतद्घटकनमःपदस्यार्थवत्त्वाभावादेव न 'नमःस्वस्ति' इत्यस्य प्रवृत्तिरिति भावः ॥

**हयवरट् ५। लण् ६। ञमङणनम् ७। झभञ् ८। घढधष् ९। जबगडदश् १०। खफछठथचटतव् ११। कपय् १२। शषसर् १३। हल् १४।**

इति माहेश्वराणि[1] सूत्राण्यणादिसंज्ञाऽर्थानि ॥ एषामन्त्या इतः। लण्सूत्रेऽकारश्च। हकारादिष्वकार उच्चारणार्थः[2] ॥

१। **हलन्त्यम्** ।१।३।३। हलिति सूत्रेऽन्त्यमित्स्यात् ॥

२। **आदिरन्त्येन सहेता** ।१।२।७१। अन्त्येनेता

ऽसत्त्वे' इति निपातसंज्ञायां 'निपात एकाजनाङ्' इति प्रगृह्यत्वे प्रकृतिभावान्न संधिरित्यन्ये। स्यादेतत्। अकाराद्युपदेशेन यथा तत्सवर्णानामाकारादीनां लाभात्पृथगाकारादयो नोपदिष्टास्तथा ऋऌवर्णयोरपि सावर्ण्यादृकारोपदेशेनैवोभयसिद्धेः किं पृथगुपदेशेन। न च जातिपक्षे ऋऌवर्णयोः पृथगुपदेश आवश्यकस्तयोर्भिन्नजातित्वादिति वाच्यम्। सावर्ण्यादेवैकजात्युपदेशे जात्यन्तरस्यापि लाभात्। ऋऌवर्णयोः प्रत्येकं त्रिंशतः संज्ञासिद्धये 'अणुदित्सवर्णस्य–' इति सूत्रे अण्ग्रहणस्य जातिपक्षेऽप्यावश्यकत्वादिति चेत्। अत्राहुः—ऋऌवर्णयोः सावर्ण्यस्यानित्यतां ज्ञापयितुमुभयोर्निर्देशः, तत्फलं तु कॢप्ता शिखा यस्य कॢप्तशिखः, तस्य दूरात्संबोधने कॢ ३ प्तशिखेति प्लुतः। ऋऌवर्णयोः सावर्ण्यस्य नित्यत्वे तु 'अनृतः' इति पर्युदासादृकारस्येव ऌकारस्यापि प्लुतो न स्यादिति समाधानान्तरमपि 'ओर्गुणः' इत्यत्र दर्शयिष्यते ॥ **हयवरडिति**। टानुबन्धोऽट्संज्ञाऽर्थः। हकारोपदेशस्तु अट्अश्हश्हश्इण्ग्रहणेषु हकारग्रहणार्थः। अर्हेण 'अड्व्यवायेऽपि' इति णत्वम्। देवा हसन्ति 'भोभगो–' इति रोर्यत्वम्। देवो हसति 'हशि च' इत्युत्वम्। लिलिहिध्वे लिलिहिढ्वे 'विभाषेटः' इति वा ढः ॥ **लणिति**। णकारोऽनुबन्धोऽण्इण्यण्संज्ञाऽर्थः ॥ नन्वणिति क्वचित्पूर्वणकारेण गृह्यते, क्वचित्तु परेण णकारेण, इणिति तु परणकारेणैव। तथा च निःसंदेहार्थमनुबन्धान्तरमेव कर्तुमुचितम्। सत्यम्। 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्' इति परिभाषाज्ञापनाय पुनर्णकारोऽनुबन्ध इति स्थितमाकरे ॥ **ञमङणनमिति**। मकार इह अम्यम्ङम्ञम्संज्ञाऽर्थः ॥ **झभञिति**। ञकारो यञ्संज्ञाऽर्थः ॥ **घढधषिति**। षकारस्तु झष्भष्संज्ञाऽर्थः ॥ **जबगडदशिति**। शोऽनुबन्धोऽश्हश्वश्झश्जश्बश्संज्ञाऽर्थः ॥ **खफछठथचटतविति**। वकारस्तु छव्संज्ञाऽर्थः ॥ **कपयिति**। यकारो यय्मय्झय्खय्चय्संज्ञाऽर्थः ॥ **शषसरिति**। रेफस्तु यर्झर्खर्चर्शर्संज्ञाऽर्थः ॥ **हलिति**। लकारः अल्हल्वल्रल्झल्शल्संज्ञाऽर्थः। पुनर्हकारोपदेशस्तु वल्रल्झल्शल्षु हकारग्रहणार्थः। रुदिहि, स्वपिहि। 'रुदादिभ्यः सार्वधातुके' इति वलादिलक्षण इट्। लिहित्वा। लेहित्वा। 'न क्त्वा सेट्' इति निषेधं बाधित्वा 'रलो व्युपधात्–' इति वा कित्त्वम्। अदाग्धाम्। घत्वस्यासिद्धत्वेऽपि हकारस्य झल्त्वात् 'झलो झलि' इति सलोपः। अलिक्षत्। 'शलः–' इति क्सः। ननु पुनर्हकारोपदेशस्यावश्यकत्वेऽपि शर्मध्य एव हकारं पठित्वा 'अलोऽन्त्यस्य', 'हलोऽनन्तराः संयोगः', 'झलो झलि', 'शल इगुपधा–' इत्यादिसूत्राणि यावन्ति लानुबन्धानि तानि 'अरोऽन्त्यस्य' 'हरोऽनन्तराः' इत्येवंरूपेण रेफानुबन्धान्येव च कृत्वा 'हल्' इति पृथक् सूत्रं त्यज्यताम्। मैवम्। तथा हि सति हरिर्हसति हरिर्हरिरित्यादि न सिध्येत्। तत्र 'खरवसानयोर्विसर्जनीयः', 'वा शरि' इत्यादिप्रसङ्गात्। अतो 'हल्' इति सूत्रमावश्यकमेव। एवंच 'हलिति सूत्रेऽन्त्यम्–' इति वक्ष्यमाणग्रन्थोऽपि स्वरसतः संगच्छते ॥—**अणादिसंज्ञाऽर्थानीति**। अणादिसंज्ञा अर्थः प्रयोजनं येषां तानीति विग्रहः। अणादिसंज्ञाभ्य इमानि इत्यस्वपदविग्रहो वा। 'अर्थेन नित्यसमासो विशेष्यलिङ्गता च' इति वक्ष्यमाणत्वात् ॥—**एषामन्त्या इत इति**। एषां सूत्राणामन्त्या णादयो 'हलन्त्यम्' इत्यनुपदं वक्ष्यमाणेनेत्संज्ञका इत्यर्थः ॥—**लण्सूत्रेऽकारश्चेति**। अनन्त्यत्वात्पृथगुक्तिः। वचनविपरिणामेनेदिति संबध्यते। इत्संज्ञा चास्य 'उपदेशेऽजनुनासिक इत्' इत्यनेन। एवंच णादिभिरिद्भिः 'आदिरन्त्येन–' इति वक्ष्यमाणेन प्रत्याहारग्रहणात् 'अणादिसंज्ञार्थानि' इति यदुक्तं तत्संगच्छत इति भावः ॥—**अकार उच्चारणार्थ इति**। न तु लण्सूत्रस्थाकार इव प्रयोजनार्थ इत्यर्थः ॥ **१ हलन्त्यम्**। अन्तेऽवसाने भवमन्त्यम्। दिगादित्वाद्यत्। 'उपदेशेऽजनुनासिक इत्' इत्यत उपदेशे इति, इदिति चात्रानुवर्तते। 'आदिरन्त्येन–' इति सूत्रेण सहान्योन्याश्रयमाशङ्क्य[3] आवृत्त्या तं परिहरति—**हलिति सूत्रेऽन्त्यमिति**। हलि अन्त्यमिति विग्रहे 'सप्तमी' इति योगविभागात्, 'सुप्सुपा' इति वा समास इति भावः। यद्वा षष्ठीतत्पुरुषोऽयं, 'हलिति सूत्रस्यान्त्यमित्स्यात्' इति व्याख्यानसंभवात् ॥ **२ आदिरन्त्येन सहेता**। अन्त्येनेति किम्। सुडिति प्रत्याहारस्तृतीयैकवचनावयवेन मा भूदिति काशिकाकृत्। यद्यपि टकारान्तसङ्घस्य टाटकारोऽप्यन्त्यो भवति, तथाप्यन्त्येनेति ग्रहणसाम-

---

१ **माहेश्वराणीति**—महेश्वरादागतानीत्यर्थः। एतेनैषां श्रुतितुल्यत्वं वेदाङ्गत्वं प्रमाणत्वं च सूचयति। महेश्वरादागतानीत्यर्थे महेश्वर एवास्य कर्ता नान्य इत्येषां श्रुतितुल्यत्वं न स्यादतो महेश्वरेण प्रोक्तानि=उपज्ञातानीति वाऽर्थः। २ न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवतीति भाष्याद्धकारादीनामकारमन्तरेणोच्चारणमप्यसम्भवदुक्तिकमित्यकारस्योच्चारण एवार्थ इत्यर्थः। हलादिसंज्ञाऽर्थ इति तु न भ्रमितव्यम्; पुनःपुनरुच्चारणवैयर्थ्यात्। ३ ननु वाक्यार्थबोधे पदार्थज्ञानस्यावश्यकत्वेन हलन्त्यमितिसूत्रस्य वाक्यार्थो न स्यात्, इत्पदार्थज्ञानाभावात्। तथा आदिरन्त्येन सहेतेत्यस्यापि इत्पदार्थज्ञानाभावान्न स्यात्। तथा प्रत्याहाराभावे वृद्धिरादैजित्यादीनामप्यानर्थक्यं स्यादिति चेन्न। इत्पदार्थज्ञानाभावे हल्पदार्थज्ञानाभावः, हल्पदार्थज्ञानाभावे चेत्पदार्थज्ञानभाव इत्यन्योन्याश्रयवारणाय हलन्त्यमितिसूत्रमावर्त्यते, आवृत्तेन च लकारस्येत्संज्ञायामित्पदार्थप्रसिद्धौ न काऽप्यापत्तिः ॥

सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात् । इति हल्संज्ञायाम् ॥ 'हलन्त्यम् १' उपदेशेऽन्त्यं हलित्स्यात् । उपदेश आद्योच्चारणम् । ततोऽणजित्यादिसंज्ञासिद्धौ ॥

**३ । उपदेशेऽजनुनासिक इत् ।१।३।२।** उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात् । प्रतिज्ञाऽऽनुनासिक्याः पाणिनीयाः । लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा । प्रत्याहारेष्वितां न ग्रहणम् । अनुनासिक इत्यादिनिर्देशात् । नह्यत्र ककारे परेऽच्कार्यं दृश्यते । आदिरन्त्येनेत्येतत्सूत्रेण कृताः संज्ञाः प्रत्याहारशब्देन व्यवह्रियन्ते ॥

---

र्थ्यादन्त्यत्वप्रयुक्ता यस्येत्संज्ञा तेनैव प्रत्याहारः, न हि टाटकारे 'हलन्त्यम्' इतीत्संज्ञा प्रवर्तते । न चैवं रप्रत्याहारासिद्धिः । लण्सूत्रस्थावर्णस्यानुनासिकत्वप्रतिज्ञासामर्थ्यादनन्त्येनापि इता प्रत्याहारात्तत्सिध्यतीति काशिकाकाराशयः । निष्कर्षस्त्विह 'खौजसमौट्–' इति सूत्रे दर्शयिष्यते । विस्तरस्तु शब्दकौस्तुभेऽनुसंधेयः । इतेति[1] किम् । रप्रत्याहारो यथा स्यात् । स ह्यनुनासिकत्वप्रतिज्ञासामर्थ्यादनन्त्येनापि गृह्यत इत्युक्तम्, न चैतदितेत्यस्य विरहे लभ्यत इति शब्दकौस्तुभे स्थितम् ॥ अत्राद्यन्ताभ्यामवयवाभ्यामवयवी समुदाय आक्षिप्यते । तस्य च युगपल्लक्ष्ये प्रयोगाभावात्तदवयवेष्ववतरन्ती संज्ञा मध्यगेषु विश्राम्यति, न त्वाद्यन्तयोः, संज्ञास्वरूपान्तर्भावेण तयोः पारार्थ्यनिर्णयादित्याशयेनाह—**मध्यगानामिति ।—स्वस्य चेति ।** 'स्वं रूपम्' इत्यनुवर्तत इति भावः । स्वं रूपं चादेरेव गृह्यते नान्त्यस्य । 'अन्त्येन' इत्यप्रधानतृतीयानिर्देशात् । सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वात् ॥ ननु स्वमित्यस्यानुवृत्तौ 'कः संज्ञी' इत्याकाङ्क्षायाः शान्तत्वादवयव्याक्षेपो न स्यात् । तथा च 'इको यणचि' इत्यादाविकारस्य स्थाने यकारः स्यादकारे परे इत्येवमर्थः स्यात् । मैवम् । आदेरेव संज्ञित्वे तु 'आदिरन्त्येन' इति संज्ञाकरणस्यैव वैयर्थ्यापत्तेः । किंच अण्अक्अच्अट्अम्अशादीनां पृथङ्निर्देशोऽपि व्यर्थः स्यात्, सर्वत्राकारस्यैव संज्ञित्वादिति दिक् । शब्दकौस्तुभे तु—आद्यन्तावयवद्वारा समुदायानुकरणेन सिद्धेऽन्त्यव्यावृत्त्यर्थमिदं सूत्रमिति स्थितम् ॥ **—उपदेशेऽन्त्यं हलिति ।** उपदेशे किम् । अग्निचित्, सोमसुत् इति काशिका । अत्रेत्संज्ञाया लोपः स्यात् । न च तुको वैयर्थ्यम् । आगत्येत्यादौ चरितार्थत्वात् । न च क्विपः पित्त्वस्य वैयर्थ्यम् । अग्निचितावित्यादौ चरितार्थत्वादिति हरदत्तः ॥ अन्त्यं किम् । मनिनो मकारस्य मा भूत् । सत्यां हीत्संज्ञायामन्त्यादचः परः स्यात् । वेश्म, सद्म । 'सर्वधातुभ्यो मनिन्' । हलिति किम् । 'भू सत्तायाम्' भविता । न च प्रयोजनाभावान्नेत्त्वमिति वाच्यम् । सत्यामित्संज्ञायाम् 'उदितो वा' इतीड्विकल्पापत्तेः । अन्ये तु चिरिणोति । जिरिणोति । इह धातोरन्त्यस्य मा भूत् । सत्यामित्संज्ञायाम् 'इदित' इति नुम् स्यादित्याहुः—**आद्योच्चारणमिति ।** आद्योच्चारणविषयीभूतो यः शब्दस्तस्यान्त्यं हलित्स्यादिति फलितोऽर्थः ॥ **३ उपदेशेऽजनु—।** उपदेशनमुपदेशः । भावे घञ् । उपदेशे किम् । अभ्र आँ अपः । सप्तम्यर्थद्योतकोऽत्राङ् । 'आङोऽनुनासिकश्छन्दसि' इत्याकारोऽनुनासिकः । यद्यपीह 'उञ ऊँ' इत्यत्रेवानुनासिकविधानसामर्थ्यान्नेत्त्वमिति सुवचम्, तथाप्युत्तरार्थमवश्यं कर्तव्यमुपदेशग्रहणं स्पष्टप्रतिपत्तये इहैव कृतम् । अच् किम् । मनिनो मकारस्य मा भूत् । न च 'हलन्त्यम्' इत्यन्त्यग्रहणसामर्थ्यादनन्त्यस्य मकारस्य न भवेदिति वाच्यम् । आलच्त्राप्रत्ययादावतिप्रसङ्गवारणेन तस्य चरितार्थत्वात् । अनुनासिक इति किम् । 'ईक्ष दर्शने' ईक्षितः । सत्यां हीत्संज्ञायां 'श्वीदितो निष्ठायाम्' इतीण् न स्यात् । यद्यप्यत्रोपजीव्यत्वादनुनासिकसंज्ञा प्रथमं वक्तुमुचिता, तथापि नासिकामनुगत इति योगाश्रयणेनैव गतार्थत्वादनुनासिकसंज्ञासूत्रं मन्दप्रयोजनमिति ध्वनयितुं नेहोपन्यस्तम् । न चैवं 'यरोऽनुनासिके–' इत्यत्र यरः पदान्तस्यानुनासिकशब्दे परेऽनुनासिकशब्दः स्यादित्यर्थः प्रसज्येत 'स्वं रूपम्–' इति परिभाषोपस्थानात् । संज्ञाकरणे तु 'अशब्दसंज्ञा' इति निषेधान्नायं दोष इति वाच्यम् । उक्तपरिभाषाया भाष्ये प्रत्याख्यानात् । 'उपान्मन्त्रकरणे', 'पुच्छभाण्डचीवराण्णिङ्', 'ङमुण् नित्यम्' इत्यादिनिर्देशेन 'स्वं रूपम्–' इति परिभाषाया अनुपस्थितिकल्पनात्सूत्रमतेऽपि दोषाभावात् । ननूक्तनिर्देशाश्रयणे प्रतिपत्तिगौरवमिति चेत्, अत एव निष्प्रयोजनमित्यनुक्त्वा मन्दप्रयोजनमित्युक्तम् ॥**—प्रतिज्ञान्विति ।** प्रतिज्ञायत इति प्रतिज्ञा । 'आतश्चोपसर्गे' इति कर्मण्यङ् । अनुनासिकस्य भाव आनुनासिक्यम् । 'गुणवचनब्राह्मणादिभ्यः–' इति ष्यञ् । प्रतिज्ञा आनुनासिक्यं येषामिति विग्रहः । केचित्तु–प्रतिज्ञानं प्रतिज्ञा सा अस्यास्तीति प्रतिज्ञम् । अर्शआद्यच् । प्रतिज्ञमानुनासिक्यमेषामिति विगृह्णन्ति । यद्यपि सूत्रकारकृतोऽनुनासिकपाठ इदानीं परिभ्रष्टः, तथापि वृत्तिकारादिव्यवहारबलेन यथाकार्यं प्राक् स्थित इत्यनुमीयत इति भावः ॥**—पाणिनीया इति ।** पाणिनिना प्रोक्तं पाणिनीयं 'वृद्धाच्छः' । तदधीयते विदन्ति वा पाणिनीयाः । 'तदधीते–' इत्यणः 'प्रोक्ताल्लुक्' इति लुक् ॥ ननु रलयोरिति न्यूनम्, टकारस्यापि मध्यगत्वादत आह—**प्रत्याहारेष्विति ॥—अनुनासिक इत्यादीति ।** आदिशब्देन 'पापाणके कुत्सितैः', 'एङः पदान्तादति' इत्यादि ग्राह्यम् ॥**—प्रत्याहार-**

---

[1] इत्पदाभावे आदिरन्त्येनेतिसूत्रस्य अन्त्येन सहित आदिः संज्ञा स्यादित्येवमर्थः सम्पद्येत, अन्त्यपदं च सूत्रान्त्य एव रूढम्, अभिव्यक्तपदार्थ इति न्यायात् तथार्थं इत्याशयेन प्रश्नः—**इतेति किमिति** । इत्पदग्रहणसामर्थ्यादनन्त्योऽपीद्गृह्यत इत्यप्याशयः ॥ वस्तुतस्तु अन्त्यपदस्य सूत्रान्त्यमित्यर्थकरणे बलवत्प्रमाणाभावेन आद्यन्ताभ्यामाक्षिप्तस्य समुदायस्यान्त एव गृहीतः स्यात्तथा च ममङ्गनेति सूत्रस्थपूर्वमकारेणापि अम्प्रत्ययः स्यादित्येवमर्थमिद्ग्रहणम् ॥

४ । **ऊकालोऽज्झ्रस्वदीर्घप्लुतः** ।१।२।२७। उँश्च ऊश्च ऊ३श्च वः । वां काल इव कालो यस्य सोऽच् क्रमाद्ध्रस्वदीर्घप्लुतसंज्ञः स्यात् । स प्रत्येकमुदात्तादिभेदेन त्रिधा ॥

५ । **उँच्चैरुदात्तः** ।१।२।२९। ताल्वादिषु सभागेषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात् । आ ये ॥

६ । **नीचैरनुदात्तः** ।१।२।३०। स्पष्टम् । अँर्वाङ् ॥

७ । **समाहारः स्वरितः** ।१।२।३१। उदात्तानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन्सोऽच् स्वरितसंज्ञः स्यात् ॥

८ । **तस्यादित उदात्तमर्धह्रस्वम्** ।१।२।३२। ह्रँस्वग्रहणमतन्त्रम् । स्वरितस्यादितोऽर्धमुदात्तं बोध्यम् । उत्तरार्धं तु परिशेषादनुदात्तम् । तस्य चोदात्तस्वरितपरत्वे श्रवणं स्पष्टम् । अन्यत्र तूदात्तश्रुतिः प्रातिशाख्ये प्रसिद्धा । 'क्व१वोऽश्वाः' । 'रथानां न ये३ऽराः' । 'शतचक्रं यो३ऽह्यः' इत्यादिष्वनुदात्तः । 'अग्निमीळे' इत्यादावुदात्तश्रुतिः । स नवविधोऽपि प्रत्येकमनुनासिकाननुनासिकत्वाभ्यां द्विधा ॥ ४

---

**शब्देनेति** । प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा यत्रेति प्रत्याहारः, 'करणाधिकरणयोश्च' इति ल्युटि प्राप्ते 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणादधिकरणे घञ् । यद्यपि योगमात्रमकारादिसंज्ञास्वतिप्रसक्तम्, तथापि योगरूढिरिति भावः ॥) **४ ऊकालोऽज्झ्रस्वदीर्घप्लुत इति** । समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । ऊ इति त्रयाणां प्रश्लेषेण निर्देश इत्याह—**उश्च ऊश्च ऊ३श्चेति** ॥—**वः । वामिति** । त्रयाणां सवर्णदीर्घे कृते जसि परतो यणि वः, आमि तु वाम् ॥—**वां काल इव कालो यस्येति** । फलितार्थकथनमिदम् । विग्रहस्तु वः कालो यस्येति बोध्यः । ऊशब्देन स्वोच्चारणकालो लक्ष्यते । अच् किम् । संयोगस्य माभूत् । प्रतक्ष्य, प्ररक्ष्य । कषयोरेकमात्रत्वेन ह्रस्वसंज्ञायां 'ह्रस्वस्य पिति कृति-' इति तुक् स्यात् ॥ **५ आ ये इति** । 'निपाता आद्युदात्ताः' इत्याकार उदात्तः, यच्छन्दस्तु 'फिषः' इत्यन्तोदात्तः । ततः परस्य जसः सुप्त्वादनुदात्तत्वम्, त्यदाद्यत्वे पररूपत्वे शीभावे आद्गुणे च सति 'एकादेश उदात्तेन-' इत्येकार उदात्तः ॥ **६ अर्वाङिति** । अर्वन्तमञ्चतीति अर्वाङ् । 'ऋत्विक्-' आदिना अञ्चतेः सुप्युपपदे क्विन् । 'ऋ गतौ' इत्यस्मात् 'स्नामदिपद्यर्ति-' इत्यादिना वनिपि गुणे च निष्पन्नोऽर्वन्शब्दो धातुस्वरेणाद्युदात्तः, वनिपः पित्त्वेनानुदात्तत्वात् । अञ्चतेरकारोऽपि धातुस्वरेण, नित्स्वरेण वा उदात्तः, 'उपपदमतिङ्' इति समासे कृते 'समासस्य' इति स्वरेण, तदपवादभूतेन 'गतिकारकोपपदात्कृत्' इति कृदुत्तरपदप्रकृतिस्वरेण वा अञ्चतेरकार उदात्तः । वनो नलोपे सवर्णदीर्घे च कृते 'एकादेश उदात्तेन-' इत्याकार उदात्त इति 'अनुदात्तं पदमेकवर्जम्' इति शेषनिघातादाद्योकारोऽत्रानुदात्तः । एतच्च संभवाभिप्रायेणोक्तम् । वेदभाष्ये तु 'अर्वाङ्—अभिमुखः' इति स्थितम् ॥ **८ अतन्त्रमिति** । अविवक्षितमित्यर्थः ॥ **तस्य चोदात्तस्वरितपरत्व इति** । उदात्तस्वरितौ परौ यस्मात्तदुदात्तस्वरितपरं तस्य भावस्तत्त्वं तस्मिन् सति उदात्तो वा स्वरितो वा परश्चेत्पूर्वस्य स्वरितस्य यदुत्तरार्धमनुदात्तं तस्य श्रवणं स्पष्टमित्यर्थः ॥—**अन्यत्रेति** । उदात्तस्वरितपरत्वाभावे ॥—**क्वेति** । 'किमोऽत्,' 'तित्स्वरितम्' ॥—**व इति** । 'अनुदात्तं सर्वमपादादौ' इत्यधिकारादनुदात्तः ॥—**अश्वा इति** । अशेः क्वनि नित्स्वरेणाद्युदात्तम् । संहितायां तु 'एकादेश उदात्तेनोदात्तः' इत्योकार उदात्तः ॥ उदात्तपरत्वे ह्रस्वस्वरितस्योदाहरणमुक्त्वा दीर्घस्वरितस्योदाहरणमाह—**रथानां न ये इति** । ये अरा इति पदद्वयमपि फिट्स्वरेणान्तोदात्तम् । एकादेशस्तु पक्षे स्वरितः, 'स्वरितो वानुदात्ते पदादौ' इत्युक्तेः ॥ स्वरितपरत्वे उदाहरणमाह—**शतचक्रमिति** ॥—**य इति** । फिट्स्वरेणान्तोदात्तः, ततः परस्य सकारस्य रुत्वे उत्वे कृते आद्गुणे च उदात्तेनैकादेशादोकार उदात्तः ॥—**अह्य इति** । स्वरितान्तत्वादकारस्य शेषनिघातत्वे, ओकारेण सह एकादेशे च कृते 'स्वरितो वाऽनुदात्ते पदादौ' इत्योकारः स्वरितः ॥ कथमह्यस्य स्वरितान्तत्वमिति चेदत्राहुः—'अह व्याप्तौ' इत्यस्मात्कर्मणि ण्यत्, 'तित्स्वरितम्', वृद्ध्यभावस्तु संज्ञापूर्वकविधेरनित्यत्वादिति । 'नोदात्तस्वरित-' इति निषेधस्तु 'अनन्तरस्य-' इतिन्यायात् 'उदात्तात्' इति प्राप्तस्य । यदाऽहेरित्यर्थेऽह्यः, वृत्रस्येत्यर्थः, तदा 'छन्दसि वावचनम्' इति गुणाभावः । 'उदात्तस्वरितयोः' इति स्वरितः, उँदात्तपर इति छान्दसत्वात् ॥—**अग्निमीळ इति** ।

---

१ **उश्चऊश्चेति**—कुक्कुटरुते उकारस्य त्रिमात्रिकस्य प्रसिद्धत्वादकारादयो नोक्ताः सूत्रकारेण । २ **उच्चैरिति**—नात्र श्रुतिकृतमुच्चैस्त्वम्, किंतु स्थानकृतम्, उपांशुप्रयोगेऽव्याप्तेः, तथा च उच्चैःशब्दो न उच्चैस्त्वपरः किन्तु अधिकरणशक्तिप्रधान उच्चाधिकरणार्थकः । ३ **अर्वाङिति**—अभिमुखवाच्यव्युत्पन्नं प्रातिपदिकमेतत् । ४ **ननु** अर्धह्रस्वशब्दे कर्मधारयश्चेत्तदाऽयमर्थः संभवेत्—यस्य स्वरितस्यार्धो भागः प्रथमो ह्रस्व एकमात्रिकः स उदात्तः । तथा च दीर्घस्वरित एव प्रवृत्तिः । यदि च षष्ठीसमासस्तदा ह्रस्वस्वरित एव सा । इष्टश्चोदात्त उभयत्र, तदाहातन्त्रमिति केचित् । केचित्तु ह्रस्वाद्यन्यतमस्वरितस्यार्धमात्रमेवोदात्तमिति मन्यमाना अर्धह्रस्वशब्देन अर्धमात्रा लक्ष्यत इति वदन्ति । ५ अहिशब्दस्य 'अहिरिव भोगैः' इत्यादिषु आद्युदात्तत्वदर्शनेनात्राप्याद्युदात्तत्वस्वीकारेऽत्रासङ्गतिः स्यात् । तथाहि—आद्युदात्तेऽस्मिन्नहिशब्दे उदात्तादनुदात्तस्य स्वरित इति इकारः स्वरितः । न चास्मिन् स्वरिते अनुदात्तं पदमेकमिति निघातः । उदात्तादनुदात्तस्येत्यस्याष्टकमिकत्वेनासिद्धत्वात्, एवं च **शतचक्रं यो३** इत्यत्र स्वरितो वानुदात्तेत्यस्य प्रवृत्तिरहेरकारस्यानुदात्तत्वाभावान्न स्यात् । अत उदात्तपरः—अन्तोदात्तोऽहिशब्दश्छान्दसत्वादत्र स्वीकरणीय इति भावः ॥ अत्र **'स्वरितः, उदात्तयण इति तु न छान्दसत्वात्'** इति पाठः क्वचिद्दृश्यते तदा नानुपपत्तिः ॥

९ । **मुखनासिकावचनोऽनुनासिकः** ।१।१।८। मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात् । तदित्थम्–अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः । ऌवर्णस्य द्वादश । तस्य दीर्घाभावात् । एचामपि द्वादश । तेषां ह्रस्वाभावात् ॥

१० । **तुल्यास्यप्रयत्नं सवर्णम्** ।१।१।९। ताल्वादि-स्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात् । अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु । ऋटुरषाणां मूर्धा । ऌतुलसानां दन्ताः । उपूपध्मानीयानामोष्ठौ । ञमङणनानां नासिका च । एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् । जिह्वामूलीयस्य जिह्वामूलम् । नासिकानुस्वारस्य । इति स्थानानि ॥ यत्नो द्विधा । आभ्यन्तरो बाह्यश्च । आद्यश्चतुर्धा । स्पृष्टेषत्स्पृष्टविवृतसंवृतभेदात् । तत्र स्पृष्टं प्रयतनं स्पर्शानाम् । ईषत्स्पृष्टमन्तस्थानाम् । विवृतमूष्मणां स्वराणां च । ह्रस्वस्यावर्णस्य प्रयोगे संवृतम् । प्रक्रियादशायां तु विवृतमेव । एतच्च सूत्रकारेण ज्ञापितम् । तथा हि—

११ । **अ अ इति** ।८।४।६८। विवृतमनूद्य संवृतोऽनेन विधीयते । अस्य चाष्टाध्यायीं संपूर्णां प्रत्यसिद्धत्वाच्छास्त्रदृष्ट्या विवृतत्वमस्त्येव । तथा च सूत्रम्—

१२ । **पूर्वत्रासिद्धम्** ।८।२।१। अधिकारोऽयम् । तेन सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा, त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धं स्यात् । बाह्यप्रयत्नस्त्वेकादशधा—विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति ॥

खयां यमाः खयः ᳲक ᳲपौ विसर्गः शर एव च ।
एते श्वासानुप्रदाना अघोषाश्च विवृण्वते ॥
कण्ठमन्ये तु घोषाः स्युः संवृता नादभागिनः ।
अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः ॥

ईकारः स्वरितः, ळे इति तु प्रचयापरपर्याया एकश्रुतिरिति च स्वरप्रक्रियायां मूल एव स्फुटीभविष्यति ॥ ९ **मुखनासिका—**। मुखं च नासिका चेति विग्रहे प्राण्यङ्गत्वादेकवद्भावे मुखनासिकमिति स्यादत आह—**मुखसहितेति** ॥—**नासिकयोच्चार्येति** । फलितार्थकथनमिदम् । उच्यतेऽनेनेति वचनं, मुखनासिका वचनमस्येति विग्रहः ॥ १० **तुल्यास्य—**। आस्ये भवमास्यं, 'शरीरावयवाद्यत्' इत्यभिप्रेत्याह—**ताल्वादीति** ॥—**आभ्यन्तरेति** । एतच्च प्रशब्दबलाल्लभ्यते । ओष्ठात्प्रभृति प्राक् काकलकादास्यम् । तुल्यास्यं किं? तर्प्सा । अत्र पकारस्य तकारे परे 'झरो झरि' इति लोपो मा भूत् ॥ प्रयत्नग्रहणं किं? वाक्श्चोतति । अत्र शस्य लोपो न ॥—**ञमङणनानां नासिका चेति** । चकारेण स्वस्ववर्गानुकूलं ताल्वादि समुच्चीयते । एदैतोरित्यादौ तपरत्वमसंदेहार्थं न तत्कालग्रहणार्थम् । तेन प्लुतस्यापि संग्रहः ॥—**चतुर्धेति** । निष्कर्षपक्षे तु पञ्चधा । ऊष्मणामीषद्विवृतप्रयत्नाभ्युपगमात् ॥—**स्पृष्टेषत्स्पृष्टेति** । एतेषामाभ्यन्तरत्वं वर्णोत्पत्तिप्राग्भावित्वात् । तथाहि–नाभिप्रदेशात्प्रयत्नप्रेरितो वायुः प्राणो नाम ऊर्ध्वमाक्रामन्नुरःप्रभृतीनि स्थानान्याहन्ति, ततो वर्णस्य तदभिव्यञ्जकध्वनेर्वा उत्पत्तिः । तत्रोत्पत्तेः प्राग्यदा जिह्वाग्रोपाग्रमध्यमूलानि तत्तद्वर्णोत्पत्तिस्थानं ताल्वादि सम्यक् स्पृशन्ति तदा स्पृष्टता, ईषद्यदा स्पृशन्ति तदा ईषत्स्पृष्टता, समीपावस्थानमात्रे संवृतता, दूरत्वे विवृतता । अत एव इचुयशानां तालव्यत्वाविशेषेऽपि तालुस्थानेन सह जिह्वाग्रादीनां चवर्गोच्चारणे कर्तव्ये सम्यक् स्पर्शः, यकारे ईषत्स्पर्शः, शकारेकारयोस्तु दूरेऽवस्थितिरित्याद्यनुभवं शिक्षाकारोक्तिं चानुसृत्य विवेचनीयम् । विवारसंवारादयस्तु वर्णोत्पत्तेः पश्चान्मूर्ध्नि प्रतिहते निवृत्ते प्राणाख्ये वायावुत्पद्यन्त इति बाह्या इत्युच्यन्ते, गलबिलस्य संकोचात्संवारः, तस्यैव विकासाद्विवारः, एतौ च संवृतविवृतरूपाभ्यामाभ्यन्तराभ्यां भिन्नावेव । तयोः समीपदूरावस्थानात्मकत्वादित्यवधेयम् ॥ ११ **अ अ—**। 'सुपाम्–' इति विभक्त्योर्लुक्, आद्यो विवृतः, द्वितीयस्तु संवृतस्तदाह—**विवृतमनूद्येति** । विवृतस्य स्थाने इत्यर्थः ॥—**विवृतत्वमस्त्येवेति** । तेन दण्डायनमित्यादौ सवर्णदीर्घः सिध्यतीति भावः ॥ १२ **पूर्वत्रासिद्धम्** । यद्ययं स्वतन्त्रो विधिः स्यात्तर्हि त्रिपादी पूर्वप्रत्यसिद्धेत्येव लभ्येत, त्रैपादिकं तु पूर्वंप्रति परं नासिद्धं स्यात्, तथा च प्रशानित्यत्र 'मो नो धातोः' इति नत्वस्य सिद्धत्वान्नलोपः स्यात्, नत्वविधेः संबुद्धौ चरितार्थत्वात् । तथाऽनड्वानित्यत्र संयोगान्तलोपस्य सिद्धत्वान्नलोपः स्यात्, नुम्विधेस्तु संबुद्धौ चरितार्थत्वादत आह—**अधिकारोऽयमिति** । त्रिपाद्यां विहितं कार्यमिति कार्यासिद्धिपक्षे अमू अमूमित्यादि न सिध्येदिति भावः ॥ यथा चैतन्न सिध्यति तथाऽदःशब्दव्याख्यावसरेऽस्माभिरुपपादयिष्यते ॥—**एकादशधेति** । यद्यपि भाष्येऽष्टावुक्ताः, उदात्तादयस्तु नोक्ताः, तथापि कैयटोक्तिमनुसृत्यैकादश–उक्ता इति बोध्यम् ॥—**खयां यमा इति** । बालबोधनाय बाह्यप्रयत्नाः कैश्चित्सुगमोपायेनोपनिबद्धाः । तद्यथा—'खरो विवाराः श्वासा अघोषाश्च, हशः संवारा नादा घोषाश्च, वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणाः, वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः' इति ॥—**श्वासानुप्रदाना इति** । श्वासप्रयत्नका इत्यर्थः ॥—**विवृण्वते** । **कण्ठमिति** । विवार एषां प्रयत्न इति भावः ॥—

१ **अष्टादशेति**—यद्यपीदं न जातिपक्षे, तस्या एकत्वात् । व्यक्तिपक्षेऽपि न, व्यक्तीनामानन्त्यात् । तथापि लोकवेदयोः प्रयुज्यमानानां शास्त्रीयकार्योपयोगिनां तद्व्याप्यधर्मवतामष्टादशत्वमेवेति भावः । २ **ऌवर्णस्येति**—विवृतस्येत्यर्थः । तेन 'ऌति ऌ वा' इतिविहितवर्णान्तरस्य दीर्घत्वेऽपि न क्षतिः, तस्येषत्स्पृष्टत्वात् । ३ **ताल्वादीति**—सूत्रस्थास्यशब्दस्य तद्धितान्तत्वप्रकटीकरणाय कण्ठं विहाय तालुग्रहणम् । ४ **अ अ इति**—एकस्य विवृतत्वादपरस्य संवृतत्वात्संध्यभावः । ५ **बाह्येति**—बाह्यत्वं च वर्णोत्पत्त्यनन्तरभावित्वेन बहिर्भूतकार्यकरणत्वेन च ।

वर्गेष्वाद्यानां चतुर्णां पञ्चमे परे मध्ये यमो नाम पूर्वसदृशो[1] वर्णः प्रातिशाख्ये प्रसिद्धः, पलिक्क्नीः, चख्ख्नतुः । अग्ग्निः, घ्घ्नन्तीत्यत्र क्रमेण कखगघेभ्यः परे तत्सदृशा एव यमाः । तत्र वर्गाणां प्रथमद्वितीयाः खयस्तथा तेषामेव यमाः, जिह्वामूलीयोपध्मानीयौ, विसर्गः, शषसाश्चेत्येतेषां विवारः श्वासोऽघोषश्च । अन्येषां तु संवारो नादो घोषश्च । वर्गाणां प्रथमतृतीयपञ्चमाः प्रथमतृतीययमौ यरलवाश्चाल्पप्राणाः । अन्ये महाप्राणा इत्यर्थः । बाह्यप्रयत्नाश्च यद्यपि सवर्णसंज्ञायामनुपयुक्तास्तथाप्यान्तरतम्यपरीक्षायामुपयोक्ष्यन्त इति बोध्यम् ॥ कादयो मावसानाः स्पर्शाः । यरलवा अन्तस्थाः । शषसहा ऊष्माणः । अचः स्वराः । ≍क ≍पाविति कपाभ्यां प्रागर्धविसर्गसदृशौ जिह्वामूलीयोपध्मानीयौ । अं अः इत्यचः परावनुस्वारविसर्गौ । इति स्थानप्रयत्नविवेकः ॥ ❀ ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम् ॥ अकारहकारयोरिकारशकारयोर्ऋकारषकारयोर्लृकारसकारयोश्च मिथः सावर्ण्ये प्राप्ते,

**१३ । नाऽऽज्झलौ[2] ।१।१।१०।** आकारसहितोऽच्=आच्, स च हल् चेत्येतौ मिथः सवर्णौ न स्तः । तेन दधीत्यस्य हरति शीतलं षष्ठं सान्द्रमित्येतेषु परेषु यणादिकं न । अन्यथा दीर्घादीनामिव हकारादीनामपि ग्रहणकशास्त्रबलादच्त्वं स्यात् । तथा हि—

**१४ । अणुदित्सवर्णस्य चाप्रत्ययः ।१।१।६९।** प्रतीयते विधीयत इति प्रत्ययः । अविधीयमानोऽण् उदिच्च सवर्णस्य संज्ञा स्यात् । अत्राण् परेण णकारेण । कु चु टु तु पु एते उदितः । तदेवम्—अ इत्यष्टादशानां संज्ञा । तथेकारोकारौ । ऋकारस्त्रिंशतः । एवं लृकारोऽपि । एचो द्वादशानाम् । एदैतोरोदौतोश्च न मिथः सावर्ण्यम् । ऐऔजिति सूत्रारम्भसामर्थ्यात् । तेनैचश्चतुर्विंशतेः संज्ञाः स्युरिति नापादनीयम् । 'नाज्झला'विति निषेधो यद्यप्याक्षरसमाम्नायिकानामेव तथापि हकारस्याऽऽकारो न सवर्णः, तत्राऽऽकारस्यापि प्रश्लिष्टत्वात् । तेन विश्वपाभिरित्यत्र 'हो ढ' इति ढत्वं न भवति । अनुनासिकाननुनासिकभेदेन यवला द्विधा । तेनाननुनासिकास्ते द्वयोर्द्वयोः संज्ञा ॥

---

**अन्ये त्विति** । हशः, हशां यमाः, अनुस्वारश्च ॥—**नादेति** । नादभागिनः । नादप्रयत्नवन्त इत्यर्थः ॥—**अयुग्मा इति** । प्रथमतृतीयपञ्चमा वर्गेष्वयुग्माः ॥—**वर्गयमगा इति** । वर्गगा यमगाश्चेत्यर्थः ॥—**अल्पेति** । अल्पासवोऽल्पप्राणाः, 'पुंसि भून्म्यसवः प्राणाः' इत्यमरः ॥—**अनुपयुक्ता इति** । अन्यथा कखगघादीनां परस्परं सावर्ण्यं न स्यादिति भावः ॥—**आन्तरतम्यपरीक्षायामिति** । परीक्षा च—अघोषस्य महाप्राणस्य सस्य तादृश एव थकारः, घोषवतो नादवतो महाप्राणस्य हस्य तादृशो वर्गचतुर्थ इत्यादिना मूले एव स्फुटीभविष्यति ॥—**कादय इति** । लोकप्रसिद्धपाठापेक्षमिदम् । चतुर्दशसूत्र्यां मावसानत्वायोगात् ॥—**कपाभ्यां प्रागिति** । एतच्चोपलक्षणम् । खफाभ्यां प्रागित्यपि बोध्यम् ॥—**अर्धविसर्गेति** । सादृश्यमुच्चारणे लेखने च बोध्यम् ॥ ❀ **ऋलृवर्णयोरिति** । 'ऋत्यकः' इति प्रकृतिभावः । विग्रहस्तु—आ च लृवर्णश्च ऋलृवर्णौ तयोरित्येके । मनोरमायां तु—आ च आ च रलौ, तौ च तौ वर्णौ चेत्यादि स्थितम् ॥ **१३ नाऽऽज्झलौ** ॥—**आकारसहित इति** । 'कालसमयवेलासु' इत्यादिनिर्देशा आकारप्रश्लेषे लिङ्गम् ॥—**यणादिकमिति** । शीतलशब्दे सवर्णदीर्घ आदिशब्दार्थः । इह, असेधदित्यादौ 'हो ढः' इति ढत्वं नेत्यपि सुवचम् । इण इति सस्य षत्वमपि नेति तु न सुवचम्, ढत्वं प्रति तस्यासिद्धत्वादिति दिक् ॥ ✠ **अन्यथेति** । 'नाज्झलौ' इत्यस्यानारम्भे ॥—**ग्रहणकशास्त्रबलादिति** । अयं भावः—दीर्घादीनामिव हकारादीनामप्यकारवाच्यत्वेऽभ्युपगते ह्यच्त्वं स्यात्, प्रत्याहारेषु तद्वाच्यवाच्ये निरूढलक्षणाभ्युपगमादिति ॥ **१४ अविधीयमानोऽणिति** । तेन 'इदम इश्' इत इत्यत्र त्रिमात्र ईकारो न भवति ॥—**उदिच्चेति** । इह अविधीयमान इति न संबध्यते, उदित्करणसामर्थ्यात् । तेन विधीयमानोऽप्युदित्सवर्णान्गृह्णात्येव । 'कुहोश्चुः' जगाद जगदे ॥—**परेण णकारेणेति** । व्याख्यानतो विशेषप्रतिपत्तेः । 'उपसर्गादृति', 'ऋत उत्' इत्यादौ तपरकरणाल्लिङ्गाच्च । यदि पूर्वेण स्यात्तर्हि तपरत्वमिहानर्थकं स्यात्, ऋकारस्यानण्त्वेन सवर्णाग्राहकत्वात् । एवं च 'तपरत्वाद्दीर्घे न, उप ऋकारीयति' इत्यादवक्ष्यमाणग्रन्थोऽपि संगच्छते ॥—**एवं लृकारोऽपीति** । त्रिंशतः संज्ञेत्यनुषज्यते । एतच्च न्यायसाम्यादुक्तम् । वस्तुत लृकारस्य ऋकारग्राहकत्वं न कुत्राप्युपलभ्यते ॥—**सूत्रारम्भसामर्थ्यादिति** । सति तु सावर्ण्ये एकारेण ऐकारग्रहणादोकारेण चौकारग्रहणात् 'ऐऔच्' इति सूत्रारम्भो वृथा स्यादिति भावः ॥—**नापादनीयमिति** । तेन ग्लावं ग्लाव इत्यत्र 'औतोऽम्शसोः' इति न प्रवर्तेत इति मूल एव स्फुटीभविष्यति ॥—**यद्यपीति** । ग्रहणकशास्त्रस्याद्याप्यनिष्पत्तेरिति भावः । एतच्च 'अकः सवर्णे दीर्घः' इत्यत्र व्युत्पादयिष्यामः ॥—**आक्षरेति** । अक्षराणां समाम्नाय उपदेशसूत्राणि, तत्र भवा आक्षरसमाम्नायिकाः । 'बह्वचोऽन्तोदात्ताट्ठञ्' इति ठञ् ॥—**हो ढ इति ढत्वं न भवतीति** । यद्यप्याकारप्रश्लेषाभावे संयोगान्तलोप एव प्राप्नोति न तु ढत्वं, तस्यासिद्धत्वात्, अतोऽत्र संयोगान्तलोपो न भवतीति वक्तुमुचितम्, तथापि 'कार्यकालं संज्ञापरिभाषम्' इति पक्षे त्रैपादिकेऽन्त-

---

१ **पूर्वसदृश इति**—सादृश्यं च प्रयत्नैक्येन । २ 'नाज्झलौ' इति द्विवचननिर्देशादणुदित्सूत्रारम्भाच्च अज्झलां न सावर्ण्यनिषेधः किन्तु अचां हल्भिः सह न सावर्ण्यम्, हलां चाज्भिर्न सावर्ण्यमित्यर्थः ॥

**१५ । तपरस्तत्कालस्य** ।१।१।७०। तः परो यस्मात्स च तात्परश्चोच्चार्यमाणसमकालस्यैव संज्ञा स्यात् । तेन अत् इत् उत् इत्यादयः षण्णां षण्णां संज्ञा, ऋदिति द्वादशानाम् ॥

**१६ । वृद्धिरादैच्** ।१।१।१। आदैच्च वृद्धिसंज्ञः स्यात् ॥

**१७ । अदेङ्गुणः** ।१।१।२। अदेङ् च गुणसंज्ञः स्यात् ॥

**१८ । भूवादयो धातवः** ।१।३।१। क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः ॥

**१९ । प्राग्रीश्वरान्निपाताः** ।१।४।५६। इत्यधिकृत्य ॥

**२० । चादयोऽसत्त्वे** ।१।४।५७। अद्रव्यार्थाश्चादयो निपातसंज्ञाः स्युः ॥

**२१ । प्रादयः** ।१।४।५८। अद्रव्यार्थाः प्रादयस्तथा ॥

**२२ । उपसर्गाः क्रियायोगे** ।१।४।५९ ॥

**२३ । गतिश्च** ।१।४।६०। प्रादयः क्रियायोगे उपसर्गसंज्ञा गतिसंज्ञाश्च स्युः ॥ प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप—एते प्रादयः ॥

**२४ । न वेति विभाषा** ।१।१।४४। निषेधविकल्पयोर्विभाषा संज्ञा स्यात् ॥

---

रङ्गे बहिरङ्गपरिभाषाया· प्रवृत्तेरन्तरङ्गे ढत्वे कर्तव्ये बहिरङ्ग संयोगान्तलोपोऽसिद्ध इति मत्वेदमुक्तमित्येके । अन्ये तु 'संज्ञापूर्वको विधिरनित्य' इति लोपस्य वारणं कथञ्चित्कर्तुं शक्यमित्याशयेन ढत्व नेत्युक्तमित्याहु । विश्वपाभिरित्यत्रेत्युपलक्षणम् । विश्वपा विश्वपाभ्यामित्यादावपि न भवति । 'हो ढ' इत्युपलक्षणम् । पृथगायुरित्यादौ 'झयो ह—', इत्याकारस्य घकारो नेति दिक् । यदि तु 'विवृतमूष्मणाम्' इत्यत्र 'ईषत्स्पृष्टम्' इत्यत ईषदित्यनुवर्त्य स्वराणा चेत्यत्र निवर्त्य ईषद्विवृतमूष्मणा, विवृत स्वराणामिति प्रयत्नभेदो व्याख्यायते, तदा 'नाऽऽज्झलौ' इति सूत्रं त्यक्तुं शक्यमित्याकरे स्थितम् ॥—**अननुनासिकास्ते इति** । ये त्वाक्षरसमाम्नायिका अणस्त एव सवर्णाना संज्ञा भवन्तीति भाव । एवंच रेफो हकारश्च अण्प्रत्याहारान्तर्गतोऽपि न कस्यचित्संज्ञा तत्सवर्णस्यान्यस्याभावादित्यवगन्तव्यम् ॥ **१५ स च तात्परश्चेति** । तत्रादिना उभयं विवक्षितमिति भाव ॥ **१६ वृद्धिरादैच्** । आच्च ऐच्चेति इतरेतरयोगद्वन्द्व·, 'सुपा सुलुक्—' इति औङ सुर्लुग्वा । यद्वा समाहारद्वन्द्व· । न चैवं 'द्वन्द्वाच्चुदषहान्तात्समाहारे' इति टच् स्यादिति वाच्यम् । समासान्तविधेरनित्यत्वात् । तत्र च प्रमाणं समासेषु वक्ष्याम । अथवा 'आद्' इत्यसमस्तमेवास्तु । वृद्धिशब्दस्तन्त्रेणावृत्त्या वा योजनीय । अयस्मयादित्वेन भत्वाच्चो कुर्न । ऐजिह द्विमात्र एव, तात्परत्वात्, तेन कृष्णैकत्वमित्यत्र त्रिमात्रो न । वृद्धिप्रदेशा 'वृद्धिरेचि' इत्यादय ॥ **१७ अदेङ् गुणः** । तपरकरणमिह सर्वार्थम् । तेन गङ्गोदकमित्यत्र त्रिमात्रो न । तरतीत्यत्र लकार एव, नतु कदाचिदाकार । न च प्रमाणत आन्तर्येण नियमसिद्धि । रपरत्वे कृते एकस्याध्यर्धमात्रत्वाद् अपरस्यार्धतृतीयमात्रत्वात् । गुणप्रदेशास्तु 'आद्गुण', 'अतो गुणे' इत्यादय ॥ **१८ भूवादय इति** । भूश्च वाश्च भूवाविति द्वन्द्व, आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेष, आदिश्च आदिश्च आदी, भूवौ आदी येषामिति विग्रह·, भूप्रभृतयो वासदृशा, सादृश्यं च क्रियावाचित्वेनेत्यभिप्रेत्याह—**क्रियावाचिन इति** । क्रियावाचिन इति किम्, या पश्यसीत्यादौ धातुत्वं मा भूत् । सति हि तस्मिन् 'आतो धातोः' इत्याकारलोपः स्यादिति स्थित मनोरमायाम् । भ्वादय· किम्, हिरुक् पृथग् इत्याद्यव्ययाना श्रियै इति भावार्थतिङन्तस्य च मा भूत् । स्तम्भ्वादीनामुदित्करणेन सौत्राणा धातुत्वं ज्ञाप्यते । चुलुम्पादीना 'बहुलमेतन्निदर्शनम्' इति गणसूत्रेण संग्रह ॥ **१९ प्राग्रीश्वरात्**—। रेफविशिष्टग्रहणं किम्, 'ईश्वरे तोसुन्कसुनौ' इत्यस्य व्याप्तिन्यायेनावधित्वं मा भूत् । यदि तु प्रत्यासत्त्यैव 'अधिरीश्वरे' इत्यस्यावधित्वसिद्धिरित्युच्यते, तर्हि स्पष्टप्रतिपत्त्यर्थमेवास्तु ॥ **२० चादयः** । अद्रव्यार्था· किम्, पशु । लिङ्गसंख्यान्वितं द्रव्यम् । इह तु स्यादेव—'लोधं नयन्ति पशु मन्यमाना' । पशु इति सम्यगर्थे ॥ **२३ गतिश्च** । उपसर्गसंज्ञया समावेशार्थश्चकार । अन्यथा 'आ कडारात्—' इति पर्याय स्यात् । तत्फलं तु प्रणेयमित्यादौ 'उपसर्गादसमासेऽपि—' इति णत्वम्, 'गतिकारक—' इति कृदुत्तरपदप्रकृतिस्वरसिद्धिश्चेति दिक् ॥—**निस् निर् दुस् दुर् इति** । 'उपसर्गस्यायतौ' इति निर्दुरोर्लत्वम्, निलयते, दुलयते । निसो दुसश्च रुत्वस्यासिद्धत्वाल्लत्वाभाव, निरयते, दुरयते ॥ **२४ न वेति विभाषा** । नेति प्रतिषेधो वेति विकल्पस्तदाह—**निषेधविकल्पयोरिति** । 'विभाषा श्वे' इत्यादिषु प्रतिषेधविकल्पावुपतिष्ठेते, तत्र प्रतिषेधेन समीकृते विषये पश्चाद्विकल्प प्रवर्तते शुशाव शिश्वायेत्यत्राप्राप्तौ विकल्प·, शुशुवतु· शिश्वियतुरित्यादौ तु 'वचिस्वपि—' इति नित्यप्राप्ताविति विवेक ॥ अत्रेदं बोध्यम्—इतिशब्द· काकाक्षिन्यायेनोभाभ्या सबध्यते, स च पदार्थविपर्यासकृत्, तेन निषेधो विकल्पश्च नवाशब्दार्थं संज्ञीति विभाषाशब्दार्थौ विकल्प संज्ञा । उभयत्र विभाषार्थं चेदं सूत्रम् । प्राप्तविभाषायामप्राप्तविभाषाया च नास्योपयोग । प्राप्तविभाषायां भावांशस्य सिद्धत्वेन विभाषाश्रुत्या पक्षे भवतीति भावांशमनूद्य पक्षे न भवतीत्यभावांशमात्रकरणात्, अप्राप्तवि-

---

१ तकारात्पर·, तकारात्पूर्वश्च वर्ण· समकालस्य संज्ञा स्यादित्यर्थ । जातिपक्षे, व्यक्तिपक्षेऽणविषये च अत्वावच्छिन्नाना सर्वेषां ग्रहणप्रसक्तौ अनेन नियम· क्रियते—समकालस्यैवेति । आद्गुण इत्यादौ विभक्तितकारे नास्य प्रवृत्ति·, उपसर्गादृतीति तपरकरणात् । दीर्घाकारादावनणि विध्यर्थमेतदिति न । जातिपक्षेण गुणाभेदकत्वेन वा प्राप्तस्यात्वावच्छिन्नस्य वारणार्थमस्यावश्यकत्वात् ॥ २ वृद्धिशब्दस्य संज्ञाकरण मङ्गलार्थम् । अत्राकारस्य तात्पूर्वत्वेन ऐचश्च तात्परत्वेन समकालस्यैव ग्रहणम्, न तु प्लुतस्याकारस्यैचो वा ॥ ३ क्रियावाचित्वे सति भ्वादिगणपठितत्व धातुलक्षणम् । द्वन्द्वान्ते श्रूयमाणस्य पदस्य प्रत्येक सबन्धात् भूशब्देन वाशब्देन च सहान्वयः ।

**२५ । स्वं रूपं शब्दस्याशब्दसंज्ञा** ।१।१।६८। शब्दस्य स्वं रूपं संज्ञि, शब्दशास्त्रे या संज्ञा तां विना ॥

**२६ । येन विधिस्तदन्तस्य** ।१।१।७२। विशेषणं तदन्तस्य संज्ञा स्यात् स्वस्य च रूपस्य । ॐ **समासप्रत्ययविधौ प्रतिषेधः** । ॐ **उगिद्वर्णग्रहणवर्जम्** ॥

**२७ । विरामोऽवसानम्** ।१।४।११०। वर्णानामभावोऽवसानसंज्ञः स्यात् ॥

**२८ । परः संनिकर्षः संहिता** ।१।४।१०९। वर्णानामतिशयितः संनिधिः संहितासंज्ञः स्यात् ॥

---

भाषायां तु अभावांशस्य सिद्धत्वेन पक्षे न भवतीत्यभावांशमनूद्य पक्षे भवतीति भावांशमात्रकरणात् । 'विभाषा श्वेः' इत्युभयत्र विभाषायां तु यदि विधिमुखेन प्रवृत्तिस्तर्हि पित्स्वेव संप्रसारणविकल्पः स्यात्, कित्सु तु यजादित्वात् 'वचिस्वपि–' इति नित्यमेव स्यात् । अथ प्रतिषेधमुखेन प्रवृत्तिस्तर्हि कित्स्वेव प्रवृत्तिः स्यात्, न तु पित्सु । न च पित्सु विधिमुखेन कित्सु तु निषेधमुखेनेत्युभयथापि प्रवृत्तिरस्त्विति वाच्यम्, वैरूप्यलक्षणवाक्यभेदप्रसङ्गात् । संज्ञाकरणे तु श्रुतक्रमानुरोधेन नेति प्रतिषेधः प्रथमं कित्सु प्रवर्तते, ततः किदकिद्रूपे सर्वस्मिन् लिटि एकरूपं प्रापिते सति पक्षे भवतीत्येकरूपेण विधिमुखेनैव प्रवर्तते । इतीति किम्, घुसंज्ञावत् 'स्वं रूपम्–' इति वचनाच्छब्दस्य संज्ञा मा भूत् । तथाहि सति 'विभाषा श्वेः' इत्यस्य नवाशब्दः श्वयतेरादेश इत्यर्थः स्यात् । इतिशब्दे तु सति अर्थः संज्ञीति लभ्यते । तथाहि—लोके ह्यर्थप्रधानः शब्दः, 'गौरित्ययमाह' इत्यादौ तु शब्दस्वरूपपरः संपद्यते । व्याकरणे तु 'स्वं रूपम्–' इति परिभाषणात्स्वरूपपरत्वमौत्सर्गिकम् । इतिशब्दसमभिव्याहारे त्वर्थपरतेति विशेषः ॥ इदमेवेतिशब्दस्य पदार्थविपर्यासकत्वं नाम । संज्ञात्वमर्थस्यैव न तु विभाषाशब्दस्येति व्याख्यानस्य 'हृक्रोरन्यतरस्याम्' इत्यादौ वैरूप्योद्धारः फलम् । उभयत्रविभाषा हि तत्सूत्रम्, अभ्यवपूर्वस्य हरतेर्भक्षणार्थत्वाद्विकारार्थस्य करोतेरकर्मकत्वाच्च 'गतिबुद्धि–' इत्यादिना अणौ कर्तुर्णौ कर्मत्वे प्राप्ते अर्थान्तरे चाप्राप्ते तदारम्भात् । उदाहृतं च भाष्ये 'प्राप्ते तावद्–अभ्यवहारयति सैन्धवान्, अभ्यवहारयति सैन्धवैः । विकारयति सैन्धवान्, विकारयति सैन्धवैः । अप्राप्ते तु–हरति भारं देवदत्तः, हारयति भारं देवदत्तम्, हारयति भारं देवदत्तेन । करोति कटं देवदत्तः, कारयति कटं देवदत्तम्, कारयति कटं देवदत्तेन–इति दिक् ॥ **२५ स्वं रूपं शब्दस्य**—। 'अग्नेर्ढक्' आग्नेयम् । 'आङो यमहनः' आयच्छते, आहते । इह अग्नि, आङ्, यम्, हन्, एत एव संज्ञिनः ॥ नन्वग्न्यादिवाच्यादङ्गारादेर्ढगादिप्रत्ययो न संभवतीति स्वरूपादेव स्यात्, 'प्रातिपदिकात्' इत्याद्यधिकाराच्च किमनेन सूत्रेणेति चेत् । सत्यम् । अग्न्यादिशब्दपर्यायेभ्यो वह्न्यादिभ्यो मा भूदिति सूत्रस्यास्यारम्भः ॥ नन्वत्र रूपग्रहणं विनापि स्वशब्देन रूपमेव ग्रहीष्यते, प्रतीतावुपदेशानपेक्षत्वादसाधारणत्वादन्तरङ्गत्वान्नियतोपस्थितिकत्वाच्च । अर्थो हि प्रतीतौ संबन्धग्रहणमपेक्षते, पर्यायैरपि प्रत्यायनात्साधारणः, पदज्ञानजन्यबोधविषयत्वाद्बहिरङ्गः, अनुकरणदशायामप्रतीतेरनियतोपस्थितिकश्चेति किमनेन रूपग्रहणेन । उच्यते—इह शास्त्रे अर्थोऽपि विवक्षितो रूपवदिति ज्ञापनार्थं रूपग्रहणम् । तेन 'अर्थवद्ग्रहणे नानर्थकस्य' इत्युपपन्नं भवति । तत्रोक्तज्ञापकादर्थो ग्राह्यः, स्वमिति वचनात्स्वंरूपं चेति सामर्थ्यादर्थवतो रूपस्य ग्रहणम् । तेन काशे कुशे इत्यत्र 'शे' इत्ययं प्रगृह्यसंज्ञो न भवति । 'प्रादूहोढ–' इत्यत्र तु 'ऊढग्रहणेन क्तान्तमेव गृह्यते न तु क्तवत्वन्तस्यैकदेशः' इत्यन्यत्र विस्तरः ॥ अशब्दसंज्ञेति किम् । 'उपसर्गे घोः किः' दाधाभ्यो यथा स्यात्, घुधातोः शब्दार्थकान्मा भूत् । न च 'दाधा घु–' इति घुसंज्ञाकरणसामर्थ्यादेव दाधाभ्यः किः स्यादिति वाच्यम् । 'घुमास्था–' इत्यादिना आत ईत्वविधौ संज्ञाकरणस्यावश्यकतया सामर्थ्योपक्षयात् ॥ इह शब्दस्य संज्ञा=शब्दसंज्ञेति न षष्ठीसमासः, 'कर्म करणं–' इत्यादिष्वर्थसंज्ञासु स्वरूपग्रहणापत्तेः । किंतु शब्दः शब्दशास्त्रं तत्र संज्ञा=शब्दसंज्ञेति सप्तमीसमासस्तदाह—**शब्दशास्त्रे या संज्ञेति** ॥ **२६ येन विधिः**—। विधिरित्यत्र 'उपसर्गे घोः किः' इति कर्मणि किः प्रत्ययः । येनेति करणे तृतीया, न तु कर्तरि । तस्याः कृद्योगषष्ठ्या बाधात् । न च 'उभयप्राप्तौ कर्मणि' इति नियमेन निर्वाहः, कर्मण उक्तत्वेनोभयप्राप्त्यभावात् । तथा चात्र करणे तृतीयैव । करणं च परतन्त्रं, कर्त्रधिष्ठितस्यैव करणत्वात् । एवं चेह तृतीयया पारतन्त्र्यं लक्ष्यते । न च 'एरच्' इत्यादाविकारादीनां पारतन्त्र्यं धात्वादीनां च स्वातन्त्र्यं वास्यादीनामिव तक्षादीनामिव संभवति, किंतु वैवक्षिकम् । तेन विशेषणमप्रधानम्, तच्चात्मान्तस्य संज्ञेति फलितं तदेतदाह—**विशेषणं तदन्तस्येति** ॥—**स्वस्य चेति** । 'स्वं रूपम्' इत्यनुवृत्तेरेतल्लभ्यते । 'एरच्' इकारान्तादिकाररूपाच्च धातोरच् । चयः, जयः, अयः ॥—**समासप्रत्ययविधाविति** । कृष्णं श्रितः कृष्णश्रितः । नेह—कृष्णमुपश्रितः । 'नडादिभ्यः फक्' नडस्य गोत्रापत्यं नाडायनः । नेह—सूत्रनडस्यापत्यं सौत्रनाडिः । अनुशतिकादित्वादुभयपदवृद्धिः ॥—**उगिद्वर्णेति** । उगिद्वर्णग्रहणं वर्जयित्वा, उगिद्वर्णग्रहणवर्जं–'द्वितीयायां च' इति णमुल् ॥ महान्तमतिक्रान्ता अतिमहती, महच्छब्दस्य गौरादित्वेऽप्युपसर्जने 'षिद्गौर–' इति ङीषोऽप्रवृत्तेः 'उगितश्च' इत्युगिदन्तान्ङीप् ॥ 'अत इञ्' दाक्षिः । न चेह सामर्थ्यात्तदन्तविधिः, अस्यापत्यमिः=काम इत्यत्र चरितार्थत्वात् । न चैवमिञो ञित्त्वं व्यर्थमिति वाच्यम् । 'बाह्वादिभ्यश्च' इत्यत्र यथायथं वृद्ध्याद्युदात्ताभ्यां चरितार्थत्वात् । नन्वेवमपि औपगविरित्यादावेव 'अत इञ्' स्यात्, न तु दाक्षिरित्यादौ, अकारस्येहानर्थकत्वादिति चेन्न । वर्णग्रहणे अर्थवद्ग्रहणपरिभाषाया अप्रवृत्तेः ॥ **२७ विरामोऽवसानम्** । विरमणं विरामः, भावे घञ् ॥ शब्दानुशासनप्रस्तावादाह—**वर्णानामिति** । संज्ञाप्रदेशाः 'वावसाने' इत्यादयः । अभावस्यापि बुद्धिकृतं पौर्वापर्यमस्त्येव । यथोच्चरितप्रध्वंसिनां नित्यविभूनां

९४९ । **अवसमन्धेभ्यस्तमसः** ।५।४।७९। अवतमसम् । संतमसम् । अन्धयतीत्यन्धं पचाद्यच्, अन्धं तमः अन्धतमसम् ।

९५० । **श्वसो वसीयश्श्रेयसः** ।५।४।८०। वसुशब्दः प्रशस्तवाची, तत ईयसुनि वसीयः । श्वस्शब्द उत्तरपदार्थप्रशंसामाशीर्विषयमाह । मयूरव्यंसकादित्वात्समासः । श्वोवसीयसम् । श्वःश्रेयसं ते भूयात् ।

९५१ । **अन्ववतप्ताद्रहसः** ।५।४।८१। अनुरहसम् । अवरहसम् । तप्तरहसम् ।

९५२ । **प्रतेरुरसः सप्तमीस्थात्** ।५।४।८२। उरसि इति प्रत्युरसम्, विभक्त्यर्थेऽव्ययीभावः ।

९५३ । **अनुगवमायामे** ।५।४।८३। एतन्निपात्यते दीर्घत्वे । अनुगवं यानम्, 'यस्य चायामः' ६७१ इति समासः ।

९५४ । **द्विस्तावा त्रिस्तावा वेदिः** ।५।४।८४। अच्प्रत्ययष्टिलोपः समासश्च निपात्यते । यावती प्रकृतौ वेदिस्ततो द्विगुणा त्रिगुणा वाऽश्वमेधादौ तत्रेदं निपातनम् । वेदिरिति किम् । द्विस्तावती त्रिस्तावती रज्जुः ।

९५५ । **उपसर्गादध्वनः** ।५।४।८५। प्रगतोऽध्वानं प्राध्वो रथः ।

९५६ । **न पूजनात्** ।५।४।६९। पूजनार्थात्परेभ्यः समासान्ता न स्युः । सुराजा । अतिराजा । ॐ स्वतिभ्यामेव । नेह—परमराजः । पूजनात्किम् । गामतिक्रान्तोऽतिगवः । 'बहुव्रीहौ सक्थ्यक्ष्णोः—' ८५४ इत्यतः प्रागेवायं निषेधः । नेह—सुसक्थः । स्वक्षः ।

९५७ । **किमः क्षेपे** ।५।४।७०। क्षेपे यः किंशब्दस्ततः परं यत्तदन्तात्समासान्ता न स्युः । कुत्सितो राजा किंराजा । किंसखा । किंगौः । क्षेपे किम् । किंराजः । किंसखः । किंगवः ।

९५८ । **नञस्तत्पुरुषात्** ।५।४।७१। समासान्तो न । अराजा । असखा । तत्पुरुषात्किम् । अधुरं शकटम् ।

९५९ । **पथो विभाषा** ।५।४।७२। नञ्पूर्वात्पथो वा समासान्तः । अपथम्-अपन्थाः । 'तत्पुरुषात्' इत्येव, अपथो देशः । अपथं वर्तते ॥

॥ इति समासान्तप्रकरणम् ॥

## अथालुक्समासः ।

९६० । **अलुगुत्तरपदे** ।६।३।१। अलुगधिकारः प्रागानङः, उत्तरपदाधिकारस्त्वापादसमाप्तेः ।

९६१ । **पञ्चम्याः स्तोकादिभ्यः** ।६।३।२। एभ्यः पञ्चम्या अलुक् स्यादुत्तरपदे । स्तोकान्मुक्तः । एवमन्ति-

---

**—पल्येति** । 'पलं मांसमर्हति' इति पल्यो मांसभोजी, तदीयं वर्चः पल्यवर्चसम् ॥ ९४९ **अवतमसमित्यादि** । अवहीनं संततं च तमः—इति विग्रहः ॥**—अन्धयतीति** । 'अन्ध दृष्ट्युपघाते' चुरादिः ॥**—अन्धमिति** । गाढमित्यर्थः ॥ ९५० **श्वसो**—। 'अवस्शब्दात्प्रशस्तवचनादीयसुन्' इत्याकरविरुद्धं व्याचक्षाणा उपेक्ष्या इति ध्वनयति**—वसुशब्द इति** ॥ **—वसीय इति** । 'यः कामयेत वसीयान् स्याम्' इति श्रौतप्रयोगोऽप्यत्रानुकूल इति भावः ॥**—श्वस्शब्द इति** । कालवाच्यप्ययं, प्रकृते त्वर्थविशेषपरः । शक्तिस्वाभाव्यात्तमेवाह**—उत्तरपदार्थप्रशंसामिति** । उत्तरपदार्थभूतां प्रशंसामित्यर्थः ॥**—आशीर्विषयमिति** । षष्ठीसमासः । विषयशब्दस्याजहल्लिङ्गत्वात्पुंलिङ्गनिर्देशः ॥ 'उत्तरपदार्थप्रशंसाया आशीर्विषयतामाह' इति पाठान्तरं क्वचिदस्ति । उभयथापि आशीर्विषयताया द्योतकोऽयमिति फलितोऽर्थः ॥ ९५१ **अन्वव**—। इह 'रहः' इत्यप्रकाशमुच्यते । 'अनुगतमवहीनं च रहः' इति प्रादिसमासः । 'अनुगतं रहोऽस्मिन्' इत्यादिबहुव्रीहिर्वा ॥**—तप्तरहसमिति** । 'तप्तं च तद्रहश्च' इति विग्रहः । परेणानधिगम्यमित्यर्थः ॥ ९५६ **इत्यतः प्रागिति** । 'प्राग्बहुव्रीहिग्रहणं कर्तव्यम्' इति वार्तिकोक्तेरिति भावः ॥ ९५७ **किमः क्षेपे** । क्षेपग्रहणमिह शक्यमकर्तुम्, प्रतिपदोक्तपरिभाषया 'किं क्षेपे' इति विहितसमासस्यैव ग्रहणात् ॥**—किंराज इत्यादि** । किमत्र प्रश्ने । षष्ठीसमासः कर्मधारयो वा ॥ ९५८ **नञस्तत्पुरुषात्** । 'नञः' इति षष्ठी, नञः संबन्धी यस्तत्पुरुषो नञवयवकस्तस्मादित्यर्थः ॥ ९५९ **अपथमिति** । 'नस्तद्धिते' इति टिलोपः । 'अपथं नपुंसकम्' इति क्लीबत्वम् ॥**—अपथं वर्तत इति** । अर्थाभावेऽव्ययीभावः ॥ **इति सकलसमाससाधारणसमासान्तप्रकरणम्** ॥

९६१ **अलुक् स्यादिति** । प्रसज्यप्रतिषेधोऽयम् । 'सुपो धातु—' इत्यादिना प्राप्तौ लुङ् भवतीत्यर्थः ॥**—स्तोकान्मुक्त इति** । समासप्रयोजनमैकपद्यमैकस्वर्यं विशेषणयोगाभावश्च । किंच 'स्तोकान्मुक्तस्यापत्यं स्तौकान्मुक्तिः' 'स्तोकान्मुक्तायाः स्तौकान्मुक्तेयः' इति समुदायात्तद्धितोत्पत्तिरपि प्रयोजनम् ॥ न च प्राथमिकसामासिकलुको निषेधेन चरितार्थत्वाद्वाद्यस्तद्धितनिमित्तो लुग् दुर्वार इति शङ्क्यम् । 'सुपो धातु—' इति शास्त्रस्यैकत्वादविशेषेण लुग्द्वयस्यापि निषेधाभ्युपगमात् ॥ इह 'स्तोकान्तिक—' इति समासशास्त्रपठिता एव स्तोकादयो गृह्यन्ते, न तु 'करणे च स्तोकाल्पकृच्छ्र—' इति सूत्रपठिताः । समासे सुपो लुकि प्रसक्ते विधीयमानेनालुक्शास्त्रेण समासशास्त्रपठितानामविलम्बेनोपस्थितेर्व्याप्तिन्यायाच्च ॥ 'स्तोकान्तिक—' इत्यत्र ह्यर्थग्रहणादन्यान्यपि बहूनि गृह्यन्ते, तदेतन्मनसि निधायाह**—एवमिति** । द्विवचनबहुवचनान्तानां तु

---

१ **उत्तरपदे इति**—उत्तरपदशब्दः समासचरमावयवे रूढः, पदे इत्येव सिद्धे उत्तरग्रहणात् । अयं न विधिः, 'पञ्चम्याः स्तोकादिभ्यः' इत्यारम्भात् ।

कार्थदूरार्थकृच्छ्रेभ्यः । उत्तरपदे किम् । निष्क्रान्तः स्तोकान्निस्तोकः । ॐ **ब्राह्मणाच्छंसिन उपसंख्यानम्** । ब्राह्मणे विहितानि शस्त्राणि उपचाराद् ब्राह्मणानि, तानि शंसतीति 'ब्राह्मणाच्छंसी' ऋत्विग्विशेषः । द्वितीयार्थे पञ्चम्युपसंख्यानादेव ।

९६२ । **ओजःसहोऽम्भस्तमसस्तृतीयायाः** ।६।३।३। ओजसाकृतम् । इत्यादि । ॐ **अञ्जस उपसंख्यानम्** । अञ्जसाकृतम् । आर्जवेन कृतमित्यर्थः । ॐ **पुंसानुजो जनुषान्ध इति च** । यस्याग्रजः पुमान् स पुंसानुजः । जनुषान्धः–जात्यन्धः ।

९६३ । **मनसः संज्ञायाम्** ।६।३।४। मनसागुप्ता ।

९६४ । **आज्ञायिनि च** ।६।३।५। 'मनसः' इत्येव । मनसा आज्ञातुं शीलमस्य मनसाज्ञायी ।

९६५ । **आत्मनश्च** ।६।३।६। आत्मनस्तृतीयाया अलुक् स्यात् । ॐ **पूरण[1] इति वक्तव्यम्** । पूरणप्रत्ययान्ते[2] उत्तरपदे इत्यर्थः । आत्मनापञ्चमः । 'जनार्दनस्त्वात्मचतुर्थ एव' इति बहुव्रीहिर्बोध्यः । पूरणे किम् । आत्मकृतम् ।

९६६ । **वैयाकरणाख्यायां चतुर्थ्याः** ।६।३।७। 'आत्मनः' इत्येव । आत्मनेपदम् । आत्मनेभाषाः । तादर्थ्ये चतुर्थी । 'चतुर्थी' इति योगविभागात्समासः ।

९६७ । **परस्य च** ।६।३।८। परस्मैपदम् । परस्मैभाषा ।

९६८ । **हलदन्तात्सप्तम्याः संज्ञायाम्** ।६।३।९। हलन्ताददन्ताच्च सप्तम्या अलुक् संज्ञायाम् । त्वचिसारः ।

९६९ । **गवियुधिभ्यां स्थिरः** ।८।३।९५। आभ्यां स्थिरस्य सस्य षः स्यात् । गविष्ठिरः । अत्र 'गवि' इति वचनादेवालुक् । युधिष्ठिरः । अरण्येतिलकाः । 'संज्ञायाम्' ७२२ इति सप्तमीसमासः । ॐ **हृद्द्युभ्यां च** । हृदिस्पृक् । दिविस्पृक् ।

९७० । **कारनाम्नि[3] च प्राचां हलादौ** ।६।३।१०। प्राचां देशे यत्कारनाम तत्र हलादावुत्तरपदे हलदन्तात्सप्तम्या अलुक् । मुकुटेकार्षापणम् । दृषदिमाषकः । पूर्वेण सिद्धे नियमार्थम्–कारनाम्न्येव, प्राचामेव, हलादावेव–इति । कारनाम्नि किम् । अभ्याहितपशुः । कारादन्यस्यैतत् देयस्य नाम । प्राचां किम् । यूथपशुः । हलादौ किम् । अविकटोरणः । हलदन्तात्किम् । नद्यां दोहो नदीदोहः ।

९७१ । **मध्याद्गुरौ** ।६।३।११। मध्येगुरुः । ॐ **अन्ताच्च** । अन्तेगुरुः ।

९७२ । **अमूर्धमस्तकात्स्वाङ्गादकामे** ।६।३।१२। कण्ठेकालः । उरसिलोमा । अमूर्धमस्तकात्किम् । मूर्ध-

---

समासो नेष्यते, अनभिधानात् । तेन 'स्तोकाभ्यां मुक्तः' इत्यादौ वाक्यमेव ॥—**शस्त्राणीति** । 'प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रम्, अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं शस्त्रम्' इति याज्ञिकानां व्यवहारः ॥ **९६२ ओजः स—। ओजसाकृतमिति** । 'कर्तृकरणे कृता' इति समासः । कथं तर्हि 'सततनैशतमोवृतमन्यतः' इति भारविः । **अत्राहुः**— 'वृतु वर्तने' इत्यस्मात् 'घञर्थे कविधानम्' इति भावे कप्रत्यये तदन्तेन षष्ठीसमासाश्रयणान्न दोष इति ॥ यत्तु केवलपदाधिकार एव तदन्तविधिर्न तूत्तरपदाधिकारे । तथा च 'नैशतमसा' इति तृतीयाया अलुङ्न भवतीति दुर्घटवृत्त्यादावुक्तम् । तन्न । 'पदाङ्गाधिकारे' इत्यत्र 'इष्टकचितं, पक्वेष्टकचितम्' इति भाष्योदाहरणादुत्तरपदाधिकारेऽपि तदन्तविधिप्रवृत्तेः ॥ **—जनुषेति** । 'जनुर्जननजन्मानि' इत्यमरः ॥ **९६५ आत्मनापञ्चम इति** । 'तृतीया' इति योगविभागात् समासः ॥ इह प्रकृत्यादित्वात्प्रथमार्थे तृतीयेत्येके ॥ 'आत्मना कृतः पञ्चमः' इति करोतिक्रियापेक्षा सेत्यन्ये ॥**— बहुव्रीहिर्बोध्य इति** । एकस्याप्यौपाधिकभेदं परिकल्प्य वर्तिपदार्थत्वमन्यपदार्थत्वं च विवक्षणीयमिति भावः ॥ **९६६ वैयाकरणा—**। व्याकरणे भवा वैयाकरणी । 'अणृगयनादिभ्यः' इत्यण् । सा चासावाख्या चेति कर्मधारयः ॥**—आत्मन इत्येवेति** । इह 'आत्मनः' इत्यननुवर्त्य 'वैयाकरणाख्यायां चतुर्थ्या अलुक्' इति व्याख्याने तु 'परस्य च' इत्युत्तरसूत्रं त्यक्तुं शक्यमित्याहुः ॥ **—आत्मनेभाषा इति** । यद्यपीयमाख्या अष्टाध्याय्यां नास्ति, तथापि धातुपाठेऽस्तीति भावः ॥ प्रकृतिविकृतिभावविरहात् 'रन्धनाय स्थाली' इतिवत्समासाभावमाशङ्क्याह**—योगविभागादिति** । इहालुग्विधिसामर्थ्यादपि समासः सुवचः ॥ **९६७ परस्य च** । परशब्दस्य च या चतुर्थी तस्या अलुक् स्याद्वैयाकरणाख्यायाम् ॥ **९६९ गवियुधि–**। स्थिरशब्दोऽयम् 'अजिरशिशिर–' इत्यौणादिकः किरच्प्रत्ययान्तस्तिष्ठतेर्निष्पन्नः । 'सात्पदाद्योः' इति निषेधे प्राप्ते वचनारम्भः ॥ **—गवीति वचनादेवेति** । न च लुकं बाधित्वा परत्वादन्तरङ्गत्वाच्चावादेशे 'हलदन्तात्सप्तम्याः–' इत्येवालुक् सिध्यतीति वाच्यम्, 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इति लुको बलीयस्त्वादिति भावः ॥**—हृदिस्पृक् दिविस्पृगिति** । हृदयं दिवं च स्पृशतीति विग्रहः । अलुग्विधिसामर्थ्यात्कर्मणि सप्तमी, कर्मणोऽधिकरणत्वविवक्षया वा ॥ **९७० अवि-**

---

[1] 'आत्मनश्च पूरणे' इति समुदितस्यैव वार्तिकत्वमिति भाष्याक्षरस्वारस्यम् । 'वैय्याकरणाख्यायां चतुर्थ्याः' इत्यत्र 'आत्मनश्च पूरणे' इति वार्तिकस्थस्यैव 'काम्ये रोरेव' 'इति वार्तिकस्य 'इणः षः' इत्यत्रेवानुवृत्तिर्बोध्या । वस्तुतस्तु आत्मनेपदं परस्मैपदमिति निपातनादेव अलुक्समासयोः साधनेन 'वैय्याकरणाख्यायाम्–' 'परस्य च' इति सूत्रद्वयस्य प्रत्याख्याततत्वेन नानुवृत्तेरावश्यकतेति बोध्यम् । [2] **पूरणप्रत्ययान्त इति**—यद्यप्यत्र उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणं न भवति, तथापि आत्मन् शब्दात्पूरणप्रत्ययासंभवेनेह तदन्तग्रहणं कार्यमेवेति भावः । [3] **कारनाम्नीति**—वणिक्पशुपालकर्षकादिभ्यो राजग्राह्यो भागः करः स एव कारः, तस्य नाम्नीत्यर्थः ।

शिखः । मस्तकशिखः । अकामे किम् । मुखे कामोऽस्य मुखकामः ।

९७३ । **बन्धे च विभाषा** ।६।३।१३। हलदन्तात्सप्तम्या अलुक् । हस्तेबन्धः-हस्तबन्धः । हलदन्तेति किम् । गुप्तिबन्धः ।

९७४ । **तत्पुरुषे कृति बहुलम्** ।६।३।१४। स्तम्बेरमः-स्तम्बरमः । कर्णेजपः-कर्णजपः । क्वचिन्न, कुरुचरः ।

९७५ । **प्रावृट्शरत्कालदिवां जे** ।६।३।१५। प्रावृषिजः । शरदिजः । कालेजः । दिविजः । पूर्वस्यायं प्रपञ्चः ।

९७६ । **विभाषा वर्षक्षरशरवरात्** ।६।३।१६। एभ्यः सप्तम्या अलुक् जे । वर्षेजः-वर्षजः । क्षरेजः-क्षरजः । शरेजः-शरजः । वरेजः-वरजः ।

९७७ । **घकालतनेषु कालनाम्नः** ।६।३।१७। सप्तम्या विभाषाऽलुक् स्यात् । घे-पूर्वाह्णेतरे-पूर्वाह्णतरे । पूर्वाह्णेतमे-पूर्वाह्णतमे । काले-पूर्वाह्णेकाले-पूर्वाह्णकाले । तने-पूर्वाह्णेतने-पूर्वाह्णतने ।

९७८ । **शयवासवासिष्वकालात्** ।६।३।१८। खेशयः-खशयः । ग्रामेवासः-ग्रामवासः । ग्रामेवासी-ग्रामवासी । हलदन्तादित्येव, भूमिशयः । ॐ **अपो-योनियन्मतुषु** । अप्सु योनिरुत्पत्तिर्यस्य सोऽप्सुयोनिः । अप्सु भवोऽप्सव्यः । अप्सुमन्तावाज्यभागौ ।

९७९ । **नेन्सिद्धबध्नातिषु च** ।६।३।१९। इन्नन्तादिषु सप्तम्या अलुङ् । स्थण्डिलशायी । साङ्काश्यसिद्धः । चक्रबन्धः ।

९८० । **स्थे च भाषायाम्** ।६।३।२०। सप्तम्या अलुङ् । समस्थः । भाषायां किम् । कृष्णोऽस्या खरेष्ठः ।

९८१ । **षष्ठ्या आक्रोशे** ।६।३।२१। चौरस्य कुलम् । आक्रोशे किम् । ब्राह्मणकुलम् । ॐ **वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु** । वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः । ॐ **आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति च** । अमुष्यापत्यं आमुष्यायणः, नडादित्वात्फक् । अमुष्य पुत्रस्य भावः—आमुष्यपुत्रिका, मनोज्ञादित्वाद्वुञ् । एवम्—आमुष्यकुलिका । ॐ **देवानांप्रिय इति च मूर्खे** । अन्यत्र देवप्रियः । ॐ **शेपपुच्छलाङ्गूलेषु शुनः** । शुनःशेपः । शुनःपुच्छः । शुनोलाङ्गूलः । ॐ **दिवश्च दासे** । दिवोदासः ।

९८२ । **पुत्रेऽन्यतरस्याम्** ।६।३।२२। षष्ठ्याः पुत्रे परेऽलुग्वा निन्दायाम् । दास्याःपुत्रः-दासीपुत्रः । निन्दायां किम् । ब्राह्मणीपुत्रः ।

९८३ । **ऋतो विद्यायोनिसंबन्धेभ्यः** ।६।३।२३। विद्यासंबन्धयोनिसंबन्धवाचिन ऋदन्तात्षष्ठ्या अलुक् । होतुरन्तेवासी । होतुःपुत्रः । पितुरन्तेवासी । पितुःपुत्रः । ॐ **विद्यायोनिसंबन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणम्** । नेह-होतृधनम् ।

९८४ । **विभाषा स्वसृपत्योः** ।६।३।२४। ऋदन्तात्षष्ठ्या अलुग् वा स्वसृपत्योः परयोः ।

---

**कटोरण इति** । 'संघाते कटच्' इति कटच्प्रत्ययान्तः । उरणो मेषः ॥ **९७३ बन्धे च विभाषा** । बन्ध इति घञन्तः ॥ **—हस्तेबन्ध इति** । बहुव्रीहिरयम् । तत्पुरुषे तु 'नेन्सिद्धबध्नातिषु च' इति वक्ष्यमाणेन निषेध एवेत्याहुः ॥**—अप्सव्य इति** । दिगादित्वाद्यति ओर्गुणे वान्तादेशः ॥ प्राचा तु यतः स्थाने जं पठित्वा 'अप्सुजः' इत्युदाहृतं, तदाकरविरुद्धम् । **'जे चरे च वक्तव्यम्** । अप्सुजः, अप्सुचरः' इति भाष्ये वचनान्तरदर्शनाच्च ॥ केचित्तु 'अप्सुजः' इत्युक्तोदाहरणद्वयेऽपि 'हलदन्तात्–' इत्यलुकमाहुः ॥ **९७८ अप्सुमन्तावित्ति** । कारीर्याम् 'अप्स्वग्ने सधिष्ठव', 'अप्सु मे सोमो अब्रवीत्' इत्याज्यभागमन्त्रौ स्तः । तत्र ह्यप्सुशब्दोऽस्तीति तद्द्वारा आज्यभागयोरप्यप्सुमत्त्वम् ॥ प्राचा तु 'मतिषु' इति पठित्वा 'अप्सुमतिः' इत्युदाहृतम् ॥ **अत्र केचित्**—अप्स्वित्येतदनुकरणशब्दः सप्तम्यन्तो न वा । आद्ये सप्तम्यन्तात्प्रथमाया अभावेन मतुबेव दुर्लभः । अन्त्ये तु लुकः प्राप्तिरेव नास्ति सप्तम्यभावात् । तथा च 'मतिषु' इति प्राचोक्तः पाठ एव युक्तः । न च स पाठो भाष्यादौ न दृष्ट इति वाच्यम् । 'मतिषु' इति पाठस्य 'अप्सुमतिः' इत्युदाहरणस्य च भाष्यवृत्त्यादिपुस्तकेषु दृश्यमानत्वेन मतुष्विति पाठस्यैव क्वाप्यदर्शनात्, व्यर्थत्वाच्च । 'अस्यवामीयम्' 'कयाशुभीयम्' इत्यादाविव लुकिकर्तव्ये 'प्रकृतिवदनुकरणम्' इत्यतिदेशाप्रवृत्त्यैवेष्टसिद्धेरित्याहुः ॥ **९७९ नेन्सिद्धब—॥—चक्रबन्ध इति** । 'तत्पुरुषे' इत्यनुवृत्तेस्तत्पुरुष एवायं निषेधः । बहुव्रीहौ तु 'बन्धे च विभाषा' इति विकल्प एव ॥ **९८१ पश्यतोहर इति** । 'पश्यन्तमनादृत्य हरति' इत्यर्थः । 'षष्ठी चानादरे' इति षष्ठी ॥**—देवानामिति** । मूर्खा हि देवानां प्रीतिं जनयन्ति देवपशुत्वादिति मनोरमा । **अयं भावः**—ब्रह्मज्ञानरहितत्वात्संसारिणो मूर्खाः । ते तु यागादिकर्माण्यनुतिष्ठन्तः पुरोडाशादिप्रदानद्वारा देवानामत्यन्तं प्रीतिं जनयन्ति । ब्रह्मज्ञानिनस्तु न तथा, तेषां यागाद्यनुष्ठानाभावात् । अतो गवादिस्थानापन्नत्वान्मूर्खा एव देवपशव इति ॥**—शेपपुच्छेति** । शुन इव शेपमस्य शुनःशेपः ॥ यद्यपि शेपस्शब्दः सकारान्तः, 'गौर्लिङ्गं चिह्नशेपसोः' इत्यमरप्रयोगात् । तथापि शीङो निपातनादौणादिके पप्रत्यये अकारान्तोऽप्यस्त्येव ॥ तथा च मन्त्रः 'यस्यामुशन्तः प्रहराम शेपम्' इति ॥ 'चिह्नशेफयोः' इति पाठे तु शेफशब्दस्य सकारान्तत्वशङ्कैव नास्तीति बोध्यम् ॥ एवं शुनःपुच्छ इत्यादा-

---

१ अत्र 'अप्स्वित्येतदनुकरणशब्दः, सप्तम्यन्तो वा । अन्त्ये सप्तम्यन्तात्प्रथमाया अभावेन मतुबेव दुर्लभः । आद्ये तु लुकः' इत्यादिः पाठो बहुषु पुस्तकेषु दृश्यते । मनोरमास्वरसतः स न समीचीनः ॥

९८५ । **मातुःपितुर्भ्यामन्यतरस्याम्** ।८।३।८५। आभ्यां स्वसुः सस्य षो वा स्यात् समासे । मातुःस्वसा-मातुःष्वसा । पितुःस्वसा-पितुःष्वसा । लुक्पक्षे तु—

९८६ । **मातृपितृभ्यां स्वसा** ।८।३।८४। आभ्यां परस्य स्वसुः सस्य षः स्यात्समासे । मातृष्वसा । पितृष्वसा । असमासे तु-मातुः स्वसा । पितुः स्वसा ।

॥ इत्यलुक्समासप्रकरणम् ॥

---

## अथ समासाश्रयविधिः ।

९८७ । **घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः** ।६।३।४३। भाषितपुंस्काद्यो ङी तदन्तस्यानेकाचो ह्रस्वः स्यात्, घरूपकल्पप्रत्ययेषु परेषु चेलडादिषु चोत्तरपदेषु । ब्राह्मणितरा । ब्राह्मणितमा । ब्राह्मणिरूपा । ब्राह्मणिकल्पा । ब्राह्मणिचेली । ब्राह्मणिब्रुवा । ब्राह्मणिगोत्रा । इत्यादि । ब्रूञः पचाद्यचि वच्यादेशगुणयोरभावो निपात्यते । चेलडादीनि वृत्तिविषये कुत्सनवाचीनि, तैः 'कुत्सितानि कुत्सनैः' ७३३ इति समासः । ङ्यः किम् । दत्तातरा । भाषितपुंस्कात्किम् । आमलकीतरा । कुवलीतरा ।

९८८ । **नद्याः शेषस्यान्यतरस्याम्** ।६।३।४४। अङ्यन्तनद्या ङ्यन्तस्यैकाचश्च घादिषु ह्रस्वो वा स्यात् । ब्रह्मबन्धुतरा-ब्रह्मबन्धूतरा । स्त्रितरा-स्त्रीतरा । ॐ **कृन्नद्या न** । लक्ष्मीतरा ।

९८९ । **उगितश्च** ।६।३।४५। उगितः[1] परा या नदी तदन्तस्य घादिषु ह्रस्वो वा स्यात् । विदुषितरा । ह्रस्वाभावपक्षे तु 'तसिलादिषु–' ८३७ इति पुंवत्, विद्वत्तरा । वृत्त्यादिषु 'विदुषीतरा' इत्यप्युदाहृतम्, तन्निर्मूलम् ।

९९० । **हृदयस्य हृल्लेखयदण्लासेषु** ।६।३।५०। हृदयं लिखतीति हृल्लेखः । हृदयस्य प्रियं हृद्यम् । हृदयस्येदं हार्दम् । हृल्लासः । 'लेख–' इत्यणन्तस्य ग्रहणम् । घञि तु 'हृदयलेखः' । लेखग्रहणमेव ज्ञापकम् ( प **उत्तरपदाधिकारे तदन्तविधिर्नास्ति-इति** ।

९९१ । **वा शोकष्यञ्रोगेषु** ।६।३।५१। हृच्छोकः-हृदयशोकः । सौहार्दम्-सौहृदय्यम् । हृद्रोगः—हृदयरोगः । हृदयशब्दपर्यायो हृच्छब्दोऽप्यस्ति । तेन सिद्धे प्रपञ्चार्थमिदम् ।

९९२ । **पादस्य पदाज्यातिगोपहतेषु** ।६।३।५२। एषूत्तरपदेषु पादस्य पद इत्यदन्त आदेशः स्यात् । पादाभ्यामजतीति पदाजिः । पदातिः । 'अज्यतिभ्यां' 'पादे च' (उ) ५७०-७१ इतीण् प्रत्ययः । अजेर्व्यभावो निपातनात् । पदगः । पदोपहतः ।

९९३ । **पद्यत्यतदर्थे** ।६।३।५३। पादस्य पत्स्यादतदर्थे यति परे । पादौ विध्यन्ति-पद्याः शर्कराः । अतदर्थे किम् । पादार्थमुदकं पाद्यम्, 'पादार्घाभ्यां च' २०९३ इति यत् । ॐ **इके चरतावुपसंख्यानम्** । पादाभ्यां चरति-पदिकः, पर्पादित्वात् ष्ठन् ।

९९४ । **हिमकाषिहतिषु च** ।६।३।५४। पद्धिमम् । पत्काषी । पद्धतिः ।

९९५ । **ऋचः शे** ।६।३।५५। ऋचः पादस्य पत्स्याच्छे परे । गायत्रीं पच्छः शंसति । पादंपादमित्यर्थः । ऋचः

---

वपि बहुव्रीहिः, त्रयोऽप्यमी ऋषिविशेषाणां संज्ञाः ॥ ९८६ 'मातुःपितुर्भ्याम्' इति सूत्रे 'समासेऽङ्गुलेः सङ्गः–' इत्यतः समास इत्यनुवर्तितम्, तत्फलं दर्शयति—**असमासे त्विति** । वाक्ये वैकल्पिकमपि षत्वं नेत्यर्थः ॥ **इत्यलुक्समासप्रकरणम्** ॥

९८७ **घरूपकल्प–**। 'तरप्तमपौ घः–' । 'प्रशंसायां रूपप्' । 'चिल वसने'–'चेलट्' इति पचादौ टित्पठ्यते ङीबर्थम् ॥—**प्रत्ययेष्विति** । लेखग्रहणेन 'उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति ज्ञापयिष्यत इति भावः ॥—**ब्राह्मणितरेति** । 'जातेश्च' इति निषेधात् 'तसिलादिषु–' इति न पुंवद्भावः ॥—**चेलीति** । पचादौ 'चेलट्' इति पाठात् 'टिड्ढा–' इति ङीप् ॥—**आमलकीति** । आमलकीकुवलीशब्दौ वृक्षे नित्यस्त्रीलिङ्गौ ॥ ९८८ **नद्याः—**। उक्तादन्यः शेषः, स च द्विधेत्याह—**अङ्यन्तेति** । उपलक्षणमेतत् । 'भाषितपुंस्क' इत्यपि नेह संबध्यत इत्याशयेनाह—**स्त्रीतरेति** ॥ ९८९ **उगितः परा या नदीति** । ईदूतोः केवलयोरपि नदीसंज्ञेत्याश्रित्येदमुक्तम् ॥—**विदुषितरेति** । 'उगितश्च' इति ङीपि 'वसोः संप्रसारणम्' ॥—**वृत्त्यादिष्विति** । प्रक्रियातद्व्याख्यानानि चादिशब्दग्राह्याणि ॥ ९९० **अणन्तस्य ग्रहणमिति** । अण्प्रत्ययसाहचर्याल्लेखशब्दोऽणन्त एव निर्दिष्ट इति भावः ॥ नन्वेवं लेखग्रहणमेव व्यर्थं स्यादण्ग्रहणेनैव सिद्धेरत आह—**ज्ञापकमिति** । अत एव 'घरूपकल्पेषु तदन्तग्रहणं न' इति व्याख्यातम् ॥ ९९१ **सौहार्दमिति** । ब्राह्मणादित्वात् ष्यञ्, 'हृद्भगसिन्ध्वन्ते–' इत्युभयपदवृद्धिः ॥ ९९२ **पादस्य पदा—**। उत्तरसूत्रे पद्ग्रहणात्पदेत्ययमदन्तः, सौत्रो विभक्तिलुक् । तदाह—**अदन्त आदेश इति** । तेन 'पदगः' इत्यादि सिद्धम् ॥ ९९३ **पद्या इति** । 'विध्यत्यधनुषा' इति यत् ॥—**पाद्यमिति** । 'पादार्घाभ्यां च' इति यत् । पूर्वसूत्रे आज्यात्यादिषु प्राण्यङ्गस्यैव करणत्वसंभवादिहापि तद्वचन एव पादशब्दो गृह्यते, न परिमाणवचनः । तेन 'द्वाभ्यां पादाभ्यां क्रीतं द्विपाद्यं, त्रिपाद्यम्' इत्यत्र 'पणपादमाष–' इति यति पदादेशो न भवति ॥ एतच्च वृत्तिहरदत्तग्रन्थयोः स्पष्टम् ॥ ९९४ **पत्काषीति** । 'सुप्यजातौ–' इति णिनिः ॥—**पद्धतिरिति** । कर्मणि क्तिन् ॥ ९९५ **ऋचः शे** । 'शे' इति शस्प्रत्ययस्येदमनुकरणम्, लोमादिषु पादशब्दस्य पाठाभावान्मत्वर्थे शो

---

[1] **उगितः परेति**—विहितेत्यर्थः, तेनेषुमतोऽपत्यं स्त्री ऐषुमती, ततस्तरे ऐषुमतितरेत्यत्र नित्यं ह्रस्व इति युवोरनाकाविति सूत्रभाष्ये स्पष्टम् ।

किम् । पादशः कार्षापणं ददाति ।

९९६ । **वा घोषमिश्रशब्देषु** ।६।३।५६। पादस्य पत् । पद्घोषः–पादघोषः । पन्मिश्रः–पादमिश्रः । पच्छब्दः–पादशब्दः । ❀ **निष्के चेति वाच्यम्** । पन्निष्कः–पादनिष्कः ।

९९७ । **उदकस्योदः संज्ञायाम्** ।६।३।५७। उदमेघः । ❀ **उत्तरपदस्य चेति वक्तव्यम्** । क्षीरोदः ।

९९८ । **पेषंवासवाहनधिषु च** ।६।३।५८। उदपेषं पिनष्टि । उदवासः । उदवाहनः । उदधिर्घटः । समुद्रे तु पूर्वेण सिद्धम् ।

९९९ । **एकहलादौ पूरयितव्येऽन्यतरस्याम्** ।६।३।५९। उदकुम्भः–उदककुम्भः । एकेति किम् । उदकस्थाली । पूरयितव्ये इति किम् । उदकपर्वतः ।

१००० । **मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च** ।६।३।६०। उदमन्थः–उदकमन्थः । उदौदनः–उदकौदनः ।

१००१ । **इको ह्रस्वोऽङ्यो गालवस्य** ।६।३।६१। इगन्तस्याङ्यन्तस्य ह्रस्वो वा स्यादुत्तरपदे । ग्रामणिपुत्रः–ग्रामणीपुत्रः । इकः किम् । रमापतिः । अङ्य इति किम् । गौरीपतिः । गालवग्रहणं पूजार्थम्, अन्यतरस्यामित्यनुवृत्तेः । ❀ **इयङुवङ्भाविनामव्ययानां च नेति वाच्यम्** । श्रीमदः । भ्रूभङ्गः । शुक्लीभावः । ❀ **अभ्रुकुंसादीनामिति वक्तव्यम्** । भ्रुकुंसः । भ्रुकुटिः । भ्रूकुंसः । भ्रूकुटिः । 'अकारोऽनेन विधीयते' इति व्याख्यान्तरम् । भ्रकुंसः । भ्रकुटिः । भ्रुवा कुंसो भाषणं शोभा वा यस्य सः स्त्रीवेषधारी नर्तकः । भ्रुवः कुटिः कौटिल्यम् ।

१००२ । **एक तद्धिते च** ।६।३।६२। एकशब्दस्य ह्रस्वः स्यात्तद्धिते उत्तरपदे च । एकस्या आगतं एकरूप्यम् । एकक्षीरम् ।

१००३ । ङ्यापोः संज्ञाछन्दसोर्बहुलम् ।६।३।६३। रेवतिपुत्रः । अजक्षीरम् ।

१००४ । **त्वे च** ।६।३।६४। त्वप्रत्यये ङ्यापोर्वा ह्रस्वः । अजत्वम्–अजात्वम् । रोहिणित्वम्–रोहिणीत्वम् ।

१००५ । **ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे** ।६।१।१३। ष्यङन्तस्य पूर्वपदस्य संप्रसारणं स्यात्पुत्रपत्योरुत्तरपदयोस्तत्पुरुषे ।

१००६ । **संप्रसारणस्य** ।६।३।१३९। संप्रसारणस्य दीर्घः स्यादुत्तरपदे । कौमुदगन्ध्यायाः पुत्रः कौमुदगन्धीपुत्रः । कौमुदगन्धीपतिः । व्यवस्थितविभाषया ह्रस्वो न । (प) **स्त्रीप्रत्यये चानुपसर्जनेन**–इति तदादिनियमप्रतिषेधात्–परमकारीषगन्धीपुत्रः । उपसर्जने तु तदादिनियमान्नेह–अतिकारीषगन्ध्यपुत्रः ।

१००७ । **बन्धुनि बहुव्रीहौ** ।६।१।१४। बन्धुशब्दे उत्तरपदे ष्यङः संप्रसारणं स्याद्बहुव्रीहौ । कारीषगन्ध्या बन्धुरस्येति कारीषगन्धीबन्धुः । बहुव्रीहाविति किम् । कारीषगन्ध्याया बन्धुः कारीषगन्ध्याबन्धुः । क्लीबनिर्देशस्तु शब्दस्वरूपापेक्षया । ❀ **मातज्मातृकमातृषु वा** । कारीषगन्धीमातः–कारीषगन्ध्यामातः । कारीषगन्धीमातृकः–कारीषगन्ध्यामातृकः । कारीषगन्धीमाता–कारीषगन्ध्यामाता । अस्मादेव निपातनान्मातृशब्दस्य मातजादेशः, कब्विकल्पश्च । बहुव्रीहावेवेदम्, नेह–कारीषगन्ध्याया माता कारीषगन्ध्यामाता । चित्त्वसामर्थ्याच्चित्स्वरो बहुव्रीहिस्वरं बाधते ।

१००८ । **इष्टकेषीकामालानां चिततूलभारिषु** ।६।३।६५। इष्टकादीनां तदन्तानां च पूर्वपदानां चितादिषु क्रमादुत्तरपदेषु ह्रस्वः स्यात् । इष्टकचितम् । पक्वेष्ट-

---

न संभवतीति भावः ॥ ९९६ **पच्छब्द इति** । 'संख्यैकवचनाच्च वीप्सायाम्' इति शस् ॥ ९९७ **उदमेघ इति** । सादृश्यात्पुरुषस्येयं संज्ञा ॥ ९९८ **उदपेषमिति** । 'स्नेहने पिषः' इति णमुल् ॥—**उदधिरिति** । उदकं धीयतेऽस्मिन्निति विग्रहः । 'कर्मण्यधिकरणे च' इति किप्रत्ययः ॥ १००० **उदमन्थ इति** । द्रवद्रव्यसंस्कृताः सक्तवो मन्थः । 'उदकेन मन्थः' इति विग्रहे 'तृतीया' इति योगविभागात्समास इति हरदत्तः ॥ १००१ **शुक्लीभाव इति** । 'ऊर्यादिच्विडाचश्च' इति च्व्यन्तत्वान्निपातत्वेऽव्ययत्वम् ॥—**भ्रूकुंस इत्यादि** । 'भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः' इत्यमरः ॥ 'तन्द्री प्रमीला भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियाम्' इति च ॥ १००२ **एकतद्धिते च** । 'एक' इति लुप्तषष्ठीकं तदाह—**एकशब्दस्येति** । ह्रस्वविधानमस्य टाबन्ते एवोपयुज्यते न तु केवले, स्वभावत एव ह्रस्वत्वात् । अतो व्याचष्टे—**एकस्या आगतमित्यादि** ॥ १००५ **ष्यङः**–। इह तत्पुरुषपदेन पूर्वपदमुत्तरपदं चाक्षिप्यते, तत्र ष्यङा पूर्वपदस्य विशेषणात्तदन्तं गृह्यत इत्याह—**ष्यङन्तस्येति** ॥—**पुत्रपत्योरुत्तरपदयोरिति** । 'पुत्रपत्यन्तयोः' इति व्याख्याने तु 'कारीषगन्ध्यापरमपुत्रः' इत्यादावतिप्रसङ्गः स्यादिति भावः ॥ १००६ **संप्रसारणस्य** । 'उत्तरपदे' इत्यधिक्रियते । 'ढ्रलोपे–' इत्यतो दीर्घ इत्यनुवर्तते तदाह—**दीर्घः स्यादुत्तरपद इति** । 'हलः' इति दीर्घोऽत्र न प्रवर्तते, प्रत्ययस्य लुका लुप्तत्वेनाङ्गसंज्ञाया अप्रवृत्तेः ॥—**कौमुदगन्ध्याया इति** । कुमुदगन्धेरपत्यं स्त्री कौमुदगन्ध्या । 'तस्यापत्यम्' इत्यणि कृते 'अणिञोः' इति ष्यङादेशः, 'यङश्चाप्' ॥ ननु 'कौमुदगन्धीपुत्रः' इत्यादौ 'इको ह्रस्वोऽङ्यो गालवस्य' इति ह्रस्वेन भाव्यम्, दीर्घविधानं तु पक्षे सावकाशमित्यत आह—**व्यवस्थितविभाषयेति** ॥—**नेहेति** । संप्रसारणमिह नेत्यर्थः ॥—**अतिकारीषेति** । कारीषगन्ध्यामतिक्रान्तोऽतिकारीषगन्ध्यः तस्य पुत्रः ॥ १००८ **इष्टकचितमिति** । 'कर्तृकरणे कृता' इति तृतीयासमासः ॥—**पक्वेष्टकचितमिति** । पदाधिकारात्तदन्त-

कञ्चितम् । इषीकतूलम् । मुञ्जेषीकतूलम् । मालभारी । उत्पलमालभारी ।

१००९ । **कारे सत्यागदस्य** ।६।३।७०। मुम् स्यात् । सत्यङ्कारः । अगदङ्कारः । ❀ **अस्तोश्चेति** वक्तव्यम् । अस्तुङ्कारः । ❀ **धेनोर्भव्यायाम्** । धेनुम्भव्या[1] । ❀ **लोकस्य पृणे** । लोकम्पृणः । पृण इति मूलविभुजादित्वात्कः । ❀ **इत्येऽनभ्याशस्य** । अनभ्याशमित्यः, दूरतः परिहर्तव्य इत्यर्थः । ❀ **भ्राष्ट्राग्न्योरिन्धे** । भ्राष्ट्रमिन्धः । अग्निमिन्धः । ❀ **गिलेऽगिलस्य** । तिमिङ्गिलः । अगिलस्य किम् । गिलगिलः । ❀ **गिलगिले च** । तिमिङ्गिलगिलः । ❀ **उष्णभद्रयोः करणे** । उष्णङ्करणम् । भद्रङ्करणम् ।

१०१० । **रात्रेः कृति विभाषा** ।६।३।७२। रात्रिंचरः-रात्रिचरः । रात्रिमटः-रात्र्यटः । अखिदर्थमिदं सूत्रम् । खिति तु 'अरुर्द्विषत्-' २९४२ इति नित्यमेव वक्ष्यते, रात्रिम्मन्यः ।

१०११ । **सहस्य सः संज्ञायाम्** ।६।३।७८। उत्तरपदे । सपलाशम् । संज्ञायां किम् । सहयुध्वा ।

१०१२ । **ग्रन्थान्ताधिके च** ।६।३।७९। अनयोः परयोः सहस्य सः स्यादुत्तरपदे । समुहूर्तं ज्योतिषमधीते । सद्रोणा खारी ।

१०१३ । **द्वितीये चानुपाख्ये** ।६।३।८०। अनुमेये द्वितीये सहस्य सः स्यात् । सराक्षसीका निशा, राक्षसी साक्षादनुपलभ्यमाना निशयाऽनुमीयते ।

१०१४ । **समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु** ।६।३।८४। समानस्य सः स्यादुत्तरपदे, न तु मूर्धादिषु । अनु भ्राता सगर्भ्यः । अनु सखा सयूथ्यः । यो नः सनुत्यः । तत्र भव इत्यर्थे 'सगर्भसयूथसनुताद्यन्' ३४६ अमूर्धादिषु किम् । समानमूर्धा । समानप्रभृतयः । समानोदर्काः ।

समानस्येति[2] योगो विभज्यते, तेन सपक्षः, साधर्म्यं, सजातीयम्, इत्यादि सिद्धमिति काशिका ।

अथवा[3] सहशब्दः सदृशवचनोऽप्यस्ति-सदृशः सख्या ससखीति यथा, तेनायमस्वपदविग्रहो बहुव्रीहिः-समानः पक्षोऽस्येत्यादि ।

१०१५ । **ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु** ।६।३।८५। एषु द्वादशसूत्तरपदेषु समानस्य सः स्यात् । सज्योतिः । सजनपदः । इत्यादि ।

१०१६ । **चरणे ब्रह्मचारिणि** ।६।३।८६। ब्रह्मचारिण्युत्तरपदे समानस्य सः स्याच्चरणे समानत्वेन गम्यमाने । चरणः शाखा । ब्रह्म वेदः, तदध्ययनार्थं व्रतमपि ब्रह्म, तच्चरतीति ब्रह्मचारी । समानः सः-सब्रह्मचारी ।

---

विधिः प्रवर्तत इति भावः ॥—**मालभारीति** । 'मालां बिभर्ति' इत्यर्थः । 'सुप्यजातौ-' इति णिनिः । 'हारिषु' इति पाठान्तरम् ॥ **१००९ कारे सत्या-**। 'अरुर्द्विषत्-' इत्यतोऽनुवर्तनादाह—**मुम् स्यादिति** । सत्यंकारः शपथकरणम् । अशपथेऽपि 'सत्यादशपथे' इति डाचं बाधित्वा परत्वान्मुमेव । अगदंकारो वैद्यः ॥ ❀ अस्तुंकारोऽभ्युपगमः । अस्त्विति तिङन्तप्रतिरूपकमव्ययम् ॥—**धेनुम्भव्येति** । भविष्यन्ती धेनुरित्यर्थः ॥ 'भव्यगेय-' इति निपातनात्कर्तरि कृत्यः । धेनुश्चासौ भव्या चेति विग्रहः ॥ गौतमस्मृतौ तु-'अधेनुं धेनुभव्या' इति, अत्र 'आर्षत्वान्मुम्न' इति बोध्यम् ॥ ❀ **लोकम्पृण इति** । पृणधातुः प्रीणनार्थः । 'पृणतिः पूरणकर्मा' इति तु हरदत्तः ॥ ❀ **अनभ्याशमित्य इति** । अभ्याशं समीपं तद्भिन्नमनभ्याशम् । 'एतिस्तुशास्वृदृजुषः' इति इणः क्यप् ॥ ❀ **भ्राष्ट्रमिन्ध इति** । कर्मण्यणि उपपदसमासः ॥ एवमग्निमिन्धेऽपि ॥ ❀ **गिलेऽगिलस्य** । 'गिलशब्दे उत्तरपदे अगिलस्य मुम्' इत्यर्थः ॥—**तिमिंगिल इति** । मत्स्यविशेषः । गिरतेर्मूलविभुजादित्वात्कः । 'अचि विभाषा' इति लत्वम् ॥—**गिलगिले चेति** । 'गिलं गिलति-इति गिलगिलः, तिमीनां गिलगिलः' इति विग्रहे इदमारब्धम् ॥ **१०१० रात्रेः कृति**—। उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणाभावेऽपि रात्रिशब्दात्परत्र कृतोऽसंभवात्कृदन्त उत्तरपदे अयं विधिरित्याशयेनोदाहरति—**रात्रिंचर इति** । यद्यप्याचारक्विबन्तात् ण्वुलादिः संभवति, तथापि विलम्बितोपस्थितिकत्वात्स न गृह्यत इति भावः ॥—**नित्यमेवेति** । पूर्वविप्रतिषेधेनेति भावः ॥—**रात्रिंमन्य इति** । 'आत्ममाने खश्च' इति खश्, सार्वधातुकत्वात्तस्मिन्परे श्यन् ॥ **१०११ सहयुध्वेति** । 'सहे च' इति क्वनिप् । स्त्रियामपि 'वनो न हशः' इति निषेधात् ङीब्रौ न ॥ **१०१२ समुहूर्तमिति** । अन्तवचनेऽव्ययीभावः । 'अव्ययीभावे चाकाले' इत्यत्र कालपर्युदासादप्राप्ते सभावे ग्रन्थान्तग्रहणम् ॥ **१०१३ द्वितीये**—। 'अप्रधानो यः स द्वितीयः' इति लोकप्रसिद्धम्, उपाख्यं प्रत्यक्षं तद्भिन्नमनुमेयं तदाह—**अनुमेये इति** ॥—**सराक्षसीकेति** । 'नद्यृतश्च' इति कप् ॥ **१०१४ योगो विभज्यत इति** । एतदर्थमेव छान्दसमपि 'समानस्य छन्दसि' इति सूत्रमिहोपन्यस्तमिति भावः ॥—**बहुव्रीहिरिति** । तेन 'वोपसर्जनस्य' इति सहस्य सभावः प्राप्नोतीति भावः ॥ **१०१५ सज्योतिरिति** । समानं ज्योतिरस्येति बहुव्रीहिः । यस्मिन् ज्योतिषि आदित्ये नक्षत्रे वा संजातं तदस्तमयपर्यन्तमनुवर्तमानमाशौचं सज्योतिः इत्युच्यते ॥ इह 'समानमध्यमध्यमवीराश्च' इति प्रतिपदोक्त एव समासो न गृह्यते, 'सरूपाणामेकशेषः-' इति लिङ्गात् । किंतु बहुव्रीहिरिति हरदत्तः ॥ **१०१६ ब्रह्मचारीति** । 'व्रते' इति णिनिः ॥—**सब्रह्मचारीति** । समानो ब्रह्मचारी इत्यर्थः । ब्रह्मचारिणश्च समानत्वं

---

१ **धेनुंभव्येति**—मयूरव्यंसकादित्वात्समासः, तद्गणे पाठादेव भव्याशब्दस्य परनिपातः । २ **योगो विभज्यत इति** । छान्दसमेतत्सूत्रं योगविभागप्रदर्शनायैवात्रोक्तम् । ३ **अथवेति**—अनेन पक्षान्तरोपन्यासेन योगविभागस्य भाष्यानारूढत्वमिति द्योतयति ।

१०१७ । **तीर्थे ये** ।६।३।८७। तीर्थे उत्तरपदे यादौ प्रत्यये विवक्षिते समानस्य सः स्यात् । सतीर्थ्यः, एकगुरुकः । 'समानतीर्थे वासी' १६५८ इति यत्प्रत्ययः ।

१०१८ । **विभाषोदरे** ।६।३।८८। यादौ प्रत्यये विवक्षिते इत्येव । सोदर्यः—समानोदर्यः ।

१०१९ । **दृग्दृशवतुषु** ।६।३।८९। सदृक् । सदृशः । ॐ **दृक्षे चेति वक्तव्यम्** । सदृक्षः । वतुरुत्तरार्थः ।

१०२० । **इदंकिमोरीश्की** ।६।३।९०। दृग्दृशवतुषु इदम ईश् किमः की स्यात् । ईदृक् । ईदृशः । कीदृक् । कीदृशः । वतूदाहरणं वक्ष्यते । ॐ **दृक्षे चेति वक्तव्यम्** । ईदृक्षः । कीदृक्षः ।

'**आ सर्वनाम्नः**' ४३१ । ॐ **दृक्षे च** । तादृक् । तादृशः । तावान् । तादृक्षः । दीर्घः, मत्वोत्वे, अमूदृक्, अमूदृशः, अमूदृक्षः ।

१०२१ । **समासेऽङ्गुलेः सङ्गः** ।८।३।८०। अङ्गुलिशब्दात्सङ्गस्य सस्य मूर्धन्यः स्यात्समासे । अङ्गुलिषङ्गः । समासे किम् । अङ्गुलेः सङ्गः ।

१०२२ । **भीरोः स्थानम्** ।८।३।८१। भीरुशब्दात् स्थानस्य सस्य मूर्धन्यः स्यात्समासे । भीरुष्ठानम् । असमासे तु—भीरोः स्थानम् ।

१०२३ । **ज्योतिरायुषः स्तोमः** ।८।३।८३। आभ्यां स्तोमस्य सस्य मूर्धन्यः स्यात्समासे । ज्योतिष्टोमः । आयुष्टोमः । समासे किम् । ज्योतिषः स्तोमः ।

१०२४ । **सुषामादिषु च** ।८।३।९८। सस्य मूर्धन्यः । शोभनं साम यस्य सुषामा । सुषन्धिः ।

१०२५ । **एति संज्ञायामगात्** ।८।३।९९। सस्य मूर्धन्यः । हरिषेणः । एति किम् । हरिसक्थम् । संज्ञायां किम् । पृथुसेनः । अगकारात्किम् । विष्वक्सेनः । इण्कोरित्येव, सर्वसेनः ।

१०२६ । **नक्षत्राद्वा** ।८।३।१००। एति सस्य संज्ञायामगकारान्मूर्धन्यो वा । रोहिणीषेणः—रोहिणीसेनः । अगकारात्किम् । शतभिषक्सेनः । आकृतिगणोऽयम् ।

१०२७ । **अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशाऽऽस्थाऽऽस्थितोत्सुकोतिकारकरागच्छेषु** ।६।३।९९। अन्यशब्दस्य दुगागमः स्यादाशीरादिषु परेषु । अन्यदाशीः । अन्यदाशा । अन्यदास्था । अन्यदास्थितः । अन्यदुत्सुकः । अन्यदूतिः । अन्यद्रागः । अन्यदीयः । अषष्ठीत्यादि किम् । अन्यस्याऽन्येन वाऽऽशीः—अन्याशीः । **कारके छे च नायं निषेधः** । अन्यस्य कारकः—अन्यत्कारकः । अन्यस्यायमन्यदीयः । गहादेराकृतिगणत्वाच्छः ।

१०२८ । **अर्थे विभाषा** ।६।३।१००। अन्यदर्थः, अन्यार्थः ।

१०२९ । **कोः कत्तत्पुरुषेऽचि** ।६।३।१०१। अजादावुत्तरपदे । कुत्सितोऽश्वः कदश्वः । कदन्नम् । तत्पुरुषे किम् । कूष्ट्रो राजा । ॐ **त्रौ च** । कुत्सितास्त्रयः कत्त्रयः ।

१०३० । **रथवदयोश्च** ।६।३।१०२। कद्रथः । कद्वदः ।

१०३१ । **तृणे च जातौ** ।६।३।१०३। कत्तृणम् ।

१०३२ । **का पथ्यक्षयोः** ।६।३।१०४। कापथम् । काक्षः । अक्षशब्देन तत्पुरुषः, अक्षिशब्देन बहुव्रीहिर्वा ।

१०३३ । **ईषदर्थे** ।६।३।१०५। ईषज्जलं काजलम् । अजादावपि परत्वात्कादेशः । काम्लः ।

१०३४ । **विभाषा पुरुषे** ।६।३।१०६। कापुरुषः । कुपुरुषः । अप्राप्तविभाषेयम् । ईषदर्थे हि पूर्वविप्रतिषेधान्नित्यमेव । ईषत्पुरुषः—कापुरुषः ।

१०३५ । **कवं चोष्णे** ।६।३।१०७। उष्णशब्दे उत्तरपदे कोः कवं का च वा स्यात् । कवोष्णम्—कोष्णम्—कदुष्णम् ।

१०३६ । **पृषोदरादीनि यथोपदिष्टम्** ।६।३।१०९। पृषोदरप्रकाराणि शिष्टैर्यथोच्चारितानि तथैव साधूनि स्युः ।

---

ब्रह्मणः समानत्वात् । ततश्च 'समाने ब्रह्मणि व्रतचारी' इति फलितोऽर्थः ॥ **१०१७ तीर्थे ये** । अकारो न विवक्षितः । प्रत्यये इति विशेष्यं तु व्याख्यानाल्लभ्यते । तेन 'यस्मिन्विधिः—' इति तदादिविधिरित्याह—**यादौ प्रत्यय इति** ॥—**विवक्षित- इति** । उत्तरपदमात्रनिमित्तः[2] सभावोऽन्तरङ्गः, समासप्रकृतिकसुबन्तात्तु यत्प्रत्ययः, अतस्तस्य परत्वं न संभवतीत्याशयेनेदमुक्तम् ॥ **१०१८ सोदर्य इति** । 'समानोदरे शयितः' इत्यर्थे प्रत्ययात्प्राक् समानस्य सभावे कृते 'सोदराद्यः' इति यः । सभावाभावपक्षे तु 'समानोदरे शयित ओ चोदात्तः' इति यति समानोदर्यः ॥ **१०१९ सदृक् । सदृश इति** । 'समानान्ययोश्चेति वक्तव्यम्' इति दृशेः क्विन्कञौ ॥ **१०२० दीर्घ इति** । अदस आत्वे कृते सवर्णदीर्घ इत्यर्थः, एतच्च पूर्वोत्तरोदाहरणान्वयि ॥ **१०२२ भीरोः स्थानमिति** । विसर्जनीयव्यवधानेऽपि षत्वप्राप्तिरस्ति ॥ **१०२३ ज्योतिषः स्तोम इति** । 'इदं ज्योतिःस्तोमोऽयम्' इति प्रत्युदाहर्तुमुचितम् ॥ **१०२५ एति संज्ञायामिति** । सुषामाद्यन्तर्गणसूत्रमेतत् ॥ एवं 'नक्षत्राद्वा' इत्यपि ॥ **—विष्वक्सेन इति** । चर्त्वस्यासिद्धत्वाद्गकारेण व्यवधानमस्तीति भावः ॥ **१०२७ अषष्ठ्य—**। अन्यदाशीरित्यादयः कर्मधारयाः ॥**—नायं निषेध इति** । एतच्च 'अषष्ठीतृतीयास्थस्य—' इत्येव सिद्धे निषेधानित्यत्वज्ञापनार्थाद् द्विर्नञ उपादानाल्लभ्यत इत्याहुः ॥ **१०२९ त्रौ चेति** । अनजाद्यर्थमिदं वार्तिकं 'कन्यादिभ्यो ढकञ्' इति निर्देशेनैव सिद्धम् ॥ **१०३२ कापथमिति** । कुत्सितः पन्था । 'ऋक्पूरब्धूः—' इति समासान्तः । 'पथः संख्याव्ययादेः' इति नपुंसकत्वम् ॥ **१०३४ अप्राप्तविभाषेति** । 'ईषदर्थे' इत्यस्याननुवृत्तेरिति भावः ॥ **१०३६ पृषोदरप्रकाराणीति** । आदिशब्दो हि न व्यवस्थावचनः, यथोप-

---

१ **यादौ प्रत्यये इति**—अकारोऽत्र विवक्षितः, यशब्दे विवक्षिते इत्यर्थः । निरनुबन्धकपरिभाषा तु नेहोपतिष्ठते, तीर्थान्तान्निरनुनासिकस्यासंभवादिति शेखरे । २ '—निमित्तः समासोऽन्तरङ्गः' इति मुद्रितसर्वपुस्तकेषु पाठः, स प्रामादिकः, समासस्योत्तरपदमात्रनिमित्तत्वाभावात् ।

पृषतः उदरं–पृषोदरम् । तलोपः । वारिवाहको बलाहकः । पूर्वपदस्य बः, उत्तरपदादेश्च लत्वम् ।

भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात् ।
गूढोत्मा वर्णविकृतेर्वर्णनाशात्पृषोदरम् ॥ १ ॥

*** दिक्शब्देभ्यस्तीरस्य तारभावो वा ।** दक्षिणतारम्–दक्षिणतीरम् । उत्तरतारम्–उत्तरतीरम् । *** दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेः ष्टुत्वं च ।** दुःखेन दाश्यते दूडाशः । दुःखेन नाश्यते दूणाशः । दुःखेन दभ्यते दूडभः । खल् त्रिभ्यः । दम्भेर्नलोपो निपात्यते । दुःखेन ध्यायतीति दूढ्यः । 'आतश्च–' २८९८ इति कः । ब्रुवन्तोऽस्यां सीदन्तीति बृसी । ब्रुवच्छब्दस्य बृ आदेशः, सदेरधिकरणे डट् । आकृतिगणोऽयम् ।

१०३७ । **संहितायाम्** ।६।३।११४। अधिकारोऽयम् ।

१०३८ । **कर्णे लक्षणस्याऽविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य** ।६।३।११५। कर्णशब्दे परे लक्षण[1]वाचकस्य दीर्घः । द्विगुणाकर्णः । लक्षणस्य किम् । शोभनकर्णः । अविष्टादीनां किम् । विष्टकर्णः । अष्टकर्णः[2] । पञ्चकर्णः । मणिकर्णः । भिन्नकर्णः । छिन्नकर्णः । छिद्रकर्णः । स्रुवकर्णः । स्वस्तिककर्णः ।

१०३९ । **नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ** ।६।३।११६। क्विबन्तेषु एषु परेषु पूर्वपदस्य दीर्घः । उपानत् । नीवृत् । प्रावृट् । मर्मावित् । नीरुक् । अभीरुक् । ऋतीषट् । परीतत् । क्वाविति किम् । परिणहनम् । 'विभाषा पुरुषे' १०३४ इत्यतो मण्डूकप्लुत्या 'विभाषा' अनुवर्तते, सा च व्यवस्थिता । तेन गतिकारकयोरेव । नेह–पटुरुक् । तिग्मरुक् ।

१०४० । **वनगिर्योः संज्ञायां कोटरकिंशुलुकादीनाम्** ।६।३।११७। कोटरादीनां वने परे किंशुलुकादीनां गिरौ परे दीर्घः स्यात्संज्ञायाम् ।

१०४१ । **वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः** ।८।४।४। वनशब्दस्योत्तरपदस्य एभ्य एव णत्वं नान्येभ्यः । इह कोटरान्ताः पञ्च दीर्घविधौ कोटरादयो बोध्याः । तेषां कृतदीर्घाणां णत्वविधौ निर्देशो नियमार्थः । अग्रेशब्दस्य तु विध्यर्थः । पुरगावणम् ।

दिष्टपदानर्थक्यादिति भावः ॥—**शिष्टैरिति** । अध्याहारलभ्यमिदम् । 'यथोपदिष्टम्' इत्यत्र यथार्थेऽव्ययीभावः । उपदिशिश्चोच्चारणक्रियः । 'यानि यानि शिष्टैरुपदिष्टानि' इत्यर्थः ॥ एवं स्थिते फलितमाह—**यथोच्चारितानि तथैवेति** । समासपदविषयकमिदम्, उत्तरपदाधिकारात् । निरुक्तादिशास्त्रसिद्धानामसमासपदानाम् 'उणादयो बहुलम्' इत्येव सिद्धेश्च ॥ यद्यपि समासविषयकमेवेति नियमो न युज्यते, हंससिंहशब्दयोरपि प्राचां कारिकायामुदाहृतत्वात्, तथापि तत्कारिकायां यथाशब्दाध्याहारेण दृष्टान्तप्रदर्शनार्थं तयोरुपन्यासः कृतो न तु प्रकृतसूत्रोदाहरणत्वेनेति नियमोक्तिः सम्यगेवेत्याहुः ॥—**वर्णागमादि** । हन्तेः पचाद्यचि सगागमः ॥—**विपर्ययादिति** । हिंसेस्तु पचाद्यचि हकारसकारयोः स्थानव्यत्ययः ॥ *** दिक्शब्देभ्य इति** । वार्तिकमिदम् । 'दुरो दाशनाश–' इत्यप्येवम् ॥—**खल् त्रिभ्य इति** । दाशनाशदभेति त्रयोऽपि 'ईषद्दुःसुषु–' इति खल्प्रत्ययान्ता इत्यर्थः ॥—**बृसीति** । 'मुनीनामासनं बृसी' ॥—**आकृतिगणोऽयमिति** । तेन–'**लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि । समो वा हिततयोर्मांसस्य पचि युड्घञोः ॥**' इत्यपि संगृहीतम् । **कृत्यान्ते** उत्तरपदे अवश्यमः अन्तं पुमान् लुम्पेत्–अवश्यगन्तव्यः, अवश्यसेव्यः ॥ तथा **तुमः** काममनसोः परतः अन्तं लुम्पेत्–गन्तुकामः, गन्तुमनाः ॥ **समो** हिततयोः अन्तं वा लुम्पेत्–सहितः, संहितः । सततः, संततः ॥ **युट् घञ्च** एतत्परो यः पच्धातुः तस्मिन्परे मांसस्यान्तं लुम्पेत्–मांस्पचनम्, मांस्पाकः । इह संयोगान्तलोपोऽपि शिष्टोच्चारणान्नेति बोध्यम् ॥ **१०३७ संहितायामिति** । तेन 'द्विगुणाकर्णम्' इत्यादौ अवग्रहे[3] दीर्घो न भवतीति सूत्राशयमुत्प्रेक्षयन्ति ॥—**अधिकारोऽयमिति** । तेन 'विद्मा हि त्वा' इत्यादौ पदकाले 'द्व्यचोऽतस्तिङः' इति दीर्घो नेत्यादिप्रयोजनान्यूह्यानि ॥ **१०३९ नहिवृति—**। 'णह बन्धने', 'वृतु वर्तने', 'वृषु सेचने', 'व्यध ताडने', 'रुच दीप्तौ', 'षह मर्षणे', 'तनु विस्तारे' ॥—**क्विबन्तेष्विति** । उत्तरपदेषु इति शेषः । तेन 'दिवसेषु रुक्' इत्यादौ नातिप्रसङ्गः ॥—**उपानदिति** । संपदादित्वात्कर्मणि क्विप् ॥ निवर्तते इति नीवृत् ॥ प्रवर्षति इति प्रावृट् ॥ मर्माणि विध्यति इति मर्मावित् । व्यधेः 'ग्रहिज्या–' इति संप्रसारणम् ॥ निरोचते इति नीरुक् ॥ ऋतिं सहते ऋतीषट् । 'पूर्वपदात्–' इति षत्वमिति हरदत्तः । 'सहेः पृतनर्ताभ्यां च' इत्यत्र 'सहेः' इति योगविभागाच्चकारस्यानुक्तसमुच्चयाद्वेत्यन्ये । सुषामादेराकृतिगणत्वादित्यपरे ॥ परितनोति इति परीतत् । 'गमः क्वौ' इत्यत्र 'गमादीनामिति वाच्यम्' इत्युक्तेर्नलोपः ॥ **१०४१ वनं पुरगा—**। व्यत्ययेन षष्ठ्यर्थे प्रथमा इत्याह—**वनशब्दस्येति ॥—एभ्य एवेति** । कृतदीर्घेभ्यः पुरगादिभ्य एव परस्य णत्वमित्यर्थः । 'एभ्यो वनस्यैव णत्वं नान्येषाम्' इति विपरीतनियमशङ्का तु न भवति, वनादन्यस्मिन्नुत्तरपदे पुरगादीनां दीर्घान्तत्वासंभवात् ॥ **—नियमार्थ इति । अयं भावः**—'पुरगामिश्रका–' इति दीर्घनिर्देशादसंज्ञायां दीर्घाभावेन संज्ञायामेव णत्वमिति फलितम् । एवं च 'पूर्वपदात् संज्ञायाम्' इत्यनेनैव वनस्य णत्वे सिद्धे पुनरपि कृतदीर्घस्य पुरगादिपञ्चकस्य णत्वविधौ

१ **लक्षणस्येति**—यत्पशूनां स्वामिविशेषसम्बन्धज्ञानार्थं दात्राकारादिचिह्नं क्रियते तदिह लक्षणम्, तेन लम्बकर्णसिद्धिः । २ **अष्टकर्ण इति**—अष्टसंख्यालिपिचिह्नकर्ण इत्यर्थः । तत्संख्यरेखाचिह्नकर्ण इति वा । एवमग्रेऽप्यूह्यम् । ३ अवग्रहे—**द्विगुण कर्णम्**–इत्यादौ ।

सिध्रकावणम् । सिध्रकावणम् । सारिकावणम् । कोटरावणम् । एभ्य एवेति किम् । असिपत्रवनम् । वनस्याग्रे अग्रेवणम्, राजदन्तादिषु निपातनात्सप्तम्या अलुक्, प्रातिपदिकार्थमात्रे प्रथमा । किंशुलुकागिरिः ।

१०४२ । वले ।६।३।११८। वलप्रत्यये परे दीर्घः स्यात्संज्ञायाम् । कृषीवलः ।

१०४३ । मतौ बह्वचोऽनजिरादीनाम् ।६।३।११९। अमरावती । अनजिरादीनां किम् । अजिरवती । बह्वचः किम् । व्रीहिमती । संज्ञायामित्येव । नेह–वलयवती ।

१०४४ । शरादीनां च ।६।३।१२०। शरावती ।

१०४५ । इको वहेऽपीलोः ।६।३।१२१। इगन्तस्य दीर्घः स्याद्वहे । ऋषीवहम् । कपीवहम् । इकः किम् । पिण्डवहम् । अपीलोः किम् । पीलुवहम् । ॐ अपील्वादीनामिति वाच्यम् । दारुवहम् ।

१०४६ । उपसर्गस्य घञ्यमनुष्ये बहुलम् ।६।३।१२२। उपसर्गस्य बहुलं दीर्घः स्याद्घञन्ते परे न तु मनुष्ये । परीपाकः–परिपाकः । अमनुष्ये किम् । निषादः ।

१०४७ । इकः काशे ।६।३।१२३। इगन्तस्योपसर्गस्य दीर्घः स्यात्काशे । वीकाशः । नीकाशः । इकः किम् । प्रकाशः ।

१०४८ । अष्टनः संज्ञायाम् ।६।३।१२५। उत्तरपदे दीर्घः । अष्टापदम् । संज्ञायां किम् । अष्टपुत्रः ।

१०४९ । चितेः कपि ।६।३।१२७। एकचितीकः । द्विचितीकः ।

१०५० । नरे संज्ञायाम् ।६।३।१२९। विश्वानरः ।

१०५१ । मित्रे चर्षौ ।६।३।१३०। विश्वामित्रः । ऋषौ किम् । विश्वमित्रो माणवकः । ॐ शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्यः । श्वादन्तः । इत्यादि ।

१०५२ । प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि ।८।४।५। एभ्यो वनस्य णत्वं स्यात् । प्रवणम् । कार्ष्यवणम्, इह षात्परत्वाण्णत्वम् ।

१०५३ । विभाषौषधिवनस्पतिभ्यः ।८।४।६। एभ्यो वनस्य णत्वं वा स्यात् । दूर्वावणम्–दूर्वावनम् । शिरीषवणम्–शिरीषवनम् । ॐ द्व्यच्त्र्यच्भ्यामेव । नेह–देवदारुवनम् । ॐ इरिकादिभ्यः प्रतिषेधो वक्तव्यः । इरिकावनम् । मिरिकावनम् ।

१०५४ । वाहनमाहितात् ।८।४।८। आरोप्य यदुह्यते तद्वाचिस्थान्निमित्तात्परस्य वाहननकारस्य णत्वं स्यात् । इक्षुवाहणम् । आहितात्किम् । इन्द्रवाहनम्, इन्द्रस्वामिकं वाहनमित्यर्थः । वहतेर्ल्युटि वृद्धिरिहैव सूत्रे निपातनात् ।

१०५५ । पानं देशे ।८।४।९। पूर्वपदस्थान्निमित्तात्परस्य पानस्य नस्य णत्वं स्याद्देशे गम्ये । क्षीरं पानं येषां ते

---

निर्देशो नियमार्थ एवेति ॥—विध्यर्थ इति । असंज्ञात्वेन 'पूर्वपदात्संज्ञायाम्' इत्यस्याप्रवृत्तेरिति भावः । न च पुरगाग्रहणमिति विध्यर्थमेव, गकारव्यवधानेन 'पूर्वपदात्संज्ञायाम्' इत्यस्य प्राप्त्यभावादिति वाच्यम् । 'अगः' इत्यस्य पञ्चम्यन्तत्वं स्वीकृत्य 'गान्तात्पूर्वपदात्परस्य णत्वं न' इति व्याख्यानात् । पुरगाशब्दस्य त्वाकारान्तत्वात् 'अगः' इति निषेधस्याप्रवृत्तेः । अत एव 'अगः' इत्यस्य 'ऋगयनम्' इत्येकमेवोदाहरणमिति 'अणृगयनादिभ्यः' इति निर्देशाश्रयेण तत्प्रत्याख्यातमाकरे ॥—पुरगावणमित्यादि । नरकविशेषस्य संज्ञाः ॥—असिपत्रवनमिति । 'एभ्यो वनस्यैव' इति विपरीतनियमे तु णत्वमत्र दुर्वारमिति भावः ॥ सप्तम्यर्थस्य प्रातिपदिकार्थे अन्तर्भावादाह—प्रथमेति ॥ किंशुलुकादीनामुदाहरणमाह—किंशुलुकागिरिरिति । आदिशब्दग्राह्यास्तु 'अञ्जनागिरिः' इत्यादयः ॥—किंशुलुकेति किम् ? कृष्णगिरिः । रामगिरिः ॥ १०४२ कृषीवल इति । 'रजःकृष्यासुति–' इत्यादिना मत्वर्थे वलच् ॥ १०४३ अमरावतीति । 'मादुपधायाश्च' इति, 'संज्ञायाम्' इति वा मतोर्मस्य वः ॥ १०४६ घञ्मात्रस्योत्तरपदत्वासंभवादाह—घञन्त इति ॥—निषाद इति । पुलिन्दो मनुष्यजातिः । 'निषीदत्यस्मिन्पापम्' इति निषादः, 'हलश्च' इत्यधिकरणे घञ् । कथं तर्हि दौवारिके प्रतीहारशब्दप्रयोग इति चेत्, अत्राहुः—प्रतिहारो द्वारम् । तात्स्थ्यात्ताच्छब्द्यमिति ॥ १०४९ एकचितीक इति । 'शेषाद्विभाषा' इति कप् ॥ १०५१ दंष्ट्रेति । वार्तिके दीर्घान्तः पठ्यते ॥ केचित्तु ह्रस्वान्तं पठित्वा 'श्वादंष्ट्रः' इति बहुव्रीहौ दीर्घमाहुः, न तु तत्पुरुषे ॥ १०५२ इह षादिति । 'कार्श्य' इति तालव्यपाठस्त्वनार्ष इति भावः ॥ १०५३ वनस्पतिभ्यो वनस्य णत्वमुदाहरति—शिरीषवणमिति । ननु 'वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः' इत्यमरकोशादस्य पुष्पं विनैव फलप्रादुर्भावः स वनस्पतिः, स चोदुम्बरादिः । शिरीषस्तु न तथा, तस्य पुष्पफलोभयसत्त्वात् । अतो णत्वमिह कथमिति चेत्, अत्राहुः—वनस्पतिशब्देनात्र वृक्षमात्रमुपलक्ष्यते । अत्र च 'लुपि युक्तवत्–' इति सूत्रस्थं भाष्यं लिङ्गम् । तत्र हि—व्यक्तिवचने किम् ? शिरीषाणामदूरभवो ग्रामः शिरीषाः, तस्य वनं शिरीषवनमित्यत्र णत्वे कर्तव्ये वनस्पतित्वमप्यतिदिश्येत इत्युक्तम् । तच्च शिरीषाणां वनस्पतित्वे संगच्छते नान्यथेति दिक् ॥ द्व्यच्त्र्यच्भ्यामेवेति । व्यवस्थितविभाषाऽऽश्रयणादिति भावः ॥ ओषधित्वात्प्राप्ते प्रतिषेधमाह—इरिकादिभ्य इति । एतदपि व्यवस्थितविभाषाविज्ञानादेव सिद्धम् ॥

---

१ असिपत्रवनमिति—नरकविशेषस्येयं संज्ञा । २ वले इति—अयं च प्रत्यय एव गृह्यते, यथोपदिष्टमित्यस्यानुवृत्तेः । तेनाजन्ते वलधातौ न दीर्घः । अण इत्येव । नेह–भ्रातृवलः । संज्ञायामेवेदम्, तेन पुत्रवल इत्यत्र न दीर्घः । ३ मुद्रितामुद्रितपुस्तकेषु सर्वेषु 'शिरीषवणं' इत्येव पाठः । भाष्यानारूढत्वात्स चोपेक्ष्यः ।

क्षीरपाणा उशीनराः। सुरापाणाः प्राच्याः। पीयते इति पानम्, कर्मणि ल्युट्।

१०५६। **वा भावकरणयोः** ।८।४।१०। पानस्येत्येव। क्षीरपाणम्-क्षीरपानम्[1]। ॐ **गिरिनद्यादीनां वा**। गिरिणदी-गिरिनदी। चक्रणितम्बा-चक्रनितम्बा।

१०५७। **प्रातिपदिकान्तनुम्विभक्तिषु च** ।८।४।११। पूर्वपदस्थान्निमित्तात्परस्य एषु स्थितस्य नस्य णो वा स्यात्। प्रातिपदिकान्ते-माषवापिणौ। नुमि-व्रीहिवापाणि। विभक्तौ-माषवापेण। पक्षे-माषवापिनावित्यादि। **उत्तरपदं यत्प्रातिपदिकं तदन्तस्यैव णत्वम्**। नेह—गर्गाणां भगिनि गर्गभगिनी। अत एव नुम्ग्रहणं कृतम्। अङ्गस्य नुम्विधानात्तद्भक्तो हि नुम्, न तूत्तरपदस्य। किंच प्रहिण्वन्नित्यादौ हिवेर्नुमो णत्वार्थमपि नुम्ग्रहणम्। प्रेन्वनमित्यादौ तु क्षुभ्नादित्वान्न। ॐ **युवादेर्न**। रम्ययूना। परिपक्वानि।

'**एकाजुत्तरपदे णः**' ३०७। नित्यमित्युक्तम्। वृत्रहणौ। हरिं मानयतीति हरिमाणी। नुमि-क्षीरपाणि विभक्तौ-क्षीरपेण, रम्यविणा।

१०५८। **कुमति च** ।८।४।१३। कवर्गवत्युत्तरपदे प्राग्वत्। हरिकामिणौ। हरिकामाणि। हरिकामेण।

१०५९। **पदव्यवायेऽपि** ।८।४।३८। पदेन व्यवधानेऽपि णत्वं न स्यात्। माषकुम्भवापेन। चतुरङ्गयोगेन। ॐ **अतद्धित इति वाच्यम्**। आर्द्रगोमयेण।

१०५५ **उशीनरा इति**। इह उशीनरशब्दस्तद्देशवासिषु भाक्तः॥—**कर्मणि ल्युडिति**। 'कृत्यल्युटो बहुलम्' इत्यनेन॥ १०५६ **वा भाव—**। आदेशार्थं आरम्भ इत्यप्राप्तविभाषा॥—**क्षीरपाणमिति**। पीतिः पानं, 'ल्युट् च' इति नपुंसके भावे ल्युट्। पीयते अनेनेति पानं, करणे ल्युट्। क्षीरस्य पानं क्षीरपाणम्॥ ॐ **गिरिनद्यादीनां वेति**। वक्तव्यमिति शेषः। संज्ञायां प्राप्ते असंज्ञायामप्राप्ते उभयत्र विभाषेत्याहुः॥ १०५७ **माषवापिणाविति**। 'बहुलमाभीक्ष्ण्ये' इति णिनिः॥—**व्रीहिवापाणीति**। कर्मण्यण्॥—**उत्तरपदं यदिति**। इष्टानुरोधेन तथा व्याख्यायत इति भावः॥—**गर्गभगिनीति**। इह भगिनीशब्द उत्तरपदं, न तु भगिन्शब्दः। अत्र च व्याख्याने नुम्ग्रहणमेव ज्ञापकमिति प्राचां मतमाह—**अत एवेति**॥ तदुक्तं ज्ञापकं विघटयति—**किंचेति**॥—**परिपक्वानीति**। 'कुमति च' इति नित्यं णत्वं प्राप्तम्॥—**एकाजुत्तर—**। 'प्राग् व्याख्यातमपि प्रकरणानुरोधेन स्मार्यते॥—**वृत्रहणाविति**। वृत्रं हतवन्तौ, 'ब्रह्मभ्रूण-' इति क्विप्॥—**हरिमाणीति**। मनेर्ण्यन्तात् 'क्विप् च' इपि क्विप्। 'गतिकारकोपपदानाम्-' इत्यादिना सुबुत्पत्तेः प्राक् समासान्नकारान्तमुत्तरपदम्, नान्तत्वान्ङीप्॥—**क्षीरपाणीति**। पिबतेः कर्मण्युपपदे 'आतोऽनुपसर्गे-' इति कः। 'आतो लोप इटि च' इत्यालोपः॥—**रम्यविणेति**। रम्यश्चासौ विश्चेति विग्रहः, तत 'आङो नास्त्रियाम्'॥ ननु अन्तवर्तिनीं विभक्तिमाश्रित्य विशब्दस्य पदत्वात् 'पदव्यवायेऽपि' इति णत्वनिषेधः स्यात्। मैवम्। 'उत्तरपदत्वे चापदादिविधौ-' इति प्रत्ययलक्षणप्रतिषेधेन विशब्दस्य पदत्वाभावात्॥ 'स्वादिषु-' इत्यनेन तु रम्यविशब्दस्यैव पदत्वं न तु विशब्दस्य, यस्मात्स्वादिविधिस्तस्यैव पदत्वाभ्युपगमात्। एवं च पुनर्भूणामित्यत्र णत्वं निर्बाधमेव, नामि परतो भूशब्दस्य पदत्वाभावात्॥ १०५८ **कुमति च**। अनेकाजुत्तरपदार्थ आरम्भः॥ 'कौ' इत्येव तु न सूत्रितम्। 'यस्मिन्विधिः-' इति तदादिविधौ कवर्गाद्युत्तरपद एव हरिकामिणावित्यादावयं विधिः स्यात् न तु वस्त्रयुगेणेत्यादौ, तथा च मतुबन्तनिर्देश आवश्यक इत्याह—**कवर्गवतीति**॥ १०५९ **पदेन व्यवधान इति**। निमित्तनिमित्तिनोर्मध्ये पदे सति णत्वं नेत्यर्थः॥—**माषकुम्भवापेनेति**। माषकुम्भं वपतीति 'कर्मण्यण्', उपपदसमासः॥—**चतुरङ्गयोगेनेति**। 'चत्वार्यङ्गान्यस्य, तेन योगः' इति मनोरमायां विगृहीतम्। तदयुक्तम्। 'उत्तरपदत्वे चापदादिविधौ' इति प्रत्ययलक्षणप्रतिषेधादङ्गशब्दस्यापदत्वात्। तस्मात् 'अङ्गानां योगोऽङ्गयोगश्चतुर्णामङ्गयोगः' इत्येव विग्रहीतव्यम्। न च 'चतुरङ्गेन योगः' इति विग्रहेऽप्यङ्गशब्द उत्तरपदं नेति प्रत्ययलक्षणप्रतिषेधो न प्रवर्तत इति शङ्क्यम्। तस्य पूर्वसमासस्योत्तरपदत्वात्, 'उत्तरपदत्वे च-' इति प्रतिषेधवचनस्यापि 'उत्तरस्य [illegible] पदत्वे कर्तव्ये पदादिविधिभिन्ने प्रत्ययलक्षणं न प्रवर्तते' इत्यर्थाभ्युपगमाच्च॥ 'शाकपार्थिवादीनामुत्तरपदलोपः', 'प्रादिभ्यो धातुजस्य-' इत्यादौ तूत्तरपदशब्देन समासचरमावयवमात्रं गृह्यते इति तत्र प्रत्ययलक्षणप्रवृत्तावपि न क्षतिः॥ इह तु पदत्वलाभाय प्रत्ययलक्षणप्रवृत्तिरपेक्षिता। एवं च 'माषकुम्भवापेन' इत्यत्रापि कुम्भस्य वापः कुम्भवापः। कुम्भशब्दः कुम्भपरिमितधान्ये भाक्तः। 'माषाणां कुम्भवापः' इति विगृहीतव्यमिति नव्याः॥ **केचित्तु**—'अपदादिविधौ' इत्यत्र 'पदान्तविधौ' इत्यर्थं परिकल्प्य 'पदव्यवायेऽपि' इत्यस्य पदान्तविधित्वाभावान्नास्त्यत्र प्रत्ययलक्षणनिषेध इत्याहुः। **तदपरे** न क्षमन्ते, तथा हि सति लाघवात् 'पदान्तविधौ' इत्येव ब्रूयात्, न तु 'अपदादिविधौ' इति दिक्। किंचोत्तरपदत्वे इति वचनस्य पदान्तविधौ कर्तव्ये प्रतिषेध इत्यर्थाभ्युपगमे परमदण्डिनाविति 'ङमो ह्रस्वादचि-' इति सूत्रस्थमनोरमाग्रन्थेनैव विरोध इत्यलमियता॥—**अतद्धित इति**। 'व्यवधायकपदस्य तद्धितश्चेत्परो न भवति, तदा निषेधः' इत्यर्थः॥—**आर्द्रगोमयेणेति**। इह गोशब्दः पदम्। 'उत्तरपदत्वे

1 **क्षीरपानमिति**—सर्पिष्पानमित्यादौ तु न, 'षात्पदान्तात्' इति निषेधात्। तस्य हि पदे परतो यः षकारस्ततः परस्य नस्य णो नेत्यर्थः, अन्तग्रहणसामर्थ्यात्। तेन सुसर्पिष्केणेत्यत्र णत्वम्भवत्येव।

शुष्कगोमयेण ।

१०६० । **कुस्तुम्बुरूणि जातिः** ।६।१।१४३। अत्र सुण्निपात्यते । कुस्तुम्बुरुः—धान्याकम् । क्लीबत्वमतन्त्रम् । जातिः किम् । कुतुम्बुरूणि, कुत्सितानि तिन्दुकीफलानीत्यर्थः ।

१०६१ । **अपरस्पराः क्रियासातत्ये** ।६।१।१४४। सुण्निपात्यते । अपरस्पराः सार्था गच्छन्ति, सततमविच्छेदेन गच्छन्तीत्यर्थः । क्रियेति किम् । अपरपरा गच्छन्ति, अपरे च परे च सकृदेव गच्छन्तीत्यर्थः ।

१०६२ । **गोष्पदं सेवितासेवितप्रमाणेषु** ।६।१।१४५। सुट् सस्य षत्वं च निपात्यते । गावः पद्यन्तेऽस्मिन्देशे स गोभिः सेवितो गोष्पदः । असेविते—अगोष्पदान्यरण्यानि । प्रमाणे—गोष्पदमात्रं क्षेत्रम् । सेवितेत्यादि किम् । गोः पदं गोपदम् ।

१०६३ । **आस्पदं प्रतिष्ठायाम्** ।६।१।१४६। आत्मयापनाय स्थाने सुट् निपात्यते । आस्पदम् । प्रेति किम् । आ पदात्—आपदम्[2] ।

१०६४ । **आश्चर्यमनित्ये** ।६।१।१४७। अद्भुते सुट् । आश्चर्यं यदि स भुञ्जीत । अनित्ये किम् । आचर्यं कर्म शोभनम् ।

१०६५ । **वर्चस्केऽवस्करः** ।६।१।१४८। कुत्सितं वर्चो वर्चस्कम्—अन्नमलम्, तस्मिन् सुट् । अवकीर्यत इत्यवस्करः । वर्चस्के किम् । अवकरः ।

१०६६ । **अपस्करो रथाङ्गम्** ।६।१।१४९। अपकरोऽन्यः ।

१०६७ । **विष्किरः शकुनौ वा** ।६।१।१५०। पक्षे विकिरः । वावचनेनैव सुड्विकल्पे सिद्धे विकिरग्रहणं तस्यापि शकुनेरन्यत्र प्रयोगो माभूदिति वृत्तिः । तन्न, भाष्यविरोधात् ।

१०६८ । **प्रतिष्कशश्च कशेः** ।६।१।१५२। कश गतिशासनयोरित्यस्य प्रतिपूर्वस्य पचाद्यचि सुट् निपात्यते षत्वं च । सहायः पुरोयायी वा प्रतिष्कश इत्युच्यते । कशेः किम् । प्रतिगतः कशां प्रतिकशोऽश्वः । यद्यपि कशेरेव कशा, तथापि कशेरिति धातोर्ग्रहणमुपसर्गस्य प्रतेर्ग्रहणार्थम् । तेन धात्वन्तरोपसर्गान्न ।

१०६९ । **प्रस्कण्वहरिश्चन्द्रावृषी** ।६।१।१५३। हरिश्चन्द्रग्रहणममन्त्रार्थम् । ऋषीति किम् । प्रकण्वो देशः । हरिचन्द्रो माणवकः ।

१०७० । **मस्करमस्करिणौ वेणुपरिव्राजकयोः** ।६।१।१५४। मकरशब्दोऽव्युत्पन्नः, तस्य सुट् इनिश्च निपात्यते । वेणाविति किम् । मकरो ग्राहः । मकरी समुद्रः ।

१०७१ । **कास्तीराजस्तुन्दे नगरे** ।६।१।१५५। ईषत्तीरमस्यास्तीति कास्तीरं नाम नगरम् । अजस्येव तुन्दमस्येति अजस्तुन्दं नाम नगरम् । नगरे किम् । कातीरम् । अजतुन्दम् ।

१०७२ । **कारस्करो वृक्षः** ।६।१।१५६। कारं करोतीति कारस्करो वृक्षः । अन्यत्र कारकरः । केचित्तु कस्कादिष्विदं पठन्ति, न सूत्रेषु ।

१०७३ । **पारस्करप्रभृतीनि च संज्ञायाम्** ।६।१।१५७। एतानि ससुट्कानि निपात्यन्ते नाम्नि । पारस्करः । किष्किन्धा । (ग) **तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च** । तात्पूर्वं चत्वेन दकारोऽपि बोध्यः । तद्बृहतोर्दकारतकारौ लुप्येते, करपत्योस्तु सुट् । चोरदेवतयोरिति समुदायोपाधिः । तस्करः । बृहस्पतिः । (ग) **प्रायस्य[1] चित्तिचित्तयोः** । प्रायश्चित्तिः । प्रायश्चि-

---

च–’ इति निषेधोऽत्र न शङ्क्यः, गोमयशब्दस्योत्तरपदत्वात् । गोशब्दस्य च ‘स्वादिषु’ इति पदत्वात् ॥ **१०६२ गोष्पदम्** । असविते गोष्पदशब्दस्य वृत्त्यसंभवान्नञ्पूर्वकमुदाहरति—**अगोष्पदानीति** । गवां संचारो यत्र नैव संभवति तत्रापि सुडागमार्थमसेवितग्रहणमित्याहुः ॥ **१०६३ आत्मयापनायेति** । कालक्षेपाय शरीरक्षपणाय वेत्यर्थः ॥ **१०६४ आश्चर्यमिति** । आङः परस्य चरेः सुट् । ‘चरेराङि चागुरौ’ इति यत् ॥ **१०६७ विष्किरः—**। ‘कॄ विक्षेपे’ इत्यस्मात् ‘इगुपध–’ इत्यादिना कप्रत्यये सुडागमोऽनेन निपात्यते । षत्वं तु ‘परिनिविभ्यः–’ इत्यनेन ॥—**विकिरग्रहणमिति** । ‘विष्किरः शकुनौ विकिरो वा’ इति वृत्तिग्रन्थे पाठः, सूत्रपाठे तु विकिरग्रहणं नास्त्येवेति बोध्यम् ॥—**तस्यापीति** । विकिरशब्दस्यापीत्यर्थः ॥ **१०६८ कशेरेव कशेति** । कशधातोरेव कशाशब्दो निष्पन्न इत्यर्थः ॥—**धात्वन्तरेति** । ‘प्रतिकशः’ इत्यत्र प्रतिर्गमेरुपसर्गः, न तु कशेः । ‘यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव’ इति न्यायादिति भावः ॥ **१०६९ अमन्त्रार्थमिति** । मन्त्रे तु ‘ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे’ इत्यनेनैव सिध्यतीति भावः ॥ **१०७० मस्कर—**। मस्करशब्दादिनिना मत्वर्थीयेनेष्टसिद्धौ मस्करिग्रहणं ‘परिव्राजक एवायं प्रयोगो यथा स्यात्’ इत्येवमर्थमित्याहुः ॥ **१०७१ कातीरमिति** । ‘ईषदर्थे’ इति कोः कादेशः ॥ **१०७३ पारस्कर इति** । ‘पारं करोति’ इति विग्रहः । ‘कृञो हेतुताच्छील्य–’ इति टः ॥—**किष्किन्धेति** । ‘किमपि धत्ते’ इति विग्रहे ‘आतोऽनुपसर्गे कः’ । टाप् । निपातनात् किमो द्वित्वं, पूर्वस्य मलोपः सुट् षत्वं च । ‘किं किं दधाति’ इति विगृह्णतां तु मते वीप्सायां द्वित्वं सिद्धम् । अन्यत्तु निपातनादेव ॥ वस्तुतस्तु रूढिशब्दा एते कथंचिद्व्युत्पाद्यन्त इत्यवयवार्थे नाग्रहः कार्यः ॥ (ग) **तद्बृहतोरिति** । गणसूत्रमेतत् ॥—**तादिति** । ‘तलोपश्च’ इत्यत्रेति शेषः ॥ (ग)

---

१ **प्रायस्येति**—निर्देशादकारान्तः पुंलिङ्गस्तपोवाची प्रायःशब्दः, ‘प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते’ इति स्मृतेः । ‘प्रायः पापं विजानीयात्’ इत्यादिस्मृत्यन्तराच्च पापवाच्यपीति बोध्यम् । २ ‘आपदापदम्’ इत्यपि पाठः ।

११२५। **स्त्रीभ्यो ढक्** ।४।१।१२०। स्त्रीप्रत्ययान्तेभ्यो ढक् स्यात् । वैनतेयः । बाह्वादित्वात्–सौमित्रिः । शिवादित्वात्–सापत्नः ।

११२६ । **द्व्यचः** ।४।१।१२१। द्व्यचः स्त्रीप्रत्ययान्तादपत्ये ढक् । तन्नामिकाणोऽपवादः । दात्तेयः । 'पार्थः' इत्यत्र तु 'तस्येदम्' १५०२ इत्यण् ।

११२७ । **इतश्चानिञः** ।४।१।१२२। इकारान्ताद् द्व्यचोऽपत्ये ढक् स्यात्, न त्विञन्तात् । दौलेयः । नैधेयः ।

११२८ । **शुभ्रादिभ्यश्च** ।४।१।१२३। ढक् स्यात् । शुभ्रस्यापत्यं शौभ्रेयः ।

११२९ । **विकर्णकुषीतकात्काश्यपे** ।४।१।१२४। अपत्ये ढक् । वैकर्णेयः । कौषीतकेयः । अन्यो वैकर्णिः, कौषीतकिः ।

११३० । **भ्रुवो वुक् च** ।४।१।१२५। चाड्ढक् । भ्रौवेयः ।

११३१ । **प्रवाहणस्य ढे** ।७।३।२८। प्रवाहणशब्दस्योत्तरपदस्याचामादेरचो वृद्धिः पूर्वपदस्य तु वा ढे परे । प्रवाहणस्यापत्यं–प्रावाहणेयः, प्रवाहणेयः ।

११३२ । **तत्प्रत्ययस्य च** ।७।३।२९। ढान्तस्य प्रवाहणस्योत्तरपदस्यादेरचो वृद्धिः पूर्वपदस्य तु वा । प्रवाहणेयस्यापत्यं–प्रावाहणेयिः, प्रवाहणेयिः । बाह्यतद्धितनिमित्ता वृद्धिर्ढाश्रयेण विकल्पेन बाधितुं न शक्यत इति सूत्रारम्भः ।

११३३ । **कल्याण्यादीनामिनङ्** ।४।१।१२६। एषामिनङादेशः स्यात्, ढक् च । काल्याणिनेयः । बान्धकिनेयः ।

११३४ । **कुलटाया वा** ।४।१।१२७। इनङ्मात्रं विकल्प्यते । ढक् तु नित्यः पूर्वेणैव । कौलटिनेयः, कौलटेयः । सती भिक्षुक्यत्र कुलटा । या तु व्यभिचारार्थं कुलान्यटति तस्याः 'क्षुद्राभ्यो वा' ११३९ इति पक्षे ढ्रक्, कौलटेरः ।

११३५ । **हृद्भगसिन्ध्वन्ते पूर्वपदस्य च** ।७।३। १९। हृदाद्यन्ते पूर्वोत्तरपदयोरचामादेरचो वृद्धिर्ञिति णिति किति च । सुहृदोऽपत्यं सौहार्दः । सुभगाया अपत्यं सौभागिनेयः । सक्तुप्रधानाः सिन्धवः सक्तुसिन्धवः, तेषु भवः–साक्तुसैन्धवः ।

---

**इञिति** । पूर्वसूत्राद्वाग्रहणानुवृत्तेरिति भावः ॥ **११२५ स्त्रीभ्यो ढक्** । बहुवचननिर्देशान्न स्वरूपस्य ग्रहणम्, नाप्यर्थस्य । ढगर्थतया शुभ्रादिषु विमातृशब्दपाठात् । किं तु स्त्र्यधिकारोक्तटाबादेर्ग्रहणम् । न तु विप्रकृष्टक्तिन्नादेरित्याशयेनाह—**स्त्रीप्रत्ययान्तेभ्य इति** । तेन 'दरदोऽपत्यं दारदः' इत्यत्र ढक् न भवति । स्त्र्यर्थग्रहणे तु स्यादेवात्र ढक् । दरच्छब्दो हि जनपदक्षत्रियवाची, ततोऽपत्यार्थे 'द्व्यञ्मगध–' इत्यणि तस्य स्त्रियाम् 'अतश्च' इति लुकि दरच्छब्दस्य स्त्र्यर्थवाचित्वात् । 'ढक् च–' इति वर्तमाने पुनरिह ढग्ग्रहणमण्संबद्धस्य ढको निवृत्त्यर्थम् । यद्यपि 'चानुकृष्टं नोत्तरत्र' इति परिभाषया अणिह न प्रवर्तते तथापि तस्या अनित्यत्वज्ञापनाय ढग्ग्रहणमित्याहुः ॥ **११२६ तस्येदमिति** । शिवादित्वादपत्य एवाणित्यन्ये ॥ **११२७ इतश्च**—। इतः किम् ? दाक्षिः ॥ अनिञः किम् ? दाक्षायणिः ॥ द्व्यचः किम् ? उदधेरपत्यमौदधः ॥ काशिकायां तु 'मरीचेर्मारीचः' इति प्रत्युदाहृतम् । तदसत् । बाह्वादित्वेनेञ्प्रवृत्तेः । न चास्य बाह्वादित्वे विवदितव्यम् । 'मरीचिशब्दो बाह्वादिषु पठ्यते' इति 'मिदचोऽन्त्यात्परः' इति सूत्रे भाष्ये स्थितत्वात् ॥ **११२८ शुभ्रादिभ्यश्च** । चकारस्त्वाकृतिगणत्वद्योतनार्थ इत्याहुः । मृकण्डशब्दोऽत्र पठ्यते । मार्कण्डेयः । शुभ्र, मृकण्ड, अश्व, विमातृ, विधवा, गोधा, प्रवाहणेत्यादि । आकृतिगणोऽयम् ॥ तेन पाण्डवेय इत्यादि सिद्धम् । इहादन्तेषु इञ् प्राप्तः, विधवाशब्दात्क्षुद्रालक्षणो ढ्रक्, चतुष्पाज्जातिवाचिषु ढञ्, गोधाशब्दाद्ढ्रक्-वचनात्सोऽपि भवति, क्वचिदौत्सर्गिकोऽण् प्राप्त इति बोध्यम् ॥ **११३१ प्रवाहणस्य ढे** । उत्तरपदस्येत्यधिक्रियते । 'अर्धात्परिमाण–' इत्यतः 'पूर्वस्य तु वा' इति अनुवर्तते तदाह—**उत्तरपदस्याचामादेरित्यादि** । नित्यमुत्तरपदवृद्धेः फलं तु 'प्रवाहणेयीभार्यः' इत्यत्र 'वृद्धिनिमित्तस्य' इति पुंवद्भावप्रतिषेधः ॥ **११३२ तत्प्रत्ययस्य च** । 'प्रवाहणस्य' इत्यनुवर्तते, तच्छब्देन ढप्रत्ययः परामृश्यते तदाह—**ढान्तस्येत्यादि** ॥—**बाह्यतद्धितनिमित्तेति** । ढक्प्रत्ययान्ताद्बहिर्भूतो य इञ् तन्निमित्तेत्यर्थः ॥ **११३३ कल्याण्यादीनाम्**—। इह परस्त्रीशब्दः पठ्यते । 'परस्य स्त्री परस्त्री' इति षष्ठीसमासः । पारस्त्रैणेयः, परभार्यायामुत्पन्न इत्यर्थः । अनुशतिकादित्वादुभयपदवृद्धिः ॥ बिदादिगणे तु 'परस्त्री परशुं च' इति पठ्यते, प्राप्नोतीति शेषः ॥ तत्र परा चासौ स्त्री चेति कर्मधारयः । परस्त्रिया अपत्यं पारशवः, ब्राह्मणाच्छूद्रायां तेनैवोढायामुत्पन्नः । सा च जात्यन्तरयोगात्परस्त्री । न च परश्वादेशस्य स्थानिवद्भावात्पारशवेऽपि 'अनुशतिकादीनां च' इत्युभयपदवृद्धिः स्यादिति वाच्यम् । सत्यादेशे पूर्वोत्तरपदसंप्रमोहात्तदप्रवृत्तेः । इह गणे स्त्रीप्रत्ययान्तानां ढकः सिद्धत्वादिनङर्थं ग्रहणम् । अन्येषां तूभयार्थम् । कल्याणी, सुभगा, दुर्भगा, बन्धकी, परस्त्रीत्यादि ॥ **११३४ कुलटाया वा** । शकन्ध्वादित्वात्पररूपम्, अत एव निपातनाद्वा ॥—**सती भिक्षुक्यत्रेति** । अत्र इनङ्विधौ । तथा चोक्तममरेण—'अथ बान्धकिनेयः स्याद्बन्धुलश्चासतीसुतः । कौलटेरः कौलटेयो भिक्षुकी तु सती यदि । तदा कौलटिनेयः स्यात्कौलटेयोऽपि चात्मजः' इति ॥ केचित्तु क्षुद्राया अपि इनङा तृतीयं रूपं कौलटिनेय इतीच्छन्ति ॥—**पक्षे ढ्रगिति** । ढगपि पक्षे भवत्येवेति भावः ॥ **११३५ हृद्भग** । 'पूर्वपदस्य च' इति चकारेण 'उत्तरस्य' इत्यनुकृष्यते तदाह—**पूर्वोत्तरपदयोरिति** । 'महते सौभगाय' इत्यत्र तूद्गात्रादित्वादञ् छान्दसत्वान्नो-

११३६ । **चटकाया ऐरक्** ।४।१।१२८॥ ॐ **चटकस्येति वाच्यम्** । लिङ्गविशिष्टपरिभाषया स्त्रिया अपि । चटकस्य चटकाया वा अपत्यं–चाटकैरः । ॐ **स्त्रियामपत्ये लुग्वक्तव्यः** । तयोरेव स्त्र्यपत्यं–चटका, अजादित्वाट्टाप् ।

११३७ । **गोधाया ढ्रक्** ।४।१।१२९। गौधेरः । शुभ्रादित्वात्पक्षे ढक्, गौधेयः ।

११३८ । **आरगुदीचाम्** ।४।१।१३०। गौधारः । रका सिद्धे आकारोच्चारणमन्यतो विधानार्थम्, जडस्यापत्यं जाडारः । पण्डस्यापत्यं पाण्डारः ।

११३९ । **क्षुद्राभ्यो वा** ।४।१।१३१। अङ्गहीनाः शीलहीनाश्च क्षुद्राः, ताभ्यो वा ढ्रक् । पक्षे ढक् । काणेरः–काणेयः । दासेरः–दासेयः ।

११४० । **पितृष्वसुश्छण्** ।४।१।१३२। अणोऽपवादः । पैतृष्वस्रीयः ।

११४१ । **ढकि लोपः** ।४।१।१३३। पितृष्वसुरन्त्यलोपः स्याड्ढकि । अत एव ज्ञापकात् ढक् । पैतृष्वसेयः ।

११४२ । **मातृष्वसुश्च** ।४।१।१३४। पितृष्वसुर्यदुक्तं तदस्यापि स्यात् । मातृष्वस्रीयः–मातृष्वसेयः ।

११४३ । **चतुष्पाद्भ्यो ढञ्** ।४।१।१३५।

११४४ । **ढे लोपोऽकद्र्वाः** ।६।४।१४७। कद्रूभिन्नस्योवर्णान्तस्य भस्य लोपः स्यात् ढे परे । कामण्डलेयः, कमण्डलुशब्दश्चतुष्पाज्जातिविशेषे ।

११४५ । **गृष्ट्यादिभ्यश्च** ।४।१।१३६। एभ्यो ढञ् स्यात् । अण्ढकोरपवादः । गार्ष्टेयः । मित्रयोरपत्यम्, ऋष्यणि प्राप्ते ढञ्,

११४६ । **केकयमित्त्रयुप्रलयानां यादेरियः** ।७।३।२। एषां यकारादेरिय् आदेशः स्यात् ञिति णिति किति च तद्धिते परे । इति इयादेशे प्राप्ते—

११४७ । **दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि** ।६।४।१७४। एतानि निपात्यन्ते । इति युलोपः, मैत्रेयः । मैत्रेयौ ।

---

त्तरपदवृद्धिरित्याशयः ॥—'चटकायाः' इति स्त्रीलिङ्गनिर्देशात्पुंसि न स्यादित्याशङ्क्याह—**चटकस्येति वाच्यमिति** । एवं च 'चटकादैरक्' इत्येव सांप्रदायिकः पाठ इति न्यासकृदुक्तिर्वार्तिकविरोधादुपेक्ष्या ॥ **११३६ तयोरेवेति** । तत्र टाबन्तात्तद्धितलुकि 'लुक्तद्धितलुकि' इति टापो लुकि जातिलक्षणं ङीषं बाधित्वा अजादिलक्षणष्टाबिति भावः ॥ **११३७ गौधेर इति** । ढस्य एयादेशे कृते 'लोपो व्योः–' इति यलोपः ॥ **११३८ आरगुदीचाम्** । वचनादेव ढ्रग्ढगारकां पर्याये सिद्धे उदीचां ग्रहणं पूजार्थम् ॥ 'अरक्' इति न सूत्रितं 'यस्येति च' इत्याकारलोपे 'गौधरः' इत्यनिष्टप्रसङ्गात् ॥—**अन्यत इति** । अनाकारान्ताल्लक्ष्यानुरोधेन कुतश्चिदित्यर्थः ॥—**पण्डस्येति** । पण्डो नपुंसकः, तस्यापत्यं तु कृत्रिमादि ॥ **११३९ क्षुद्राभ्यः**—। अर्थगतं स्त्रीत्वं शब्दे आरोप्य स्त्रीलिङ्गनिर्देशः ॥ **११४५ गृष्ट्यादिभ्यश्च** । गृष्टि, हृष्टि, हलि, बलि, कुद्रि, अगस्ति, मित्रयु ॥—**अण्ढकोरपवाद इति** । इहान्त्ययोर्द्वयोर्ऋषित्वादण् प्राप्तः, अन्येभ्यस्तु 'इतश्चानिञः' इति ढक् प्राप्त इति विवेकः ॥—**गार्ष्टेय इति** । सकृत्प्रसूता सर्वापि गृष्टिः, न तु गौरेव । अतोऽत्र न 'चतुष्पाद्भ्यः–' इत्यनेन ढञ्सिद्धिः ॥ **११४६ केकय**—। केकयस्यापत्यं स्त्री कैकेयी, 'जनपदशब्दात्' इत्यञ् ॥ मैत्रेयिकया श्लाघते, मित्रयूनां भावेनेत्यर्थः, 'गोत्रचरणाच्छ्लाघात्याकार–' इति वुञ् । तत्र हि लौकिकं गोत्रं गृह्यते, लोके च 'ऋषिशब्दो गोत्रमिति प्रसिद्धं' इति काशिका । एतच्च यदा मित्रशब्दोऽभेदोपचारात्तदपत्यसंताने वर्तते तदा बोध्यम्, अन्यथा 'मित्रयूनाम्' इति बहुवचनान्तेन विग्रहो न स्यात् ॥ प्रलयादागतं प्रालेयम् । इयादेशो वृद्धिं न बाधते, 'अचामादेरचो वृद्धिः' 'यादेरियादेशः' इति भिन्नविषयत्वात्, अङ्गं तूभयोर्विशेषणं न तु कार्यीति **हरदत्तः** ॥ आदिवृद्धेरपीदमेव सूत्रं विधायकमस्तु । किमनेन विषयभेदविचारेणेत्यन्ये ॥ **११४७ दाण्डिनायन**—॥—**निपात्यन्त इति** । दण्डिन्, हस्तिन्, आभ्यां नडादित्वात्फक्, निपातनाट्टिलोपाभावः ॥ वसन्तादिषु 'अथर्वन्' इति पठ्यते, 'अथर्वणा प्रोक्तो ग्रन्थ उपचारादथर्वा तमधीते आथर्वणिकः' । शुभ्रादिषु 'जिह्माशिन्' इति पठ्यते, तस्यापत्यं जैह्माशिनेयः ॥ वाशिनोऽपत्यं वाशिनायनिः, 'उदीचां वृद्धात्–' इति फिञ् ॥ भ्रूणहन्, धीवन्, अनयोः ष्यञि तकारोऽन्तादेशो निपात्यते । भ्रूणघ्नो भावो भ्रौणहत्यम् । धैवत्यम् । 'हनस्तोऽचिण्णलोः' इत्यनेनैव हन्तेस्तत्त्वे सिद्धे तकारनिपातनं ज्ञापयति—'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्' इति । तेन वार्त्रघ्नमित्यत्र तत्वं न ॥ नन्वेवं 'प्रसृड्भ्याम्' इत्यादौ 'अनुदात्तस्य चर्दुपधस्य–' इत्यम् दुर्वारः स्यात्, अम्विधौ धातोः स्वरूपग्रहणाभावात् । **अत्राहुः**—'मृजेर्वृद्धिः' इति सूत्रस्थभाष्यपर्यालोचनया 'धातोः कार्यमुच्यमानं तत्प्रत्यये भवति' इति ज्ञापनार्थं तकारनिपातनमिति व्याख्येयम् । तेन न कोऽपि दोष इति ॥ सरयू इत्यस्याणि परे यादेर्वो निपात्यते । सरय्वां भवं सारवमुदकम् ॥ इक्ष्वाकोरपत्यं ऐक्ष्वाकः, 'जनपदशब्दात्क्षत्त्रियादञ्', उलोपो निपातनात् । इक्ष्वाकुषु जनपदेषु भवः 'कोपधादण्'—ऐक्ष्वाकः, अत्राप्युलोपो निपातनादेव । अञणन्तयोर्द्वयोरप्येकश्रुत्या पाठात् । बहुत्वे तु 'अञस्त्रद्राजत्वाल्लुक्' 'अणस्तु न' इति विशेषः । तथा च रघुः—'इक्ष्वाकूणां दुरापेऽर्थे' इति । मुरारिस्त्वाह—'ऐक्ष्वाकेषु च मैथिलेषु

११४८ । **यस्कादिभ्यो गोत्रे** ।२।४।६३। एभ्योऽपत्यप्रत्ययस्य लुक् स्यात्तत्कृते बहुत्वे, न तु स्त्रियाम् । मित्रयवः ।

११४९ । **अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च** ।२।४।६५। एभ्यो गोत्रप्रत्ययस्य लुक् स्यात् तत्कृते बहुत्वे, न तु स्त्रियाम् । अत्रयः । भृगवः । कुत्साः । वसिष्ठाः । गोतमाः । अङ्गिरसः ।

११५० । **बह्वच इञः प्राच्यभरतेषु**[1] ।२।४।६६। बह्वचः परो य इञ् प्राच्यगोत्रे भरतगोत्रे च वर्तमानस्तस्य लुक् स्यात् । पन्नागाराः । युधिष्ठिराः ।

११५१ । **न गोपवनादिभ्यः** ।२।४।६७। एभ्यो गोत्रप्रत्ययस्य लुक् न स्यात् । बिदाद्यन्तर्गणोऽयम् । गौपवनाः । शैग्रवाः ।

११५२ । **तिककितवादिभ्यो द्वन्द्वे** ।२।४।६८। एभ्यो गोत्रप्रत्ययस्य बहुत्वे लुक् स्यात् द्वन्द्वे । तैकायनयश्च कैतवायनयश्च, 'तिकादिभ्यः फिञ्' ११८०, तस्य लुक्—तिककितवाः ।

११५३ । **उपकादिभ्योऽन्यतरस्यामद्वन्द्वे** ।२।४।६९। एभ्यो गोत्रप्रत्ययस्य बहुत्वे लुग्वा स्यात् द्वन्द्वे चाद्वन्द्वे च । औपकायनाश्च लामकायनाश्च 'नडादिभ्यः फक्' ११०३, तस्य लुक्—उपकलमकाः—औपकायनलामकायनाः । भ्राष्टककपिष्ठलाः—भ्राष्टकिकापिष्ठलयः । लमकाः—लामकायनाः ।

११५४ । **आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्** ।२।४।७०। एतयोरवयवस्य गोत्रप्रत्ययस्याऽणो यञश्च बहुषु लुक् स्यात्, अवशिष्टस्य प्रकृतिभागस्य यथासंख्यम् 'अगस्ति' 'कुण्डिनच्' एतावादेशौ स्तः । अगस्तयः । कुण्डिनाः ।

११५५ । **राजश्वशुराद्यत्** ।४।१।१३७। ॐ **राज्ञो जातावेवेति वाच्यम्** ।

११५६ । **ये चाभावकर्मणोः** ।६।४।१६८। यादौ तद्धिते परे अन् प्रकृत्या स्यान्न तु भावकर्मणोः । राजन्यः ।

---

च फलन्त्वस्माकमद्याशिषः' इति ॥ हिरण्यस्य विकारो हिरण्मयः । मयटि यादेर्लोपोऽत्र निपात्यते ॥ **११४८ यस्कादिभ्यो—**। अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यत इत्याशयेनाह—**अपत्यप्रत्ययस्येति** । 'ण्यक्षत्रियार्ष-' इत्यतो लुगित्यनुवर्तते, 'तद्राजस्य-' इति सूत्रात् 'बहुषु तेनैवास्त्रियाम्' इति च, तदाह—**लुक् स्यादित्यादि** । तत्कृते इति किम् ? प्रिययास्काः ॥ बहुत्वे किम् ? यास्कः । शिवाद्यण् ॥ यस्क, लह्य, द्रुह्य, कर्णाट, वस्ति, कुद्रि, मित्रयु, इत्यादि ॥ **११४९ अत्रि—**॥—**गोत्रप्रत्ययस्येति** । अत्रिशब्दात् 'इतश्चानिञः' इति ढक् । इतरेभ्यस्तु ऋष्यणिति बोध्यम् ॥ **११५०** भरतगोत्रे उदाहरति—**युधिष्ठिरा इति** । बहुष्वेव लुक् । नेह—यौधिष्ठिरिः । कुरुलक्षणं ण्यं बाधित्वा बाह्वादित्वादिञ् ॥ **११५१ बिदाद्यन्तर्गणोऽयमिति** । 'यञञोश्च' इति लुगत्र प्राप्नोतीति भावः ॥ **११५२ तिककितवादिभ्यो—**। यद्यपि द्वन्द्वरूपाण्येव गणे पठ्यन्ते, तिकादीनि पूर्वपदानि, कितवादीन्युत्तरपदानि, तथापि 'तिकादिभ्यः' इत्युक्ते पूर्वपदेष्वेव लुगाशङ्क्येत, इष्यते तूत्तरपदेष्वपि, अतः 'तिककितवादिभ्यः' इत्युक्तम् ॥—**तिककितवा इति** । अन्येऽप्यत्रोदाहर्तव्याः—औपकायनाश्च लामकायनाश्च, 'नडादिभ्यः फक्', तस्य लुक्—उपकलमकाः । भ्राष्ट्रकयश्च कापिष्ठलयश्च, 'अत इञ्', तस्य लुक्—भ्राष्ट्रककपिष्ठलाः । कार्ष्णाजिनयश्च कार्ष्णसुन्दरयश्च, 'अत इञ्', तस्य लुक्—कृष्णाजिनसुन्दराः । इत्यादि ॥ **११५३ उपकादिभ्यो—**। अद्वन्द्वग्रहणं 'द्वन्द्वे' इत्येतन्नाविक्रियत इति स्फुटीकरणार्थम् ॥ उपकादीनां मध्ये त्रयो द्वन्द्वास्तिककितवादिषु पठ्यन्ते 'उपकलमकाः' इत्यादयस्तेषां पूर्वेण नित्यमेव लुक्, अद्वन्द्वे त्वनेन विकल्प इति ज्ञेयम् ॥ भाष्ये 'भ्राष्टकिकापिष्ठलयः' इत्युदाहरणात्तिककितवादिष्वस्य पाठोऽनार्ष इति कैयटः । तेनात्र द्वन्द्वेऽपि विकल्प एवोचित इत्याशयेनोदाहरति—**भ्राष्टककपिष्ठला इत्यादि** । तिककितवादिषु पठितानामनेनाद्वन्द्व एव विकल्प इत्याशयेनोदाहरति—**लमकाः । लामकायना इति** । एवमन्येऽप्युदाहर्तव्याः—उपकाः—औपकायनाः, भ्राष्टकाः—भ्राष्टकायनाः । इत्यादि ॥ **११५४ आगस्त्य—**। अगस्त्यशब्दादृष्यण्, कुण्डिनशब्दात्तु गर्गाद्यञ् ॥ ननु कुण्डिनीशब्दस्य यञि 'भस्याढे-' इति पुंवद्भावे 'नस्तद्धिते' इति टिलोपः प्राप्नोति । न च 'संयोगादिश्च' इति प्रकृतिभावः शङ्क्यः । 'अणि' इति तत्रानुवर्तनात् । मैवम् । अस्मादेव निपातनात् तस्याप्रवृत्तेः कौण्डिन्यः सिध्यति । चकारस्त्वन्तोदात्तार्थः ॥ मध्योदात्तः कुण्डिनीशब्दः । कुण्डमस्त्यस्या इति मत्वर्थीयस्येनेरुदात्तत्वात्तदादेशस्यापि कुण्डिनशब्दस्यान्तरतम्यान्मध्योदात्तत्वात् ॥—**अवशिष्टस्य प्रकृतिभागस्येति** । न च प्रत्ययविशिष्टस्यादेशमात्रं विधीयतां किं लुग्विधानेनेति वाच्यम् । अगस्तीयाश्छात्रा इत्यनापत्तेः । लुकि हि सति 'गोत्रेऽलुगचि' इति लुकि प्रतिषिद्धे वृद्धत्वाच्छः सिध्यति । प्रत्ययविशिष्टस्यादेशविधौ तु वृद्धत्वापगमे शैषिकोऽणेव स्यात् ॥ कौण्डिनाश्छात्रा इति तूभयथापि सिध्यत्येव । छापवादस्य 'कण्वादिभ्यो गोत्रे' इत्यण्प्रत्ययस्य प्रवृत्त्या तत्र विशेषाभावात् ॥ **११५५ राजश्वशुराद्यत्** । क्रमेणाणिञोरपवादः ॥—**जातावेवेति** । प्रकृतिप्रत्ययसमुदायेन जातिश्चेद्वाच्येत्यर्थः ॥ प्रत्ययस्त्वपत्य एव । एवं

---

१ **प्राच्यभरतेषु इति**—भारतानां प्राच्यत्वादेव सिद्धे पुनरुपादानमन्यत्र प्राच्यग्रहणे भरतानामग्रहणस्य लिङ्गम् । तेन 'इञः प्राचाम्' इति लुक् भरतयूनो न । यौधिष्ठिरिः पिता, यौधिष्ठिरायणः पुत्र इति ।

श्वशुर्यः । जातिग्रहणाच्छूद्रादावुत्पन्नो राजनः ।[1]

११५७ । **अन्** ।६।४।१६७। अणि अन्प्रकृत्या स्यात् । इति टिलोपो न । अभावकर्मणोः किम् । राज्ञः कर्म भावो वा राज्यम् ।

११५८ । **संयोगादिश्च** ।६।४।१६६। इन्प्रकृत्या स्यादणि परे । चक्रिणोऽपत्यं चाक्रिणः ।

११५९ । **न मपूर्वोऽपत्येऽवर्मणः** ।६।४।१७०। मपूर्वोऽन्प्रकृत्या न स्यादपत्येऽणि । भाद्रसामः । मपूर्वः किम् । सौत्वनः । अपत्ये किम् । चर्मणा परिवृतश्चार्मणो रथः । अवर्मणः किम् । चक्रवर्मणोऽपत्यं चाक्रवर्मणः । ❀ **वा हितनाम्न इति वाच्यम्** । हितनाम्नोऽपत्यं हैतनामः-हैतनामनः ।

११६० । **ब्राह्मोजातौ** ।६।४।१७१। योगविभागोऽत्र कर्तव्यः—

ब्राह्मः-इति निपात्यते अनपत्येऽणि । ब्राह्मं हविः ।

ततः-**जातौ** । अपत्ये जातावणि ब्रह्मणष्टिलोपो न स्यात् । ब्रह्मणोऽपत्यं ब्राह्मणः । अपत्ये किम् । ब्राह्मी औषधिः ।

११६१ । **औक्षमनपत्ये** ।६।४।१७३। अणि टिलोपो निपात्यते । औक्षं पदम् । अनपत्ये किम् । उक्ष्णोऽपत्यम्,

११६२ । **षपूर्वहन्धृतराज्ञामणि** ।६।४।१३५। षपूर्वो योऽन् तस्य हनादेश्च भस्यातो लोपोऽणि । औक्ष्णः । ताक्ष्णः । भ्रौणघ्नः । धृतराज्ञोऽपत्यं धार्तराज्ञः । षपूर्वेति किम् । सामनः । अणि किम् । ताक्षण्यः ।

११६३ । **क्षत्राद्घः** ।४।१।१३८। क्षत्रियः । जाताविलेव । क्षात्रिरन्यः[2]

११६४ । **कुलात्खः** ।४।१।१३९। कुलीनः । तदन्तादपि, उत्तरसूत्रेऽपूर्वपदादिति लिङ्गात् । आढ्यकुलीनः ।

११६५ । **अपूर्वपदादन्यतरस्यां यड्ढकञौ** ।४।१।१४०। कुलादित्येव । पक्षे खः । कुल्यः-कौलेयकः-कुलीनः । पदग्रहणं किम् । बहुकुल्यः-बाहुकुलेयकः-बहुकुलीनः ।

११६६ । **महाकुलादञ्खञौ** ।४।१।१४१। अन्यतरस्यामित्यनुवर्तते । पक्षे खः । माहाकुलः-माहाकुलीनः-महाकुलीनः ।

११६७ । **दुष्कुलाड्ढक्** ।४।१।१४२। पूर्ववत्पक्षे खः । दौष्कुलेयः-दुष्कुलीनः ।

११६८ । **स्वसुश्छः** ।४।१।१४३। स्वस्रीयः ।

११६९ । **भ्रातुर्व्यच्च** ।४।१।१४४। चाच्छः । अणोऽपवादः । भ्रातृव्यः-भ्रात्रीयः ।

११७० । **व्यन्सपत्ने** ।४।१।१४५। भ्रातुर्व्यन् स्यादपत्ये, प्रकृतिप्रत्ययसमुदायेन शत्रौ वाच्ये । भ्रातृव्यः शत्रुः । 'पाप्मना भ्रातृव्येण' इति तूपचारात् ।

११७१ । **रेवत्यादिभ्यष्ठक्** ।४।१।१४६।

---

च पङ्कजादिवद्योगरूढ इति फलितोऽर्थः ॥ ११५७ **टिलोपो नेति** । 'नस्तद्धिते' इति प्राप्तष्टिलोपो नेत्यर्थः ॥ ११६० **ब्राह्मोजातौ** ॥—**योगविभागोऽत्रेति** । एकयोगत्वे त्वारम्भसामर्थ्यादनपत्ये जातौ 'ब्राह्मी' इत्यत्र प्राप्तटिलोपसिद्धावपि ब्राह्मण इति न सिध्येत् । 'अन्' इति प्रकृतिभावस्य 'न मपूर्वोऽपत्ये' इति निषेधाट्टिलोपस्य दुर्वारत्वात् । किंच अजातौ ब्राह्ममित्यादि न सिध्येत्, 'अन्' इति प्रकृतिभावस्य दुर्वारत्वादिति भावः ॥—**ब्राह्म इति** । इह 'अपत्ये' इति न संबध्यते । अन्यथा निपातनमिदं व्यर्थं स्यात्, 'न मपूर्व-' इति प्रकृतिभावनिषेधाट्टिलोपसिद्धेः-इत्याशयेनाह—**अनपत्येऽणीति** ॥—**ब्राह्ममिति** । 'ब्राह्मो मुहूर्तः, ब्राह्मः स्थालीपाकः' इत्याद्यप्युदाहरणम् ॥ नन्वेवमपि ब्राह्मणो न सिध्यति, 'न मपूर्वः' इति प्रकृतिभावनिषेधात् । अपत्येऽणि 'नस्तद्धिते' इति टिलोपप्रवृत्तेरत आह—**जाताविति** । इह मण्डूकप्लुत्या 'अपत्ये' इत्यनुवर्तते, 'न' इति च । तदेतदाह—**अपत्ये जातावित्यादिना** । अयमर्थः—'अपत्ये जातौ ब्राह्मणशब्दे टिलोपो न भवति' इति ॥ केचिदिह 'अजातौ' इति छित्वा 'जातौ न भवति' इति व्याचक्षते । तस्मिंस्तु व्याख्याने 'न' इति नानुवर्तनीयम् ॥ जातौ किम् ? ब्राह्मो नारदः ॥ ११६२ **ताक्ष्ण इति** । शिवादित्वात्, 'तस्येदम्' इति वाऽण् ॥—**ताक्षण्य इति** । कारिलक्षणो ण्यः ॥ ११६४ **कुलात्खः** । केवलात्कुलशब्दात् 'अपूर्वपदात्-' इत्यादिना विशेषविहिताभ्यामपि यड्ढकञ्भ्यां खो न बाध्यते, तद्विधावन्यतरस्यांग्रहणात्-इत्याशयेनाह—**कुलीन इति** ॥—**लिङ्गादिति** । अन्यथा 'ग्रहणवता-' इति तदन्तविधिप्रतिषेधादपूर्वपदग्रहणं व्यर्थं स्यादिति भावः ॥—**आढ्यकुलीन इति** । आढ्यश्चासौ कुलीनश्चेति कुलीनविशेषणत्वे कुलस्याढ्यत्वं न प्रतीयते । किं च ईकार उदात्त इति स्वरेऽपि विशेषोऽस्तीति भावः ॥ ११६५ **बहुकुल्य इति** । 'विभाषा सुपः-' इति बहुच् प्रत्ययः, न पदमिति अपूर्वपदत्वात्प्रत्ययत्रयं भवत्येति भावः ॥ ११७० **व्यन् स्यादिति** । भ्रातुरपत्यं यदि शत्रुः, तदा भ्रातृशब्दात् व्यन्नेव स्यात् । न तु व्यच्छौ इत्यर्थः ॥—**समुदायेनेति** । तद्घटितप्रत्ययेन शत्रुरूपेऽपत्ये वाच्य इत्यर्थः ॥ यत्तु वृत्तिकृतोक्तम्—'अपत्यार्थोऽत्र नास्त्येव' इति । तदुपेक्ष्यम्, भाष्यविरोधात्-इति मनसि निधायाह—**पाप्मनेति** । श्रुतिगतभ्रातृव्यशब्दस्य गतिं वदति—**उपचारादिति** । 'अस्त्री पङ्कं पुमान्पाप्मा पापं किल्बिषकल्मषम्' इत्यमरः । न हि पापं भ्रातुरपत्यं भवतीत्यतो भाक्त एवायं प्रयोग इति भावः ॥ ११७१ **रेवत्या**—। रेवती, अश्व-

---

१ **शूद्रादाविति**—तज्जातीयस्त्रियामित्यर्थः । २ **क्षत्रादिति**—अत्र 'घ' इति स्वरूपग्रहणम्, न तु तरप्तमपोः, व्याख्यानात् ।

११७२ । **ठस्येकः** ।७।३।५०। अङ्गात्परस्य ठस्येकादेशः स्यात् । रैवतिकः ।

११७३ । **गोत्रस्त्रियाः कुत्सने ण च** ।४।१।१४७। गोत्रं या स्त्री तद्वाचकाच्छब्दात् णठकौ स्तः कुत्सायाम् । सामर्थ्याद्यूनि । गार्ग्या अपत्यं गार्गः—गार्गिको वा जाल्मः । 'भस्याढे तद्धिते' इति पुंवद्भावाद्गार्ग्यशब्दाण्णठकौ, 'यस्य-' ३११ इति लोपः, 'आपत्यस्य–' १०८४ इति यलोपः ।

११७४ । **वृद्धाट्ठक् सौवीरेषु बहुलम्** ।४।१।१४८। सुवीरदेशोद्भवाः सौवीराः । वृद्धात्सौवीरगोत्राद्यूनि बहुलं ठक् स्यात् कुत्सायाम् । भागवित्तेः—भागवित्तिकः । पक्षे फक्, भागवित्तायनः ।

११७५ । **फेश्छ च** ।४।१।१४९। फिञन्तात्सौवीरगोत्रादपत्ये छः ठक् च कुत्सने गम्ये । यमुन्दस्यापत्यं यामुन्दायनिः, तिकादित्वात् फिञ्, तस्यापत्यं यामुन्दायनीयः—यामुन्दायनिकः । कुत्सने किम् । यामुन्दायनिः । औत्सर्गिकस्याणो 'ण्यक्षत्रिय–' १२७८ इति लुक् । सौवीरेति किम् । तैकायनिः ।

११७६ । **फाण्टाहृतिमिमताभ्यां णफिञौ** ।४।१।१५०। सौवीरेषु । नेह यथासंख्यम्, अल्पाच्तरस्य परनिपाताल्लिङ्गादिति वृत्तिकारः । भाष्ये तु 'यथासंख्यमेव' इति स्थितम् । फाण्टाहृतः—फाण्टाहृतायनिः । मैमतः—मैमतायनिः ।

११७७ । **कुर्वादिभ्यो ण्यः** ।४।१।१५१। अपत्ये । कौरव्या ब्राह्मणाः । वावदूक्याः । (ग) **सम्राजः क्षत्रिये** । साम्राज्यः । साम्राजोऽन्यः ।

११७८ । **सेनान्तलक्षणकारिभ्यश्च** ।४।१।१५२। एभ्यो ण्यः । 'एति संज्ञायाम्–' १०२५ इति सस्य षः । हारिषेण्यः । लाक्षण्यः । कारिः शिल्पी, तस्मात्—तान्तुवाय्यः । कौम्भकार्यः । नापित्यः ।

११७९ । **उदीचामिञ्** ।४।१।१५३। हारिषेणिः । लाक्षणिः । तान्तुवायिः । कौम्भकारिः । नापितात्तु परत्वात् फिञेव, नापितायनिः । ॐ **तक्ष्णोऽण उपसंख्यानम्** । ताक्ष्णः । पक्षे ताक्षण्यः ।

११८० । **तिकादिभ्यः फिञ्** ।४।१।१५४। तैकायनिः ।

११८१ । **कौसल्यकार्मार्याभ्यां च** ।४।१।१५५। अपत्ये फिञ् । इञोऽपवादः । **परमप्रकृतेरेवायमिष्यते** । प्रत्ययसंनियोगेन प्रकृतिरूपं निपात्यते । कोसलस्यापत्यं कौसल्यायनिः । कर्मारस्यापत्यं कार्मार्यायणिः । ॐ **छागवृषयोरपि** । छाग्यायनिः । वार्ष्यायणिः ।

११८२ । **अणो द्व्यचः** ।४।१।१५६। अपत्ये फिञ् ।

---

पाली, मणिपाली, द्वारपाली, इत्यादि ॥ **११७२ ठस्येकः** । 'अङ्गस्य' इत्यनुवर्तनादाह—**अङ्गात्परस्येति** । 'अङ्गात्' इति ठकारविशेषणात्–ठचष्ठकारस्य न भवति । कर्मठः ॥ **११७३ गोत्रस्त्रियाः—**। णित्त्वं तु 'ग्लुचुकायन्या अपत्यं ग्लौचुकायनो जाल्मः' इत्यत्र फिञन्ताण्णे वृद्ध्यर्थमिति बोध्यम् ॥—**सामर्थ्याद्यूनीति** । 'गोत्रादपरो गोत्रप्रत्ययो न' इत्युक्तत्वादिति भावः ॥—**गार्ग्या अपत्यमिति** । पितुरसंविज्ञाने मात्रा व्यपदेशात् कुत्सा ॥ गोत्रेति किम् ? कारिकेयो जाल्मः ॥ स्त्रियाः किम् ? औपगवस्यापत्यम्–औपगविर्जाल्मः ॥ कुत्सनेति किम् ? गार्गेयो माणवकः ॥ **११७६ फाण्टाहृति—**। 'कुत्सने' इति निवृत्तम् । वृत्तिमते णित्त्वस्य फलमस्तीति ध्वनयन्नुदाहरति—**मैमत इति** । न च भाष्यमतेऽपि 'फाण्टाहृताभार्यः' इत्यत्र 'वृद्धिनिमित्तस्य–' इति पुंवद्भावनिवृत्तिर्णित्त्वफलमस्तीति वाच्यम् । 'अस्त्रियाम्' इति युवसंज्ञानिषेधाद्गोत्रसंज्ञासद्भावात् 'एको गोत्रे' इति नियमादिञन्तात्फाण्टाहृतिशब्दादन्यस्यापत्यप्रत्ययस्याभावात्फाण्टाहृताशब्दस्यैवासत्त्वादिति भावः ॥ **११७७ कुर्वादिभ्यो—**। 'सौवीरेषु' इत्यपि निवृत्तम् ॥—**कौरव्या ब्राह्मणा इति** । यत्तु 'कुरुनादिभ्यो ण्यः' इति वक्ष्यति, तस्य [illegible] लुकि 'कुरवः क्षत्रियाः' इति भवति, न तु 'कौरव्याः' इति भावः ॥—**वावदूक्या इति** । वदेर्यङन्तादूकप्रत्ययः । स चात्रैव गणे निपातनादित्याहुः । कुरु, गर्ग, वावदूक ॥—**सम्राजः क्षत्रिये इति** । सम्राट्शब्दात् ण्य इत्यर्थः ॥—**वामरथस्य कण्वादिवत्स्वरवर्जम्** । यञन्तस्य काण्व्यशब्दस्य यत्कार्यं तत् ण्यप्रत्ययान्तस्य वामरथ्यशब्दस्य स्यात्, आद्युदात्तं विनेत्यर्थः । बहुले 'यञञोश्च' इति लुक्–वामरथाः । वामरथाश्छात्राः–'कण्वादिभ्यो गोत्रे' इति छापवादोऽण् । वामरथी, वामरथ्यायनी स्त्री–'यञश्च', 'प्राचां ष्फ तद्धितः' इति ङीष्ष्फौ । वामरथानि संघाङ्कलक्षणानि–'संघाङ्कलक्षणेषु' इति छापवादोऽण् । सत्यंकार, वलभीकार, बुद्धिकार, इत्यादि ॥ **११७८ हारिषेण्य इति** । 'एतिसंज्ञायाम्–' इति षत्वस्यासिद्धत्वात्सेनान्तोऽयम् ॥ **११७९ ताक्ष्ण इति** । उदीचामिञोपवादोऽयमण् । अस्मादुपसंख्यानाच्छिवादिषु तक्षन्शब्दपाठोऽनार्ष इति गम्यते ॥ वृत्तिकारस्तु—तक्षन्शब्दं शिवादिषु पठित्वा 'कारिलक्षणमुदीचामिञमयमण् बाधते, णस्य तु बाधो नेष्यते' इत्याह । तदनुरोधेनास्माभिरपि तत्र तथैव व्याख्यातम् । फले विशेषाभावात् ॥ **११८१ कौसल्य—**॥—**परमप्रकृतेरेवायमिति** । यदि तु 'वृद्धेत्कोसला–' इति ञ्यङन्तात्कोसलशब्दात् कारिलक्षणण्यन्तात्कर्मारशब्दाच्चायं विधिः स्यात्, तदा यून्येव प्रसज्येतेति भावः ॥—**छागेति** । दगुशब्दस्याप्युपलक्षणमेतत् । फिञ्प्रकरणे 'दगुकोसलकर्मारच्छागवृषाणां युट्चादिष्टस्य' इति वार्तिकात् । आदिष्टस्य आयन्नादेशस्येत्यर्थः । अन्यथा प्रतिपदोक्ते युटि कृते प्रत्ययादित्वाभावात् कौसल्यायनिरित्यादौ फस्यायन्नादेशो न स्यात्, युकि कृते तु 'दागव्यायनिः

इञोऽपवादः । कार्त्रायणिः । अण इति किम् । दाक्षायणः । द्व्यचः किम् । औपगविः । ॐ **त्यदादीनां फिञ् वा वाच्यः** । त्यादायनिः–त्यादः ।

११८३ । **उदीचां वृद्धादगोत्रात्** ।४।१।१५७। आम्रगुप्तायनिः । प्राचां तु–आम्रगुप्तिः । वृद्धात्किम् । दाक्षिः । अगोत्रात्किम् । औपगविः ।

११८४ । **वाकिनादीनां कुक् च** ।४।१।१५८। अपत्ये फिञ्वा स्यात् । वाकिनस्यापत्यं वाकिनकायनिः–वाकिनिः ।

११८५ । **पुत्रान्तादन्यतरस्याम्** ।४।१।१५९। अस्माद्वा फिञ् सिद्धस्तस्मिन्परे पुत्रान्तस्य वा कुक् विधीयते । गार्गीपुत्रकायणिः–गार्गीपुत्रायणिः–गार्गीपुत्रिः ।

११८६ । **प्राचामवृद्धात्फिन्बहुलम्** ।४।१।१६०। ग्लुचुकायनिः ।

११८७ । **मनोर्जातावञ्यतौ षुक् च** ।४।१।१६१। समुदायार्थो जातिः । मानुषः–मनुष्यः ।

११८८ । **जनपदशब्दात्क्षत्रियादञ्** ।४।१।१६८। जनपदक्षत्रिययोर्वाचकादञ् स्यादपत्ये । 'दाण्डिनायन–' ११४७ इति सूत्रे निपातनाट्टिलोपः । ऐक्ष्वाकः । ऐक्ष्वाकौ ।

**क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्**, तद्राजमाचक्षाणस्तद्राज इत्यन्वर्थसंज्ञासामर्थ्यात् । पञ्चालानां राजा पाञ्चालः । ॐ **पूरोरण् वक्तव्यः** । पौरवः । ॐ **पाण्डोर्ड्यण्** । पाण्ड्यः ।

११८९ । **साल्वेयगान्धारिभ्यां च** ।४।१।१६९। आभ्यामपत्येऽञ् । 'वृद्धेत्–' ११९१ इति ञ्यङोऽपवादः । साल्वेयः । गान्धारः । तस्य राजन्यप्येवम् ।

११९० । **द्व्यञ्मगधकलिङ्गसूरमसादण्** । ४ । १ । १७० । अञोऽपवादः । द्व्यच्–आङ्गः, वाङ्गः, सौह्मः । मागधः । कालिङ्गः । सौरमसः । तस्य राजन्यप्येवम् ।

११९१ । **वृद्धेत्कोसलाजादाञ्ञ्यङ्** ।४।१।१७१। वृद्धात्–आम्बष्ठ्यः, सौवीर्यः । इत्–आवन्त्यः । कौसल्यः । अजादस्यापत्यं आजाद्यः ।

११९२ । **कुरुनादिभ्यो ण्यः** ।४।१।१७२। कौरव्यः ।

---

इत्यत्र ओर्गुणः, अन्यत्राल्लोपश्च न स्यादिति भावः ॥ **११८२ कार्त्रायणिरिति** । कर्तुरपत्यं कार्त्रः, तस्यापत्यं तु कार्त्रायणिः ॥ अत्र व्याचक्षते—कर्तृशब्दः कुर्वादिषु पठ्यते । तथा च 'कार्त्र्यः' इत्येव वर्धमानेनोदाहृतम् । तस्मादिह भर्तृहर्त्राद्युदाहार्यमिति ॥ **११८३ दाक्षिरिति** । 'वा नामधेयस्य' इति वृद्धसंज्ञाभावपक्षे प्रत्युदाहरणमिदम् । पक्षान्तरे तु फिञ् भवत्येव । 'दाक्षायण्योऽश्विनीत्यादि ताराः' इत्यमरः ॥ **११८४ वाकिनादीनाम्—**। यदिह वृद्धमगोत्रं शब्दरूपं, तत्रागमार्थमेवेदं वचनम्, अन्येषां तूभयार्थम् ॥ 'उदीचाम्–' इत्यनुवर्तनाद्विकल्पः फलित इत्याह—**फिञ्वा स्यादिति** ॥—**वाकिनकायनिरिति** । वचनं वाकः, सोऽस्यास्तीति वाकिनः । अत एव निपातनादिनन् । अगारे एधत इति गारेधः । पृषोदरादित्वादादिलोपः, शकन्ध्वादित्वात्पररूपम् । गारेधकायनिः ॥ चर्मिवर्म्यादौ तूभयार्थम् । चर्मवर्मशब्दाभ्यां व्रीह्यादित्वादिनिः । **'चर्मिवर्मिणोर्नलोपश्च'** इति गणसूत्रम् । चार्मिकायणिः । वार्मिकायणिः । कुकि कृते नकारस्यानन्त्यत्वान्नलोपाप्राप्तौ वचनम् । न च कुट् परादिरस्त्विति वाच्यम् । फस्यानादित्वादायनादेशाभावप्रसङ्गात् ॥—**वाकिनिरिति** । 'अत इञ्' । फिञभावे तत्संनियोगशिष्टः कुगत्र न भवति । एवं गारेधिः, चार्मिण इत्याद्यूह्यम् ॥ **११८५ पुत्रान्तात्—**। 'उदीचां वृद्धात्–' इत्यनुवर्तेत इत्याशयेनाह—**वा फिञ् सिद्ध इति** । तेनैव सूत्रेण फिञि सिद्धे अनेन कुगेव वा विधीयत इति भावः ॥ **११८६ प्राचामवृद्धात्—**। प्राचांग्रहणं पूजार्थम् ॥ अवृद्धादिति किम् ? राजदन्तिः । बहुलग्रहणान्नेह–दाक्षिः ॥ ११८७ **मानुषः । मनुष्य इति** । जातिशब्दावेतौ ॥—**'अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः । नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः'** ॥—णत्वविधानार्थमिदम्, अणः सिद्धत्वात् । अनधीतवेदत्वान्मूढत्वम्, विहिताननुष्ठानाच्च कुत्सितत्वम् ॥ इदं वचनं 'ब्राह्मणमाणव–' इति णत्वनिपातनाल्लब्धमित्याहुः ॥ **११८८ जनपद—**॥—**जनपदक्षत्रियेति** । जनपदवाची सन् यः क्षत्रियवाचीत्यर्थः ॥ यद्यपि पञ्चालादयो जनपदे बहुवचनान्ताः, क्षत्रिये त्वेकवचनान्ताः, तथापि प्रातिपदिकस्योभयवाचित्वमक्षतमेवेति बोध्यम् ॥ जनपदशब्दात्किम् ? द्रुह्योरपत्यं द्रौह्यवः । केवलक्षत्रियवाच्ययम् ॥ क्षत्रियादिति किम् ? ब्राह्मणस्य पञ्चालस्यापत्यं पाञ्चालिरिति वृत्तिकारादयः ॥ बाह्वादिष्वस्य पाठादिदं प्रत्युदाहरणं चिन्त्यमित्यन्ये ॥—**क्षत्रियसमानशब्दादिति** । समानः शब्दो यस्य जनपदस्य सोऽयं समानशब्दो जनपदः । क्षत्रियेण समानशब्दः–क्षत्रियसमानशब्दः, तस्मात् 'तस्य' इति षष्ठीसमर्थाद्राजनि वाच्ये अपत्यवत्प्रत्ययो भवतीत्यर्थः ॥—**पञ्चालानां राजेति** । इह 'अवृद्धादपि बहुवचनविषयात्' इति प्राप्तो वुञ् बाध्यते ॥ ॐ **पूरोरिति** । पूरुशब्दो न जनपदवाचीति प्राग्दीव्यतीये अणि सिद्धे तद्राजसंज्ञार्थं वचनम् । जनपदवाचित्वे तु 'द्व्यञ्मगध–' इत्येव सिद्धम् ॥ ॐ **पाण्डोर्ड्यणिति** । णित्करणं तु 'पाण्ड्याभार्यः' इत्यत्र 'वृद्धिनिमित्तस्य–' इति पुंवद्भावप्रतिषेधार्थम् ॥ युधिष्ठिरपितृवाचिनो गुणवाचिनश्च पाण्डोर्नेह ग्रहणं, 'जनपदशब्दात्–' इत्युक्ते तदधिपतिवाचिन एवोपस्थानात् ॥ **११९१ वृद्धेत्—**। तपरकरणं किम् ? कौमारः । कुमारीशब्दो हि जनपदक्षत्रियवचनः ॥ **११९२ कुरुना—**। नकार आदिर्येषां ते नादयः ।

नैषध्यः । 'स नैषधस्यार्थपतेः' इत्यादौ तु शैषिकोऽण् ।

११९३ । **साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ्** ।४।१।१७३। साल्वो जनपदस्तदवयवा उदुम्बरादयः, तेभ्यः प्रत्यग्रथादिभ्यस्त्रिभ्यश्च इञ् । अञोऽपवादः । औदुम्बरिः । प्रात्यग्रथिः । कालकूटिः । आश्मकिः । राजन्यप्येवम् ।

११९४ । **ते तद्राजाः** ।४।१।१७४। अञादय एतत्संज्ञाः स्युः ।

११९५ । **तद्राजस्य बहुषु तेनैवास्त्रियाम्** ।२।४।६२। बहुष्वर्थेषु तद्राजस्य लुक् स्यात्तदर्थकृतबहुत्वे, न तु स्त्रियाम् । इक्ष्वाकवः । पञ्चालाः । इत्यादि । कथं तर्हि 'कौरव्याः पशवः' इति, 'तस्यामेव रघोः पाण्ड्याः' इति च । कौरव्ये पाण्ड्ये च साधव इति समाधेयम् । रघूणामन्वयं वक्ष्ये, निरुध्यमाना यदुभिः कथंचिदिति तु रघुयदुशब्दयोस्तदपत्ये लक्षणया ।

११९६ । **कम्बोजाल्लुक्** ।४।१।१७५। अस्मात्तद्राजस्य लुक् । कम्बोजः । कम्बोजौ । ॐ **कम्बोजादिभ्य इति वक्तव्यम्** । चोलः । शकः, द्व्यञ्लक्षणस्याणो लुक् । केरलः, यवनः, अञो लुक् । कम्बोजाः समरे इति पाठः सुगमः । दीर्घादिपाठे तु कम्बोजोऽभिजनो येषामित्यर्थः, 'सिन्धुतक्षशिलादिभ्योऽणञौ' १४७५ इत्यण् ।

११९७ । **स्त्रियामवन्तिकुन्तिकुरुभ्यश्च** ।४।१।१७६। तद्राजस्य लुक् स्यात् । अवन्ती । कुन्ती । कुरूः ।

११९८ । **अतश्च** ।४।१।१७७। तद्राजस्याकारस्य स्त्रियां लुक् स्यात् । शूरसेनी । मद्री । कथं 'माद्रीसुतौ इति, ह्रस्व एव पाठ इति हरदत्तः । भर्गादित्वं वा कल्प्यम् ।

११९९ । **न प्राच्यभर्गादियौधेयादिभ्यः** ।४।१।१७८। एभ्यस्तद्राजस्य न लुक् । पाञ्चाली, वैदर्भी, आङ्गी, वाङ्गी, मागधी, एते प्राच्याः । भार्गी, कारूशी, कैकेयी, केकयीत्यत्र तु जन्यजनकभावलक्षणे पुंयोगे ङीष् । युधा, शुक्रा, आभ्यां 'द्व्यचः' ११२६ इति ढक्, ततः स्वार्थे 'पर्श्वादियौधेयादिभ्योऽणञौ' २०७० इत्यञ्, 'शार्ङ्गरवाद्यञः–' ५२८ इति ङीन् । 'अतश्च' ११९८ इति लुकि तु ढगन्तत्वात् ङीप्युदात्तनिवृत्तिस्वरः कुरुशब्दाद् द्व्यञ्लक्षणे अणि प्राप्ते, नादिभ्यस्त्वञि प्राप्ते च वचनम् ॥ ११९३ **उदुम्बरादय इति** । 'उदुम्बरास्तिलखला मद्रकारा युगंधराः । भूलिङ्गाः शरदण्डाश्च साल्वावयवसंज्ञिकाः' इति वृत्तिः ॥—**औदुम्बरिरिति** । तैलखलिः, माद्रकारिः, यौगन्धरिः, इत्याद्युदाहरणान्युदाहर्तव्यानि ॥ ११९४ **ते तद्राजाः** ॥—**अञादय इति** । ततः प्राचीनास्तु तच्छब्देन न परामृश्यन्ते, गोत्रयुवसंज्ञाकाण्डेन विच्छेदात् । एतदर्थमेवेदं तत्काण्डं मध्ये कृतमाचार्येणेत्याहुः ॥ वस्तुतस्तु 'तद्राज' इत्यधिकृत्य 'जनपदशब्दात्क्षत्रियादञ्' इत्यादिसूत्राणामारम्भे गोत्रयुवसंज्ञाकाण्डस्य मध्ये पाठाभावेऽपि न क्षतिरित्यन्ये ॥ ११९५ **तद्राजस्य**—॥—**तदर्थेति** । तद्राजप्रत्ययार्थेन कृते इत्यर्थः ॥ तेनैवेति किम् ? प्रियपाञ्चालाः ॥—**साधव इतीति** । तथा च 'तत्र साधुः' इति यत्प्रत्ययस्य तद्राजत्वाभावाल्लुक् नेति भावः ॥ रघुयदुशब्दयोर्जनपदवाचित्वाभावादाभ्यां परस्य तद्राजसंज्ञा नेति लुकोऽप्रवृत्त्या 'राघवाणां' 'यादवैः' इत्येव भवितव्यमित्याशङ्क्याह—**रघुयदुशब्दयोरिति** ॥—**लक्षणयेति** । ततश्चोक्तार्थत्वादपत्यप्रत्ययो नात्रोत्पन्न इति भावः ॥ ११९६ **कम्बोजाल्लुक्** । 'तद्राजस्य बहुषु' इति प्रकरण एवेदं न कृतं, द्व्येकार्थवाचकस्याञो लुगभावप्रसंगात् ॥ यद्यपि लुगधिकारे पुनर्लुग्विधानसामर्थ्यात् द्व्येकयोरप्यञो लुग्भविष्यत्येवेति वक्तुं शक्यम् । तथाप्यतद्राजस्यापि लुक्प्रसङ्गशङ्कापत्तेर्लाघवाभावाच्च तत्प्रकरणे न कृतमित्याहुः ॥ न चात्र आपत्ये लक्षणयैव 'कम्बोजः कम्बोजौ' इत्यादिरूपसिद्धौ किमनेन सूत्रेणेति शङ्क्यम् । काम्बोज इत्यादिपाक्षिकानिष्टवारणाय सूत्रस्यावश्यकत्वात् ॥—**सिन्धुतक्षेति** । कम्बोजशब्दस्य सिन्ध्वादित्वादण् । तस्य तु तद्राजत्वाभावाल्लुङ्नेति भावः ॥ ११९७ **अवन्ती । कुन्तीति** । 'वृद्धेत्–' इति ञ्यङो लुकि 'इतो मनुष्यजातेः' इति ङीष् ॥—**कुरूरिति** । ण्यस्य लुक्, 'ऊङुतः' इत्यूङ् ॥ ११९८ **अतश्च** । इह तद्राजेन अकारो विशेष्यते, न त्वकारेण तद्राजः । विशेषणेन तदन्तविधौ ञ्यङ्ण्यादीनामप्यदन्ततद्राजत्वादनेनैव लुकि सिद्धे अवन्तिकुन्तिकुरुभ्यो लुग्विधायकस्य 'स्त्रियामवन्ति–' इति सूत्रस्य वैयर्थ्यापत्तेः । न चेष्टापत्तिः । कौसल्येति रूपासिद्धिप्रसङ्गात्, अतो व्याचष्टे—**तद्राजस्याकारस्येति** । सूत्रे तपरकरणं विस्पष्टार्थमिति भावः ॥—**शूरसेनीति** । अञो लुकि 'जातेः' इति ङीष् । न त्वञन्तलक्षणो ङीन्, 'अञो योऽकारस्तदन्तात्' इति व्याख्यानात् ॥ ११९९ **कारूशीति** । कृञ उः करुः, तं वष्टि–करूशः । 'वश कान्तौ' मूलविभुजादित्वात्कः । 'ग्रहिज्या–' इति संप्रसारणम् । तस्यापत्यं राजा वा–कारूशः । स्त्रियां कारूशी । एतेन मूर्धन्योष्मोपधः पाठो निरस्तः ॥ यौधेयादिभ्यो लुक्प्रतिषेधमुदाहर्तुमाह—**युधा । शुक्रेत्यादि** ॥—**अतश्चेति लुकि त्विति** । 'ञ्यादयस्तद्राजाः' इति वक्ष्यमाणत्वादञोऽस्य तद्राजत्वमस्तीति भावः ॥ योपधत्वात् ङीषः प्राप्तिर्नेत्याशयेनाह—**ङीपीति** ॥—**उदात्तनिवृत्तिस्वर इति** । 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्यनेन ङीबुदात्तः स्यादित्यर्थः । सिद्धान्ते त्वञो लुगभावात् ङीन्याद्युदात्तत्वमिति ज्ञेयम् ॥

स्यात्-यौधेयी, शौक्रेयी ।

१२०० । **अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे** ।४।१।७८। त्र्यादीनामन्त्यमुत्तमं, तस्य समीपमुपोत्तमम् । गोत्रे यावणिञौ विहितावनार्षौ तदन्तयोर्गुरूपोत्तमयोः प्रातिपदिकयोः स्त्रियां ष्यङादेशः स्यात् । (प) **निर्दिश्यमानस्यादेशा भवन्ति**, इत्यणिञोरेव । षङावितौ । 'यङश्चाप्' ५२९, कुमुदगन्धेरपत्यं स्त्री कौमुदगन्ध्या । वाराह्या । अनार्षयोः किम् । वासिष्ठी । वैश्वामित्री । गुरूपोत्तमयोः किम् । औपगवी, जातिलक्षणो ङीष् । गोत्रे किम् । अहिच्छत्रे जाता आहिच्छत्री ।

१२०१ । **गोत्रावयवात्** ।४।१।७९। गोत्रावयवा गोत्राभिमताः कुलाख्यास्ततो गोत्रे विहितयोरणिञोः स्त्रियां यङादेशः स्यात् । अगुरूपोत्तमार्थ आरम्भः । पौणिक्या । भौणिक्या ।

१२०२ । **क्रौड्यादिभ्यश्च** ।४।१।८०। स्त्रियां ष्यङ् प्रत्ययः स्यात् । अगुरूपोत्तमार्थोऽनणिञन्तार्थश्चारम्भः । क्रौड्या । व्याड्या । (ग) **सूत युवत्याम्** । सूत्या । (ग) **भोज क्षत्रिये** । भोज्या ।

१२०३ । **दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्डेविद्धिभ्योऽन्यतरस्याम्** ।४।१।८१। एभ्यश्चतुर्भ्यं ष्यङ् वा । अगोत्रार्थमिदम्, गोत्रेऽपि परत्वात्प्रवर्तते । पक्षे 'इतो मनु-

---

**स्यादेतत्**—'अतश्च-' इति सूत्रेण विधीयमानो लुक् चातुरर्थिकानामेव तद्राजानां भवतु, संनिधानात्, न तु 'ञ्यादयस्तद्राजाः' इति पाञ्चमिकानामपि तद्राजानामिति किमनेन यौधेयादिग्रहणेन । सत्यम् । 'व्याप्तिन्यायेन पाञ्चमिकस्यापीह ग्रहणम्' इति ज्ञापयितुं यौधेयादिग्रहणम् । तेन पार्श्वायणः स्त्रियां लुक् सिध्यति । तथा हि—पर्शुः क्षत्रियो जनपदेन समानशब्दः । तस्यापत्यं स्त्री 'द्व्यञ्मगध-' इत्यण्, तस्य 'अतश्च' इति लुक् । पुनः पर्श्वादिलक्षणः स्वार्थिकोऽण् । तस्यापि लुकि 'ऊङुतः' पर्शूः ॥ एवं रक्षसः क्षत्रियस्यापत्यं स्त्री रक्षाः । पूर्ववदण्द्वयस्यापि लुकि 'अत्वसन्तस्य-' इति दीर्घः ॥ उक्तं च वार्तिककृता—**'पर्श्वादिभ्यो लुग्वक्तव्यः । यौधेयादिप्रतिषेधो वा ज्ञापकः पर्श्वादिलुकः'** इति ॥—**यौधेयीत्यादि** । शुधायाः शुक्राया अपत्यं स्त्रीति विग्रहः ॥ **१२०० अणिञोः**—।—**उत्तममिति** । अव्युत्पन्नं प्रातिपदिकमिदम् । न तूच्छब्दात्तमप्, तेन 'किमेत्तिङव्ययघात्-' इत्याम् न शङ्क्यः ॥—**गोत्रे याविति** । 'अपत्याधिकारादन्यत्र लौकिकं गोत्रम्' इति नेह शास्त्रीयं गृह्यते । तथा च 'अनार्षदयो इति पर्युदासादेव सिद्धे गोत्रग्रहणमिह त्यक्तुं शक्यम् । न चात्र गोत्रग्रहणसामर्थ्यात् शास्त्रीयमेव गोत्रं गृह्यत इति वाच्यम् । दैवदत्त्या याज्ञदत्त्येत्यादीनामनन्तरापत्येऽपीष्यमाणत्वात् ॥ अत एवानुपदं वक्ष्यति 'कुमुदगन्धेरपत्यं स्त्री कौमुदगन्ध्या' इति ॥ इदं च कौस्तुभानुसारि व्याख्यानमत्रत्यमूलानुगुणमपि 'दैवयज्ञि'सूत्रस्थेन 'अगोत्रार्थमिदम्' इत्यादिमूलग्रन्थेन सह विरुध्यत इति तत्रैव स्फुटीभविष्यति ॥ यद्यपि स्त्रीप्रत्ययाः प्रकृताः, तथापि 'पत्युर्नो यज्ञसंयोगे' इति नकारस्येव ष्यङः आदेशत्वमेवोचितम्, 'अणिञोः-' इति षष्ठीस्वरसादित्यभिप्रेत्याह—**ष्यङादेशः स्यादिति** । ष्यङः प्रत्ययत्वेऽपि लक्ष्यसिद्धिरप्रत्यूहेति मनोरमायां स्थितम् ॥ नन्वयं 'ङिच्च' इत्यन्तादेशं बाधित्वा परत्वात्सर्वादेशः स्यात् । 'ङिच्च' इत्यस्यानन्यार्थङित्त्वेष्वनङादिषु चरितार्थत्वात् । ष्यङोऽनुबन्धस्य 'यङश्चाप्' इति विशेषणार्थतया सप्रयोजनत्वादित्याशङ्क्याह—**निर्दिश्यमानस्येति** ॥—**षङावितौविति** । अनुबन्धद्वयकरणं ञ्यङ इव ष्यङोऽपि 'यङश्चाप्' इत्यत्र सामान्यग्रहणार्थम् ॥ न च 'ष्यङः संप्रसारणम्' इत्यत्र विशेषणार्थं तयोरुपयोगोऽस्तु । अन्यथा पाश्यापुत्रः पाश्यापतिरित्यत्र 'पाशादिभ्यो यः' इति यप्रत्ययेऽपि संप्रसारणप्रसङ्ग इति वाच्यम् । 'यङः संप्रसारणम्' इत्येकानुबन्धेनापि तद्वारणात् ॥ लोल्यापतिरित्यत्र ल्यकारप्रत्ययेन व्यवधानात्संप्रसारणाभावः । कौमुदगन्धीपुत्र इत्यत्र त्वेकादेशस्य पूर्वान्तत्वेन ग्रहणान्नास्ति व्यवधानमिति संप्रसारणं सिध्यति ॥—**कौमुदगन्ध्येति** । अणः ष्यङ् ॥—**वाराह्येति** । इञः ष्यङ् ॥ अणिञोः किम् ? ऋतभागस्यापत्यम्—आर्तभागी । बिदादित्वादञ् 'शार्ङ्गरवाद्यञः' इति ङीन् ॥ 'टिड्ढा-' इत्यादिना ङीबिति तु वृत्तिकारः ॥ 'अणिञोः' इत्यत्र तु लौकिकं गोत्रं गृह्यते । 'गोत्रं च चरणैः-' इत्यत्र तु पारिभाषिकमेव गृह्यते । तेन जातित्वाभावान्ङीनः प्राप्तिर्नास्तीति स्थितस्य गतिमाहुः ॥ **१२०१ गोत्रावयवात्** । अवयवशब्दोऽप्रधानवाची, अवयवश्चासौ गोत्रं चेति कर्मधारयः, निपातनाद्गोत्रशब्दस्य पूर्वनिपातः ॥—**गोत्राभिमता इति** । गोत्रमित्येवमभिमताः । गोत्रवाचित्वेन देशविशेषे प्रसिद्धाः, न तु प्रवराध्याये पठिता इत्यर्थः ॥ प्रवराध्यायेऽपाठाच्चाप्राधान्यम् ॥—**कुलाख्या इति** । कुलमाख्यायते यैरिति कुलाख्याः पुणिकभुणिकमुखरप्रभृतयः । तैर्हि कुलमाख्यायते 'पुणिका वयं गोत्रेण' 'भुणिका वयं गोत्रेण' इति ॥—**तत इति** । गोत्रावयवादित्यर्थः ॥ **१२०२ क्रौड्यादिभ्यश्च** । पञ्चमीनिर्देशात्प्रत्ययत्वमेवेहाश्रीयत इत्याह—**ष्यङ् प्रत्यय इति** । क्रौडि, व्याडि, आपिशलि, गौकक्ष्य, इत्यादि । गौकक्ष्यशब्दो गर्गादियञन्तस्तदर्थमाह—**अनणिञन्तार्थश्चेति** ॥ (ग) **सूतेति**-गणसूत्रम् । सूतशब्दः ष्यङं लभते युवत्यां वाच्यायामित्यर्थः ॥—**सूत्येति** । ष्यङि 'यङश्चाप्' । अन्यत्र तु क्रियाशब्दाट्टाप् । सूतजातिवाचिनस्तु ङीष् । सूती ॥ (ग) **भोजेति** । इदमपि गणसूत्रम् । जातिलक्षणङीषोऽपवादः ष्यङ्, क्रियाशब्दात्तु टाबेव । भोजयतीति भोज्या ॥ **१२०३ दैवयज्ञि**—॥-**चतुर्भ्य इति** । इञन्तेभ्य इति शेषः ॥ देवा यज्ञाः=यष्टव्या यस्य स देवयज्ञः । शुचिर्वृक्षो

ष्य-' ५२१ इति ङीष् । दैवयज्ञ्या-दैवयज्ञी-इत्यादि ॥

॥ इत्यपत्याधिकारः ॥

---

## अथ तद्धितेषु रक्ताद्यर्थकाः ।

१२०४ । **तेन रक्तं रागात्** ।४।२।१। रज्यतेऽनेनेति रागः । कषायेण रक्तं वस्त्रं काषायम् । माञ्जिष्ठम् । रागात्किम् । देवदत्तेन रक्तं वस्त्रम् ।

१२०५ । **लाक्षारोचनाट्ठक्** ।४।२।२। लाक्षिकः । रौचनिकः । ॐ **शकलकर्दमाभ्यामुपसंख्यानम्** । शाकलिकः । कार्दमिकः । 'आभ्यामणपि' इति वृत्तिकारः । शाकलः । कार्दमः । ॐ **नील्या अन्** । नील्या रक्तं नीलम् । ॐ **पीतात्कन्** । पीतकम् । ॐ **हरिद्रामहारजनाभ्यामञ्** । हारिद्रम् । माहारजनम् ।

१२०६ । **नक्षत्रेण युक्तः कालः** ।४।२।३। पुष्येण युक्तं-पौषम्-अहः । पौषी रात्रिः ।

१२०७ । **लुबविशेषे** ।४।२।४। पूर्वेण विहितस्य लुप्स्यात् षष्टिदण्डात्मकस्य कालस्यावान्तरविशेषश्चेन्न गम्यते । अद्य पुष्यः । कथं तर्हि 'पुष्ययुक्ता पौर्णमासी पौषी' इति ? 'विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः' १२२७ इति निर्देशेन पौर्णमास्यामयं लुब् नेति ज्ञापितत्वात् । श्रवणशब्दात्तु अत एव लुप् युक्तवद्भावाभावश्च । अबाधकान्यपि निपातनानि, श्रावणी ।

१२०८ । **संज्ञायां श्रवणाश्वत्थाभ्याम्** ।४।२।५। विशेषार्थोऽयमारम्भः । श्रवणा रात्रिः । अश्वत्थो मुहूर्तः । संज्ञायां किम् । श्रावणी । आश्वत्थी ।

१२०९ । **द्वन्द्वाच्छः** ।४।२।६। नक्षत्रद्वन्द्वाद्युक्ते काले छः स्यात् विशेषे सत्यसति च । तिष्यपुनर्वसवीयम्-अहः । राधानुराधीया रात्रिः ।

१२१० । **दृष्टं साम** ।४।२।७। तेनेत्येव । वसिष्ठेन दृष्टं वासिष्ठं साम । ॐ **अस्मिन्नर्थेऽण् डिद्वा वक्तव्यः** । उशनसा दृष्टम्-औशनम्-औशनसम् ।

१२११ । **कलेर्ढक्** ।४।२।८। कलिना दृष्टं कालेयं साम ।

---

यस्य-शुचिवृक्षः । सत्यमुग्रं यस्य-सत्यमुग्रः । निपातनाद्विशेष्यस्य पूर्वनिपातः, मुमागमश्च । काण्डेन विद्धः-काण्डेविद्धः । 'कर्तृकरणे कृता-' इति समासः, निपातनात्काण्डशब्दस्य एकारः । पाठान्तरे कण्ठे विद्धमस्य, कण्ठे वा विद्धः-कण्ठेविद्धः । 'अमूर्धमस्तकात्' इत्यलुक् । एभ्यः सर्वेभ्योऽपत्ये 'अत इञ्' ॥—**गोत्रेऽपि परत्वादिति** । तथा चोभयत्र विभाषेति भावः ॥ अत्रेदमवधेयम्—'अणिञोः-' इति सूत्रे यदि शास्त्रीयं गोत्रं गृह्यते, तदा 'अगोत्रार्थमिदम्' इत्यादिग्रन्थः स्वरसतः संगच्छते । यदि तु लौकिकं गोत्रमेव गृह्यते, तदा 'अणिञोः-' इति नित्ये प्राप्ते विकल्पार्थमिदमित्येव व्याख्यातुमुचितमिति ॥ **इत्यपत्याधिकारः** ॥

१२०४ **तेन रक्तम्**—। तृतीयान्तात्समर्थाद्यथाविहितं प्रत्ययाः स्युः ॥—**रज्यतेऽनेनेतीति** । बाहुलकात्करणे घञ् ॥—**राग इति** । रञ्जकद्रव्यमित्यर्थः । शुक्लस्य वर्णान्तरापादनमिह रञ्जेरर्थः ॥ १२०५ **लाक्षारोचनात्**—। वृत्तिकृता तु वार्तिकस्थौ शकलकर्दमौ सूत्रे प्रक्षिप्तौ । 'शकलं त्वचि खण्डे च रागवस्तुनि वल्कले' इति विश्वः ॥—**वृत्तिकार इति** । भाष्ये तु नैतद्दृष्टमिति भावः ॥ ॐ **नील्येति** । नीली ओषधिविशेषः । अणपवादोऽयम् ॥ १२०६ **नक्षत्रेण**—। नक्षत्रवाचकाः शब्दा वृत्तिविषये तद्युक्तं चन्द्रमसमभिदधानाः प्रत्ययं लभन्ते ॥—**पुष्येणेति** । पुष्यसमीपस्थेन चन्द्रमसेत्यर्थः । एवं पौषमहः इत्यादिव्यवहारः संगच्छते । सर्वेषामप्यह्नां पुष्येण योगसत्त्वेऽपि तत्समीपस्थचन्द्रमसा योगस्यासार्वत्रिकत्वात् ॥ नक्षत्रेणेति किम् ? चन्द्रेण युक्ता रात्रिः । कालः किम् ? पुष्येण युक्तश्चन्द्रः ॥ १२०७ **लुबविशेषे** । पूर्वसूत्रस्यानुवर्तनादिह 'नक्षत्रेण युक्तस्य कालस्याविशेषे गम्ये' इत्यर्थ उपलभ्यते, तदाह—**षष्टिदण्डेति** । 'अद्य पुष्यः' इत्युक्त्वा 'न ह्यो, न श्वः' इति विशेषे गम्यमानेऽपि अहोरात्रात्मककालस्यावान्तरविशेषानवगमाल्लुप् भवत्येवेति भावः ॥ 'अविशेषे' इत्यत्र प्रसज्यप्रतिषेधाश्रयणात् 'पौषोऽहोरात्रः' इति । अत्र लुप् न भवति, षष्टिदण्डसमुदायरूपकालस्य प्रतीतावप्यवयवद्वयात्मकस्य विशेषस्य प्रतीतेरित्याशयेनाह—**विशेषश्चेन्नेति** ॥—**अद्य पुष्य इति** । 'मूलेनावाहयेद्देवीं श्रवणेन' इत्यप्युदाहरणं बोध्यम् ॥ १२०९ **द्वन्द्वाच्छः** । विशेषे उदाहरणमाह—**तिष्येत्यादि** । अविशेषे तूदाहर्तव्यम्-'अद्य राधानुराधीयम्' इति । न चात्र 'लुबविशेषे' इति अण इव छस्यापि लुप्स्यादिति वाच्यम् । मध्येऽपवादन्यायरीत्या पूर्वोपस्थितस्याण एव तत्प्रवृत्तेः ॥ यत्तु 'लुपं परत्वाद्बाधते छः' इति वृत्तिकृतोक्तम् । तन्न । द्वयोर्युगपत्प्राप्त्यभावात् ॥ १२१० **दृष्टं साम** । तृतीयान्ताद् दृष्टमित्यर्थेऽणादयः स्युर्यद्दृष्टं तच्चेत्साम ॥ ॐ **अस्मिन्नर्थे इति** । तथा च श्लोकवार्तिकम्—'**दृष्टे सामनि जाते चाप्यण् डित् द्विर्वा विधीयते । तीयादीकक् न विद्याया गोत्रादङ्कवदिष्यते** ॥' इति । जातेऽर्थे यो द्विरण् स च वा डिदित्यन्वयः ॥ शतभिषजि जातः शातभिषः, शातभिषजः । इह हि 'प्राग्दीव्यतः' इति प्राप्तोऽण् कालाट्ठञा बाधितः, स च 'सन्धिवेलादि-' सूत्रे प्रतिप्रसूयते इत्ययं द्विरुक्तोऽण् ॥—**तीयादिति** । तीयादीकक् स्वार्थे भवतीत्यर्थः, द्वैतीयीकः, तार्तीयीकः ॥—**न विद्याया इति** । विद्यावाचकात्तीयान्तादीकक् न भवतीत्यर्थः । द्वितीया विद्या ॥—**गोत्रादङ्कवदिति** । गोत्रप्रत्ययान्तादङ्के

१२१२ । **वामदेवाड्ड्यड्ड्यौ** ।४।२।९। वामदेवेन दृष्टं साम वामदेव्यम् ।

सिद्धे यस्येतिलोपेन किमर्थं ययतौ डितौ ॥
ग्रहणं माऽतदर्थे भूद्वामदेव्यस्य नञ्स्वरे ॥ १ ॥

१२१३ । **परिवृतो रथः** ।४।२।१०। वस्त्रैः परिवृतो वास्त्रो रथः । रथः किम् । वस्त्रेण परिवृतः कायः । (समन्ताद्वेष्टितः परिवृत उच्यते, तेनेह न—छात्रैः परिवृतो रथः ।)[1]

१२१४ । **पाण्डुकम्बलादिनिः** ।४।२।११। पाण्डुकम्बलेन परिवृतः पाण्डुकम्बली । पाण्डुकम्बलशब्दो राजास्तरणवर्णकम्बलस्य वाचकः । मत्वर्थीयेनैव सिद्धे वचनमणो निवृत्त्यर्थम् ।

१२१५ । **द्वैपवैयाघ्रादञ्** ।४।२।१२। द्वीपिनो विकारो द्वैपम्, तेन परिवृतो द्वैपो रथः । एवं वैयाघ्रः ।

१२१६ । **कौमारापूर्ववचने** ।४।२।१३। 'कौमार' इत्यविभक्तिको निर्देशः । अपूर्वत्वे निपातनमिदम् । अपूर्वपतिं कुमारीं पतिरुपपन्नः कौमारः पतिः । यद्वा अपूर्वपतिः कुमारी पतिमुपपन्ना—कौमारी भार्या ।

१२१७ । **तत्रोद्धृतममत्रेभ्यः** ।४।२।१४। शरावे उद्धृतः शाराव ओदनः । उद्धरतिरिहोद्धरणपूर्वके निधाने वर्तते, तेन सप्तमी । उद्धृत्य निहित इत्यर्थः ।

१२१८ । **स्थण्डिलाच्छयितरि व्रते** ।४।२।१५। तत्रेत्येव । समुदायेन चेद्व्रतं गम्यते । स्थण्डिले शेते स्थाण्डिलो भिक्षुः ।

१२१९ । **संस्कृतं भक्षाः** ।४।२।१६। सप्तम्यन्तादण् स्यात्संकृतेऽर्थे यत्संस्कृतं भक्षाश्चेत्ते स्युः । भ्राष्ट्रे संस्कृताः—भ्राष्ट्रा यवाः । अष्टसु कपालेषु संस्कृतः—अष्टाकपालः पुरोडाशः ।

१२२० । **शूलोखाद्यत्** ।४।२।१७। अणोऽपवादः । शूले संस्कृतं शूल्यं मांसम् । उखा पात्रविशेषः, तस्यां संस्कृतं उख्यम् ।

१२२१ । **दध्नष्ठक्** ।४।२।१८। दध्नि संस्कृतं दाधिकम् ।

१२२२ । **उदश्वितोऽन्यतरस्याम्** ।४।२।१९। ठक् स्यात् । पक्षेऽण् ।

१२२३ । **इसुसुक्तान्तात्कः** ।७।३।५१। इस उस

---

यः प्रत्ययः स दृष्टे सामन्यपि भवति । औपगवेन दृष्टमौपगवकम् । इह 'गोत्रचरणाद्वुञ्' इति वुञ् ॥ **१२१२ वामदेवात्**—॥—**ग्रहणं माऽतदर्थे इत्यादि । अतदर्थे**—'ययतोश्चातदर्थे' इति विहिते **नञ्स्वरे**—नञाश्रितस्वरे ड्यड्ड्यतोर्ग्रहणं मा भूदित्यर्थः ॥ 'ययतोश्च' इति सूत्रेण विधीयमानं नञः परस्य ययदन्तस्योत्तरपदस्यान्तोदात्तत्वं वामदेव्यशब्दे मा भूत् । किंतु अव्ययपूर्वपदस्वर एव यथा स्यादित्येतदर्थं डित्करणमिति फलितोऽर्थः । न च कृतेऽपि डित्त्वे 'ययतोः' इत्यस्य प्रवृत्तिः कुतो नेति शङ्क्यम् । 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य' इति परिभाषयोः सत्त्वात् ॥ इमे च परिभाषे इहैव डित्त्वेन ज्ञाप्येते । तत्राद्यायाः प्रयोजनं 'पूरणगुण—' इति सूत्रे तव्यग्रहणे तव्यतोऽग्रहणम् । द्वितीयस्यास्तु अङ्ग्रहणे चङोऽग्रहणम्, 'श्वयतेरः' अङि परे—अश्वत् । चङि परे तु न, अशिश्वियत् ॥ **१२१३ परिवृतो**—। तृतीयान्तात्परिवृत इत्यर्थेऽणादयः स्युर्यः परिवृतः स चेद्रथो भवति । रथाच्छादनार्थं यद्वस्त्रकम्बलादिकं तत एव सर्ववेष्टनं भवति, न तु छात्रादिभ्य इत्याशयेनाह—**समन्ताद्वेष्टित इति** । परिः सर्वतोभावे वर्तत इति भावः ॥ **१२१६ कौमारा**—। तेनेति निवृत्तम् । 'अपूर्व' इति भावप्रधानो निर्देश इत्याह—**अपूर्वत्वे इति** । अपूर्वत्वं तु स्त्रिया एवेष्यते, पुरुषस्तु अपूर्वभार्योऽस्तु वा मा वेत्यनाग्रहः ॥—**अपूर्वपतिमिति** । न पूर्वं पतिर्यस्या इति बहुव्रीहिः ॥—**कौमारः पतिरिति** । द्वितीयान्तात्कुमारीशब्दादुपयन्तरि प्रत्ययः ॥—**कौमारीति** । इह कुमारीशब्दात्प्रथमान्तात्स्वार्थे प्रत्ययः, 'टिड्ढाण—' इति ङीप् ॥ **१२१७ तत्रोद्धृत**—। 'सास्मिन्पौर्णमासी—' इति सूत्रात्प्राक् 'तत्र' इत्यधिकारः ॥ पात्रवाचिभ्यः सप्तम्यन्तेभ्य उद्धृतमित्यर्थे यथाविहितं प्रत्ययाः स्युः ॥—**शाराव इति** । भुक्तोच्छिष्ट इत्यर्थे इति वृत्तिकृत् । अवशिष्ट इति तदर्थः । 'उच्छिनष्टि, न सर्वं जुहोति' इति कल्पसूत्रव्यवहारात् ॥—**सप्तमीति** । निधानक्रियाऽपेक्षया अधिकरणत्वादिति भावः ॥ **१२१८ स्थण्डिलात्**—। **व्रतं**—शास्त्रेण विहितो नियमः, तस्मिन्समुदायेन गम्ये सप्तम्यन्ताद्यथाविहितः प्रत्ययो भवति शयितर्यर्थे ॥ **१२१९ अष्टाकपाल इति** । 'द्विगोर्लुगनपत्ये' इत्यणो लुक् ॥ **१२२० शूलोखात्**—। 'संस्कृतं भक्षाः' इत्यनुवर्तते ॥ कथम् 'उख्योऽग्निः' इति ? न ह्यसौ भक्ष इति चेत्, **अत्राहुः**—दिगादित्वाद्भवार्थे यदिति ॥ **१२२१ दध्नष्ठक्** ॥—**दध्नीति** । संस्कारस्त्विह लवणादिना, दधि त्वधिकरणमात्रम् ॥ यस्तु 'प्राग्वहतेः' इत्यत्र 'संस्कृतम्' इति ठग्वक्ष्यते स तृतीयान्ताद्बोध्यः । तेन दध्ना संस्कृतमपि दाधिकमेव ॥ **१२२३ इसुसुक्तान्तात्**—। 'तात्' इत्युक्तेऽप्यङ्गविशेषणेनैव तान्तादिति लब्धे अन्तग्रहणं प्रत्ययोपदेशकाले यस्तान्तस्तस्मात्परस्य ठस्य कादेशो यथा स्यादित्येवमर्थम् । तेन 'माथितिकः' इत्यत्र ठस्य इकादेशे 'यस्य' इति लोपे च कृते तान्तत्वेऽपि इकस्य कादेशो न भवति—इति 'ठस्येकः' इति सूत्रे **कैयटः** ॥ संनिपातपरिभाषयैव इकस्य कादेशो न स्यादित्यन्तग्रहणं त्यक्तुं शक्यमित्यन्ये ॥—**उदश्वि-**

---

१ **समन्तादिति—'समन्ताद्वेष्टितः परिवृत इत्युच्यते'** इत्यादिरपपाठः, भाष्ये 'तदेकान्तग्रहणं कर्तव्यम्' इति वार्तिकव्याख्यावसरे 'पुत्रैः परिवृतः' इत्युदाहरणदर्शनादिति शेखराभिप्रायः । अत्र हि 'तदेकान्तग्रहणं कर्तव्यम् । तेनेह न—छात्रैः परिवृतो रथः' इत्येवोचितः पाठः ।

उक् त एतदन्तात्परस्य ठस्य कः स्यात् । उदकेन श्वयति वर्धते इत्युदश्वित्, तत्र संस्कृतः-औदश्वित्कः, औदश्वितः । इसुसोः प्रतिपदोक्तयोर्ग्रहणान्नेह-आशिषा चरति-आशिषिकः । उषा चरति-औषिकः । ॐ दोष उपसंख्यानम् । दोर्भ्यां चरति दौष्कः ।

१२२४ । क्षीराड्ढञ् ।४।२।२०। अत्र 'संस्कृतम्' इत्येव संबध्यते, न तु भक्षा इति । तेन यवाग्वामपि भवति, क्षैरेयी ।

१२२५ । साऽस्मिन्पौर्णमासीति ।४।२।२१। इतिशब्दात्संज्ञायामिति लभ्यते । पौषी पौर्णमासी अस्मिन् पौषो मासः ।

१२२६ । आग्रहायण्यश्वत्थाट्ठक् ।४।२।२२। अग्रे हायनमस्या इत्याग्रहायणी, प्रज्ञादेराकृतिगणत्वादण्, 'पूर्वपदात्संज्ञायाम्–' ८५९ इति णत्वम्, आग्रहायणी पौर्णमासी अस्मिन्-आग्रहायणिको मासः । अश्वत्थेन युक्ता पौर्णमासी-अश्वत्थः, निपातनात्पौर्णमास्यामपि लुप् । आश्वत्थिकः ।

१२२७ । विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः ।४।२।२३। एभ्यष्ठग्वा । पक्षेऽण् । फाल्गुनिकः, फाल्गुनो मासः । श्रावणिकः, श्रावणः । कार्तिकिकः, कार्तिकः । चैत्रिकः, चैत्रः ।

१२२८ । साऽस्य देवता ।४।२।२४। इन्द्रो देवताऽस्येति ऐन्द्रं हविः । पाशुपतम् । बार्हस्पत्यम् । त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता, मन्त्रस्तुत्या च । ऐन्द्रो मन्त्रः । 'आग्नेयो वै ब्राह्मणो देवतया' इति तु शैषिकेऽर्थे 'सर्वत्राग्नि' इति ढक् ।

१२२९ । कस्येत् ।४।२।२५। कशब्दस्य[1] इदादेशः स्यात्प्रत्ययसन्नियोगेन । 'यस्य–' ३११ इति लोपात्परत्वादादिवृद्धिः । को ब्रह्मा देवता अस्य कायं हविः । श्रीर्देवता अस्य श्रायम् ।

१२३० । शुक्राद्घन् ।४।२।२६। शुक्रियम् ।

१२३१ । अपोनप्त्रपान्नप्तृभ्यां घः ।४।२।२७। अपोनप्त्रियम् । अपान्नप्त्रियम् । अपोनपात् अपान्नपाच्च देवता[2] । प्रत्ययसंनियोगेन तूक्तं रूपं निपात्यते । अत एव 'अपोनपाते-अपान्नपातेऽनुब्रूहि' इति प्रैषः ।

१२३२ । छ च ।४।२।२८। योगविभागो यथासंख्यनिवृत्त्यर्थः । अपोनप्त्रीयम् । अपान्नप्त्रीयम् । ॐ शतरुद्राद्घश्च । चाच्छः । शतं रुद्रा देवता अस्य-शतरुद्रियम्, शतरुद्रीयम् । घच्छयोर्विधानसामर्थ्यात् 'द्विगोर्लुगनपत्ये' १०८२ इति न लुक् ।

१२३३ । महेन्द्राद्घाणौ च ।४।२।२९। चाच्छः । महेन्द्रियं हविः, माहेन्द्रम्, महेन्द्रीयम् ।

१२३४ । सोमाट्ट्यण् ।४।२।३०। सौम्यम् । टित्वान्ङीप्, सौमी ऋक् ।

१२३५ । वाय्वृतुपित्रुषसो यत् ।४।२।३१। वायव्यम् । ऋतव्यम् ।

१२३६ । रीङृतः ।७।४।२७। अकृद्यकारेऽसार्वधातुके यकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः स्यात् । 'यस्येति च' ३११, पित्र्यम् । उषस्यम् ।

१२३७ । द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च ।४।२।३२। चाद्यत् । द्यावापृथिवीयम्, द्यावापृथिव्यम् । शुनासीरीयम्, शुनासीर्यम् ।

---

दिति । श्वयतेः क्विपि तुक्, 'उदकस्योदः–' इत्युदेशः । इहैव निपातनात्संप्रसारणाभावः ॥ १२२५ सास्मिन्—॥ सेति प्रथमान्तादस्मिन्निति सप्तम्यन्तार्थे प्रत्ययः स्यात्, यः प्रथमान्तार्थः स चेत्पौर्णमासी भवति ॥—**इतिशब्दादिति** । स हि लौकिकीं विवक्षामनुसारयति ॥ वृत्तिकृता तु सूत्रे एव 'संज्ञायाम्' इति प्रक्षिप्तम् ॥—**पौर्णमासीति** । पूर्णो मासोऽस्यां तिथाविति बहुव्रीहौ प्रज्ञादित्वात्स्वार्थिकोऽणिति हरदत्तादयः । 'तदस्मिन्वर्तते' इत्यधिकारे 'पूर्णमासादण् वक्तव्यः' इति वार्तिकं न कर्तव्यमिति तदाशयः ॥ १२२८ साऽस्य—। 'सेति प्रकृतं संज्ञासंबद्धम्' इति पुनः 'सा' ग्रहणं कृतमित्याहुः ॥ इहैव सूत्रे निपातनाद्देवशब्दात्स्वार्थे तल् ॥—**मन्त्रस्तुत्येति** । मन्त्रेण स्तुत्या । 'एतिस्तुशास्–' इत्यादिना क्यपि तुक्, टाप् ॥—**आग्नेयो वै ब्राह्मण इति** । इहाग्न्युद्देशेन ब्राह्मणो न त्यज्यत इति कथमयं प्रयोग इति न शङ्क्यमिति भावः ॥ **१२२९ परत्वादादिवृद्धिरिति** । इदं च समाधानं श्रायमित्यत्रावश्यकमिति तेनैव परिहारसंभवादित्वविधानसामर्थ्यमिह नाश्रितम् ॥ **१२३१ उक्तं रूपमिति** । 'नपात्' इत्यस्य 'नप्तृ' इति रूपमित्यर्थः ॥ **१२३२ शतं रुद्रा इति** । शतशब्दोऽनन्तवचनः ॥ **१२३४ सौमीति** । 'हलस्तद्धितस्य' इति यलोपः ॥ **१२३६ रीङृतः** । अङ्गवृत्तपरिभाषया 'अकृत्सार्व–' इति दीर्घो न प्रवर्तेत इति दीर्घग्रहणमित्याहुः ॥—**यस्येति चेति** । पित्रीयतीत्यत्र रीङ्विधिः सावकाश इति भावः ॥—**उषस्यमिति** । उषस्शब्दः स्त्रीलिङ्गो दिवो दुहितरं देवतां ब्रवीति ॥ **१२३७ द्यावा—**। अण्ण्ययोरपवादः ॥ **शुनासीरीयमिति** । शुनश्च सीरश्चेति द्वन्द्वे 'देवताद्वन्द्वे च' इत्यानङ् ॥ शुनो वायुः, सीर आदित्य इति वृत्तिकृत् ॥ हरदत्तस्तु शुनासी-

---

१ **कशब्दस्येति**—ब्रह्मणि रूढस्यैवात्र ग्रहणम्, एवं च कायानुब्रूहीत्येव प्रैषः । कस्मा अनुब्रूहीति कल्पसूत्रोक्तं त्वार्षमिति प्राञ्चः । नवीनास्तु किमोऽप्यत्र तन्त्रेण निर्देशः, तस्य शब्दपरत्वेऽपि किमः कादेशः, क्षिय इत्यादौ इयङ्वत् । किंशब्दोऽपि प्रजापतिवाची, अत एव 'कस्मै देवाय हविषा विधेम' इति श्रुतौ प्रजापतये इत्यर्थकं कस्मै इति संगच्छत इत्याहुः । २ **'देवते'** इत्यपि पाठः क्वचिद्दृश्यते ॥

१२३८ । अग्नेर्ढक् ।४।२।३३। आग्नेयम् ।

१२३९ । कालेभ्यो भववत् ।४।२।३४। मासिकम् । प्रावृषेण्यम् ।

१२४० । महाराजप्रोष्ठपदाट्ठञ् ।४।२।३५। माहाराजिकम् । प्रौष्ठपदिकम् ।

१२४१ । देवताद्वन्द्वे च ।७।३।२१। अत्र पूर्वोत्तरपदयोराद्यचो वृद्धिः स्यात्, ञिति णिति किति च परे । आग्निमारुतम् ।

१२४२ । नेन्द्रस्य परस्य ।७।३।२२। परस्येन्द्रस्य वृद्धिर्न स्यात् । सौमेन्द्रः । परस्य किम् । ऐन्द्राग्नः ।

१२४३ । दीर्घाच्च वरुणस्य ।७।३।२३। दीर्घात्परस्य वरुणस्य न वृद्धिः । ऐन्द्रावरुणम् । दीर्घात्किम् । आग्निवारुणीमनड्वाहीमालभेत । ❀ तदस्मिन्वर्तत इति नवयज्ञादिभ्य उपसंख्यानम् । नावयज्ञिकः कालः । पाकयज्ञिकः । ❀ पूर्णमासादण् वक्तव्यः । पूर्णो मासोऽस्यां वर्तते इति पौर्णमासी तिथिः ।

१२४४ । पितृव्यमातुलमातामहपितामहाः ।४।२।३६। एते निपात्यन्ते । ❀ पितुर्भ्रातरि व्यत् । पितुर्भ्राता पितृव्यः । ❀ मातुर्डुलच् । मातुर्भ्राता मातुलः । ❀ मातृपितृभ्यां पितरि डामहच् । मातुः पिता मातामहः । पितुः पिता पितामहः । ❀ मातरि षिच्च । मातामही । पितामही । ❀ अवेर्दुग्धे सोढदूसमरीसचो वक्तव्याः । सकारपाठसामर्थ्यान्न षः । अविसोढम् । अविदूसम् । अविमरीसम् । ❀ तिलान्निष्फलात्पिञ्जपेजौ । तिलपिञ्जः, तिलपेजः, वन्ध्यस्तिल इत्यर्थः । ❀ पिञ्जश्छन्दसि डिच्च । तिलिपिञ्जः ।

१२४५ । तस्य समूहः ।४।२।३७। काकानां समूहः काकम् । बाकम् ।

१२४६ । भिक्षादिभ्योऽण् ।४।२।३८। भिक्षाणां समूहो भैक्षम् । गर्भिणीनां समूहो गार्भिणम् । इह 'भस्याढे' इति पुंवद्भावे कृते,

१२४७ । इनण्यनपत्ये ।६।४।१६४। अनपत्यार्थेऽणि परे इन् प्रकृत्या स्यात् । तेन 'नस्तद्धिते' ६८० इति टिलोपो न । युवतीनां समूहो यौवनम् । शत्रन्तादनुदात्तादेरञ्-यौवतम् ।

१२४८ । गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् ।४।२।३९। एभ्यः समूहे वुञ् स्यात् । लौकिकमिह गोत्रम्, तच्चापत्यमात्रम् ।

१२४९ । युवोरनाकौ ।७।१।१। यु वु एतयोरनुना-

---

रशब्द इन्द्रस्य गुणवाचीत्यन्ये मन्यन्त इत्याह, तथा च मन्त्रः—'इन्द्रं वयं शुनासीरमस्मिन्यज्ञे हवामहे' इति ॥ मरुतो यस्य सन्तीति मरुत्वानिन्द्रः, मरुत्वतीयं, मरुत्वत्यम् ॥ अग्नीषोमीयम्, अग्नीषोम्यम् । 'ईदग्नेः सोमवरुणयोः' ॥ वास्तुनः पतिः—वास्तोष्पतिः, इहैव सूत्रे निपातनात्साधुः । 'वेश्मभूर्वास्तुरस्त्रियाम्' । वास्तोष्पतीयं, वास्तोष्पत्यम् ॥ गृहमेधीयं, गृहमेध्यम् । गृहमेधशब्दोऽकारान्तः । तथा च आश्वलायनः—'मरुद्भ्यो गृहमेधेभ्यः' इति ॥ १२३९ कालेभ्यो—। कालवाचिभ्यो ये प्रत्यया भवार्थे वक्ष्यन्ते ते 'साऽस्य देवता' इत्यस्मिन्नर्थेऽनेनातिदिश्यन्ते ॥ वत्करणं सर्वसादृश्यार्थम् । तेन यस्माद्यो विहितस्ततः स एव भवति नान्यः । तथैवोदाहरति—मासिकम् । प्रावृषेण्यमिति । 'कालाट्ठञ्' । 'प्रावृष एण्यः' ॥ १२४४ डामहजिति । एतच्च वृत्त्याद्यनुरोधेनोक्तम् ॥ भाष्ये तु आनङादेशो महच् प्रत्ययश्च निपात्यते । तेनावग्रहः सिध्यतीत्युक्तम् ॥ —सकारपाठेति । अन्यथा प्रक्रियालाघवाय षकारमेव पठेदिति भावः । एतच्च मनोरमायां स्थितम् ॥ अन्ये तूक्तरीत्या 'अविसोढम्' इत्यत्र षत्वनिवारणेऽपि 'अविदूसम्' इत्यादौ स्यादेव षत्वम् । तत्र हि ण्यन्तात्क्विपि 'अविदूः' इत्यादिरूपसिद्धये सकारपाठसामर्थ्यस्योपक्षीणत्वात् । तस्मात् 'अविसोढम्' इत्यादिभाष्यकृदुदाहरणेषु सकारपाठसामर्थ्यादिति व्याख्येयमित्याहुः ॥ १२४५ तस्य समूहः । इह 'अचित्ताट्ठक्' 'अनुदात्तादेरञ्' 'गोत्रान्ताद्वुञ्' 'केदाराद्यञ्च' इत्यादिना प्रतिपदं यञादींश्च वक्ष्यति । तथा च चित्तवदाद्युदात्तमगोत्रान्तं प्रतिपदोक्तप्रत्ययरहितमिहोदाहरणमित्याशयेनोदाहरति—काकम् । वाकमिति । एवं वार्कम् । काकबकवृकशब्दाः 'प्राणिनां कुपूर्वम्' इति फिट्सूत्रेणाद्युदात्ताः । प्राणिवाचिनां ये आदिभूताः कवर्गात्पूर्वे तेषामुदात्तः स्यादिति सूत्रार्थः, 'अथादिः प्राक् शकटेः' इत्यधिकारात् ॥ यत्तु वृत्तिन्यासयोः शौकमित्युदाहृतम्, तदुपेक्ष्यम् । खण्डिकादिषु शुकशब्दस्य पाठात्तत्राञा भाव्यमिति हरदत्तादयः ॥ १२४६ भिक्षादिभ्योऽण् ॥—भैक्षमिति । अचित्तत्वाट्ठक् प्राप्तः ॥—गार्भिणमिति । अनुदात्तादित्वादञ् प्राप्तः, सति हि तस्मिन्नाद्युदात्तटिलोपौ स्याताम् । न च 'भस्याढे—' इति पुंवाचकरूपातिदेशान्न टिलोपः स्यादिति वाच्यम् । हस्तिनीनां समूहो हास्तिकमित्यत्रापि टिलोपानापत्तेः । तस्मात् स्त्रीप्रत्ययनिवृत्तिमात्रपरं तत्, न तु रूपातिदेशकमिति बोध्यम् ॥ १२४७ यौवनमिति । युवतिशब्दस्यानुदात्तादित्वादञि प्राप्ते अणर्थमिह पाठः । पुंवद्भावात्तिप्रत्ययनिवृत्तिः । 'अन्' इति प्रकृतिभावः ॥ ननु 'भस्याढे—' इत्यत्र 'अढे तद्धिते विवक्षिते पुंवद्भावः' इत्यभ्युपगमात्तद्धितोत्पत्तेः प्रागेव तिप्रत्ययनिवृत्तौ सत्यां 'कनिन्युवृषि—' इति कनिनन्ततया आद्युदात्तत्वादण् सिद्ध एवेति चेत् । सत्यम् । अत एव भाष्ये भिक्षादिषु युवतिशब्दपाठः प्रत्याख्यातः । इह 'युवतिशब्दपाठसामर्थ्यात्पुंवद्भावो न' इति वृत्तिकारोक्तिरप्यत एव निरस्ता ॥ नन्वेवं 'गार्भिणं यौवतं गणे' इत्यादिप्रयोगा भाष्यमते न संगच्छेरन्नित्याशङ्क्याह—शत्रन्तादिति ॥ १२४९ युवोः—। समाहारद्वन्द्वे सौत्रं पुंस्त्वम् ।

सिकयोः क्रमादन अक एतावादेशौ स्तः । ग्लुचुकायनीनां समूहो ग्लौचुकायनकम् । औक्षकम् । इत्यादि । 'आपत्यस्य च-' १०८४ इति यलोपे प्राप्ते, ॐ **प्रकृत्याऽके राजन्यमनुष्ययुवानः** । राजन्यकम् । मानुष्यकम् । ॐ **वृद्धाच्चेति वक्तव्यम्** । वार्धकम् ।

१२५० । **केदाराद्यञ्च** ।४।२।४०। चाद्वुञ् । कैदार्यम्, कैदारकम् । ॐ **गणिकाया यञिति वक्तव्यम्** । गाणिक्यम् ।

१२५१ । **ठञ्कवचिनश्च** ।४।२।४१। चात्केदारादपि । कवचिनां समूहः—कावचिकम् । कैदारिकम् ।

१२५२ । **ब्राह्मणमाणववाडवाद्यन्** ।४।२।४२। ब्राह्मण्यम् । माणव्यम् । वाडव्यम् । ॐ **पृष्ठादुपसंख्यानम्** । पृष्ठ्यम् ।

१२५३ । **ग्रामजनबन्धुभ्यस्तल्** ।४।२।४३। ग्रामता । जनता । बन्धुता । ॐ **गजसहायाभ्यां चेति वक्तव्यम्** । गजता । सहायता । ॐ **अह्नः खः क्रतौ** । अहीनः, अहर्गणसाध्यसुत्याकः क्रतुरित्यर्थः । क्रतौ किम् । आह्नः, इह खण्डिकादित्वादञ्, 'अह्नष्टखोरेव' ७९० इति नियमाट्टिलोपो न । ॐ **पर्श्वा णस् वक्तव्यः** ।

१२५४ । **सिति च** ।१।४।१६। सिति परे पूर्वं पदसंज्ञं स्यात् । अभत्वादोर्गुणो न । पर्शूनां समूहः पार्श्वम् ।

१२५५ । **अनुदात्तादेरञ्** ।४।२।४४। कापोतम् । मायूरम् ।

१२५६ । **खण्डिकादिभ्यश्च** ।४।२।४५। अञ् स्यात् । खण्डिकानां समूहः खाण्डिकम् ।

१२५७ । **चरणेभ्यो धर्मवत्** ।४।२।४६। काठकम् । छान्दोग्यम् ।

१२५८ । **अचित्तहस्तिधेनोष्ठक्** ।४।२।४७। साक्तुकम् । हास्तिकम् । धैनुकम् ।

१२५९ । **केशाश्वाभ्यां यञ्छावन्यतरस्याम्** ।४।२।४८। पक्षे ठगणौ । कैश्यम्, कैशिकम् । अश्वीयम्, आश्वम् ।

१२६० । **पाशादिभ्यो यः** ।४।२।४९। पाश्या । तृण्या । धूम्या । वन्या । वात्या ।

१२६१ । **खलगोरथात्** ।४।२।५०। खल्या । गव्या । रथ्या ।

१२६२ । **इनित्रकट्यचश्च** ।४।२।५१। खलादिभ्यः क्रमात्स्युः । खलिनी । गोत्रा । रथकट्या । ॐ **खलादिभ्य इनिर्वक्तव्यः** । डाकिनी । कुटुम्बिनी । आकृतिगणोऽयम् ।

१२६३ । **विषयो देशे** ।४।२।५२। षष्ठ्यन्तादणादयः स्युरत्यन्तपरिशीलितेऽर्थे, स चेद्देशः । शिबीनां विषयो देशः शैबः । देशे किम् । देवदत्तस्य विषयोऽनुवाकः ।

१२६४ । **राजन्यादिभ्यो वुञ्** ।४।२।५३। राजन्यकः ।

१२६५ । **भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ** ।४।२।५४। भौरिकीणां विषयो देशः—भौरिकिवि-

---

उकारस्तूच्चारणार्थो नेत्संज्ञकः । तेन नन्दनः कारकः, नन्दना कारिका—इत्यत्रोगिल्लक्षणौ नुम्ङीपौ न स्तः ॥ अनुनासिकयोरिति किम्? ऊर्णायुः ॥ ॐ **प्रकृत्याऽके इति** । इह राजन्यमनुष्यग्रहणं व्यर्थम् । रूढिशब्दत्वेन 'आपत्यस्य च-' इति यलोपस्य प्राप्त्यभावात् । अत एव 'गोत्रोक्षोष्ट्र-' इत्यत्र तयोर्ग्रहणं सार्थकम् । अन्यथा गोत्रग्रहणेनैव सिद्धे तयोर्ग्रहणं न कुर्यादित्याहुः ॥ यूनो भावो यौवनिका, मनोज्ञादित्वाद्वुञ् ॥ ॐ **वार्धकमिति** । यदि वृद्धत्वेऽपि वार्धकमिति प्रयोगोऽस्ति तर्हि मनोज्ञादित्वं कल्पनीयमित्याहुः ॥ **१२५२ ब्राह्मणमाणव—**। ननु त्रयोऽप्यमी वृद्धाः, तेभ्यः प्रकृतो यञेवास्तु, वृद्धाद्यनि यञि वा रूपे विशेषाभावात् । नापि स्वरे विशेषः, उभयथाऽप्याद्युदात्तत्वात् । स्त्रियां विशेषस्तु न शङ्क्य एव, नपुंसकत्वात्, 'यञश्च' इत्यत्रापत्यग्रहणाच्च । ठञ् तु नानुवर्तिष्यते, अस्वरितत्वात् इति चेत्, सत्यम् । अवृद्धादपि कुतश्चिद्विधानार्थं यन्वचनम् । तत्सिद्धार्थानुवादकं वार्तिकमाह—**पृष्ठादिति** । पृष्ठं स्तोत्रविशेषः ॥—**पृष्ठ्य इति** । पृष्ठानां समूहः पृष्ठ्यः षडह इति तु मत्वर्थलक्षणया बोध्यम् ॥ **१२५३ ग्रामजन—**। वृत्तिकृता तु वार्तिकस्थसहायशब्दोऽपि सूत्रे प्रक्षिप्तः ॥ **१२५५ अनुदात्तादेरञ्** । आपूपिकं शाष्कुलिकमित्यादौ परत्वात् 'अचित्तहस्तिधेनोः—' इति ठगेवेत्याशयेनेह सूत्रे चित्तवन्तमुदाहरति—**कापोतमिति** ॥—'लघावन्त-' इति फिट्सूत्रेण कपोतमयूरशब्दौ मध्योदात्तौ ॥ न च 'शकुनीनां च लघु पूर्वम्' इत्याद्युदात्ताविमाविति शङ्क्यम् । 'अन्त्यात्पूर्वं लघूदात्तम्' इति तत्र व्याख्यानादित्याहुः ॥ **१२५६ खण्डिका—**। आद्युदात्तार्थमचित्ताट्ठको बाधनार्थं च वचनम् ॥ **१२५७ चरणेभ्यः—**। यस्याः प्रकृतेर्यः प्रत्ययो धर्मे वक्ष्यते स तस्याः प्रकृतेः समूहेऽपि स्यादित्यर्थः ॥ वुञादयो हि चरणेभ्यो वक्ष्यन्ते । तत्र 'चरणाद्धर्माम्नाययोः' इति तु वार्तिकम् । तदप्यनेनैवातिदेशसूत्रेण ज्ञाप्यते ॥—**काठमित्यादि** । गोत्रचरणाद्वुञ् । 'छन्दोगौक्थिक' इति ञ्यः ॥ **१२५९ यञ्छाविति** । यथासंख्यं स्तः ॥—**ठगणाविति** । केशशब्दादचित्तत्वेन ठक् ॥ **१२६३ विषयो देशे** । 'तस्य' इत्यनुवर्तत इत्याह—**षष्ठ्यन्तादिति** । विषयशब्दार्थमाह—**अत्यन्तेति** ॥ **१२६५ भौरिक्या—**। आभ्यां गणाभ्यां यथासंख्यमेतौ

धम् । भौलिकिविधम् । ऐषुकारिभक्तम् । सारसायनभक्तम् ।

१२६६ । **सोऽस्यादिरिति च्छन्दसः प्रगाथेषु** ।४।२।५५। अण् । पङ्क्तिरादिरस्येति, पाङ्क्तः प्रगाथः । ॐ **स्वार्थ उपसंख्यानम्** । त्रिष्टुबेव त्रैष्टुभम् ।

१२६७ । **संग्रामे प्रयोजनयोद्धृभ्यः** ।४।२।५६। सोऽस्येत्यनुवर्तते । सुभद्रा प्रयोजनमस्य संग्रामस्येति सौभद्रः । भरता योद्धारोऽस्य संग्रामस्य भारतः ।

१२६८ । **तदस्यां प्रहरणमिति क्रीडायां णः** ।४।२।५७। दण्डः प्रहरणमस्यां क्रीडायां–दाण्डा । मौष्टा ।

१२६९ । **घञः साऽस्यां क्रियेति ञः** ।४।२।५८। घञन्तात्क्रियावाचिनः प्रथमान्तादस्यामिति सप्तम्यर्थे स्त्रीलिङ्गे ञप्रत्ययः स्यात् । 'घञः' इति कृद्ग्रहणाद्गतिकारकपूर्वस्यापि ग्रहणम् ।

१२७० । **श्येनतिलस्य पाते ञे** ।६।३।७१। श्येन तिल एतयोर्मुमागमः स्यात् ञप्रत्ययपरे पातशब्दे उत्तरपदे । श्येनपातोऽस्यां वर्तते–श्यैनंपाता मृगया । तिलपातोऽस्यां वर्तते–तैलंपाता स्वधा । श्येनतिलस्य किम् । दण्डपातोऽस्यां तिथौ वर्तते–दाण्डपाता तिथिः ।

१२७१ । **तदधीते तद्वेद** ।४।२।५९। व्याकरणमधीते वेद वा–वैयाकरणः ।

१२७२ । **क्रतूक्थादिसूत्रान्ताट्ठक्** ।४।२।६०। क्रतुविशेषवाचिनामेवेह ग्रहणम् । तेभ्यो मुख्यार्थेभ्यो वेदितरि, तत्प्रतिपादकग्रन्थपरेभ्यस्त्वध्येतरि । आग्निष्टोमिकः । वाजपेयिकः । उक्थं सामविशेषः, तल्लक्षणपरो ग्रन्थविशेषो लक्षणयोक्थम्, तदधीते वेद वा–औक्थिकः । ॐ **मुख्यार्थात्सूक्थशब्दाट्ठगणौ नेष्येते** । न्यायम्–नैयायिकः । वृत्तिम्–वार्तिकः । लोकायतम्–लौकायतिकः । इत्यादि । ॐ **सूत्रान्तात्त्वकल्पादेरेवेष्यते** । सांग्रहसूत्रिकः । अकल्पादेः किम् । काल्पसूत्रः । ॐ **विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम्** । वायसविद्यिकः । गौलक्षणिकः । आश्वलक्षणिकः । पाराशरकल्पिकः । ॐ **अङ्गक्षत्रधर्मत्रिपूर्वाद्विद्यान्तान्नेति वक्तव्यम्** । आङ्गविद्यः । क्षात्रविद्यः । धार्मविद्यः । त्रिविधा विद्या त्रिविद्या, तामधीते वेद वा–त्रैविद्यः । ॐ **आख्यानाख्यायिकेतिहासपुराणेभ्यश्च** । यवक्रीतमधिकृत्य कृतमाख्यानमुपचाराद्यवक्रीतम्, तदधीते वेत्ति वा–यावक्रीतिकः । वासवदत्तामधिकृत्य कृता आख्यायिका–वासवदत्ता, अधिकृत्य कृते ग्रन्थे इत्यर्थे 'वृद्धाच्छः' १३३९, तस्य ॐ **लुबाख्यायिकाभ्यो बहुलम्** । इति लुप्, ततोऽनेन ठक्, वासवदत्तिकः । ऐतिहासिकः । पौराणिकः । ॐ **सर्वादेः सादेश्च लुग्वक्तव्यः** । सर्ववेदानधीते

---

प्रत्ययौ स्तः ॥—**भौरिकिविधमित्यादि** । क्लीबत्वं लोकात् ॥ १२६६ **सोऽस्यादिरिति** । छन्दो नामाक्षरेयत्तानिबन्धनं पङ्क्त्यादिरिह विवक्षितम् । तद्वाचकात्प्रथमान्तादस्येत्यादिमति प्रत्ययः स्यात्, य आदिमान्स प्रगाथश्चेत् । प्रग्रथ्यत इति प्रगाथः । 'ग्रन्थ संदर्भे' इत्यस्मात् 'अकर्तरि च कारके' इति कर्मणि घञ् । पृषोदरादित्वाद्रेफनकारयोर्लोपः ॥ अन्ये तु प्रगीयत इति प्रगाथः, 'गै शब्दे' इत्यतः 'उषिकुषिगार्तिभ्यः स्थन्' इत्याहुः । यत्र द्वे ऋचावावृत्त्या तिस्रः क्रियन्ते स प्रगाथः ॥—**त्रैष्टुभमिति** । 'स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति न्यायेन क्लीबतेति भावः ॥ १२६७ **संग्रामे—**। ननु 'प्रथमात्' इत्यधिकारात्प्रथमोच्चरितसंग्रामवाचिन एव प्रत्ययः प्राप्नोति, न प्रयोजनयोद्धृभ्य इत्यत आह—**सोऽस्येतीति** । एवं च प्रथमान्तविशेषणद्वारा प्रयोजनयोद्धॄणां प्रकृतित्वम्, 'अस्य' इति प्रत्ययार्थविशेषणद्वारा संग्रामस्य प्रत्ययार्थत्वं वक्तुं शक्यमिति भावः ॥ तथा चायमिह सूत्रार्थः—प्रयोजनवाचिभ्यो योद्धृवाचिभ्यश्च प्रथमान्तेभ्योऽस्येति षष्ठ्यन्तार्थेऽण् स्यात्, स च षष्ठ्यन्तार्थः संग्रामश्चेदिति ॥ १२६८ **तदस्याम्—**। प्रथमान्तात्प्रहरणोपाधिकात्सप्तम्यन्तार्थे अण् स्यात्, स चेत्सप्तम्यन्तार्थः क्रीडा भवति ॥ प्रहरणं किम् ? माला भूषणमस्याम् ॥ क्रीडायां किम् ? खड्गः प्रहरणमस्यां सेनायाम् ॥ १२६९ **घञः—**॥—**कृद्ग्रहणादिति** । तेन 'श्यैनंपाता' इत्यत्र 'ञ्णिति' इत्यङ्गस्य विधीयमाना वृद्धिः सिद्धा । श्येनपातस्यापि घञन्तत्वादिति भावः ॥ घञः किम् ? श्येनपतनमस्यां वर्तते ॥ क्रिया किम् ? प्राकारोऽस्यां वर्तते ॥ 'तदस्याम्' इति प्रकृते पुनः 'साऽस्याम्' इत्युक्तिः 'क्रीडायाम्' इत्यस्य निवृत्तिर्यथा स्यादिति । अत एवाह—**१२७० दण्डपातोऽस्यां तिथाविति** ॥ **१२७१ तदधीते—**। द्वितीयान्तादध्येतरि वेदितरि च प्रत्ययः स्यात् ॥ द्विस्तद्ग्रहणमधीयाने विदुषि च प्रत्येकं विधानार्थम् । तेनोत्तरत्र क्रतुवसन्तादयः शब्दास्तत्प्रतिपादकग्रन्थे गौणा अप्यधीयानेऽपि प्रत्ययं प्राप्नुवन्ति । अन्यथा तेषामध्ययनासंभवेन वेदितर्येव प्रत्ययः स्यादिति भावः **१२७२ क्रतूक्थादि—**॥—**क्रतुविशेषेति** । स्वरूपस्य तु न ग्रहणम् । तथात्वे सति उक्थादिष्वेव क्रतुशब्दः पठ्येत । नापि क्रतुपर्यायाणाम्, उक्थादिगणे यज्ञशब्दपाठादिति भावः ॥—**अध्येतरीति** । अध्येतर्यपीत्यर्थः ॥—**आग्निष्टोमिक इति** । संस्थाविशेषवाचकस्याप्यग्निष्टोमशब्दस्य तत्संस्थाके क्रतौ निरूढप्रयोगः ॥ —**तल्लक्षणेत्यादि** । तत्प्रतिपादकप्रातिशाख्यमित्यर्थः ॥—**नेष्येते इति** । अनभिधानादिति भावः ॥—**त्रिविद्येति** । 'तिस्रो विद्या अधीते' इति विग्रहे तु तद्धितार्थे द्विगौ 'त्रिविद्यः' इत्येव स्यात्, 'द्विगोर्लुगनपत्ये' इति लुक्प्रवृत्तेरिति भावः ॥—**आख्यायिकेति** । गद्यपद्यरूपो ग्रन्थविशेष इत्यर्थः ॥—**सर्वादेरिति** । 'सादेः' इत्येव सिद्धे सर्वादि-

सर्ववेदः । सर्वतन्त्रः । सवार्तिकः । 'द्विगोर्लुक्-' १०८२ इति लुक्, द्वितन्त्रः । ❀ **इकन्पदोत्तरपदाच्छतषष्टेः षिकन्पथः** । पूर्वपदिकः । उत्तरपदिकः । शतपथिकः, शतपथिकी । षष्टिपथिकः, षष्टिपथिकी ।

१२७३ **क्रमादिभ्यो वुन्** ।४।२।६१। क्रमकः । क्रम, पद, शिक्षा, मीमांसा, क्रमादिः ।

१२७४ । **अनुब्राह्मणादिनिः** ।४।२।६२। 'तदधीते तद्वेद' १२७१ इत्यर्थे । ब्राह्मणदृशो ग्रन्थोऽनुब्राह्मणम्, तदधीते-अनुब्राह्मणी । मत्वर्थीयेनैव सिद्धे अणूबाधनार्थमिदम् ।

१२७५ । **वसन्तादिभ्यष्ठक्** ।४।२।६३। वासन्तिकः । अथर्वाणमधीते-आथर्वणिकः, 'दाण्डिनायन-' ११४५ इति सूत्रे निपातनाट्टिलोपो न ।

१२७६ । **प्रोक्ताल्लुक्** ।४।२।६४। प्रोक्तार्थकप्रत्ययात्परस्याध्येतृवेदितृप्रत्ययस्य लुक् स्यात् । पणनं पणः, 'घञर्थे कविधानम्' इति कः, सोऽस्यास्तीति पणी, तस्य गोत्रापत्यं पाणिनः ।

१२७७ । **गाथिविदथिकेशिगणिपणिनश्च** ।६।४। १६५। एतेऽणि प्रकृत्या स्युः । इति टिलोपो न । ततो यूनि इञ्, पाणिनिः ।

१२७८ । **ण्यक्षत्रियार्षञितो यूनि लुगणिञोः** ।२।४।५८। ण्यप्रत्ययान्तात्क्षत्रियगोत्रप्रत्ययान्तादृष्यभिधायिनो गोत्रप्रत्ययान्ताद् ञितश्च परयोर्युवाभिधायिनोरणिञोर्लुक् स्यात् । कौरव्यः पिता । कौरव्यः पुत्रः । श्वाफल्कः पिता । श्वाफल्कः पुत्रः । वासिष्ठः पिता । वासिष्ठः पुत्रः । तैकायनिः पिता । तैकायनिः पुत्रः । एभ्यः किम् शिवाद्यण्, कौहडः पिता । तत इञ्, कौहडिः पुत्रः । यूनि किम् । वामरथ्यस्य छात्राः-वामरथाः-इति अणो[1] लुक् तु न भवति, आर्षग्रहणेन प्रतिपदोक्तस्य ऋष्यण एव ग्रहणात् । पाणिनिना प्रोक्तं पाणिनीयम्, 'वृद्धाच्छः' १३३९ । 'इञश्च' १३३५ इत्यण् तु न, गोत्रे य इञ् तदन्तादिति वक्ष्यमाणत्वात् । ततोऽध्येतृवेदित्रणो लुक् । स्वरे स्त्रियां च विशेषः । पाणिनीयः । पाणिनीया ।

१२७९ । **सूत्राच्च कोपधात्** ।४।२।६५। सूत्रवाचिनः ककारोपधादध्येतृवेदितृप्रत्ययस्य लुक् स्यात् । अप्रोक्तार्थ आरम्भः । अष्टावध्यायाः परिमाणमस्य अष्टकं पाणिनेः सूत्रम्, तदधीयते विदन्ति वा-अष्टकाः । ❀ **संख्याप्रकृतिकादिति वक्तव्यम्** । नेह-माहावार्त्तिकः । कालापकः ॥

---

ग्रहणमर्थवत्परिभाषाज्ञापनार्थम् ॥—**स वार्तिक इति** । वार्तिकान्तमधीत इत्यर्थः । अन्तवचने अव्ययीभावः । 'अव्ययीभावे चाकाले' इति सहस्य सभावः ॥—**इकन्निति** । पदशब्द उत्तरपदं यस्य तस्मादिकन् । शतशब्दात्षष्टिशब्दाच्च परो यः पथिन्शब्दस्तदन्तात्तु षिकन् वाच्य इत्यर्थः ॥—**शतपथिक इति** । वृत्तिकृता तु वार्तिके 'बहुलम्' इति पूरयित्वा 'शातपथः' इत्यणन्तमप्युदाहृतम्, तत्तु भाष्ये न दृष्टम् ॥ षित्त्वफलं दर्शयति—**शतपथिकीति** ॥ **१२७४ अणूबाधनार्थमिति** । भाष्ये तु प्रत्याख्यातमेवेदं सूत्रम्, तद्रीत्या लणिष्यत इति, अनभिधानान्नेति वा बोध्यम् ॥ **१२७५ वसन्ता—**। उक्थादिष्वेव वसन्तादीन् पठित्वा, वसन्तादिषु वा उक्थादीन् पठित्वा, अन्यतरच्छक्यमकर्तुम् ॥—**अथर्वाणमिति** । अथर्वणा प्रोक्त उपचारादथर्वा ॥ अथवा 'तेन प्रोक्तम्' इत्यधिकारे **'ऋषिभ्यो लुग्वक्तव्यः'** वसिष्ठः, विश्वामित्रोऽनुवाक इत्युदाहृत्य **'अथर्वणो वा' अथर्वा, आथर्वणः**-इति भाष्योक्तेः साधुः ॥ **१२७७ गाथिविदथि—**। 'इनण्यनपत्ये' इति सिद्धे अपत्येऽप्यणि प्रकृतिभावार्थमयमारम्भः-गाथिनः । वैदथिनः । कैशिनः । गाणिनः । पाणिनः ॥ **१२७८ ण्यक्षत्रियार्ष—**॥—**कौरव्य इति** । 'कुर्वादिभ्यो ण्यः' तत इञो लुक् । कौरव्यः पुत्रः ॥ ननु तिकादिषु कौरव्यशब्दः पठ्यते, तथा च कौरव्यायणिरिति फिञा भाव्यं, न त्विञेति चेत्, सत्यम् । 'कुरुनादिभ्यो ण्यः' इति क्षत्रियगोत्रे विहितो यो ण्यस्तदन्तं तत्र पठ्यते । प्रकृते तु ब्राह्मणगोत्रप्रत्ययान्तमित्यवधेयम् ॥—**श्वाफल्क इति** । 'ऋष्यन्धक-' इत्यण् । तत इञो लुक्, श्वाफल्कः पुत्रः ॥—**वासिष्ठ इति** । ऋष्यण्, तत इञो लुक् । वासिष्ठः पुत्रः ॥—**तैकायनिरिति** । 'तिकादिभ्यः फिञ्' ततोऽणो लुक् । तैकायनिः पुत्रः ॥—**वामरथा इति** । कुर्वादित्वात् ण्यः । ततो वृद्धाच्छं बाधित्वा 'कण्वादिभ्यो गोत्रे' इति शैषिकोऽण् ॥—**इतीति** । 'ण्यक्षत्रियार्ष-' इत्युदाहृतसूत्रेणेत्यर्थः ॥—**ऋष्यण एवेति** । पाणिनशब्दे तु औत्सर्गिक एवाणिति भावः ॥ नन्विदं 'वाऽन्यस्मिन् सपिण्डे' इति सूत्रस्थभाष्यकैयटाभ्यां विरुध्यते । अत्रेर्युवापत्यानि पुमांसोऽत्रयः, 'इतश्चानिञः' इति ढक्, तदन्ताद्यूनि 'अत इञ्', तस्य 'ण्यक्षत्रिय-' इति लुक्, अत्रिभृगुकुत्स-' इति ढकोऽपि लुक् इत्युक्तत्वात् । 'ऋष्यन्धक-' इत्यण एव ग्रहणे तु ढकोऽग्रहणात्ततः परस्येञो लुङ्न स्यादित्याहुः ॥ वस्तुतस्तु 'दाक्षीपुत्रस्य पाणिनेः' इति भाष्यप्रयोगादस्य साधुत्वमिति ज्ञेयम् ॥—**इञश्चेतीति** । 'यूनि लुक्' इति लुक्यपि प्रत्ययलक्षणेन इञन्तमस्तीति भावः ॥—**गोत्रे य इति** । 'गोत्रमिह शास्त्रीयं, न तु लौकिकमिति तत्र वक्ष्यते' इति भावः ॥—**स्वरे इति** । लुगभावे प्रत्ययस्वरेणान्तोदात्तत्वं स्त्रियां च ङीप्स्यात् । लुकि सति ईकार उदात्तः, टाप् च सिध्यतीति भावः ॥—**अष्टकमिति** । 'संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु' इति 'संख्याया अतिशदन्तायाः कन्' ॥—**संख्याप्रकृतिकादिति** । संख्याप्रकृतिकप्रत्ययान्तादित्यर्थः ॥—**कालापक इति** । कलापिन्शब्दात्प्रोक्तार्थेऽण्, 'सब्रह्मचारी-' इत्युपसंख्यानाट्टिलोपः । ततोऽध्येतर्यण्, तस्य 'प्रोक्ताल्लुक्' इति लुक् । कालापानामाम्नाय इत्यर्थे 'गोत्रचरणाद्वुञ्', ततोऽध्येतृवेदित्रणो न लुक्, स्वरे

---

[1] 'अण इत्यपपाठः, अणो लुगप्राप्तेः, इञ एव लुक्प्राप्तेश्च' इति केचिदाहुः । तन्न । वामरथस्य कण्वादिवत्स्वरवर्जमित्युक्तेः 'कण्वादिभ्यो गोत्रे' इत्यण्प्राप्तेः सुवचत्वात् ॥

१२८० । **छन्दोब्राह्मणानि च तद्विषयाणि** ।४।२।६६। छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानि तद्विषयाणि स्युः । अध्येतृवेदितृप्रत्ययं विना न प्रयोज्यानीत्यर्थः । कठेन प्रोक्तमधीयते–कठाः, वैशम्पायनान्तेवासित्वाण्णिनिः, तस्य 'कठचरकात्–' १४८९ इति लुक्, ततोऽणू, तस्य 'प्रोक्ताल्लुक्' १२७६ ।

॥ इति रक्ताद्यर्थकप्रकरणम् ॥

---

## अथ चातुरर्थिकाः ।

१२८१ । **तदस्मिन्नस्तीति देशे तन्नाम्नि** ।४।२।६७। उदुम्बराः सन्त्यस्मिन्देशे–औदुम्बरः ।

१२८२ । **तेन निर्वृत्तम्** ।४।२।६८। कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी ।

१२८३ । **तस्य निवासः** ।४।२।६९। शिबीनां निवासो देशः शैबः ।

१२८४ । **अदूरभवश्च** ।४।२।७०। विदिशाया अदूरभवं नगरं वैदिशम् । चकारेण प्रागुक्तास्त्रयोऽर्थाः संनिधाप्यन्ते, तेन वक्ष्यमाणप्रत्ययानां चातुरर्थिकत्वं सिध्यति ।

१२८५ । **ओरञ्** ।४।२।७१। अणोऽपवादः । कक्षतु–काक्षतवम् । नद्यां तु परत्वान्मतुप्, इक्षुमती ।

१२८६ । **मतोश्च बह्वजङ्गात्** ।४।२।७२। बह्वच् अङ्गं यस्य मतुपस्तदन्तादञ्, नाऽण् । सैध्रकावतम् । बह्वजिति किम् । आहिमतम् । अङ्गग्रहणं बह्वजिति तद्विशेषणं यथा स्यान्मत्वन्तविशेषणं माभूत् ।

१२८७ । **बह्वचः कूपेषु** ।४।२।७३। अणोऽपवादः । दीर्घवरत्रेण निर्वृत्तो दैर्घवरत्रः कूपः ।

१२८८ । **उदक्च विपाशः** ।४।२।७४। विपाश उत्तरे कूले ये कूपास्तेष्वञ् । अबह्वजर्थ आरम्भः । दत्तेन निर्वृत्तो दात्तः कूपः । उदक् किम् । दक्षिणतः कूपेष्वणेव ।

१२८९ । **सङ्कलादिभ्यश्च** ।४।२।७५। कूपेष्विति निवृत्तम् । सङ्कलेन निर्वृत्तं साङ्कलम् । पौष्कलम् ।

१२९० । **स्त्रीषु सौवीरसाल्वप्राक्षु** ।४।२।७६। स्त्रीलिङ्गेषु एषु देशेषु वाच्येष्वञ् । सौवीरे, दत्तामित्रेण निर्वृत्ता–दात्तामित्री नगरी । साल्वे, वैधूमाग्नी । प्राचि, माकन्दी ।

१२९१ । **सुवास्त्वादिभ्योऽण्** ।४।२।७७। अञोऽपवादः । सुवास्तोरदूरभवं सौवास्तवम् । वर्णु, वार्णवम् । अणूग्रहणं नद्यां मतुपो बाधनार्थम्, सौवास्तवी ।

१२९२ । **रोणी** ।४।२।७८। रोणीशब्दात्तदन्ताच्च अण् । कूपाञोऽपवादः । रौणः । आजकरौणः ।

१२९३ । **कोपधाच्च** ।४।२।७९। अण् । अञोऽपवादः । कार्णच्छिद्रकः कूपः । कार्कवाकवम् । त्रैशङ्कवम् ।

---

त्रियां च विशेषः ॥ **१२८० छन्दोब्राह्मणानि**—। इह मण्डूकप्लुत्याऽनुवृत्तं 'प्रोक्तात्' इति पञ्चम्यन्तं जसन्तत्वेन विपरिणम्यते, 'छन्दोब्राह्मणानि' इत्यनेन सामानाधिकरण्यात् । प्रोक्तशब्दश्च प्रोक्तार्थके प्रत्यये लाक्षणिक इत्याशयेनाह—**प्रोक्तप्रत्ययान्तानीति** ॥—**तद्विषयाणीति** । तच्छब्देन अध्येतृवेदितृप्रत्ययः परामृश्यते, **विषय**शब्दस्त्विहानन्यभाववाची न तु देशकालवाचीत्यभिप्रेत्याह—**प्रत्ययं विना न प्रयोज्यानीत्यर्थ इति** । पाणिनीयं पाणिनीया इतिवदनियमेन प्रयोगे प्राप्ते नियमार्थमेतदिति भावः ॥ छन्दोग्रहणादेव सिद्धे ब्राह्मणग्रहणं चिरन्तनप्रोक्तब्राह्मणानामेव तद्विषयत्वार्थम् । तेनेह न—याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि याज्ञवल्कानि । यञन्तात् 'कण्वादिभ्यो गोत्रे' इत्यण्, 'आपत्यस्य च' इति यलोपः ॥ याज्ञवल्क्यादयो हि पाणिन्यपेक्षया नूतना इति वृत्तिकृतां व्यवहारः ॥ चकारोऽनुक्तसमुच्चयार्थः । तेन काश्यपिनः कौशिकिन इत्यत्र कल्पेऽपि तद्विषयत्वं सिद्धम् । 'काश्यपकौशिकाभ्यामृषिभ्याम्–' इति प्रोक्ते णिनिः, अध्येत्रणो लुक् ॥ छन्दोब्राह्मणानीति किम् ? पाणिनीयं व्याकरणम् ॥ **इति रक्ताद्यर्थकाः** ॥

**१२८१ तदस्मिन्**—। [illegible]प्रथमान्तादस्मिन्निति सप्तम्यन्तार्थे यथाविहितं प्रत्ययः स्यात्, प्रत्ययान्तनामा देशश्चेत् । तत्प्रत्ययान्तं नाम यस्येति बहुव्रीहिः । मतुपोऽपवादः । इतिशब्दस्तु सकललोकप्रसिद्धे देशे यथा स्यात्, न त्वाधुनिकसंकेतितेऽपि–इत्येतदर्थः ॥ उत्तरसूत्रत्रयेऽपि 'देशे तन्नाम्नि' इत्यनुवर्तते ॥ **१२८२ तेन निर्वृत्तम्** । अन्तर्भावितण्यर्थाद्वृत्तेः कर्मणि क्तः ॥ **१२८४ अदूर**–। अदूरमन्तिकम्, तत्र भवतीत्यदूरभवः । निपातनात्सप्तमीसमासः ॥—**चातुरर्थिकत्वमिति**[2] । चतुर्णामर्थानां समाहारश्चतुरर्थी । तत्र भवाश्चातुरर्थिकाः । अध्यात्मादित्वाट्ठञ् ॥ चतुर्ष्वर्थेषु भवा इति तद्धितार्थे द्विगौ तु 'द्विगोर्लुगनपत्ये' इति ठञो लुक् स्यात् ॥ **१२८६ मतोश्च**—। ननु 'मतोर्बह्वचः' इत्येवास्तु । बह्वचो विहितो यो मतुप् तदन्तादिति वैयधिकरण्येन व्याख्यानादिष्टं सिध्यति, किमङ्गग्रहणेनेत्याशङ्कां वारयति—**अङ्गग्रहणमिति** ॥—**मत्वन्तविशेषणमिति** । संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वादङ्गग्रहणाभावे मत्वन्तविशेषणं स्यादेव । ततश्चाहिमतमित्यादावतिप्रसङ्गः स्यादिति भावः ॥ **१२९२ रोणी** । रोणीशब्दः प्रत्ययमुत्पादयतीत्यर्थः । तथा च फलितमाह—**रोणीशब्दादिति** । पञ्चम्याः सौत्रो लुगित्यन्ये ॥—**तदन्तादिति** । 'येन विधिः–' इति सूत्रे भाष्यस्थविशेषवचनात्, विशे-

---

१ **छन्द इति**—छन्दःपदेन गायत्र्यादिच्छन्दोयुतमन्त्राणामेव ग्रहणमिति 'ब्राह्मण'ग्रहणम् । 'जुष्टार्पिते च च्छन्दसि' इत्यत्र तु च्छन्दःपदस्य ब्राह्मणे लक्षणा, 'नित्यं मन्त्रे–' इत्युत्तरसूत्रे मन्त्रग्रहणात् । २ **चातुरर्थिकत्वमिति**—चतुर्णां सूत्राणामर्थाः–चतुरर्थाः, तत्र भवः–चातुरर्थिकः, तत्त्वमित्यर्थः ।

१२९४। **वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः** ।४।२।८०। एभ्यः सप्तदशभ्यः सप्तदश क्रमात्स्युश्चतुरर्थ्याम् । अरीहणादिभ्यो वुञ्, अरीहणेन निर्वृत्तमारीहणकम् । कृशाश्वादिभ्यः–छण्, कार्शाश्वीयम् । ऋश्यादिभ्यः कः, ऋश्यकम् । कुमुदादिभ्यः–ठच्, कुमुदिकम् । काशादिभ्य इलः, काशिलः । तृणादिभ्यः सः, तृणसम् । प्रेक्षादिभ्य इनिः, प्रेक्षी । अश्मादिभ्यो:–रः, अश्मरः । सख्यादिभ्यो ढञ्, साखेयम् । सङ्काशादिभ्यो ण्यः, साङ्काश्यम् । बलादिभ्यो यः, बल्यम् । पक्षादिभ्यः फक्, पाक्षायणः । (ग) पथः पन्थ च । पान्थायनः । कर्णादिभ्यः फिञ्, कार्णायनिः । सुतङ्गमादिभ्य इञ्, सौतङ्गमिः । प्रगद्यादिभ्यो ञ्यः, प्रागद्यः । वराहादिभ्यः कक्, वाराहकः । कुमुदादिभ्यः–ठक्, कौमुदिकः ।

१२९५ । **जनपदे लुप्** ।४।२।८१। जनपदे वाच्ये चातुरर्थिकस्य लुप्स्यात् ।

१२९६ । **लुपि युक्तवत् व्यक्तिवचने** ।१।२।५१। लुपि सति प्रकृतिवल्लिङ्गवचने स्तः । पञ्चालानां निवासो जनपदः पञ्चालाः । कुरवः । अङ्गाः । वङ्गाः । कलिङ्गाः ।

१२९७ । **तदशिष्यं संज्ञाप्रमाणत्वात्** ।१।२।५३। युक्तवद्वचनं न कर्तव्यम्, संज्ञानां प्रमाणत्वात् ।

१२९८ । **लुब्योगाप्रख्यानात्** ।१।२।५४। लुबपि न कर्तव्यः, अवयवार्थस्येहाप्रतीतेः ।

१२९९ । **योगप्रमाणे च तदभावेऽदर्शनं स्यात्** ।१।२।५५। यदि हि योगस्यावयार्थस्येदं बोधकं स्यात्तदा तदभावे न दृश्येत ।

१३०० । **प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्** ।१।२।५६। 'प्रत्ययार्थः प्रधानम्' इत्येवंरूपं वचनमप्यशिष्यम् । कुतः ? अर्थस्य लोकत एव सिद्धेः ।

१३०१ । **कालोपसर्जने च तुल्यम्** ।१।२।५७। 'अतीताया रात्रेः पश्चार्धेनागामिन्याः पूर्वार्धेन च सहितो दिवसोऽद्यतनः' 'विशेषणमुपसर्जनम्' इत्यादि पूर्वाचार्यैः परिभाषितम् । तत्राप्यशिष्यत्वं समानम्, लोकप्रसिद्धेः ।

१३०२। **विशेषणानां चाजातेः** ।१।२।५२। लुबर्थस्य विशेषणानामपि तद्वल्लिङ्गवचने स्तो जातिं वर्जयित्वा । पञ्चाला रमणीयाः । गोदौ रमणीयौ । अजातेः किम् ।

---

षणविशेष्ययोः कामचारमाश्रित्य 'समासप्रत्ययविधौ प्रतिषेधः' इत्यस्य प्रत्याख्यानाद्वा तदन्तविधिरिति भावः ॥ **१२९४ वुञ्छण्** । 'ठकः' इत्यन्तमेकं समस्तपदम् । अरीहणादि त्वपरम् । तत्र प्रथमतः कुमुदान्तानां चतुर्णां द्वन्द्वं विधाय, द्वितीयेन काशादिकुमुदान्तद्वन्द्वेन सह पुनर्द्वन्द्वो बोध्यः । तेन कुमुदशब्दस्य द्विःपाठेऽपि नैकशेषः । आदिशब्दः प्रत्येकं संबध्यत इत्याह—**अरीहणादिभ्य इति** ॥ पक्षाद्यन्तर्गणसूत्रमाह—**पथ इति** ॥ **१२९५ जनपदे लुप्** । तन्नाम्नीत्येव । नेह —उदुम्बराः सन्त्यस्मिन्नौदुम्बरो जनपदः । न ह्यत्र लुबन्तं नामधेयम् ॥ **१२९६** जनपदस्यैकत्वादेकवचने प्राप्ते बहुवचनादिफलकमतिदेशमाह—**लुपि युक्तवदिति** । व्यक्तिवचने किम् ? शिरीषाणामदूरभवो ग्रामः शिरीषाः, 'वरणादिभ्यश्च' इति लुप् । तस्य वनं शिरीषवनम् । इह वनस्पतित्वमतिदिश्येत । ततश्च 'विभाषौषधिवनस्पतिभ्यः' इति णत्वं स्यात् ॥ नन्वत्र शिरीषाणामिति षष्ठीबहुवचनं कुतो नातिदिश्यत इति चेत्, **अत्राहुः**—वचनमिह संख्या, न त्वेकवचनद्विवचनादि । न चैवमपि संख्याबोधकत्वेन श्रुतैव षष्ठी परिगृह्यतामिति वाच्यम् । षष्ठ्यर्थस्य तद्धितवृत्त्यन्तर्गतत्वादुक्तार्थे प्रथमाया एव युक्तत्वादिति ॥—**पञ्चाला इत्यादि** । यद्यप्यत्राभिधेयलिङ्गत्त्वेऽपीष्टसिद्धिः, तथापि कटुबदर्या अदूरभवो ग्रामः कटुबदरीत्यादिसिद्धये प्रकृतिलिङ्गातिदेश इति भावः ॥ **१२९७** पूर्वाचार्यानुरोधेन कृतं सूत्रं संप्रति प्रत्याचष्टे—**तदशिष्यमिति** । पञ्चालाः, अङ्गाः, वङ्गाः, कलिङ्गाः, इत्यादयो जनपदस्य यथायथं बहुवचनाद्यन्ता एव संज्ञाः, न त्वत्र यत्नेन लिङ्गसंख्ये प्रतिपादनीये । आपो दारा इत्यादिषु यथा । न हि तत्र शास्त्रेण लिङ्गसंख्ये प्रतिपाद्येते इति भावः ॥ **१२९८** उपजीवकं प्रत्याख्यायोपजीव्यं प्रत्याचष्टे—**लुब्योगेति** । 'जनपदे लुप्' 'वरणादिभ्यश्च' इति द्विसूत्री लुप्शब्देन विवक्षिता । 'अशिष्यम्' इति संबध्यत एव, तदाह—**लुबपीति** ॥ प्रकृतिप्रत्ययार्थयोः संबन्धो योग इत्याशयेन फलितमाह—**अवयवार्थस्येति** ॥ अप्रख्यानादिति व्याचष्टे—**अप्रतीतेरिति** । पञ्चालादयः शब्दाः क्षत्रियेषु यथा रूढास्तथा जनपदेऽपीति 'तस्य निवासः' 'अदूरभवश्च' इति तद्धितो नैवोत्पद्यते, किमनेन लुपो विधानेनेत्यर्थः ॥ **१२९९ न दृश्येतेति** । विनाऽपि क्षत्रियसंबन्धं पञ्चालादिशब्दो जनपदेषु प्रयुज्यते इति नार्थः सूत्रेणेत्यर्थः ॥ **१३००** प्रसङ्गात्पूर्वाचार्यपरिभाषितमन्यदपि प्रत्याचष्टे—**प्रधानेत्यादिना । १३०२ विशेषणानाम्** । यद्यपि सूत्रपाठे 'लुपि युक्तवत्–' इति सूत्रादनन्तरमेतत्सूत्रं पठित्वा 'तदशिष्यम्–' इत्यारब्धत्वात्तत्रैवेदं व्याख्यातुमुचितम्, तथापि जातेः प्रतिषेधमात्रपरमिदं, न तु युक्तवद्भावपरमित्याशयेन तत्र नोक्तमित्याहुः ॥—**पञ्चाला रमणीया इति** । कथं तर्हि 'पञ्चाला जनपदः सुभिक्षः संपन्नपानीयः' इति प्रयोग इति चेत् । जनपदविशेषणत्वादित्यवेहि ॥ पञ्चालविशेषणत्वाभ्युपगमे तु तद्वल्लिङ्गवचने स्त एव । पञ्चाला जनपदाः सुभिक्षाः संपन्नपा-

पञ्चाला जनपदः । गोदौ ग्रामः । ॐ हरीतक्यादिषु व्यक्तिः । हरीतक्याः फलानि हरीतक्यः । ॐ खलतिकादिषु वचनम् । खलतिकस्य पर्वतस्यादूरभवानि खलतिकं वनानि ॐ मनुष्यलुपि प्रतिषेधः । मनुष्यलक्षणे लुबर्थे विशेषणानां न, लुबन्तस्य तु भवतीत्यर्थः । चञ्चा अभिरूपः ।

१३०३ । वरणादिभ्यश्च ।४।२।८२। अजनपदार्थ आरम्भः । वरणानामदूरभवं नगरं वरणाः ।

१३०४ । शर्करायां वा ।४।२।८३। अस्माच्चातुरर्थिकस्य वा लुप्स्यात् ।

१३०५ । ठक्छौ च ।४।२।८४। शर्करया एतौ स्तः । कुमुदादौ वराहादौ च पाठसामर्थ्यात्पक्षे ठच्छकौ । वाग्रहणसामर्थ्यात्पक्षे औत्सर्गिकोऽण्, तस्य लुब्विकल्पः । षड् रूपाणि—शर्करा, शार्करम्, शार्करिकम्, शर्करीयम्, शार्करिकम्, शार्करकम् ।

१३०६ । नद्यां मतुप् ।४।२।८५। चातुरर्थिकः । इक्षुमती ।

१३०७ । मध्वादिभ्यश्च ।४।२।८६। मतुप् स्याच्चातुरर्थिकः । मधुमान् । अनद्यर्थ आरम्भः ।

१३०८ । कुमुदनडवेतसेभ्यो ड्मतुप् ।४।२।८७। कुमुद्वान् । नड्वान् । वेतस्वान् । आद्ययोः 'झयः–' १८९८ इति, अन्त्ये 'मादुपधायाः–' १८९७ इति वक्ष्यमाणेन वः । ॐ महिषाच्चेति वक्तव्यम् । महिष्मान्नाम देशः ।

१३०९ । नडशादाड्ड्वलच् ।४।२।८८। नड्वलः । 'शादो जम्बालघासयोः'–शाद्वलः ।

१३१० । शिखाया वलच् ।४।२।८९ शिखावलम् ।

१३११ । उत्करादिभ्यश्छः ।४।२।९०। उत्करीयः ।

१३१२ । नडादीनां कुक् च ।४।२।९१। नडकीयम् । (ग) कुञ्चा ह्रस्वत्वं च । कुञ्चकीयः । (ग) तक्षन्नलोपश्च । तक्षकीयः ।

१३१३ । बिल्वकादिभ्यश्छस्य लुक् ।६।४।१५३। नडाद्यन्तर्गता बिल्वकादयः, तेभ्यश्छस्य लुक् तद्धिते परे । बिल्वा यस्यां सन्ति सा बिल्वकीया, तस्यां भवा बैल्वकाः । वेत्रकीया, वैत्रकाः । छस्य किम् । छमात्रस्य लुग्यथा स्यात्कुको निवृत्तिर्माभूत् । अन्यथा (प) संनियोगशिष्टानामिति कुगपि निवर्तेत । लुग्ग्रहणं सर्वलोपार्थम् । लोपो हि यमात्रस्य स्यात् ।

॥ इति तद्धिते चातुरर्थिकप्रकरणम् ॥

---

नीया इति ॥—हरीतक्य इति । 'हरीतक्यादिभ्यश्च' इत्यणो लुप् । तत्र हि 'लुप् च' इत्यतो लुबनुवर्तते ॥—खलतिकमिति । 'वरणादिभ्यश्च' इति लुप् ॥—चञ्चेति । 'संज्ञायाम्' इति कनो 'लुम्मनुष्ये' इति लुप् । चञ्चा–तृणमयः पुमान् ॥ १३०३ वरणादि—। चकारोऽनुक्तसमुच्चयार्थः, तेनास्याकृतिगणत्वं सिद्धम् ॥—वरणा इति । एवं कटुबदरी, शिरीषाः, गोदौ खलतिकमित्यादीन्युदाहर्तव्यानि ॥ १३०८ वत्वस्यासिद्धत्वात्तस्मिन्कर्तव्ये टिलोपो न स्थानिवदित्याशयेनाह—झय इति । नड्वानित्यत्रापि परत्वात् 'झयः' इत्यनेनैव वकारो न तु 'मादुपधायाः' इत्यनेनेति भावः । न चासिद्धत्वात् 'मादुपधायाः' इत्येव तत्र न्याय्यमिति वाच्यम् । 'प्रकरणे प्रकरणमसिद्धं, न तु योगे योगः' इति 'उपसर्गादसमासेऽपि–' इत्यत्र भाष्ये निर्णीतत्वात् ॥ ननु वेतस्वानित्यत्र वेतसशब्दस्य सुबन्तत्वेन पदत्वात् ड्मतुपो डित्त्वसामर्थ्याट्टिलोपे एकदेशविकृतन्यायेन पदत्वात्सस्य रुत्वं स्यात् । न च स्थानिवत्त्वेन निर्वाहः । पूर्वत्रासिद्धे तन्निषेधादिति चेत्, मैवम् । अन्तरङ्गं रुत्वं प्रति बहिरङ्गस्य टिलोपस्यासिद्धत्वात् । न च षाष्ठी बहिरङ्गपरिभाषा त्रैपादिकं न जानातीति वाच्यम् । कार्यकालपक्षाभ्युपगमात् ॥ नन्वेवमपि 'स्वादिषु–' इति सान्तस्य पदत्वे तदाश्रयरुत्वस्यान्तरङ्गत्वाभावाद्बहिरङ्गपरिभाषा न प्रवर्तते इति रुत्वं दुर्वारमेव । न च 'नद्यां मतुप्' इति चतुरर्थ्यां मतुपो विधानाच्चातुरर्थिको ड्मतुप् मत्वर्थीय इति 'तसौ मत्वर्थे' इत्यनेन भत्वं शङ्क्यम् । टिलोपस्य स्थानिवत्त्वात् । न च पदत्वेऽप्येवम् । तस्य रुत्वविधिना सह कार्यकालतया 'पूर्वत्रासिद्धे न' इति निषेधादिति चेत्, अत्राहुः—पदसंज्ञायां यथोद्देशपक्षाश्रयणात् 'पूर्वत्रासिद्धे न' इति निषेधाप्रवर्तनात्स्थानिवत्त्वप्रवृत्त्या सान्तस्यापदत्वादिति ॥ एतेन घटी आमलकीत्यत्र 'स्वादिषु–' इति पदत्वाज्जश्त्वं स्यात्, औत्सीत्यत्र तु संयोगान्तलोपः स्यादिति शङ्कापि परास्तेति दिक् ॥ ननु प्रक्रियालाघवाय ड्वतुबेव विधीयताम्, अथवा 'कुमुदनडवेतसेभ्यो डित्' इति प्रकृतस्य मतुपो डित्त्वमतिदिश्यताम्, किमनेन ड्मतुब्विधानेन ? सत्यम् । अन्यतो विधानार्थं तत् ॥ तत्सिद्धार्थकथनपरं वार्तिकमाह—महिषाच्चेति ॥ १३१० शिखाया—। निर्वृत्ताद्यर्थं, देशे तन्नाम्न्यणो बाधनार्थं चेदम् । 'दन्तशिखात्संज्ञायाम्' इति पञ्चमे वक्ष्यमाणं त्वदेशेऽपि 'शिखावलः' इति रूपसिद्ध्यर्थम् ॥ १३१२ नडादीनाम्—। नड प्लक्ष बिल्व वेणु वेत्र वेतसादयो नडादयः । नडाद्यन्तर्गणसूत्रमाह—कुञ्चेति । एवं तक्षन्नित्यपि । उभयत्रापि षष्ठ्याः सौत्रो लुक् । १३१३ 'ढे लोप–' इत्यतो लोप इत्यनुवर्तमाने लुग्ग्रहणं व्यर्थमित्याशङ्क्याह—सर्वलोपार्थमिति ॥—यमात्रस्येति । न च 'आदेः परस्य' इतीकारस्य भाव्यमिति वाच्यम् । 'सूर्यतिष्य–' इत्यतो यकारसंबद्धस्यैव लोपस्यानुवर्तनादिति भावः ॥ इति चातुरर्थिकप्रकरणम् ॥

---

१ वाग्रहणेति—अन्यथा तत्र पाठसामर्थ्यादेव ठच्छकोर्विकल्पेन लोपे सिद्धे तद्वैयर्थ्यं स्पष्टमेव । २ महिष्मानिति—अत्र 'प्रत्यये भाषायाम्' इत्यनुनासिको न, षकारसवर्णानुनासिकाभावात् । अनुनासिकविधौ सवर्णग्रहणापकर्षेण सवर्णोऽनुनासिक इत्यर्थात् । ३ छस्य किमिति—तेभ्यः परस्य छस्यैव संभव इति प्रश्नः । ४ यमात्रस्येति । लोपग्रहणानुवृत्तौ तत्सम्बद्धस्योपधापदस्याप्यनुवृत्तिः स्यात् । तत्र यदि उपधापदमनुवर्तेत तदा–यमात्रस्य–इति दोषः स्यात् । तदननुवृत्तौ तु 'आदेः परस्य' इति–ईकारलोपः स्यादिति भावः ।

## अथ तद्धितेषु शैषिकाः ।

१३१४ । शेषे ।४।२।९२। अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः[1] शेषः, तत्राणादयः स्युः । चक्षुषा गृह्यते चाक्षुषं रूपम् । श्रावणः शब्दः । औपनिषदः पुरुषः । दृषदि पिष्टा दार्षदाः सक्तवः । उलूखले क्षुण्ण औलूखलो यावकः । अश्वैरुह्यत आश्वो रथः । चतुर्भिरुह्यते चातुरं शकटम् । चतुर्दश्यां दृश्यते चातुर्दशं रक्षः । 'शेषे' १३१४ इति लक्षणं चाधिकारश्च । 'तस्य विकारः' १५१४ इत्यतः प्राक् शेषाधिकारः ।

१३१५ । राष्ट्रावारपाराद्घखौ ।४।२।९३। आभ्यां क्रमाद्घखौ स्तः शेषे । राष्ट्रियः । अवारपारीणः । ❀ **अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम् ।** अवारीणः । पारीणः । पारावारीणः ।

इह प्रकृतिविशेषा द्घादयष्ट्युट्युलन्ताः प्रत्यया उच्यन्ते, तेषां जातादयोऽर्थविशेषाः समर्थविभक्तयश्च वक्ष्यन्ते—

१३१६ । ग्रामाद्यखञौ ।४।२।९४। ग्राम्यः, ग्रामीणः ।

१३१७ । कत्र्यादिभ्यो ढकञ् ।४।२।९५। कुत्सितास्त्रयः कत्रयः, तत्र जातादिः—कात्रेयकः । नागरेयकः । ग्रामादित्यनुवृत्तेः—ग्रामेयकः ।

१३१८ । कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु ।४।२।९६। कौलेयकः श्वा, कौलोऽन्यः । कौक्षेयकोऽसिः, कौक्षोऽन्यः । ग्रैवेयकोऽलङ्कारः, ग्रैवोऽन्यः ।

१३१९ । नद्यादिभ्यो ढक् ।४।२।९७। नादेयम् । माहेयम् । वाराणसेयम् ।

१३२० । दक्षिणापश्चात्पुरसस्त्यक् ।४।२।९८। 'दक्षिणा' इत्याजन्तमव्ययम् । दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः ।

१३२१ । कापिश्याः ष्फक् ।४।२।९९। कापिश्यां जातादि कापिशायनं मधु । कापिशायनी द्राक्षा ।

१३२२ । रङ्कोरमनुष्येऽण्च ।४।२।१००। चात्ष्फक् । राङ्कवो गौः, राङ्कवायणः । मनुष्य इति किम् । राङ्कवको मनुष्यः ।

---

**१३१४ शेषे ॥—लक्षणं चेति ।** [illegible]ष्वर्थेषु सूत्रानुपात्तेषु अणो विधायकमित्यर्थः ॥ ननु लक्षणं तावद्व्यर्थम्, 'तस्येदम्' इत्यनेन चाक्षुषादीनाम्, 'संस्कृतंभक्षाः' इत्यनेन दार्षदादीनां सिद्धेः । तथा अधिकारोऽपि व्यर्थः । तथाहि—अधि-[illegible]ष्वर्थेषु घादीनां ष्ट्युट्युलन्तानां निवृत्तिः, जाताद्यर्थसाकल्यं वा प्रयोजनम् । तत्र निवृत्तिस्तावन्न प्रयोजनम् । आर्द्रका-शालादीनामुत्करादिपाठेन 'इतः प्राचीनेष्वर्थेषु घादयो न प्रवर्तन्ते' इति ज्ञापनात् । अन्यथा 'वृद्धाच्छः' इत्येव सिद्धे तत्पाठस्य वैयर्थ्यप्रसङ्गात् । नाप्यर्थसाकल्यं प्रयोजनम्, जाताधिकारात्प्राक्पाठसामर्थ्यादेव तल्लाभात् । यदि संनिहिते जातार्थ एव घादयः स्युः, तदुत्तरेषु 'भवाद्यर्थेषु 'प्राग्दीव्यतः' इति विशिष्टावधिपरिच्छिन्नेष्वर्थेषु विधीयमानाऽणादय एव स्युः, तदा जाताधिकारानन्तरमेव 'प्रावृषष्ठप्' इत्यादिभिः सह 'राष्ट्रावारपारा-' इत्यादयोऽपि पठ्येरन् । तस्माद्व्यर्थमिदं सूत्रमिति चेत्, **अत्रोच्यते**—'शैषिकात्सरूपः शैषिको न' इति वक्ष्यमाणार्थस्य विषयलाभाय शेषाधिकारस्तावदावश्यकः । शैषिकप्रयुक्तकार्यविशेषं ध्वनयितुं क्रियमाणः शेषाधिकार एव 'शैषिकान्मतुबर्थीयात्' इत्यादिश्लोकं ज्ञापयति । एष च श्लोकः सन्विधौ मतुब्विधौ च भाष्ये पठितः । इह तु सन्नन्ते पठित इति तत्रैव व्याख्यास्यते ॥ अपत्यादिष्वर्थेषु घादीनां निवृत्त्यर्थमप्यधिकार आवश्यकः । न चोक्तज्ञापकेनैव तत्सिद्धिरिति वाच्यम् । ज्ञापकस्य विशेषापेक्षत्वे दोषतादवस्थ्यात्, 'आर्द्रकादिभ्यो यदि छः स्यात्तर्हि चतुरर्थ्यामेव' इति नियमस्यापि संभवाच्च । एवं स्थिते चाक्षुषमित्यादिषु गृह्यमाणत्वादिप्रकारकबोधनाय विधायकत्वमपि तस्य सुवचमिति दिक् ॥ **१३१५ विगृहीतादपीत्यादि ।** वचनमेवेदं, सूत्रे यथासंख्यप्रवृत्त्यर्थ विशिष्टोच्चारणात् ॥ **१३१७ कुत्सितास्त्रय इति ।** इह बहुव्रीहिरपि सुवचः । इहैव निपातनात्कोः कद्भावः । 'कद्भावे त्रावुपसंख्यानम्' इति तु प्रत्याख्येयम् ॥—**'कुल्याया यलोपश्च'** इति गणसूत्रम् । कुल्यायां जातः—कौलेयकः । कत्रि, उम्भि, कुण्डिन, माहिष्मतीत्यादि ॥ **१३२० दक्षिणापश्चा ॥—अव्ययमिति ।** साहचर्यादिति भावः ॥ एवं च दाक्षिणात्य इत्यत्र 'सर्वनाम्नो वृत्तिमात्रे-' इति पुंवद्भावशङ्कैव नास्तीति बोध्यम् ॥—**पाश्चात्य इति ।** कथं तर्हि 'पश्चात्तनैः कश्चन नुद्यमानः' इति । न च दिग्देशवाचिनि पश्चाच्छब्दे सावकाशं त्यकं कालवाचकात् ट्युट्युलौ बाधेते परत्वादिति वाच्यम् । 'अग्रादिपश्चात्-' इति डिमचा ट्युट्युलोर्बाधस्य दुर्वारत्वात् । सत्यम् । पश्चात्तन्वन्ति पश्चात्तना इति कथंचित्समाधेयम् ॥ **१३२१ कापिश्याः ष्फक् ।** कापिशीशब्दात्ष्फक् स्यात् । षित्त्वान्ङीष् । तदाह—**कापिशायनीति ॥ १३२२ रङ्कोरमनुष्ये—।** रङ्कवो जनपदः, ततः 'प्राग्दीव्यतोऽण्' इत्यण्प्रत्ययः प्राप्तः, तद्बाधकत्वेन 'अवृद्धादपि' इति वुञ् प्राप्तः, तमपि बाधित्वा 'ओर्देशे' इति ठञ् प्राप्तः, तस्य तु 'कोपधादण्' बाधकः, ततोऽपि परत्वात्कच्छाद्यणि प्राप्तेऽनेन ष्फगणौ विधीयेते । कोपधत्वादेवाणि सिद्धे कच्छादिषु रङ्कुशब्दस्य पाठो 'मनुष्यतत्स्थयोर्वुञ्' विधानार्थ इति कैयटः । अत एवाह—**राङ्कवको मनुष्य इति ।** क्वचित्तु राङ्कव इति पठ्यते, स तु लेखकप्रमादः ॥ स्यादे-

---

१ **अन्योऽर्थ इति**—विशेष्यतया भासमान इत्यर्थः । एवं चेदंत्वेन भासमानमपत्याद्यपि न शेषः । ध्वनितं चेदं 'तस्येदमित्यपत्येऽपि' इति श्लोकेन ।

**१३२३ । द्युप्रागपागुदक्प्रतीचो यत् ।४।२।१०१।** दिव्यम् । प्राच्यम् । अपाच्यम् । उदीच्यम् । प्रतीच्यम् ।

**१३२४ । कन्थायाष्ठक् ।४।२।१०२।** कान्थिकः ।

**१३२५ । वर्णौ वुक् ।४।२।१०३।** वर्णुर्नदस्तस्य समीपदेशो वर्णुः, तद्विषयार्थवाचिकन्थाशब्दाद्वुक् स्यात् । यथा हि जातं हिमवत्सु कान्थकम् ।

**१३२६ । अव्ययात्त्यप् ।४।२।१०४।** ❀ **अमेहक्वतसित्रेभ्य एव ।** अमा—अन्तिकसहार्थयोः, अमात्यः । इहत्यः । क्वत्यः । ततस्त्यः । तत्रत्यः । परिगणनं किम् । उपरिष्टाद्भव औपरिष्टः । ❀ **अव्ययानां भमात्रे टिलोपः ।** अनित्योऽयम्, बहिषष्टिलोप[1]विधानात् । तेनेह न—आरातीयः । शाश्वतीयः । ❀ **त्यब्नेर्ध्रुव इति वक्तव्यम्** । नित्यः । ❀ **निसो गते ।**—

**१३२७ । ह्रस्वात्तादौ तद्धिते ।८।३।१०१।** ह्रस्वादिणः परस्य सस्य षः स्यात्तादौ तद्धिते । निर्गतो वर्णाश्रमेभ्यो निष्ट्यः—चण्डालादिः । ❀ **अरण्याण्णः[2] ।** आरण्याः सुमनसः । ❀ **दूरादेत्यः ।** दूरेत्यः । ❀ **उत्तरादाहञ् ।** औत्तराहः ।

**१३२८ । ऐषमोह्यःश्वसोऽन्यतरस्याम् ।४।२।१०५।** एभ्यस्त्यब्वा । पक्षे वक्ष्यमाणौ ट्युट्युलौ । ऐषमस्त्यम्, ऐषमस्तनम् । ह्यस्त्यम्, ह्यस्तनम् । श्वस्त्यम्, श्वस्तनम् । पक्षे शौवस्तिकं वक्ष्यते ।

**१३२९ । तीररूप्योत्तरपदादञ्ञ्यौ[3] ।४।२।१०६।** यथासंख्येन । काकतीरम् । पाल्वलतीरम् । शैवरूप्यम् । तीररूप्यान्तादिति नोक्तम्, बहुच्पूर्वान्माभूत्, बाहुरूप्यम् ।

**१३३० । दिक्पूर्वपदादसंज्ञायां ञः ।४।२।१०७।** अणोऽपवादः । पौर्वशालः । असंज्ञायां किम् । संज्ञाभूतायाः प्रकृतेर्माभूत् । पूर्वेषुकामशम्यां भवः—पूर्वैषुकामशमः । 'प्राचां ग्रामनगराणाम्' १४०२ इत्युत्तरपदवृद्धिः ।

**१३३१ । मद्रेभ्योऽञ् ।४।२।१०८।** दिक्पूर्वपदादित्येव । 'दिशोऽमद्राणाम्' १४०१ इति मद्रपर्युदासादादिवृद्धिः—पौर्वमद्रः । आपरमद्रः ।

**१३३२ । उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् ।४।२।१०९।** अञ् स्यात् । शैवपुरम् ।

**१३३३ । प्रस्थोत्तरपदपलद्यादिकोपधादण् ।४।२।११०।** माहिकिप्रस्थः । पालदः । नैलीनकः ।

---

तत्—अमनुष्यग्रहणमिह व्यर्थम् । अपवादेन वुञा तत्र ष्फगणोर्बाधेनामनुष्य एव पर्यवसानात् । अण्ग्रहणमपि व्यर्थमेव, कच्छादित्वादेव तत्सिद्धेः । **अत्राह काशिकाकृत्**—नायं प्रसज्यप्रतिषेधः, किं तु पर्युदासः । तेन मनुष्यभिन्ने प्राणिन्येव ष्फग्विधीयत इति राङ्कवः कम्बल इत्यत्र न ष्फक् । विशेषविहितेन ष्फका अणो बाधा मा भूदित्यण्ग्रहणं क्रियत इति । भाष्ये तु अप्राणिन्यपि ष्फकमङ्गीकृत्येदं द्वयमपि प्रत्याख्यातम् ॥ **१३२३ द्युप्रागपा—॥—दिव्यमिति ।** सूत्रे 'दिव उत्' इत्युत्वेन निर्देश इति भावः ॥ अपाची दक्षिणा दिक् । द्वितीयो वर्णः पकारो न तु दन्त्योष्ठ्यः, 'यदिन्द्र प्रागपागुदक्' इत्यादौ तथा दर्शनादिति स्थितं मनोरमायाम् ॥ केचित्तु 'प्राच्यवाचीप्रतीच्यस्ताः' इत्यमरकोशे अवाचीति दन्त्योष्ठ्यपाठं क्वाचित्कं पुरस्कृत्य सूत्रेऽपि 'अवाक्' इति पठित्वा अवाच्यमित्युदाहरन्ति । 'प्रागपाक्' इति वेदे तु व्यत्ययेन वकारस्य पकार इति तेषामाशयः । प्रागादयोऽस्तात्यन्ता अव्ययाः, तद्भिन्नास्त्वनव्ययाः, उभयेषामपीह ग्रहणमविशेषात् ॥ कथं तर्हि 'संस्काराः प्राक्तना इव' इति । **अत्राहुः**—कालवाचिनः प्राक्शब्दाद्यतं बाधित्वा परत्वात् ट्युट्युलौ बोध्याविति ॥ **१३२५ वर्णौ वुक् ॥—वर्णुरिति ।** 'अदूरभवश्च' इत्यर्थे सुवास्त्वादित्वादणि 'जनपदे लुप्' इति लुप् ॥—**अमात्य इति ।** अमाशब्दः समीपवाची स्वरादिः । अमा=समीपे भव इत्यर्थः ॥ **१३२७ ह्रस्वात्तादौ—।** पदान्तत्वात्षत्वस्याप्राप्तावयमारम्भः । आदिग्रहणं तु व्यर्थम्, 'यस्मिन्विधिः–' इत्येव सिद्धेः । ह्रस्वात्किम् ? गीस्तरा । धूस्तरा ॥ तादौ किम् ? सर्पिस्साद्भवति ॥ तद्धिते किम् ? सर्पिस्तरति ॥—**तिङन्तस्य प्रतिषेधो वाच्यः ।** भिन्द्युस्तराम् ॥—**दूरेत्य इति ।** दूरादागत इत्यादिरर्थः ॥—**औत्तराह इति ।** इहाद्युदात्तत्वं स्त्रियां टाप् च बोध्यः ॥ यदा तु 'उत्तराच्च' इत्याहिप्रत्यये ततोऽण् क्रियते, 'अमेह–' इति परिगणनेन त्यपोऽभावात् । तदा औत्तराहशब्दोऽन्तोदात्तः, स्त्रियां ङीप् च विशेषः ॥ **१३२८ वक्ष्यमाणाविति ।** 'सायंचिरम्–' इत्यादिनेति शेषः ॥—**वक्ष्यत इति ।** 'श्वसस्तुट् च' इत्यत्र ॥ **१३३० दिक्पूर्व—।** 'असंज्ञायाम्' इत्यत्र सौत्रत्वात्पञ्चम्यर्थे सप्तमीत्याशयेनाह—**संज्ञाभूताया इति ॥ १३३१ मद्रेभ्योऽञ् ।** बहुवचननिर्देशाज्जनपदवाची गृह्यते, न तु भद्रपर्यायः ॥—**दिशोऽमद्राणामिति ।** 'दिग्वाचकादुत्तरपदस्य जनपदवाचिनो मद्रभिन्नस्याचामादेर्वृद्धिः स्यात् ञिति णिति किति च तद्धिते' इति सूत्रार्थः ॥—**पौर्वमद्र इति ।** मद्रैकदेशे मद्रशब्दस्य वृत्तौ दिक्शब्देन सामानाधिकरण्यात् 'तद्धितार्थ–' इति समासः ॥ **१३३२ उदीच्य—।** दिग्ग्रहणं निवृत्तम् ॥ उदीच्यग्रामात्किम् ? माथुरः ॥ बह्वचः किम् ? ध्वाजः ॥ पिप्पल्यादिङीषन्तो ध्वजीशब्दः । अन्तोदात्तात्किम् ? शार्कराधानम् । शर्कराधानशब्दे धाशब्दाकार उदात्तः, कृदुत्तरपदप्रकृतिस्वरेण लित्स्वरस्यावस्थानात् ॥—**शैवपुरमिति ।** 'प्रस्थपुरवहान्ताच्च' इति वुञ् न भवति, 'वृद्धात्' इति तत्रानुवृत्तेः ॥ **१३३३ प्रस्थोत्तर—।** उदीच्यग्रामलक्षणस्याञोऽपवादः ॥—

---

१ **टिलोपविधानादिति**—'बहिषष्टिलोपो यञ्च' इत्यनेनेति भावः । २ **अरण्याण्ण इति**—अणि हि सति ङीप् स्यादिति भावः । ३ 'तीररूपोत्तरपदादञ्ञ्यौ' इति बालमनोरमासम्मतः पाठः । भाष्येतु तीररूप्येति दृश्यते ।

१३३४ । **कण्वादिभ्यो गोत्रे** ।४।२।१११। एभ्यो गोत्रप्रत्ययान्तेभ्योऽण् स्यात् । कण्वो गर्गादिः, काण्व्यस्य छात्राः–काण्वाः ।

१३३५ । **इञश्च** ।४।२।११२। गोत्रे य इञ् तदन्तादण् स्यात् । दाक्षाः । गोत्रे किम् । सौतङ्गमेरिदं–सौतङ्गमीयम् । गोत्रमिह शास्त्रीयं, न तु लौकिकम् । तेनेह न–पाणिनीयम् ।

१३३६ । **न द्व्यचः प्राच्यभरतेषु** ।४।२।११३। 'इञश्च' १३३५ इत्यणोऽपवादः । प्रौष्ठीयाः । काशीयाः । भरतानां प्राच्यत्वेऽपि पृथगुपादानम्–अन्यत्र प्राच्यग्रहणे भरतानामग्रहणस्य लिङ्गम् ।

१३३७ । **वृद्धिर्यस्याचामादिस्तद्वृद्धम्** ।१।१।७३। यस्य समुदायस्याचां मध्ये आदिर्वृद्धिस्तद्वृद्धसंज्ञं स्यात् ।

१३३८ । **त्यदादीनि च** ।१।१।७४। वृद्धसंज्ञानि स्युः ।

१३३९ । **वृद्धाच्छः** ।४।२।११४। शालीयः । मालीयः । तदीयः ।

१३४० । **एङ् प्राचां देशे** ।१।१।७५। एङ् यस्याचामादिस्तद्वृद्धसंज्ञं वा स्याद्देशाभिधाने । एणीपचनीयः । गोनर्दीयः । भोजकटीयः । पक्षेऽणि–ऐणीपचनः, गौनर्दः, भौजकटः । एङ् किम् । आहिच्छत्रः । कान्यकुब्जः । ॐ **वा नामधेयस्य वृद्धसंज्ञा वक्तव्या** । दैवदत्तः, देवदत्तीयः ।

१३४१ । **भवतष्ठक्छसौ** ।४।२।११५। वृद्धाद्भवत एतौ स्तः । भावत्कः । जश्त्वम्, भवदीयः । 'वृद्धात्' इत्यनुवृत्तेः शत्रन्तादणेव, भावतः ।

१३४२ । **काश्यादिभ्यष्ठञ्ञिठौ** ।४।२।११६। इकार उच्चारणार्थः । काशिकी, काशिका । बैदिकी, बैदिका । (ग) **आपदादिपूर्वपदात्कालान्तात्** । आपदादिराकृतिगणः । आपत्कालिकी, आपत्कालिका ।

१३४३ । **वाहीकग्रामेभ्यश्च** ।४।२।११७। वाहीकग्रामवाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ स्तः । छस्यापवादः । कास्तीरं नाम वाहीकग्रामः । कास्तीरिकी, कास्तीरिका ।

१३४४ । **विभाषोशीनरेषु** ।४।२।११८ एषु ये ग्रामास्तद्वाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ वा स्तः । सौदर्शनिकी, सौदर्शनिका, सौदर्शनीया ।

१३४५ । **ओर्देशे ठञ्** ।४।२।११९। उवर्णान्ताद्देशवाचिनष्ठञ् । निषादकर्पूः–नैषादकर्षुकः, 'केऽणः' ८३५ इति ह्रस्वः । देशे किम् । पटोश्छात्राः–पाटवाः । ञिठं व्यावर्तयितुं ठञ्ग्रहणम् । वृद्धाच्छं परत्वादयं बाधते, दाक्षिकर्षुकः ।

१३४६ । **वृद्धात्प्राचाम्** ।४।२।१२०। प्राग्देशवाचिनो वृद्धादेवेति नियमार्थं सूत्रम् । आढकजम्बुकः । शाकजम्बुकः । नेह–मल्लवास्तु, माल्लवास्तवः ।

१३४७ । **धन्वयोपधाद्वुञ्** ।४।२।१२१। धन्वविशेषवाचिनो यकारोपधाच्च देशवाचिनो वृद्धाद्वुञ् स्यात् । ऐरावतं धन्व, ऐरावतकः । साङ्काश्यकाम्पिल्यशब्दौ 'वुञ्छण्–' १२९४ आदिसूत्रेण ण्यान्तौ, साङ्काश्यकः । काम्पिल्यकः ।

१३४८ । **प्रस्थपुरवहान्ताच्च** ।४।२।१२२। एतदन्ताद्वृद्धाद्देशवाचिनो वुञ् स्यात् । छस्यापवादः । माला-

---

**पालद इति** । पलदीति ईकारान्त इत्येके । नान्त इत्यन्ये । नलोपे सति यणादेशात्संहिता तुल्यैव ॥ वाहीकशब्दः कोपधोऽपि पलद्यादिषु पठ्यते परं छं बाधितुम् । अन्यथा अणं बाधित्वा परत्वाच्छ एव स्यात् । कोपधप्रयुक्तोऽण् अवृद्धे सावकाश इति ॥ यक्लोमनि भवो याक्लोमः । 'अन्' इति प्रकृतिभावस्तु न, गणेऽस्मिन्नलोपनिपातनादिति हरदत्तादयः ॥ १३३५ **सौतंगमेरिति** । सुतंगमादिभ्यश्चातुरर्थिक इञ् ॥—**शास्त्रीयमिति** । ननु 'अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यते' इति चेत्, **अत्राहुः**—'पूर्वसूत्रे गोत्रग्रहणेन पौत्रप्रभृति गोत्रं गृह्यते, कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितस्तदन्तेभ्यः–' इति गोत्रप्रत्ययानुवादेन तत्राण्विधानात् । कण्वादयश्च गर्गाद्यन्तर्गताः ॥ 'गर्गादिभ्यो यञ्' इत्यत्र तु 'गोत्रे कुञ्जादिभ्यः–' इत्यतो गोत्र इत्यनुवर्तते, न तु शास्त्रीयगोत्रमेव गृह्यते अपत्याधिकारस्थत्वात् । तदेव हि 'इञश्च' इति सूत्रेऽनुवर्तते इति ॥ १३३६ **न द्व्यचः—**॥—**अपवाद इति** । प्रतिषेध इत्यर्थः ॥—**भरतानामग्रहणस्येति** । तेन 'इञः प्राचाम्' इति भरतेभ्यो युवप्रत्ययस्य लुङ् न भवति । औद्दालकिः पिता, औद्दालकायनः पुत्रः, इति 'आर्हादगोपुच्छ–' इति सूत्रे कैयटः ॥ १३४१ **भवतः—**। छादिरयं प्रत्ययो न तु शादिः, पदसंज्ञार्थसित्करणादित्याशयेनाह—**जश्त्वमिति** ॥ १३४२ **काश्यादिभ्यः—**॥—**इकार उच्चारणार्थ इति** । उभयत्र ञकार एवानुबन्धः, तस्य व्यत्यासपाठस्तु स्त्रीप्रत्यये विशेषार्थ इति भावः ॥—**आपदादीति** । गणसूत्रमिदम् ॥ १३४६ **वृद्धादेवेति** । 'वृद्धाच्चेत्प्राचामेव' इति विपरीतनियमस्तु न भवति, अप्राग्देशवाचिनो वृद्धस्य उवर्णान्तस्याभावात् ॥ १३४७ **धन्वयोपधात्—**। धन्वेति न स्वरूपपर्याययोर्ग्रहणं, वृद्धत्वासंभवादित्याशयेनाह—**धन्वविशेषेति** ॥—**ऐरावतं धन्वेति** । यद्यपि 'समानौ मरुधन्वानौ' इत्यमरेण पुंस्त्वमुक्तम्, तथापि 'आष्टकं नाम धन्व' इति भाष्ये ह्रस्वपाठान्नपुंसकोऽपि धन्वशब्दोऽस्त्येवेति बो-

---

१ **नामधेयस्येति**—अत्र नामशब्देनाधुनिकसंकेतितमेव गृह्यते, अत एव 'एङ् प्राचां देशे' इति सार्थकम्, घटीयमित्यादि तु गहादित्वात्सिद्धम् इति केचित् । अन्ये तु रूढ्या बोधकशब्दत्वमेवात्र नामत्वम् । 'एङ् प्राचाम्' इति तु नियमार्थम्–देशवृत्तेश्चेदेङादेरेवेति, एवं च घटीयाद्याः प्रयोगा अनेनैव साध्यन्त इत्याहुः ।

प्रस्थकः । नान्दीपुरकः । पैलुवहकः । पुरान्तग्रहणमप्राग्र्थम् । प्राग्देशे तूत्तरेण सिद्धम् ।

१३४९ । **रोपधेतोः प्राचाम्** ।४।२।१२३। रोपधादीकारान्ताच्च प्राग्देशवाचिनो वृद्धाद्वुञ् स्यात् । पाटलीपुत्रकः । ईतः—काकन्दकः ।

१३५० । **जनपदतदवध्योश्च** ।४।२।१२४। जनपदवाचिनस्तदवधिवाचिनश्च वृद्धाद्वुञ् स्यात् । आदर्शकः । त्रैगर्तकः ।

१३५१ । **अवृद्धादपि बहुवचनविषयात्** ।४।२।१२५। अवृद्धाद्वृद्धाच्च जनपदतदवधिवाचिनो बहुवचनविषयात्प्रातिपदिकाद्वुञ् स्यात् । अवृद्धादणो वृद्धाच्छस्यापवादः । अवृद्धाज्जनपदात्—आङ्गकः । अवृद्धाज्जनपदावधेः—आजमीढकः । वृद्धाज्जनपदात्—दार्वकः । वृद्धाज्जनपदावधेः—कालञ्जरकः । विषयग्रहणं किम् । एकशेषेण बहुत्वे माभूत्, वर्तनी च वर्तनी च वर्तनी च वर्तन्यः, तासु भवो वार्तनः ।

१३५२ । **कच्छाग्निवक्त्रवर्तोत्तरपदात्** ।४।२।१२६। देशवाचिनो वृद्धादवृद्धाच्च वुञ् स्यात् । दारुकच्छकः । काण्डाग्नकः । सैन्धुवक्त्रकः । बाहुवर्तकः ।

१३५३ । **धूमादिभ्यश्च** ।४।२।१२७। देशवाचिभ्यो वुञ् । धौमकः । तैर्थकः ।

१३५४ । **नगरात्कुत्सनप्रावीण्ययोः** ।४।२।१२८। नगरशब्दाद्वुञ् स्यात्कुत्सने प्रावीण्ये च गम्ये । नागरकश्चौरः शिल्पी वा । कुत्सनेति किम् । नागरा ब्राह्मणाः ।

१३५५ । **अरण्यान्मनुष्ये** ।४।२।१२९। वुञ् । 'अरण्याण्णः' इत्यस्यापवादः । ※ **पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यम्** । आरण्यकः पन्थाः, अध्यायः, न्यायः, विहारः, मनुष्यः, हस्ती वा । ※ **वा गोमयेषु** । आरण्यकाः—आरण्या वा गोमयाः ।

१३५६ । **विभाषा कुरुयुगन्धराभ्याम्** ।४।२।१३०। वुञ् । कौरवकः, कौरवः । यौगन्धरकः, यौगन्धरः ।

१३५७ । **मद्रवृज्योः कन्** ।४।२।१३१। जनपदवुञोऽपवादः । मद्रेषु जातो मद्रकः । वृजिकः ।

१३५८ । **कोपधादण्** ।४।२।१३२। माहिषिकः ।

१३५९ । **कच्छादिभ्यश्च** ।४।२।१३३। देशवाचिभ्योऽण् । वुञादेरपवादः । काच्छः । सैन्धवः ।

१३६० । **मनुष्यतत्स्थयोर्वुञ्** ।४।२।१३४। कच्छाद्यणोऽपवादः । कच्छे जातादिः काच्छको मनुष्यः । काच्छकं हसितम् । मनुष्य—इति किम् । काच्छो गौः ।

१३६१ । **अपदातौ साल्वात्** ।४।२।१३५। साल्वशब्दस्य कच्छादित्वाद्वुञि सिद्धे नियमार्थमिदम्—अपदातावेवेति । साल्वको ब्राह्मणः । अपदातौ किम् । साल्वः पदातिर्व्रजति ।

१३६२ । **गोयवाग्वोश्च** ।४।२।१३६। साल्वाद्वुञ् । कच्छाद्यणोऽपवादः । साल्वको गौः । साल्विका यवागूः । साल्वमन्यत् ।

१३६३ । **गर्तोत्तरपदाच्छः** ।४।२।१३७। देशे । अणोऽपवादः । वृकगर्तीयम् । उत्तरपदग्रहणं बह्वच्पूर्वनिरासार्थम् ।

१३६४ । **गहादिभ्यश्च** ।४।२।१३८। छः स्यात् । गहीयः । (ग) **मुखपार्श्वतसोर्लोपश्च** । मुखतीयम् । पार्श्वतीयम् । अव्ययानां भमात्रे टिलोपस्यानित्यतां ज्ञापयितुमिदम् । (ग) **कुग्जनस्य परस्य च** । जनकीयम् । परकीयम् । (ग) **देवस्य च** । देवकीयम् । (ग) **स्वस्य च** । स्वकीयम् । (ग) **वेणुकादिभ्यश्छण्वाच्यः** । वैणुकीयम् । वैत्रकीयम् । औत्तरपदकीयम् ।

---

ध्यम् ॥ १३४८ **उत्तरेणेति** । रोपधत्वादिति भावः ॥ १३५० **जनपद—** । स चासौ अवधिश्चेति कर्मधारयाज्जनपदरूप एवावधिर्लभ्यते । न च जनपदत्वादेव सिद्धे अवधिग्रहणं व्यर्थम्, 'वुञेव यथा स्यान्नान्यत्' इत्येतदर्थं तस्यावश्यकत्वात् । अत एव जनपदावधिवाचिनस्त्रिगर्तशब्दात् 'गर्तोत्तरपदात्—' इति छो न भवति, किंतु 'अवृद्धादपि बहुवचनविषयात्' इत्युत्तरसूत्रेण वुञेव भवतीत्याशयेनोदाहरति—**त्रैगर्तक इति** । 'जनपदतदवध्योः—' इति सूत्रे जनपदावधिवाचिन उदाहरणं तु 'श्यामायनकः' इत्यादि बोध्यम् ॥ १३५४ **नागरा ब्राह्मणा इति** । कत्र्यादिषु माहिष्मतीति संज्ञाशब्दसाहचर्यात्संज्ञाभूतनगरशब्दस्यैव ढकञा नागरेयकमिति भाव्यमिति भावः ॥ १३५६ **विभाषा कुरु—** । कुरुशब्दः कच्छादिषु पठ्यते तत्सामर्थ्यात्पक्षेऽण् सिद्ध इति परिशेषाद्विभाषाग्रहणं युगन्धरार्थमेव ॥ 'अवृद्धादपि—' इति नित्यप्राप्तो वुञ् अनेन विकल्प्यते । मनुष्यतत्स्थयोस्तु परत्वान्नित्य एव वुञ् । कौरवको मनुष्यः । कौरवकमस्य हसितम् । एतदर्थमेवास्य कच्छादौ पाठः । अन्यथा अनयैव विभाषया वुञणोः सिद्धौ किं तेनेति भावः ॥ १३५९ **सैन्धव इति** । 'ओर्देशे—' इति ठञ् प्राप्तः ॥ १३६१ **वुञि सिद्धे इति** । 'मनुष्यतत्स्थयोः—' इत्यनेन ॥ १३६४ **गहादिभ्यश्च** । एभ्यो देशवाचिभ्यश्छः स्यात् । पूर्वपक्षादिशब्देभ्यस्तु देशवाचित्वाभावेऽपि पाठसामर्थ्याच्छः ॥—**मुखपार्श्वतसोरिति** । गणसूत्रमिदम् । सप्तम्यन्ताभ्यामाभ्यामाद्यादित्वात्तसिः ॥—**मुखतीयमिति** । मुखे जातमित्याद्यर्थे तसन्ताच्छः । 'अलोऽन्त्यस्य' इति तसः सकारस्य लोपे 'यस्येति च' इत्यकारलोपः ॥—**कुग्जनस्येति** । इदमपि गणसूत्रम् ॥—**स्वकीयमिति** । स्वार्थिककन्नन्तात्स्वशब्दाद्गहादेराकृतिगणत्वाच्छः । देशवाचित्वाभावेऽपि पूर्वपक्षादिवद्बोध्यः ॥ अत एव 'लुब्योगाप्रख्यानात्' इति सूत्रे 'न हि स्वकी-

१३६५। **प्राचां कटादेः** ।४।२।१३९। प्राग्देशवाचिनः कटादेश्छः स्यात् । अणोऽपवादः । कटनगरीयम् । कटघोषीयम् । कटपल्वलीयम् ।

१३६६ । **राज्ञः क च** ।४।२।१४०। वृद्धत्वाच्छे सिद्धे तत्सन्नियोगेन कादेशमात्रं विधीयते । राजकीयम् ।

१३६७ । **वृद्धादकेकान्तखोपधात्** ।४।२।१४१। अक इक एतदन्तात्खोपधाच्च वृद्धाद्देशवाचिनश्छः स्यात् । ब्राह्मणकः, नाम जनपदो यत्र ब्राह्मणा आयुधजीविनः, तत्र जातो ब्राह्मणकीयः । शाल्मलिकीयः । आयोमुखीयः ।

१३६८ । **कन्थापलदनगरग्रामह्रदोत्तरपदात्** ।४।२।१४२। कन्थादिपञ्चकोत्तरपदाद्देशवाचिनो वृद्धाच्छः स्यात् । ठञ्ञिठादेरपवादः । दाक्षिकन्थीयम् । दाक्षिपलदीयम् । दाक्षिनगरीयम् । दाक्षिग्रामीयम् । दाक्षिह्रदीयम् ।

१३६९ । **पर्वताच्च** ।४।२।१४३। पर्वतीयः ।

१३७० । **विभाषाऽमनुष्ये**[1] ।४।२।१४४। मनुष्यभिन्नेऽर्थे पर्वताच्छो वा स्यात् । पक्षेऽण् । पर्वतीयानि–पार्वतानि वा फलानि । अमनुष्ये किम् । पर्वतीयो मनुष्यः ।

१३७१ । **कृकणपर्णाद्भारद्वाजे** ।४।२।१४५। भारद्वाजदेशवाचिभ्यामाभ्यां छः । कृकणीयम् । पर्णीयम् । भारद्वाजे किम् । कार्कणम् । पार्णम् ।

१३७२ । **युष्मदस्मदोरन्यतरस्यां खञ्च** ।४।३।१। चाच्छः । पक्षेऽण् । युवयोर्युष्माकं वा अयं युष्मदीयः । अस्मदीयः ।

१३७३ । **तस्मिन्नणि च युष्माकास्माकौ** ।४।३।२। युष्मदस्मदोरेतावादेशौ स्तः खञ्यणि च । यौष्माकीणः, आस्माकीनः । यौष्माकः, आस्माकः ।

१३७४ । **तवकममकावेकवचने** ।४।३।३। एकार्थवाचिनोर्युष्मदस्मदोस्तवकममकौ स्तः खञ्यणि च । तावकीनः, तावकः । मामकीनः, मामकः । छे तु—

१३७५ । **प्रत्ययोत्तरपदयोश्च**[2] ।७।२।९८। मपर्यन्तयोरेकार्थयोस्त्वमौ स्तः प्रत्यये उत्तरपदे च । त्वदीयः । मदीयः ।

१३७६ । **अर्धाद्यत्** ।४।३।४। अर्ध्यः ।

१३७७ । **परावराधमोत्तमपूर्वाच्च** ।४।३।५। परार्ध्यम् । अवरार्ध्यम् । अधमार्ध्यम् । उत्तमार्ध्यम् ।

१३७८ । **दिक्पूर्वपदाट्ठञ्च** ।४।३।६। चाद्यत् । पौर्वार्धिकम्, पूर्वार्ध्यम् ।

१३७९ । **ग्रामजनपदैकदेशादञ्ठञौ** ।४।३।७। ग्रामैकदेशवाचिनो जनपदैकदेशवाचिनश्च दिक्पूर्वपदादर्धान्तादञ्ठञौ स्तः । इमेऽस्माकं ग्रामस्य जनपदस्य वा पौर्वार्धाः, पौर्वार्धिकाः । ग्रामस्य पूर्वस्मिन्नर्धे भवा इति तद्धितार्थे समासः । ठञ्ग्रहणं स्पष्टार्थम् । अञ्चेत्युक्ते यतोऽप्यनुकर्षः संभाव्येत ।

१३८० । **मध्यान्मः** ।४।३।८। मध्यमः ।

१३८१ । **अ सांप्रतिके** ।४।३।९। मध्यशब्दादकार-

---

यस्यैव प्रत्याख्यानम्' इति न्यासकारोक्तिः संगच्छते ॥ केवलात्स्वशब्दादणेव । सौवम् । एतच्च 'द्वारादीनां च' इत्यत्र आकरे उदाहृतम् । स्वीयमित्यत्र तु 'प्राक्क्रीताच्छः' । अन्तरशब्दात्तु गहादित्वाच्छे तदन्तेन नशब्दस्य समासे स्वार्थे कनि च 'नान्तरीयकम्' इति भवति । अविनाभूतमित्यर्थः ॥ **१३६७ वृद्धादके—॥—ब्राह्मणकीय इति** । 'कोपधादण्' इत्यण् प्राप्तः ॥—**आयोमुखीय इति** । वाहीकग्रामलक्षणौ ठञ्ञिठाविह प्राप्तौ ॥ **१३६८ ठञ्ञिठादेरिति** । आदिशब्देन 'रोपधेतोः–' इत्यादिना प्राप्तस्य वुञः ॥ **१३६९ पर्वतीय इति** । 'तत्र जन्यं रघोर्घोरं पार्वतीयैर्गणैरभूत्' इत्यत्र तु 'पर्वतीयस्य राज्ञ इमे' इत्यर्थे छान्तादण् ॥ **१३७१ कृकण—**। भारद्वाजशब्दोऽत्र देशवचनः, स च न प्रत्ययार्थः, किं तु प्रकृतिविशेषणमित्याह—**भारद्वाजदेशेत्यादिना ॥ १३७२ युष्मदस्मदोः—**। 'त्यदादीनि च' इति वृद्धत्वान्नित्ये छे प्राप्ते खञणोरपि विधानार्थमिदम् ॥—**पक्षे अणिति** । अन्यतरस्यांग्रहणादिति भावः ॥ तथा चैते त्रयः प्रत्यया इति वैषम्याद्यथासंख्यं न भवन्तीति केचित् ॥ मनोरमायां तु यथासंख्यनिवारणाय योगविभागः कृतः । तथा हि—**'युष्मदस्मदोरन्यतरस्याम्'** । आभ्यां छो वा स्यात् । 'त्यदादीनि च' इति वृद्धत्वान्नित्ये छे प्राप्ते विकल्पोऽयम् । ततः 'खञ्च' । एवमुत्तरसूत्रेऽपि योगविभागो बोध्यः । तेन आदेशयोः खञण्भ्यां यथासंख्यं नेत्यादि ॥—**युवयोरित्यादि** । एकवचने तवकममकादेशविधानादेकवचनान्तेन विग्रहोऽत्र न कृतः ॥ **१३७३ तस्मिन्नणि च—**। तस्मिन्निति साक्षाद्विहितः खञ् निर्दिश्यते, न तु चानुकृष्टः ॥ निमित्तयोरदेशौ प्रति यथासंख्यं तु न भवति, 'खञणोः–' इति वक्तव्ये पृथग्विभक्तिनिर्देशसामर्थ्यात् । स्थान्यादेशयोस्तु इष्यत एव तत् ॥ **१३७४ तवक—**। इह पूर्ववदेव निमित्तयोः खञणोरादेशौ प्रति यथासंख्यं न भवति, किंतु स्थान्यादेशयोरेवेत्याशयेनोदाहरति—**तावकीनः । मामकीन इति ॥ १३७७ परावरा—**। 'परावराधमोत्तमेभ्यः' इत्येव वक्तव्ये पूर्वग्रहणं पूर्वविप्रतिषेधसूचनार्थम् । तेन दिक्शब्दयोः परावरयोरर्धशब्देन समासे उत्तरसूत्रप्राप्तावपि ठञ्यतौ बाधित्वा यदेव भवति ॥ **१३७८ दिक्पूर्वे—**। पदग्रहणं स्वरूपविधिनिरासार्थमित्याहुः ॥ **१३८१ अ सांप्रतिके** । संप्रतीत्यव्ययं

---

१ **अमनुष्ये इति**—अमनुष्यशब्दोऽत्र यौगिकः, व्याख्यानात्, न तु 'सभाराजाऽमनुष्यपूर्वा' इत्यत्रेव रूढ्या रक्षःपिशाचादिबोधकः । २ **उत्तरपदे**—'त्वत्पुत्रः' 'मत्पुत्रः' इत्यादावुदाहरणानि ॥

प्रत्ययः स्यात्सांप्रतिकेऽर्थे । उत्कर्षापकर्षहीनः 'मध्यः' वैयाकरणः । मध्यं दारु, नातिह्रस्वं नातिदीर्घमित्यर्थः ।

१३८२ । **द्वीपादनुसमुद्रं यञ्** ।४।३।१०। समुद्रस्य समीपे यो द्वीपस्तद्विषयाद्द्वीपशब्दाद्यञ् स्यात् । द्वैप्यम् । द्वैप्या ।

१३८३ । [1]**कालाट्ठञ्** ।४।३।११। कालवाचिभ्यष्ठञ् स्यात् । मासिकम् । सांवत्सरिकम् । सायंप्रातिकः । पौनःपुनिकः । कथं तर्हि—शार्वरस्य तमसो निषिद्धये-इति कालिदासः, अनुदितौषसरागा-इति भारविः, समानकालीनम्, प्राक्कालीनम्, इत्यादि च ? अपभ्रंशा एवैत इति प्रामाणिकाः । 'तत्र जातः' १३९५ इति यावत्कालाधिकारः ।

१३८४ । **श्राद्धे शरदः** ।४।३।१२। ठञ् स्यात् । ऋत्वणोऽपवादः । शारदिकं श्राद्धम् ।

१३८५ । **विभाषा रोगातपयोः** ।४।३।१३। शारदिकः-शारदो वा रोग आतपो वा । एतयोः किम् । शारदं दधि ।

१३८६ । **निशाप्रदोषाभ्यां च** ।४।३।१४। वा ठञ् स्यात् । नैशिकम्, नैशम् । प्रादोषिकम्, प्रादोषम् ।

१३८७ । **श्वसस्तुट् च** ।४।३।१५। श्वस्शब्दाट्ठञ् वा स्यात्, तस्य तुडागमश्च ।

१३८८ । **द्वारादीनां च** ।७।३।४। द्वार, स्वर, व्यल्कश, स्वस्ति, स्वर्, स्फ्यकृत्, स्वादु, मृदु, श्वस्, श्वन्, स्व, एषां न वृद्धिरैजागमश्च । शौवस्तिकम् ।

१३८९ । [2]**संधिवेलाद्यृतुनक्षत्रेभ्योऽण्** ।४।३।१६। संधिवेलादिभ्य ऋतुभ्यो नक्षत्रेभ्यश्च कालवृत्तिभ्योऽण् स्यात् । संन्धिवेलायां भवं-सान्धिवेलम् । ग्रैष्मम् । तैषम् । सन्धिवेला, संध्या, अमावस्या, त्रयोदशी, चतुर्दशी, पौर्णमासी, प्रतिपत् । (ग) **संवत्सरात्फलपर्वणोः** । सांवत्सरं फलं पर्व वा । सांवत्सरिकम्-अन्यत् ।

---

न्याय्ये वर्तते, 'अनाप्तश्चतूरात्रोऽतिरिक्तः । षड्रात्रः स वा एष संप्रति यज्ञो यत्पञ्चरात्रः' इत्यत्र तथा दर्शनात् । न न्यूनो नातिरिक्तः-सम इत्यर्थः । इदानीमित्यर्थे तु प्रसिद्धमेव । 'एतर्हि संप्रतीदानीं' इत्यमरात् । ततः प्रज्ञादित्वात्स्वार्थेऽण्, विनयादित्वात्स्वार्थे ठगपि । तेन सांप्रतं सांप्रतिकमिति पर्यायौ ॥—**उत्कर्षेत्यादि** । न्याय्ये विद्यमान एव संप्रतिशब्दोऽत्र गृह्यते इति भावः ॥ **१३८२ द्वीपादनु**—। समुद्रं समया अनुसमुद्रम् । 'अनुर्यत्समया' इत्यव्ययीभावः । सप्तम्यन्तं चेदम् । विद्यमानक्रियाद्वारा द्वीपविशेषणमित्याशयेनाह—**समुद्रसमीपे यो द्वीप इति** । कच्छादवणो मनुष्यवुञश्चापवादोऽयम् ॥ अनुसमुद्रं किम् ? द्वैपमन्यत्, कच्छाद्यण् । द्वैपको मनुष्यः, 'मनुष्यतत्स्थयोः—' इति वुञ् ॥—**द्वैप्येति** । 'यञश्च' इति ङीन्न भवति । 'अपत्याधिकारस्थादेव यञो ङीप्' इति प्रागेवोक्तत्वात् ॥ **१३८३ कालट्ठञ्** । स्वरूपस्यैव न ग्रहणम्, संधिवेलादिसूत्रेण संधिवेलात्रयोदशीचतुर्दशीप्रभृतिभ्योऽवृद्धेभ्योऽपि ठञ्बाधनार्थमण्विधानात् । किंतु सर्वेषामपि कालवाचिनां ग्रहणमित्याशयेनाह—**कालवाचिभ्य इति** । यत्तु स्वरूपस्य पर्यायाणां च न ग्रहणमिति पदमञ्जर्यादिषु स्थितम् । तदसत् । 'कालिकः संबन्धः, कालिकी व्याप्तिः' इत्यादिप्रयोगानापत्तेः । न च विशेषाणामेव ग्रहणे सन्धिवेलादिसूत्रेण सन्धिवेलादिभ्योऽण्विधानं ज्ञापकमिति वाच्यम् । तस्य स्वरूपमात्रग्रहणनिरासकत्वेनापि साफल्यात् ॥ **गौणमुख्यन्याय**स्त्विह नाश्रीयते । तेन कदम्बपुष्पसाहचर्यात्कदम्बपुष्पः कालः, व्रीहिपलालसाहचर्याद्व्रीहिपलालः कालः, तत्र भवं कादम्बपुष्पिकं व्रैहिपलालिकमित्याकरः । अत्र हि प्रमाणं संधिवेलादिसूत्रे अनेन कालग्रहणेन नक्षत्राणां विशेषणमेवेत्याहुः । न च पुष्पादिशब्दानां कालो मुख्य एवार्थः, 'लुबविशेषे' इति व्युत्पादनात् । तथा च कालविशेषणमुक्तार्थे न प्रमाणमिति वाच्यम् । पुष्यादिसमीपस्थचन्द्रमसा युक्ते काले पुष्यादिशब्दानां गौणत्वात् । 'लुबविशेषे' इति शास्त्रमपि गौणवृत्तित्वान्वाख्यापकमेवेति दिक् ॥ एवं स्थिते 'कालवाचिभ्यः—' इति मूलस्य 'कालप्रतिपादकेभ्यः' इति फलितोऽर्थः ॥ **१३८४ श्राद्धमिति** । भक्त्या क्रियमाणं पित्र्यं कर्मेत्यर्थः । 'प्रज्ञाश्रद्धाऽर्चाभ्योऽणः' इति मत्वर्थीयेन व्युत्पादितः श्रद्धावान्पुरुषस्तु न गृह्यते, अनभिधानात् ॥ **१३८७ श्वसस्तुट् च** । विभाषेत्यनुवर्तनादाह—**ठञ् वा स्यादिति** । 'ऐषमो ह्यः—' इत्यादिना त्यबपि विकल्पेन विहितः । आभ्यां मुक्ते त्युट्युलावपि स्त एव ॥ **१३८८ शौवस्तिकमिति** । नन्वन्तरङ्गत्वात् तुटि ठस्य प्रत्ययादित्वाभावात्कर्मठ इत्यत्र अठच इवेकादेशो न स्यात् । न च परत्वादिकादेशे तस्य तुडिति वाच्यम् । आदेशात्प्रागेवान्तरङ्गत्वात्तुटः प्रवृत्तेः । इकादेशस्य त्वाङ्गत्वेन बहिरङ्गत्वात् । सूत्रभङ्गेन तुकि हि क्रियमाणे तु 'इसुसुक्तान्तात्—' इति कादेशप्रसङ्ग इति चेत् । सत्यम् । वुञ्छणादिषु ठचश्चित्त्वेन 'इकादेशोऽन्तरङ्गेभ्यो बलवान्' इति ज्ञापितत्वात् । अन्यथा प्रत्ययाद्युदात्तत्वे कृते इकादेशः स्यादिति किं ठचश्चित्त्वेन । कृते त्विकादेशे प्रत्ययस्वरबाधनाय चित्त्वं प्रयुज्यत इति मनोरमायां स्थितम् ॥ **१३८९ संधिवेला** । अण्ग्रहणं तु छबाधनार्थम् । अन्यथा 'सन्धिवेलादिभ्यो यथाविहितं प्रत्ययाः स्युः' इत्युक्ते पौर्णमासीशब्दात् 'वृद्धाच्छः' स्यात् । वचनं तु ठञो बाधनाय स्यादिति भावः ॥—**तैषमिति** । तिष्याद्भवादावण् । जातार्थे तु 'श्रविष्ठाफाल्गुनी—' इति लुक् स्यात् । 'सूर्यतिष्य—' इत्यत्र 'तिष्यपुष्ययो-

---

१ **कालादिति**—कालशब्देन यथाकथंचिदपि कालबोधकानां ग्रहणम् । अत एव सायंप्रातिक इत्यत्र ठञ् सिद्धः । अन्यथा स्वाङ्गसमुदायस्य स्वाङ्गवाचकत्वाभाववत्कालसमुदायस्य कालवाचकत्वाभावाट्ठञ् न स्यात् । २ **सन्धिवेलादीति**—अण्ग्रहणं पौर्णमास्याश्छं बाधितुम् । इह गणे शश्वतो वेति पाठाच्छाश्वतिकशाश्वतौ सिद्धाविति 'नस्तद्धिते' इति सूत्रस्थभाष्यस्वरसः ॥

१३९० । **प्रावृष एण्यः** ।४।३।१७। प्रावृषेण्यः ।

१३९१ । **वर्षाभ्यष्ठक्** ।४।३।१८ वर्षासु साधु वार्षिकं वासः । 'कालात्साधुपुष्प्यत्पच्यमानेषु' १४२० इति साध्वर्थे ।

१३९२ । **सर्वत्राण् च तलोपश्च** ।४।३।२२। हेमन्तादण् स्यात्तलोपश्च वेदलोकयोः । चकारात्पक्षे ऋत्वण् । हैमनम्, हैमन्तम् ।

१३९३ । **सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च** ।४।३।२३। सायमित्यादिभ्यश्चतुर्भ्योऽव्ययेभ्यश्च कालवाचिभ्यः–ट्युट्युलौ स्तः, तयोस्तुट् च । तुटः प्रागनादेशः, 'अनद्यतने–' २१८५ इत्यादिनिर्देशात् । सायन्तनम् । चिरन्तनम् । प्राह्णप्रगयोरेदन्तत्वं निपात्यते, प्राह्णेतनम् । प्रगेतनम् । दोषातनम् । दिवातनम् । ॐ **चिरपरुत्परारिभ्यस्त्नो वक्तव्यः** । चिरत्नम् । परुत्नम् । परारित्नम् । ॐ **अग्रादिपश्चाड्डिमच्** । अग्रिमम् । आदिमम् । पश्चिमम् । ॐ **अन्ताच्च** । अन्तिमम् ।

१३९४ । **विभाषा पूर्वाह्णापराह्णाभ्याम्** ।४।३।२४। आभ्यां ट्युट्युलौ वा स्तः, तयोस्तुट् च । पक्षे ठञ् । पूर्वाह्णेतनम् । अपराह्णेतनम् । 'घकालतनेषु–' ९७७ इत्यलुक् । पूर्वाह्णः सोढोऽस्येति विग्रहे तु पूर्वाह्णतनम् । अपराह्णतनम् । पौर्वाह्णिकम् । आपराह्णिकम् ।

१३९५ । **तत्र जातः** ।४।३।२५। सप्तमीसमर्थाज्जात इत्यर्थेऽणादयो घादयश्च स्युः । स्रुघ्ने जातः–स्रौघ्नः । औत्सः । राष्ट्रियः । अवारपारीणः । इत्यादि ।

१३९६ । **प्रावृषष्ठप्** ।४।३।२६। एण्यस्यापवादः । प्रावृषि जातः–प्रावृषिकः ।

१३९७ । **संज्ञायां शरदो वुञ्** ।४।३।२७। ऋत्वणोऽपवादः । शारदकाः, दर्भविशेषा मुद्गविशेषाश्च ।

१३९८ । **उत्तरपदस्य** ।७।३।१०। अधिकारोऽयं 'हनस्तो–'२५७४ इत्यस्मात्प्राक् ।

---

र्नक्षत्राणि' इति वचनाद्यलोपः ॥ **१३९० प्रावृष एण्यः** । ऋत्वणोऽपवादः । प्रवर्षतीति प्रावृट्, 'नहिवृति–' इति दीर्घः, तत्र भवः । जाते तु ठपं वक्ष्यति । 'रषाभ्याम्–' इति सिद्धे प्रक्रियालाघवार्थं णकारोच्चारणम् । किंच प्रावृषेण्यमाचक्षाणः प्रावृषेण् इत्यत्र णकारश्रवणार्थमपि तत् । ण्यन्तात्क्विपि टिलोपणिलोपयलोपाः ॥ **१३९२ सर्वत्राण्च**—॥—**हेमन्तादिति** । एतच्च 'हेमन्ताच्च' इत्यतोऽनुवृत्तमिति भावः ॥—**हैमनमिति** । अकारविशिष्टस्य तशब्दस्य लोपः । 'अन्' इति प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपो न । तकारस्यैव लोप इति पक्षे तु 'यस्येति च' इत्यल्लोपस्याभीयत्वेनासिद्धत्वात्स्थानिवद्भावाद्वा टिलोपो नेति बोध्यम् ॥—**हैमन्तमिति** । ऋत्वणि तकारलोपो न भवति, तस्य 'सर्वत्राण्–' इति प्रतिपदोक्तेन अणा संनियोगशिष्टत्वात् ॥ एतच्च प्रत्याख्यातं भाष्ये । तथाहि—हेमन्तपर्यायो हेमन्शब्दोऽप्यस्ति, 'हेमन्नागनीगन्ति कर्णौ' इत्यादिप्रयोगात्, ततश्च हेमन्-हेमन्तशब्दाभ्यामृत्वणि हैमनं हैमन्तमिति रूपद्वयं सिद्धम् । छन्दसि तु 'हेमन्ताच्च' इति ठञा हैमन्तिकमिति तृतीयमपि रूपं सिध्यति । न च विशेषविहितेन ठञा अणो बाधः शङ्क्यः । छन्दसि सर्वविधीनां वैकल्पिकत्वात् । वृत्तिकृता 'हेमन्ताच्च' इति सूत्रे सर्वत्रग्रहणमपकृष्य लोकेऽपि हैमन्तिकमिति स्वीकृतम् ॥ **१३९३ सायंचिरं**—। नन्वन्तरङ्गत्वात्प्रथमं तुटि 'मृत्युः' इत्यादाविव त्युशब्दस्य प्रत्ययतया अङ्गसंज्ञानिमित्तं यो युस्तस्य विधीयमानोऽनादेशो न स्यात् । न चैवं तुगेव क्रियतामिति वाच्यम् । तस्य पूर्वान्तत्वेन विसर्गाभावात् प्रातस्तनमित्यत्र सत्त्वाभावप्रसङ्गात्, अत आह—**तुटः प्रागिति**—॥—**इत्यादीति** । आदिशब्देन 'घकालतनेषु' इति ग्राह्यम् ॥—**सायंतनमिति** । स्यतेर्घञि सायशब्दोऽकारान्तो दिवसावसाने रूढः, तस्य प्रत्ययसंनियोगेन मान्तत्वं निपात्यत इति वार्तिककृन्मतम् ॥ भाष्यकृता तु 'मान्ताव्ययम्' इत्याश्रित्य सायंग्रहणं प्रत्याख्यातम् । न चैवं सायशब्दात्कालाट्ठञि अनिष्टरूपप्रसङ्गः । तस्य कालवाचित्वाभावात्, अनभिधानाद्वा–इत्याहुः ॥—**चिरंतनमिति** । चिरशब्दस्यापि प्रत्ययसंनियोगेन मान्तता निपात्यत इति भावः ॥ **अत्र वदन्ति**—स्वरादौ पाठादव्ययत्वादेव सिद्धे सूत्रे चिरमित्येतद्व्यर्थम् । न चादन्ताच्चिरशब्दाट्ठञ् स्यादिति वाच्यम् । तेन बाधादिति ॥—**एदन्तत्वमिति** । प्राह्णः सोढोऽस्य प्राह्णेतनं इत्याद्यर्थम् । तत्र हि सप्तमी नास्ति ॥ जातार्थे 'घकालतनेषु' इत्यलुकाऽपि सिद्धम् ॥—**चिरत्नमिति** । सूत्रे चिरशब्दस्योपादानात् ट्युट्युलावपि स्तः । न चैवं सूत्रे चिरशब्दस्य प्रत्याख्यानं न संवतीति वाच्यम् । मान्ताव्ययादेव ट्युट्युल्विधौ तत्संभवात् । **परुत्**–पूर्वस्मिन् वत्सरे । **परारि**–पूर्वतरे ॥—**अग्रादीति** । डिमचो डित्त्वं स्पष्टार्थम् ॥ **१३९५ तत्र जातः** । ननु शेषे इत्यस्य लक्षणत्वोक्तेः 'चाक्षुषं रूपं, श्रावणः शब्दः' इत्यादाविव जातादिष्वर्थेष्वणादयः सिद्धाः, अधिकाराच्च घादयोऽपि । न च 'जातादिष्वेवाणादयः' इति नियमार्थं जाताद्यर्थनिर्देश आवश्यकः । अन्यथा 'तत्रास्ते, तत्र शेते' इत्याद्यर्थेऽपि प्रत्ययः स्यादिति वाच्यम् । चाक्षुषमित्याद्यसिद्ध्यापत्तेः । 'स्रुघ्ने आस्ते, स्रुघ्ने शेते', इत्यादौ त्वनभिधानादेव तद्धितो न भविष्यति, अङ्गुल्या खनति, वृक्षमूलादागत इत्यादौ यथा । समर्थविभक्तयस्त्वाक्षेपादेव लप्स्यन्ते । चाक्षुषमित्यत्र तृतीया यथा । तस्मात् 'तत्र जातः' इत्याद्यर्थनिर्देशो व्यर्थ इति चेत् । मैवम् । 'प्रावृषष्ठप्' इत्याद्यपवादार्थं तदावश्यकत्वात् । ये तु निरपवादा अर्थनिर्देशाः 'कृतलब्धक्रीतकुशलाः' इत्यादयः, ते तु व्यर्था एवेति दिक् ॥ **१३९७ संज्ञायां शरदः**—। समुदायेन चेत्संज्ञा गम्यत इत्यर्थः ॥ संज्ञायां किम् ? शारदं सस्यम् । 'संज्ञायाम्' इत्येतत् 'कृतलब्ध–' इत्येतत्पर्यन्तं केचिदनुवर्त-

१३९९ । **अवयवादृतोः** ।७।३।११। अवयववाचिनः पूर्वपदादृतुवाचिनोऽचामादेरचो वृद्धिः स्यात् ञिति णिति किति च तद्धिते परे । पूर्ववार्षिकः । अपरहैमनः । अवयवात्किम् । पूर्वासु वर्षासु भवः पौर्ववार्षिकः । ॐ **ऋतोर्वृद्धिमद्विधाववयवानाम्**–इति तदन्तविधिः पूर्वत्र । इह तु न, अवयवत्वाभावात् ।

१४०० । **सुसर्वार्धाज्जनपदस्य** ।७।३।१२। उत्तरपदस्य वृद्धिः । सुपाञ्चालकः । सर्वपाञ्चालकः । अर्धपाञ्चालकः । 'जनपदतदवध्योः–' १३५० इति वुञ् । ॐ **सुसर्वार्धदिक्शब्देभ्यो जनपदस्य**–इति तदन्तविधिः ।

१४०१ । **दिशोऽमद्राणाम्** ।७।३।१३। दिग्वाचकाज्जनपदवाचिनो वृद्धिः । पूर्वपाञ्चालकः । दिशः किम् । पूर्वपञ्चालानामयं पौर्वपञ्चालः । अमद्राणां किम् । पौर्वमद्रः । योगविभाग उत्तरार्थः ।

१४०२ । **प्राचां ग्रामनगराणाम्** ।७।३।१४। दिशः परेषां ग्रामवाचिनां नगरवाचिनां चाङ्गानामवयवस्य च वृद्धिः । पूर्वैषुकामशम्यां भवः–पूर्वैषुकामशमः । नगरे, पूर्वपाटलिपुत्रकः ।

१४०३ । **पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन्** ।४।३।२८। पूर्वाह्णकः । अपराह्णकः । आर्द्रकः । मूलकः । प्रदोषकः । अवस्करकः ।

१४०४ । **पथः पन्थ च** ।४।३।२९। पथि जातः पन्थकः ।

१४०५ । **अमावास्याया वा** ।४।३।३०। अमावास्यकः–आमावास्यः ।

१४०६ । **अ च** ।४।३।३१। अमावास्यः ।

१४०७ । **सिन्ध्वपकराभ्यां कन्** ।४।३।३२। सिन्धुकः, कच्छाद्यणि मनुष्यवुञि च प्राप्ते । अपकरकः, औत्सर्गिकेऽणि प्राप्ते ।

१४०८ । **अणञौ च** ।४।३।३३। क्रमात् स्तः । सैन्धवः । आपकरः ।

१४०९ । **श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक्** ।४।३।३४। एभ्यो नक्षत्रवाचिभ्यः परस्य जातार्थप्रत्ययस्य लुक् स्यात् ।

१४१० । **लुक् तद्धितलुकि** ।१।२।४९। तद्धितलुकि सत्युपसर्जनस्त्रीप्रत्ययस्य लुक् स्यात् । श्रविष्ठासु जातः श्रविष्ठः । फल्गुनः । इत्यादि । ॐ **चित्रारेवतीरोहिण्यः स्त्रियाम्**...

---

यन्तीति वृत्तिकृत् ॥ १३९९ **पूर्ववार्षिक इत्यादि** । वर्षाणां पूर्वः, हेमन्तस्यापर इति विग्रहे 'पूर्वापराधरोत्तरम्–' इत्येकदेशिसमासः ॥—**पूर्वास्विति** । तद्धितार्थे समासः ॥ **ऋतोर्वृद्धिमद्विधाविति** । ऋतुवाचिनः शब्दाद्वृद्धिनिमित्तकप्रत्ययविधाने तदन्तविधिर्वाच्यः, स चेदृतुवाची शब्दोऽवयवेभ्यः पर इत्यर्थः ॥—**पूर्वत्रेति** । पूर्ववार्षिकः, अपरहैमन इत्यत्र । तथा च 'वर्षाभ्यष्ठक्' 'सर्वत्राण् च तलोपश्च' इत्याभ्यां क्रमेण ठगणौ भवतः ॥ वृद्धिमद्विधौ किम् ? पूर्वप्रावृषम् । 'प्रावृष एण्यः' इत्यत्र तदन्तविध्यभावादिह ऋत्वणेव ॥—**इह त्विति** । पौर्ववार्षिक इत्यत्र । तथा चेह 'कालाट्ठञ्' इति ठञेवेति भावः ॥—**अवयवत्वाभावादिति** । अन्यथा पूर्वासु वर्षास्विति सामानाधिकरण्यं न संगच्छेतेति भावः ॥ १४०० **जनपदतदवध्योरितीति** । तस्मिन्ननुवर्तमाने 'अवृद्धादपि बहुवचनविषयात्' इत्यनेनेत्यर्थः ॥ १४०१ **पौर्वमद्र इति** । 'मद्रेभ्योऽञ्' इत्यञ् ॥ १४०३ **पूर्वाह्णक इति** । 'विभाषा पूर्वाह्णापराह्णाभ्याम्' इत्यस्यापवादः ॥ **आर्द्रकः । मूलक इति** । नक्षत्राणोऽपवादः ॥—**प्रदोषक इति** । 'निशाप्रदोषाभ्यां च' इत्यस्यापवादः ॥—**अवस्करक इति** । औत्सर्गिकस्याणोऽपवादः । ये तु 'संज्ञायाम्' इत्येतत् 'कृतलब्ध–' इत्येतत्पर्यन्तमनुवर्तयन्ति तन्मते असंज्ञायां यथायथमणादयो घादयश्च बोध्याः ॥ १४०५ **अमावास्याया वा** । सन्धिवेलाद्यणोऽपवादः ॥ 'अमावस्यदन्यतरस्याम्' इति सूत्रेणामापूर्वाद्वसेर्ण्यति वृद्धौ पक्षे ह्रस्वत्वं निपात्यत इति ह्रस्वमध्यस्याप्यमावस्याशब्दस्येह ग्रहणम्, प्रकृतिग्रहणे विकृतेरपि ग्रहणात् । अमावस्यकः । आमावस्यः । ये त्विह सूत्रे सन्धिवेलादिषु च ह्रस्वोपधं पठन्ति, तेषां तु दीर्घोपधस्य न स्यात्, विकृतिग्रहणेन प्रकृतेरग्रहणादिति **हरदत्तादयः** ॥ वस्तुतस्तु वृद्धिप्रकृतिभूतस्यानुकरणमिदमित्याश्रित्य ह्रस्वोपधपाठोऽपि समर्थयितुं शक्यत **इत्यन्ये** ॥ १४०६ **अ च** । अमावास्याशब्दादकारप्रत्ययः स्यात् ॥ अयमपि पूर्ववदुभाभ्यां बोध्यः ॥—**अमावास्य इति** । ह्रस्वमध्यात्तु अमावस्यः ॥ १४०८ **अणञौ च** । यथासंख्यार्थो योगविभागः ॥ १४०९ **श्रविष्ठा—** । इह सूत्रे स्वातिशब्दो ह्रस्वान्त इति **कैयटहरदत्तादयः** । **माधवस्तु**–'दीर्घान्तः' इति 'अत सातत्यगमने' इति धातावाह ॥ एवं चात्र स्वातीतिष्येति ङीषन्तग्रहणादङीषन्तस्य सौवात इति रूपं भवार्थ इव जातार्थेऽपि माधवमते सिध्यत्येव ॥ कैयटादिमते तु जातार्थे न सिध्यति । लुग्विधायकेऽस्मिन् ङीषन्तग्रहणेऽपि लिङ्गविशिष्टपरिभाषया ङीषन्तादपि अणो लुकः प्रवृत्तेः ॥ १४१० **उपसर्जनेति** । अप्रधानमिहोपसर्जनं गृह्यते, न शास्त्रीयम्, असंभवात् ॥ ननु 'गोस्त्रियोः' इति सूत्रेऽप्यप्रधानलक्षणमेवोपसर्जनं गृह्यताम् 'एकविभक्ति च–' इति शास्त्रीयं न गृह्यताम् । मैवम् । हरीतक्याः फलानि हरीतक्य इत्यत्र ह्रस्वप्रसङ्गात् ॥ उपसर्जनस्य किम् ? अवन्ती, कुन्ती, कुरूः ॥—**श्रविष्ठास्विति** । श्रविष्ठा–धनिष्ठा ॥—**इत्यादीति** । आदिशब्दात्–अनुराधः । स्वातिः । तिष्यः ।

---

१ **पूर्ववार्षिक इति**—इयं चोत्तरपदवृद्धिः सत्यपि संभवे इति न्यायेन पूर्वपदवृद्धेर्बाधिका, अत एव 'ह्लद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्यत्र पूर्वपदस्येति चरितार्थमिति भावः । २ **उत्तरार्थ इति**—'प्राचां ग्राम–' इत्युत्तरसूत्रे दिश एव संबन्धो यथा स्यात् इत्येवमर्थं इत्यर्थः । एकयोगे तु स्वादिभ्यः परस्यापि मद्रस्य पर्युदासः संभाव्येतेतीहार्थोऽपि स इत्यन्ये ।

णीभ्यः स्त्रियामुपसंख्यानम् । चित्रायां जाता चित्रा । रेवती । रोहिणी । आभ्यां 'लुक्तद्धितलुकि' १४१० इति लुकि कृते पिप्पल्यादेराकृतिगणत्वात्पुनर्ङीष् । ॐ फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ । स्त्रियामित्येव । फल्गुनी । अषाढा । ॐ श्रविष्ठाषाढाभ्यां छण्वक्तव्यः । अस्त्रियामपि । श्राविष्ठीयः । आषाढीयः ।

१४११ । जे प्रोष्ठपदानाम् ।७।३।१८। प्रोष्ठपदानामुत्तरपदस्याचामादेरचो वृद्धिः स्याज्जातार्थे ञिति णिति किति च । प्रोष्ठपदासु जातः-प्रोष्ठपादो माणवकः । जे इति किम् । प्रोष्ठपदासु भवः-प्रौष्ठपदः । बहुवचननिर्देशात्पर्यायोऽपि गृह्यते, भाद्रपादः ।

१४१२ । स्थानान्तगोशालखरशालाच्च ।४।३।३५। एभ्यो जातार्थप्रत्ययस्य लुक् स्यात् । गोस्थानः । गोशालः । खरशालः । 'विभाषा सेना-' ८२९ इति नपुंसकत्वे ह्रस्वत्वम् ।

१४१३ । वत्सशालाभिजिदश्वयुक्शतभिषजो वा ।४।३।३६। एभ्यो जातार्थस्य लुग्वा स्यात् । वत्सशाले जातो वत्सशालः, वात्सशालः । इत्यादि । ॐ जातार्थे प्रतिप्रसूतोऽण्वा डिद्वक्तव्यः । शातभिषः, शातभिषजः, शतभिषक् ।

१४१४ । नक्षत्रेभ्यो बहुलम् ।४।३।३७। जातार्थप्रत्ययस्य बहुलं लुक् स्यात् । रोहिणः, रौहिणः ।

१४१५ । कृतलब्धक्रीतकुशलाः ।४।३।३८। तत्रेत्येव । स्रुघ्ने कृतो लब्धः क्रीतः कुशलो वा-स्रौघ्नः ।

१४१६ । प्रायभवः ।४।३।३९। तत्रेत्येव । स्रुघ्ने प्रायेण बाहुल्येन भवति-स्रौघ्नः ।

१४१७ । उपजानूपकर्णोपनीवेष्ठक् ।४।३।४०। औपजानुकः । औपकर्णिकः । औपनीविकः ।

१४१८ । सम्भूते ।४।३।४१। स्रुघ्ने संभवति स्रौघ्नः ।

१४१९ । कोशाड्ढञ् ।४।३।४२। कौशेयं वस्त्रम् ।

१४२० । कालात्साधुपुष्प्यत्पच्यमानेषु ।४।३।४३। हेमन्ते साधुः-हैमन्तः प्राकारः । वसन्ते पुष्प्यन्ति-वासन्त्यः कुन्दलताः । शरदि पच्यन्ते-शारदाः शालयः ।

१४२१ । उप्ते च ।४।३।४४। हेमन्ते उप्यन्ते-हैमन्ता यवाः ।

१४२२ । आश्वयुज्या वुञ् ।४।३।४५। ठञोऽपवादः । आश्वयुज्यामुप्ताः-आश्वयुजकाः-माषाः ।

१४२३ । ग्रीष्मवसन्तादन्यतरस्याम् ।४।३।४६। पक्षे ऋत्वण् । ग्रैष्मकम्, ग्रैष्मम् । वासन्तकम्, वासन्तम् ।

१४२४ । देयमृणे ।४।३।४७। कालादित्येव । मासे देयमृणं-मासिकम् ।

१४२५ । कलाप्यश्वत्थयवबुसाद्वुन् ।४।३।४८। यस्मिन् काले मयूराः कलापिनो भवन्ति स उपचारात्कलापी, तत्र देयमृणं कलापकम् । अश्वत्थस्य फलमश्वत्थः, तद्युक्तः कालोऽप्यश्वत्थः, यस्मिन् कालेऽश्वत्थाः फलन्ति

---

पुनर्वसुः । हस्तः । बिशाखः । अषाढः । बहुलः ॥ कृत्तिकावाची बहुलाशब्दष्टाबन्तः, तस्य समाहारद्वन्द्वेन ह्रस्वनिर्देशः सूत्रे ॥ —उपसंख्यानमिति । लुक इति शेषः ॥—चित्रेति । 'लुक्तद्धित-' इति लुकि पुनष्टाप् ॥—टानाविति । विधानसामर्थ्यादेतयोर्न लुक् ॥ १४१२ स्थानान्त—। गोशालेत्यत्र 'विभाषा सेना-' इति नपुंसकत्वे ह्रस्वत्वम्, तत्साहचर्यात्खरशालेऽप्येवमेव । न चैवं स्त्रीत्वपक्षे लुङ् न स्यादिति शङ्क्यम् । लिङ्गविशिष्टपरिभाषया तत्रापि लुक्सिद्धेरित्याहुः । यद्यपि टाबन्तयोः पाठेऽप्येकदेशविकृतन्यायेन क्लीबेऽपीष्टं सिध्यति, तथापि लाघवार्थं ह्रस्वपाठः ॥—नपुंसकत्वे ह्रस्वत्वमिति । सूत्रे इति शेषः ॥ १४१३ वत्सशाले जात इति । वत्सशालायामित्यपि बोध्यम् ॥—इत्यादीति । आदिशब्दादभिजित्-आभिजितः, अश्वयुक्-आश्वयुजः ॥—प्रतिप्रसूत इति । कालाट्ठञा निवर्तमानो य औत्सर्गिकोऽण् 'सन्धिवेलादि' सूत्रेण पुनरभ्यनुज्ञात इत्यर्थः ॥ १४१५ कृतलब्ध—। ननु कृतक्रीतत्वे जातलब्धत्वयोर्व्याप्ये इति किमनयोर्ग्रहणेन । सत्यम् । कृतत्वक्रीतत्वप्रकारकबोधेऽपि प्रत्ययार्थं तद्ग्रहणम् । अत एव जाते लुभाजामपि कृते न लुक् ॥ १४१६ प्राय—। काचाचित्कभवनाश्रयः प्रायभवः । तेन 'तत्र भवः' इत्यनेन गतार्थतेत्याहुः ॥ भाष्ये तु प्रत्याख्यातमेतत्—'प्रायभवग्रहणमनर्थकं तत्र भवेन कृतत्वात्' इति ॥ १४१७ उपजानूप—। त्रयोऽप्यमी सामीप्येऽव्ययीभावाः । तेषां समाहारद्वन्द्वे सौत्रं पुंस्त्वम् ॥ १४१८ सम्भूते—। इह तन्त्रादिना संभावना, आधारपरिमाणादाधेयस्यानतिरेकश्चेति द्वयमप्याश्रीयते ॥ स्रौघ्न इति । स्रुघ्ने संभाव्यते तत्परिमाणानतिरिक्तो वा सेनादिरित्यर्थः ॥ १४१९ कोशात्—॥—कौशेयमिति । वस्त्रविशेषे योगरूढोऽयम् । कोशे संभवस्तु सत्कार्यवादाभिप्रायेण । मतान्तरे तु विकारप्रकरणे 'एण्या ढञ्' इत्यस्यानन्तरं 'कोशाच्च' इति पठितव्यम् । तथा च वार्तिके—'विकारे कोशाड्ढञ् संभूते ह्यर्थानुपपत्तिः' इति ॥ १४२० कालात्—। पुष्प्यदिति दैवादिकः शत्रन्तस्तदाह—पुष्प्यन्तीति ॥ १४२१ उप्ते च । कालादित्येव । योगविभाग उत्तरार्थः ॥—उप्यन्त इति । सूत्रे भूतकालोऽतन्त्रमिति भावः ॥ १४२२ आश्वयुज्या वुञ् । ञकारः स्वरार्थः, उत्तरत्र वृद्ध्यर्थश्च ॥—आश्वयुज्यामिति । अश्विनीनक्षत्रपर्यायः—अश्वयुक्, तद्युक्ता पौर्णमासी—आश्वयुजी, तत्रेत्यर्थः ॥ १४२४ देयमृणे । ऋणे किम् ? मासे देया भिक्षा ॥ १४२५ अश्वत्थ इति । 'फले लुक्' । इह पुंलिङ्गनिर्देशो यद्यप्ययुक्तः, तथापि फले अश्वत्थशब्द औपचारिक इत्याशयेन पुंलि-

तत्र देयमृणम्–अश्वत्थकम् । यस्मिन् यवबुसमुत्पद्यते तत्र देयमृणं-यवबुसकम् ।

१४२६ । ग्रीष्मावरसमाद्वुञ् ।४।३।४९। ग्रीष्मे देयमृणं-ग्रैष्मकम् । आवरसमकम्[1] ।

१४२७ । संवत्सराग्रहायणीभ्यां ठञ्च ।४।३।५०। चाद्वुञ् । सांवत्सरिकम्, सांवत्सरकम् । आग्रहायणिकम्, आग्रहायणकम् ।

१४२८ । व्याहरति मृगः ।४।३।५१। कालवाचिनः सप्तम्यन्ताच्छब्दायत इत्यर्थे अणादयः स्युः, यो व्याहरति स मृगश्चेत् । निशायां व्याहरति–नैशो मृगः, नैशिकः ।

१४२९ । तदस्य सोढम् ।४।३।५२। कालादित्येव । निशासहचरितमध्ययनं निशा, तत्सोढमस्य-नैशः, नैशिकः ।

१४३० । तत्र भवः ।४।३।५३। स्रुघ्ने भवः–स्रौघ्नः । राष्ट्रियः ।

१४३१ । दिगादिभ्यो यत् ।४।३।५४। दिश्यम् । वर्ग्यम् ।

१४३२ । शरीरावयवाच्च ।४।३।५५। दन्त्यम् । कण्ठ्यम् ।

१४३३ । प्राचां नगरान्ते ।७।३।२४। प्राचां देशे नगरान्तेऽङ्गे पूर्वपदस्योत्तरपदस्य चाचामादेरचो वृद्धिर्ञिति णिति किति च । सुह्मनगरे भवः–सौह्मनागरः । पौर्वनागरः । प्राचां किम् । मद्रनगरम्–उदक्षु, तत्र भवो माद्रनगरः ।

१४३४ । जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम्[2] ।७।३।२५। जङ्गलाद्यन्तस्याङ्गस्य पूर्वपदस्याचामादेरचो वृद्धिरुत्तरपदस्य वा ञिति णिति किति च । कुरुजङ्गले भवं–कौरुजङ्गलम्, कौरुजाङ्गलम् । वैश्वधेनवम्, वैश्वधैनवम् । सौवर्णवलजम्, सौवर्णवालजम् ।

१४३५ । दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् ।४।३।५६। दार्तेयम् । कौक्षेयम् । कलशिर्घटः, तत्र भवं कालशेयम् । बास्तेयम् । आस्तेयम् । आहेयम् ।

१४३६ । ग्रीवाभ्योऽण् च ।४।३।५७। चात् ढञ् । ग्रैवेयम्, ग्रैवम् ।

१४३७ । गम्भीराञ् ञ्यः ।४।३।५८। गम्भीरे भवं गाम्भीर्यम् ।

१४३८ । अव्ययीभावाच्च ।४।३।५९। परिमुखं भवं पारिमुख्यम् । ❀ परिमुखादिभ्य एवेष्यते । नेह—औपकूलः ।

१४३९ । अन्तःपूर्वपदाट्ठञ् ।४।३।६०। अव्ययी-

---

ङ्गप्रयोग इत्याहुः ॥ १४२७ ठञ्चेति । 'संवत्सराग्रहायणीभ्यां वा' इत्येव सुवचम् ॥ न च 'वा' इति वक्तव्ये ठञ्ग्रहणं व्यर्थम्, संधिवेलादिषु 'संवत्सरात्फलपर्वणोः' इति पठ्यते, तत्र फले ऋणत्वेन विवक्षिते अणं बाधित्वा ठञेव यथा स्यादिति काशिकादावुक्तमिति वाच्यम् । तस्मै हितास्तद्धिता इत्यन्वर्थसंज्ञाकरणबलेनात्राण्प्रत्ययो न भवेदिति वक्तुं शक्यत्वादिति नव्याः ॥ १४२९ नैशिक इति । 'निशाप्रदोषाभ्यां च' इति वा ठञ् ॥ १४३० तत्र भवः । 'कालात्' इति निवृत्तम् । कालसंबद्धस्य 'तत्र' इत्यस्य निवृत्तये पुनस्तत्रग्रहणात् । न च पूर्वसूत्रस्थस्य 'तत्' इत्यस्य व्यावृत्तये तत्रग्रहणमस्त्विति वाच्यम् । 'तदस्य–' इति सूत्रस्य इत उत्तरत्रापि सुपठत्वात् । यद्यपि भूधातुरुत्पत्तावपि वर्तते तथापीह सत्तार्थ एव वर्तते, 'तत्र जातः' इति पृथग्ग्रहणादिति बोध्यम् ॥ १४३१ दिगादिभ्यो—। 'दिश्, वर्ग, पूग, पक्ष, धान्य, मित्र, मेधा, अन्तर्, पथिन्, रहस्, अलीक, उखा, साक्षिन्, आदि, अन्त, मुख, जघन, मेघ, यूथ, 'उदकात्संज्ञायाम्', न्याय, वंश, अनुवंश, वेश, काल, इत्यादिदिगादिः । मुखजघनयोः पाठोऽत्र–अशरीरावयवार्थः । सेनाया मुखे जघने च भवं मुख्यम्, जघन्यम् ॥ १४३३ प्राचां नगरान्ते । सप्तमीनिर्देशात् 'अङ्गस्य' इत्यधिकृतमपि सप्तम्यन्तेन विपरिणम्यते, तदाह—नगरान्तेऽङ्गे इति ॥ १४३५ दृतिकुक्षि—। दृतिश्चर्मविकारः शरीरावयवविशेषश्च ॥ कुक्षिशब्दो धूमादिस्ततो 'धूमादिभ्यश्च' इति वुञि प्राप्ते अनेन ढञ् । कलशिर्मन्थपात्रं 'कलशिमुदधिगुर्वीं बल्लवा लोडयन्ति' इति माघः ॥ 'बस्तिर्नाभेरधो द्वयोः' इत्यमरः, तत्र भवं बास्तेयम् ॥ 'अस्ति' इति तिङन्तप्रतिरूपको निपातः । स च तिङन्तेन समानार्थो भिन्नार्थश्च । आद्यो यथा—अस्तिक्षीरा गौः । द्वितीयो यथा—अस्तिमान्, धनवानित्यर्थः । तदिहाविशेषादुभयोरपि ग्रहणमास्थेयमिति हरदत्तः ॥ अहौ भवमाहेयम् । 'त्रिष्वाहेयं विषास्थ्यादि' इत्यमरः ॥ १४३६ ग्रीवाभ्योऽण् च । 'शरीरावयवाच्च' इति यतोऽपवादः । ग्रीवाशब्दो धमनीसंघाते वर्तते, तत्र उद्भूतावयवसंघातविवक्षया सूत्रे बहुवचनम् । तिरोहितावयवसंघातविवक्षायां त्वेकवचनान्तादप्यण्ढञौ स्त एव ॥—ग्रैवेयमित्यादि । ग्रीवासु भवं ग्रीवायामिति वा विग्रहः ॥ १४३७ गम्भीराञ् ञ्यः ॥ ❀ पञ्चजनादुपसंख्यानम्[3] । पाञ्चजन्यम् ॥ १४३८ परिमुखमिति । यदि परिशब्दादिह वर्जनं गम्यते, तदा 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः । यदि तु सर्वतोभावः, तदा त्वस्मादेव निपातनादव्ययीभाव इत्याहुः ॥—परिमुखादिभ्य एवेति । अयं भावः—दिगादिगणानन्तरं परिमुख, परिहनु, पर्योष्ठ, पर्युलूखलेत्यादि परिमुखादिगणः पठ्यते । तत्साहचर्यादिह सूत्रे अव्ययीभावशब्देन परिमुखादिरेव गृह्यते, तस्य गणस्य कार्यान्तराभावादिति ॥ नन्वेवं 'परिमुखादेः' इति सूत्रं विशिष्यैव क्रियताम्, किमनेन प्रयासेन । उत्तरत्र 'अव्ययीभावात्' इत्यस्यापेक्षायामपि तत्रैव तत्करणौचित्यादिति चेत्, अत्राह हरदत्तः—'परिमुखादेः'

---

१ आवरसमकमिति—आगामिवर्षाणामाद्ये वर्षे देयमित्यर्थः । अवरशब्दस्यादिक्शब्दत्वादसंज्ञायामप्यत्र कर्मधारयः ।
२ विभाषितमिति—विभाषितवृद्धिकमित्यर्थः । उत्तरं=उत्तरपदम् । ३ मूले अस्य पाठः क्वचिद्दृश्यते स प्रक्षिप्तः ॥

भावादित्येव । वेश्मनि इति अन्तर्वेश्मम्, तत्र भवम्–आन्तर्वेश्मिकम् । आन्तर्गणिकम् । ॐ अध्यात्मादेष्ठञिष्यते । अध्यात्मं भवम्–आध्यात्मिकम् ।

१४४० । **अनुशतिकादीनां च** ।७।३।२०। एषामुभयपदवृद्धिः स्यात् ञिति णिति किति च । आधिदैविकम् । आधिभौतिकम् । ऐहलौकिकम् । पारलौकिकम् । अध्यात्मादिराकृतिगणः ।

१४४१ । **देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात्** ।७।३।१। एषां पञ्चानां वृद्धिप्राप्तावादेरच आत् स्यात् ञिति णिति किति च । दाविकम् । देविकाकूले भवाः–दाविकाकूलाः शालयः । शिंशपाया विकारः–शांशपः, चमसः, 'पलाशादिभ्यो वा' १५२१ इत्यञ् । दित्यौह इदं दात्यौहम् । दीर्घसत्रे भवं दार्घसत्रम् । श्रेयसि भवं श्रायसम् ।

१४४२ । **ग्रामात्पर्यनुपूर्वात्** ।४।३।६१। ठञ् स्यात् । अव्ययीभावादित्येव । पारिग्रामिकः । आनुग्रामिकः ।

१४४३ । **जिह्वामूलाङ्गुलेश्छः** ।४।३।६२। जिह्वामूलीयम् । अङ्गुलीयम् ।

१४४४ । **वर्गान्ताच्च** ।४।३।६३। कवर्गीयम् ।

१४४५ । **अशब्दे यत्खावन्यतरस्याम्** ।४।३।६४। पक्षे पूर्वेण छः । मद्वर्ग्यः, मद्वर्गीणः, मद्वर्गीयः । अशब्दे किम् । कवर्गीयो वर्णः ।

१४४६ । **कर्णललाटात्कनलंकारे** ।४।३।६५। कर्णिका । ललाटिका ।

१४४७ । **तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः** ।४।३।६६। सुपां व्याख्यानः सौपो ग्रन्थः । तैङः । कार्तः । सुप्सु भवं सौपम् ।

१४४८ । **बह्वचोऽन्तोदात्ताट्ठञ्** ।४।३।६७। षत्वणत्वयोर्विधायकं शास्त्रं षत्वणत्वम्, तस्य व्याख्यानस्तत्र भवो वा–षात्वणत्विकः ।

१४४९ । **क्रतुयज्ञेभ्यश्च** ।४।३।६८। सोमसाध्येषु यागेष्वेतौ प्रसिद्धौ । तत्रान्यतरोपादानेन सिद्धे उभयोरुपादानसामर्थ्यादसोमका अपीह गृह्यन्ते । अग्निष्टोमस्य व्याख्यानस्तत्र भवो वा–आग्निष्टोमिकः । वाजपेयिकः । पाकयज्ञिकः । नावयज्ञिकः । बहुवचनं स्वरूपविधिनिरासार्थम् । अनन्तोदात्तार्थ आरम्भः ।

१४५० । **अध्यायेष्वेवर्षेः** ।४।३।६९। ऋषिशब्देभ्यो लक्षणया व्याख्येयग्रन्थवृत्तिभ्यो भवे व्याख्याने चाध्याये ठञ् स्यात् । वसिष्ठेन दृष्टो मन्त्रो वसिष्ठः, तस्य व्याख्यानस्तत्र भवो वा वासिष्ठिकोऽध्यायः । अध्यायेषु किम् । वासिष्ठी ऋक् ।

१४५१ । **पौरोडाशपुरोडाशात्ष्ठन्** ।४।३।७०।

---

इत्युच्यमाने बहुव्रीहितत्पुरुषेभ्योऽपि ञ्यः स्यात्, अव्ययीभावग्रहणात्तु तेभ्योऽणेव भवतीति । परिमुखादिगणे प्रतिशाखशब्दोऽपि बोध्यः । तथा च 'शाखृ व्याप्तौ' इति धातौ प्रतिशाखं भवं प्रातिशाख्यम् । 'अव्ययीभावाच्च' इति भवार्थे ञ्य इति माधवः ॥—**अन्तर्वेश्ममिति** । 'नपुंसकादन्यतरस्याम्' इति समासान्तष्टच् ॥ **१४४० अध्यात्ममिति** । 'अनश्च' इति टच् ॥ **१४४६ कर्णललाटात्** । यतोऽपवादः ॥ अलंकारे किम् ? कर्ण्य, ललाट्यम् ॥ **१४४७ तस्य व्याख्यान इति च** । व्याख्यायते येन स व्याख्यानः । करणे ल्युट् । इतिशब्दो वाक्यार्थं परामृशति । तत्समीपे श्रूयमाणश्चकारः 'तत्र भवः' इति वाक्यार्थमाक्षिपति । व्याख्यातव्यस्य=ग्रन्थस्य नाम=प्रातिपदिकं, तच्च शक्त्या लक्षणया वेत्यत्र नाग्रहः । तथा च 'षष्ठ्यन्ताद्व्याख्यानकरणार्थे, सप्तम्यन्तात्तु भवार्थे, व्याख्यातव्यस्य ग्रन्थस्य प्रतिपादकात्प्रत्ययाः स्युः' इति सूत्रार्थः ॥ व्याख्यातव्यनाम्नः किम् ? पाटलिपुत्रस्य व्याख्यानी सुकोसला । पाटलिपुत्रं हि तया व्याख्यायते—'ईदृक्संनिवेशविशिष्टम्' इति । न त्विदं व्याख्यातव्यस्य नाम, ग्रन्थेष्वेव व्याख्येयत्वस्य सुप्रसिद्धत्वात् । नामग्रहणं हि प्रसिद्ध्युपसंग्रहार्थमेव सूत्रे कृतम् ॥ **१४४८ बह्वचो—** । अणोऽपवादः । बह्वचः किम् ? द्व्यचष्ठक वक्ष्यतीति एकाच् प्रत्युदाहार्यः । सौपम् । तैङम् ॥ अन्तोदात्तात्किम् ? संहितायाः सांहितम् । 'गतिरनन्तरः' इत्याद्युदात्तोऽयम् ॥ अन्तग्रहणं स्पष्टप्रतिपत्त्यर्थम्, उदात्तादित्युक्तेऽपि वर्णग्रहणे तदन्तग्रहणात् । 'वर्णादनुदात्तात्–' इत्यत्र यथा ॥ **१४४९ क्रतुयज्ञेभ्यश्च** ॥—**अग्निष्टोमस्य व्याख्यान इति** । अग्निष्टोमाद्यर्थेषु मन्त्रब्राह्मणकल्पेषु वर्तमाना अग्निष्टोमादिशब्दा इहोदाहरणम्, ग्रन्थानामेव व्याख्येयताया उक्तत्वादित्याहुः ॥ स्तुतिः–**स्तोमः** । अग्नेः स्तोमोऽस्मिन्निति बहुव्रीहिः । 'परादिश्च परान्तश्च' इत्यन्तोदात्तोऽयम् ॥ पीयतेऽस्मिन्निति **पेयः** । 'कृत्यल्युटो बहुलम्' इत्यधिकरणे यत् । वाजो नाम यवागूभेदस्तस्य पेयो वाजपेयः । अयं हि कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तः, पेयशब्दस्य 'यतो नावः' इत्युदात्तत्वात् ॥ राज्ञा क्षत्रियेण सूयते–राजसूयः, राजा सोमः सूयते अत्रेति वा–राजसूयः । 'राजसूयसूर्य–' इति क्यप् । तत एव निपातनात्समासः षष्ठीसमासो वा । अयमप्युत्तरपदप्रकृतिस्वरेण मध्योदात्त एव, धातुस्वरेण सूयशब्दस्याद्युदात्तत्वात् ॥ असोमकेभ्य उदाहरति—**पाकेति** । अल्पपर्यायः पाकशब्दः । पाकश्चासौ यज्ञश्चेति कर्मधारयः । स च समासस्वरेणान्तोदात्तः । नवैर्व्रीहिभिर्यजनं–नवयज्ञः, आग्रयणम् । 'यजयाचयतविच्छ–' इति नङ् । 'कर्तृकरणे कृता–' इति समासः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः ॥—**अनन्तोदात्तार्थ इति** । वाजपेयराजसूयार्थतया अस्मिन्नारब्धे सत्यन्तोदात्तादपि यज्ञाभिधायिनः परत्वादनेनैव भाव्यमित्याग्निष्टोमिक इत्याद्युदाहृतमिति भावः ॥ **१४५० अध्यायेष्वेवर्षेः** । एवकारः स्पष्टप्रतिपत्त्यर्थः ॥—**वासिष्ठीति** । भवार्थेऽण् ॥ **१४५१ पौरोडाश—** । षित्वान्ङीष् । पौरोडाशिकी । पुरोडा-

पुरोडाशसहचरितो मन्त्रः पुरोडाशः, स एव पौरोडाशः, ततष्ठन्—पौरोडाशिकः, पुरोडाशिकः ।

१४५२ । छन्दसो यदणौ ।४।३।७१। छन्दस्यः, छान्दसः ।

१४५३ । द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् ।४।३।७२। द्व्यचः–शैषिकः, पाशुकः । ऋतः–चातुर्होतृकः, ब्राह्मणिकः, आर्चिकः । इत्यादि ।

१४५४ । अणृगयनादिभ्यः ।४।३।७३। ठञादेरपवादः । आर्गयनः । औपनिषदः । वैयाकरणः ।

१४५५ । तत आगतः[1] ।४।३।७४। स्रुघ्नादागतः स्रौघ्नः ।

१४५६ । ठगायस्थानेभ्यः ।४।३।७५। शुल्कशालाया आगतः–शौल्कशालिकः ।

१४५७ । शुण्डिकादिभ्योऽण्[2] ।४।३।७६। आयस्थानठकश्छादीनां चापवादः । शुण्डिकादागतः–शौण्डिकः । कार्कणः । तैर्थः ।

१४५८ । विद्यायोनिसंबन्धेभ्यो वुञ् ।४।३।७७। औपाध्यायकः । पैतामहकः ।

१४५९ । ऋतष्ठञ् ।४।३।७८। वुञोऽपवादः । हौतृकम् । भ्रातृकम् ।

१४६० । पितुर्यच्च ।४।३।७९। चाट्ठञ् । 'रीङ् ऋतः' १२३६ । 'यस्य–' ३११ इति लोपः । पित्र्यम्, पैतृकम् ।

१४६१ । गोत्रादङ्कवत् ।४।३।८०। बिदेभ्य आगतं बैदम् । गार्गम् । दाक्षम् । औपगवकम् ।

१४६२ । नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम् ।७।३।३०। नञः परेषां शुच्यादिपञ्चानामादेरचो वृद्धिः, पूर्वपदस्य तु वा ञिदादौ परे । आशौचम्, अशौचम् । आनैश्वर्यम्, अनैश्वर्यम् । आक्षैत्रज्ञम्, अक्षैत्रज्ञम् । आकौशलम्, अकौशलम् । आनैपुणम्, अनैपुणम् ।

१४६३ । हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ।४।३।८१। समादागतम्–समरूप्यम् । विषमरूप्यम् । पक्षे गहादित्वाच्छः, समीयम् । विषमीयम् । देवदत्तरूप्यम्, देवदत्तीयम्, दैवदत्तम् ।

---

शिकी । पुरो दाश्यते इति पुरोडाशः । 'दाशृ दाने' कर्मणि घञ् । इहैव निपातनाड्डस्य डत्वम् ॥ १४५२ छन्दसो—। छन्दःशब्दाद्भवव्याख्यानयोरर्थयोर्यदणौ स्तः, द्व्यज्लक्षणस्य ठकोऽपवादः ॥—छन्दस्य इत्यादि । इहार्थयोर्यदण्भ्यां यथासंख्यं न भवति, अस्वरितत्वादिति बोध्यम् ॥ १४५३ द्व्यजृत्—। अणोऽपवादः ॥—चातुर्होतृक इति । 'पृथिवी होता द्यौरध्वर्युः' इत्यादिमन्त्रस्य चतुर्होतेति नामधेयम् ॥—इत्यादीति । आदिशब्दात्–प्राथमिकः, आध्वरिकः, पौरश्चरणिकः ॥ 'नामाख्यातग्रहणं संघातविगृहीतार्थं' इति वार्तिकम् । तत्र नामशब्दाद् द्व्यच्त्वादेव सिद्धे विगृहीतग्रहणमाख्यातार्थमिति ज्ञेयम् ॥ नामिकः । आख्यातिकः । नामाख्यातिकः ॥ १४५४ अणृगयन—। ऋगयनादिभ्यो भवव्याख्यानयोरर्थयोरण् स्यात् ॥—ठञादेरिति । आदिशब्दाट्ठक्छयोः ॥—आर्गयन इति । अयनशब्दो भावसाधनः, तेन समासे 'अनो भावकर्मवचनः' इत्यन्तोदात्तः, अभेदोपचाराद्भाववचनोऽपि ग्रन्थे वर्तते । इह 'बह्वचोऽन्तोदात्तात्' इति ठञ् प्राप्तः । औपनिषद इत्यत्राप्येवम् ॥ विद्यान्यायशिक्षाशब्देभ्यो 'द्व्यजृद्ब्राह्मण–' इति ठक् प्राप्तः ॥ व्याकरणशब्दात्तु 'वृद्धाच्छः' ॥ १४५६ ठगाय—। एत्येनं स्वामी, स्वामिनमयमेतीति वा–आयः स्वामिग्राह्यो भागः । स यस्मिन्नुत्पद्यते तदायस्थानम् । बहुवचननिर्देशः स्वरूपग्रहणनिरासार्थः । वृद्धाच्छं परत्वादयं बाधते । आपणिकः । आकरिकः ॥ १४५७ छादीनां चेति । कार्कण इत्यत्र 'कृकणपर्णाद्भारद्वाजे' इति छः प्राप्तः । तीर्थशब्दात्तु धूमादित्वाद्वुञ् प्राप्तः । उदपानशब्दस्योत्सादित्वादञ् प्राप्त इत्यर्थः ॥ १४५८ विद्यायोनि—। विद्यायोनिकृतः संबन्धो येषां तेभ्यो वुञ् स्यादणोऽपवादः ॥ छं तु परत्वाद्बाधते । आचार्यकः । मातामहकः । मातुलकः ॥ १४५९ ऋतष्ठञ् । 'विद्यायोनिसंबन्धेभ्यः' इति वर्तते, तदाह—वुञोऽपवाद इति । 'उष्कञ्' इति वक्तव्ये तपरकरणं ठञ्ग्रहणं च चिन्त्यप्रयोजनमिति प्राञ्चः ॥ पैतृकी विद्येत्यत्र ङीबर्थं ठञ्ग्रहणमिति तु तत्त्वम् ॥ न च 'टिड्ढा–' इति सूत्रे कञ्ग्रहणात् ङीप् सिध्यतीति वाच्यम् । यादृशी तादृशीत्याद्यसिद्धेः । तदनुबन्धकग्रहणे नातदनुबन्धकस्य ग्रहणात्, 'त्यदादिषु दृशः–' इति कञो द्व्यनुबन्धकत्वात् ॥ तपरकरणं विहाय 'उष्ठञ्' इत्येव सुवचमित्याहुः ॥ १४६१ गोत्रादङ्कवत् । 'अपत्याधिकारादन्यत्र लौकिकं गोत्रम्' इत्युक्तम् । अपत्यप्रत्ययान्तात् 'तत आगतः' इत्यस्मिन्नर्थे अङ्कवत्प्रत्ययाः स्युः । अङ्के दृष्टस्य सर्वस्यायमतिदेशः, न तु साक्षाद्विहितस्यैवेत्याग्रहः, तेन 'गोत्रचरणाद्वुञ्–' इति वुञपि लभ्यते । स हि 'तस्येदम्' इति सामान्येन विधीयमानोऽपि अञ्यञिञन्तादन्यत्र अङ्केऽपि दृष्टः ॥—बैदमित्यादि । 'सङ्घाङ्क–' इत्यादिना अङ्कार्थेऽण्विहित इतीहाप्यञ्यञिञन्तादण् ॥—औपगवकमिति । 'गोत्रचरणात्–' इति वुञ् । अङ्के दृष्ट इतीहाप्यणन्ताद्वुञ् ॥ १४६३ हेतुमनुष्येभ्यो—। मनुष्यग्रहणमहेत्वर्थं, बहुवचनं तु स्वरूपविधिनिरासार्थम् ॥—समरूप्यमिति । 'विभाषा गुणे–' इत्यत्र 'विभाषा' इति योगविभागादगुणवचनादपि पञ्चमी । योगविभागे तु 'बाहुलकं

---

१ आगत इत्यस्मिन्नर्थे पञ्चम्यन्ताद्यथाविहितम्प्रत्ययाः स्युः । स्रौघ्न इत्यत्रौत्सर्गिकोऽण् । २ अस्मिन् सूत्रेऽण्ग्रहणं तु उदपानादुत्सादेर्यथाविहिताऽञं बाधित्वाऽणर्थम् । अन्यथाऽऽयस्थानठकं बाधित्वा स एव स्यात् ।

१४६४ । मयट् च ।४।३।८२। सममयम् । विषममयम् । देवदत्तमयम् ।

१४६५ । प्रभवति ।४।३।८३। 'ततः' इत्येव । हिमवतः प्रभवति-हैमवती गङ्गा ।

१४६६ । विदूराञ्ञ्यः ।४।३।८४। विदूरात्प्रभवति वैदूर्यो मणिः ।

१४६७ । तद्गच्छति पथिदूतयोः ।४।३।८५। स्रुघ्नं गच्छति-स्रौघ्नः पन्था दूतो वा ।

१४६८ । अभिनिष्क्रामति द्वारम् ।४।३।८६। तदित्येव । स्रुघ्नमभिनिष्क्रामति-स्रौघ्नं कान्यकुब्जद्वारम् ।

१४६९ । अधिकृत्य कृते ग्रन्थे ।४।३।८७। तदित्येव । शारीरकमधिकृत्य कृतो ग्रन्थः-शारीरकीयः । 'शारीरकं भाष्यम्' इति त्वभेदोपचारात् ।

१४७० । शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ।४।३।८८। शिशूनां क्रन्दनं शिशुक्रन्दः, तमधिकृत्य कृतो ग्रन्थः-शिशुक्रन्दीयः । यमस्य सभा-यमसभम्, क्लीबत्वं निपातनात्, यमसभीयः । किरातार्जुनीयम् । इन्द्रजननादिराकृतिगणः । इन्द्रजननीयम् । विरुद्धभोजनीयम् ।

१४७१ । सोऽस्य निवासः ।४।३।८९। स्रुघ्नो निवासोऽस्य-स्रौघ्नः ।

१४७२ । अभिजनश्च ।४।३।९०। स्रुघ्नोऽभिजनोऽस्य स्रौघ्नः । यत्र स्वयं वसति स निवासः, यत्र पूर्वैरुषितं सोऽभिजन इति विवेकः ।

१४७३ । आयुधजीविभ्यश्छः पर्वते ।४।३।९१।

---

प्रकृतेस्तदनुदृष्टेः' इति लिङ्गम् ॥ १४६४ मयट् च । योगविभागो यथासंख्यनिरासार्थः । टो ङीबर्थः ॥ १४६५ हैमवतीति । हिमवतः प्रकाशते । तत्र प्रथमं दृश्यत इत्यर्थः । उत्पत्तिवचनस्तु प्रभवतिर्न गृह्यते, 'तत्र जातः' इत्यतो भेदेन निर्देशात् ॥ १४६६ वैदूर्य इति । दन्त्यमध्योऽयं शाद्वलवत्, न तु नड्वलवन्मूर्धन्यमध्यः ॥ नन्वत्रार्थासंगतिः । बालवायपर्वतादसौ प्रभवति, विदूरनगरे तु संस्क्रियते । सत्यम् । अत एव समाहितं भाष्ये—'बालवायो विदूरं च प्रकृत्यन्तरमेव वा । न वै तत्रेति चेद्ब्रूयाज्जित्वरीवदुपाचरेत्' इति । अस्यार्थः—बालवायशब्दः प्रत्ययं लभते विदूरादेशं च, सूत्रे पठितेनादेशेनानुरूपः स्थानी बालवायशब्द आक्षिप्यते । यथा शिवादिषु पठिताभ्यां विश्रवणरवणादेशाभ्यामनुरूपः स्थानी विश्रवस्शब्द आक्षिप्यते, यथा वा 'पद्दन्–' इत्यादौ पदाद्यादेशानुरूपः स्थानी पाददन्तादिराक्षिप्यते, तद्वत् ॥—प्रकृत्यन्तरमेवेति । विदूरशब्दो नगरस्येव पर्वतस्यापि वाचकोऽस्तीत्यर्थः । एवं चास्मिन्पक्षे 'बालवायात्प्रभवति' इति विग्रहे विदूरशब्दात्प्रत्यय इति व्याख्यानक्लेशो नेति भावः ॥—न वा इति । वैशब्दोऽक्षमां द्योतयति । तत्र पर्वते विदूरशब्दोऽप्रसिद्ध इति चेद् ब्रूयाज्जित्वरीवद्व्यवहरेत् । नियतपुरुषापेक्षोऽपि व्यवहारो दृश्यते, यथा वणिज एव वाराणसीं जित्वरीति व्यवहरन्ति, एवं वैयाकरणा एवाद्रिं विदूर इति ॥ १४६७ तद्गच्छति—। द्वितीयान्ताद्गच्छतीत्यर्थे प्रत्ययः स्यात्स चेद्गन्ता पन्था दूतो वेत्यर्थः । तत्र साध्वसिश्छिनत्ति, काष्ठानि पचन्तीत्यादाविव करणस्य स्वातन्त्र्यविवक्षया पन्थाः कर्ता ॥ १४६८ अभिनिष्क्रामति—। द्वितीयान्तात्प्रत्ययः स्याद्यन्निष्क्रामति तच्चेद्द्वारमित्यर्थः ॥—स्रौघ्नं कान्यकुब्जद्वारमिति । स्रुघ्नाभिमुखनिष्क्रमणे करणीभूतमिति फलितोऽर्थः । पूर्ववत्करणस्य कर्तृत्वम् ॥ १४६९ तदित्येवेति । 'अधिकृत्य' इत्येतदपेक्षयाऽत्र द्वितीया ॥—शारीरकीय इति । कुत्सितं शरीरं शरीरकं तत्संबन्धी शारीरको जीवात्मा, तमधिकृत्य-प्रस्तुत्य कृतो ग्रन्थः शारीरकीयः-चतुर्लक्षणीसूत्रसंदर्भः, वृद्धाच्छः ॥ अत्र वार्तिकम्—'लुबाख्यायिकाभ्यो बहुलम्' इति । तादर्थ्ये एषा चतुर्थी । आख्यायिका नाम गद्यरूपो ग्रन्थविशेषः । अत एवाख्यानाख्यायिकयोस्तत्र तत्र भेदेनोपादानम् । आख्यायिकाभिधानाय यः प्रत्यय उत्पन्नस्तस्य बहुलं लुबित्यर्थः ॥ वासवदत्तामधिकृत्य कृता आख्यायिका वासवदत्ता । सुमनोत्तरा । क्वचिन्न-भैमरथी ॥ अभेदोपचारेण गतार्थत्वान्नेदं वार्तिकमावश्यकम्-इति मूले नोक्तम् ॥ १४७० शिशुक्रन्द—। अत्र वार्तिकं 'द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः' । दैवासुरम् । राक्षोसुरम् ॥—निपातनादिति । 'सभाराजा–' इति सूत्रे 'अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाह' इत्युक्तत्वात्तेन सूत्रेण क्लीबत्वं न सिध्यतीति भावः ॥ १४७१ सोऽस्य निवासः । स इति प्रथमान्तादस्येति षष्ठ्यर्थे यथाविहितः प्रत्ययः स्यात्, यः प्रथमान्तार्थः स निवासश्चेत् ॥—स्रुघ्नो निवास इति । निवासाधिकरणमित्यर्थः ॥ नन्वस्येति कृद्योगे कर्तरि षष्ठी । तथा च विशेषणविशेष्यभावव्यत्यासात् स्रुघ्नाधिकरणवासकर्तेह वृत्त्यर्थः, तथा च 'तत्र भवः' इत्येव सिद्धम्, किमनेनेति चेत्, अत्राहुः—वासस्य चेतनमात्रकर्तृकतया प्रसिद्धत्वात्प्रकारकृतो भेदोऽस्तीति नास्ति वैयर्थ्यम् । 'वसन्ति हि प्रेम्णि गुणा न वस्तुनि' इत्यादौ तूपचारो बोध्य इति ॥ १४७२ अभिजनश्च । योगविभाग उत्तरार्थः । 'अभिजनाः पूर्वबान्धवाः' इति वृत्तिः । अभिजायते येभ्य इति व्युत्पत्तेरिति भावः । पूर्वबान्धवाः-पित्रादयः । बन्धुशब्दः प्रज्ञादिः । पूर्वसूत्रादिह 'निवासः' इत्यनुवृत्तम्, तत्सामानाधिकरण्यादभिजनशब्दस्य तत्संबन्धिनि लक्षणा । एवं स्थिते फलितमाह—यत्र पूर्वैरिति ॥ १४७३ आयुधजीविभ्यः—। तादर्थ्ये एषा चतुर्थी । आयुधजीविभ्यः=आयुधजीव्यर्थम्, आयुधजीविनोऽभिधातुं प्रत्ययः स्यादित्यर्थः ॥ 'सोऽस्याभिजनः' इत्यनुवर्तते पर्वत इति

पर्वतवाचिनः प्रथमान्तादभिजनशब्दादस्येत्यर्थे छः स्यात् । हृद्गोलः पर्वतोऽभिजनो येषामायुधजीविनां ते हृद्गोलीयाः । आयुधेति किम् । ऋक्षोदः पर्वतोऽभिजनो येषां ते आर्क्षोदा द्विजाः ।

१४७४ । **शण्डिकादिभ्यो ञ्यः** ।४।३।९२। शण्डिकोऽभिजनोऽस्य शाण्डिक्यः ।

१४७५ । **सिन्धुतक्षशिलादिभ्योऽणञौ** ।४।३।९३। सिन्ध्वादिभ्योऽण् तक्षशिलादिभ्योऽञ् स्यादुक्तेऽर्थे । सैन्धवः । तक्षशिला नगरी अभिजनोऽस्य ताक्षशिलः ।

१४७६ । **तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः** ।४।३।९४। तूदी अभिजनोऽस्य तौदेयः । शालातुरीयः । वार्मतेयः । कौचवार्यः ।

१४७७ । **भक्तिः** ।४।३।९५। सोऽस्येत्यनुवर्तते । भज्यते सेव्यते इति भक्तिः । स्रुघ्नो भक्तिरस्य स्रौघ्नः ।

१४७८ । **अचित्तादेशकालाट्ठक्** ।४।३।९६। अपूपा भक्तिरस्य आपूपिकः । पायसिकः । अचित्तात्किम् । दैवदत्तः । अदेशात्किम् । स्रौघ्नः । अकालात्किम् । ग्रैष्मः ।

१४७९ । **महाराजाट्ठञ्** ।४।३।९७। माहाराजिकः ।

१४८० । **वासुदेवार्जुनाभ्यां वुन्** ।४।३।९८। वासुदेवकः । अर्जुनकः ।

१४८१ । **गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ्** ।४।३।९९। अणोऽपवादः । परत्वात् वृद्धाच्छं बाधते । ग्लुचुकायनिर्भक्तिरस्य ग्लौचुकायनकः । नाकुलकः । बहुलग्रहणान्नेह—पाणिनो भक्तिरस्य पाणिनीयः ।

१४८२ । **जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने** ।४।३।१००। जनपदस्वामिवाचिनां बहुवचने जनपदवाचिना समानश्रुतीनां जनपदवत्सर्वं स्यात्प्रत्ययः प्रकृतिश्च । 'जनपदतदवध्योश्च' १३५० इति प्रकरणे ये प्रत्यया उक्तास्तेऽत्रातिदिश्यन्ते । अङ्गा जनपदो भक्तिरस्य—आङ्गकः । अङ्गाः क्षत्रिया भक्तिरस्य—आङ्गकः । जनपदिनां किम् । पञ्चाला ब्राह्मणा भक्तिरस्य—पाञ्चालः । जनपदेनेति किम् । पौरवो राजा भक्तिरस्य पौरवीयः ।

१४८३ । **तेन प्रोक्तम्** ।४।३।१०१। पाणिनिना प्रोक्तं पाणिनीयम् ।

---

प्रकृतिविशेषणं तदाह—**पर्वतवाचिन इत्यादि** । पर्वत इति किम् ? सांकाश्यका आयुधजीविनः, 'योपधात्—' इति वुञ् ॥ **१४७४ शण्डिकादिभ्यो ञ्यः** । शण्डिक, सर्वसेन, शक—इत्यादि ॥ **१४७५ सिन्धुतक्ष—** । सिन्धु—वर्णु—गन्धार—कम्बोजादयः सिन्ध्वादयः, ते तु प्रायेण कच्छादिष्वपि पठ्यन्ते । तेभ्योऽणि तत एव सिद्धे मनुष्यवुञो बाधनार्थं वचनम् ॥ तक्षशिला, वत्सोद्धरणा, बर्बरा—इत्यादयस्तक्षशिलादयः ॥ **१४८० वासुदेवार्जुनाभ्यां वुन्** । छाणोरपवादः । 'अजाद्यन्तम्' 'अल्पाच्तरम्' इति सूत्राभ्यामर्जुनस्य पूर्वनिपाते प्राप्ते तस्याकरणं 'सर्वतोऽभ्यर्हितं पूर्वं निपतति' इति ज्ञापनार्थम् ॥ ननु वसुदेवस्यापत्यमित्यर्थे 'ऋष्यन्धक—' इत्यणि वासुदेवशब्दो निष्पन्नः, तथा च तत्र 'गोत्रक्षत्रियाख्येभ्यः' इत्युत्तरसूत्रेण वुञेवास्तु, किमनेन वुना ? न ह्यत्र वृद्धौ विशेषः, प्रागेव वृद्धत्वात् । नच 'वृद्धिनिमित्तस्य—' इति पुंवद्भावनिषेधो दोषः स्यादिति वाच्यम् । वुन्यपि 'न कोपधायाः' इति निषेधस्येष्यमाणत्वात् । न वा स्वरे विशेषः, 'ञ्नित्यादिर्नित्यम्' इति तुल्यस्वरत्वात् । नापि 'अभ्यर्हितं पूर्वम्' इति ज्ञापनमेव तत्फलमिति वाच्यम् । तथात्वे हि पूर्वनिपातप्रकरणे 'अभ्यर्हितम्' इत्येव लाघवात्कुर्यादिति चेत्, अत्र भाष्यम्—'संज्ञैषा भगवतः' इति । **अयं भावः—'सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः । ततोऽसौ वासुदेवेति विद्वद्भिः परिगीयते ॥'** इति स्मृतेः परमात्मा इह वासुदेवः, सर्वत्रासौ वसति, सर्वमत्र वसतीति वा व्युत्पत्त्या वासुः, बाहुलकादुण्, वासुश्चासौ देवश्चेति विग्रहः । तथा च नेयं गोत्राख्या, नापि क्षत्रियाख्येति युक्त एव वुन्विधिः । 'अभ्यर्हितं पूर्वम्' इति तु प्रसङ्गाज्ज्ञापितं तदप्यनित्यम्, 'श्वयुवमघोनाम्—' इत्यादिलिङ्गादित्यवधेयम् ॥ **१४८१ वृद्धाच्छं बाधत इति** । औपगवो भक्तिरस्य औपगवकः ॥ **१४८२ जनपदिनाम्—** । स्वस्वामिभावसंबन्धे मत्वर्थीयं दर्शयति—**जनपदस्वामिवाचिनामिति**—॥—**प्रत्ययः प्रकृतिश्चेति** । अनेन सर्वशब्दस्यार्थो दर्शितः । असति सर्वग्रहणे प्राधान्यात्प्रत्ययस्यैवातिदेशः स्यात्, न तु प्रकृतेरिति **हरदत्तः** ॥ अत्र **वार्तिककारः** सर्वशब्दस्य प्रयोजनमाह—सर्ववचनं प्रकृतिनिर्ह्रासार्थम्, तच्च मद्रवृज्यर्थमिति । अयं भावः—वृद्धिनिमित्तेषु वुञादिष्वतिदिष्टेऽपि प्रकृतिरूपे पुनर्वृद्ध्या भाव्यमिति विशेषस्य तत्र दुर्लभत्वान्मद्रवृज्योः कनि विशेषो बोध्यः । सोऽप्यबहुल एवेति । निर्ह्रासः=अपचयः—अल्पता । तथा हि—मद्राणां राजा 'द्व्यञ्मगध—' इत्यण्, माद्रः । वृजिशब्दात् 'वृद्धेत्कोशला—' इति ञ्यङ्, वार्ज्यः । ते भक्तिरस्येति प्रकृतिनिर्ह्रासे—मद्रकः, वृजिकः । 'मद्रवृज्योः कन्' । अन्यथा माद्रकः, वार्ज्यक इति स्यात् ॥—**आङ्गक इति** । 'जनपदतदवध्योश्च' 'अवृद्धादपि—' इति वुञ् । अङ्गशब्दात्स्वामिवाचिनो बहुवचनान्तादञि प्राप्ते वुञतिदिश्यते ॥—**पञ्चाला ब्राह्मणा इति** । अभेदोपचाराद्ब्राह्मणेषु पञ्चालशब्दस्य वृत्तिः ॥ बहुवचनग्रहणं किम् ? एकवचनद्विवचनयोः सत्यपि शब्दभेदे अतिदेशो यथा स्यात् ॥ आङ्ग आङ्गौ वा भक्तिरस्य आङ्गकः । इह वृद्धाच्छे प्राप्ते वुञ् ॥ **१४८३ तेन प्रोक्तम्** । प्रकर्षेणोक्तं प्रोक्तमित्युच्यते, न तु कृतं, 'कृते ग्रन्थे' इत्यनेन गतार्थत्वात् ॥—**पाणिनिना प्रोक्तमिति** । स्वयमन्येन वा कृतं व्याकरणमध्यापनेनार्थव्याख्यानेन वा प्रकाशितमित्यर्थः ॥ प्रेति किम् ? देवदत्तेनाध्यापि-

**१४८४ । तित्तिरिवरतन्तुखण्डिकोखाच्छण्** ।४।३।१०२। 'छन्दोब्राह्मणानि–' १२८० इति तद्विषयता। तित्तिरिणा प्रोक्तमधीयते–तैत्तिरीयाः ।

**१४८५ । काश्यपकौशिकाभ्यामृषिभ्यां णिनिः** ।४।३।१०३। काश्यपेन प्रोक्तमधीयते काश्यपिनः ।

**१४८६ । कलापिवैशम्पायनान्तेवासिभ्यश्च** ।४।३।१०४। कलाप्यन्तेवासिभ्यः–हरिद्रुणा प्रोक्तमधीयते हारिद्रविणः । वैशम्पायनान्तेवासिभ्यः–आलम्बिनः ।

**१४८७ । पुराणप्रोक्तेषु ब्राह्मणकल्पेषु** ।४।३।१०५। तृतीयान्तात्प्रोक्तार्थे णिनिः स्यात्, यत्प्रोक्तं पुराणप्रोक्ताश्चेद्ब्राह्मणकल्पास्ते भवन्ति । पुराणेन चिरन्तनेन मुनिना प्रोक्ताः । भल्लु–भाल्लविनः । शाट्यायनः–शाट्यायनिनः । कल्पे–पिङ्गेन प्रोक्तः पैङ्गी कल्पः । पुराणेति किम् । याज्ञवल्कानि ब्राह्मणानि । आश्मरथः कल्पः । अणि 'आपत्यस्य–' १०८४ इति यलोपः ।

**१४८८ । शौनकादिभ्यश्छन्दसि** ।४।३।१०६। छन्दस्यभिधेये एभ्यो णिनिः । शौनकेन प्रोक्तमधीयते शौनकिनः ।

**१४८९ । कठचरकाल्लुक्** ।४।३।१०७। आभ्यां प्रोक्तप्रत्ययस्य लुक् स्यात् । कठेन प्रोक्तमधीयते कठाः । चरकाः ।

**१४९० । कलापिनोऽण्** ।४।३।१०८। कलापिना प्रोक्तमधीयते कालापाः । ॐ **नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकौथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानम्**–इत्युपसंख्यानाट्टिलोपः ।

**१४९१ । छगलिनो ढिनुक्** ।४।३।१०९। छगलिना प्रोक्तमधीयते छागलेयिनः ।

**१४९२ । पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः** ।४।३।११०। पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीयते पाराशरिणो भिक्षवः । शैलालिनो नटाः ।

**१४९३ । कर्मन्दकृशाश्वादिनिः** ।४।३।१११। भिक्षुनटसूत्रयोरित्येव । कर्मन्देन प्रोक्तमधीयते कर्मन्दिनो भिक्षवः । कृशाश्विनो नटाः ।

**१४९४ । तेनैकदिक्** ।४।३।११२। सुदाम्ना अद्रिणा एकदिक्–सौदामनी ।

---

तम्, व्याख्यातस्यैव ग्रन्थस्याध्यापनमिति नेहानेन प्रत्ययः ॥ **१४८४ तित्तिरिवर—**। अणोऽपवादः ॥—**तद्विषयतेति**। 'शौनकादिभ्यश्छन्दसि' इत्यत्रास्यानुवृत्तेस्तित्तिरिणा प्रोक्ताः श्लोका इत्यत्र न भवतीति भावः ॥—**तैत्तिरीया इति**। 'प्रोक्ताल्लुक्' इत्यध्येतृप्रत्ययस्य लुक् । एवमग्रेऽपि ॥ **१४८५ काश्यप—**। छस्यापवादः । णकार उत्तरत्र वृद्ध्यर्थः ॥ ननु 'वृद्धिनिमित्तस्य' इति पुंवद्भावनिषेधोऽत्र फलमस्तीति चेत्, **अत्राहुः**—णिन्यन्तस्याध्येतृवेदितृविषयत्वेन स्त्रियामप्रवृत्तेः । प्रवृत्तावपि 'जातेश्च' इति सिद्धत्वात्, चरणत्वेन जातित्वादिति ॥ ऋषिभ्यामिति किम् ? इदानींतनेन गोत्रकाश्यपेन प्रोक्तं काश्यपीयम् ॥ **१४८६ कलापिवैशम्पायन—**। अणोऽपवादः । छं तु परत्वाद्बाधते ॥ कलाप्यन्तेवासिनश्चत्वारः–हरिद्रुः, छगली, तुम्बुरुः, उलप इति ॥ वैशंपायनान्तेवासिनस्तु नव–आलम्बिः, कलिङ्गः, कमलः, ऋचाभः, आरुणिः, ताण्ड्यः, श्यामायनः, कठः, कलापी, इति ॥—**हारिद्रविण इति**। एवं तौम्बुरविणः, औलपिनः । छगलिनस्तु ढिनुकं वक्ष्यति ॥—**आलम्बिन इति**। एवं–कालिङ्गिनः, कामलिनः, आर्चाभिनः, आरुणिनः, ताण्डिनः, श्यामायनिनः । कठाल्लुकं वक्ष्यति, कलापिनश्चाणम् ॥ **१४८७** याज्ञवल्क्याश्मरथ्यशब्दौ कण्वादी, तेन ताभ्यां यञन्ताभ्यां वृद्धाच्छो न भवतीत्याशयेनाह—**अणि आपत्यस्येतीति**। 'याज्ञवल्क्यादयो ह्यचिरकालाः' इति भारतादिषु व्यवहारः स एवानुसृतः सूत्रकृता ॥ **१४८९ कठचरकाल्लुक्**। कठशब्दस्य वैशम्पायनान्तेवासित्वाण्णिनिः । चरकादण् । तयोर्लुक् । छन्दसीत्येव । काठाः । चारकाः–श्लोकाः ॥ **१४९० कलापिनोऽण्**। वैशम्पायनान्तेवासित्वात्प्राप्तस्य णिनेरपवादः ॥ 'इनण्यपत्ये' इति प्रकृतिभावे प्राप्ते आह—**नान्तस्य टिलोप इति**। 'कलापिनः' इत्युक्तेऽप्यौत्सर्गिकेऽणि सिद्धे पुनरण्ग्रहणमधिकविधानार्थं सद्बाधकबाधनार्थं भवति । तेन माथुरेण प्रोक्ता माथुरी वृत्तिः । मौदाः पैप्पलादाः शाकलाः इति सिद्धम् । मुद पिप्पलाद शाकल्य एभ्यः 'पुराणप्रोक्तेषु' इति णिनेरपवादोऽण् ॥ **१४९१ छगलिनो ढिनुक्**। कलाप्यन्तेवासित्वात्प्राप्तस्य णिनेरपवादः ॥ **१४९२ पाराशर्य—**। मण्डूकप्लुत्या णिनिरिह संबध्यत इत्याह—**णिनिः स्यादिति**। तद्विषयताऽत्रेष्यते । तदर्थं छन्दोग्रहणमनुवर्त्यम् । सूत्रयोश्छन्दस्त्वं तु गौण्या वृत्त्या बोध्यम् ॥—**भिक्षुसूत्रमिति**। चतुर्लक्षणीरूपम् ॥—**पाराशरिण इति**। पाराशर्यो व्यासः । अनन्तरापत्येऽपि गोत्रत्वेनोपचारात् 'गर्गादिभ्यः' इति यञ्, 'आपत्यस्य च' इति यलोपः । अध्येत्रणस्तु 'प्रोक्तात्–' इति लुक् ॥ भिक्षुनटसूत्रयोः किम् ? पाराशरम् । शैलालम् ॥ **१४९३ कर्मन्द—**। इहापि छन्दोऽनुवृत्त्यादि प्राग्वत् ॥ भिक्षुनटसूत्रयोः किम् ? कार्मन्दम् । कार्शाश्वम् ॥ **१४९४ तेनैकदिक्**। तृतीयान्तादेकदिगित्यर्थे अणादयः स्युः ॥ एकदिक्–समाना दिगित्यर्थः । पुनस्तेनेत्युक्तिश्छन्दोऽधिकारनिवृत्त्यर्था ॥—**सौदामनीति**। 'अन्' इति प्रकृतिभावान्न टिलोपः । 'तडित्सौ-

---

१ **कलापीति**—कलापिनां वैशंपायनशिष्यत्वादेव सिद्धे तद्ग्रहणाच्छिष्याणां न ग्रहणम् । २ **भिक्षुसूत्रमिति**—भिक्षुत्वसंपादकं सूत्रमित्यर्थः । यथा नटसूत्रम् । नटसूत्रज्ञाने हि नटत्वसंपत्तिः, एवं तज्ज्ञाने ब्रह्मरूपत्वेन सर्वज्ञानात्कर्मस्वनादरेण भिक्षुत्वसंपत्तेः । तथा च मनुः—'वेदान्तान्विधिवच्छ्रुत्वा संन्यसेदनृणो द्विजः' इति ।

१४९५ । **तसिश्च** ।४।३।११३। स्वरादिपाठादव्ययत्वम् । पीलुमूलेन एकदिक् पीलुमूलतः ।

१४९६ । **उरसो यच्च** ।४।३।११४। चात्तसिः । अणोऽपवादः । उरसा एकदिक् उरस्यः, उरस्तः ।

१४९७ । **उपज्ञाते** ।४।३।११५। तेनेत्येव । पाणिनिना उपज्ञातं पाणिनीयम् ।

१४९८ । **कृते ग्रन्थे** ।४।३।११६। वररुचिना कृतो वाररुचो ग्रन्थः ।

१४९९ । **संज्ञायाम्** ।४।३।११७। तेनेत्येव । अग्रन्थार्थमिदम् । मक्षिकाभिः कृतं माक्षिकं मधु ।

१५०० । **कुलालादिभ्यो वुञ्** ।४।३।११८। तेन कृते संज्ञायाम् । कुलालेन कृतं कौलालकम् । वारुडकम् ।

१५०१ । **क्षुद्राभ्रमरवटरपादपादञ्** ।४।३।११९। तेन कृते संज्ञायाम् । क्षुद्राभिः कृतं क्षौद्रम् । भ्रामरम् । वाटरम् । पादपम् ।

१५०२ । **तस्येदम्** ।४।३।१२०। उपगोरिदमौपगवम् । ॐ **वहेस्तुरणिट् च** । संवोढुः स्वं सांवहित्रम् । ॐ **अग्नीधः शरणे रण् भं च** । अग्निमिन्धे अग्नीत्, तस्य स्थानम्–आग्नीध्रम् । तात्स्थ्यात्सोऽप्याग्नीध्रः । ॐ **समिधामाधाने षेण्यण्** । सामिधेन्यो मन्त्रः । सामिधेनी ऋक् ।

१५०३ । **रथाद्यत्** ।४।३।१२१। रथ्यं चक्रम् ।

१५०४ । **पत्रपूर्वादञ्** ।४।३।१२२। पत्रं वाहनम् । अश्वरथस्येदम्–आश्वरथम् ।

१५०५ । **पत्राध्वर्युपरिषदश्च** ।४।३।१२३। अञ् । ॐ **पत्राद्वाह्ये** । अश्वस्येदं वहनीयम्–आश्वम् । आध्वर्यवम् । पारिषदम् ।

१५०६ । **हलसीराट्ठक्** ।४।३।१२४। हालिकम् । सैरिकम् ।

१५०७ । **द्वन्द्वाद्वुन्वैरमैथुनिकयोः** ।४।३।१२५। काकोलूकिका । कुत्सकुशिकिका । ॐ **वैरे देवासुरादिभ्यः प्रतिषेधः** । दैवासुरम् ।

---

दामिनी विद्युत्' इत्यमरः ॥ **१४९५ तसिश्च** । पूर्वोक्तविषये ॥ **१४९७ उपज्ञाते** । विनोपदेशं ज्ञातमुपज्ञातम् ॥ **१५०० कुलालादिभ्यो—**। कुलाल वरुड चण्डाल निषाद कुम्भकार श्वपाकादयः कुलालादयः ॥ **१५०१ क्षुद्राभ्रमर—**। पादपशब्दाच्छे प्राप्ते, अन्येभ्योऽपि अणि अञ् विधीयते ॥ **१५०२ तस्येदम्**[1] । अणादयः पञ्च महोत्सर्गा घादयश्च षष्ठ्यन्तात्संबन्धिनि स्युः । अनन्तरादिष्वनभिधानान्न–देवदत्तस्यानन्तरमिति ॥ ॐ **वहेस्तु** । इडर्थमिदमुपसंख्यानम्, अण् तु सिद्ध एवानूद्यते । तुरिति तृन्तृचोः सामान्यग्रहणम् ॥ ढत्वादीनामसिद्धत्वादलौकिके प्रक्रियावाक्ये पूर्वमिट् ततो निमित्ताभावान्न ढत्वादीत्याशयेनोदाहरति—**सांवहित्रमिति** ॥ ॐ **अग्नीदिति** । क्विप् । ऋत्विग्विशेषोऽयम् । 'त्वमग्निद्दतायते' इत्यत्र तु छान्दसं ह्रस्वत्वम् ॥—**आग्नीध्रमिति** । भत्वविधानाद्धस्य जश्त्वं नेति भावः ॥—**सोऽपीति** । अग्नीदपीत्यर्थः । ननु 'पिबाग्नीध्रात्तव' इत्यादावाद्युदात्तं प्रयुज्यते, वार्तिके तु 'रण्'इति पाठादयमन्तोदात्त इति चेत्, **अत्राहुः**—'आग्नीध्रसाधारणादञ्' इति वार्तिकेन विहितो यः स्वार्थेऽञ् तत्पक्षे तत्राद्युदात्तत्वं बोध्यम् ॥—**समिधाम्** । कर्मणि षष्ठीयम् । आधानमिति करणे ल्युट् । कर्मणि षष्ठ्यन्तादाधानकरणे षेण्यण् स्यात् ॥—**सामिधेन्य इति** । यया अग्निः समिध्यते सा समित्, संपदादित्वात्करणे क्विप्, तस्या आधानमिति विग्रहः ॥—**सामिधेनीति** । षित्त्वान्ङीष्, 'हलस्तद्धितस्य' इति यलोपः । यया ऋचा समिदाधीयते सा सामिधेनीत्यर्थः । 'प्रवो.वाजा अभिद्यवः' इत्याद्याः–'आजुहोता दुवस्यत' इत्यन्ताः सामिधेन्य इति व्यवह्रियन्ते ॥ **१५०३ रथाद्यत्** । अणोऽपवादः ॥ **'रथाद्रथाङ्गे'** इति वार्तिकमभिप्रेत्याह—**रथ्यं चक्रमिति** । 'रथसीताहलेभ्यो यद्विधौ' इति तदन्तविधिरुपसंख्यायते । परमरथ्यम् । उत्तमरथ्यम् । द्वयो रथयोरङ्गं द्विरथम् । इह 'द्विगोर्लुगनपत्ये' इति यतो लुक् ॥ ननु यत्प्रत्ययोऽत्र रथाङ्ग एव यदीष्यते, कथं तर्हि 'रथस्य वोढा रथ्यः' इति । 'तद्वहति–' इत्यनेनेति चेत् । एवं तर्हि अयमेव यत् रथाङ्ग इव वोढर्यपीष्यतां, 'तद्वहति रथयुगप्रासङ्गम्' इत्यत्र रथग्रहणं त्यज्यतामिति चेत् । मैवम् । द्वौ रथौ वहति द्विरथ्य इत्यत्र 'द्विगोर्लुगनपत्ये' इति प्राग्दीव्यतीयस्य लुक्प्रसङ्गात् । 'तद्वहति' इति यत्प्रत्ययस्य तु प्राग्दीव्यतीयत्वाभावान्न लुगिति द्विरथ्य इति सिध्यति ॥ ननु 'द्विगोर्लुगनपत्ये' इत्यत्राचीत्यस्यापकर्षणात्कथमत्र यतो लुक्प्रसक्तिरिति चेत्, **अत्राहुः**—'तद्वहति–' इत्यत्र रथग्रहणमेव ज्ञापकम्–एतस्य यतो हलादेरपि लुग् भवतीति । अन्यथा तत्र रथग्रहणं व्यर्थमेव स्यात् । तथा च द्वयो रथयोरङ्गमिति विग्रहे द्विरथमिति प्रयोगः सुस्थ इति ॥ **१५०४ पत्रपूर्वादञ्** । पूर्वस्य यतोऽपवादः ॥—**पत्रमिति** । 'पतन्त्यनेनेति विग्रहे दाम्नी–' इत्यादिना ष्ट्रन् ॥ रथादित्येव संबध्यत इत्याह—**अश्वरथस्येदमिति** । अश्वयुक्तो रथोऽश्वरथस्तस्याङ्गमित्यर्थः ॥ **१५०५ पत्राध्वर्यु—**। अणोऽपवादः । वार्तिकमाह—**पत्राद्वाह्य इति** । इह पत्रेत्यर्थग्रहणे, इतरयोस्तु स्वरूपग्रहणे व्याख्यानमेव शरणम् ॥ **१५०७ द्वन्द्वाद्वुन्–**। अणोऽपवादः । छं तु परत्वाद्बाधते ॥—**काकोलूकिकेति** । काकोलूकस्य वैरमित्यर्थः । वुन्नन्तं स्त्रियाम् ।

---

१ **तस्येदमिति**—अत्र 'शेषे' इत्यनुवृत्तम् । ततश्चापत्यादिभ्योऽन्येषां शेषभूतसर्वविशेषाणां सामान्यविशेषरूपेण प्रत्ययार्थत्वं लभ्यते, अपत्यादिचतुरर्थ्यन्तार्थानां न । २ **भं चेति**—'यचि भम्' इति सूत्रानन्तरं रणि–इति वक्तव्यमित्यर्थः । तेनाकडारस्थत्वात्पदत्वबाधसिद्धिः । तेन चाग्नीध्रमित्यत्र जश्त्वं न ।

१५०८ । **गोत्रचरणाद्वुञ्** ।४।३।१२६। औपगवकम् । ॐ **चरणाद्धर्माम्नाययोरिति वक्तव्यम्** । काठकम् ।

१५०९ ।**सङ्घाङ्कलक्षणेष्वञ्यञिञामण्**।४।३।१२७। ॐ **घोषग्रहणमपि कर्तव्यम्** । अञ्–बैदः संघोऽङ्को घोषो वा । बैदं लक्षणम् । यञ्–गार्गः । गार्गम् । इञ्–दाक्षः । दाक्षम् । परम्परासंबन्धोऽङ्कः । साक्षात्तु लक्षणम् ।

१५१० । **शाकलाद्वा** ।४।३।१२८। अण् वोक्तेऽर्थे, पक्षे चरणत्वाद्वुञ् । शाकलेन प्रोक्तमधीयते शाकलाः, तेषां सङ्घोऽङ्को घोषो वा–शाकलः, शाकलकः । लक्षणे क्लीबता ।

१५११ । **छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः** ।४।३।१२९। छन्दोगानां धर्म आम्नायो वा छान्दोग्यम् । औक्थिक्यम् । याज्ञिक्यम् । बाह्वृच्यम् । नाट्यम् । ॐ **चरणाद्धर्माम्नाययोः**–इत्युक्तम्, तत्साहचर्यान्नटशब्दादपि तयोरेव ।

१५१२ । **न दण्डमाणवान्तेवासिषु** ।४।३।१३०। दण्डप्रधाना माणवा दण्डमाणवाः, तेषु शिष्येषु च वुञ् न स्यात् । दाक्षाः, दण्डमाणवाः शिष्या वा ।

१५१३ । **रैवतिकादिभ्यश्छः** ।४।३।१३१। तस्येदमित्यर्थे । वुञोऽपवादः । रैवतिकीयः । बैजवापीयः ।

ॐ **कौपिञ्जलहास्तिपदादण्** । कुपिञ्जलस्यापत्यम्, इहैव निपातनादण्, तदन्तात्पुनरण्, कौपिञ्जलः । गोत्रवुञोऽपवादः । हस्तिपादस्यापत्यं हास्तिपदः, तस्यायम्–हास्तिपदः ।

१५१४ । **आथर्वणिकस्येकलोपश्च** ।४।३।१३२। अण् स्यात् । आथर्वणिकस्यायम्–आथर्वणः, धर्म आम्नायो वा । चरणाद्वुञोऽपवादः ।

॥ **समाप्ताः शैषिकाः** ॥

## अथ तद्धितेषु प्राग्दीव्यतीयाः ।

१५१५ । **तस्य विकारः** ।४।३।१३३। ॐ **अश्मनो विकारे टिलोपो वक्तव्यः** । अश्मनो विकारः–आश्मः । भास्मनः । मार्तिकः ।

---

'वैरमैथुनिकादिवुन्' इति स्त्र्यधिकारे अमरः ॥—**कुत्सकुशिकिकेति** । कुत्सकुशिकयोर्मैथुनिका, विवाहरूपः संबन्ध इत्यर्थः ॥ मिथुनं हि दंपती तस्य कर्म क्रियानिष्पादनं, मनोज्ञादित्वाद्वुञ् । वुञन्तं चेदं स्त्रियां, स्वभावात् । **अत्र वदन्ति**— कुत्साश्च कुशिकाश्च कुत्सकुशिकास्तेषां मैथुनिकेत्यपि विग्रहः । इह कुत्सश्च कुशिका चेति द्वयोरेव मैथुनिकायां वुनिति नाग्रहः कार्यः । 'यूनि लुक्' इति सूत्रे कैयटेन अत्रिभरद्वाजिकेत्यादिकं प्रसङ्गादुदाहृत्य बहुवचनान्तद्वन्द्वाद्वुनो व्याख्यातत्वादिति ॥ १५०९ **सङ्घाङ्क**—। पूर्वस्य वुञोऽपवादः ॥—**घोषग्रहणमिति** । एवं च प्रकृतयस्तिस्रः, प्रत्ययार्थविशेषणानि चत्वारीति वैषम्याद्यथासंख्यमपि न प्रवर्तते ॥—**गार्ग इति** । 'आपत्यस्य–' इति यलोपः ॥ यद्यप्यङ्कलक्षणयोः पर्यायत्वं प्रसिद्धं 'कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम्' इत्यमरः, तथापि पृथग्ग्रहणसामर्थ्यादिह विशेषपरतेत्याह—**परम्परासंबन्ध इति** । यथा गवादिनिष्ठः स्वामिना गोद्वारा संबन्धः ॥—**साक्षादिति** । यथा बिदानां विद्या । घोष आभीरस्थानम् । णित्त्वं ङीबर्थं पुंवद्भावनिषेधार्थं च । बैदी विद्या यस्य बैदीविद्यः । बिदानामसाधारणी या विद्या तद्वानित्यर्थः ॥ १५११ **छन्दोगौक्थिक**—। सङ्घादयो निवृत्ताः । एभ्यो ञ्यः स्यात्तस्येदमित्यर्थे । चरणशब्देभ्यो वुञोऽपवादः । नटात्तु औत्सर्गिकस्याणः ॥ धर्माम्नाययोरित्युक्तेर्नेह—छन्दोगं कुलमित्यादि ॥ १५१२ **न दण्ड**—। 'तस्येदम्' इत्यनुवर्तते ॥ —**तेषु शिष्येषु चेति** । प्रत्ययार्थविशेषणेष्विति शेषः ॥—**दाक्षा इति** । 'इञश्च' इत्यण् ॥ १५१३ **रैवतिकादिभ्यश्छः** । रैवतिकशब्दो 'रेवत्यादिभ्यष्ठक्' इति ठगन्तः । रैवतिक, औदमेघि, बैजवापि–इत्यादिरैवतिकादयोऽमी गोत्रप्रत्ययान्ताः, ततः पूर्वेण वुञि प्राप्ते छविधानार्थमिदमित्याह—**वुञोऽपवाद इति** । १५१४ अत इञमाशङ्क्याह—**इहैव निपातनादिति** । हस्तिनः पाद इव पादो यस्य हस्तिपादः । पादस्य लोपो न भवति, अहस्त्यादिभ्य इति वचनात्तदाह—**हस्तिपादस्येति** ॥—**हास्तिपद इति** । अस्मादेव निपातनादण् पद्भावश्चेति भावः ॥ १५१४ **आथर्वणिकस्य**—। अथर्वणा प्रोक्तो वेदः–अथर्वा, अभेदोपचारात् । 'तमधीते' वसन्तादित्वाट्ठक् । 'दाण्डिनायन'आदिसूत्रे निपातनाट्टिलोपाभावः ॥ **अन्ये त्वाहुः**—अथर्वणा प्रोक्तमधीते आथर्वणिकः । इह प्रोक्तेऽण् । ततः 'छन्दोब्राह्मणानि–' इति तद्विषयतायामाथर्वणशब्दस्यापि वसन्तादिषु पाठादध्येतरि ठक्, तस्य विधानसामर्थ्यात्प्रोक्ताल्लुङ्नेति ॥ **इति शैषिकप्रकरणम्** ॥

१५१५ **तस्य विकारः** । षष्ठ्यन्ताद्विकारे अणादयः स्युः । घादिसंबद्धस्य तस्य ग्रहणस्य निवृत्तये पुनस्तस्येत्युक्तम् । अणादयस्तु न निवर्तन्ते, 'प्राग्दीव्यतः–' 'प्राग्भवनात्' इति विशिष्टावधिपरिच्छेदेनाधिकृतत्वात् । इह 'प्राणिरजतादिभ्योऽञ्, ओरञ्, अनुदात्तादेश्च, मयड्वैतयोः, नित्यं वृद्धशरादिभ्यः, पिष्टाच्च' इत्यादिभिरपवादानां वक्ष्यमाणत्वात् 'अप्राणि, आद्युदा-

---

१ **कौपिञ्जलेति** । 'रैवतिकादिभ्यश्छः' इति सूत्रे वार्तिकत्वेनास्य पाठ इदानींतनेषु भाष्यपुस्तकेषु दृश्यते । **कैयटोऽपि**–अपाणिनीयः सूत्रेष्वस्य पाठ इत्याह । एवञ्च वार्तिकत्वेनैवात्रास्य पाठः । 'आथर्वणिकस्येकलोपश्च' इत्येतत्तु प्रदीपोद्योतयोर्मते सूत्रमेव । तथाच **प्रदीपे—अण्च वक्तव्यमिति** । कौपिञ्जलहास्तिपदेत्यस्यापाणिनीयत्वात् । कौपिञ्जलेत्यस्य सूत्रत्वाभावेन तस्मादणोऽननुवर्तनादस्मिन् सूत्रे 'अण्चेति वक्तव्यम्' इति तस्याशयः । **उद्योते च**—काम्ये रोरित्यादिवार्तिकानां सूत्रेष्वनुवृत्तिदर्शनात्कैय्यटोक्तं चिन्त्यम्–इति । **हरदत्तस्तु**—'आथर्वण–' इति वार्तिकमेवेत्याह ।

१५१६ । **अवयवे च प्राण्योषधिवृक्षेभ्यः** ।४।३।१३४। चाद्विकारे । मयूरस्यावयवो विकारो वा मायूरः । मौर्वम्, काण्डं भस्म वा । पैप्पलम् ।

१५१७ । **बिल्वादिभ्योऽण्** ।४।३।१३५। बैल्वम् ।

१५१८ । **कोपधाच्च** ।४।३।१३६। अण् । अञोऽपवादः । तर्कु–तार्कवम् । तैत्तिडीकम् ।

१५१९ । **त्रपुजतुनोः षुक्** ।४।३।१३७। आभ्यामण् स्याद्विकारे, एतयोः षुगागमश्च । त्रापुषम् । जातुषम् ।

१५२० । **ओरञ्** ।४।३।१३८। दैवदारवम् । भाद्रदारवम् ।

१५२१ । **अनुदात्तादेश्च** ।४।३।१३९। दाधित्थम् । कापित्थम् ।

१५२२ । **पलाशादिभ्यो वा** ।४।३।१४०। पालाशम् । खादिरम् । कारीरम् ।

१५२३ । **शम्याः ष्लञ्**[1] ।४।३।१४१। शामीलं भस्म । षित्वान्ङीष्, शामीली स्रुक् ।

१५२४ । **मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः** ।४।३।१४२। प्रकृतिमात्रान्मयड्वा स्याद्विकारावयवयोः । अश्ममयम्, आश्मनम् । अभक्ष्येत्यादि किम् । मौद्गः सूपः । कार्पासम्–आच्छादनम् ।

१५२५ । **नित्यं वृद्धशरादिभ्यः** ।४।३।१४३। आम्र-

---

त्तम्, अवृद्धं, प्रतिपदमवक्ष्यमाणप्रत्ययं च' उदाहरणमिति पर्यालोच्य तथैवोदाहरति—**आश्म इत्यादि** । अश्मन्–भस्मन्-शब्दौ मनिन्प्रत्ययान्तौ । 'मृदस्तिकन्' । नित्स्वरेण त्रयोऽप्याद्युदात्ताः । प्राचीनस्य तस्येत्यस्य निवृत्तत्वादधिकारोक्तप्रत्यया न प्रवर्तन्त इति नेह ठक्—हालः, सैरः ॥ **१५१६ चाद्विकार इति** । तेन वक्ष्यमाणप्रत्ययाः प्राण्यादिभ्यस्त्रिभ्योऽर्थद्वये भवन्ति, अन्येभ्यस्तु विकार एवेति फलितम् ॥—**मायूर इति** । 'प्राणिरजतादिभ्यः' इत्यञ् । अनुदात्तादेरञः सिद्धत्वादुदात्ताद्यर्थं वृद्धेषु मयड्बाधनार्थं चावश्यकमिदं परत्वादनुदात्तादिष्वपि प्रवर्तते ॥ ओषधिभ्य उदाहरति—**मौर्वमिति** । मूर्वाशब्दः 'तृणधान्यानां च द्व्यषाम्' इत्याद्युदात्तः । पिप्पलशब्दस्तु 'लघावन्ते' इत्यनेनाद्युदात्तः ॥ **१५१७ बिल्वादिभ्योऽण्** । अञ्-मयटोरपवादः । बिल्व व्रीहि काण्ड मुद्ग मसुर गोधूम इक्षु कर्पासी वेण्वादयो बिल्वादयः ॥ **१५१९ त्रपुजतुनोः**—। 'बिल्वादिभ्योऽण्' इत्यतोऽनुवर्तनादाह—**अण् स्यादिति** । 'ओरञ्' इत्यस्यापवादः ॥ अप्राण्यादित्वादवयवे न भवतीत्याशयेनाह—**विकारे इति** ॥—**त्रापुषमिति** । त्रपुणो विकारः । एवं जतुनो विकारो जातुषम् ॥ **१५२० ओरञ्** । अनुदात्तादेरन्यदिहोदाहरणम् ॥—**दैवदारवमिति** । देवदारुभद्रदारुशब्दौ 'मितद्र्वर्थानाम्' इत्याद्युदात्तौ ॥ **१५२१ दाधित्थमिति** । दधनि तिष्ठति, 'सुपि स्थः' इति कः । उपपदसमासः । पृषोदरादित्वात्सकारस्य तकारः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम् । एवं कपित्थेऽपि बोध्यम् ॥ **१५२२ पलाशादिभ्यो वा** । उभयत्रविभाषेयम्, पलाशखदिरशिंशपास्यन्दनानामनुदात्तादित्वान्नित्यं प्राप्ते, करीरशिरीषविकङ्कतपूलासयवासशब्दानामप्राप्ते विधानात् ॥—**पालाशमिति** । पलाशशब्दो घृतादित्वादन्तोदात्तः ॥ खदिरशब्दः 'अजिरशिशिर–' इत्यादौ किरच्प्रत्ययान्तो निपातितः ॥ शिंशपाशब्दः 'अथ द्वितीयं प्रागीषात्' इति वर्तमाने 'पान्तानां गुर्वादीनाम्' इति मध्योदात्तः ॥ स्पदि किंचिच्चलने, 'अनुदात्तेतश्च हलादेः' इति युच् ॥—**कारीरमिति** । 'किरतेरीरन्' । नित्स्वरेण करीरशब्दोऽयमाद्युदात्तः ॥ 'कृतॄभ्यामीषन्' 'शॄपॄभ्यां किच्च' । पूर्ववच्छिरीषशब्दोऽप्याद्युदात्तः । विकङ्कतपूलासयवासशब्दाः 'ग्रामादीनां च' इत्याद्युदात्ताः ॥ **१५२३ षित्वान्ङीषिति** । टित्वान्ङीबिति तु माधवः ॥ **१५२४ मयड्वैतयोः**—। भाषायां किम्? खादिरो यूप इति वृत्तिकारः ॥ ननु मयटो वैकल्पिकत्वात्सिद्धमिदमिति चेत्, **अत्राहुः**—वेदे बह्वचः परस्य मयटोऽर्थान्तरपरत्वमेवेति तात्पर्यग्रहणार्थमेवेदम् । 'द्व्यचश्छन्दसि' इति सूत्रस्य 'द्व्यच एव' इति नियमार्थत्वे यद्यपीदं गतार्थम्, तथापि 'द्व्यचश्छन्दस्येव' इति विपरीतनियमशङ्कानिवृत्त्यर्थं भाषाग्रहणं कृतमिति ॥ अधिकारादेव विकारावयवयोर्लाभे एतयोरिति वचनं ये विशेषप्रत्ययाः 'प्राणिरजतादिभ्योऽञ्' इत्येवमादयस्तद्विषयेऽपि यथा स्यादित्येवमर्थम् । कपोतमयं, लोहमयम् ॥ इह विकारावयवाभ्यां सह प्रत्येकम् 'अभक्ष्याच्छादनयोः' इति संबध्यते, समासनिर्देशात्–अतो यथासंख्यं न ॥—**आश्मनमिति** । 'विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः' इति वचनादश्मभेदशब्दे भेदशब्दस्य लोपे अश्मन्निति नान्तमवशिष्यते, तथा कल्माषाङ्घ्रे राज्ञो भार्यायां मदयन्त्यां वसिष्ठेनोत्पादितः सुतोऽश्मको नाम तत्र संज्ञात्वद्योतकस्य कप्रत्ययस्याभावे अश्मन्निति नाम भवति, तस्यावयवे आश्मनम्, विकारेऽप्याश्मनमित्येव भवति । न च 'अश्मनो विकारे' इति टिलोपः स्यादिति वाच्यम् । प्रसिद्धतरत्वेन पाषाणवाचकस्यैव तत्र ग्रहीतुमुचितत्वात् ॥ वस्तुतस्तु 'तस्येदम्' इति सामान्यविवक्षायां पाषाणवाचकस्याप्यश्मन्शब्दस्याश्मनमिति भविष्यति, पैष्टी सुरेतिवत् ॥—**मौद्गः सूपः । कार्पासमिति** । मुद्गशब्दो घृतादित्वादन्तोदात्तः, 'कृञः पासः' इति पासप्रत्यये गुणे रपरे च कर्पासीशब्दो जातिलक्षणङीषन्तः, ताभ्यां 'अनुदात्तादेश्च' इत्यञं बाधित्वा बिल्वादित्वादण् ॥ **१५२५ नित्यं वृद्ध—**। इह 'भाषायामभक्ष्याच्छादनयोः' इत्यनुवर्तत इति वृत्तिः ॥ नन्वेवमानन्दमयाधिकरणे

---

१ 'शम्याष्टॢञ्' इत्यपि पाठान्तरम् । अत्र माधवस्तु टित्वान्ङीबित्याह, षित्वटित्वपाठयोः साध्वसाधुत्वविवेको बहुश्रुतैः कार्यः–इति मनोरमायामुक्तम् ।

मयम्। शरमयम्। ॐ एकाचो नित्यम्। त्वङ्मयम्। वाङ्मयम्। कथं तर्हि–आप्यम्, अम्मयमिति। 'तस्येदम्' १५०२ इत्यण्णन्तात्स्वार्थे ष्यञ्।

१५२६। **गोश्च पुरीषे** ।४।३।१४४। गोः पुरीषं गोमयम्।

१५२७। **पिष्टाच्च** ।४।३।१४५। मयट् स्याद्विकारे पिष्टमयं भस्म। कथं पैष्टी सुरेति। सामान्यविवक्षायां 'तस्येदम्' १५०२ इत्यण्।

१५२८। **संज्ञायां कन्** ।४।३।१४६। पिष्टादित्येव। पिष्टस्य विकारविशेषः पिष्टकः। 'पूपोऽपूपः पिष्टकः स्यात्'।

१५२९। **व्रीहेः पुरोडाशे** ।४।३।१४७। मयट् स्यात्। बिल्वाद्यणोऽपवादः। व्रीहिमयः पुरोडाशः। व्रैहम्, अन्यत्।

१५३०। **असंज्ञायां तिलयवाभ्याम्** ।४।३।१४८। तिलमयम्। यवमयम्। संज्ञायां तु–तैलम्, यावकः।

१५३१। **तालादिभ्योऽण्** ।४।३।१५१। अञ्मयटोरपवादः। (ग) **तालाद्धनुषि**। तालं धनुः, अन्यत्–तालमयम्। ऐन्द्रायुधम्।

१५३२। **जातरूपेभ्यः परिमाणे** ।४।३।१५२। अण्। बहुवचनात्पर्यायग्रहणम् हाटकः, तापनीयः, सौवर्णः, वा निष्कः। परिमाणे किम्। हाटकमयी यष्टिः।

१५३३। **प्राणिरजतादिभ्योऽञ्** ।४।३।१५३। शौकम्। बाकम्। राजतम्।

१५३४। **ञितश्च तत्प्रत्ययात्** ।४।३।१५४। ञितो विकारावयवप्रत्ययस्तदन्तादञ् स्यात्तयोरेवार्थयोः। मयटोऽपवादः। शामीलस्य शामीलम्। दाधित्थस्य दाधित्थम्। कापित्थम्। ञितः किम्। बैल्वमयम्।

१५३५। **क्रीतवत्परिमाणात्**[1] ।४।३।१५५। 'प्राग्वहतेष्ठक्' १५४९ इत्यारभ्य क्रीतार्थे ये प्रत्यया येनोपाधिना परिमाणाद्विहितास्ते तथैव विकारेऽतिदिश्यन्ते। अणादीनामपवादः। निष्केण क्रीतं नैष्किकम्। एवं निष्कस्य विकारोऽपि नैष्किकः। शतस्य विकारः शत्यः, शतिकः।

१५३६। **उष्ट्राद्वुञ्** ।४।३।१५६। प्राण्यञोऽपवादः। औष्ट्रकः।

१५३७। **उमोर्णयोर्वा** ।४।३।१५७। औमम्, औमकम्। और्णम्, और्णकम्। वुञभावे यथाक्रममणञौ।

१५३८। **एण्या ढञ्** ।४।३।१५८। ऐणेयम्। एणस्य तु–ऐणम्।

शङ्कराचार्यैः 'अन्योऽन्तर आत्माऽऽनन्दमयः' इति श्रुतौ 'आनन्दमय इति विकारे मयट्' इत्युक्तं तत्कथं संगच्छतां, 'प्राचुर्ये मयट्' इति तु वक्तुमुचितमिति चेत्, **अत्राहुः**—प्राचुर्ये मयट्यपि प्रकृत्यर्थविरोधिनो दुःखस्य लेखतोऽनुवृत्तिलाभात् प्रकृते विकारार्थः पर्यवस्यतीति तेषामाशयः॥ यद्वा 'नित्यं वृद्ध–' इत्यत्र भाषाग्रहणं नानुवर्तते, अनुवृत्तावपि 'भाषायां नित्यम्, अन्यत्र काचित्कः' इत्याश्रित्य मयट् सुसाधः॥ अथ वा 'हेतुमनुष्येभ्यः' इत्यनुवर्तमाने 'मयट् च' इति सूत्रेण आगतार्थे मयट्। विकार इति स्वार्थिकार्थकथनमेव, अतः शङ्करभगवत्पादोक्तिरनवद्यैवेति॥—**शरमयमिति**। शर दर्भ मृत् कुटी तृण सोम बल्वज इति शरादिः॥—**एकाचो नित्यमिति**। आरम्भसामर्थ्यादेव सिद्धे 'नित्यं वृद्ध–' नित्यग्रहणं योगविभागेनान्यत्रापि क्वचिद्विधानार्थं, तेनैतल्लभ्यत इति भावः॥ एकाच्त्वादेव सिद्धे शरादिषु मृच्छब्दपठनं विस्पष्टार्थमित्याहुः॥ १५२६ **गोश्च पुरीषे**। पुरीषं न विकारो, नाप्यवयवः। तथापि 'तस्येदम्' इत्यर्थेऽयं प्रत्ययः। विकारावयवयोस्तु गोपयसोर्यत् वक्ष्यति॥ पुरीषे किम्? गव्यं पयः॥ १५३० **यावक इति**। यवशब्दाद्विकारेऽण्, तदन्तात् 'यावादिभ्यः' इति स्वार्थे कन्॥ १५३१ **तालादिभ्योऽण्**।—**अञ्मयटोरिति**। तालश्यामाकशब्दाभ्यां वृद्धत्वान्मयट् प्राप्तः। बर्हिणां विकारो बार्हिणम्, 'प्राणिरजतादिभ्योऽञ्'। ततो 'ञितश्च तत्प्रत्ययात्' इत्यञ् प्राप्तः, शेषेभ्यस्त्वनुदात्तादित्वादिञ् प्राप्तः। तथाहि—विशिदृशिभ्यामिन्द्रशब्द उपपदे मूलविभुजादित्वात्कः। 'अन्येषामपि–' इति दीर्घः। इन्द्राविशः। इन्द्रादृशः। 'चप सान्त्वने' पचाद्यच्, चापः। पीयूक्षाशब्दो 'लघावन्ते–' इति मध्योदात्तः, 'फिषः' इत्यधिकारादापः प्रागेव स्वरप्रवृत्तेः। इन्द्रायुधशब्दः समासस्वरेणान्तोदात्तः। अण्ग्रहणं बाधकबाधनार्थम्। यथाविहितप्रत्ययविधौ बर्हिणशब्दाद्वृद्धलक्षणो मयट् स्यात्, 'ञितश्च तत्प्रत्ययात्' इत्यञो बाधनेन वचनस्य चरितार्थत्वादित्याहुः॥—**तालाद्धनुषीति**। गणसूत्रमिदम्॥ १५३२ **हाटक इति**। इह वृद्धलक्षणो मयट् प्राप्तः, तपनीयादेः 'अनुदात्तादेश्च' इत्यञ् प्राप्तः॥ १५३३ **प्राणि—**। अनुदात्तादेरञः सिद्धत्वात्परिशिष्टमिहोदाहरणं तदाह—**शौकम्। बाकमिति**। शुकबकशब्दौ 'प्राणिनां कुपूर्वाणाम्' इत्याद्युदात्तौ॥—**राजतमिति**। रजत सीस लोह उदुम्बर कण्टकारेत्यादयो रजतादयस्तेषु अनुदात्तादीनां पुनः पाठो मयड्बाधनाय। अन्यथा हि परत्वान्मयट् स्यादेव॥ १५३४ **शामीलमिति**। शामीलशब्दः 'शम्याः ष्लञ्' इति ष्लञन्तः। दधित्थात् 'अनुदात्तादेश्च' इत्यञ्। दाधित्थस्य दाधित्थम्॥—**बैल्वमयमिति**। बिल्वशब्दोऽणन्तः॥ १५३५ **नैष्किकमिति**। 'तेन क्रीतम्' इति ठक्॥—**शत्यः। शतिक इति**। 'शताच्च ठन्यतौ–'॥ १५३६ **अणञाविति**। उमाशब्दः 'तृणधान्यानां च' इत्याद्युदात्तः। ऊर्णाशब्दस्तु प्रातिपदिकस्वरेणान्तोदात्त इति भावः॥ १५३८ **एण्या ढञ्**। प्राण्य-

1 **परिमाणादिति**। परिमाणशब्देन परिच्छेदकमात्रं, व्याख्यानात्। तेन संख्याया अपि परिमाणपदेन ग्रहणम्।

१५३९ । गोपयसोर्यत् ।४।३।१५९। गव्यम् । पयस्यम् ।

१५४० । द्रोश्च ।४।३।१६०। द्रुर्वृक्षः, तस्य विकारोऽवयवो वा द्रव्यम् ।

१५४१ । माने वयः ।४।३।१६१। द्रोरित्येव । द्रुवयम् । 'पौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयम्' ।

१५४२ । फले लुक् ।४।३।१६२। विकारावयवप्रत्ययस्य लुक् स्यात् फले । आमलक्याः फलम्—आमलकम् ।

१५४३ । प्लक्षादिभ्योऽण् ।४।३।१६३। विधानसामर्थ्यान्न लुक् । प्लाक्षम् ।

१५४४ । न्यग्रोधस्य च केवलस्य ।७।३।५। अस्य न वृद्धिरैजागमश्च । नैयग्रोधम् ।

१५४५ । जम्ब्वा वा ।४।३।१६४। जम्बूशब्दात्फलेऽण् वा स्यात् । जाम्बवम् । पक्षे ओरञ्, तस्य लुक्, जम्बु ।

१५४६ । लुप् च ।४।३।१६५। जम्ब्वाः फलप्रत्ययस्य लुप् वा स्यात् । 'लुपि युक्तवत्—' १२९६ जम्ब्वाः फलं जम्बूः । ॐ **फलपाकशुषामुपसंख्यानम्** । व्रीहयः । मुद्गाः । ॐ **पुष्पमूलेषु बहुलम्** । मल्लिकायाः पुष्पं मल्लिका । जात्याः पुष्पं जाती । विदार्या मूलं विदारी । बहुलग्रहणान्नेह—पाटलानि पुष्पाणि, साल्वानि मूलानि । बाहुलकात्क्वचिल्लुक्—अशोकम्, करवीरम् ।

१५४७ । हरीतक्यादिभ्यश्च ।४।३।१६६। एभ्यः फलप्रत्ययस्य लुप्स्यात् । हरीतक्यादीनां लिङ्गमेव प्रकृतिवत् । हारीतक्याः फलानि हरीतक्यः ।

१५४८ । कंसीयपरशव्ययोर्यञञौ लुक् च ।४।३।१६७। कंसीयपरशव्यशब्दाभ्यां यञञौ स्तश्छयतोश्च लुक् । कंसाय हितं कंसीयम्, तस्य विकारः कांस्यम् । परशवे हितं परशव्यम्, तस्य विकारः पारशवः ।

॥ इति प्राग्दीव्यतीयाः ॥

---

## अथ तद्धितेषु ठगधिकारः ।

१५४९ । प्राग्वहतेष्ठक् ।४।४।१। 'तद्वहति' १६२८ इत्यतः प्राक् ठगधिक्रियते । ॐ **तदाहेति माशब्दादिभ्य उपसंख्यानम्** । माशब्दः कारि इति य आह स माशब्दिकः ।

१५५० । स्वागतादीनां च ।७।३।७। ऐच् न स्यात् ।

---

ञोऽपवादः ॥ स्त्रीलिङ्गनिर्देशादाह—**एणस्य त्विति** ॥ **१५३९ गोपयसोः**—। यद्यपि सर्वत्र गोरजादिप्रसङ्गे यत् उक्तः, तथापि 'मयड्वैतयोः—' इति पक्षे प्राप्तं मयटं बाधितुं पुनरयं यद्विधिः ॥ **१५४० द्रोश्च** । ओरञः, 'एकाचो नित्यम्' इति मयटश्चापवादोऽयम् ॥—**द्रव्यमिति** । 'ओर्गुणः' 'वान्तो यि प्रत्यये' । 'द्रव्यगुणकर्म—' इत्यादिषु प्रयुज्यमानद्रव्यशब्दस्तु गुणैर्द्रूयते आश्रीयते इति द्रुधातोः 'अचो यत्' इति यत्प्रत्ययान्तः ॥ **१५४१ माने वयः** । यतोऽपवादः ॥—**द्रुवयमिति** । द्रोर्विकारभूतं प्रस्थादिपरिमाणमित्यर्थः ॥ **१५४२ फले लुक्** ॥—**विकारावयवेति** । फलितस्य वृक्षस्य फलमवयवो विकारश्च । तेनान्यतरस्मिन् प्रत्ययः ॥—**आमलकमिति** । मयटो 'लुक्तद्धितलुकि' इति ङीषो लुक् । न चात्र स्थानिवद्भावेन 'यस्येति च' इति लोपः शङ्क्यः, 'लुका लुप्तं न स्थानिवत्' इत्यभ्युपगमात् । अत एव पञ्चभिः पट्वीभिः क्रीतः पञ्चपटुरित्यत्र 'अध्यर्धपूर्व—' इति ठञो लुकि कृते 'लुक्तद्धित—' इति ङीपो लुका लुप्तत्वेन स्थानिवत्त्वाभावादुकारस्य यणादेशो न भवति ॥ **१५४३ प्लक्षादिभ्योऽण्** । अञोऽपवादः । शिग्रुकर्कन्धूशब्दाभ्याम् 'ओरञ्' इति, अन्येभ्यस्त्वनुदात्तादित्वादञः प्राप्तिः ॥ प्लक्ष न्यग्रोध अश्वत्थ इङ्गुदी शिग्रु कर्कन्धू बृहती ॥ तत्र प्लक्षशब्दः 'फिषः' इत्यन्तोदात्तः । न्यग्रोधशब्दो 'लघावन्ते' इति मध्योदात्तः । अश्वत्थशब्दस्तु घृतादित्वादन्तोदात्तः । इङ्गुदीबृहतीशब्दौ गौरादिङीषन्तौ ॥ 'आश्वत्थवैणवप्लाक्षनैयग्रोधैङ्गुदं फले' इत्यमरः ॥ **१५४४ न्यग्रोधस्य च**—। केवलस्येति किम् ? न्यग्रोधमूले भवाः—न्याग्रोधमूलाः शालयः ॥ न्यक् रोहतीति न्यग्रोध इति व्युत्पत्तिपक्षे नियमार्थम्, अव्युत्पत्तिपक्षे तु विध्यर्थम् ॥ **१५४५ जम्ब्विति** । नपुंसकह्रस्वः ॥ 'फले जम्ब्वा जम्ब्वूः स्त्री जम्बु जाम्बवम्' इत्यमरः ॥ **१५४६ फलपाकेति** । फलपाकेन शुष्यन्तीति फलपाकशुषः ॥—**व्रीहयः । मुद्गा इति** । बिल्वाद्यणो लुक् ॥—**मल्लिकेति** । अनुदात्तलक्षणस्याञो लुप् ॥ 'मालादीनां च' इति फिट्सूत्रान्मल्लिकाशब्दे द्वितीयमुदात्तम् । जातीविदारीशब्दौ गौरादिङीषन्तौ ॥—**पाटलानीति** । बिल्वादित्वादण् । साल्वशब्दः प्रातिपदिकस्वरेणान्तोदात्तः ॥ **१५४७ हरीतक्यादिभ्यश्च** । इह द्राक्षाप्रभृतिभ्यो 'नित्यं वृद्ध—' इति प्राप्तस्य मयटो लुप्, अनुदात्तादिभ्योऽञः, इतरेभ्यस्त्वणः ॥—**लिङ्गमेवेति** । वचनं विशेष्यवदेव, 'हरीतक्यादिषु व्यक्तिः' इत्युक्तत्वादिति भावः ॥ **१५४९ कंसीयमिति** । 'प्राक्क्रीताच्छः' इत्यधिकारे 'तस्मै हितम्' इति छः । तस्यैव छस्यापवादतया 'उगवादिभ्यो यत्' परशव्यं दारु । पारशव्यशब्दस्यानुदात्तादित्वादञि सिद्धे तत्संनियोगेन यतो लुगर्थं वचनम् । न च 'यस्येति—' लोपे कृते 'हलस्तद्धितस्य' इति यलोपेन सिद्धमिष्टमिति भ्रमितव्यम् । ईतीत्यनुवृत्तेः ॥ **इति प्राग्दीव्यतीयप्रकरणम्** ॥

**१५४९ तदाहेतीति** । वाक्यादयं प्रत्ययविधिः, शब्दो माकारीति यो निषेधति स माशब्दिक उच्यते । तथा नित्यः शब्द इति य आह स नैत्यशब्दिकः । कार्यशब्दिकः । इह वाक्याद् द्वितीया न संभवति, अप्रातिपदिकत्वात् । तेन तच्छब्देन कर्ममात्रं निर्दिश्यते । तच्च वाक्यार्थरूपमित्याहुः ॥ **१५५० ऐच् न स्यादिति** । 'न य्वाभ्याम्—' इति प्राप्त ऐजागमोऽनेन निषि-

स्वागतमित्याह स्वागतिकः । स्वाध्वरिकः । स्वाङ्गस्यापत्यं स्वाङ्गिः । व्यङ्गस्यापत्यं व्याङ्गिः । व्यडस्यापत्यं व्याडिः । व्यवहारेण चरति व्यावहारिकः । स्वपतौ[1] साधु स्वापतेयम् । ❀ **आहौ प्रभूतादिभ्यः** । प्रभूतमाह प्राभूतिकः । पार्यासिकः । ❀ **पृच्छतौ सुस्नातादिभ्यः** । सुस्नातं पृच्छति सौस्नातिकः । सौखशायनिकः, अनुशातिकादिः । ❀ **गच्छतौ परदारादिभ्यः** । पारदारिकः । गौरुतल्पिकः ।

१५५१ । **तेन दीव्यति खनति जयति जितम्** ।४।४।२। अक्षैर्दीव्यति आक्षिकः । अभ्र्या खनति आभ्रिकः । अक्षैर्जयति आक्षिकः । अक्षैर्जितम्–आक्षिकम् ।

१५५२ । **संस्कृतम्** ।४।४।३। दध्ना संस्कृतं दाधिकम् । मारीचिकम् ।

१५५३ । **कुलत्थकोपधादण्** ।४।४।४। ठकोऽपवादः । कुलत्थैः संस्कृतं कौलत्थम् । तैत्तिडीकम् ।

१५५४ । **तरति** ।४।४।५। उडुपेन तरति औडुपिकः ।

१५५५ । **गोपुच्छाट्ठञ्** ।४।४।६। गौपुच्छिकः ।

१५५६ । **नौद्व्यचष्ठन्** ।४।४।७। नाविकः । घटिकः । बाहुभ्यां तरति बाहुका स्त्री ।

१५५७ । **चरति** ।४।४।८। तृतीयान्ताद्गच्छति भक्षयतीत्यर्थयोष्ठक् स्यात् । हस्तिना चरति हास्तिकः । शाकटिकः । दध्ना भक्षयति दाधिकः ।

१५५८ । **आकर्षात् ष्ठल्** ।४।४।९। आकर्षो निकषोपलः । आकषादिति पाठान्तरम् । तेन चरति आकर्षिकः । षित्वान्ङीष्, आकर्षिकी ।

१५५९ । **पर्पादिभ्यः ष्ठन्** ।४।४।१०। पर्पेण चरति । पर्पिकः । पर्पिकी । येन पीठेन पङ्गवश्चरन्ति स पर्पः । अश्विकः । रथिकः ।

१५६० । **श्वगणाट्ठञ्च** । ।४।४।११। चात् ष्ठन् ।

१५६१ । **श्वादेरिञि** ।७।३।८। ऐच् न । श्वभस्त्रस्यापत्यं श्वाभस्त्रिः । श्वादंष्ट्रिः । तदादिविधौ[2] चेदमेव ज्ञापकम् । ❀ **इकारादाविति वाच्यम्** । श्वगणेन चरति श्वागणिकः, श्वागणिकी–श्वगणिकः, श्वगणिकी ।

१५६२ । **पदान्तस्यान्यतरस्याम्** ।७।३।९। श्वादेरङ्गस्य पदशब्दान्तस्यैज्वा । श्वापदस्येदं–श्वापदम्, शौवापदम् ।

१५६३ । **वेतनादिभ्यो जीवति** ।४।४।१२। वेतनेन जीवति वैतनिकः । धानुष्कः ।

१५६४ । **वस्नक्रयविक्रयाट्ठन्** ।४।४।१३। वस्नेन मूल्येन जीवति वस्निकः । क्रयविक्रयग्रहणं संघातविगृहीतार्थम् । क्रयविक्रयिकः । क्रयिकः । विक्रयिकः ।

१५६५ । **आयुधाच्छ च** ।४।४।१४। चाट्ठन् । आयुधेन जीवति–आयुधीयः, आयुधिकः ।

१५६६ । **हरत्युत्सङ्गादिभ्यः** ।४।४।१५। उत्सङ्गेन

---

ध्यते । 'न कर्म–' इत्यतो नञनुवर्तनादिति भावः ॥—**स्वापतेयमिति** । पथ्यतिथिवसतिस्वपतेर्ढञ् । स्वशब्दस्य द्वारादित्वादैजागमस्य प्राप्तिः । द्वारादिफलं तु स्वस्येदं सौवमिति ज्ञेयम् ॥ ❀ **आहाविति** । उपसंख्यानमित्यनुषज्यते । आहेतिपदे एकदेशस्य प्रकृतिभागस्यागन्तुकेनेकारेण आहावित्यनुकरणम् ॥—**प्राभूतिक इति** । क्रियाविशेषणाद्वक्तरि प्रत्ययः ॥ **१५५१ तेन दीव्यति**—। इह कालपुरुषसंख्या न विवक्षिताः । तेनाक्षैरदेवीत् देविष्यति वा आक्षिक इति भवति । एवमक्षैर्देविष्यति देविष्यामि वा आक्षिकः, दीव्यन्ति दीव्यथ दीव्यामो वा आक्षिकाः । कारकं तु विवक्षितमेव, 'जयति, जितम्' इति कर्तृकर्मणोः पृथगुपादानात् । तेनाक्षैर्द्यूतः, अक्षैः खातः, इति कर्माद्यर्थे आक्षिक इति न भवति ॥—**अभ्र्येति** । 'अभ्रिः स्त्री काष्ठकुद्दालः' इत्यमरः ॥ **१५५२ संस्कृतम्** । योगविभाग उत्तरार्थः ॥ **१५५६ बाहुकेति** । सूत्रे षकारः सांहितिको, न त्वनुबन्ध इति न ङीष् । तथा च 'आकर्षात् पर्पादेः' इत्यादि श्लोकवार्तिकं षित्त्वविवेचनाय प्रकरणान्ते पठिष्यति ॥ **१५५८ निकषोपल इति** । सुवर्णपरीक्षार्थः ॥—**पाठान्तरमिति** । एतच्च भ्वादौ 'कषखष–' इत्यादिदण्डके 'आकर्षात्छल्' इति माधवेनोपन्यस्तम् । किंतु 'आकर्षात्पर्पादेः' इति वार्तिकस्याननुगुणम् । तत्र हि नीरेफपाठे वृत्तासंगतिप्रसङ्गात् ॥ **१५५९ पर्प इति** । 'पर्प गतौ' । 'हलश्च' इति करणे घञ् ॥ इहान्तर्गणसूत्रं 'पादः पच्च' इति । पादाभ्यां चरति पदिकः ॥ यत्तु वार्तिकं 'पद्भाव इके चरतावुपसंख्यानम्' इति सोऽस्यैव प्रपञ्चः ॥ पर्प, अश्व, अश्वत्थ, रथ, जात(जाल), न्याय, व्याल, पादः पत् ॥ **१५६० श्वगणाट्ठञ्च** । ठकोऽपवादः ॥ **१५६१ इदमेव ज्ञापकमिति** । द्वारादिगणे श्वन्शब्दः पठ्यते, न तु श्वभस्त्रः श्वदंष्ट्रेत्यादिः, तथा च 'श्वादेरिञि' इति निषेधसूत्रमेव व्यर्थं सद्द्वारादिषु तदादिविधिं ज्ञापयतीत्यर्थः ॥ फलं तु द्वारपालस्यायं दौवारपाल इत्यादावैजागमस्य प्रवृत्तिः ॥—**इकारादाविति** । सूत्रे इञीत्यपनीय इकारादाविति पठनीयमित्यर्थः । अन्ये तु इञीति स्थाने इतीति पठनीयम् । तथा चाङ्गाक्षिप्तप्रत्ययस्य विशेष्यत्वात् 'यस्मिन्विधिस्तदादौ–' इत्यनेन इकारादिर्लभ्यत इत्याहुः ॥—**श्वगणिकीति** । ष्ठनः षित्त्वान्ङीष् ॥ **१५६२ श्वापदस्येति** । 'अन्येषामपि दृश्यते' इति दीर्घः ॥ **१५६३ धानुष्क इति** । वेतनादिगणे धनुर्दण्डेति पठ्यते तच्च संघातविगृहीतार्थम् । तथा च धानुर्दण्डिकः, दाण्डिक इत्यप्युदाहार्यम् ॥ **१५६५ आयुधाच्छ च** । आयुध्यन्ते अनेनेति आयुधं 'घञर्थे कविधानम्' इति कः ॥ **१५६६ हरत्युत्सङ्गा-**

---

१ **स्वपतौ इति**—स्वागतादिगणे स्वपतिशब्दपाठो मन्दप्रयोजनः, 'स्वशब्दादेश्चेत्स्वग्रामस्वाध्याययोरेव' इति नियमेन स्वाराज्यादाविवात्राप्यैचोऽप्राप्तेः । २ **तदादि विधाविति** । 'द्वारादीनां च' इतिसूत्रेण द्वारादिगणपठितशब्दानां वृद्धेर्निषेध ऐज्विधिश्च क्रियते । श्वादंष्ट्रिरित्यत्र श्वादंष्ट्रशब्दस्य द्वारादिगणेपाठाभावेन श्वशब्दस्य गणेपाठेऽपि ऐचः प्राप्तिरेव नेति 'श्वादेरिञि' इति निषेधो व्यर्थः सन् 'द्वारादीनां च' इतिसूत्रे तदादिविधिं ज्ञापयति–इति भावः ।

हरति-औत्सङ्गिकः ।

१५६७ । भस्त्रादिभ्यः ष्ठन् ।४।४।१६। भस्त्रया हरति भस्त्रिकः । षित्वान्ङीष्, भस्त्रिकी ।

१५६८ । विभाषा विवधात् ।४।४।१७। विवधेन हरति विवधिकः । पक्षे ठक्, वैवधिकः । एकदेशविकृतस्यानन्यत्वाद्वीवधादपि ष्ठन्, वीवधिकः । वीवधिकी । विवधवीवधशब्दौ उभयतो बद्धशिक्ये स्कन्धवाह्ये काष्ठे वर्तेते ।

१५६९ । अण् कुटिलिकायाः ।४।४।१८। कुटिलिका व्याधानां गतिविशेषः, कर्मारोपकरणभूतं लोहं च । कुटिलिकया हरति मृगानङ्गारान्वा-कौटिलिकः, व्याधः कर्मारश्च ।

१५७० । निर्वृत्तेऽक्षद्यूतादिभ्यः ।४।४।१९। अक्षद्यूतेन निर्वृत्तमाक्षद्यूतिकं वैरम् ।

१५७१ । त्रेर्मम्नित्यम् ।४।४।२०। त्रिप्रत्ययान्तप्रकृतिकात्तृतीयान्तान्निर्वृत्तेऽर्थे मप्स्यान्नित्यम् । कृत्या निर्वृत्तं कृत्रिमम् । पक्त्रिमम् । ॐ भावप्रत्ययान्तादिमब्वक्तव्यः । पाकेन निर्वृत्तं पाकिमम् । त्यागिमम् ।

१५७२ । अपमित्ययाचिताभ्यां कक्कनौ ।४।४।२१। अपमित्येति ल्यबन्तम् । अपमित्य निर्वृत्तं आपमित्यकम् । याचितेन निर्वृत्तं याचितकम् ।

१५७३ । संसृष्टे ।४।४।२२। दध्ना संसृष्टं दाधिकम् ।

१५७४ । चूर्णादिनिः ।४।४।२३। चूर्णैः संसृष्टाः चूर्णिनः, अपूपाः ।

१५७५ । लवणाल्लुक् ।४।४।२४। लवणेन संसृष्टो लवणः सूपः । लवणं शाकम् ।

१५७६ । मुद्गादण् ।४।४।२५। मौद्ग ओदनः ।

१५७७ । व्यञ्जनैरुपसिक्ते ।४।४।२६। ठक् । दध्ना उपसिक्तं दाधिकम् ।

१५७८ । ओजःसहोऽम्भसा वर्तते ।४।४।२७। ओजसा वर्तते औजसिकः शूरः । साहसिकश्चौरः । आम्भसिको मत्स्यः ।

१५७९ । तत्प्रत्यनुपूर्वमीपलोमकूलम् ।४।४।२८। द्वितीयान्तादस्माद्वर्तते इत्यस्मिन्नर्थे ठक् स्यात् । क्रियाविशेषणत्वाद्द्वितीया । प्रतीपं वर्तते प्रातीपिकः । आन्वीपिकः । प्रातिलोमिकः । आनुलोमिकः । प्रातिकूलिकः । आनुकूलिकः ।

१५८० । परिमुखं च ।४।४।२९। परिमुखं वर्तते

---

दिभ्यः । एभ्यस्तृतीयान्तेभ्यष्ठक् स्यादुपादत्ते नयति वेत्यर्थे ॥ उत्सङ्ग, उडुप, उत्पत, पिटक, पिटाक ॥ १५६७ भस्त्रादिभ्यः ष्ठन् । भस्त्रा चर्मविकारः । शीर्षेभारशब्दोऽत्र पठ्यते, निपातनाच्छीर्षभावः सप्तमीसमासश्च, 'तत्पुरुषे कृति–' इति वा अलुक् । पक्षे शीर्षभारः ॥ १५६८ एकदेशविकृतस्येति । 'वीवधाचेति वक्तव्यम्' इति वार्तिकं न्यायसिद्धार्थकथनपरमिति भावः ॥ वृत्तिकृत् सूत्रे वीवधशब्दं प्रक्षिप्य 'विभाषा विवधवीवधात्' इति पपाठ ॥ १५७१ त्रेर्मम्नित्यम् । नित्यग्रहणं स्वातन्त्र्येण प्रयोगं वारयितुम् । अत एव लौकिके विग्रहवाक्ये क्त्रिन्नादीनां प्रयोगो, न तु क्त्रेः, तदाह—कृत्या निर्वृत्तमिति । एवमग्रेऽपि पाकेन निर्वृत्तमिति विग्रहो बोध्यः । संख्यावाची त्रिशब्दो नेह गृह्यते, प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणात्, 'णिजां त्रयाणाम्' इति लिङ्गाच्च ॥ ननु नित्यग्रहणेन निर्वृत्तार्थविवक्षायां मपं विना त्रिप्रत्ययान्तस्य प्रयोगनिवारणेऽपि तदविवक्षायां तस्य स्वातन्त्र्येण प्रयोगो दुर्वार इति चेत् । न । नित्यमिति योगं विभज्य तत्सामर्थ्यादर्थविशेषानादरेणैव स्वातन्त्र्यवारणात् ॥—इमबिति । एवं च मप् न कर्तव्यः । तथा हि—'भावप्रत्ययान्तादिमप्' । ततः 'त्रेः' । पूर्वेण सिद्धे नियमार्थमिदं-त्रिप्रत्ययान्त इमब्विषय एवेति । तेन त्रिप्रत्ययान्तप्रयोगो निवर्तते । ततो 'नित्यम्' । अनेन निर्वृत्तार्थाविवक्षायामपि त्र्यन्तस्य स्वातन्त्र्यं वार्यते । एवं च संख्यावाचित्रिशब्दस्य ग्रहणशङ्कैव नास्ति, भावप्रत्ययान्तादित्यनुवृत्तेः । स्वरेऽपि विशेषो नास्ति, उदात्तनिवृत्तिस्वरेण इमप इकारस्योदात्तत्वात् ॥ १५७२ अपमित्येति । 'उदीचां माङः–' इति क्त्वाप्रत्यये अपेत्यनेन सह गतिसमासः, क्त्वो ल्यप् । 'मयतेरिदन्यतरस्याम्' इति इत्त्वम्, 'ह्रस्वस्य–' इति तुक् । ल्यबन्तादस्मात्तृतीयान्तात्प्रत्ययो न भवति, किं तु वचनात्प्रथमान्तादेवेति बोध्यम् ॥ १५७७ व्यञ्जनैरुप—। व्यज्यते अनेन ओदनादिरस इति व्यञ्जनं तद्वाचिभ्य उपसिक्त इत्यर्थे ठक् स्यात् ॥ १५७९ तत्प्रत्यनु—। वृत्तेरकर्मकत्वात्कथं तस्य द्वितीयान्तेन प्रतीपमित्यादिना संबन्ध इत्याशङ्कायामाह—क्रियाविशेषणत्वादिति ।॥—प्रतीपमिति । प्रतिगता आपोऽस्मिन्निति बहुव्रीहिः । 'ऋक्पूः–' इत्यकारः समासान्तः । 'द्व्यन्तरुपसर्गेभ्यः–' इति ईत्वम् । व्युत्पत्तिमात्रमिदम् । प्रतिकूलानुकूलपर्याया हीमे रूढिशब्दाः ॥—आन्वीपिक इति । अन्वीपमित्यत्र 'ऊदनोर्देशे' इति ऊत्वं तु न भवति, अदेशत्वात् ॥ १५८० परिमुखमिति । 'अपपरी वर्जने' इति परेः कर्मप्रवचनीयसंज्ञायां 'पञ्चम्यपाङ्परिभिः' इति

---

१ उपसिक्ते इति—सेचनेन मृदूकरणमुपसेकः । २ क्रियाविशेषणत्वादिति—प्रतीपमित्यत्र । तच्च वर्ततेपदवाच्यक्रियाया विशेषणम् । क्रियाविशेषणानां कर्मत्वमित्याश्रयणाच्च कर्मणि द्वितीयेति भावः । अकर्मकधातुस्थलेऽपि फलव्यापारावुभावपि धातुवाच्यौ । तथाचात्र वृतुधातुवाच्यफलविशेषणत्वात्कर्मत्वम् । फलस्य क्रियात्वं तु धातुवाच्यत्वात् ।

पारिमुखिकः । चात् पारिपार्श्विकः ।

१५८१ । प्रयच्छति गर्ह्यम् ।४।४।३०। द्विगुणार्थं द्विगुणं, तत्प्रयच्छति द्वैगुणिकः । त्रैगुणिकः । ॐ वृद्धेर्वृधुषिभावो वक्तव्यः । वार्धुषिकः ।

१५८२ । कुसीददशैकादशात् ष्ठन्ष्ठचौ ।४।४।३१। गर्ह्यार्थाभ्यामाभ्यामेतौ स्तः प्रयच्छतीत्यर्थे । कुसीदं वृद्धिः, तदर्थं द्रव्यं कुसीदं, तत्प्रयच्छति कुसीदिकः । कुसीदिकी । एकादशार्थत्वादेकादश, ते च ते वस्तुतो दश चेति विग्रहेऽकारः समासान्त इहैव सूत्रे निपात्यते । दशैकादशिकः । दशैकादशिकी । दशैकादशान्प्रयच्छतीत्युत्तमर्ण एवेहापि तद्धितार्थः ।

१५८३ । उञ्छति ।४।४।३२। बदराण्युञ्छति बादरिकः ।

१५८४ । रक्षति ।४।४।३३। समाजं रक्षति सामाजिकः ।

१५८५ । शब्ददर्दुरं करोति ।४।४।३४। शब्दं करोति शाब्दिकः । दार्दुरिकः ।

१५८६ । पक्षिमत्स्यमृगान्हन्ति ।४।४।३५।

स्वरूपस्य पर्यायाणां विशेषाणां च ग्रहणम् । मत्स्यपर्यायेषु मीनस्यैव । पक्षिणो हन्ति पाक्षिकः । शाकुनिकः । मायूरिकः । मात्स्यिकः । मैनिकः । शाकुलिकः । मार्गिकः । हारिणिकः । सारङ्गिकः ।

१५८७ । परिपन्थं च तिष्ठति ।४।४।३६। अस्माद्द्वितीयान्तात्तिष्ठति हन्ति चेत्यर्थे ठक् स्यात् । पन्थानं वर्जयित्वा व्याप्य वा तिष्ठति पारिपन्थिकश्चौरः । परिपन्थं हन्ति पारिपन्थिकः ।

१५८८ । माथोत्तरपदपदव्यनुपदं धावति ।४।४।३७। दण्डाकारो माथः पन्थाः-दण्डमाथः, दण्डमाथं धावति दाण्डमाथिकः । पादविकः । आनुपदिकः ।

१५८९ । आक्रन्दाट्ठञ्च ।४।४।३८। अस्माट्ठञ् स्यात्, चाट्ठक् धावतीत्यर्थे । आक्रन्दं दुःखिनां रोदनस्थानं धावति आक्रन्दिकः ।

१५९० । पदोत्तरपदं गृह्णाति ।४।४।३९। पूर्वपदं गृह्णाति पौर्वपदिकः । औत्तरपदिकः ।

१५९१ । प्रतिकण्ठार्थललामं च ।४।४।४०। एभ्यो गृह्णात्यर्थे ठक् स्यात् । प्रतिकण्ठं गृह्णाति प्रातिकण्ठिकः । आर्थिकः । लालामिकः ।

१५९२ । धर्मं चरति ।४।४।४१। धार्मिकः । ॐ अधर्माच्चेति वक्तव्यम् । आधर्मिकः ।

१५९३ । प्रतिपथमेति ठंश्च ।४।४।४२। प्रतिपथमेति प्रतिपथिकः । प्रातिपथिकः ।

१५९४ । समवायान्समवैति ।४।४।४३। सामवा-

---

पञ्चमी, 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः । ततष्ठक् । स्वामिनो मुखं वर्जयित्वा यः सेवको वर्तते स पारिमुखिकः ॥ यदा तु सर्वतोभावे परिशब्दः प्रादिसमासश्च, तदा यतो यतः स्वामिनो मुखं ततस्ततो यो वर्तते स एवमुच्यते । एवं पारिपार्श्विकोऽर्थद्वये बोध्यः ॥ **१५८१ प्रयच्छति**—। द्वितीयान्तात्प्रयच्छतीत्यर्थे ठक् स्यात्, यत्प्रयच्छति गर्ह्यं चेत्तत् ॥—**द्विगुणार्थं द्विगुणमिति** । तादर्थ्यात्ताच्छब्द्यमिति भावः ॥ बहुवृद्ध्युद्देश्यकदानकर्मतयाऽस्य द्रव्यस्य गर्ह्यत्वम् ॥—**वार्धुषिक इति** । वृद्ध्यर्था वृद्धिः, तां प्रयच्छतीति विग्रहः ॥ अथ कथं 'वृद्ध्याजीवश्च वार्धुषिः' इत्यमरः, ठक्संनियोगेनैव वृधुषिभावस्वीकारात् । **अत्राहुः**—निरङ्कुशाः कवय इति ॥ गर्ह्यमिति किम् ? द्विगुणं त्रिगुणं वा वृद्धिं प्रयच्छत्यधमर्णे इत्यर्थे द्वैगुणिक इत्यादि माभूत् ॥ **१५८२ निपात्यते इति** । अत एव व्याख्यातृप्रयोगोऽप्युपपद्यत इत्याशयेनोदाहरति—**दशैकादशानीति** । 'संख्याया अल्पीयस्याः' इति पूर्वनिपातः ॥—**उत्तमर्ण एवेति** । दश दत्त्वा एकादश गृह्णातीति तस्यैव गर्ह्यत्वादिति भावः ॥ **१५८३ उञ्छति** । भूमौ पतितस्यैकैकस्योपादानमुञ्छः ॥ **१५८४ सामाजिक इति** । समजन्ति अस्मिन्निति समाजः समूहः ॥ **१५८५ शब्दं करोतीति** । प्रकृतिप्रत्ययविभागेन व्युत्पादयतीत्यर्थः । अभिधानस्वाभाव्यात् व्युत्पादन एवायं प्रत्ययः । नेह—शब्दं करोति बर्बरः खरो वा ॥—**दार्दुरिक इति** । कुलालः । वाद्यभाण्डवाचीह दर्दुरशब्दः ॥ **१५८६ मात्स्यिक इति** । 'मत्स्यस्य ङ्यम्' इति परिगणनात् 'सूर्यतिष्या–' इति यलोपाभावः ॥—**हारिणिक इति** । नन्विदं पर्यायस्योदाहरणं न भवति, हरिणस्य मृगविशेषत्वात् । तथा चात्र पर्यायस्योदाहरणं किमिति न प्रदर्शितमिति चेत्, **अत्राहुः**—आरण्यकचतुष्पात्सु हरिणे च मृगशब्दो वर्तते । यदा हरिणवाची मृगशब्दः, तदा मृगपर्यायस्योदाहरणं भवत्येवेति ॥ **१५८७ परिपन्थं च**—। परिमुखवदयमव्ययीभावस्तत्पुरुषो वा ॥ क्रियाविशेषत्वात्तिष्ठतेरकर्मकत्वेऽपि परिपन्थस्य कर्मत्वमस्त्येवेत्याह—**द्वितीयान्तादिति** । चकारो भिन्नक्रमः—प्रत्ययार्थं समाचिनोतीत्याह ॥—**तिष्ठति हन्ति चेति** ॥ **१५८८ माथ इति** । मथ्यते गन्तृभिरिति माथः, 'मथे विलोडने' कर्मणि घञ् ॥ **१५९० पदोत्तरपदम्**—। पदशब्द उत्तरपदं यस्य तत्पदोत्तरपदम् । पदान्तमिति तु नोक्तम्, बहुच्पूर्वान्मा भूदिति ॥ **१५९१ प्रतिकण्ठमिति** । कण्ठं कण्ठं प्रतीति यथार्थेऽव्ययीभावः । 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यनेन वा । यस्तु प्रतिगतः कण्ठं प्रतिकण्ठ इति प्रादिसमासः, तस्येह न ग्रहणं व्याख्यानादित्याहुः ॥ **१५९२ धर्मं चरति** । चरतिरिहासेवायां न त्वनुष्ठानमात्रे । तेन दैववशाद्धर्मे प्रवृत्तो दुर्वृत्तो धार्मिक इति नोच्यते । आसेवा हि स्वारसिकी प्रवृत्तिः । एवं दैववशादधर्मे प्रवृत्तः सद्वृत्त अधार्मिक इति नोच्यते ॥ **१५९३ प्रतिपथमिति** । वीप्सायामाभिमुख्ये वा अव्ययीभावः । 'ऋक्पूः–' इति समासान्तः ॥ **१५९४ समवा-**

यिकः । सामूहिकः ।

१५९५ । **परिषदो ण्यः** ।४।४।४४। परिषदं समवैति पारिषद्यः ।

१५९६ । **सेनाया वा** ।४।४।४५। ण्यः स्यात् । पक्षे । सैन्याः, सैनिकाः ।

१५९७ । **संज्ञायां ललाटकुकुट्यौ पश्यति** ।४।४।४६। ललाटं पश्यति–लालाटिकः सेवकः । कुकुटीशब्देन तत्पाताहः स्वल्पदेशो लक्ष्यते, कौकुटिको भिक्षुः ।

१५९८ । **तस्य धर्म्यम्** ।४।४।४७। आपणस्य धर्म्यम्–आपणिकम् ।

१५९९ । **अण् महिष्यादिभ्यः** ।४।४।४८। महिष्या धर्म्यं–माहिषम् । याजमानम् ।

१६०० । **ऋतोऽञ्** ।४।४।४९। यातुर्धर्म्यं यात्रम् । ॐ **नराच्चेति वक्तव्यम्** । नरस्य धर्म्या नारी । ॐ **विशसितुरिड्लोपश्चाञ्च वक्तव्यः** । विशसितुर्धर्म्यं वैशस्त्रम् । ॐ **विभाजयितुर्णिलोपश्चाञ्च वाच्यः** । विभाजयितुर्धर्म्यं–वैभाजित्रम् ।

१६०१ । **अवक्रयः** ।४।४।५०। षष्ठ्यन्ताट्ठक् स्यादवक्रयेऽर्थे । आपणस्यावक्रयः–आपणिकः । राजग्राह्यं द्रव्यमवक्रयः ।

१६०२ । **तदस्य पण्यम्** ।४।४।५१। अपूपाः पण्यमस्य–आपूपिकः ।

१६०३ । **लवणाट्ठञ्** ।४।४।५२। लावणिकः ।

१६०४ । **किसरादिभ्यः ष्ठन्** ।४।४।५३। किसरं पण्यमस्य किसरिकः । षित्वान्ङीष्, किसरिकी । किसर, उशीर, नलद, इत्यादिकिसरादयः सर्वे सुगन्धिद्रव्यविशेषवाचिनः ।

१६०५ । **शलालुनोऽन्यतरस्याम्** ।४।४।५४। ष्ठन् स्यात् । पक्षे ठक् । शलालुकः । शलालुकी । शालालुकः । शालालुकी । शलालुः सुगन्धिद्रव्यविशेषः ।

१६०६ । **शिल्पम्** ।४।४।५५। मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः ।

१६०७ । **मड्डुकझर्झरादणन्यतरस्याम्** ।४।४।५६। मड्डुकवादनं शिल्पमस्य माड्डुकः, माड्डुकिकः । झार्झरः, झार्झरिकः ।

१६०८ । **प्रहरणम्** ।४।४।५७। तदस्येत्येव । असिः प्रहरणमस्य–आसिकः । धानुष्कः ।

१६०९ । **परश्वधाट्ठञ् च** ।४।४।५८। पारश्वधिकः ।

१६१० । **शक्तियष्ट्योरीकक्** ।४।४।५९। शाक्तीकः । याष्टीकः ।

१६११ । **अस्ति नास्ति दिष्टं मतिः** ।४।४।६०। तदस्येत्येव । 'अस्ति परलोकः' इत्येवं मतिर्यस्य सः–आस्तिकः । 'नास्ति' इति मतिर्यस्य सः–नास्तिकः । 'दिष्टम्' इति मतिर्यस्य सः–दैष्टिकः ।

१६१२ । **शीलम्** ।४।४।६१। अपूपभक्षणं शीलमस्य आपूपिकः ।

१६१३ । **छत्रादिभ्यो णः** ।४।४।६२। गुरोर्दोषाणा-

---

**यान्—**। समूहवाचिभ्यो द्वितीयान्तेभ्यष्ठक् स्यात् समवैतीत्यर्थे । इह समवपूर्वस्त्वेणोऽर्थः प्रविश्यैकदेशीभवनम् । तत्र गुणभूतप्रवेशापेक्षया 'समवायान्' इति द्वितीयानिर्देशः । विशेष्यापेक्षया तु लोके सप्तमी प्रायेण प्रयुज्यते—'कुरुक्षेत्रे समवेताः' इति यथा । 'एत्येधति–' इति वृद्धिरिह न भवति, एजादित्वाभावात् ॥ १५९६ **सैन्याः । सैनिका इति** । द्वितीयान्ताण्ण्यठकौ ॥ यत्तु 'सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते' इति निघण्टूपूर्क तत्फलितार्थकथनपरं बोध्यम् ॥ १५९७ **संज्ञायाम्—**। ललाटकुकुटीशब्दाभ्यां द्वितीयान्ताभ्यां पश्यतीत्यर्थे ठक् स्यात् । सम्यग्ज्ञानं संज्ञा=प्रसिद्धिः, तस्याम्=प्रसिद्धिविषयभूतेर्थे इत्यर्थः ॥**—लालाटिक इति** । दूरे स्थित्वा प्रभोर्ललाटं पश्यति न तु कार्येषूपतिष्ठत इत्यर्थः ॥ 'लालाटिकः प्रभोर्भालदर्शी कार्याक्षमश्च यः' ॥**—कौकुटिको भिक्षुरिति** । संन्यासी हि पादविक्षेपपर्याप्तदेशपर्यन्तमेव चक्षुः संयम्य गच्छतीति भावः ॥ १५९८ **धर्म्यमिति** । धर्मादनपेतं धर्म्यम् । 'धर्मपथ्यर्थन्यायादनपेते' इति यत् ॥ १६०१ **अवक्रयः** । अवक्रीयते अनेनेति करणे 'एरच्' ॥ १६०२ **पण्यमिति**[1] । पणितव्येऽर्थे 'अवद्यपण्य–' इति यदन्तो निपातितः ॥ १६०५ **शलालुक इति** । 'इसुसुक्तान्तात्कः' । ठक्पक्षे त्वादिवृद्धिः, शालालुकः ॥ १६०६ **मार्दङ्गिक इति** । मृदङ्गशब्देन मृदङ्गवाचनं लक्ष्यते । मुख्यार्थे तु प्रयोगो न भवति, अनभिधानादिति भावः ॥ **शिल्पं**=कौशलम् । तच्च मृदङ्गवादनविषयकम्, तेन मृदङ्गवादनविषयके मृदङ्गशब्दस्य लक्षणेति निष्कर्षः ॥ १६०८ **प्रहरणम्** । प्रह्रियते अनेनेति प्रहरणम्=आयुधम् ॥**—धानुष्क इति** । 'इसुसुक्तान्तात्कः', 'इणः षः' इति विसर्गस्य षः ॥ १६०९ **परश्वधाट्ठञ्** । चाट्ठक् । 'द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः' ॥ १६११ **परलोक इति** । एतच्चाभिधानशक्तिस्वाभाव्याल्लभ्यते ॥**—आस्तिक इति** । अस्तिनास्तिशब्दौ निपातौ । यद्वा वचनसामर्थ्यादस्तीत्याख्यातात्, नास्तीति निपाताख्यातसमुदायाच्च प्रत्ययः ॥**—दिष्टमिति** । 'दैवं दिष्टं भागधेयम्' इत्यमरः ॥ 'नालम्बते दैष्टिकताम्' इति माघः ॥ 'प्रमाणानुगा मतिर्दिष्टा' इति प्राचोक्तिस्तूपेक्ष्या, दिष्टशब्दस्य स्त्रीत्वे प्रमाणानुगमतिवाचकत्वे चोक्तकोशविरोधादिति दिक् ॥ १६१३ **छत्रादिभ्यो णः** । 'छत्रा-

---

१ **पण्यमिति—**विक्रयाय हट्टे प्रसारितम् । २ **किसरादिभ्य इति—**तालव्यमध्यपाठो वृत्तौ । ३ **शाक्तीक इति—**ईकक्कि दीर्घोच्चारणं स्पष्टार्थम् ।

मावरणं छत्रम्, तच्छीलमस्य-छात्रः ।

१६१४ । कार्मस्ताच्छील्ये ।६।४।१७२। 'कार्मः' इति ताच्छील्ये णे टिलोपो निपात्यते । कर्मशीलः कार्मः । 'नस्तद्धिते' ६८० इत्येव सिद्धे अण्कार्यं ताच्छीलिके णेऽपि । तेन 'चौरी' 'तापसी' इत्यादि सिद्धम् । ताच्छील्ये किम् । कार्मणः ।

१६१५ । कर्माध्ययने वृत्तम् ।४।४।६३। प्रथमान्तात्षष्ठ्यर्थे ठक् स्यादध्ययने वृत्ता या क्रिया सा चेत्प्रथमान्तस्यार्थः । ऐकान्यिकः, यस्याध्ययने प्रवृत्तस्य परीक्षाकाले विपरीतोच्चारणरूपं स्खलितमेकं जातं सः ।

१६१६ । बह्वच्पूर्वपदाट्ठच् ।४।४।६४। प्राग्विषये । द्वादशान्यानि कर्माण्यध्ययने वृत्तान्यस्य-द्वादशान्यिकः, द्वादशापपाठा अस्य जाता इत्यर्थः ।

१६१७ । हितं भक्षाः ।४।४।६५। अपूपभक्षणं हितमस्मै आपूपिकः ।

१६१८ । तदस्मै दीयते नियुक्तम्[1] ।४।४।६६। अग्रभोजनं नियतं दीयते अस्मै-आग्रभोजनिकः ।

१६१९ । श्राणामांसौदनाट्टिठन् ।४।४।६७। श्राणा नियतं दीयतेऽस्मै श्राणिकः । श्राणिकी । मांसौदनग्रहणं संघातविगृहीतार्थम्, मांसौदनिकः । मांसिकः । ओदनिकः ।

१६२० । भक्तादणन्यतरस्याम् ।४।४।६८। पक्षे ठक् । भक्तमस्मै नियतं दीयते भाक्तः । भाक्तिकः ।

१६२१ । तत्र नियुक्तः[2] ।४।४।६९। आकरे नियुक्त आकरिकः ।

१६२२ । अगारान्ताट्ठन् ।४।४।७०। देवागारे नियुक्तो देवागारिकः ।

१६२३ । अध्यायिन्यदेशकालात् ।४।४।७१। निषिद्धदेशकालवाचकाट्ठक् स्यादध्येतरि । श्मशानेऽधीते श्माशानिकः । चतुर्दश्यामधीते चातुर्दशिकः ।

१६२४ । कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति ।४।४।७२। तत्रेत्येव । वंशकठिने व्यवहरति-वांशकठिनिकः, वंशा वेणवः कठिना यस्मिन्देशे स वंशकठिनः, तस्मिन्देशे या क्रिया यथा अनुष्ठेया तां तथैवानुतिष्ठतीत्यर्थः । प्रास्तारिकः । सांस्थानिकः ।

१६२५ । निकटे वसति ।४।४।७३। नैकटिको भिक्षुः ।

१६२६ । आवसथात् ष्ठल् ।४।४।७४। आवसथे वसति आवसथिकः । षित्वान्ङीष्, आवसथिकी ।

आकर्षात्पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच्च ।
आवसथात्किसरादेः षितः षडेते ठगधिकारे ॥१॥
( श्लो० वा० )

षडिति सूत्रषट्केन विहिता इत्यर्थः । प्रत्ययास्तु सप्त ।

ठकोऽवधिः समाप्तः ।

## अथ तद्धितेषु प्राग्घितीयाः ।

१६२७ । प्राग्घिताद्यत् ।४।४।७५। 'तस्मै हितम्' १६६६ इत्यतः प्राक् यत् अधिक्रियते ।

१६२८ । तद्वहति रथयुगप्रासङ्गम् ।४।४।७६। रथं वहति रथ्यः । युग्यः[3] । वत्सानां दमनकाले स्कन्धे काष्ठमासज्यते स प्रासङ्गः, तं वहति प्रासङ्ग्यः ।

१६२९ । धुरो यड्ढकौ ।४।४।७७। 'हलि च' ३५४ इति दीर्घे प्राप्ते,

दिभ्योऽण्' इत्येव सुवचमिति 'कार्मस्ताच्छील्ये' इति सूत्रे कैयटः ॥ १६१४ **ताच्छील्ये णे इति** । कर्मन्शब्दस्य छत्रादित्वादिति भावः ॥—**चौरीत्यादि** । चुरा शीलमस्याः, तपः शीलमस्या इति विग्रहे णप्रत्यये सति तदन्तान्ङीप् सिध्यतीत्यर्थः ॥ १६१५ **कर्माध्ययने**—। 'तदस्य' इत्यनुवर्तते, ठगिहाधिक्रियत एव, तदाह—**प्रथमान्तादित्यादि** ॥—**ऐकान्यिक इति** । एकमन्यदिति विगृह्य 'तद्धितार्थ-' इति समासः, ततष्ठक् । एवं द्वैयन्यिकः, त्रैयन्यिक इत्युदाहार्यम् । इह तु वृद्धिं बाधित्वा 'न य्वाभ्याम्-' इत्यैच् ॥ १६१७ **हितं भक्षाः** । 'अस्य' इति प्रकृतमपीह हितयोगाच्चतुर्थ्या विपरिणम्यते, 'तदस्मै-' इत्यस्यापकर्षो वेत्याशयेनाह—**अपूपभक्षणं हितमस्मा इति** । अपूपशब्दस्तद्भक्षणे लाक्षणिक इति भावः ॥ १६१९ **श्राणा**—। 'यवागूरुष्णिका श्राणा विलेपी तरला च सा' इत्यमरः ॥—**टिठनिति** । इकार उच्चारणार्थः । टो ङीबर्थः ॥—**संघातविगृहीतार्थमिति** । ओदनिक इत्यत्र हि वृद्धिनिवारणाय टिठन्नारब्धः । अन्यथा लाघवाट्ठनमेव ब्रूयादिति भावः ॥ १६२१ **आकरिक इति** । 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः ॥ १६२३ **अध्यायिन्यदे**—। अदेशकालात् किम् ? काश्यामधीते, पूर्वाह्णे अधीते ॥ १६२४ **कठिनान्त**—। प्रस्तारसंस्थानशब्दौ संनिवेशपर्यायाविति बहवः ॥ प्रस्तारो यज्ञः, 'प्रे स्त्रो यज्ञे' इति घञ् । संस्थानं संनिवेश इत्येके ॥ १६२५ **नैकटिको भिक्षुरिति** । संन्यासी हि ग्रामस्य निकटे वसन्, भिक्षार्थमेव ग्रामे प्रविशति, न तु तत्र वसतीति भावः ॥ १६२६ **आवसथात्**—। लकारः स्वरार्थः । आवसन्त्यस्मिन्नित्यावसथः । 'उपसर्गे वसेः' इत्यथप्रत्ययः ॥—**कुसीदसूत्रादिति** । 'कुसीददशैकादशात्-' इति सूत्रोपात्ताभ्यां प्रकृतिभ्यामित्यर्थः । इह 'नौ द्व्यचष्ठन्' इत्यत्रैव येषां षकारः सांहितिक इति संभाव्यते तेषामेव गणने ष्ठलादेः षित्त्वमनार्षमिति भ्रमः स्यादतः श्लोकवार्तिककारः षित्प्रत्ययान्सर्वानपि पर्यजीगणत् ॥ **ठकोवधिः समाप्तः** ।

१६२८ **युग्य इति** । युगं=रथाङ्गं वहतीत्यर्थः ॥—**प्रासङ्ग इति** । प्रासज्यते असाविति कर्मणि घञ् ॥ १६२९ **धुरो**—।

[1] **नियुक्तम्**=नियतम् । [2] **नियुक्तः**=अधिकृतः । [3] **युग्य इति**—युगशब्दो रथाङ्गवाच्येव रथसाहचर्यात् ।

१६३० । **न भकुर्छुराम्** ।८।२।७९। भस्य कुर्छुरोश्चोपधाया दीर्घो न स्यात् । धुर्यः, धौरेयः ।

१६३१ । **खः सर्वधुरात्** ।४।४।७८। सर्वधुरां वहतीति सर्वधुरीणः ।

१६३२ । **एकधुराल्लुक्च** ।४।४।७९। एकधुरां वहति एकधुरीणः, एकधुरः ।

१६३३ । **शकटादण्** ।४।४।८०। शकटं वहति शाकटो गौः ।

१६३४ । **हलसीराट्ठक्** ।४।४।८१। हलं वहति हालिकः । सैरिकः ।

१६३५ । **संज्ञायां जन्या** ।४।४।८२। जनी वधूः, तां वहति प्रापयति-जन्या ।

१६३६ । **विध्यत्यधनुषा** ।४।४।८३। द्वितीयान्ताद्विध्यतीत्यर्थे यत्स्यात्, न चेत्तत्र धनुः करणम् । पादौ विध्यन्ति—पद्याः शर्कराः ।

१६३७ । **धनगणं लब्धा** ।४।४।८४। तृन्नन्तमेतत् । धनं लब्धा-धन्यः । गणं लब्धा-गण्यः ।

१६३८ । **अन्नाण्णः** ।४।४।८५। अन्नं लब्धा-आन्नः ।

१६३९ । **वशं गतः** ।४।४।८६। वश्यः परेच्छानुसारी ।

१६४० । **पदमस्मिन्दृश्यम्** ।४।४।८७। पद्यः कर्दमः । नातिशुष्क इत्यर्थः ।

१६४१ । **मूलमस्यावर्हि** ।४।४।८८। आवर्हणमावर्हः उत्पाटनम्, तदस्यास्तीति-आवर्हि, मूलमावर्हि येषां ते-मूल्या मुद्गाः ।

१६४२ । **संज्ञायां धेनुष्या** ।४।४।८९। धेनुशब्दस्य षुगागमो यप्रत्ययश्च स्वार्थे निपात्यते संज्ञायाम् । धेनुष्या बन्धके स्थिता ।

१६४३ । **गृहपतिना संयुक्ते ञ्यः** ।४।४।९०। गृहपतिर्यजमानः, तेन संयुक्तो गार्हपत्योऽग्निः ।

१६४४ । **नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु ।**

'धुरो ढक् च' इत्येव सुवचम् ॥ १६३० **न भ-।—उपधाया इति ।** 'उपधायां च' इति पूर्वसूत्रादेतल्लभ्यत इति भावः ॥ उपधायाः किम् ? प्रतिदीव्नः । इह नान्तस्य भत्वेऽपीकारस्यानुपधात्वान्निषेधो न प्रवर्तते ॥ १६३१ **खः सर्वधुरात् ।** सर्वधुराया इति वक्तव्ये नपुंसकनिर्देशः शब्दस्वरूपापेक्षया 'बन्धुनि बहुव्रीहौ' इतिवत् ॥—**सर्वधुरामिति ।** 'पूर्वकालैक-' इति समासः । 'ऋक्पूरब्धूः-' इति समासान्ते अप्रत्यये टाप् ॥ १६३२ **एकधुराल्लुक् च ।** चात्खः । एवं च प्राकरणिकस्य यतो लुक्, खस्य तु विधानसामर्थ्याच्छ्रवणमिति फलितं, तदाह—**एकधुरीण इत्यादि** ॥ १६३३ **शाकटो गौरिति ।** ननु 'तस्येदम्' इत्यणा सिद्धम् । यो हि शकटं वहति शकटस्यासौ भवति । **अत्राहुः**—आरम्भसामर्थ्यादत्र तदन्तविधिः । तेन द्वे शकटे वहति द्वैशकट इत्यत्र 'द्विगोर्लुगनपत्ये' इति प्राग्दीव्यतीयो लुङ् न भवति, 'तस्येदम्' इत्यणि तु स्यादेव लुगिति ॥ १६३४ **हलसीरात्—।** ननु 'तस्येदम्' इत्युपक्रमे 'हलसीराट्ठक्' इति पठितम् । तथा च तेनैव शैषिकेण हालिकः सैरिक इति सिद्धौ किमनेनेति चेत्, सत्यम् । आरम्भसामर्थ्यादत्रापि तदन्तविधिः । तेन द्वैहलिको द्वैसीरिक इति भवति, शैषिके ठकि तु प्राग्दीव्यतीयो लुक् स्यात् ॥ १६३५ जायते अस्यां गर्भ इति व्युत्पत्तिमाश्रित्य आह—**जनी वधूरिति ।** 'जनिघसिभ्यामिण्', 'जनिवध्योश्च' इति न वृद्धिः, 'कृदिकारात्-' इति ङीप् । ततोऽनेन सूत्रेण यति जन्या=जामातुर्वयस्या । सा हि विवाहादिषु वधूं जामातृसमीपं प्रापयति ॥ कालिदासस्तु वध्वा यानवाहेष्वपि प्रायुङ्क्त—'यातेति जन्यानवदत्कुमारी' इति । जनीं वहन्तीति जन्यास्तानित्यर्थः ॥ १६३६ **पद्या इति ।** 'पद्यत्यतदर्थे' इति पद्भावः ॥ अधनुषा किम् ? चोरं विध्यति । संभाव्यते हि चोरव्यधने धनुषः करणता । यदा तु धनुषेति प्रयुज्यते तदा सापेक्षत्वादेव न भवति । एवं च 'न चेत्तत्र धनुः करणम्' इत्यत्र 'संभाव्यते' इति शेषो बोध्यः ॥ १६३७ **तृन्नन्तमिति ।** एवं च 'न लोका-' इत्यादिना क्तयोगषष्ठ्या निषेधात् '**धनगणम्**-' इति प्रयोगो निर्बाध इति भावः ॥ १६३९ **वशं गतः ।** वशनं वशः=इच्छा । 'वशिरण्योरुपसंख्यानम्' इत्यप् ॥ १६४१ **मूलमस्यावर्हि ।** प्रथमान्तादावर्हि-शब्दयुक्तान्मूलशब्दादस्येति षष्ठ्यर्थे यत्स्यात् ॥ **आवर्ह-इति ।** 'वृहू उद्यमने' दन्त्योष्ठ्यादिरयम्, न तु पवर्गादिः 'उद्वृह रक्षः सहमूलमिन्द्र' इत्यादिप्रयोगदर्शनात् ॥—**मूल्या मुद्गा इति ।** मूलोत्पाटनं विना संग्रहीतुमशक्याः, मध्यतो लूयमानेषु कोशस्था अपि यस्यामवस्थायां पतेयुस्तामवस्थां प्राप्ताः । सुष्ठु शुष्का इति यावत् ॥ १६४२ **यप्रत्यय इति ।** तेन धेनुष्याशब्दोऽन्तउदात्तः । यति तु तित्स्वरः स्यादिति भावः ॥—**संज्ञायामिति ।** ऋणप्रत्यर्पणाय या धेनुर्दोहनार्थमुत्तमर्णाय दीयते तस्याः संज्ञेयम् ॥ १६४३ **गार्हपत्य इति ।** 'गृहपतिना-' इति निर्देशादेव तृतीयान्तात्प्रत्ययः । 'संज्ञायाम्' इत्यनुवृत्तेराहवनीयादौ नातिप्रसङ्गः ॥ १६४४ **नौवयोधर्म—।** नावादिभ्योऽष्टभ्यो यथासंख्यं तार्यादिष्वष्टस्वर्थेषु यत्स्यात् ॥ इह तार्यादियोगे यथासंभवं करणे कर्तरि हेतौ तुल्यार्थयोगे च तृतीया भवतीति सैवेह समर्थविभक्तिरर्थाल्लभ्यते ॥ अत्र प्रथमं मूलान्तानां पञ्चानां द्वन्द्वं कृत्वा द्वितीयमूलादिद्वन्द्वेन सह समाहारद्वन्द्वः । मूलान्तानां द्वित्राणां वा मूलादीनामेव वा द्वन्द्वं कृत्वा नावादिषु द्वन्द्वः । तेन सारूप्याभावादे-

---

१ **एकधुर इति**—अन्तरङ्गानपीति न्यायेन सवर्णदीर्घात्पूर्वमेव टापो लुक् । २ अत्र केचित् 'मूलमस्यावर्हि' इति पठन्ति, तेच बृहू उद्यमने इति पवर्गीयादिं धातुं स्वीकुर्वन्ति ।

## तद्धितेषु प्राग्वतीये ठञधिकारे कालाधिकारः ।

अतः परं ठञेव ।

१७३६ । **पारायणतुरायणचान्द्रायणं वर्तयति** ।५।१।७२। पारायणं वर्तयति पारायणिकश्छात्रः । तुरायणं यज्ञविशेषः, तं वर्तयति तौरायणिको यजमानः । चान्द्रायणिकः ।

१७३७ । **संशयमापन्नः** ।५।१।७३। संशयविषयीभूतोऽर्थः सांशयिकः ।

१७३८ । **योजनं गच्छति** ।५।१।७४। यौजनिकः । ॐ **क्रोशशतयोजनशतयोरुपसंख्यानम्** । क्रोशशतं गच्छति क्रौशशतिकः । यौजनशतिकः । ॐ **ततोऽभिगमनमर्हतीति च वक्तव्यम्** । क्रोशशतादभिगमनमर्हतीति क्रौशशतिको भिक्षुः । यौजनशतिक आचार्यः ।

१७३९ । **पथः ष्कन्** ।५।१।७५। षो ङीषर्थः । पन्थानं गच्छति—पथिकः, पथिकी ।

१७४० । **पन्थो ण नित्यम्** ।५।१।७६। पन्थानं नित्यं गच्छति—पान्थः, पान्था ।

१७४१ । **उत्तरपथेनाहृतं च** ।५।१।७७। उत्तरपथेनाहृतं—औत्तरपथिकम् । उत्तरपथेन गच्छति—औत्तरपथिकः । ॐ **आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वादुपसंख्यानम्** । वारिपथिकम् ।

१७४२ । **कालात्** ।५।१।७८। 'व्युष्टादिभ्योऽण्' १७६२ इत्यतः प्रागधिकारोऽयम् ।

१७४३ । **तेन निर्वृत्तम्** ।५।१।७९। अह्ना निर्वृत्तम्—आह्निकम् ।

१७४४ । **तमधीष्टो भृतो भूतो भावी** ।५।१।८०। अधीष्टः सत्कृत्य व्यापारितः । भृतो वेतनेन क्रीतः । भूतः स्वसत्तया व्याप्तकालः । भावी तादृश एवानागतकालः । मासमधीष्टो मासिकोऽध्यापकः । मासं भृतो मासिकः कर्मकरः । मासं भूतो मासिको व्याधिः । मासं भावी मासिक उत्सवः ।

१७४५ । **मासाद्वयसि यत्खञौ** ।५।१।८१। मासं भूतो मास्यः, मासीनः ।

१७४६ । **द्विगोर्यप्** ।५।१।८२। मासाद्वयसीत्यनुवर्तते । द्वौ मासौ भूतो द्विमास्यः ।

१७४७ । **षण्मासाण्ण्यच्च** ।५।१।८३। वयसीत्येव । यबप्यनुवर्तते, चाट्ठञ् । षण्मास्यः, षाण्मास्यः, षाण्मासिकः ।

१७४८ । **अवयसि ठंश्च** ।५।१।८४। चाण्ण्यत् । षण्मासिको व्याधिः, षाण्मास्यः ।

१७४९ । **समायाः खः** ।५।१।८५। समामधीष्टो

---

१७३६ **पारायण**—। आदित आरभ्य आ-अन्तादविच्छेदेन वेदस्याध्ययनं पारायणम् । तच्च गुरुणा शिष्येण वा निर्वर्त्यते, अन्यतरासंनिधौ अध्ययनक्रियाया अनिष्पादनात् । तथापि शिष्ये एव प्रत्यय इष्यते न तु गुराविल्याकरे स्थितम् । तदाह—**छात्र इति** ॥—**यजमान इति** ॥ यद्यपि पुरोडाशादिनिर्वर्तनेन ऋत्विगपि यज्ञं निर्वर्तयति, तथापि तत्र तौरायणिक इति न प्रयुज्यते, अनभिधानादिति भावः ॥ चान्द्रायणं व्रतविशेषः ॥ १७३७ **विषयीभूतोऽर्थ इति** । 'स्थाणुर्वा पुरुषो वा' इति संशयविषयीभूते स्थाण्वादावेव प्रत्यय इष्यते, न तु संदेग्धरीति भावः ॥ कथं तर्हि 'सांशयिकः संशयापन्नमानसः' इत्यमर इति चेत् । **अत्राहुः**—संशयापन्नं मानसं यस्मिन्विषये स विषयः—संशयापन्नमानस इति ॥ १७३८ **ततोऽभिगमनमिति** । अत्र पञ्चम्यन्तात्प्रत्ययः ॥ १७४० **पन्थो ण**—। पथः पन्थ इत्ययमादेशः स्यात् णश्च प्रत्ययः ॥ नित्यग्रहणमिह प्रत्ययार्थविशेषणं, न तु वाक्यनिवृत्त्यर्थमित्याशयेनाह—**नित्यं गच्छतीति** ॥ नित्यमिति किम् ? पथिकः । भाष्ये तु नित्यग्रहणं प्रत्याख्यातम् । अयं हि **भाष्याशयः**—नित्यं पन्थानं गच्छतीत्यर्थोऽत्र यद्यपि संभवति, तथापि नात्रैवार्थे पान्थशब्दस्य प्रयोग इष्यते । कदाचिद्गच्छत्यपि तत्प्रयोगात् । न चैवमपि विग्रहवाक्यनिवृत्त्यर्थं नित्यग्रहणमस्त्विति शङ्क्यम् । शिष्टप्रयोगे विग्रहवाक्यदर्शना**दिति** ॥ १७४१ **उत्तरपथेन**—। चकारेण गच्छतीति प्रत्ययार्थः समुच्चीयते । तदाह—**उत्तरपथेन गच्छतीति** ॥—**वारिपथिकमिति** । वारिपथेन गच्छतीति, वारिपथेनाहृतमिति वा विग्रहः ॥ १७४२ **कालात्** । स्वरूपग्रहणमिह न भवति, 'तमधीष्टो भृतो भूतो भावी' इत्यत्यन्तसंयोगे द्वितीयानिर्देशात्, 'मासाद्वयसि-' इत्यादौ मासादीनां कालेन विशेषणाच्च ॥ १७४३ **तेन निर्वृत्तम्** । तृतीयान्तात्कालवाचिनष्ठञ् स्यात् । तेनेति करणे तृतीया । चतुरर्थ्यन्तर्गते 'तेन निर्वृत्तम्' इत्यत्र तु कर्तरि तृतीयेति विशेषः । उभयत्राप्यन्तर्भावितण्यर्थाद्वृतेः कर्मणि क्तः ॥—**आह्निकमिति** । 'अह्नष्टखोरेव' इति नियमात् 'नस्तद्धिते' इति टिलोपो न ॥ १७४५ **मासाद्वयसि**—। खञो ञित्करणं स्वरार्थं पुंवद्भावप्रतिषेधार्थं च । मासीनाभार्यः ॥ अधीष्टादीनां चतुर्णामधिकारेऽपि सामर्थ्यात् भूत इत्येतदत्र संबध्यते । न हि मासमधीष्टो भृतो वेत्याद्युक्तौ काचित्कालकृता शरीरावस्था गम्यत इत्याशयेनाह—**मासं भूत इति** । एतच्च वृत्तिपदमञ्जर्योः स्पष्टम् ॥—**मासीन इति** । बालकः ॥ १७४६ **द्विगोर्यप्** । प्राग्वतेः संख्यापूर्वपदानां तदन्तविधेरभ्युपगमात्पूर्वेण यत्खञोः प्राप्तयोर्यप् विधीयते । पित्त्वादनुदात्तः । तेन 'द्विमास्यः' इत्यादौ 'इगन्तकाल-' इत्यादिना पूर्वपदप्रकृतिस्वरोऽवतिष्ठते ॥ 'यः' इत्युक्ते तु प्रत्ययस्योदात्तत्वादन्तोदात्तो द्विमास्यः स्यात्, सति शिष्टस्वरबलीयस्त्वादिति भावः ॥ १७४७ **यबप्यनुवर्तत इति** । व्याख्यानमेवात्र शरणम् ॥ १७४९ **समायाः खः** । 'हायनोऽस्त्री शरत्समाः' इत्यमरः ॥—**समा-**

भृतो भूतो भावी वा समीनः।

१७५०। **द्विगोर्वा** ।५।१।८६। 'समायाः खः' इत्येव। 'तेन परिजय्य-' १७५८ इत्यतः प्राङ्निर्वृत्तादिषु पञ्चस्वर्थेषु प्रत्ययाः। द्विसमीनः, द्वैसमिकः।

१७५१। **रात्र्यहःसंवत्सराच्च** ।५।१।८७। द्विगोरित्येव। द्विरात्रीणः, द्वैरात्रिकः। द्व्यहीनः, द्वैयह्निकः। समासान्तविधेरनित्यत्वान्न टच्। द्विसंवत्सरीणः।

१७५२। **संख्यायाः संवत्सरसंख्यस्य च** ।७।३।१५। संख्याया उत्तरपदस्य वृद्धिः स्यात् ञिदादौ। द्विसांवत्सरिकः। द्वे षष्टी भृतो द्विषाष्टिकः। संख्यायाः 'परिमाणान्तस्य-' इत्येव सिद्धे संवत्सरग्रहणं परिमाणग्रहणे कालपरिमाणस्याग्रहणार्थम्। तेन 'द्वैसमिकः' इत्युत्तरपदवृद्धिर्न।

१७५३। **वर्षाल्लुक्च** ।५।१।८८। वर्षशब्दान्ताद्विगोर्वा खः। पक्षे ठञ् वा च लुक्। त्रीणि रूपाणि। द्विवर्षीणो व्याधिः, द्विवर्षः।

१७५४। **वर्षस्याभविष्यति** ।७।३।१६। उत्तरपदस्य वृद्धिः स्यात्। द्विवार्षिकः। भविष्यति तु द्वैवर्षिकः। अधीष्टभृतयोरभविष्यतीति प्रतिषेधो न। गम्यते हि तत्र भविष्यत्ता न तु तद्धितार्थः। द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यतीति द्विवार्षिको मनुष्यः।

**'परिमाणान्तस्यासंज्ञाशाणयोः'** १६८४। द्वौ कुडवौ प्रयोजनमस्य द्विकौडविकः। द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौवर्णिकम्। द्विनैष्किकम्। असंज्ञेति किम्। पञ्च कलापाः परिमाणमस्य पाञ्चकलापिकम्, तद्धितान्तः संज्ञा। द्वैशाणम्। कुलिजशब्दमपि केचित्पठन्ति, द्वैकुलिजिकः।

१७५५। **चित्तवति नित्यम्** ।५।१।८९। वर्षशब्दान्ताद्विगोः प्रत्ययस्य नित्यं लुक् स्यात् चेतने प्रत्ययार्थे। द्विवर्षो दारकः।

१७५६। **षष्टिकाः षष्टिरात्रेण पच्यन्ते** ।५।१।९०। बहुवचनमतन्त्रम्। षष्टिको धान्यविशेषः। तृतीयान्तात्कन् रात्रशब्दलोपश्च निपात्यते।

१७५७। **तेन परिजय्यलभ्यकार्यसुकरम्** ।५।१।९३। मासेन परिजय्यः=जेतुं शक्यः-मासिको व्याधिः। मासेन लभ्यं कार्यं सुकरं वा-मासिकम्।

१७५८। **तदस्य ब्रह्मचर्यम्** ।५।१।९४। द्वितीयान्तात्कालवाचिनोऽस्येत्यर्थे प्रत्ययः स्यात्। अत्यन्तसंयोगे द्वितीया। मासं ब्रह्मचर्यमस्य स मासिको ब्रह्मचारी। आर्धमासिकः। यद्वा प्रथमान्तादस्येत्यर्थे प्रत्ययः। मासोऽस्येति मासिकं ब्रह्मचर्यम्। ॐ **महानाम्न्यादिभ्यः षष्ठ्यन्तेभ्य उपसंख्यानम्**। महानाम्न्यो नाम 'विदा मघवन्' इत्याद्या ऋचः। तासां ब्रह्मचर्यमस्य माहानाम्निकः। हरदत्तस्तु 'भस्याढे-' इति पुंवद्भावान्माहानामिक इत्याह। ॐ **चतुर्मासाण्ण्यो यज्ञे तत्र भव इत्यर्थे**। चतुर्षु मासेषु भवन्ति चातुर्मास्यानि यज्ञकर्माणि। ॐ **अण् संज्ञायाम्**। चतुर्षु मासेषु भवति चातुर्मासी आषाढी, अण्णन्तत्वान्ङीप्।

१७५९। **तस्य च दक्षिणा यज्ञाख्येभ्यः** ।५।१।

---

**मधीष्ट इत्यादि**। अधीष्टादयश्चत्वारोऽर्था अत्रानुवर्तन्त इति भावः॥ **१७५० द्विगोर्वा**। 'संख्यापूर्वपदानां तदन्तग्रहणमलुकि' इत्यभ्युपगमात्पूर्वेण नित्ये प्राप्ते विकल्पः॥—**द्वैसमिक इति**। खेन मुक्ते पक्षे ठञिति भावः॥—**द्वैयह्निक इति।** 'टखोरेव' इति नियमादिह टिलोपो न। 'अल्लोपोऽनः', 'न य्वाभ्याम्-' इत्यैच्॥ **१७५१** ननु 'तद्धितार्थ-' इति द्विगुसमासानन्तरं 'रात्र्यहःसंवत्सराच्च' इत्येवं बाधित्वा परत्वाट्टचा भाव्यम्, न च महाविभाषया टचो विकल्प इति वाच्यम्। 'बृहतीजात्यन्ताः समासान्ताश्च' इति नित्येषु परिगणनादत आह—**समासान्तविधेरिति**। यद्यपि टचि कृतेऽप्यह्नादेशेन 'द्वैयह्निकः' इति रूपं सिध्यति, तथापि 'द्व्यहीनः' इति रूपं न सिध्यति, टचि सति अह्नादेशे तस्य स्थानिवद्भावात् 'राजाहः-' इति समासान्तस्याहःशब्दान्तसमासग्रहणेन ग्रहणाच्च 'रात्र्यहःसंवत्सराच्च' इति खप्रत्यये कृतेऽपि द्व्यह्नीन इति रूपप्रसङ्गादित्याहुः॥ **१७५२ उत्तरपदवृद्धिर्नेति**। एतच्चोपलक्षणम्। द्विवर्षा इत्यत्र 'द्विगोः' इति ङीन्न भवति। परिमाणपर्युदासेन पर्युदासाभावात् 'अपरिमाणबिस्ताचित-' इतीह निषेधप्रवृत्तेः। द्वे वर्षे भृते इति 'तमधीष्टः-' इति ठञ्, 'वर्षाल्लुक्च' इति लुक्॥ **१७५३** 'चित्तवति नित्यम्' इति नित्यलुको वक्ष्यमाणत्वादचित्तवानिह प्रत्ययार्थ इत्युदाहरति—**द्विवर्षीणो व्याधिरिति**॥ **१७५४ द्विवार्षिको मनुष्य इति। अत्र वदन्ति**—मनुष्ये 'चित्तवति-' इति नित्यलुक्प्रसङ्गात् 'मनुष्यो मनुष्यसदृशः प्रतिमादिः' इति व्याख्याय स्थितस्य गतिः समर्थनीयेति॥ **१७५५ दारक इति**। बालकः॥—'परिजय्य' इत्यस्य विवरणं-**जेतुं शक्यः** इति। 'क्षय्यजय्यौ शक्यार्थे' इत्ययादेशः॥ **१७५८ महानाम्न्यो नामेति**। तथा चाभाषितपुंस्कत्वात्पुंवद्भावो नेति भावः॥—**हरदत्तस्त्विति**। यौगिकोऽयं, न तु रूढ इति मन्यते॥—**माहानामिक इति**। पुंवद्भावे कृते 'नस्तद्धिते' इति टिलोप इति॥—**चतुर्मासादिति**। मासशब्दस्य कालवाचित्वात्कालाधिकारे वार्तिकारम्भः। न च विशिष्टस्य कालवाचित्वाभावादिह संगतिर्दुर्निरूपेति शङ्क्यम्। 'प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणम्' इत्यभ्युपगमादस्त्येव संगतिरिति॥—**अण् संज्ञायामिति**। 'तत्र भवः' इत्यनेनैव सिद्धे पुनरण्विधिः 'द्विगोर्लुगनपत्ये' इति लुग्मा भूदित्येतदर्थमिदमत्रारब्धम्॥ एवं चास्मिन् वार्तिके 'चतुर्मासात्-' इत्यस्यानुवृत्तये पूर्ववार्तिकमत्रैवारब्धमित्यपि ज्ञेयम्॥ **चातुर्मासीति**। कस्य संज्ञेत्याकाङ्क्षायामाह—**आषाढीति**। अषाढानक्षत्रयुक्ता पौर्णमासीत्यर्थः॥ **१७५९ तस्य च दक्षि-**

९५। द्वादशाहस्य दक्षिणा द्वादशाहिकी । आख्याग्रहणादकालादपि । आग्निष्टोमिकी । वाजपेयिकी ।

१७६० । **तत्र च दीयते कार्यं भववत्** ।५।१।९६। प्रावृषि[1] दीयते कार्यं वा प्रावृषेण्यम् । शारदम् ।

**ठञधिकारे कालाधिकारस्य पूर्णोऽवधिः ।**

---

## अथ ठञ्विधिः ।

१७६१ । **व्युष्टादिभ्योऽण्** ।५।१।९७। व्युष्टे दीयते कार्यं वा वैयुष्टम् । व्युष्ट, तीर्थ, संग्राम, प्रवास इत्यादि[2] ।

१७६२ । **तेन यथाकथाचहस्ताभ्यां णयतौ** ।५।१।९८। यथाकथाचेत्यव्ययसंघातात्तृतीयान्ताद्धस्तशब्दाच्च यथासंख्यं णयतौ स्तः । ॐ **अर्थाभ्यां तु यथासंख्यं नेष्यते** । यथाकथाच दीयते कार्यं वा—याथाकथाचम् । अनादरेण देयं कार्यं वेत्यर्थः । हस्तेन दीयते कार्यं वा—हस्त्यम् ।

१७६३ । **सम्पादिनि** ।५।१।९९। ठञ् । तेनेत्येव । कर्णवेष्टकाभ्यां सम्पादि कार्णवेष्टकिकं मुखम् । कर्णालंकाराभ्यामवश्यं शोभत इत्यर्थः ।

१७६४ । **कर्मवेषाद्यत्** ।५।१।१००। कर्मणा संपादि कर्मण्यं शौर्यम् । वेषेण संपादी वेष्यो नटः । वेषः कृत्रिम आकारः ।

१७६५ । **तस्मै प्रभवति संतापादिभ्यः** ।५।१।१०१। संतापाय प्रभवति सांतापिकः । सांग्रामिकः ।

१७६६ । **योगाद्यच्च** ।५।१।१०२। चाट्ठञ् । योगाय प्रभवति योग्यः, यौगिकः ।

१७६७ । **कर्मण उकञ्** ।५।१।१०३। कर्मणे प्रभवति कार्मुकम् ।

१७६८ । **समयस्तदस्य प्राप्तम्** ।५।१।१०४। समयः प्राप्तोऽस्य सामयिकम् ।

१७६९ । **ऋतोरण्** ।५।१।१०५। ऋतुः प्राप्तोऽस्य आर्तवम्[3] ।

१७७० । **कालाद्यत्** ।५।१।१०७। कालः प्राप्तोऽस्य काल्यं शीतम् ।

१७७१ । **प्रकृष्टे ठञ्** ।५।१।१०८। कालादित्येव । तदस्येति च । प्रकृष्टो दीर्घः कालोऽस्येति कालिकं वैरम् ।

१७७२ । **प्रयोजनम्** ।५।१।१०९। तदस्येत्येव । इन्द्रमहः प्रयोजनमस्य ऐन्द्रमहिकम् । प्रयोजनं फलं कारणं च ।

१७७३ । **विशाखाषाढादण्मन्थदण्डयोः** ।५।१।११०। आभ्यामण्स्यात्प्रयोजनमित्यर्थे क्रमान्मन्थदण्डयोरर्थयोः । विशाखा प्रयोजनमस्य वैशाखो मन्थः । आषाढो दण्डः । ॐ **चूडादिभ्य उपसंख्यानम्** । चूडा—चौडम् । श्रद्धा—श्राद्धम् ।

१७७४ । **अनुप्रवचनादिभ्यश्छः** ।५।१।१११। अनुप्रवचनं प्रयोजनमस्य अनुप्रवचनीयम् ।

१७७५ । **समापनात्सपूर्वपदात्** ।५।१।११२। व्याकरणसंमापनं प्रयोजनमस्य व्याकरणसमापनीयम् ।

१७७६ । **ऐकागारिकट् चौरे** ।५।१।११३। एकम-

---

**णा—**। षष्ठ्यन्तेभ्यो यज्ञाख्येभ्यो दक्षिणेत्यस्मिन्नर्थे ठञ् स्यात् ॥ कालाधिकादेवेह द्वादशाहादिभ्यः सिद्धे आख्याग्रहणं व्यर्थमित्याशङ्कां परिहरति—**आख्याग्रहणादिति** ॥—**१७६० तत्र च—**। कालवाचिनः सप्तम्यन्ताद्दीयते कार्यमित्येतयोरर्थयोर्भववत्प्रत्ययः स्यात् ॥—**प्रावृषेण्यमिति** । 'प्रावृष एण्यः' इति भवार्थे विहितः स इहाप्यतिदिश्यत इति भावः ॥ —**शारदमिति** । 'संधिवेलाद्यृतुनक्षत्रेभ्योऽण्' ॥ **कालाधिकारस्य पूर्णोऽवधिः ।**

**१७६१ व्युष्टादिभ्योऽण्** । व्युष्टशब्दः कालवाची दिवसमुखे वर्तते ॥ **१७६३ संपादिनि** । गुणोत्कर्षः—संपत्तिः । 'आवश्यके णिनिः' इति वृत्तिकृत् । एवं वस्त्रयुगेन संपादि वास्त्रयुगिकं शरीरमित्यप्युदाहार्यम् । वस्त्रयुगेन अवश्यं शोभत इत्यर्थः ॥ **१७६५ तस्मै प्रभवति** । समर्थः शक्तः प्रभवतीत्युच्यते ॥ **१७६९ आर्तवमिति** । पुष्पमित्यादि विशेष्यं बोध्यम् ॥ **१७७० काल्यं शीतमिति** । 'प्रत्यूषोऽहर्मुखं कल्यम्' इत्यमरः । तत्र प्रातःकाले काल्यशब्दस्य व्युत्पत्त्यन्तरं मृग्यम् ॥ **१७७१ प्रकृष्टे ठञ्** । प्रकृष्यते अयमिति प्रकृष्टः । कर्मणि क्तः । तेन च प्रकर्षेण कालो विशेष्यते इत्याह—**दीर्घः काल इति** । ठञ्ग्रहणं विस्पष्टार्थम् । अन्यथा अनन्तरस्य यतोऽनुवृत्तिराशङ्क्येत ॥ **१७७२ इन्द्रमह इति** । महः—उत्सवः ॥ **१७७३ वैशाखो मन्थः । —आषाढो दण्ड इति** । वैशाखाषाढशब्दौ रूढिरूपेण मन्थदण्डयोर्वर्तेते । तयोस्तु यथाकथंचिद्व्युत्पत्तिः क्रियत इति हरदत्तः । विलोडनदण्डस्यैवाधारभूतः काष्ठविशेषो मन्थ इत्युच्यते ॥ **१७७४ अनुप्रवचना—**। अनुप्रवचनं नाम ब्राह्मणौदनमुच्यते ॥—**सपूर्वपदादिति** । विद्यमानपूर्वपदादित्यर्थः ॥ **१७७६ ऐकागारिकट्** । टो ङीबर्थः । ऐकागारिकी ॥ किमर्थमिदमुच्यते यावता 'प्रयोजनम्' इत्येव ठञि सिद्धम् । सत्यम् । चौरे नियमार्थमावश्यकमिदं सूत्रम् । अन्यथा एकागारं प्रयोजनं यस्य भिक्षोरित्यत्रापि स्यात् ॥ नन्वेवमपि 'ऐकागाराच्चौरे' इति ठञेव नियम्यतां किमैकागारिक इति निपातनेन

---

१ **प्रावृषि दीयते इति—**इदं वृत्त्यनुरोधेन । भाष्ये तु चो भिन्नक्रमो 'दीयते' इत्यनन्तरम्बोध्यः । चकारेण च यज्ञाख्येभ्य इत्याकृष्यते । तत्र दीयते इत्यर्थे यज्ञाख्येभ्यष्ठञ् भवतीत्यर्थः । अग्निष्टोमे दीयते भक्तं आग्निष्टोमिकम्—इति शेखरः । २ 'इत्यादि' इत्यस्यानन्तरम—ॐ **अग्निपदादिभ्य उपसंख्यानम्** । अग्निपदे दीयते कार्यं वाऽग्निपदम् । पैलुमूलम् । इति पाठः क्वचित् । ३ 'आर्तवम्' इत्यस्याग्रे ॐ **उपवस्त्रादिभ्य उपसंख्यानम्** । उपवस्ता प्राप्तोऽस्य औपवस्त्रम् । प्राशिता प्राप्तोऽस्य प्राशित्रम् । इति पाठः क्वचित् ।

सहायमगारं प्रयोजनमस्य मुमुषिषोः स ऐकागारिकश्चौरः ।

१७७७ । आकालिकडाद्यन्तवचने ।५।१।११४। समानकालावाद्यन्तौ यस्येत्याकालिकः । समानकालस्याऽऽकाल आदेशः । आशुविनाशीत्यर्थः । पूर्वदिने मध्याह्नादावुत्पद्य दिनान्तरे तत्रैव नश्वर इति वा । ❀ आकालाट्ठंश्च । आकालिका विद्युत् ॥

ठञः पूर्णोऽवधिः ॥

---

## अथ भावकर्मार्थाः ।

१७७८ । तेन तुल्यं क्रिया[1] चेद्वतिः ।५।१।११५। ब्राह्मणेन तुल्यं ब्राह्मणवदधीते । क्रिया चेदिति किम् । गुणतुल्ये मा भूत् । पुत्रेण तुल्यः स्थूलः ।

१७७९ । तत्र[2] तस्येव ।५।१।११६। मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः । चैत्रस्येव चैत्रवत् मैत्रस्य गावः ।

१७८० । तदर्हम् ।५।१।११७। विधिमर्हति विधिवत् पूज्यते । क्रियाग्रहणं मण्डूकप्लुत्याऽनुवर्तते । तेनेह न-राजानमर्हति छत्रम् ।

१७८१ । तस्य भावस्त्वतलौ ।५।१।११९। प्रकृतिजन्यबोधे प्रकारो[3] भावः । गोर्भावो गोत्वम्, गोता । 'त्वान्तं क्लीबम् (लि. १२०)' 'तलन्तं स्त्रियाम् (लि. १७)'।

१७८२ । आ च त्वात् ।५।१।१२०। 'ब्रह्मणस्त्वः' १८०१ इत्यतः प्राक् त्वतलावधिक्रियेते । अपवादैः[4] सह समावेशार्थं, गुणवचनादिभ्यः कर्मणि विधानार्थं चेदम् । चकारो नञ्स्नञ्भ्यामपि समावेशार्थः । स्त्रिया भावः स्त्रैणम्, स्त्रीत्वम्, स्त्रीता । पौंस्नम्, पुंस्त्वम्, पुंस्ता ।

१७८३ । न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवटयुधकतरसलसेभ्यः ।५।१।१२१। इतः परं ये भावप्रत्ययास्ते नञ्तत्पुरुषान्न स्युश्चतुरादीन्वर्जयित्वा ।

---

टित्करणेन च प्रयोजनमिति चेत्, **अत्राहुः**—टकारः कार्यविधारणार्थः—ङीबेव भवति न ञित्स्वरः । वृद्धिस्तु निपातनाद्भवत्येवेति ॥ **१७७७ आकाल आदेश इति** । निपात्यत इति शेषः ॥—**आद्यन्तौ यस्येत्यादि** । अस्येत्यधिकारात्षष्ठ्यर्थे इकट् प्रत्ययो निपात्यत इति भावः ॥—**आकालाट्ठंश्चेति** । वार्तिकमिदम् ॥ **ठञः पूर्णोऽवधिः** ।

**१७७८ तेन तुल्यं क्रिया चेद्वतिः** । तुल्यमिति सामान्ये नपुंसकम् । तृतीयान्तात्तुल्यमित्यर्थे वतिः स्याद्यत्तुल्यं क्रिया चेत्सा ॥ **—ब्राह्मणेन तुल्यमिति** । 'नन्वत्र ब्राह्मणो यथा वर्तते तथा क्षत्रियादिकर्तृकाध्ययनं वर्तते' इति वाक्यार्थो न संगच्छत इति चेत्, **अत्राहुः**—ब्राह्मणशब्दस्तत्कर्तृकाध्ययने लक्षणया वर्तते । 'ब्राह्मणकर्तृकाध्ययनतुल्याध्ययनं वाक्यार्थः' इति न कोऽपि दोष इति ॥—**गुणतुल्ये इति** । उपलक्षणमिदम् । अक्रियातुल्य इत्यर्थः । एवं च 'ब्राह्मणेन सदृशः क्षत्रियः' इत्यर्थे 'ब्राह्मणवत् क्षत्रियः' इति प्रयोगोऽसाधुरेव । अत एव 'पर्वतो वह्निमान् महानसादिवत्' इति वाक्ये 'महानससदृशः पर्वतः' इत्यर्थे वतेरसाधुत्वं मत्वा तस्य वतेः साधुत्वरक्षणार्थे 'पर्वतो वह्निमान् भवितुमर्हति' इति क्रियापदं प्रयुञ्जते वृद्धाः ॥ **१७७९ तत्र तस्येव** । सप्तम्यन्तात् षष्ठ्यन्ताच्च इवार्थे प्रत्ययः ॥ 'क्रिया चेत्' इति नानुवर्तते इति द्रव्यादितुल्ये वत्प्रत्ययो भवति ॥—**मथुरावत्स्रुघ्ने इति** । मथुरायां यादृशः प्राकारः तेन तुल्यः प्राकारः स्रुघ्ने इत्यर्थः ॥ **१७८० तदर्हम्** । अर्हतीत्यर्हं, पचाद्यच् । यद्यपि कृद्योगे कर्मणि षष्ठ्या भवितव्यम्, तथापि अत्र सौत्रो विभक्तिव्यत्यय इत्येके ॥ 'कर्तृकर्मणोः-६२४' इति षष्ठ्या अनित्यत्वे ज्ञापकमिदम् । तेन च 'धायैरामोदमुत्तमम्' इति भट्टिप्रयोगः संगच्छत इति तु कारकेष्ववोचाम ॥ द्वितीयान्तादेव प्रत्यय इति स्फुटीकर्तुं तिङन्तेन विगृह्णाति—**विधिमर्हतीति** । कथं तर्हि 'ततो यथावद्विहिताध्वराय' इति, असत्त्वार्थकस्य कर्मत्वासंभवेन द्वितीयान्तत्वाभावादिति चेत्, **अत्राहुः**—यथाशब्दो वृत्तिविषये सत्त्वार्थकः, तथात्वमित्यादिषु त्वतलादिदर्शनात् । अन्यथा षष्ठ्यपि नास्तीति त्वतलौ न स्याताम् । तथा च द्वितीयान्ताद्यथाशब्दादर्हार्थे वतिः । योग्यतामर्हतीति विधानमित्यर्थात् क्रियायोगोऽपि सुलभ इति ॥ **१७८१ तस्य भावस्त्वतलौ** ॥—**प्रकृतीति** । न तु यः कश्चिद्धर्मः, घटत्वमित्यत्र द्रव्यत्वपृथिवीत्वादेरभानात् ॥—**गोर्भाव इति** । इह गोशब्दोऽर्थपरः, शब्दस्वरूपपरो वेति पक्षद्वयम् ॥ यदाऽर्थपरः, तदा धर्मविशेषः प्रत्ययार्थः, स च धर्मत्वेनैव भासते । प्रकृतिजन्येत्यादिस्तु प्रयोगोपाधिः ॥ यदा तु शब्दपरस्तदा तज्जन्यबोधप्रकारः प्रत्ययार्थः । स च धर्मविशेष एव । पाचकत्वमित्यत्र तु कर्तृत्वरूपसंबन्धः प्रकारः । पच्यमानत्वमित्यत्र तु कर्मत्वरूपसंबन्धः । तथा औपगवत्वमित्यत्र जन्यत्वरूपसंबन्धः प्रकारः । राजपुरुषत्वमित्यत्र तु स्वरूपः संबन्धः इत्याद्यूह्यम् ॥ एवं स्थिते हरिटीकायां यदुक्तं 'कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेन' इति, तत्र नापूर्वं शक्त्यन्तरं कल्प्यम् । उक्तरीत्यैव तत्राप्युपपत्तेरिति संक्षेपः ॥ **१७८२ अपवादैः सहेति** । 'पृथ्वादिभ्य इमनिज्वा' इत्यादिभिः ॥—**चकार इति** । अन्यथा त्वतलौ स्त्रीपुंसाभ्यां न स्याताम्, अन्यत्र तयोः सावकाशत्वादिति भावः ॥—**पौंस्नं पुंस्त्वमिति** । संयोगान्त-

---

१ **क्रियेति**—'क्रिया' इति पदं च संनिहितत्वात्समानविभक्तिकत्वात्प्राधान्याच्च प्रत्ययार्थस्य विशेषणम्—यत्तुल्यं सा चेत्क्रियेत्यर्थः । न तु प्रकृत्यर्थस्य । २ **तत्रेति**—अत्र षष्ठ्यर्थसप्तम्यन्तात्षष्ठ्यन्ताच्चायम्प्रत्ययः, न त्वधिकरणसप्तम्यन्तात्, असामर्थ्यात् । इवशब्दयोगे षष्ठ्यर्थे सप्तम्याश्चेदमेव ज्ञापकमिति भाष्ये स्पष्टम् । ३ **प्रकार इति**—मुख्यविशेष्यतानिरूपितविषयताश्रय इत्यर्थः । तेन राजपुरुषादौ राजादेः प्रकारत्वेऽपि न क्षतिः । ४ **अपवादैरिति**—अन्यथाऽपवादविषयेऽस्यानुपस्थितिः स्यात्, निराकाङ्क्षत्वादिति भावः ।

अपतित्वम् । अपटुत्वम् । नञ्पूर्वात्किम् । बार्हस्पत्यम् । तत्पुरुषात्किम् । नास्य पटवः सन्तीत्यपटुः, तस्य भाव आपटवम् । अचतुरेति किम् । आचतुर्यम् । आसङ्गत्यम् । आलवण्यम् । आवव्यम् । आयुध्यम् । आकल्यम् । आरस्यम् । आलस्यम् ।

१७८४ । पृथ्वादिभ्य इमनिज्वा ।५।१।१२२। वावचनमणादिसमावेशार्थम् ।

१७८५ । र ऋतो हलादेर्लघोः ।६।४।१६१। हलादेर्लघोर्ऋकारस्य रः स्यादिष्ठेमेयस्सु ।

१७८६ । टेः ।६।४।१५५। भस्य टेर्लोपः स्यादिष्ठेमेयस्सु । पृथोर्भावः प्रथिमा, पार्थवम् । म्रदिमा, मार्दवम् ।

१७८७ । वर्णदृढादिभ्यः ष्यञ्च ।५।१।१२३। चादिमनिच् । शौक्ल्यम्, शुक्लिमा । दार्ढ्यम् । ॐ पृथुमृदुभृशकृशदृढपरिवृढानामेव रत्वम् । द्रढिमा । षो ङीषर्थः । औचिती । याथाकामी ।

१७८८ । गुणवचनब्राह्मणादिभ्यः कर्मणि च ।५।१।१२४। चाद्भावे । जडस्य कर्म भावो वा जाड्यम् । मूढस्य भावः कर्म वा मौढ्यम् । ब्राह्मण्यम् । ॐ अर्हतो नुम् च । अर्हतो भावः कर्म वा-आर्हन्त्यम् । आर्हन्ती । ब्राह्मणादिराकृतिगणः ।

१७८९ । यथातथयथापुरयोः पर्यायेण ।७।३।३१। नञः परयोरेतयोः पूर्वोत्तरपदयोः पर्यायेणादेरचो वृद्धिर्णिदादौ । अयथातथाभावः-आयथातथ्यम्, अयाथातथ्यम् । आयथापूर्यम्, अयाथापूर्यम् । आपादसमाप्तेर्भावकर्माधिकारः । ॐ चतुर्वर्णादीनां स्वार्थ उपसंख्यानम् । चत्वारो वर्णाश्चातुर्वर्ण्यम् । चातुराश्रम्यम् । त्रैस्वर्यम् । षाड्गुण्यम् । सैन्यम् । सान्निध्यम् । सामीप्यम् । औपम्यम् । त्रैलोक्यम् । इत्यादि । सर्वे वेदाः सर्ववेदास्तानधीते सर्ववेदः । ॐ सर्वादेः-इति लुक्, स एव सार्ववैद्यः । (ग) चतुर्वेदस्योभयपदवृद्धिश्च । चतुरो वेदानधीते चतुर्वेदः, स एव चातुर्वैद्यः । 'चतुर्विद्यस्य' इति पाठान्तरम् । चतुर्विद्य एव चातुर्वैद्यः ।

१७९० । स्तेनाद्यन्नलोपश्च ।५।१।१२५। 'न' इति संघातग्रहणम् । 'स्तेन चौर्ये' पचाद्यच् । स्तेनस्य भावः कर्म वा स्तेयम् । 'स्तेनात्' इति योगं विभज्य 'स्तैन्यम्' इति व्यञन्तमपि केचिदिच्छन्ति ।

१७९१ । सख्युर्यः ।५।१।१२६। सख्युर्भावः कर्म वा सख्यम् । ॐ दूतवणिग्भ्यां च । दूतस्य भावः कर्म वा दूत्यम् । वणिज्यम् । इति काशिका । माधवस्तु-'वणिज्याशब्दः स्वभावात्स्त्रीलिङ्गः, भाव एव चार्यं

---

लोपे 'पुमः खयि-' इति रुत्वम्, पाक्षिकावनुनासिकानुस्वारौ, विसर्गे कृते सत्वम् ॥—**अपतित्वमिति** । इह 'पत्यन्त-' इति यक् न भवति ॥—**अपटुत्वमिति** । इह 'इगन्ताच्च लघुपूर्वात्' इत्यण् न भवति ॥—**आचतुर्यमित्यादि** । ब्राह्मणादित्वात् ष्यञ् ॥ १७८४ **पृथ्वादिभ्यः—**॥—**अणादीति** । इगन्तलघुपूर्वेषु पृथुमृदुप्रभृतिष्वणः समावेशः । चण्डखण्डादिषु गुणवचनेषु ष्यञः । बालवत्सादिषु वयोवचनलक्षणस्याञ इति बोध्यम् । त्वतलौ तु पूर्वसूत्रेणैव लब्धौ ॥ **१७८५ र ऋतो—**। हलादेः किम्? ऋजिष्ठः । ऋजीयान् ॥ लघोः किम्? कृष्णिमा । 'पृथुमृदुभृश-' इति परिगणने तु 'हलादेर्लघोः' इति त्यक्तुं शक्यम् ॥ **१७८७ वर्णदृढादिभ्यः—**गुणवचनत्वादेव सिद्धे इमनिजर्थ वचनम् । 'पृथुमृदुभृश-' इति परिगणनादिह रभावो न भवति । कृतमाचष्टे कृतयति । णाविष्ठवद्भावः ॥—**औचितीति** । ब्राह्मणादेराकृतिगणत्वात् ष्यञ् । 'हलस्तद्धितस्य' इति यलोपः । एवं याथाकामी ॥ दृढ, वृढ, परिवृढ, भृश, कृश, इत्यादि । अत्र द्वे गणसूत्रे— **'वेर्यातलाभमतिमनःशारदानाम्'** । विशब्दादुत्तरे ये यातादयः पञ्च तदन्तानां समासानामनन्तरः ष्यञ् भवतीत्यर्थः । वियातत्वम् वियातता । वियातिमा । वैयात्यम् । विलाभिमा । वैलाभ्यम् । विमतिमा । वैमत्यम् । इगन्तत्वादणपि-वैमतम् । विमनिमा । वैमनस्यम् । विशारदिमा । वैशारद्यम् । त्वतलोः समावेशेन-विलाभत्वम् । विलाभता-इत्यादीन्यप्यूह्यानि ॥—**समो मतिमनसोः** । समः परे ये मतिमनसी तदन्तयोः समासयोरनन्तरः ष्यञ् भवतीत्यर्थः । संमतित्वम् । संमतिता । संमतिमा । सांमत्यम् । इगन्तत्वादणि-सांमतम् । संमनस्त्वम् । संमनस्ता । संमनिमा । सांमनस्यम् ॥ **१७८८ गुणवचन—**। ष्यञनुवर्तते, कर्म क्रिया कार्यं च । 'शरीरायासमात्रसाध्यं शौचादि क्रिया । शास्त्रेण विहितो यागादिः कार्यम्' इति तयोर्भेदमाहुः ॥—**अर्हत इति** । 'अर्हः प्रशंसायाम्' इति शत्रन्तोऽर्हच्छब्दः पूजार्थाभिधायीति कैयटः ॥—**आकृतिगण इति** । केषांचित्पाठस्तु कार्यान्तराय, तथा हि—'अर्हतो नुम् च' इति नुमर्थः पाठः । एकभावः, त्रिभावः, अन्यभावः, एषां पाठः स्वार्थे विधानार्थः । तथा च प्रत्याहाराह्निके वार्तिके प्रयोगः—'आन्यभाव्यं तु कालशब्दव्यवायात्' इति । अन्यभाव एव आन्यभाव्यम् । अन्यत्वमित्यर्थः ॥ यत्तु व्याकरणाधिकरणे भट्टपादैरुक्तम् 'आन्यभाव्यमपप्रयोगः' इति, तत्तु अवैयाकरणमीमांसकसंतोषार्थमित्यवसेयम् ॥ **१७८९ सर्ववेद इति** । 'पूर्वकालैक-' इति समासः ॥—**चतुर्वेद इति** । तद्धितार्थे द्विगुः । 'द्विगोर्लुगनपत्ये' इत्यणो लुक् ॥—**चतुर्विद्य इति** । विद्यालक्षणसूत्रान्तादिति ठक् । तस्य लुक् ॥ **१७९० संघातग्रहणमिति** । वर्णग्रहणे तु 'यस्येति च' इत्यकारलोपे सतीष्टं न सिध्यति । 'अचः परस्मिन्-' इत्यल्लोपस्य स्थानिवद्भावादयादेशप्रसङ्गादिति भावः ॥

प्रत्ययो न तु कर्मणि' इत्याह । भाष्ये तु 'दूतवणिग्भ्यां च' इति नास्त्येव । ब्राह्मणादित्वाद्वाणिज्यमपि ।

१७९२ । **कपिज्ञात्योर्ढक्** ।५।१।१२७। कापेयम् । ज्ञातेयम् ।

१७९३ । **पत्यन्तपुरोहितादिभ्यो यक्** ।५।१।१२८। सैनापत्यम् । पौरोहित्यम् । (ग) **राजाऽसे** । राजशब्दोऽसमासे यकं लभत इत्यर्थः । राज्ञो भावः कर्म वा राज्यम् । समासे तु ब्राह्मणादित्वात्ष्यञ्, आधिराज्यम् ।

१७९४ । **प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्** ।५।१।१२९। प्राणभृज्जातिः–आश्वम्, औष्ट्रम् । वयोवचनम्–कौमारम्, कैशोरम् । औद्गात्रम् । औन्नेत्रम् । सौष्ठवम् । दौष्ठवम् ।

१७९५ । **हायनान्तयुवादिभ्योऽण्** ।५।१।१३०। द्वैहायनम् । त्रैहायनम् । यौवनम् । स्थाविरम् । * **श्रोत्रियस्य यलोपश्च** । श्रौत्रम् । कुशलचपलनिपुणपिशुनकुतूहलक्षेत्रज्ञा युवादिषु ब्राह्मणादिषु च पठ्यन्ते । कौशल्यम्, कौशलम् । इत्यादि ।

१७९६ । **इगन्ताच्च लघुपूर्वात्** ।५।१।१३१। शुचेर्भावः कर्म वा शौचम् । मौनम् । कथं काव्यम् ? कविशब्दस्य ब्राह्मणादित्वात्ष्यञ् ।

१७९७ । **योपधाद्गुरूपोत्तमाद्वुञ्** ।५।१।१३२। रामणीयकम् । आभिधानीयकम् । * **सहायाद्वा** । साहाय्यम्, साहायकम् ।

१७९८ । **द्वन्द्वमनोज्ञादिभ्यश्च** ।५।१।१३३। शैष्योपाध्यायिका । मानोज्ञकम् ।

१७९९ । **गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु** ।५।१।१३४। अत्याकारोऽधिक्षेपः । तदवेतः–ते गोत्रचरणयो-

---

ननु संघातग्रहणेऽपि 'अलोऽन्त्यस्य' इत्यकारस्यैव लोपः स्यान्न तु संघातग्रहणस्येति चेत् । मैवम् । आरम्भसामर्थ्यात्, 'नानर्थकेऽलोन्त्यविधिः–' इति निषेधाद्वा तत्सिद्धेः ॥ **१७९२ कपिज्ञात्योः—**। इह कपिज्ञाती द्वे, भावकर्मणी अर्थावपि द्वौ, तयोर्यथासंख्यं न भवति, अस्वरितत्वप्रतिज्ञानात् । एवं 'पत्यन्तपुरोहितादिभ्यः' 'द्वन्द्वमनोज्ञादिभ्यः' इत्यत्रापि बोध्यम् ॥ **१७९३ ब्राह्मणादित्वादिति** । यद्यपि ब्राह्मणादिषु राजन्शब्दः केवलः पठितः, तथाप्ययमेव 'असे' इति प्रतिषेधो ज्ञापयति— 'अस्त्यत्र प्रकरणे राजन्शब्देन तदन्तविधिः' इति । एवं च ब्राह्मणादिपाठस्य समासे चरितार्थत्वादसमासे विशेषविहितो यगेव भवति ॥ अन्ये तु ब्राह्मणादेराकृतिगणत्वादेव तदन्तात् कथंचित्ष्यञि सिद्धे राजन्शब्दस्य तत्र पाठो यका सह समावेशार्थ इति । तथा चावेष्ट्यधिकरणे शाबरभाष्ये उक्तं 'राज्ञः कर्म राज्यं ब्राह्मणादित्वात् ष्यञ्' इति ॥ पुरोहित, संग्रामिक, पथिक, सारथिक–इत्यादयः पुरोहितादयः ॥ **१७९४ प्राणभृज्जाति—**। मुखनासासंचारी वायुः प्राणः । 'प्राणिजाति–' इत्येव सुवचम् ॥ प्राणभृदिति किम् ? तृणत्वम् । तृणता ॥ जातीति किम् ? देवदत्तत्वम् ॥**—औद्गात्रमिति** । उद्गात्रादिषु ये ऋत्विग्वचनास्तेभ्यो 'होत्राभ्यश्छः' इति छे प्राप्ते अञ् विधीयते । सुष्ठु दुष्ठु द्वाभ्यां गुणलक्षणे ष्यञि प्राप्ते, वधूशब्दादिगन्तलक्षणेऽणि, शेषेभ्यस्त्वतलोः प्राप्तयोः । इह तु **'सुभगं मन्त्रे'** पठ्यते । सुभगमित्येतच्छब्दरूपं मन्त्रविषये प्रयोगे अञमुत्पादयतीत्यर्थः । 'महते सौभगाय' । सर्वविधीनां छन्दसि वैकल्पिकत्वादिह 'हृद्भगसिन्ध्वन्ते' इत्युत्तरपदवृद्धिर्न भवति । अत एव मन्त्रेऽपि क्वचिदञ् न भवति । 'सौभाग्यमस्यै दत्त्वाय' इह ष्यञ् ॥ **१७९५ हायनान्त—**। अस्मात्त्वतलोः प्राप्तयोरण्विधानम् । युवस्थविरशब्दाभ्यां वयोवचनलक्षणे अञि प्राप्ते ॥**—यौवनमिति** । अणि परतः 'अन्' इति प्रकृतिभावः । मनोज्ञादिपाठाद्वुञपि । यौवनकम् । 'प्रकृत्याऽके राजन्यमनुष्ययुवानः' इति प्रकृतिभावः ॥**—श्रोत्रियस्येति** । 'श्रोत्रियंश्छन्दोऽधीते' इत्यत्र छान्दसः श्रोत्रभावः, घंश्च प्रत्यय इति यदा व्याख्यानं, तदेह 'घलोपः' इति यथा श्रुतम् ॥ यदा तु 'वाक्यार्थे पदवचनम्' इति पक्षः, तदा घशब्देन इय इति रूपं लक्ष्यते ॥ क्वचित्तु 'यलोपश्च' इति पाठः, तत्र येति संघातग्रहणं व्याख्येयम् । वर्णग्रहणे त्विकारस्य यणादेशः स्यान्न तु 'यस्येति च' इति लोपः । अकारलोपस्य स्थानिवत्त्वेन इकारान्तस्य भत्वाभावात् । एतच्च हरदत्तग्रन्थे स्पष्टम् ॥ मूलपुस्तकेषु 'यलोपः' इत्यमुख्यपाठ एव प्रायेण दृश्यते, न तु घलोप इति पाठः ॥ **१७९६ इगन्ताच्च—**। लघुः पूर्वोऽवयवो यस्येति प्रातिपदिकविशेषणम् । पूर्वत्वं च संनिधानादिगवधिकमेव । तेनातिपाण्डुशब्दान्न भवति ॥ 'लघुपूर्वकः' इत्येव सुवचम् । लघुपूर्वश्चासौ इक् च लघुपूर्वेक्, तस्य प्रातिपदिकविशेषणात्तदन्तलाभ इति नव्याः ॥ इगन्तात्किम् ? घटत्वम् । लघुपूर्वात्किम् ? पाण्डुत्वम् ॥**—कथं काव्यमिति** । कुधातोः 'ओरावश्यके' इति रूपसिद्धावपि कवेः कर्मेत्यर्थे कावमिति स्यादिति प्रश्नः ॥ **१७९७ योपधात्—**। गुरु उपोत्तमं यस्य प्रातिपदिकस्य तस्मादित्यर्थः ॥ योपधात्किम् ? विमानत्वम् ॥ गुरूपोत्तमादिति किम् ? क्षत्रियत्वम् ॥ **—आभिधानीयकमिति** । अत्र प्रकृतिरभेः परोऽनीयर्प्रत्ययान्तो दधातिः । अभिधेयस्य भावः कर्म वेत्यर्थः ॥ **—सहायाद्वेति** । सूत्रेण नित्ये प्राप्ते विकल्पार्थं वचनम् ॥ **१७९८ द्वन्द्वमनोज्ञादिभ्यश्च** । मनोज्ञ, प्रियरूप, बहुल, अवश्य, इत्यादिर्मनोज्ञादिः ॥ **१७९९ गोत्रचरणात्—**। गोत्रवाचिनश्चरणवाचिनश्च प्रातिपदिकाद्वुञ् स्याद्भावकर्मणोः ॥ अपत्याधिकारादन्यत्र लौकिकं गोत्रम् । तेनापत्यप्रत्ययान्तेभ्य इत्यर्थः ॥ प्रवराध्याये ये पठितास्तेभ्य इत्यपरे ॥ 'गोत्रं च चरणैः सह' इति जातित्वात् 'प्राणभृज्जाति–' इत्यादिना अञि प्राप्ते वचनम् ॥**—श्लाघेत्यादि** । श्लाघादिषु विषयभूतेष्वि-

भावकर्मणी प्राप्तः । अवगतवान्वा । गार्गिकया श्लाघते । गार्ग्यत्वेन विकत्थत इत्यर्थः । गार्गिकयाऽत्याकुरुते । गार्गिकामधेतः ।

१८०० । होत्राभ्यश्छः ।५।१।१३५। होत्राशब्द ऋत्विग्वाची स्त्रीलिङ्गः । बहुवचनाद्विशेषग्रहणम् । अच्छावाकस्य भावः कर्म वा–अच्छावाकीयम् । मैत्रावरुणीयम् ।

१८०१ । ब्रह्मणस्त्वः ।५।१।१३६। होत्रावाचिनो ब्रह्मन्शब्दात्त्वः स्यात् । छस्यापवादः । ब्रह्मत्वम् । नेति वाच्ये त्ववचनं तलो बाधनार्थम् । ब्राह्मणपर्यायाद्ब्रह्मन्शब्दात्तु त्वतलौ । ब्रह्मत्वम्, ब्रह्मता ॥

इति तद्धितेषु भावकर्मार्थाः ।
( नञ्स्नञोरधिकारः समाप्तः )

---

## अथ पाञ्चमिकाः ।

१८०२ । धान्यानां भवने क्षेत्रे खञ् ।५।२।१। भवन्त्यस्मिन्निति भवनम् । मुद्गानां भवनं क्षेत्रं मौद्गीनम् ।

१८०३ । व्रीहिशाल्योर्ढक् ।५।२।२। व्रैहेयम् । शालेयम् ।

१८०४ । यवयवकषष्टिकाद्यत् ।५।२।३। यवानां भवनं क्षेत्रं यव्यम् । यवक्यम् । षष्टिक्यम् ।

१८०५ । विभाषा तिलमाषोमाभङ्गाणुभ्यः ।५।२।४। यत् वा स्यात् । पक्षे खञ् । तिल्यम्, तैलीनम् । माष्यम्, माषीणम् । उम्यम्, औमीनम् । भङ्ग्यम्, भाङ्गीनम् । अणव्यम्, आणवीनम् ।

१८०६ । सर्वचर्मणः कृतः खखञौ ।५।२।५। असामर्थ्येऽपि निपातनात्समासः । सर्वश्चर्मणा कृतः सर्वचर्मीणः, सार्वचर्मीणः ।

१८०७ । यथामुखसंमुखस्य दर्शनः खः ।५।२।६। मुखस्य सदृशं यथामुखं प्रतिबिम्बम् । निपातनात्सादृश्येऽव्ययीभावः । समं सर्वं मुखं संमुखम् । समशब्दस्यान्तलोपो निपात्यते । यथामुखं दर्शनो यथामुखीनः । सर्वस्य मुखस्य दर्शनः संमुखीनः ।

१८०८ । तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति

---

त्यर्थः ॥—**प्राप्त इति ।** इणः प्राप्त्यर्थत्वात् । अत्रपूर्वस्येणो ज्ञाने प्रसिद्धत्वादाह—**अवगतवान्वेति** ॥—**गार्गिकयेति ।** 'आपत्यस्य–' इति यलोपः ॥ चरणाद्वुञ उदाहरणं तु **'काठिकया श्लाघते'** इत्यादि बोध्यम् ॥ श्लाघादिष्विति किम् ? गार्ग्यत्वम् । कठत्वम् ॥ **१८०० होत्राशब्द इति—।** जुहोतेस्त्रन् ॥ **१८०१ नेति वाच्ये इति ।** छप्रत्यये निषिद्धे 'तस्य भावस्त्वतलौ' इत्यनेनैव त्वप्रत्ययः सिद्ध्यति । विभक्तेरनुच्चारणाल्लाघवं च भवतीति भावः ॥ 'होत्राभ्यः–' इत्यनुवृत्तेः फले दर्शयति—**ब्राह्मणपर्यायादिति ॥ इति भावकर्मार्थकाः ॥ इति नञ्स्नञ्प्रकरणम् ॥**

**१८०२ धान्यानाम्—।** 'धिवि प्रीणने' इत्यस्मात् 'कृत्यल्युटो बहुलम्' इति कर्तरि ण्यत् । अस्मादेव निपातनादन्त्यस्य लोप इकारस्य चात्वम्, धिनोतीति धान्यम् । मन्त्रश्च–'धान्यमसि धिनुहि देवान्' इति दृश्यते । 'धान्यानाम्' इति भवनापेक्षया कर्तरि षष्ठी । सा च निर्देशादेव समर्थविभक्तिः । बहुवचनं तु स्वरूपविधिनिरासार्थम् । अलौकिके प्रक्रियावाक्ये तु षष्ठ्यन्तानुवादेन तद्धितविधिसामर्थ्यादेवेति बोध्यम् ॥ भवतिरिहोत्पत्तिवचनः, क्षेत्रग्रहणसामर्थ्यात् । सूत्रे हि सत्तावचनस्यापि भवतेर्ग्रहणं मा भूदिति क्षेत्रग्रहणं कृतम् । अन्यथा 'धान्यानां भवनं कुसूलः' इत्यत्रापि स्यादिति ॥ धान्यानां किम् ? तृणानां भवनं क्षेत्रम् ॥ **१८०३ व्रीहिशाल्योः—।** अत्रापि निर्देशादेव षष्ठी समर्थविभक्तिः । सा च भवनापेक्षया कर्तरीत्यादिपूर्ववत् ॥ **१८०४ यवयवक—।** अत्र प्रत्ययार्थसामर्थ्याल्लभ्या षष्ठी समर्थविभक्तिः ॥ **१८०५ विभाषा—।** खञि नित्ये प्राप्ते वचनम् ॥ **औमीनम् । भाङ्गीनमिति ।** ननूमाभङ्गयोर्धान्यत्वाभावात्कथमिह खञ् । 'व्रीहयश्च मे यवाश्च मे' इति चमकानुवाके हि द्वादशैव धान्यानि पठितानि, न तूमाभङ्गे पठिते इति चेत् । मैवम् । 'शणसप्तदशानि धान्यानि' इति स्मरणात् । तत्र चोमाभङ्गयोरपि पाठाद्धान्यत्वमस्तीति भाष्यादौ स्थितत्वात् । न च चमकानुवाके धान्यपरिगणनेनार्थः, तत्राधान्यानामप्याश्मादीनां पाठात् । धान्यानामपि केषांचित् कोद्रवादीनामपाठात् । तस्मादन्यत एव धान्यनिर्णय इति पूर्वोक्तस्मृत्या तयोर्धान्यत्वमस्तीति ज्ञेयम् ॥ **१८०६ सर्वचर्मणः—।** 'खश्च' इत्येव तु नोक्तम् । यतोऽप्यनुकर्षः संभाव्येतेति ॥ अत्र तृतीया समर्थविभक्तिः । कृत इति प्रत्ययार्थे चर्मणः करणत्वस्योचितत्वात् ॥—**सर्वश्चर्मणेति ।** सर्वेण चर्मणा कृत इत्यर्थे तद्धितो नेष्यत इति भावः ॥ **१८०७ यथामुख—।** दृश्यतेऽस्मिन् दर्शनः–आदर्शादिः । अधिकरणे ल्युट् ॥ 'असादृश्ये' इति प्रतिषेधात्सादृश्ये कथं यथाशब्दस्य समासस्तत्राह—**निपातनादिति** । एतच्च वृत्तिग्रन्थमनुसृत्योक्तम् । भट्टिकाव्ये तु पदार्थानतिवृत्तौ यथाशब्द आश्रितः । तथा च मायामृगं प्रक्रम्योक्तम्—'यथामुखीनः सीतायाः पुप्लुवे बहु लोभयन्' इति ॥—**यथामुखं दर्शन इति** । अव्ययीभावस्यापि यथामुखशब्दस्योन्मत्तगङ्गादिवत्सत्त्ववचनत्वात्कर्मशक्तियोगे सति कृद्योगलक्षणा षष्ठी । तस्याः 'नाव्ययीभावात्–' इत्यमादेशः ॥—**सर्वस्य मुखस्येति ।** 'संमुखस्य' इति नोक्तम्, प्रत्ययसंनियोगेनैव समशब्दस्यान्त्यलोपनिपातनात् । संशब्दस्तु समशब्दार्थे न दृश्यते, 'संमुखो भव' इत्यत्र 'अभिमुखः' इत्यर्थप्रतीतेः । तत्र च खप्रत्ययस्यानिष्यमाणत्वात् ॥ कथं तर्हि—'संयुगे संमुखीनं तमुद्यद्दं प्रसहेत कः' इति भट्टिः । अभिमुखावस्थानात्साधर्म्याद्भविष्यतीति हरदत्तः ॥ **१८०८ तत्सर्वादेः—।** तदिति द्वितीया समर्थविभक्तिः । व्याप्नोतीति प्रत्ययार्थः ।

।५।२।७। सर्वादेः पथ्याद्यन्ताद् द्वितीयान्तात्खः स्यात् । सर्वपथान्व्याप्नोति सर्वपथीनः । सर्वाङ्गीणः । सर्वकर्मीणः । सर्वपत्रीणः । सर्वपात्रीणः ।

१८०९ । **आप्रपदं प्राप्नोति** ।५।२।८। पादस्याग्रं प्रपदम्, तन्मर्यादीकृत्य आप्रपदम् । आप्रपदीनः पटः ।

१८१० । **अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु** ।५।२।९। अनुरायामे सादृश्ये च । अनुपदं बद्धा अनुपदीना उपानत् । सर्वान्नानि भक्षयति सर्वान्नीनो भिक्षुः । अयानयः स्थलविशेषः, तं नेयः—अयानयीनः शारः ।

१८११ । **परोवरपरम्परपुत्रपौत्रमनुभवति** ।५।२।१०। परांश्चावरांश्चानुभवतीति परोवरीणः, अवरस्योत्वं निपात्यते । परांश्च परतरांश्चानुभवति परम्परीणः, प्रकृतेः परम्परभावो निपात्यते । पुत्रपौत्राननुभवति पुत्रपौत्रीणः । परम्पराशब्दस्तु अव्युत्पन्नं शब्दान्तरं स्त्रीलिङ्गं, तस्मादेव स्वार्थे ष्यञि पारम्पर्यम् । कथं पारोवर्यवदिति ? असाधुरेवायम्, खप्रत्ययसन्नियोगेनैव परोवरेति निपातनात् ।

१८१२ । **अवारपारात्यन्तानुकामं गामी** ।५।२।११। अवारपारं गामी अवारपारीणः । अवारीणः । पारीणः । पारावारीणः । अत्यन्तं गामी अत्यन्तीनः, भृशं गन्तेत्यर्थः । अनुकामं गामी अनुकामीनः, यथेष्टं गन्ता ।

१८१३ । **समां समां विजायते** ।५।२।१२। यलोपोऽवशिष्टविभक्तेरलुक् च पूर्वपदे निपात्यते । समांसमीना गौः ।

समांसमीना सा यैव प्रतिवर्षं प्रसूयते ।

ॐ **खप्रत्ययानुत्पत्तौ यलोपो वा वक्तव्यः ।** समां समां विजायते, समायां समायां वा ।

१८१४ । **अद्यश्वीनावष्टब्धे** ।५।२।१३। अद्य श्वो वा विजायते अद्यश्वीना वडवा । आसन्नप्रसवेत्यर्थः । केचित्तु विजायत इति नानुवर्तयन्ति । अद्यश्वीनं मरणम् । आसन्नमित्यर्थः ।

१८१५ । **आगवीनः** ।५।२।१४। आङ्पूर्वाद्गोः कर्मकरे खप्रत्ययो निपात्यते । गोः प्रत्यर्पणपर्यन्तं यः कर्म

---

परिशिष्टं प्रकृतिविशेषणम् । तत्र केवलानां पथ्यादीनां सर्वादित्वासंभवात्प्रातिपदिकैरपि तैस्तदन्तविधिः, तदाह—**पथ्याद्यन्तादिति** । पथ्यङ्गकर्मपत्रपात्रान्तात्प्रातिपदिकादित्यर्थः ॥—**सर्वपथीन इति** । 'पूर्वकालैक–' इति समासः । 'ऋक्पूः–' इति समासान्तः । तस्य पथ्यन्तसमासग्रहणेन ग्रहणाद्भवति खप्रत्ययः ॥ **१८१० अनुपदसर्वान्नायानयम्**—इत्यत्र निपातनात्तिङन्तेन सह द्वन्द्वः ॥ द्वितीयान्तेभ्योऽनुपदादिभ्यो यथासंख्यं बद्धादिष्वर्थेषु खः स्यात् ॥—**अनुरायाम इत्यादि** । 'यस्य चायामः' इति, 'यथार्थे यदव्ययम्' इति वा अव्ययीभाव इत्यर्थः ॥—**सर्वान्नीन इति** । प्रकारकात्स्न्र्ये सर्वशब्दः । यान्यन्नानि लभ्यन्ते उष्णानि शीतलानि सरसानि नीरसानि वा सर्वाणि भक्षयतीत्यर्थः ॥ 'अयः प्रदक्षिणगमनम् । अनयः प्रसव्यगमनम् । प्रदक्षिणप्रसव्यगामिनां शाराणां यस्मिन्परैरसमावेशः सोऽयमयानयः' इति काशिका ॥—**तं नेय इति** । नयतेर्द्विकर्मकत्वादप्रधाने कर्मणि द्वितीया ॥—**अयानयीनः शार इति** । 'फलकशिरसि स्थित इत्यर्थः' इति काशिका ॥ **१८११ अवरस्येति** । आदेरिति शेषः ॥ उत्वे कृते 'आद्गुणः' । केचित्तु ओत्वं परशब्दस्य निपात्यते, तस्मात्परस्मातः 'एङः पदान्तात्' इति पूर्वरूपादेश इति पक्षान्तरमाहुः ॥ **१८१२ अवारपार**—॥—**गामीति** । 'गमेरिनिः, आङि णिच्च' इति बहुलवचनात्केवलादपि णिनिः । 'भविष्यति गम्यादयः' इति भविष्यत्कालता ॥ न्यासकारस्तु 'आवश्यके णिनिः, सोऽपि भविष्यत्येव' इत्याह ॥ **अवारपारमिति** । 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति षष्ठीप्रतिषेधः ॥ केचित्तु 'गत्यर्थकर्मणि–' इति सूत्रे द्वितीयाग्रहणमपवादविषये विधानार्थम् । तेन कृद्योगषष्ठी न भवति 'ग्रामं गन्ता' इतिवदिति व्याचख्युः । तदसत् । 'अकेनोः–' इति प्रतिषेधे षष्ठीप्रसङ्गस्यैवाभावात् ॥—**अवारीण इत्यादि** । 'विगृहीताद्विपरीतादपीष्यते' इति भावः ॥—**अत्यन्तमिति**—क्रियाविशेषणम् ॥—**अनुकाममिति** । काम इच्छा तस्य सदृशमनुकामम् । कामानुरूपमित्यर्थः । 'अव्ययं विभक्ति–' इति यथार्थेऽव्ययीभावः **१८१३ समां समाम्**—॥—**यलोप इति** । 'समायाम्' इत्यत्र यकारलोप इत्यर्थः ॥—**पूर्वपदे निपात्यत इति** । अन्यथा तद्धिते उत्पन्ने यथोत्तरपदे सुपो लुग् भवति 'सुपो धातुप्रातिपदिकयोः' इति, तथा पूर्वपदेऽपि स्यादिति भावः ॥—**समांसमीनेति** । वीप्सायां द्विर्वचनम् । सुबन्तसमुदायः प्रकृतिः ॥ विजायत इत्येतद्व्याचष्टे—**प्रसूयत इति** । विपूर्वको जनिर्गर्भविमोचने वर्तत इति भावः ॥ गर्भविमोचने कृत्स्नायाः समाया व्याप्त्यभावात् 'अत्यन्तसंयोगे च' इति द्वितीया न भवतीत्याशयेनाह—**समायामित्यादि** ॥—**खप्रत्ययानुत्पत्ताविति**—वार्तिकेन समांसमामिति सौत्रप्रयोगस्तूपपन्न इति भावः ॥ **१८१४ अद्यश्वीना**—। अविभक्तिको निर्देशः, न तु स्त्रीलिङ्गनिर्देशोऽयम् । अद्यश्वीनो गोसमूहः । अद्यश्वीनं गोमण्डलमित्यादावपीष्टत्वात् ॥—**अद्य श्वो वेति** । निपातनाद् वाऽर्थे समासोऽयमिति भावः ॥ 'अवाच्चालम्बना–' इति सूत्रेण आविदूर्ये स्तम्भेः षत्वविधानादवष्टब्धशब्द आसन्नपरः । 'विजायते' इति हि वर्तते । स च गर्भविमोचनार्थकः, तदाह—**आसन्नप्रसवेत्यर्थ इति** ॥ **१८१५ कर्मकरे इति** । यस्तु प्रातर्गा गृहीत्वा गच्छति गोपालस्तस्मिन्नित्यर्थः ॥—**गोः प्रत्यर्पणप-**

करोति स आगवीनः ।

१८१६ । **अनुग्वलङ्गामी** ।५।२।१५। अनुगु गोः पश्चात्पर्याप्तं गच्छति–अनुगवीनो गोपालः ।

१८१७ । **अध्वनो यत्खौ** ।५।२।१६। अध्वानमलं गच्छति–अध्वन्यः, अध्वनीनः । 'ये चाभावकर्मणोः' ११५६ 'आत्माध्वानौ खे' १६७१ इति सूत्राभ्यां प्रकृतिभावः ।

१८१८ । **अभ्यमित्राच्छ च** ।५।२।१७। चाद्यत्खौ । अभ्यमित्रीयः, अभ्यमित्र्यः, अभ्यमित्रीणः । अमित्राभिमुखं सुष्ठु गच्छतीत्यर्थः ।

१८१९ । **गोष्ठात्खञ् भूतपूर्वे** ।५।२।१८। गोष्ठो भूतपूर्वः–गौष्ठीनो देशः ।

१८२० । **अश्वस्यैकाहगमः** ।५।२।१९। एकाहेन गम्यते इत्येकाहगमः, आश्वीनोऽध्वा ।

१८२१ । **शालीनकौपीने अधृष्टाकार्ययोः** ।५।२।२०। शालाप्रवेशमर्हति–शालीनः अधृष्टः । कूपपतनमर्हति–कौपीनं पापम् । तत्साधनत्वात्तद्वद्गोप्यत्वाद्वा पुरुषलिङ्गमपि, तत्संबन्धात्तदाच्छादनमपि ।

१८२२ । **व्रातेन जीवति** ।५।२।२१। व्रातेन शरीरायासेन जीवति न तु बुद्धिवैभवेन स व्रातीनः ।

१८२३ । **साप्तपदीनं सख्यम्** ।५।२।२२। सप्तभिः पदैरवाप्यते साप्तपदीनम् ।

१८२४ । **हैयङ्गवीनं संज्ञायाम्** ।५।२।२३। ह्योगोदोहस्य हियङ्गुरादेशो विकारार्थे खञ् च निपात्यते । दुह्यत इति दोहः क्षीरम्, ह्योगोदोहस्य विकारो हैयङ्गवीनं नवनीतम् ।

१८२५ । **तस्य पाकमूले पील्वादिकर्णादिभ्यः**

**यन्तमिति** । गोशब्दो लक्षणया गोः प्रतिदाने वर्तते इति भावः ॥—**आगवीन इति** । 'आङ्मर्यादाभिविध्योः' इत्यव्ययीभावे 'गोस्त्रियोः–' इति ह्रस्वे कृते खप्रत्ययः, 'ओर्गुणः–' ॥ १८१६ **अनुग्वलं**—। ख इत्यनुवर्तते । अनुगुशब्दात् 'अलंगामी' इत्यस्मिन्नर्थे खः स्यात् ॥—**गोः पश्चादिति** ।—पश्चादर्थेऽव्ययीभावः ॥—**पर्याप्तमिति**—क्रियाविशेषणम् । **अत्र हरदत्तः**—अनुगित्यस्य क्रियाविशेषणत्वाद् द्वितीयान्तादिह प्रत्ययः । न चालंगामीत्यस्य 'सुप्यजातौ–' इति णिनिप्रत्ययान्ततया कृद्योगलक्षणा षष्ठी स्यादिति वाच्यम् । क्रियाविशेषणात्तदप्रवृत्तेः शोभनं पाचक इत्यादौ तथा दर्शनादित्याह ॥ **अत्र केचित्**—धातूपात्तव्यापारजन्यफलाश्रयत्वं यत्र तन्मुख्यं कर्म, यत्र तु व्यापारजन्यत्वमात्रं तदौपचारिकम् । ततश्च तण्डुलानां पाचक इत्यत्र मुख्ये कर्मणि कृद्योगलक्षणा षष्ठी भवति । मृदु पाचकः शोभनं पाचक इत्यत्र तु सा न भवति, फलव्यापारयोः क्रियाकर्मव्यवहारे सत्यपि फलस्यौपचारिककर्मत्वात्, तद्विशेषणत्वाच्च मृद्वादेः–इति तस्याशय इत्याहुः ॥ **अन्ये तु**—एवं तर्हि तुल्यन्यायेन क्रियाविशेषणात् द्वितीयाया अप्रवृत्तिः स्यात् । तस्मात् 'तदर्हम्' इति निर्देशादनित्या कृद्योगषष्ठीति क्रियाविशेषणात्सा न स्वीक्रियत इति हरदत्ताशयः कथंचिद्वर्णनीय इत्याहुः ॥ **वस्तुतस्तु** पश्चादर्थेऽव्ययीभावोऽयमिति निर्विवादम् । पश्चादिति चास्त्यर्थे निपातितम् । तच्च यद्यपि विभक्तित्रये साधारणम्, तथापीह योग्यताबलात्सप्तम्यर्थवृत्तिः । अतस्तस्य कर्मत्वायोगात्प्रथमान्तादेव प्रत्यय इति वक्तुमुचितम्, कृद्योगलक्षणषष्ठीशङ्काऽप्यत एव नेति बोध्यम् ॥ १८१८ **अभ्यमित्रात्**—। अभ्यमित्रशब्दो 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः । क्रियाविशेषणत्वाद्द्वितीया समर्थविभक्तिः ॥ १८१९ **गोष्ठात्खञ्**—। गावस्तिष्ठन्ति यस्मिन्निति गोष्ठः । 'घञर्थे कविधानम्' इत्यधिकरणे कः । 'अम्बाम्बगोभूमि–' इति षत्वम् । पूर्वं भूतो भूतपूर्वः, 'सुप्सुपा' इति समासः ॥ १८२० **अश्वस्य**—। कर्तरि षष्ठी, इयं निर्देशादेव समर्थविभक्तिः ॥—**एकाहगम इति** । 'कर्तृकरणे कृता' इति समासः ॥ नन्विह 'ग्रहवृदृनिश्चिगमश्च' इत्यपं बाधित्वा 'परिमाणाख्यायां सर्वेभ्यः' इति घञ् प्राप्नोति, अस्ति चात्र परिमाणाख्या, 'एकाहेन गम्यत' इति परिच्छेदावगमात् । **अत्राहुः**—अस्मादेव निपातनादप् द्रष्टव्य इति ॥ १८२१ **शालीनकौपीने**—। इमौ खप्रत्ययान्तत्वेन निपात्येते । रूढिशब्दावेतौ कथंचिद्व्युत्पाद्याविति नात्रावयवार्थेऽभिनिवेशः कार्यः ॥—**शालाप्रवेशमिति** । अप्रागल्भ्यादन्यत्र गन्तुमशक्तः शालामेव प्रवेष्टुमर्हतीत्यर्थः ॥—**कूपपतनमिति** । यदकार्यं तत्प्रच्छादनीयत्वात्कूपावतरणमर्हतीत्यर्थः ॥—**तदाच्छादनमिति** । वासःखण्ड इत्यर्थः ॥ **अन्ये त्वाहुः**—अकार्यशब्दे यः करोतिः स क्रियासामान्यवचनः, तेन लज्जाहेतुत्वेन अद्रष्टव्यत्वात्पुरुषलिङ्गं कौपीनम् । अस्पृश्यत्वात्तदाच्छादनमिति ॥ १८२२ **शरीरायासेनेति** । भारवहनादिनेत्यर्थः । यद्यपि व्रातशब्दो लोके संघातवचनः, तथाप्यत्रत्यभाष्यादिग्रन्थपर्यालोचनया अयमेवार्थ इहोचित इति भावः ॥ १८२३ **साप्तपदीनम्**—। योग्यतया समर्थविभक्तिस्तृतीयेति दर्शयति—**सप्तभिः पदैरिति** । पदमिह संभाषणं पादविक्षेपो वा । तद्धितार्थे द्विगुः । अवाप्यत इत्यर्थे खञ् ॥ १८२४ **हैयंगवीनम्**—॥—**ह्योगोदोहस्येति** । गोर्दोहो गोदोहः, षष्ठीसमासः । तेन सह ह्यस्शब्दस्य 'सुप्सुपा' इति समासः । ततो विकारे अनुदात्तलक्षणस्याञोऽपवादः खञ् । अत्र ह्यस्शब्देन कालप्रत्यासत्तिर्विवक्षिता ॥—**नवनीतमिति** । यद्यपि वृत्तौ घृतमित्युक्तं, तथैव चामरेणापि—'तत्तु हैयंगवीनं यत् ह्योगोदोहोद्भवं घृतम्' इत्युक्तम्, तथापि घृतशब्देन नवनीतमेव विवक्षितमिति हरदत्तग्रन्थानुरोधेनेदमुक्तम् ॥ १८२५ **तस्य पाक**—। पाकः

१ **गोष्ठादिति**—अत्र केचित् "यद्यपि 'भूतपूर्वे चरट्', 'षष्ठ्या रूप्य च' इत्येते अत्रैव पठित्वा, 'गोष्ठात्खञ्' इत्येव सूत्रयितुं युक्तम्, तथापि तयोरन्यत्र पाठसामर्थ्येन विशेषविहितेनापि खञा चरटो बाधा नेति ज्ञाप्यते" इत्याहुः । तद्भाष्ये न दृष्टम् ।

कुणब्जाहचौ ।५।२।२४। पीलूनां पाकः पीलुकुणः । कर्णस्य मूलं कर्णजाहम् ।

१८२६ । **पक्षात्तिः** ।५।२।२५। मूलग्रहणमात्रमनुवर्तते । पक्षस्य मूलं पक्षतिः ।

१८२७ । **तेन वित्तश्चुञ्चुप्चणपौ** ।५।२।२६। यकारः प्रत्यययोरादौ लुप्तनिर्दिष्टः, तेन चस्य नेत्संज्ञा । विद्यया वित्तो विद्याचुञ्चुः । विद्याचणः ।

१८२८ । **विनञ्भ्यां नानाञौ न सह** ।५।२।२७। असहार्थे पृथग्भावे वर्तमानाभ्यां स्वार्थे प्रत्ययौ । विना । नाना ।

१८२९ । **वेः शालच्छङ्कटचौ** ।५।२।२८। क्रियाविशिष्टसाधनवाचकात्स्वार्थे । विस्तृतम् । विशालम् । विशङ्कटम् ।

१८३० । **संप्रोदश्च कटच्** ।५।२।२९। सङ्कटम् । प्रकटम् । उत्कटम् । चात् विकटम् । ॐ **अलाबूतिलोमाभङ्गाभ्यो रजस्युपसंख्यानम्** । अलाबूनां रजः-अलाबूकटम् । तिलकटम् । ॐ **गोष्ठजादयः स्थानादिषु पशुनामभ्यः** । गवां स्थानं गोगोष्ठम् । ॐ **संघाते कटच्** । अवीनां सङ्घातोऽविकटः । ॐ **विस्तारे पटच्** । अविपटः । ॐ **द्वित्वे गोयुगच्** । द्वावुष्ट्रौ उष्ट्रगोयुगम् । ॐ **षट्त्वे षड्गवच्** । अश्वषड्गवम् । ॐ **स्नेहे तैलच्** । तिलतैलम् । सर्षपतैलम् । ॐ **भवने क्षेत्रे शाकटशाकिनौ** । इक्षुशाकटम् । इक्षुशाकिनम् ।

१८३१ । **अवात्कुटारच्च** ।५।२।३०। चात्कटच् । अवाचीनः-अवकुटारः, अवकटः ।

१८३२ । **नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः** ।५।२।३१। अवादित्येव । नतं नमनम्, नासिकाया नतं अवटीटम् । अवनाटम् । अवभ्रटम् । तद्योगान्नासिका अवटीटा । पुरुषोऽप्यवटीटः ।

१८३३ । **नेर्बिडज्बिरीसचौ** ।५।२।३२। निबिडम् । निबिरीसम् ।

१८३४ । **इनच्पिटच्चिकचि च** ।५।२।३३। नेरित्येव । नासिकाया नतेऽभिधेये इनच्पिटचौ प्रत्ययौ

परिणामः । मूलमुपक्रमः । 'तस्येदम्' इत्यणादिषु प्राप्तेष्वयमारम्भः । जाहचो जकारस्य प्रयोजनाभावान्नेत्वम् । पीलु, कर्कन्धु, शमी, करीर, कुवल, बदर, अश्वत्थ, खदिर, पील्वादिः ॥ कर्ण, अक्षि, नख, मुख, केश, पाद, गुल्फ, भ्रू, शृङ्ग, दन्त, ओष्ठ, पृष्ठ, कर्णादिः ॥ १८२६ **मूलग्रहणमात्रमिति** । एकदेशे स्वरितत्वप्रतिज्ञानादिति भावः ॥—**पक्षतिरिति**—प्रतिपत्, पक्षिणां पक्षमूलं च ॥ १८२७ **तेन वित्तः**—। वित्तः प्रतीतः । 'वित्तो भोगप्रत्यययोः' इति निपातनात् 'रदाभ्यां निष्ठातो नः' इति नत्वं न ॥—**लुप्तनिर्दिष्ट इति** । 'चुटूषाः प्रत्ययस्य' इति वक्तव्ये पृथग्योगकरणात् 'चुटू' इत्येतदनित्यमिति समाधानान्तरमप्याहुः ॥ १८२८ **नानाञाविति** । नाञो ञकारो वृद्ध्यर्थः स्वरार्थश्च ॥ 'न सह' इति प्रकृतिविशेषणं, न प्रत्ययार्थ इत्याशयेनाह—**असहार्थ इत्यादि** । यदि प्रत्ययार्थः स्यात्ततो 'द्वौ प्रतिषेधौ प्रकृतमर्थं गमयतः' इति सहार्थो गम्येत 'न न सह-अपि तु सहैव' इति । तस्मात्प्रकृतिविशेषणम् । एतच्च व्याख्यानाल्लभ्यते ॥ यद्येवं सहेत्येव प्रत्ययार्थोऽस्तु, विनञोः प्रतिषेधार्थत्वादिष्टसिद्धेः । 'विगार्दभरथकः' इत्यादौ विशब्दस्यापि प्रतिषेधवृत्तिर्दृष्टैवेति । सत्यम् । क्रियावाचिनो विशब्दात्सहार्थे प्रत्ययो विज्ञायेत-विगतेन सह विकृतेन सहेति । तस्माद्यथोक्तमेव न्याय्यम् । एतच्च हरदत्तग्रन्थे स्पष्टम् ॥ १८२९ **स्वार्थ इति** । विनिर्दिष्टार्थत्वादिति भावः ॥ १८३० **संप्रोदश्च**—। क्रियाविशिष्टसाधनवाचकात्स्वार्थे प्रत्ययः । संकटं संहतम्, संबाध इत्यर्थः । प्रकटं प्रज्ञातम्, प्रकाशत इत्यर्थः । उत्कटं उद्भूतं, विकटं विकृतं, रूढिशब्दाश्चैते कथंचिद्व्युत्पाद्यन्ते ॥—**अलाबूतिलेत्यादि** । एभ्यः पञ्चभ्यो रजस्यभिधेये कटच् प्रत्ययो भवति । रजसो विकारत्वाद्विकारे प्रत्ययानामपवादोऽयम् ॥—**अलाबूकटमिति** । 'ओरञ्' 'मयड्वैतयोः-' इति मयड्वेह प्राप्तः ॥—**तिलकटमिति** । 'असंज्ञायां तिलयवाभ्यां' इति मयट् प्राप्तः ॥ उमाशब्दाद् घृतादित्वादन्तोदात्तात् 'अनुदात्तादेश्च-' इत्यञ्, 'उमोर्णयोर्वा' इति वुञ्च प्राप्तः ॥ भङ्गाशब्दात् 'तृणधान्यानां च द्व्यषाम्' इत्याद्युदात्तत्वादण्मयड्वा प्राप्त इत्येवं यथासंभवं प्रत्ययप्राप्तिरूह्या ॥ **हरदत्तस्तु**—तिलशब्दस्य घृतादित्वादन्तोदात्तत्वमङ्गीकृत्य, ततः 'अनुदात्तादेश्च' इत्यञ् 'असंज्ञायां तिलयवाभ्याम्' इति मयड्वा प्राप्त इत्याह । तत्र तिलशब्दस्य घृतादित्वकल्पने बीजं चिन्त्यम् । 'तृणधान्यानां च द्व्यषाम्' इति फिट्सूत्रेणाद्युदात्तस्यैव न्याय्यत्वात् । 'तिलाश्च मे' इत्यत्र तथैव वेदे पाठाच्च ॥—**गोष्ठजादय इति** । 'संघाते कटच्' इत्यादीन्यस्यैव प्रपञ्चः । इहोभयत्रादिशब्दः प्रकारे ॥—**पशुनामभ्य इति** । 'पशुनामादिभ्यः' इति भाष्ये प्रचुरः पाठः ॥—**गवां स्थानमिति** । 'तस्येदम्' इत्यत्रार्थे 'सर्वत्र गोरजादिप्रसङ्गे' इति यति प्राप्ते गोष्ठच् ॥—**संघात इति** । अप्रस्तुतावयवः समूहः-संघातः । प्रस्तुतावयवस्तु विस्तारः- । कटच्पटचौ द्वावपि सामूहिकानामपवादौ ॥—**द्वित्वे इति** । प्रकृत्यर्थस्य द्वित्वे द्योत्य इत्यर्थः ॥—**उष्ट्रगोयुगमिति** । द्वयं युगमित्यादिवद् व्यवयवसंघातप्राधान्यादेकवचनम् । एवमग्रेऽपि ॥ १८३२ **नतमिति** । नपुंसके भावे क्तः ॥—**नमनमिति** । नीचैस्त्वमित्यर्थः ॥—**अवटीटमिति** । नासिकासाधनके नमने वर्तमानादवशब्दात्स्वार्थे प्रत्ययः ॥ कथं तर्हि नासिकायां पुरुषे चावटीटशब्दस्य प्रयोग इत्यत आह—**तद्योगादिति** ॥ १८३३ **नेर्बिडच्**—। 'नते नासिकायाः संज्ञायाम्' इति वर्तते । निशब्दान्नासिकाया नतेऽभिधेये बिडज्बिरीसचौ स्तः ॥—**निबिडमिति** । तद्योगान्निबिडा नासिका, निबिरीसा ॥ कथं तर्हि 'निबिडाः केशाः, निबिडं वस्त्रम्' इति । उपमानाद्भविष्यति । एतच्च काशिकायां स्पष्टम् । केचित्तु उक्तप्रयोगानुरो-

प्रकृतेश्चिक चि इत्यादेशौ च । ॐ कप्रत्ययचिकादेशौ च वक्तव्यौ । चिकिनम्, चिपिटम्, चिक्कम् । ॐ क्लिन्नस्य चिल्पिल् लश्चास्य चक्षुषी । क्लिन्ने चक्षुषी अस्य चिल्लः, पिल्लः । ॐ चुल् च । चुल्लः ।

१८३५ । उपाधिभ्यां त्यकन्नासन्नारूढयोः ।५।२।३४। संज्ञायामित्यनुवर्तते । पर्वतस्यासन्नं स्थलम्—उपत्यका । आरूढं स्थलम्-अधित्यका ।

१८३६ । कर्मणि घटोऽठच् ।५।२।३५। घटत इति घटः । पचाद्यच् । कर्मणि घटते-कर्मठः पुरुषः ।

१८३७ । तदस्य सञ्जातं तारकादिभ्य इतच् ।५।२।३६। तारकाः संजाता अस्य-तारकितं नभः । आकृतिगणोऽयम् ।

१८३८ । प्रमाणे द्वयसज्दघ्नञ्मात्रचः ।५।२।३७। तदस्येत्यनुवर्तते । ऊरू प्रमाणमस्य-ऊरुद्वयसम्, ऊरुदघ्नम्, ऊरुमात्रम् । ॐ प्रमाणे लः । शमः । दिष्टिः । वितस्तिः । ॐ द्विगोर्नित्यम् । द्वौ शमौ प्रमाणमस्य द्विशमम् । ॐ प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रज्वक्तव्यः । शममात्रम् । प्रस्थमात्रम् । पञ्चमात्रम् । ॐ वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलम् । तावदेव-तावद्द्वयसम् । तावन्मात्रम् ।

१८३९ । पुरुषहस्तिभ्यामण् च ।५।२।३८। पुरुषः प्रमाणमस्य पौरुषम्, पुरुषद्वयसम् । हास्तिनम्, हस्तिद्वयसम् ।

१८४० । यत्तदेतेभ्यः परिमाणे वतुप् ।५।२।३९। यत्परिमाणमस्य-यावान् । तावान् । एतावान् ।

येनेह सूत्रे 'नते नासिकायाः-' इति नानुवर्तत इति व्याचक्षते ॥—**प्रकृतेरिति** । निशब्दस्येत्यर्थः ॥—**आदेशौ चेति** । प्रत्ययौ तत्संनियोगेन यथासंख्यमिमावादेशौ च स्त इत्यर्थः ॥—**चिकिनमिति** । इनच्प्रत्ययसंनियोगेन चिकादेशः ॥—**चिपिटमिति** । पिटच्प्रत्ययसंनियोगेन चि इत्यादेशः ॥—**क्लिन्नस्येति** । चिल् पिल् इत्येतावादेशौ भवतो लश्च प्रत्ययः, 'अस्य चक्षुषी' इत्येतस्मिन्नर्थे ॥—**चुल् चेति** । चात् लप्रत्ययः ॥—**चुल्ल इति** । क्लिन्ने अस्य चक्षुषी इति पूर्वोक्त एव विग्रहः ॥ कथं तर्हि 'स्युः क्लिन्नाक्षे चुल्लचिल्लपिल्लाः क्लिन्नेऽक्षि चाप्यमी' इत्यमर इति चेत्, **अत्राहुः**—पुरुषे व्युत्पादितानां तदवयवे लक्षणा बोध्या-इति ॥ **अन्ये त्वाहुः**—'अस्य चक्षुषी' इत्यत्र 'अस्य' इति न वक्तव्यम् । क्लिन्ने चक्षुषी-चिल्ले पिल्ले । पुरुषे तु मत्वर्थेऽच् । अर्शआदिषु 'स्वाङ्गाद्धीनात्' इति सूत्रितत्वादिति ॥ **१८३५ उपाधिभ्याम्—**। संज्ञाधिकारादिह नियतविषयमासन्नारूढं गृह्यत इत्याशयेनाह—**पर्वतस्येति** । आसन्नं-समीपम् । आरूढम्-उच्चस्थानम् ॥—**उपत्यकेति** । 'प्रत्ययस्थात्–' इतीत्वं तु न भवति, 'त्यकनश्च निषेधः' इत्युक्तत्वात् ॥ **१८३६ कर्मणि घटो—**। सप्तम्यन्तात्कर्मन्शब्दाद् 'घटते' इत्यर्थेऽठच् स्यात् ॥—**कर्मठ इति** । 'ठस्येकः' इतीह न भवति, अठचि ठस्याप्रत्ययत्वेनाङ्गसंज्ञानिमित्तत्वाभावात् ॥ **१८३७ तारकितमिति** । एवं पुष्पितं फलितं पुलकितं रोमाञ्चितमित्याद्युदाहार्यम् ॥ **१८३८ प्रमाणे द्वयसज्—**। प्रमाणे विद्यमानात्प्रथमान्तात् 'अस्य' इति निर्दिष्टे प्रमेयेऽर्थे त्रयः प्रत्ययाः स्युः । प्रमाणमिह परिच्छेदकमात्रम्, तत्र मात्रच् । द्वयसज्दघ्नञौ तूर्ध्वमान एव भवतः । 'प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम' इति भाष्यात् । ऊर्ध्वावस्थितेन येन मीयते तदूर्ध्वमानम्-ऊर्वादि । तेन तिर्यङ्मानादौ 'दण्डद्वयसं क्षेत्रम्' इत्यादि न प्रयुज्यते, यथोत्तरं मुनीनां प्रामाण्यात् ॥ अत एव 'द्विकाण्डा क्षेत्रभक्तिः' इत्यत्र 'द्वयसचो लुक्' इति प्राचोक्तं नादर्तव्यमित्यवोचाम ॥ ॐ **प्रमाणे ल इति** । लुक एषा पूर्वाचार्यसंज्ञा । प्रमाणत्वेन ये प्रसिद्धास्ततः परस्यैवायं लुगित्युदाहरति—**शमः । दिष्टिः । वितस्तिरिति** । शमः प्रमाणमस्येत्यादिविग्रहः । एषु मात्रचो लुक्, इतरयोरसंभवात्, शमादीनामनूर्ध्वमानत्वात् ॥—**द्विगोर्नित्यमिति** । द्विगोरप्रमाणत्वात्तदन्तविध्यभावाच्च पूर्वेणाप्राप्तो लुग्विधीयते ॥ ननु विकल्पस्याप्रकृतत्वान्नित्यग्रहणमिह निरर्थकमिति चेत्, **अत्राहुः**—अनुपदं संशये वक्ष्यमाणो मात्रच् शममात्रमित्यादौ यथा न लुप्यते, 'प्रमाणे लः' इत्यस्य 'प्रमाणे द्वयसच्' इति यः पूर्वविधिस्तद्विषयत्वात्, एवं द्विगोरपि न लुप्येत । इष्यते च लुक् । द्वौ शमौ स्यातां न वा-द्विशम इति । तथा चाधिकसंग्रहार्थं नित्यग्रहणमिति ॥ **अत्र केचित्**—'द्विगोर्लः' इत्युक्तेऽपि पुनर्लग्रहणं नित्यार्थमधिकसंग्रहार्थमिति व्याख्यातुं शक्यत इति वैचित्र्यार्थं नित्यग्रहणमाहुः ॥—**शममात्रमित्यादि** । शमः स्यान्न वेत्यादिविग्रहः ॥ **१८३९ पुरुषहस्तिभ्यामण्च** । 'इनण्यनपत्ये' इति प्रकृतिभावः । हस्ती प्रमाणमस्य हास्तिनम् ॥ अत्र काशिकायामुक्तं 'द्विगोर्नित्यं लुक्, द्विपुरुषमुदकम्' इत्यादि ॥ व्याख्यातं च हरदत्तेन—यद्यपि 'प्रमाणे लो द्विगोर्नित्यम्' इत्यस्य नायमनुवादः, पुरुषहस्तिनोः शमादिवत्प्रमाणत्वेनाप्रसिद्धत्वात् । अत एव हि पुरुषद्वयसमित्यादौ 'प्रमाणे लः' इति लुक् न भवति । तथाप्यपूर्वोऽत्र लुग्विधीयते इति ॥ एतच्चासंगतम् । 'द्विगोर्नित्यं लुक्' इत्यपूर्ववचनस्य मुनित्रयानुक्तत्वात् ॥ वस्तुतस्तु विधीयत इत्यस्यानुमीयत इत्यर्थः । **अयं भावः**—'द्विगोः' 'तद्धितलुकि' इत्यनुवर्तमाने 'पुरुषात्प्रमाणेऽन्यतरस्याम्' इति ङीब्विकल्प्यते तदेव लुकमनुमापयतीति ॥ **१८४० यत्तदेतेभ्यः—**॥—**यावानित्यादि** । 'आ सर्वनाम्नः' इत्यात्वे 'उगिदचाम्–'

१ संज्ञाधिकारलभ्यमाह—**पर्वतस्येति**—'समुद्रोपत्यका हैमी पर्वताधित्यका पुरी' इत्यादौ तु लाक्षणिकः प्रयोगो बोध्यः ।
२ **प्रमाणे द्वयसजिति**—प्रमाणशब्देनायामपरिच्छेदकस्यैव ग्रहणमिति मते तु प्रस्थमात्रमित्याद्यसाध्वेवेति बोध्यम् ।

१९५२ । **सर्वस्य सोऽन्यतरस्यां दि** ।५।३।६। प्राग्दिशीये दकारादौ प्रत्यये परे सर्वस्य सो वा स्यात् ।

१९५३ । **पञ्चम्यास्तसिल्** ।५।३।७। पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल् स्याद्वा ।

१९५४ । **कु तिहोः** ।७।२।१०४। किमः कुः स्यात्तादौ हादौ च विभक्तौ परतः । कुतः, कस्मात् । यतः । ततः । अतः । इतः । अमुतः । बहुतः । द्व्यादेस्तु—द्वाभ्याम् ।

१९५५ । **तसेश्च** ।५।३।८। किंसर्वनामबहुभ्यः परस्य तसेस्तसिलादेशः स्यात् । स्वरार्थं विभक्त्यर्थं च वचनम् ।

१९५६ । **पर्यभिभ्यां च** ।५।३।९। आभ्यां तसिल् स्यात् । ॐ **सर्वोभयार्थाभ्यामेव** । परितः, सर्वत इत्यर्थः । अभितः, उभयत इत्यर्थः ।

१९५७ । **सप्तम्यास्त्रल्** ।५।३।१०। कुत्र । यत्र । तत्र । बहुत्र ।

१९५८ । **इदमो हः** ।५।३।११। त्रलोऽपवादः । इशादेशः, इह ।

१९५९ । **किमोऽत्** ।५।३।१२। वाग्रहणमपकृष्यते । सप्तम्यन्तात्किमोऽद्वा स्यात्, पक्षे त्रल् ।

१९६० । **क्काति** ।७।२।१०५। किमः क्कादेशः स्यादति । क्क, कुत्र ।

१९६१ । **वा ह च छन्दसि** ।५।३।१३। कुह स्थः, कुह जग्मथुः ।

१९६२ । **एतदस्त्रतसोस्त्रतसौ चानुदात्तौ** ।२।४।३३। अन्वादेशविषये एतदोऽश् स्यात्स चानुदात्तस्त्रतसोः परतः, तौ चानुदात्तौ स्तः । एतस्मिन् ग्रामे सुखं वसामः । अथोऽत्राधीमहे । अतो न गन्तास्मः ।

१९६३ । **इतराभ्योऽपि दृश्यन्ते** ।५।३।१४। पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते । ॐ **दृशिग्रहणाद्भवदादियोग एव** । स भवान् । ततो भवान् । तत्र भवान् । तं भवन्तम् । ततो भवन्तम् । तत्र भवन्तम् । एवं दीर्घायुः, देवानांप्रियः, आयुष्मान् ।

१९६४ । **सर्वैकान्यकिंयत्तदः काले दा** ।५।३।१५। सप्तम्यन्तेभ्यः कालार्थेभ्यः स्वार्थे दा स्यात् । सर्वस्मिन्काले—सदा, सर्वदा । एकदा । अन्यदा । कदा । यदा । तदा । काले किम् । सर्वत्र देशे ।

१९६५ । **इदमो र्हिल्** ।५।३।१६। सप्तम्यन्तात्काले इत्येव । हस्यापवादः । अस्मिन्काले—एतर्हि । काले किम् । इह देशे ।

१९६६ । **अधुना** ।५।३।१७। इदमः सप्तम्यन्तात्कालवाचिनः स्वार्थे अधुनाप्रत्ययः स्यात् । इश् । 'यस्य—' ३११ इति लोपः । अधुना ।

१९६७ । **दानीं च** ।५।३।१८। इदानीम् ।

१९६८ **तदो दा च** ।५।३।१९। तदा, तदानीम् । ॐ **तदो दावचनमनर्थकं विहितत्वात्** ।

---

१९५४ **कु तिहोः** । तकारादिकार उच्चारणार्थः । वेत्यनुवृत्तेः फलं दर्शयति—**कस्मादिति** ॥—**यतस्तत इति** । 'कृत्तद्धित—' इति प्रातिपदिकत्वात्सुपो लुकि त्यदाद्यत्वम् । पक्षे—यस्मात्, तस्मात् ॥—**इत इति** । 'इदम इश्', पक्षे अस्मात् ॥ **अत इति** । एतदोऽनादेशः । पक्षे—एतस्मात् ॥—**अमुत इति** । 'अदसोसेः—' इति मुत्वम् । पक्षे—अमुष्मात् ॥—**बहुत इति** । पक्षे—बहुभ्यः ॥—**द्वाभ्यामिति** । सर्वनामत्वात्प्राप्तोऽपि तसिल् 'अद्व्यादिभ्यः' इति पर्युदासान्न ॥ १९५५ **तसेरिति** । 'प्रतियोगे पञ्चम्यास्तसिः' 'अपादाने चाहीयरुहोः' इति विहितस्य तसेस्तसिलादेश इत्यर्थः ॥—**विभक्त्यर्थं चेति** । अन्यथा परत्वात्तसौ कृते तस्याप्राग्दिशीयत्वाद्विभक्तिसंज्ञाया अभावात्त्यदाद्यत्वाभावे 'यतोऽवगच्छति' इत्यादि न सिध्येदिति भावः ॥ ननु तसेर्ग्रामत इत्यादौ चरितार्थत्वात्किमादिभ्यस्तसिलो बाध्यत्वेन तसिर्न भवेत्, तस्य निरवकाशत्वात् । तथा च 'तसेश्च' इति विधानं व्यर्थमिति वाच्यम् । कुतोऽवहीयते कुतोऽवरोहतीत्यादौ तसिलः सावकाशत्वात् ॥ १९५६ **सर्वोभयार्थाभ्यामेवेति** । अत्र चाभिधानस्वाभाव्यमेव हेतुः । तेनेह न भवति—परिषिञ्चति, अभिषिञ्चति । उपर्यर्थे परिः । अभिस्त्वाभिमुख्ये ॥ नन्वोदनं परिषिञ्चतीत्यत्र सर्वतोभावे परिरिति तसिलभावः कथमिति चेत् । मैवम् । वावचनानुवृत्त्या तु तत्सिद्धेः ॥ १९५७ **सप्तम्यास्त्रल्** । इह त्रल्तसिलौ स्वतन्त्रौ प्रत्ययौ, न तु सप्तमीपञ्चम्योरादेशौ । तेन कुत्र बहुत्र कुतः बहुत इत्यादौ 'अच्च घेः' 'घेर्ङिति' इत्यादिकं नेत्याहुः ॥ १९५९ **किमोऽत्** । 'न विभक्तौ तुस्माः' इति निषेधोऽत्र न प्रवर्तते । थमोरुकारेण मकारपरित्राणार्थेनानित्यताज्ञापनात् ॥—**वाग्रहणमिति** । 'किमोऽद्वा' इति सूत्रं पठित्वा 'ह च छन्दसि' इति सूत्रयितुं युक्तम् ॥ १९६० **कुत्रेति** । यद्यपि भागवृत्तिकारो भाषायां त्रल् नेच्छति, तथापि बहुप्रयोगदर्शनादिह स्वीकृतम् ॥ तथा च **श्रीहर्षः**—'नान्यत्र कुत्रापि च साभिलाषम्' । **अमरश्चाह**—'साहचर्याच्च कुत्रचित्' इति ॥ १९६१ **वा ह च छन्दसि** । पूर्वोक्तस्य वाग्रहणापकर्षणस्य स्फुटीकरणार्थमिदमुपन्यस्तम् ॥ १९६२ **अत इति** । एतस्मात् ग्रामादित्यर्थः ॥ १९६३ **तत्रभवन्तमिति** । ततो भवता तत्र भवता । ततो भवते तत्र भवते इत्यादि ॥—**एवमिति** । ततो दीर्घायुस्तत्र दीर्घायुरित्याद्यपीत्यर्थः ॥ १९६४ **सदेति** । 'सर्वस्य सोऽन्यतरस्यां दि' इति सभावः ॥—**कदेति** । किमः कः ॥ १९६५ **एतर्हीति** । 'एतेतौ रथोः' इत्येतादेशः ॥ १९६६ **अधुनाप्रत्यय इति** । निपातनान्मध्योदात्तोऽयम् । भाष्यमतं चेदम् ॥ वृत्तिकारस्त्वाह—इदमो अश्भावः, धुना च प्रत्यय इति ॥ तत्र 'ऊडिदम्—' इत्यादिना विभक्तिस्वरः, स च 'आदेः परस्य' इत्यादेर्भवतीति हरदत्तः ॥ १९६८ **दावचनमिति** । 'तदश्च' इत्येव सूत्रं

१९६९ । अनद्यतने र्हिलन्यतरस्याम् ।५।३।२१। कर्हि, कदा । यर्हि, यदा । तर्हि, तदा । एतस्मिन्काले एतर्हि ।

१९७० । सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ।५।३।२२। एते निपात्यन्ते । ॐ समानस्य सभावो द्यस् चाहनि । समानेऽहनि सद्यः । ॐ पूर्वपूर्वतरयोः पर उदारी च संवत्सरे । पूर्वस्मिन्वत्सरे परुत् । पूर्वतरे वत्सरे परारि । ॐ इदम इश् समसण् प्रत्ययश्च संवत्सरे । अस्मिन्संवत्सरे,–ऐषमः । ॐ परस्मादेद्यव्यहनि । परस्मिन्नहनि परेद्यवि । ॐ इदमोऽश् द्यश्च । अस्मिन्नहनि,–अद्य । ॐ पूर्वादिभ्योऽष्टभ्योऽहन्येद्युस् । पूर्वस्मिन्नहनि, पूर्वेद्युः । अन्यस्मिन्नहनि–अन्येद्युः । उभयोरह्नोः–उभयेद्युः । ॐ द्युश्चोभयाद्वक्तव्यः । उभयद्युः ।

१९७१ । प्रकारवचने थाल् ।५।३।२३। प्रकारवृत्तिभ्यः किमादिभ्यस्थाल् स्यात्स्वार्थे । तेन प्रकारेण तथा । यथा ।

१९७२ । इदमस्थमुः ।५।३।२४। थालोऽपवादः । ॐ एतदोऽपि वाच्यः । अनेन एतेन वा प्रकारेण इत्थम् ।

१९७३ । किमश्च ।५।३।२५। केन प्रकारेण कथम् ।

॥ प्राग्दिशीयानां विभक्तिसंज्ञानां पूर्णोऽवधिः ॥

## तद्धितेषु प्रागिवीयाः ।

१९७४ । दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ।५।३।२७। सप्तम्याद्यन्तेभ्यो दिशि रूढेभ्यो दिग्देशकालवृत्तिभ्यः स्वार्थेऽस्तातिः प्रत्ययः स्यात् ।

१९७५ । पूर्वाधरावराणामसि पुरधवश्चैषाम् । ।५।३।३९। एभ्योऽस्तात्यर्थेऽसिप्रत्ययः स्यात्, तद्योगे चैषां क्रमात् पुर्, अध्, अव्, इत्यादेशाः स्युः ।

१९७६ । अस्ताति च ।५।३।४०। अस्तातौ परे पूर्वादीनां पुरादयः स्युः । पूर्वस्यां पूर्वस्याः पूर्वा वा दिक्–पुरः, पुरस्तात् । अधः, अधस्तात् । अवः, अवस्तात् ।

१९७७ । विभाषाऽवरस्य ।५।३।४१। अवरस्यास्तातौ परेऽव् स्याद्वा । अवस्तात्, अवरस्तात् । एवं देशे काले च । दिशिरूढेभ्यः किम् । ऐन्द्र्यां वसति । सप्तम्याद्यन्तेभ्यः किम् । पूर्वं ग्रामं गतः । दिगादिवृत्तिभ्यः किम् । पूर्वस्मिन् गुरौ वसति । 'अस्ताति च' १९७५ इति ज्ञापकादसिरस्तातिं न बाधते ।

१९७८ । दक्षिणोत्तराभ्यामतसुच् ।५।३।२८। अस्तातेरपवादः । दक्षिणतः । उत्तरतः ।

१९७९ । विभाषा परावराभ्याम् ।५।३।२९। परतः । अवरतः । परस्तात् । अवरस्तात् ।

१९८० । अञ्चेर्लुक् ।५।३।३०। अञ्चत्यन्तादिक्शब्दादस्तातेर्लुक् स्यात् । 'लुक्तद्धितलुकि' १४१० । प्राच्यां प्राच्याः प्राची वा दिक् प्राक् । उदक् । एवं देशे काले च ।

---

पठनीयमिति भावः ॥ १९६९ एतस्मिन्काले एतर्हीति । 'एतदः' इति योगविभागादेकादावेतादेशः ॥ १९७० सद्यः परुत् —। निपातनाद्विषयविशेषो लभ्यत इत्याह—अहनीति । सप्तम्यन्तस्याहन्शब्दस्यार्थे इत्यर्थः ॥ तद्दर्शयति—समानेऽहनीति ॥—पर उदारी चेति । पर इत्यादेशः, उत् आरी प्रत्ययौ ॥ १९७१ प्रकारवचने थाल् । सामान्यस्य भेदको विशेषः प्रकारः । यथा ब्राह्मणसामान्यस्य माठरकाठकादय इति हरदत्तः ॥ यद्यपि 'प्रकारे गुणवचनस्य' इत्यत्र सादृश्यं प्रकारस्तथापि नेह सादृश्यं गृह्यते, अनभिधानात् । 'अव्ययं विभक्ति–' इति सूत्रे सादृश्यमपि यथाशब्दार्थ इत्युक्तम्, इह तु केवलस्य थाल्प्रत्ययस्य सादृश्यं नार्थः किं तु प्रकार एवेत्युक्तमिति नास्ति पूर्वापरविरोध इति बोध्यम् ॥—तेन प्रकारेण तथेति । प्रथमान्तात्तु न भवति स प्रकारस्तथेति, अनभिधानादेवेति भावः । किं सर्वनामबहुभ्यो विशेषविहितेनापि थाला जातीयर् न बाध्यते, अर्थभेदात् ।· प्रकारे हि थाल् । जातीयर् तु तद्वति स्वभावात् । एवं च कृत्वा प्रकारमात्रे थालं विधाय तदन्तात्प्रकारवति जातीयरं प्रयुञ्जते । तथाजातीयो यथाजातीयोऽन्यथाजातीय इति ॥ १९७२ अनेन एतेन वेति । द्वितीयान्तादपि थमुर्भवत्येव । इममेतं वा प्रकारमापन्न इत्थंभूतः । अत्र च 'लक्षणेत्थंभूताख्यान–' इत्यादिसौत्रप्रयोगो लिङ्गम् ॥ एतेन कथंभूतो व्याख्यातः ॥—इत्थमिति । 'एतेतौ रथोः' इति इदम इतादेशः । 'एतदः' इति योगविभागादेतदोऽपि इतादेश इति भावः ॥ १९७३ किमश्च । योगविभागः 'था हेतौ च छन्दसि–' इत्युत्तरसूत्रे किम एवानुवृत्तिर्यथा स्यादिदमो मा भूदिति ॥ इति प्राग्दिशीयानांपूर्णोऽवधिः ॥

१९७४ दिग्देशकालेष्विति । यथासंख्यमत्र नेष्यते, अस्वरितत्वात् ॥ १९७६ पुरः पुरस्तादिति । कथं तर्हि 'पश्यामि तामित इतः पुरतश्च पश्चात्' इति भवभूतिः, 'स्यात्पुरः पुरतोऽग्रतः' इत्यमरः, 'पुरतः प्रथमे चाग्रे' इति विश्वश्च । समानकालीनं पूर्वकालीनमित्यादिवत्प्रामादिकमेवेति बहवः ॥ केचित्तु दक्षिणोत्तराभ्यां तसुज्विधिनैवेष्टसिद्धौ अतसुच्–इत्यकारोच्चारणमन्यतोऽपि विधानार्थं । तेन पुरत इति सिध्यति । 'पुर अग्रगमने' क्विपि पुर् । 'र्वोः' इति दीर्घस्तु न भवति, भत्वात् । न च अतसुचश्चित्त्वेऽप्यकारोच्चारणं पक्षे आद्युदात्तत्वार्थमिति वाच्यम् । बहूनां प्रयोगानुरोधेनान्यतो विधानार्थमिति कल्पनस्यैव न्याय्यत्वादित्याहुः ॥ यथासंख्यत्वानाश्रयणात् पुरस्ताद्वसति, पुरस्तादागतः, पुरस्ताद्रमणीयम्, अधस्ताद्वसतिः, अधस्तादागतः, इत्यादि सिध्यति ॥ १९८० प्राच्यां प्राच्या इति । प्राच्यां दिशि वसति–प्राग्वसतिः । प्राच्या दिश आगतः प्रागागत

१९८१ । **उपर्युपरिष्टात्** ।५।३।३१। अस्तातेर्विषये ऊर्ध्वशब्दस्यापादेशः स्यात् रिलरिष्टातिलौ च प्रत्ययौ । उपरि–उपरिष्टाद्वा वसति, आगतो, रमणीयं वा ।

१९८२ । **पश्चात्** ।५।३।३२। अपरस्य पश्चभाव आतिश्च प्रत्ययोऽस्तातेर्विषये ।

१९८३ । **उत्तराधरदक्षिणादातिः** ।५।३।३४। उत्तरात् । अधरात् । दक्षिणात् ।

१९८४ । **एनबन्यतरस्यामदूरेऽपञ्चम्याः** ।५।३।३५। उत्तरादिभ्य एनब्वा स्यादवध्यवधिमतोः सामीप्ये पञ्चम्यन्तं विना । उत्तरेण । अधरेण । दक्षिणेन । पक्षे यथास्वं प्रत्ययाः । इह केचिदुत्तरादीननुवर्त्य दिक्शब्दमात्रादेनपमाहुः । पूर्वेण ग्रामम् । अपरेण ग्रामम् ।

१९८५ । **दक्षिणादाच्**[1] ।५।३।३६। अस्तातेर्विषये । दक्षिणा वसति । 'अपञ्चम्याः' इत्येव । दक्षिणादागतः ।

१९८६ । **आहि च दूरे** ।५।३।३७। दक्षिणाद् दूरे आहि स्यात्, चादाच् । दक्षिणाहि, दक्षिणा ।

१९८७ । **उत्तराच्च** ।५।३।३८। उत्तराहि, उत्तरा ।

१९८८ । **संख्याया विधार्थे धा** ।५।३।४२। क्रियाप्रकारार्थे वर्तमानात्संख्याशब्दात्स्वार्थे धा स्यात् । चतुर्धा । पञ्चधा ।

१९८९ । **अधिकरणविचाले च** ।५।३।४३। द्रव्यस्य संख्यान्तरापादने संख्याया धा स्यात् । एकं राशिं पञ्चधा कुरु ।

१९९० । **एकाद्धो ध्यमुञन्यतरस्याम्** ।५।३।४४। ऐकध्यम्, एकधा ।

१९९१ । **द्वित्र्योश्च धमुञ्** ।५।३।४५। आभ्यां धा इत्यस्य धमुञ् स्याद्वा । द्वैधम्, द्विधा । त्रैधम्, त्रिधा । ॐ **धमुञन्तात्स्वार्थे डदर्शनम्** । पथि द्वैधानि तृणानि ।

१९९२ । **एधाच्च** ।५।३।४६। द्वेधा । त्रेधा ।

१९९३ । **याप्ये पाशप्** ।५।३।४७। कुत्सितो भिषक् भिषक्पाशः ।

१९९४ । **पूरणाद्भागे तीयादन्** ।५।३।४८। द्वितीयो भागो द्वितीयः । तृतीयः । स्वरे विशेषः ।
ॐ **तीयादीकक् स्वार्थे वाच्यः** । द्वैतीयीकः, द्वितीयः । तार्तीयीकः, तृतीयः । ॐ **न विद्यायाः** । द्वितीया, तृतीया विद्या इत्येव ।

१९९५ । **प्रागेकादशभ्योऽच्छन्दसि** ।५।३।४९। पूरणप्रत्ययान्ताद्भागेऽन् । चतुर्थः । पञ्चमः ।

१९९६ । **षष्ठाष्टमाभ्यां ञ च** ।५।३।५०। चादन् । षष्ठो भागः–षाष्ठः, षष्ठः । आष्टमः, अष्टमः ।

१९९७ । **मानपश्वङ्गयोः कन्लुकौ च** ।५।३।५१। षष्ठाष्टमशब्दाभ्यां क्रमेण कन्लुकौ स्तः, माने पश्वङ्गे च वाच्ये । षष्ठको भागः मानं चेत् । अष्टमो भागः पश्वङ्गं चेत् । ञस्य अनो वा लुक् । चकाराद्यथाप्राप्तम् । षष्ठः, षाष्ठः । अष्टमः, आष्टमः । महाविभाषया सिद्धे लुग्वचनं 'पूर्वत्र ञानौ नित्यौ' इति ज्ञापयति ।

१९९८ । **एकादाकिनिच्चासहाये** ।५।३।५२। चात्क-

---

इत्यादि योज्यम् ॥ १९८४ **पञ्चम्यन्तं विनेति** । नेह–उत्तरादागतः, अधरादागतः ॥—**उत्तरेणेत्यादि** । वसति रमणीयं वा ॥—**पक्षे यथास्वमिति** । दक्षिणतः । उत्तरतः । अधः । अधस्तात् । उत्तरात् । अधरात् । दक्षिणात् ॥ १९८८ **संख्याया विधार्थे धा** । विधाशब्दस्यार्थो विधार्थः ॥ यद्यप्योदनपिण्डोऽपि विधाशब्देनोच्यते तथापीह न गृह्यते । तेन एकगोविधेत्यादौ न भवति ॥ इह हि 'विधायाम्' इति वक्तव्ये अर्थग्रहणस्य प्रयोजनं विधाशब्दो यत्रार्थे प्रसिद्धतरस्तत्रैव यथा स्यात् । तादृशश्चार्थः प्रकार एव, स च क्रियाविषयक एव गृह्यते, अभिधानस्वभावात् । तदाह—**क्रियाप्रकारे वर्तमानादिति** । कथं तर्हि 'नवधा द्रव्यं, बहुधा गुणः' इत्यादि ॥ अत्रापि ह्यश्रुता क्रिया प्रतीयते 'उपदिश्यते इति वा, भवति इति वा' इति हरदत्तः ॥ १९८९ **अधिकरणविचाले च** । अधिकरणं=द्रव्यं, विचलनं=विचालोऽन्यथाकरणम् । णिजन्तादेरच् । तच्चेह संख्यासंनिधानात्संख्यान्तरापादनमिति व्याचष्टे—**द्रव्यस्येत्यादिना** । संख्यान्तरापादनं हि एकस्यानेकीकरणम्, अनेकस्य च एकीकरणम् । तत्राद्ये उदाहरणम्—**एकं राशिं पञ्चधेति** । पञ्च राशीन् कुर्वित्यर्थः ॥ द्वितीये तु अनेकं एकधा कुर्वित्युदाहर्तव्यम् । इह क्रियाविषयकप्रकारो न गम्यत इति सूत्रारम्भः ॥ १९९० **एकाद्धो—**। शब्दप्रधानत्वात्सर्वनामकार्याभावः । इह प्रकरणादेव सिद्धे पुनर्धाग्रहणं विधार्थे विहितस्यापि यथा स्यात् । 'अनन्तरस्य—' इति न्यायेनाधिकरणविचाले विहितस्यैव हि प्राप्नोतीति वृत्तिपदमञ्जर्योः स्पष्टम् । एतेन ध्यमुञ् स्वतन्त्र एव प्रत्ययोऽस्त्वित्याशङ्का परास्ता ॥—**ऐकध्यमिति** । विधार्थे ऐकध्यं भुङ्क्ते । अधिकरणविचाले तु ऐकध्यं राशि कुर्वित्यादि ज्ञेयम् । एवमग्रेऽपि द्वैधमित्यादौ योज्यम् ॥ १९९२ **एधाच्च** । द्वित्र्योः संबन्धिनो धाप्रत्ययस्य एधाच् स्यात् । योगविभागो यथासंख्यनिरासार्थः ॥ १९९३ **याप्ये पाशप्** । 'कुत्सिते' इत्यत्रैव नायं विहितः, तिङन्तादपि प्रसङ्गात् ॥ १९९४ **पूरणाद्भागे—**। पूरणार्थत्वात्तीयप्रत्ययः पूरणशब्देनोक्तः । पूरणग्रहणं चोत्तरार्थम् । न ह्यपूरणस्तीयप्रत्ययो भवति । मुखतीयः पार्श्वतीय इत्यत्र त्वनर्थकत्वान्नातिप्रसङ्गः ॥—भाग इति पुंस्त्वं विवक्षितम् । तेन सामनेऽप्यर्थे विभक्तौ विवक्षितायां चतुर्थी पञ्चमीत्येव भवति । 'प्रागेकादशभ्यः–' इत्यनि सति तु टापि चतुर्था पञ्चमेति प्रसज्येत ॥ १९९८ **एकादाकिनिच्च—**। असहायवाचिन

---

[1] **दक्षिणादाच्—**चकार 'आजाही' इत्यत्र विशेषणार्थः । तेन वाक्यसरणयोरङिदाकारस्य व्यावृत्तिरिति भाष्यम् ।

न्लुकौ । एकः, एकाकी, एककः ।

१९९९ । **भूतपूर्वे चरट्** ।५।३।५३। आढ्यो भूतपूर्वः—आढ्यचरः ।

२००० । **षष्ठ्या रूप्य च** ।५।३।५४। षष्ठ्यन्ताद्भूतपूर्वेऽर्थे रूप्यः स्याच्चरट् च । कृष्णस्य भूतपूर्वो गौः—कृष्णरूप्यः, कृष्णचरः । तसिलादिषु रूप्यस्यापरिगणितत्वान्न पुंवत्, शुभ्राया भूतपूर्वः शुभ्रारूप्यः ।

२००१ । **अतिशायने तमबिष्ठनौ** ।५।३।५५। अतिशयविशिष्टार्थवृत्तेः स्वार्थे एतौ स्तः । अयमेषामतिशयेनाढ्यः—आढ्यतमः । लघुतमो लघिष्ठः ।

२००२ । **तिङश्च** ।५।३।५६। तिङन्तादतिशये द्योत्ये तमप् स्यात् ।

२००३ । **तरप्तमपौ घः** ।१।१।२२। एतौ घसंज्ञौ स्तः ।

२००४ । **किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे** ।५।४।११। किम एदन्तात्तिङोऽव्ययाच्च यो घस्तदन्तादामुः स्यान्न तु द्रव्यप्रकर्षे । किंतमाम् । प्राह्णेतमाम् । पचतितमाम् । उच्चैस्तमाम् । द्रव्यप्रकर्षे तु उच्चैस्तमस्तरुः[1] ।

२००५ । **द्विवचनविभज्योपपदे[2] तरबीयसुनौ** ।५।३।५७। द्वयोरेकस्यातिशये विभक्तव्ये चोपपदे सुप्ति-

---

एकशब्दादाकिनिच् स्यात् ॥—**कन्लुकाविति** । आकिनिचः कनो वा पक्षे लुक् । तयोरेवानेन सूत्रेण विधानात् ॥ असहायग्रहणं संख्याशब्दनिरासार्थम् । अन्यथा प्रसिद्धत्वात्संख्याप्रकरणाच्च तस्यैव ग्रहणं स्यात् । इष्टापत्तौ तु द्वित्वे बहुत्वे च न स्यात्—एकाकिनौ एकाकिन इति । न हि द्वयोर्बहुषु वा एकत्वसंख्याऽस्ति । असहायत्वं तु परस्परातिरिक्तसहायाभावेन द्वयोर्बहूनामपि भवति । इह 'अकिनिच्' एवायं वक्तव्यः, सवर्णदीर्घेण सिद्धमिष्टम् । 'यस्येति च' इति लोपश्चाकारोच्चारणसामर्थ्यान्न भवतीत्यादि हरदत्तग्रन्थे स्थितम् ॥ **१९९९ भूतपूर्वे** । अत्र वर्तमानाच्चरट् स्यात् ॥ 'गोष्ठात् खञ्' इत्यत्रैव नोक्तम् । विशेषविहितेन खञा चरटो बाधा मा भूदिति । संनिधौ हि सामान्यविशेषभावः स्फुटीभविष्यति । यद्यपि दूरस्थस्यापि बाधो न्याय्य एव तथापीह गौरवं स्वीकृत्य दूरे पाठसामर्थ्याद्बाधो नेति भावः ॥ **२००० षष्ठ्या रूप्य च** । भूतपूर्वे इत्यनुवर्तते । तच्च यद्यपि पूर्वत्र ङ्याप्प्रातिपदिकस्य विशेषणं, तथापीह न तथा, षष्ठ्यन्तार्थस्य विशेषणत्वात्, तदाक्षिप्तस्य संबन्धिनो गवादेः प्रधानत्वात्, प्रधानेतरसंनिधौ च प्रधाने कार्यसंप्रत्ययस्य न्याय्यत्वात् । तदेतदाह—**भूतपूर्वेऽर्थे रूप्यः स्यादिति** ॥ **२००१ अतिशायने**—। अतिपूर्वाच्छेतेर्ल्युट् । अतिशयनमेवातिशायनम् । अस्मादेव निपातनाद्दीर्घः । न तु सौत्रः । तेन लोकेऽपि दीर्घः साधुः । अबाधकान्यपि निपातनानि भवन्ति । तेन ह्रस्वोऽपि साधुः । यद्यपि केवलः शेतिः स्वप्ने वर्तते तथाप्यतिपूर्वः प्रकर्षे । प्रकर्षश्चात्र नाधिक्यं, किं त्वभिभवः । 'पूर्वान्महाभागतयाऽतिशेषे' इति प्रयोगदर्शनात् ॥ न चैवं 'प्रकर्षे तमबिष्ठनौ' इत्येव कुतो न सूत्रितमिति शङ्क्यम् । अतिशायनमिति निपातनार्थमेव तथोक्तत्वात्, अतिशयो न प्रत्ययार्थः । तथा हि सति लघोरतिशायनं लघुतममिति स्यात् । प्रत्ययार्थस्य प्राधान्यात् । नापि प्रकृत्यर्थः । तथा हि सति प्रकर्षातिशयातिशयानादिभ्य एव स्यात्, न त्वाढ्यादिभ्यः, किं तु प्रकृत्यर्थविशेषणम् । प्रत्ययस्तु द्योतकस्तदेतदाह—**अतिशयविशिष्टेत्यादि** ॥—**अयमेषामिति** । अवयवे समुदाये यदा एकस्यातिशयो विवक्ष्यते तदा तरबीयसुनावपवादौ वक्ष्येते । तथा च परिशेषाद्बहूनां मध्ये यदा एकदेशस्य निर्धारणं सोऽस्य विषय इति भावः ॥—**आढ्यतम इति** । सुबन्तात्तमप् । सुपो धातु—' इति लुक् । यद्यपि 'ङ्याप्प्रातिपदिकात्' इत्येवानुवर्तते तथापि सुबन्तपरतयैव व्याख्येयम् । अन्यथा हि पूर्वाह्णेतरां पूर्वाह्णेतमामित्यादौ 'घकालतनेषु कालनाम्नः' इति सप्तम्या अलुग्विधानं कथमुपपद्यताम् ॥ **२००२ तिङश्च** । अस्मादिष्ठन्न भवति, 'अजादी गुणवचनादेव' इति नियमादित्याशयेनाह—**तमप् स्यादिति** ॥ **२००३ तरप्तमपौ घः** । अस्मिन्नेवातिशायनिकप्रकरणे 'तादौ घः' 'पितौ घः' इति वा वक्तव्ये प्रकरणान्तरे गुरुसूत्रकरणमत्यन्तस्वार्थिकमपि तरपं ज्ञापयति । तेन 'अल्पाच्तरम्' 'लोपश्च बलवत्तरः' इत्यादि सिद्धम् । अल्पाजेव [illegible], न त्वत्र द्वयोरेकस्यातिशयविवक्षायां तरप् । अन्यथा 'शिवकेशवौ' इत्यादिसिद्धावपि 'शङ्खदुन्दुभिवीणाः' इत्यादि न सिध्येदित्याहुः ॥ **२००४ किमेत्** । आमोरुकारो यदि त्यज्येत, तर्हि पचतितरामित्यादौ 'ह्रस्वनद्यापः—' इति नुटि पचतितराणामिति स्यात् । यस्येतिलोपस्य परेण नुटा बाधात् । सिद्धान्ते तु 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति परिभाषया नुड्विधौ नास्य ग्रहणम् ॥ **२००५ द्विवचनविभज्योपपदे**—। द्वयोरर्थयोर्वचनं द्विवचनम् । करणे ल्युट् । कर्मणि षष्ठ्या समासः । येन पदेन द्वावर्थावुच्येते तद्द्विवचनम् । विभक्तव्यं विभज्यम् । 'ऋहलोः—' इति ण्यति प्राप्ते तदपवादो यत् निपात्यते । ण्यति तु 'चजोः' इति कुत्वेन विभाग्यमिति स्यात् । विभाज्यशब्दस्य स्मृतिषु प्रयुक्तस्य साधुत्वं चिन्त्यमिति हरदत्तोक्तिश्चिन्त्या । ण्यन्तात् 'अचो यत्' इति यति विभाज्यमिति रूपसिद्धेः । न चात्रार्थभेदः शङ्क्यः, 'निवृत्तप्रेषणात् धातोः प्राकृतेऽर्थे णिच्' इति 'णेरणौ—' इति सूत्रे व्युत्पादनादिति दिक् ॥ द्विवचनं च विभज्यं चेति द्वन्द्वः ।

---

१ **उच्चैस्तमस्तरुरिति**—उच्चैःशब्दोऽत्रोच्चत्वगुणवत्परः । द्रव्यस्य स्वतःप्रकर्षाभावेऽपि द्रव्यनिष्ठगुणादिप्रकर्षे एव द्रव्यप्रकर्ष इति बोध्यम् । २ **द्विवचनेति**—नतरामित्यादौ प्रतियोग्यसमानाधिकरणत्वरूपात्यन्तिकत्वेऽभावगते प्रकर्षे तरप् । प्रवृत्तिनिमित्तगते प्रकर्षे तरबादिरिति तु प्रकृत्यर्थप्रकर्षासंभवविषयम् । एवं द्योत्यार्थप्रकर्षेऽपि द्योतकात्तरप् । यथा–नितरां गच्छतीत्यादौ ।

ङन्तादेतौ स्तः । पूर्वयोरपवादः । अयमनयोरतिशयेन लघुः-लघुतरः, लघीयान् । उदीच्याः प्राच्येभ्यः पटुतराः, पटीयांसः ।

२००६ । **अजादी गुणवचनादेव** ।५।३।५८। इष्ठन्नीयसुनौ गुणवचनादेव स्तः । नेह-पाचकतरः, पाचकतमः ।

२००७ । **तुश्छन्दसि** ।५।३।५९। तृन्तृजन्तादिष्ठन्नीयसुनौ स्तः ।

२००८ । **तुरिष्ठेमेयःसु** ।६।४।१५४। तृशब्दस्य लोपः स्यादिष्ठेमेयःसु परेषु । अतिशयेन कर्ता करिष्ठः । दोहीयसी धेनुः ।

२००९ । **प्रशस्यस्य श्रः** ।५।३।६०। अस्य श्रादेशः स्यादजाद्योः ।

२०१० । **प्रकृत्यैकाच्** ।६।४।१६३। इष्ठादिष्वेकाच् प्रकृत्या स्यात् । श्रेष्ठः । श्रेयान् ।

२०११ । **ज्य च** ।५।३।६१। प्रशस्यस्य ज्यादेशः स्यादिष्ठेयसोः । ज्येष्ठः ।

२०१२ । **ज्यादादीयसः** ।६।४।१६०। 'आदेः परस्य' ४४ । ज्यायान् ।

२०१३ । **वृद्धस्य च** ।५।३।६२। ज्यादेशः स्यादजाद्योः । ज्येष्ठः, ज्यायान् ।

२०१४ । **अन्तिकबाढयोर्नेदसाधौ** ।५।३।६३। अजाद्योः । नेदिष्ठः, नेदीयान् । साधिष्ठः, साधीयान् ।

२०१५ । **स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः** ।६।४।१५६। एषां यणादिपरं लुप्यते, पूर्वस्य च गुण इष्ठादिषु । स्थविष्ठः । दविष्ठः । यविष्ठः । ह्रसिष्ठः । क्षेपिष्ठः । क्षोदिष्ठः । एवम् ईयस । ह्रस्वक्षिप्रक्षुद्राणां पृथ्वादित्वात्-ह्रसिमा, क्षेपिमा, क्षोदिमा ।

२०१६ । **प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्र-**

---

तस्य उपपदेन कर्मधारयः । तथा च द्व्यर्थवाचके विभजनीये चोपपदे सतीत्यक्षरार्थः । द्विवचनान्ते उपपदे इति व्याख्यायां तु दन्तोष्ठस्य दन्ताः स्निग्धतरा इत्यादि न सिध्यति । न च द्वयोर्वचनं द्विवचनमिति पक्षेऽपि नेदं सिध्यति, समाहारस्यैकत्वात् । गुणभूतवर्तिपदार्थाश्रयणे तु द्वात्रिंशद्दन्ताः, द्वावोष्ठाविति तेषां बहुत्वात्तुतरां न सिध्येदिति चेत्, **अत्राहुः—** वृत्तावभेदैकत्वसंख्यामुपाददति वर्तिपदानि । ततश्च भेदस्य परित्यागादभेदैकत्वसंख्यायाश्चोपादानाद्दन्तोष्ठलक्षणार्थद्वयं दन्तोष्ठशब्देनोच्यत इति नास्ति द्विवचनोपपदे इति पक्षे दोष इति ॥ विस्तरस्त्वाकरग्रन्थेभ्योऽवगन्तव्यः ॥ अन्वर्थं चोपपदम्—उपोच्चारितं पदमिति, न तु कृत्रिमम्, तद्धितविधौ तस्यासंभवात् । तच्च विग्रहवाक्य एव प्रयुज्यते । वृत्तौ तु गतार्थत्वान्नावश्यकम् ॥ एवं स्थिते उपपदग्रहणं स्पष्टार्थम् ॥ इह द्वे उपपदे, द्वे च सुबन्ततिङन्तरूपे प्रकृती, द्वौ च प्रत्ययौ । तथापि यथासंख्यं नेष्यते ॥ द्विवचनोपपदमुदाहरति—**अनयोरिति** ॥—**लघीयानिति** । 'टेः' इति लोपः । उगित्त्वान्नुम् । 'सान्तमहतः-' इति दीर्घः । हल्ङ्यादिसंयोगान्तलोपौ ॥ विभज्योपपदमुदाहरति—**प्राच्येभ्य इति** । 'पञ्चमी विभक्ते' इति पञ्चमी ॥ कथं तर्हि 'परुद्भवान् पटुरासीत्, ऐषमस्तु पटुतरः' इति । **अत्राहुः—** एकस्यापि धर्मिणस्तत्कालस्थत्वादिरूपधर्मभेदेन भेदाध्यारोपात्प्रतियोग्यपेक्षस्तत्कालस्थप्रकर्षस्तदाश्रयश्चेह तरप्प्रत्यय इति ॥ व्यपदिशन्ति च—'अन्य एवासि संवृत्तः', 'कश्चित्स एवासि धनंजयस्त्वम्' इति ॥ २००६ **अजादी गुणवचनादेव** । इष्टतोऽवधारणार्थं एवकारः । तेन प्रत्ययनियमोऽयम् । एवकाराभावे तु गुणवचनादजादिप्रत्ययावेवेति प्रकृतिनियमोऽपि संभाव्येत । तथा च पटुतरः, पटुतम इत्यादि न सिध्येत् ॥ २००७ **तुश्छन्दसि** । पूर्वेण नियमेन व्यावर्तितयोः प्रतिप्रसवोऽयम्, नत्वपूर्वो विधिः । तेन उपाधिसंकरो न ॥ २००८ **तुरिष्ठे-** । 'टेः' इत्यनेनान्त्यलोपे सिद्धेऽप्यारम्भसामर्थ्यात्सर्वस्य तृशब्दस्य लोपस्तदाह—**करिष्ठ इति** ॥—**दोहीयसीति** । इयमनयोरतिशयेन दोग्ध्री 'भस्याढे तद्धिते सिद्धश्च प्रत्ययविधौ' इति वचनात् तद्धिते कर्तव्ये प्रागेव पुंवद्भाव इति ङीपि निवृत्ते दोग्धृशब्दात्प्रत्ययः, ततस्तृचि निवृत्ते निमित्ताभावाद् घत्वजश्त्वयोरपि निवृत्तिः ॥ अलौकिके विग्रहवाक्ये प्रागेव तयोरप्रवृत्तिः 'अकृतव्यूह-' परिभाषयेति तु तत्त्वम् ॥ गुणस्तु प्रवर्तते, लुप्तेऽपि तृचि प्रत्ययलक्षणप्रौढ्यात् । छान्दसमपि 'तुः' सूत्रम्, इति 'तुरिष्ठेमेयःसु' इति च 'णाविष्ठवत्' इत्यतिदेशेन लोकेऽपि कर्तारमाचष्टे कारयतीत्यादावुपयोक्ष्यमाणत्वादिहोपन्यस्तम् ॥ २००९ **प्रशस्यस्य श्रः** । 'अजादी' इत्यनुवृत्तं सप्तम्या विपरिणम्यत इत्याह—**अजाद्योरिति** । अजाद्योः किम् ? प्रशस्यतरः । प्रशस्यतमः ॥ २०१० **श्रेष्ठ इति** । प्रकृतिभावादिह 'टेः' इति लोपो 'यस्ये'ति लोपश्च न भवति ॥ २०१२ **ज्यादात्—** । ज्यादुत्तरस्य ईयसुन आकारादेशः स्यात् ॥ २०१३ **वृद्धस्य च** । स्वरूपस्येह ग्रहणं, न तु 'वृद्धिर्यस्याचामादिः' इति पारिभाषिकस्य, व्याख्यानात् । अस्य 'प्रियस्थिर-' इत्यादिना वर्षादेशोऽपि पक्षे भवति । न च तस्येमनिचि सावकाशता शङ्क्या । वृद्धशब्दादिमनिचोऽभावात् । यदि तु 'वृद्धस्य वर्षिश्च' इति सूत्रमिहैव क्रियेत तदा द्विर्वृद्धग्रहणं न कर्तव्यमिति लाघवं भवतीत्याहुः ॥ २०१५ **स्थूलदूर—** । परग्रहणं यविष्ठो ह्रसिष्ठ इत्यत्र पूर्वयणादेर्लोपो माभूदिति । पूर्वग्रहणं तु स्पष्टार्थम् । परस्मिन् लुप्ते सामर्थ्यात्पूर्वस्यैव गुणलाभात् ॥ —**स्थविष्ठ इति—** । न चात्र 'ओर्गुण' इत्येव सिद्धे गुणग्रहणं व्यर्थमिति वाच्यम् । परयणादिलोपस्याभीयत्वेनासिद्धत्वात् क्षिप्रक्षुद्रयोर्गुणस्य प्राप्त्यभावात् । क्षेपिष्ठः क्षोदिष्ठ इत्यसिद्धिप्रसङ्गाच्च ॥—**एवमिति** । प्रेयान्, स्थेयान्, स्फेयान्,

दीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः ।६।४।१५७। प्रियादीनां क्रमात्प्रादयः स्युरिष्ठादिषु। प्रेष्ठः। स्थेष्ठः। स्फेष्ठः। वरिष्ठः। बंहिष्ठः। गरिष्ठः। वर्षिष्ठः। त्रपिष्ठः। द्राघिष्ठः। वृन्दिष्ठः। एवम् ईयसुन्। प्रियोरुबहुलगुरुदीर्घाणां पृथ्वादित्वादिमनिच्, 'प्रेमा' इत्यादि।

**२०१७। बहोर्लोपो भू च बहोः** ।६।४।१५८। बहोः परयोरिमेयसोर्लोपः स्याद्बहोश्च भूरादेशः। भूमा, भूयान्।

**२०१८। इष्ठस्य यिट् च** ।६।४।१५९। बहोः परस्य इष्ठस्य लोपः स्यात् यिडागमश्च। भूयिष्ठः।

**२०१९। युवाल्पयोः कनन्यतरस्याम्** ।५।३।६४। एतयोः कनादेशो वा स्यादिष्ठेयसोः। कनिष्ठः। कनीयान्। पक्षे—यविष्ठः। अल्पिष्ठः। इत्यादि।

**२०२०। विन्मतोर्लुक्** ।५।३।६५। विनो मतुपश्च लुक् स्यादिष्ठेयसोः। अतिशयेन स्रग्वी स्रजिष्ठः, स्रजीयान्। अतिशयेन त्वग्वान् त्वचिष्ठः, त्वचीयान्।

**२०२१। प्रशंसायां रूपप्** ।५।३।६६। सुबन्तात्तिङन्ताच्च। प्रशस्तः पटुः पटुरूपः। प्रशस्तं पचति पचतिरूपम्।

**२०२२। ईषदसमाप्तौ कल्पब्देश्यदेशीयरः** ।५।३।६७। ईषदूनो विद्वान् विद्वत्कल्पः। यशस्कल्पम्। यजुष्कल्पम्। विद्वद्देश्यः। विद्वद्देशीयः। पचतिकल्पम्।

**२०२३। विभाषा सुपो बहुच् पुरस्तात्तु** ।५।३।६८। ईषदसमाप्तिविशिष्टेऽर्थे सुबन्ताद्बहुज्वा स्यात्स च प्रागेव, न तु परतः। ईषदूनः पटुर्बहुपटुः, पटुकल्पः। सुपः किम्। यजतिकल्पम्।

**२०२४। प्रकारवचने जातीयर्** ।५।३।६९। प्रकारवति चायम्। थाल् तु प्रकारमात्रे। पटुप्रकारः—पटुजातीयः।

**२०२५। प्रागिवात्कः** ।५।३।७०। 'इवे प्रतिकृतौ' २०५१ इत्यतः प्राक् काधिकारः।

**२०२६। अव्ययसर्वनाम्नामकच् प्राक् टेः** ।५।३।७१। 'तिङश्च' २००२ इत्यनुवर्तते।

---

वरीयानित्यादि॥ **१०१७ इमेयसोर्लोप इति।** स च 'आदेः परस्य' इत्यादेरेव भवति॥ **२०१८ इष्ठस्य यिट् च।** पूर्वसूत्रं संपूर्णमनुवर्तते, तदाह—**बहोरित्यादि।** भूरादेशश्चेत्यपि ज्ञातव्यम्॥—**भूयिष्ठ इति।** अत्र इष्ठस्यादिलोपे कृते यिशब्द आगमः॥ यद्वा लोपापवादो यकार आगमः, इकारस्तूच्चारणार्थः। पक्षद्वयमपीदं भाष्यारूढम्॥ **२०१९ युवाल्पयोः—।** युवेति स्वरूपग्रहणम्, न तु युवापत्यस्य, अल्पसाहचर्याद्व्याख्यानाच्च। 'अजादी' इत्यनुवर्तनादजाद्योरेव परयोर्न तु तरसमपोरित्याशयेन व्याचष्टे—**इष्ठेयसोरिति॥ २०२० विन्मतोर्लुक्॥—स्रजिष्ठ इति।** विनो लुकि कृते भत्वात्पदकार्याभावः। अस्मादेव ज्ञापकादगुणवचनत्वेऽपि विन्मतोरजादी भवतः॥ **२०२१ प्रशंसायां रूपप्।** प्रकृत्यर्थस्य परिपूर्णतेह प्रशंसा, न तु स्तुतिः। तेनेहापि भवति। चौररूपोऽयं यदक्ष्णोरप्यञ्जनं हरति। गुप्तवस्त्वपहरणेन चौर्यं परिपूर्यते॥—**पचतिरूपमिति।** 'क्रियाप्रधानमाख्यातम्' क्रियायाश्चासत्त्वरूपत्वेऽपि औत्सर्गिकमेकवचनं भवति। तेन पचतोरूपं पचन्तिरूपमित्यादि। इह प्रथमैव, विभक्त्यन्तराणामप्राप्तेरिति बहवः। वस्तुतस्तु पश्येत्यादियोगे कर्मणि द्वितीयाऽपि सुलभा। क्लीबत्वं लोकात्। एवं पचतिकल्पमित्यादावपि बोध्यम्॥ **२०२३ विभाषा सुपः—।** सूत्रे 'सुपः' इति षष्ठ्यन्तम्। 'षष्ठ्यतसर्थप्रत्ययेन' इत्युक्तेः॥—**सुबन्तादिति।** एतच्च पञ्चम्यन्तमुक्तमेव। पुरस्ताच्छब्दपर्यायस्य प्रागितिशब्दस्य वृत्तौ प्रयुक्तत्वात्। प्रागित्यपकृष्यत इति तु मनोरमायां स्थितम्। न च सूत्रस्थपुरस्ताच्छब्दसमानार्थकप्राक्शब्दयोगेऽपि 'षष्ठ्यतसर्थ—' इति षष्ठी स्यादिति वाच्यम्। 'अन्यारात्—' इति सूत्रेऽञ्चूत्तरपदस्य दिक्शब्दत्वेऽपि 'षष्ठ्यतसर्थप्रत्ययेन' इत्येतद्बाधनार्थं पृथग्ग्रहणमिति सिद्धान्तयित्वा प्राक् प्रत्यग्वा ग्रामादित्युदाहृतत्वात्। काशिकायां तु वृत्तावपि पुरस्ताच्छब्दः प्रयुक्तः सुबन्तादिति च प्रयुक्तं तदसमञ्जसमिति मत्वा हरदत्तेन कथंचित् समर्थितम्। ल्यब्लोप एषा पञ्चमी। एवंभूतं प्रकृतित्वेनाश्रित्येत्यर्थ इति॥—**प्रागेवेति।** सौत्रस्तुशब्दोऽवधारणे वर्तत इति भावः। तेन बहुजेव विकल्प्यते, न तु पूर्वत्वम्। तुशब्दाभावे तु प्राक्त्वं विकल्प्येत। तथा च पक्षे बहुच् परः स्यात्॥ भाष्यकारस्य मते तु नेदं तुशब्दस्य फलम्। तथा हि—'उदश्वितोऽन्यतरस्याम्' इत्यादौ प्रधानत्वात्प्रत्यय एव विकल्प्यते, न तु परत्वं, प्रत्यय एव हि परत्वविशिष्टो विधीयत इति विशेषणस्य गुणत्वात्। 'गुणानां च परार्थत्वात्' इति न्यायात्। तद्वदिहापि विभाषाग्रहणेन बहुजेव संभन्त्स्यते, न पुरस्तादित्येतत्। तुशब्दस्य तु अवधारणार्थस्यान्यदेव प्रयोजनं—पुरस्तादेव सर्वं यथा स्यादिति। तेन लिङ्गसंख्ये अपि प्राक् प्रत्ययोत्पत्तेः प्रकृत्यवस्थायां ये दृष्टे ते एव स्तः। बहुचः प्रयोगश्च प्राक् प्रकृतेरेव भवतीति॥ तेन 'बहुगुडो द्राक्षा', 'लघुर्बहुतृणं नरः' इत्यादौ प्रकृतिवल्लिङ्गमेव भवति, न त्वभिधेयवल्लिङ्गम्॥ ननु 'स्वार्थिकाः प्रकृतितो लिङ्गवचनानि लभन्ते' इत्येव सिद्धमिति किमनेन तुशब्दग्रहणेनेति चेत्। **अत्राहुः**—एतदेव ज्ञापयति 'ईषदसमाप्तौ ये स्वार्थिकास्तेष्वभिधेयवदेव लिङ्गवचने स्तः' इति। तेन गुडकल्पा द्राक्षा शर्कराकल्पो गुड इत्यादि सिद्धम्॥ **२०२५ प्रागिवात्कः।** 'सुपः' इत्यनुवर्तते तेन तिङन्तात्को न॥ **२०२६ अव्ययसर्वनाम्नाम्—॥—अनुवर्तत इति।** मण्डूकप्लुत्येति भावः।

---

१ **ईषदसमाप्ताविति**—स्वार्थिकानां प्रकृतितो लिङ्गवचनाङ्गीकाराद्बहुगुडो द्राक्षा, वृषभकल्प इयं गौरित्यादि सिद्धम्। बहुगुडा द्राक्षा इति तु क्वचित्प्रकृतितो लिङ्गवचनातिक्रमात्सिद्धम्। तत्र च 'णचः स्त्रियाम्—' इत्यत्र स्त्रीग्रहणं लिङ्गम्।

२०२७ । **कस्य च दः** ।५।३।७२। कान्ताव्ययस्य दकारोऽन्तादेशः स्यादकच्च ।

२०२८ । **अज्ञाते** ।५।३।७३। कस्यायमश्वः–अश्वकः । उच्चकैः । नीचकैः । सर्वके । विश्वके । ✽ **ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्** । युवकयोः । आवकयोः । युष्मकासु । अस्मकासु । युष्मकाभिः । अस्मकाभिः । ओकारेत्यादि किम् । त्वयका । मयका । ✽ **अकच्प्रकरणे तूष्णीमः काम्वक्तव्यः** । मित्त्वादन्त्यादचः परः । तूष्णीकाम् आस्ते । ✽ **शीले को मलोपश्च** । तूष्णींशीलः तूष्णीकः । पचतकि । जल्पतकि । धकित् । हिरकुत् ।

२०२९ । **कुत्सिते** ।५।३।७४। कुत्सितोऽश्वः–अश्वकः ।

२०३० । **संज्ञायां कन्** ।५।३।७५। कुत्सिते कन् स्यात्तदन्तेन चेत्संज्ञा गम्यते । शूद्रकः । राधकः । स्वरार्थं वचनम् ।

२०३१ । **अनुकम्पायाम्** ।५।३।७६। पुत्रकः, अनुकम्पितः पुत्र इत्यर्थः ।

२०३२ । **नीतौ च तद्युक्तात्** ।५।३।७७। सामदानादिरुपायो नीतिः, तस्यां गम्यमानायामनुकम्पायुक्तात्कप्रत्ययः स्यात् । हन्त ते धानकाः । गुडकाः । एहकि । अद्धकि । पूर्वेणानुकम्प्यमानात्प्रत्ययः । अनेन तु परम्परासंबन्धेऽपीति विशेषः ।

२०३३ । **बह्वचो मनुष्यनाम्नष्ठज्वा** ।५।३।७८। पूर्वसूत्रद्वयविषये ।

२०३४ । **घनिलचौ च** ।५।३।७९। तत्रैव ।

२०३५ । **ठाजादावूर्ध्वं द्वितीयादचः** ।५।३।८३। अस्मिन्प्रकरणे यष्ठोऽजादिप्रत्ययश्च तस्मिन्प्रत्यये परे प्रकृतेर्द्वितीयादच ऊर्ध्वं सर्वं लुप्यते । अनुकम्पितो देवदत्तो देविकः, देवियः, देविलः, देवदत्तकः । अनुकम्पितो वायुदत्तो वायुदत्तकः । ठग्रहणमुको द्वितीयत्वे कविधानार्थम्, वायुकः । पितृकः । ✽ **चतुर्थादच ऊर्ध्वस्य लोपो वाच्यः** । अनुकम्पितो बृहस्पतिदत्तो बृहस्पतिकः । ✽ **अनजादौ च विभाषा लोपो**

---

'ङ्याप्प्रातिपदिकात्' 'सुपः' इति चानुवर्तत एव ॥ **२०२७ कस्य च दः** ॥—**कान्ताव्ययस्येति** । सर्वनामग्रहणं तिङ्ग्रहणं च नेह संबध्यते, तयोः कान्तत्वासंभवात् । न चाधोक् अधोगित्यादौ संभवोऽस्तीति वाच्यम् । कत्वस्यासिद्धत्वात् । यद्यपि शक्नोतेर्यङ्लुकि लङि तिपि 'अशासक्' इति संभवति, तथापि यङ्लुकोऽसार्वत्रिकत्वान्नेदृशं लक्ष्यमस्तीति । छन्दसि क्वचिल्लक्ष्यसद्भावेऽपि 'सर्वे विधयश्छन्दसि वा विधीयन्ते' इति दत्वविधिर्न प्रवर्तत इति भावः ॥ **२०२८ ओकारेति** । अकज्विधौ सुपोऽप्यनुवृत्त्या सर्वनाम्ना सुपा च टेर्विशेषणे कामचाराद् अव्यवस्थाप्रसङ्गे भाष्यकारवचनाद्व्यवस्थाश्रीयते । ओकारसकार इत्यादिसंकोचश्च युष्मदस्मन्मात्रविषयकः । तथैव भाष्ये उदाहृतत्वात् । अन्येषां त्वविशेषेण प्रातिपदिकस्यैव टेः प्रागकच् न सुबन्तस्य । तेन सर्वकेण इमकेन भवकन्तमित्यादि सिध्यति ॥—**त्वयका मयकेति** । नन्वत्र सुपः प्रागकचि कृते प्रत्यये परतस्त्वमादेशयोः सतोरपि 'योऽचि' इति यत्वं न स्यात्, विभक्तिपरत्वाभावादिति चेत् । मैवम् । अकृतव्यूहपरिभाषाया अनित्यतामाश्रित्याकचः पूर्वमेव यत्वविधानात् । एवं युवकामावकामित्यत्राप्यकचः पूर्वमेव युवावादेशाविति बोध्यम् ॥—**शीले क इति** । शीलं स्वभावो नियमश्च ॥—**तूष्णीक इति** । 'केऽणः' इति ह्रस्वस्तु भाष्यकारप्रयोगात् 'न कपि' इत्यत्र 'न' इति योगविभागाद्वा न भवतीत्याहुः ॥ अकचो द्वितीयोऽकार उच्चरणार्थ इति ध्वनयन्नुदाहरति—**पचतकीत्यादि** ॥ **२०३१ अनुकम्पायाम्** । 'कृपा दयानुकम्पा स्यात्' इत्यमरः ॥ **२०३२ नीतौ च तद्युक्तात्** ॥—**अनुकम्पायुक्तादिति** । यद्यपि पुत्रादिरेव साक्षादनुकम्पायुक्तो न तु धानादिः, तथापि तद्वारा धानादीनामप्यस्त्यनुकम्पासंबन्ध इति भावः ॥—**धानका इति** । धानाशब्दः स्त्रीलिङ्गः । ततः कः । 'केऽणः' इति ह्रस्वः । कप्रत्ययान्ताट्टाप् ॥ अत्र 'प्रत्ययस्थात्–' इतीत्वेन भाव्यम् । प्रायेण तु धानका इति पठ्यते । तत्र लिङ्गातिवृत्तिर्द्रष्टव्येति हरदत्तः । 'कर्मव्यतिहारे णच् स्त्रियाम्' इति सिद्धे 'णचः स्त्रियामञ्' इति सूत्रे पुनः स्त्रीग्रहणेन ज्ञापितं—'स्वार्थिकाः प्रकृतिलिङ्गं क्वचिदतिवर्तन्ते' इति । तेन धानका इत्यत्र पुंस्त्वमिति भावः ॥ **२०३४ घनिलचौ च** । चकाराद्यथाप्राप्तमिति काशिका । इह पूर्वसूत्रेणैव ठज् विहितः । वावचनात्कोऽपि । चकारेण तु कस्याभ्यनुज्ञा क्रियत इति चिन्त्यं, योगविभागे फलमपि चिन्त्यमिति हरदत्तः ॥ **२०३५ ठाजादौ**—। समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । आदिग्रहणं चिन्त्यप्रयोजनं, 'यस्मिन्विधिस्तदादौ–' इत्येव सिद्धमिति हरदत्तः ॥—**अस्मिन्प्रकरण इति** । अनुकम्पायां नीतौ चेत्यर्थद्वयस्यैव प्रत्यासत्त्या बुद्धौ सन्निधानादिति भावः ॥ ऊर्ध्वग्रहणमिह सर्वलोपार्थम् । अन्यथा 'आदेः परस्य' इत्यादेरेव स्यादित्यभिप्रेत्याह—**द्वितीयादच ऊर्ध्वं सर्वमिति** । 'अजिनान्तस्य' इत्यतो लोप इत्यनुवर्तनादाह—**लुप्यत इति** । ननु ठग्रहणं व्यर्थम् । इकादेशे कृते अजादावित्येव सिद्धत्वादत आह—**ठग्रहणमुको द्वितीयत्व इति** ॥—**वायुक इति** । वायुशब्दात्परस्य दत्तशब्दस्य ठावस्थायामेव लोपे 'इसुसुक्तान्तात्–' इति कः । किंच पृथक् ठग्रहणस्य प्रयोजनान्तरमप्यस्ति । यदा तु चित्रगुप्रभृतिभ्यष्ठच् तदोगन्तत्वात् कादेशप्राप्त्या प्रथममिकादेशस्याऽसंभवेनाजादिलक्षणो लोपो न स्यादिति तदर्थमपि ठग्रहणम् । तेन ठावस्थायामुत्तरपदलोपे कादेशस्यासंभवादिकादेशे चित्रिक इति रूपं सिध्यतीति बोध्यम् ॥ 'चतुर्थादनजादौ च' इति वक्ष्यमाणमेव श्लोकं भङ्क्त्वा व्याचष्टे—**चतुर्थादच ऊर्ध्वस्येति** ॥—**अनजादाविति** । हलादावित्यर्थः । 'अस्मिन्

वक्तव्यः । देवदत्तकः, देवकः । ॐ **लोपः पूर्वपदस्य च** । दत्तिकः, दत्तियः, दत्तिलः, दत्तकः । ॐ **विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः** । देवदत्तः, दत्तः, देवः ॥ सत्यभामा, भामा, सत्या ॥ ॐ **उवर्णाल्ल इलस्य च** । भानुदत्तः, भानुलः । ॐ **ऋवर्णादपि** । सवित्रियः, सवितृलः । ॐ

**चतुर्थादनजादौ च लोपः पूर्वपदस्य च ।**
**अप्रत्यये तथैवेष्ट उवर्णाल्ल इलस्य च ॥ १ ॥**

२०३६ । **प्राचामुपादेरडज्वुचौ च** ।५।३।८०। उपशब्दपूर्वात्प्रातिपदिकात्पूर्वविषये अडच् वुच् एतौ स्तः । चाद्यथाप्राप्तम् । प्राचां ग्रहणं पूजार्थम् । अनुकम्पित उपेन्द्रदत्तः–उपडः, उपकः, उपियः, उपिलः, उपिकः, उपेन्द्रदत्तकः । षड् रूपाणि ।

२०३७ । **जातिनाम्नः कन्** ।५।३।८१। मनुष्यनाम्न इत्येव । जातिशब्दो यो मनुष्यनामधेयस्तस्मात्कन्स्यादनुकम्पायां नीतौ च । सिंहकः । शरभकः । रासभकः । ॐ **द्वितीयं संध्यक्षरं चेत्तदादेर्लोपो वक्तव्यः** । अनुकम्पितः कहोडः–कहिकः । ॐ **एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्यः**[1] । वागाशीर्दत्तः–वाचिकः । कथं 'षडङ्गुलिदत्तः–षडिकः' इति । षषष्ठाजादिवचनात्सिद्धम् ।

२०३८ । **शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात्** ।५।३।८४। एषां मनुष्यनाम्नां ठाजादौ परे तृतीयादच ऊर्ध्वं लोपः स्यात् । पूर्वस्यापवादः । अनुकम्पितः शेवलदत्तः–शेवलिकः, शेवलियः, शेवलिलः । सुपरिकः । विशालिकः । वरुणिकः । अर्यमिकः ।

२०३९ । **अजिनान्तस्योत्तरपदलोपश्च** ।५।३।८२। अजिनान्तान्मनुष्यनाम्नोऽनुकम्पायां कन्, तस्य चोत्तरपदलोपः । अनुकम्पितो व्याघ्राजिनो व्याघ्रकः । सिंहकः ।

२०४० । **अल्पे** ।५।३।८५। अल्पं तैलं तैलकम् ।

२०४१ । **ह्रस्वे** ।५।३।८६। ह्रस्वो वृक्षो वृक्षकः ।

२०४२ । **संज्ञायां कन्** ।५।३।८७। ह्रस्वहेतुका या संज्ञा तस्यां गम्यमानायां कन् । पूर्वस्यापवादः । वंशकः । वेणुकः ।

२०४३ । **कुटीशमीशुण्डाभ्यो रः** ।५।३।८८। ह्रस्वा कुटी कुटीरः । शमीरः । शुण्डारः ।

२०४४ । **कुत्वा डुपच्** ।५।३।८९। ह्रस्वा कुतूः कुतुपः । 'कुतूः कृत्तेः स्नेहपात्रं ह्रस्वा सा कुतुपः पुमान्' ।

---

प्रकरणे' इत्येव ॥—**लोपः पूर्वपदस्य चेति** । ठाजादावनजादौ चेति बोध्यः ॥ 'अप्रत्यये तथैवेष्टः' इत्येतद्व्याचष्टे—**विनापि प्रत्ययमिति** ॥—**ल इलस्य चेति** । इलस्य लः=लोप इत्यर्थः । तत्र 'आदेः परस्य' इति इकारलोपो बोध्यः ॥ **२०३६ प्राचामुपादेः**—। 'बह्वचो मनुष्य–' इत्याद्यनुवर्तते ॥—**उपेन्द्रदत्त इति** । ननु कृतसंधेरुपेन्द्रशब्दादेकादेशस्य पूर्वान्ततया ग्रहणात् 'उपादेः' इति विधीयमानौ प्रत्ययौ स्तां नाम, लोपस्तु नकारादेरेव स्यात् । ततश्च उपक उपड इति रूपे न स्याताम् । किं तु उपयक उपयड इति रूपे स्याताम् । एवं घनिलच्ठच्स्वपि दोष एव । तस्मादिहैव 'द्वितीयं संध्यक्षरं चेत्' इति वार्तिकं कुतो नोक्तमिति चेत् । **अत्राहुः**—प्रकारान्तरेण निर्वाहसंभवान्नोक्तम् । तथा हि—आद्गुणे कृते 'द्वितीयं संध्यक्षरम्' इत्यादिना अकारस्यापि लोपप्रसक्त्या गुणात्पूर्वमेवाकृतव्यूहपरिभाषया प्रत्ययः । न च परिनिष्ठितत्वपरेण समर्थग्रहणेन सौत्थितिरित्यत्रेव परिभाषाबाधः शङ्क्यः । 'प्राग्दिशः–' इति सूत्रे 'समर्थग्रहणं निवृत्तम्' इत्युक्तत्वात् ॥ 'अकृतसंधेः' इति प्रागुक्तज्ञापकबलेन समर्थग्रहणप्रत्याख्यानपक्षेऽपि ज्ञापकस्य विशेषपरत्वाश्रयणादिति ॥ उपेन्द्रः, उपगुः, उपकर्तेत्यादिषूपडादीनां पञ्चानां रूपाणां साम्येऽपि सैन्धवादिष्विव प्रकरणादिना विशेषोऽध्यवसेयः ॥ **२०३७ जातिनाम्नः**—। ये शब्दा जात्यन्तरे प्रसिद्धाः, मनुष्येषु नामत्वेन विनियुक्तास्त इहोदाहरणम् ॥—**द्वितीयमित्यादि** । एचः संध्यक्षरमिति प्राचां संज्ञा ॥—**वागाशीरिति** । वाचि आशीर्यस्येति विग्रहः ॥—**वाचिक इति** । यद्यत्र द्वितीयादच ऊर्ध्वस्य लोपः स्यात् तदा वाच् आ इक इति स्थिते 'यस्येति च' इत्याकारस्य लोपे तस्य स्थानिवत्त्वादाकारान्तस्य भत्वे अन्तर्वर्तिनीं विभक्तिमाश्रित्य चकारान्तस्य पदत्वेन कुत्वजश्त्वयोः सतोर्वागिक इति स्यात् । उत्तरपदलोपे तु अज्झलादेशत्वेन स्थानिवत्त्वाभावात्तुल्यावधिकतया 'यचि भम्' इति भसंज्ञया 'सुप्तिङन्तम्–' इति पदसंज्ञा एकसंज्ञाधिकारात्परत्वाद्बाध्यते । 'स्वादिषु' इति पदसंज्ञा तु न शङ्कनीयैव, 'यचि भम्' इति भसंज्ञायास्तदपवादत्वात् ॥—**कथमिति** । अत्राप्युत्तरपदलोपे जाते जश्त्वं दुर्लभमिति प्रश्नः ॥—**षष इति** । अत्र सौत्र एव लोप इष्यते, न त्वौपसंख्यानिक इत्यर्थः ॥ **२०३८ शेवलसुपरि**—॥—**शेवलिक इति** । 'बह्वचो मनुष्यनाम्नः' इति ठच् । घनिलचोस्तु–शेवलियः, शेवलिलः ॥ 'शेवलादीनां तृतीयाल्लोपो य उच्यते स चाकृतसंधीनां वक्तव्यः । सुपर्याशीः । सुपरिकः । सुपरियः । सुपरिलः । इति भाष्ये स्थितम्, कैयटेन तु सुपरिक इति प्रतीकमुपादाय संहिताकार्ये तु कृते लोपे सति सुपर्यिक इति स्यादिति व्याख्यातम् ॥ **अयं भावः**—संहिताकार्ये यणि कृते तृतीयादच ऊर्ध्वं लोपे सति शीर्दत्त इत्यस्यैव लोपः स्यात् । आकारस्य तु 'यस्येति च' इत्यनेन स्यात्, तथा च स्थानिवद्भावाद्यणो निवृत्तिर्भविष्यतीति ॥ **२०४१ ह्रस्वे** । तैलादौ ह्रस्वदीर्घादिव्यवहाराभावात् वृक्षक इत्युदाहृतम् ॥ यद्यपि 'अल्पे' इत्यनेनैवेदं रूपं सिध्यति तथापि शाब्दबोधे विशेषोऽस्तीत्याहुः ॥ **२०४३ कुटीर इति** ।

---

1 **एकाक्षरेति**—अच्सहितं व्यञ्जनमक्षरम् । एकाच्पूर्वपदानामित्यर्थः । द्वितीयादच ऊर्ध्वमित्यनेन द्वितीयाज्विशिष्टस्य लोपाप्राप्तेरिदम् ।

२०४५ । **कासूगोणीभ्यां ष्टरच्** ।५।३।९०। आयुधविशेषः कासूः । ह्रस्वा सा कासूतरी । गोणीतरी ।

२०४६ । **वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे** ।५।३।९१। वत्सतरः, द्वितीयं वयः प्राप्तः । उक्षतरः । अश्वतरः । ऋषभतरः । प्रवृत्तिनिमित्ततनुत्व एवायम् ।

२०४७ । **किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच्** ।५।३।९२। अनयोः कतरो वैष्णवः । यतरः । ततरः । महाविभाषया–कः, यः, सः ।

२०४८ । **वा बहूनां जातिपरिप्रश्ने डतमच्** ।५।३।९३। बहूनां मध्ये एकस्य निर्धारणे डतमच् वा स्यात् । जातिपरिप्रश्न इति प्रत्याख्यातमाकरे । कतमो भवतां कठः । यतमः । ततमः । वाग्रहणमकजर्थम्, यकः, सकः । महाविभाषया–यः, सः । **किमोऽस्मिन्विषये डतरजपि** । कतरः ।

२०४९ । **एकाच्च प्राचाम्** ।५।३।९४। डतरच् डतमच्च स्यात् । अनयोरेकतरो मैत्रः । एषामेकतमः ।

२०५० । **अवक्षेपणे कन्** ।५।३।९५। व्याकरणेन गर्वितः–व्याकरणकः । येनेतरः कुत्स्यते तदिहोदाहरणम् । स्वतः कुत्सितं तु 'कुत्सिते' २०२९ इत्यस्य ॥

॥ प्रागिवीयानां पूर्णोऽवधिः ॥

---

## तद्धितेषु स्वार्थिकाः ।

२०५१ । **इवे प्रतिकृतौ** ।५।३।९६। कन् स्यात् । अश्व इव प्रतिकृतिः–अश्वकः । प्रतिकृतौ किम् । गौरिव गवयः ।

२०५२ । **संज्ञायां च** ।५।३।९७। इवार्थे कन् स्यात्समुदायश्चेत्संज्ञा । अप्रतिकृत्यर्थमारम्भः । अश्वसदृशस्य संज्ञा–अश्वकः । उष्ट्रकः ।

२०५३ । **लुम्मनुष्ये** ।५।३।९८। 'संज्ञायां च' २०५२ इति विहितस्य कनो लुप्स्यान्मनुष्ये वाच्ये । 'चञ्चा तृणमयः पुमान्' । चञ्चेव मनुष्यश्चञ्चा । वर्ध्रिका ।

२०५४ । **जीविकार्थे चापण्ये** ।५।३।९९। जीविकार्थं यदविक्रीयमाणं तस्मिन्वाच्ये कनो लुप्स्यात् । वासुदेवः । शिवः । स्कन्दः । देवलकानां जीविकार्थासु

---

'स्वार्थिकाः प्रकृतितो लिङ्गमतिवर्तन्ते' इति पुंलिङ्गताऽत्र संगच्छते ॥ **२०४६ वत्सोक्षाश्व—**। तनुत्वं=न्यूनता । सा च प्रवृत्तिनिमित्तस्य, प्रत्यासत्तेः । क्वचित्तु तत्सहचरितधर्मान्तराणाम् । तत्र वत्सः=प्रथमवयाः ॥ वयसश्च प्रथमस्य न्यूनत्वं नाम वयोऽन्तरप्राप्तिः, तदाह—**द्वितीयमिति** । तरुणः=उक्षा । तारुण्यस्य च तनुत्वं तृतीयवयःप्राप्तिः । अश्वायामश्वादुत्पन्नोऽश्वः । अश्वत्वं च जातिः । तत्सहचरितस्याश्वायामश्वादुत्पन्नत्वधर्मस्य न्यूनत्वमन्यपितृकता । तथा च गर्दभेनाश्वायामुत्पादितोऽश्वतरः । ऋषभो भारस्य वोढा । तस्य तनुत्वं भारोद्वहने मन्दशक्तिता, तद्वांस्तु ऋषभतरः ॥ **२०४७ किंयत्तदो—**॥—**कतरो वैष्णव इति** । गुणेन निर्धारणमिदम् । क्रियासंज्ञाभ्यां निर्धारणे तु–कतरोऽध्यापकः, कतरो देवदत्त इत्यादि ज्ञेयम् ॥ ननु द्वयोरेकस्य निर्धारणे डतरच्चेत् भवति, तर्हि 'कयोरन्यतरो देवदत्तः' 'ययोरन्यतरः' 'तयोरन्यतरः' इत्यत्रापि प्राप्नोति । **अत्राहुः**—निर्धार्यमाणवाचिभ्य एवायं प्रत्ययः, अभिधानस्वाभाव्यात् । तेनात्र नातिप्रसङ्ग इति ॥ एकस्येति किम् ? 'द्वयोः' इति कर्मणि षष्ठी माभूत् । तथा हि सति 'अस्मिन् सङ्घे कौ देवदत्तयज्ञदत्तौ' इत्यादावेव स्यात् ॥ **२०४८ वा बहूनाम्—**। 'किंयत्तदः' इति वर्तते ॥ जातिश्च परिप्रश्नश्चेति समाहारद्वन्द्वः । अत्र जाताविति सर्वेषां विशेषणम् ॥ षष्ठीसमासे तु गुणभूतस्य जातिग्रहणस्य निष्कृष्य संबन्धोऽनुपपन्नः स्यात् । परिप्रश्नग्रहणं तु किम एव विशेषणम् । तच्च क्षेपनिवृत्त्यर्थम् ॥ तत्र जातिग्रहणं प्रायोऽभिप्रायम् । क्रियागुणसंज्ञाभिरपि निर्धारणे डतरच इष्टत्वात् । तथा पूर्वसूत्रे द्वयोरिति प्रायोऽभिप्रायम् । बहूनां निर्धारणेऽपि डतरच इष्टत्वात् ॥ तथा च **वार्तिकम्**—'किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाध्यानर्थक्यम्' इति ॥ **अत्र कैयटः**—'द्वयोः' इति, 'जातिपरिप्रश्ने' इति च न कर्तव्यमिति भाव इति । तदेतदाह—**प्रत्याख्यातमाकर इति** ॥—**कठ इति** । कतमो भवतामध्यापकः, शूरो देवदत्तो वेत्यप्युदाहर्तव्यम् ॥—**यकः सकः इति** । कक इति तु नोक्तम् । अकच्सहितस्यापि 'किमः कः' इत्ययमादेश इति व्याख्यातत्वात् ॥—**महाविभाषयेति** । 'प्राग्दिशः–' इति सूत्रे समर्थप्रथमग्रहणयोर्निवृत्तत्वेऽपि वाग्रहणमनुवर्तते इत्युक्तत्वादिति भावः ॥ 'किंयत्तदः–' इति सूत्रे द्वयोरित्यस्य प्रत्याख्यानादाह—**किमोऽस्मिन्निति** ॥ **२०४९ एकाच्च—**। प्राचांग्रहणं पूजार्थम् । विकल्पोऽनुवर्तत एव ॥ **२०५० अवक्षेपणे कन्** । कुत्सिते तु कः । स्वरे विशेषः ॥—**येनेतर इति** । अवक्षिप्यते येनेत्यवक्षेपणशब्दः करणे ल्युडन्त इति भावः ॥ **प्रागिवीयानाम्पूर्णोऽवधिः** ॥

**२०५१ अश्वक इति** ॥ अश्वशब्दोऽश्वे एव वर्तते, कन्प्रत्ययस्तु प्रतिकृतिरूपे सदृश इति नायं स्वार्थिक इत्येके ॥ अन्ये तु सादृश्यनिबन्धनादभेदोपचाराद्गौर्वाहीक इतिवदश्वशब्द एव प्रतिकृतौ वर्तते । प्रत्ययस्तु तस्यैवौपचारिकत्वस्य बोधक इत्याहुः ॥ प्रतिकृतौ किम् ? गौरिव गवयः । तृणचर्मकाष्ठादिनिर्मितं प्रतिमापरपर्यायं वस्तु प्रतिकृतिः । गवयस्तु नैवम् ॥ **२०५२ समुदायश्चेदिति** । प्रकृतिप्रत्ययसमुदायश्चेदश्वसदृशस्य संज्ञेत्यर्थः ॥ **२०५३ चञ्चा । वर्ध्रिकेति** । लुपि युक्तवद्भावात् स्त्रीलिङ्गता ॥ **२०५४ वासुदेवः । शिव इत्यादि** । याः प्रतिमाः प्रतिगृह्य गृहाद् गृहं भिक्षमाणा अटन्ति ता एवमुच्यन्ते । देवलका अपि त एव भिक्षवोऽभिप्रेताः । यास्त्वायतनेषु प्रतिष्ठाप्यन्ते पूज्यन्ते च तासूत्तरसूत्रेण लुप् । तदुक्तम्—**'अर्चासु**

देवप्रतिकृतिष्विदम् । अपण्ये किम् । हस्तिकान्विक्रीणीते ।

२०५५ । देवपथादिभ्यश्च ।५।३।१००। कनो लुप्स्यात् । देवपथः । हंसपथः । आकृतिगणोऽयम् ।

२०५६ । वस्तेर्ढञ् ।५।३।१०१। इवेत्यनुवर्तत एव । प्रतिकृताविति निवृत्तम् । वस्तिरिव वास्तेयम् । वास्तेयी ।

२०५७ । शिलाया ढः ।५।३।१०२। शिलेव-शिलेयम् । 'शिलायाः' इति योगविभागाड्ढञपीत्येके, शैलेयम् ।

२०५८ । शाखादिभ्यो यः ।५।३।१०३। शाखेव शाख्यः । मुख्यः । जघनमिव जघन्यः । अग्र्यः । शरण्यः ।

२०५९ । द्रव्यं च भव्ये ।५।३।१०४। द्रव्यम्, अयं ब्राह्मणः ।

२०६० । कुशाग्राच्छः ।५।३।१०५। कुशाग्रमिव कुशाग्रीया बुद्धिः ।

२०६१ । समासाच्च तद्विषयात् ।५।३।१०६। इवार्थविषयात्समासाच्छः स्यात् । काकतालीयो देवदत्तस्य वधः । इह काकतालसमागमसदृशश्चौरसमागम इति समासार्थः । तत्प्रयुक्तः काकमरणसदृशस्तु प्रत्ययार्थः । अजाकृपाणीयः । 'अतर्कितोपनतः' इति फलितोऽर्थः ।

२०६२ । शर्करादिभ्योऽण् ।५।३।१०७। शर्करेव शार्करम् ।

२०६३ । अङ्गुल्यादिभ्यष्ठक् ।५।३।१०८। अङ्गुलीव आङ्गुलिकः । भरुजेव भारुजिकः ।

२०६४ । एकशालायाष्ठजन्यतरस्याम् ।५।३।१०९। एकशालाशब्दादिवार्थे ठञ्वा । पक्षे ठक् । एकशालेव-एकशालिकः, ऐकशालिकः ।

२०६५ । कर्कलोहितादीकक् ।५।३।११०। कर्कः शुक्लोऽश्वः, स इव कार्कीकः । लौहितीकः स्फटिकः ।

२०६६ । पूगाञ्ञ्योऽग्रामणीपूर्वात् ।५।३।११२। इवार्थो निवृत्तः । नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः सङ्घाः पूगाः, तद्वाचकात्स्वार्थे ञ्यः स्यात् । लौहितध्वज्यः । 'व्रातच्फञोरस्त्रियाम्' ११०२ । व्रातः-कापोतपाक्यः । च्फञ्-कौञ्जायन्यः, ब्राध्नायन्यः ।

२०६७ । आयुधजीविसङ्घाञ्ञ्यड् वाहीकेष्वब्राह्मणराजन्यात् ।५।३।११४। वाहीकेषु य आयुधजीविसङ्घस्तद्वाचिनः स्वार्थे ञ्यट् । क्षौद्रक्यः । मालव्यः । टित्वान्ङीप्, क्षौद्रकी । आयुधेति किम् । मल्लाः । सङ्घेति किम् । सम्राट् । वाहीकेषु किम् । शबराः । अब्राह्मणेति किम् । गोपालकाः, शालङ्कायनाः । ब्राह्मणे तद्विशेषग्रहणम् । राजन्ये स्वरूपग्रहणम् ।

२०६८ । वृकाट्टेण्यण् ।५।३।११५। आयुधजीविसङ्घवाचकात्स्वार्थे । वार्केण्यः । आयुधेति किम् । जातिशब्दान्मा भूत् ।

२०६९ । दामन्यादित्रिगर्तषष्ठाच्छः ।५।३।११६।

पूजनार्थासु चित्रकर्मध्वजेषु च । इवे प्रतिकृतौ लोपः कनो देवपथादिषु' इति । अर्चासु=प्रतिमासु, कीदृशीषु? पूजनार्थासु गृहेष्वायतनेषु वा याः पूज्यन्ते तासु । चित्रकर्मध्वजाभ्यां तद्गताः प्रतिकृतयो लक्ष्यन्ते ॥ अर्चासूदाहरणं—शिवः । विष्णुः ॥ चित्रकर्मणि—अर्जुनः । दुर्योधनः ॥ ध्वजेषु—कपिः । गरुडः । सिंहः ॥ सुवर्णसिंहमकरादयो राज्ञां ध्वजेषु सन्ति ॥—हस्तिकानिति । ईदृशमेव विषयमभिप्रेत्य पठन्ति—'रामं सीतां लक्ष्मणं जीविकार्थे विक्रीणीते यो नरस्तं च धिग्धिक् । अस्मिन्पद्ये योऽपशब्दान्न वेत्ति व्यर्थप्रज्ञं पण्डितं तं च धिग्धिक्' इति । अयं भावः—'अपण्ये' इत्युक्तत्वात्पण्ये हस्तिकानितिवत् रामकं सीतिकां लक्ष्मणकमिति प्रयोगा एव साधव इति ॥ २०५५ देवपथ इत्यादि । देवपथ इव प्रतिकृतिः, हंसपथ इव प्रतिकृतिरिति विग्रहः ॥ २०५६ वस्तिरिति । 'बस्तिर्नाभेरधो द्वयोः' इत्यमरः ॥—द्रव्यं च भव्ये । द्रुशब्दादिवार्थे यत्प्रत्ययो निपात्यते ॥ २०६१ समासाच्च तद्विषयात् । तच्छब्देन प्रकृत इवार्थो निर्दिश्यते इत्याह—इवार्थविषयादिति ॥—छः स्यादिति । इवार्थे इति बोध्यम्, 'पूगाञ्ञ्यः–' इत्यतः प्रागिवेत्यधिकारात् । शस्त्री श्यामेत्यादौ तु एक एव इवार्थः । स च समासान्तर्भूत इति छो न भवति, उक्तार्थानामप्रयोगात् ॥—काकतालीय इति[1] । प्रकृतसूत्रादेव ज्ञापकादिवार्थे समासः, सुप्सुपेति वा । उभयथापि विशेषसंज्ञाविनिर्मुक्तः । स च छप्रत्ययविषय एव । तेनेह स्वातन्त्र्यमुपाध्यन्तरयोगो विग्रहश्च नेत्याकरः ॥ इह काकतालेत्यादि । आगच्छतः काकस्याऽकस्मात्तालफलपतनाद्यथा वधः, तथैव चाकस्मिकचोरसमागमाद्देवदत्तवधः ॥ एवमजाया आगच्छन्त्याः कृपाणपतनाद् यथा वधः, तत्सदृशं मरणमिति फलितोऽर्थः ॥—अतर्कितोपनत इति । अचिन्तितोपपन्नः । यादृच्छिक इत्यर्थः ॥ २०६६ पूगाञ्ञ्यो—। स्वरूपग्रहणं तु न भवति, 'अग्रामणीपूर्वात्' इति वचनात् । पूर्वशब्दो ह्यवयववचनः ॥ अग्रामणीपूर्वादिति किम्? देवदत्तो ग्रामणीर्येषां ते देवदत्तकाः । 'स एषां ग्रामणीः' इति कन् । अत्र समुदायः पूगवचनः ॥—लौहितध्वज्य इति । लोहितः ध्वजो यस्य संघस्य स लोहितध्वजः । स एव लौहितध्वज्यः ॥ व्रातच्फञोः—। उत्सेधजीवित्वं व्रातस्य पूगाद्विशेषः । उत्सेधः शरीरायासः ॥—कौञ्जायन्य इति । 'गोत्रे कुञ्जादिभ्यः' इति च्फञ् ॥ २०६९ दामन्यादित्रिगर्तषष्ठात्—।

[1] काकतालीय इति—अत्र पूर्वपदमुपमानकाकागमनपरम्, उत्तरपदं चोक्तपूर्वपदार्थसमानाधिकरणोपमानतालपतनपरम् । समुदायश्चोपमेयदेवदत्तगमनसमानाधिकरणचोरपतनपर इति बोध्यम् ।

दामन्यादिभ्यस्त्रिगर्तषष्ठेभ्यश्चायुधजीविसङ्घवाचिभ्यः स्वार्थे छः स्यात् । त्रिगर्तः षष्ठो वर्गो येषां ते त्रिगर्तषष्ठाः ।

आहुस्त्रिगर्तषष्ठांस्तु कौण्डोपरथदाण्डकी ।
क्रौष्टुकिर्जालमानिश्च ब्रह्मगुप्तोऽथ जानकिः ॥ १ ॥

दामनीयः । दामनीयौ । दामनयः । औलपि-औलपीयः । त्रिगर्तः-कौण्डोपरथीयः, दाण्डकीयः ।

२०७० । **पर्श्वादियौधेयादिभ्योऽणञौ** ।५।३।११७। आयुधजीविसङ्घवाचिभ्य एभ्यः क्रमादणञौ स्तः स्वार्थे । पार्शवः । पार्शवौ । पर्शवः । यौधेयः । यौधेयौ । यौधेयाः ।

२०७१ । **अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ्** ।५।३।११८। अभिजिदादिभ्योऽणन्तेभ्यः स्वार्थे यञ् स्यात् । अभिजितोऽपत्यमाभिजित्यः । वैदभृत्यः । शालावत्यः । शैखावत्यः । शामीवत्यः । और्णावत्यः । श्रौमत्यः ।

२०७२ । **ञ्याद्यस्तद्राजाः** ।५।३।११९। 'पूगाञ्ञ्यः-' २०६६ इत्यारभ्य उक्ता एतत्संज्ञाः स्युः । तेनास्त्रियां बहुषु लुक् । लोहितध्वजाः । कपोतपाकाः । कौञ्जायनाः । ब्राध्नायनाः । इत्यादि ।

२०७३ । **पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्च** ।५।४।१। लोपवचनमनैमित्तिकत्वार्थम् । अतो न स्थानिवत् । 'पादः पत्' ४१५ । 'तद्धितार्थ-' ७२९ इति समासे कृते प्रत्ययः । वुन्नन्तं स्त्रियामेव । द्वौ द्वौ पादौ ददाति द्विपदिकाम् । द्विशतिकाम् । ॐ **पादशतग्रहणमनर्थकमन्यत्रापि दर्शनात्** । द्विमोदकिकाम् ।

२०७४ । **दण्डव्यवसर्गयोश्च** ।५।४।२। वुन् स्यात् । अवीप्सार्थमिदम् । द्वौ पादौ दण्डितः-द्विपदिकाम् । द्विशतिकाम् व्यवसृजति । ददातीत्यर्थः ।

२०७५ । **स्थूलादिभ्यः प्रकारवचने कन्** ।५।४।३। जातीयरोऽपवादः । स्थूलकः । अणुकः । ॐ **चञ्चद्बृहतोरुपसंख्यानम्** । चञ्चत्कः । बृहत्कः । (ग)

समाहारद्वन्द्वात्पञ्चमी ॥—**त्रिगर्तषष्ठेभ्य इति** । येषामायुधजीविनां षडन्तर्वर्गाः । षष्ठवर्गस्तु त्रिगर्तस्तेभ्य इत्यर्थः ॥ त्रिगर्तषष्ठाः के इत्याकाङ्क्षायामाह—**आहुस्त्रिगर्तषष्ठांश्चेति** । अत्र जानकयस्त्रिगर्तवर्गः । तेषु च त्रिगर्तषष्ठेषु प्रथमपञ्चमौ कौण्डोपरथब्राह्मगुप्तशब्दौ शिवाद्यणन्तौ शेषास्त्विञन्ताः ॥ केचित्तु अतद्धितान्तमेव पञ्चमं ब्रह्मगुप्तशब्दं पठन्ति ॥ —**कौण्डोपरथीय इति** । बहुवचने तु कौण्डोपरथाः, दाण्डकय इत्यादि ॥ **२०७० पर्श्वादियौ । पार्शव इति** । पर्शुरिति जनपदशब्दः, ततोऽपत्ये 'द्व्यञ्मगध-' इत्यण् । बहुत्वे तद्राजत्वाल्लुक् । पुनः संघविवक्षायामनेनाण् । अस्याप्यणो बहुत्वे तद्राजत्वाल्लुक् । तदाह—**पर्शव इति** । ननु पर्शुरिति यो जनपदशब्दस्तस्मादेवानेन स्वार्थेऽण् विधीयताम्, अपत्यवाचिपर्शुशब्दात्संघविवक्षायामण्विधौ तु स्वार्थिकत्वं न सिध्येदिति चेत् । **अत्राहुः**—केवलः पर्शुशब्द एव जनपदवाची न त्वणन्त इति जनपदवाचिनः स्वार्थेऽण् न विधीयते, किं तु 'द्व्यञ्मगध-' इत्यणः 'तद्राजस्य बहुषु-' इत्यादिना लुकि बह्वपत्यवाचिपर्शुशब्दादेव स्वार्थे विधीयते, स्वार्थश्चात्र संघ एव । न च पर्शुशब्दस्य संघवाचित्वं नेति शङ्क्यम् । बह्वपत्यवाचित्वे संघवाचित्वध्रौव्यादिति न काप्यनुपपत्तिरिति ॥—**यौधेय इति** । युध्यतेऽसौ युधा । युधेरिगुपधलक्षणः कः । युधाया अपत्यं 'द्व्यचः' इति ढक् । तदन्तात्संघविवक्षायामनेनाञ् । तेन यौधेय इति आद्युदात्तं भवति । किं च यौधेयस्याङ्को लक्षणं वा यौधेयः, 'संघाङ्कलक्षण-' इत्यञन्तादण् । एवं यौधेयादिषु ये ढगन्ताः शौक्रेयादयस्तेषु सर्वेषु प्रयोजनद्वयमूह्यम् ॥—**यौधेया इति** । अञो लुक्, अन्तोदात्तम् । न च 'न प्राच्यभर्ग-' इत्यादिना निषेधः शङ्क्यः । स्त्रियामेव तन्निषेधात् ॥ **२०७१ आभिजित्य इति** । आभिजितशब्दादणन्ताद्यञ् । एवं विदभृत्प्रभृतिभ्योऽणि तदन्तेभ्यो वैदभृतशालावतशैखावतादिभ्यो यञ् ॥ **२०७३ पादशतस्य संख्यादेः** । पादशतस्य किम् ? द्वौ द्वौ माषौ ददाति ॥ संख्यादेरिति किम् ? पादं पादं ददाति ॥ वीप्सायामिति किम् ? द्वौ पादौ ददाति ॥—**अनैमित्तिकत्वार्थमिति** । निमित्ते भवो नैमित्तिकः । अध्यात्मादित्वाट्ठञ् ॥—**तद्धितार्थ इति** । यद्यपि प्रकृत्युपाधिर्वीप्सा, तथापि वुनो द्योत्या-इति तद्धितार्थो भवत्येति भावः ॥—**ददातीति** । समर्पणमात्रमिह ददातेरर्थः, न तु परस्वत्वापादनपर्यन्तम् । तथात्वे हि उत्तरसूत्रविषयत्वं स्यात् । केचित्तु व्यवसृजतेर्धातोः प्रयोगे सत्येव उत्तरसूत्रस्य प्रवृत्तिमाहुः ॥—**अन्यत्रापि दर्शनादिति** । द्वौ द्वौ माषौ ददातीत्यादौ त्वनभिधानान्नातिप्रसङ्ग इति भावः ॥ **२०७४ दण्डव्यवसर्ग—** । दण्डनं दण्डः । दण्डेश्चुरादिण्यन्ताद्भावे घञ् । अत्राप्युदाहरणे 'तद्धितार्थ' इति समासः । स्त्रीलिङ्गं च तद्धितार्थः । यद्वा प्रकृत्यर्थ एव तद्धितार्थः, स्वार्थिकत्वाद्वुनः ॥—**द्वौ पादौ दण्डित इति** । देवदत्तेन यज्ञदत्त इति शेषः । दण्डेरप्रधाने कर्मणि क्त इति यज्ञदत्त इत्यत्र प्रथमा । द्वौ पादावित्यत्र द्विपदिकामित्यत्र च द्वितीया भवति । 'दण्डिर्ग्रहणार्थः' इति तु द्विकर्मकेषूक्तम् । तथा च द्विपदिकाकर्मकग्रहणविषयीभूतो यज्ञदत्त इत्यादिरर्थं इति नव्याः ॥ **२०७५ स्थूलादिभ्यः—** । प्रकारो भेदः सादृश्यं च । उभयत्रापि यथासंभवं कन् ॥—**जातीयरोऽपवाद इति** । तेनायमपि तद्वदेव प्रकारवति भवति, न तु प्रकारमात्रे इत्युक्तं भवति ॥—**चञ्चद्बृहतोरिति** । एतावपि स्थूला-

१ 'जालकिः' इत्यपि पाठः । २ जातीयरोऽपवाद इति—'जातीयर्विधौ भेद एव प्रकारः' इति जयादित्यमतेऽपवाद इत्यस्य परत्वाद्बाधक इत्यर्थः । 'तत्राप्युभयं गृह्यते' इति वामनमते तु यथाश्रुतमेव ।

पिष्, विष्, शिष्, शुष्, श्लिष्यतयो, घसिः ॥ वसतिर्दह्, दिहि, दुहो, नह्, मिह्, रुह्, लिह्, वहिस्तथा ॥६॥ अनुदात्ता हलन्तेषु धातवो ह्यधिकं शतम् ॥ तुदादौ मतभेदेन स्थितौ यौ च चुरादिषु ॥ ७ ॥ तृप्, दृपी, तौ धारयितुं श्यना निर्देश आदृतः ॥ किं च—स्विद्यपद्यौ, सिध्यबुध्यौ, मन्यपुष्यश्लिषः श्यना ॥ ८ ॥ वसिः शपा लुका यौतिर्निर्दिष्टोऽन्यविवृत्तये ॥ णिजिर्, विजिर्, शक्लृ, इति सानुबन्धा अमी तथा ॥ ९ ॥ विन्दतिश्चान्द्रदौर्गादेरिष्टो भाष्येऽपि दृश्यते ॥ व्याघ्रभूत्यादयस्त्वेनं नेह पेठुरिति स्थितम् ॥ १० ॥ रञ्जि, मस्जी, अदि, पद्दी, तुद्, क्षुध्, शुषि-पुषी, शिषिः ॥ भाष्यानुक्ता नवेहोक्ता व्याघ्रभूत्यादिसंमतेः ॥ ११ ॥ ३ स्पर्ध संघर्षे । संघर्षः पराभिभवेच्छा । धात्वर्थेनोपसंग्रहादकर्मकः । स्पर्धते ।

२२५९ । शर्पूर्वाः खयः ।७।४।६१। अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते । 'हलादिः शेषः' २१७९ इत्यस्यापवादः । पस्पर्धे । स्पर्धिता । स्पर्धिष्यते । स्पर्धताम् । अस्पर्धत । स्पर्धेत । स्पर्धिषीष्ट । अस्पर्धिष्ट । अस्पर्धिष्यत । ४ गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च । गाधते । जगाधे । ५ बाधृ लोडने । लोडनं प्रतिघातः । बाधते । ६ नाधृ ७ नाथृ याच्ञोपतापैश्वर्याशीःषु । ॐ आशिषि नाथ इति वाच्यम् । अस्याशिष्येवात्मनेपदं स्यात् । नाथते । अन्यत्र नाथति । नाधते । ८ दध धारणे । दधते ।

२२६० । अत एकहल्मध्येऽनादेशादेर्लिटि ।६।४।१२०। लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्याकारस्य एकारः स्यादभ्यासलोपश्च किति लिटि ।

२२६१ । थलि च सेटि ।६।४।१२१। प्रागुक्तं स्यात् । आदेशश्चेह वैरूप्यसंपादक एवाश्रीयते, शसिदद्योः प्रतिषेधवचनाज्ज्ञापकात् । तेन प्रकृतिजश्वरां तेषु सत्स्वपि एत्वाभ्यासलोपौ स्त एव । देधे । देधाते । देधिरे । अतः किम् । दिदिवतुः । तपरः किम् । ररासे । एकेलादि किम् । तत्सरतुः । अनादेशादेः किम् । चकणतुः । लिटा आदेशविशेषणादिह स्यादेव-नेमिथ, सेहे । ९ स्कुदि आप्रवणे । आप्रवणम्-उत्प्लवनमुद्धरणं च ।

दिक्रमेण ये वर्णास्तत्संख्याका बोध्या इत्यर्थः । अत एव कान्त एकः, चान्ताः षट्, छान्त एकः, जान्ताः पञ्चदशेत्यादि व्याख्यातम् । क इत्येकस्य, च इति षण्णां, ण इति पञ्चदशानां संज्ञेत्याद्यभ्युपगमात् ॥ पान्तेषु द्वयोः श्यनाः निर्देशस्य फलमाह—**तुदादाविति** । तृप्दृपी मतभेदेन तुदादौ स्थितौ । चुरादौ तु तृपिः सर्वमतेन स्थितः । दृपिस्त्वेकीयमतेनेति विवेकः । अत एव वक्ष्यति—'तृप तृम्फ तृप्तौ' । द्वावपि द्वितीयान्तावित्यन्ये । 'दृप दृम्फ उत्क्लेशे' । प्रथमः प्रथमान्तः, द्वितीयो द्वितीयान्त इत्येके इति च तुदादौ । चुरादौ तु 'तृप तृप्तौ' 'तृप दृप संदीपने' इत्येके इति च ॥—**अन्यनिवृत्तये इति** । निवर्तनीयास्तु 'ञिष्विदा स्नेहनमोचनयोः' । 'पद स्थैर्ये' । 'षिध गत्याम्' । 'षिधू शास्त्रे माङ्गल्ये च' । 'बुधिर् बोधने' इति भौवादिः । 'मनु अवबोधने' तानादिकः । 'पुष पुष्टौ' भौवादिकः क्रैयादिकोऽनुदात्तश्च । 'श्लिष दाहे' भौवादिकः । 'वस आच्छादने' आदादिकः, एते अनुदात्तत्वराहित्यात् सेटः । 'युञ् बन्धने' क्रैयादिकोऽयमनुदात्त इत्यनिट् । श्यना निर्देशेन संग्राह्यास्तु—'ञिष्विदा गात्रप्रक्षरणे', 'पद गतौ', षिधू संराद्धौ', 'बुध अवगमने', 'मन ज्ञाने', 'पुष पुष्टौ', 'श्लिष आलिङ्गने', 'वस निवासे' । एतेऽनिटः । 'यु मिश्रणामिश्रणयोः' अयं सेट् ॥—**अमी तथेति** । 'णिजि शुद्धौ', 'ओविजी भयचलनयोः' 'शक मर्षणे' इत्येषां क्रमेण आदादिकतौदादिकदैवादिकानां व्यावृत्तये सानुबन्धा निर्दिष्टा इत्यर्थः । विन्दतिरिति 'विद्लृ लाभे' ॥—**इष्ट इति** । अनिट्त्वेनेति शेषः ॥—**भाष्यानुक्ता इति** । भाष्यकृताऽनुक्ताः, न तु प्रत्याख्याता इति नास्तीह तद्विरोधः । ततश्च व्याघ्रभूत्यादिग्रन्थानुरोधात्, शुष्कधृष्टौ 'क्तेन नञ्विशिष्टेनानञ्' इत्यादि सौत्रप्रयोगात्, अत्तुं प्रतिपत्तुमित्यादिसार्वलौकिकव्यवहाराच्च उपलक्षणतयैव भाष्यं नेयमिति भावः ॥—**अकर्मक इति** । अत्र केचित्—अभिभवेच्छा धात्वर्थस्तथा च स्पर्धार्थकस्य सकर्मकता दृश्यते—'आह्वास्त मेरावमरावतीं या' इति । उदाहरिष्यते च 'स्पर्धायामाङः' इत्यत्र स्वयमेव—'कृष्णश्चाणूरमाह्वयते स्पर्धत इत्यर्थः' इति । श्रीहर्षोऽपि प्रायुङ्क्त—'तेनासत्ययुगान्तं वा त्रेता स्पर्धितुमर्हति' इति । अतोऽस्य सकर्मकत्वं न्याय्यमित्याहुः ॥ २२५९ **शर्पूर्वाः**—॥ अतद्गुणसंविज्ञानोऽयं बहुव्रीहिः । तेन शरो न शेषः, किं तु खयामेव । इह स्पर्ध इत्यत्र रेफस्यापि द्वित्वं भवति, द्वितीयस्यैकाचः संबन्धिरेफस्यैव 'नन्द्राः–' इति निषेधादिति बोध्यम् ॥ **गाधृ** । ऋकारो 'नाग्लोपिशास्वृदिताम्' इति निषेधार्थः । अजगाधत् । आस्पदं स्थापनं अवस्थानं वा प्रतिष्ठा । एकत्र स्थापनं संदर्भो वा ग्रन्थः ॥ **नाथृ नाधृ** । उपतापो रोगः ॥ अनुदात्तेत्त्वादेव सिद्धे नियमार्थं वार्तिकमित्याह—**आशिष्येवेति** ॥ २२६० **अत एकहल्मध्ये**—। एकशब्दोऽत्रासहायवचनः, एकयोर्हलोर्मध्ये इत्यर्थः । तद्व्याचष्टे—**असंयुक्तेति** । इष्टानुरोधेन लिटीत्यावर्त्य आदेशविशेषणम्, एत्वस्य निमित्तं च क्रियत इत्याह—**लिण्निमित्तेति** । किति लिटीति च । यद्यपि 'गमहन–' इति सूत्रे क्ङितीति वर्तते, तथापि प्रयोजनाभावात् ङितीत्येतन्नानुवर्तत इति भावः ॥ किति किम्? ननाद ॥ लिटि किम्? पापच्यात् ॥ २२६१ **चकणतुरिति** । न चैवमपि बभणतुरित्यत्र 'अभ्यासे चर्च' इत्यस्यासिद्धत्वादेत्वाभ्यासलोपौ स्त एवेति वाच्यम् । फल-

१ अकर्मक इति—देवदत्तो यज्ञदत्तं स्पर्धते इत्यत्र तु स्पर्धापूर्वके शब्दने वृत्तिः । २ 'तत्र सत्ययुगं तावत्' इति पाठः ।

२२६२ । इदितो नुम् धातोः ।७।१।५८। स्कुन्दते । चुस्कुन्दे । १० श्विदि श्वैत्ये । अकर्मकः । श्विन्दते । शिश्विन्दे । ११ वदि अभिवादनस्तुत्योः । वन्दते । ववन्दे । १२ भदि कल्याणे सुखे च । भन्दते । बभन्दे । १३ मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु । मन्दते । ममन्दे । १४ स्पदि किंचिच्चलने । स्पन्दते । पस्पन्दे । १५ क्लिदि परिदेवने । 'शोके' इत्यर्थः । सकर्मकः । क्लिन्दते चैत्रम् । चिक्लिन्दे । १६ मुद हर्षे । मोदते । १७ दद दाने । ददते ।

२२६३ । न शसददवादिगुणानाम् ।६।४।१२६। शसेर्ददेर्वकारादीनां गुणशब्देन भावितस्य च योऽकारस्तस्य एत्वाभ्यासलोपौ न । ददद । ददद ।

१८ ष्वद १९ स्वर्द आस्वादने । अयमनुभवे सकर्मकः । रुचावकर्मकः ।

२२६४ । धात्वादेः षः सः ।६।१।६४। धातोरादेः षस्य सः स्यात् । 'सात्पदाद्योः' २१२३ इति षत्वनिषेधः । अनुस्वदते । सस्वदे । स्वर्दते । सस्वर्दे । २० उर्द माने क्रीडायां च ।

२२६५ । उपधायां च ।८।२।७८। धातोरुपधाभूतयो रेफवकारयोर्हल्परयोः परत इको दीर्घः स्यात् । ऊर्दते । ऊर्दांचक्रे । २१ कुर्द २२ खुर्द २३ गुर्द २४ गुद क्रीडायामेव । कूर्दते । चुकूर्दे । गूर्दते । गोदते । जुगुदे । २५ षूद क्षरणे । सूदते । सुषूदे ॥—

सेक्,सृप्,सृ,स्तृ,सृज्,स्तृ,स्त्याऽन्ये दन्त्याजन्तसादयः ।

भजग्रहणेन एत्वविधिं प्रति तत्सूत्रस्य सिद्धत्वज्ञापनात् । एवं चादेशश्चेह वैरूप्यसंपादक एव गृह्यते इति व्याख्यानमवश्यं कर्तव्यमेवेति दिक् ॥ **२२६२ मदि स्तुतीति** । मोदः संतोषः । मदो गर्वः । स्वप्न आलस्यम् ॥ **२२६३ न शसदद—**। 'शसु हिंसायाम्' दन्त्यान्तः । सूत्रेऽवयवावयविभावः षष्ठ्यर्थः । तथा च शसददवादीनां योऽकार इत्यन्वयसंभवेऽपि अकारस्य गुणरूपत्वाद्भेदनिबन्धना षष्ठी न संभवतीत्याशङ्क्य तन्निर्वाहार्थं व्याचष्टे—**गुणशब्देन भावितस्येति** । भावितत्वं च साक्षात्परम्परासाधारणम् । तथा च शशरतुः पपरतुरित्यादौ गुणशब्देन क्रियमाणो योऽर् तदवयवोऽकारः । लुलविथेत्यादौ तु गुणशब्देन क्रियमाणो य ओकारस्तत्स्थानिकस्यावादेशस्यावयवोऽकार इत्यर्थान्नास्त्यत्रानुपपत्तिः ॥—**ददद इति** । शशसतुः । शशसुः । ववमतुः । ववमुरित्यादावपि निषेधो बोध्यः ॥ **ष्वद स्वर्द** ॥—**अयमिति** । प्रत्येकाभिप्रायेणोक्तमित्याहुः ॥—**सकर्मक इति** । स्वदस्व हव्यानि, हव्यान्यनुभवेत्यर्थः ॥—**अकर्मक इति** । 'अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा' इति श्रीहर्षः । न स्वदते, न रोचत इत्यर्थः ॥ **२२६४ धात्वादेः—**। धातुग्रहणं किम् ? षट् षड् ॥ आदेः किम् ? लषति ॥ **२२६५ उपधायां च** । 'सिपि धातोः—' इत्यतो धातोरित्यनुवर्तते । 'र्वोरुपधायाः—' इत्यतः र्वोरिति इति । 'हलि च' इत्यतो हलीति च । तदाह—**धातोरित्यादि** । धातोः किम् ? 'ऋच्छतः', कुरूः कुर्वौ कुर्वे इत्यत्रेको दीर्घो मा भूत् । न चात्र रेफस्य प्रातिपदिकोपधात्वेऽपि पदोपधात्वाभावादेव दीर्घो न भवेदिति धातोरित्यनुवर्तनमिहानावश्यकमिति वाच्यम् । पदस्येत्यनुवृत्तौ तु कूर्दते खूर्दते इत्याद्यसिद्धिप्रसङ्गात् । वस्तुतस्तु पूर्वत्रासिद्धे न स्थानिवदिति स्वीकारात् 'अचः परस्मिन्—' इति स्थानिवत्त्वस्य निषेधाभ्युपगमेऽपि कार्यकालपक्षे 'असिद्धं बहिरङ्गम्—' इति परिभाषायाः प्रवृत्तेर्बहिरङ्गस्य यणोऽसिद्धत्वात् कुर्वौ कुर्वे इत्यत्र 'उपधायां च' इति दीर्घो न भवेदिति धातुग्रहणानुवर्तनस्य नात्यन्तावश्यकता, पदस्येत्यनुवृत्त्या कूर्दते इत्यादौ तु दीर्घः सिध्यत्येवेत्याहुः ॥ रेफवकारयोः किम् ? 'पुष्प विकसने' पुष्पति ॥ हल्परयोः किम् ? चिरिणोति । जिरिणोति ॥ इकः किम् ? अर्च्यते । नर्दति ॥ ननु 'हलि च' इत्यत्र रेफवकारयोर्हल्परयोरिको दीर्घः स्यादिति व्याख्यायां कूर्दते गूर्दते इत्यादिसिध्यत्येवेति सूत्रमिदं व्यर्थमिति चेत् । **अत्राहुः**—'हलि च' इत्यत्र धातुग्रहणमनुवर्तनीयमेव । अन्यथा दिवमिच्छति दिव्यतीत्यादावतिप्रसङ्गः स्यात् । तथा च 'उपधायां च' इति सूत्राभावे उपधाभूतयोः र्वोः परतो दीर्घो न स्यात् किं तु रेफवान्तयोरेव धात्वोः 'हलि च' इति सूत्रेण स्यात्–इति–एतत्सूत्रमावश्यकमेवेति ॥—**सूदते इति** । स्रवतीत्यर्थः ॥ ननु स्वर्दतिवत् स्वद सूदेति दन्त्यादय एव धातवः पठ्यन्ताम् । षोपदेशान् पठित्वा सत्वविधौ गौरवात् । मैवम् । तथाहि सति ण्यन्ताच्चङि असिष्वदत् असूषुदत् इत्यादौ, लिटि सुषूदे सिषेधेत्यादौ च 'आदेशप्रत्यययोः' इति षत्वं न स्यात् । इणः परस्य सकारमात्रस्य षत्वविधौ तु सुपिसौ सुपिस इत्यादावपि स्यादिति धातुपाठे पाणिनिना तालव्यदन्त्यादिपाठवत् षोपदेशा अपि व्यवस्थयैव पठिताः, स च पाठ इदानीं परिभ्रष्टः । साधादिषु सादिपाठस्यैव दृश्यमानत्वात् । अतो लक्षणमुखेन तान्व्यवस्थापयति—**सेगित्यादि** । दन्तश्च अच्च दन्त्याचौ, तौ अन्तौ अव्यवहितपरौ यस्य स दन्त्याजन्तः, दन्त्याजन्तश्चासौ सश्च दन्त्याजन्तसः, स आदिर्येषां धातूनां ते दन्त्यान्तसादयोऽजन्तसादयश्चैकाचः षोपदेशा बोध्याः । तथा च साधादौ सांप्रतं पठ्यमानः सकार उपदेशे न स्थित इत्यनुमेयमिति भावः ॥ दन्त्येत्यादि किम् ? चुस्कुन्दे ॥ एकाचः किम् ? सोसूच्यते । सोसूत्र्यते । सूचिसूत्री चुरादावदन्तौ ॥ उक्तलक्षण-

१ **इदित इति**—'इदित' इति कर्मधारयेण धातोर्विशेषणं, तेन इदिदन्तस्य धातोर्नुम्विधानात् चक्षिङादौ न दोषः । २ **धात्वादेरिति**—धातुग्रहणं स्पष्टार्थम्, नामधातुव्यावृत्तयेऽनुवृत्तेनोपदेशग्रहणेनैव षट्, षड् इत्यादिसिद्धेः । ३ **गुदेति**—गुद इति पृथग्धातुः, अत एवोदाहरति—गोदते, जुगुदे इति ।

एकाचः षोपदेशाः ष्वष्क्, स्विद्, स्वद, स्वञ्ज, स्वप्, स्मिङः ॥ १ ॥ दन्त्यः केवलदन्त्यो न तु दन्तोष्ठजोऽपि, ष्वष्कादीनां पृथग्ग्रहणाज्ज्ञापकात् । २६ ह्राद अव्यक्ते शब्दे । ह्रादते । जह्रादे । २७ ह्लादी सुखे च । चादव्यक्ते शब्दे । ह्लादते । २८ स्वाद आस्वादने । स्वादते । २९ पर्द कुत्सिते शब्दे । गुदरवे इत्यर्थः । पर्दते । ३० यती प्रयत्ने । यतते । येते । ३१ युतृ ३२ जुतृ भासने । योतते । युयुते । जोतते । जुजुते ३३ विथृ ३४ वेथृ याचने । विविथे । विवेथे । ३५ श्रथि शैथिल्ये । श्रन्थते । ३६ ग्रथि[1] कौटिल्ये । ग्रन्थते । ३७ कत्थ श्लाघायाम् । कत्थते । एधादयोऽनुदात्तेतो गताः ॥ ॥

अथाष्टा[2]त्रिंशत्तवर्गीयान्ताः परस्मैपदिनः ॥ ३८ अत सातत्यगमने । अतति । 'अत आदेः' २२४८ । आत । आततुः । आतुः । लुङि आतिस् ई त् इति स्थिते,

२२६६ । इट ईटि ।८।२।२८। इटः परस्य सस्य लोपः स्यादीटि परे ॥ ❀ सिज्लोप एकादेशे सिद्धो वाच्यः ॥ आतीत् । आतिष्टाम् । आतिषुः ।

२२६७ । वदव्रजहलन्तस्याचः ।७।२।३। वदेर्व्रजेर्हलन्तस्य चाङ्गस्याचः स्थाने वृद्धिः स्यात्सिचि परस्मैपदेषु । इति प्राप्ते,

२२६८ । नेटि ।७।२।४। इडादौ सिचि प्रागुक्तं न स्यात् । मा भवान्-अतीत्, अतिष्टाम्, अतिषुः । ३९ चिती संज्ञाने । चेतति । चिचेत । अचेतीत् । अचेतिष्टाम् । अचेतिषुः । ४० च्युतिर् आसेचने । सेचनमार्द्रीकरणम् । आङ्-ईषदर्थेऽभिव्याप्तौ च ॥ ❀ इर इत्संज्ञा वाच्या । च्योतति । चुच्योत ।

२२६९ । इरितो वा ।३।१।५७। इरितो धातोश्च्लेरङ् वा स्यात्परस्मैपदे परे । अच्युतत्, अच्योतीत् । ४१ श्च्युतिर् क्षरणे । श्च्योतति । चुश्च्योत । अश्च्युतत्, अश्च्योतीत् । ४२ यकाररहितोऽप्ययम् । श्चोतति । ४३ मन्थ विलोडने । विलोडनं प्रतिघातः । मन्थति । ममन्थ । यासुटः 'किदाशिषि' २२१६ इति कित्त्वात् 'अनिदिताम्–' ४१६ इति नलोपः । मथ्यात् । ४४ कुथि ४५ पुथि ४६ लुथि ४७ मथि हिंसासंक्लेशनयोः । इदित्त्वान्नलोपो न । कुन्थ्यात्, मन्थ्यात् । ४८ षिध गत्याम् । सेधति । सिषेध । सेधिता । असेधीत् । 'सात्पदाद्योः' २१२३ इति निषेधे प्राप्ते,

२२७० । उ[3]पसर्गात्सुनोतिसुवतिस्यतिस्तौति-

---

स्यातिव्याप्तिं वारयितुमाह—**सेगिति** । 'सेकृ गतौ' । 'सृप्लृ गतौ' । 'सृ गतौ' । 'स्तृञ् आच्छादने' । 'सृज विसर्गे' । 'स्तॄञ् आच्छादने' । 'स्त्यै शब्दसंघातयोः' एभ्योऽन्ये । पूर्वेण केषांचिदसंग्रहादाह—**ष्वष्केति** । 'ष्वष्क गतौ' । 'ञिष्विदा गात्रप्रक्षरणे' । 'स्वद आस्वादने' । 'ष्वञ्ज परिष्वङ्गे' । 'ञिष्वप् शये' । 'ष्मिङ् ईषद्धसने' । एते षोपदेशा इत्यन्वयः ॥ 'स्वाद आस्वादने' इत्यादावतिव्याप्तिमाशङ्क्याह—**दन्त्यः केवलदन्त्य इति** । तथा च असिस्वददित्यादौ षत्वं नेति भावः । **ह्लादी** सुखे च । चादव्यक्ते शब्दे । ईकारः 'श्वीदितो निष्ठायाम्' इतीण्निषेधार्थः । प्रह्लन्नः, प्रह्लन्नवान् । इह 'ह्रादो निष्ठायाम्' इत्युपधाह्रस्वः ॥—**श्लाघायामिति** । अविद्यमानगुणसंबन्धज्ञापनं-श्लाघा ॥—**आततुरिति** । हल्मध्यस्थत्वाभावादेत्वं न ॥ **२२६६ इट ईटि** । 'संयोगान्तस्य लोपः' इत्यतो लोप इति 'रात्सस्य' इत्यतः सस्येति चानुवर्तते । तदाह—**लोपः स्यादिति** । इटः किम् ? अहार्षीत् ॥ ईटि किम् ? आतिष्टाम् । आतिषुः ॥—**सिज्लोप इति** । **अत्र वदन्ति**—सलोप इति वक्तव्ये सिज्ग्रहणं 'झलो झलि' इत्यादिसूत्रत्रयं सिज्विषयकमिति ज्ञापनार्थम् । तेनेह न—सोमस्तुत् । स्तोता । द्विष्टराम् । द्विष्टमाम् । 'धि च' इति सूत्रे तु वामनमते सिचो लोपः । भाष्यमते तु सस्येति भेदो बोध्य इति ॥ **२२६७ वदव्रज—**। अवादीत् । अव्राजीत् । 'अतो हलादेः–' इति विकल्पं बाधित्वा अनेन नित्यं वृद्धिः । हलन्तस्योदाहरणमपाक्षीत्, अधाक्षीत्, । तदन्तविधिनैव सिद्धे अन्तग्रहणं स्पष्टप्रतिपत्त्यर्थम् । 'हलोऽचः' इत्युक्ते लजन्ताङ्गस्य हलः स्थाने वृद्धिरिति कदाचिदाशङ्क्येत । अच इति तु इक्परिभाषाया अनुपस्थानार्थम् । अन्यथा अभैत्सीदित्यत्र स्यान्न लपाक्षीदित्यादौ ॥ **२२६८ नेटि** ॥—**प्रागुक्तं नेति** । हलन्तत्वादेव सिद्धे वदव्रजोर्विशिष्य विधानान्न निषेधः, किंतु हलन्तलक्षणाया एव वृद्धेर्निषेधः, तस्या अनिडादौ सिचि चरितार्थत्वात् । अमुमेवार्थं मनसि निधाय क्वचित्पुस्तकेषु हलन्तलक्षणा वृद्धिर्नेत्येवं पठ्यते ॥—**इर इत्संज्ञेति** । इकारस्य 'उपदेशेऽजनुनासिकः–' इति, रेफस्य तु 'हलन्त्यम्' इति प्रत्येकमित्संज्ञायाम् 'इदित–' इति नुम् स्यादिति भावः । एतस्य वैयर्थ्यं 'चक्षिङ् व्यक्तायां वाचि' इत्यत्र स्फुटीभविष्यति ॥ **२२६९ चुश्च्योतेति** । 'शर्पूर्वाः खयः' ॥—**यकाररहितोऽप्ययमिति** । तथा च प्रयुज्यते 'मधुश्चुतं घृतमिव सुपूतम्' इति ॥—**मन्थ** । अयं क्र्यादावपि । 'षिध गत्याम्' । अयमुदिदिति केचित् ॥ तत्तु सिध्यतिबुध्यत्योः श्यना निर्देशात् सिधितं बुधितमिति वृत्तिग्रन्थविरुद्धम् । उदित्त्वे तु 'उदितो वा' इति क्त्वायामिड्विकल्पान्निष्ठायामिण् न स्यात्, 'यस्य विभाषा' इति निषेधात् ॥—**सिषेधेति** । 'आदेशप्रत्यययोः' इति षत्वम् ॥ **२२७० उपसर्गात्—**। 'सुनोति सुवति–'

---

१ **ग्रथि कौटिल्ये इति**—कौटिल्यं शाठ्यं वक्रता वा । २ **अष्टात्रिंशदिति**—अष्टत्रिंशदिति पाठे अष्ट त्रिंशदिति च भिन्ने पदे, समस्तत्वे तु 'ह्यष्टनः'–इत्यात्वं भवत्येव । ३ **उपसर्गादिति**—अभिषावयतीति ण्यन्तेऽपि अनेन षत्वं भवत्येव, शब्दशक्तिमहिम्नोपसर्गाणामपि प्रकृत्यर्थ एवान्वयात् ।

**स्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्** ।८।३।६५। उपसर्गस्थान्निमित्तादेषां सस्य षः स्यात् ।

२२७१ । **सदिरप्रतेः** ।८।३।६६। प्रतिभिन्नादुपसर्गात्सदेः सस्य षः स्यात् ।

२२७२ । **स्तन्भेः** ।८।३।६७। स्तन्भेः सौत्रस्य सस्य षः स्यात् । योगविभाग उत्तरार्थः । किंच 'अप्रतेः' इति नानुवर्तते, बाहुप्रतिष्टम्भविवृद्धमन्युः ।

२२७३ । **अवाच्चालम्बनाविदूर्ययोः** ।८।३।६८। अवात्स्तन्भेरेतयोरर्थयोः षत्वं स्यात् ।

२२७४ । **वेश्च स्वनो भोजने** ।८।३।६९। व्यवाभ्यां स्वनतेः सस्य षः स्याद्भोजने ।

२२७५ । **परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्** ।८।३।७०। परिनिविभ्यः परेषामेषां सस्य षः स्यात् । निषेधति ।

२२७६ । **प्राक्सितादड्व्यवायेऽपि** ।८।३।६३। 'सेवसित-' २२७५ इत्यत्र सितशब्दात्प्राग् ये सुनोत्यादयस्तेषामड्व्यवायेऽपि षत्वं स्यात् । न्यषेधत् । न्यषेधीत् न्यषेधिष्यत् ।

२२७७ । **स्थादिष्वभ्यासेन चाभ्यासस्य** ।८।३।६४। प्राक् सितात् स्थादिष्वभ्यासेन व्यवायेऽपि षत्वं स्यात् । एषामेव चाभ्यासस्य, न तु सुनोत्यादीनाम् । निषिषेध । निषिषिधतुः ।

---

इत्यादिश्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः, तेन अभिसोषवीति अभिसोषोतीत्यादौ षत्वं नेति प्राञ्चः । स्थादिष्वेवाभ्यासस्य षत्वं, न सुनोत्यादिष्विति नियमान्नेह षत्वप्राप्तिरिति व्यर्थः प्रतिषेध इति मनोरमादौ स्थितम् । **'सेनय'** इति णिजन्तो नामधातुः । सेनयाऽभियाति अभिषेणयति । सेधेति शपा निर्देशाद्भौवादिकस्य ग्रहणं न तु सिध्यतेः । परिसिध्यति ॥ गृहा दारा इत्यत्रेव तात्स्थ्यात्ताच्छब्द्यमित्याह—**उपसर्गस्थादिति** ॥—**निमित्तादिति** । इण्रूपात् । कवर्गस्तु नेह संबध्यते, असंभवात् । न च निःषुणोति निःषेधति निःषिञ्चतीत्यादौ व्यवधानेन इणः परत्वाभावात् सस्य षत्वं न स्यादिति शङ्क्यम् । षत्वविधौ 'नुम्विसर्जनीयशर्व्यवायेऽपि' इत्यधिकारात् । इणन्तादुपसर्गादिति व्याख्याने तु स्यादेवात्राव्याप्तिः । 'दुरः षत्वणत्वयोः—' इत्युपसर्गत्वप्रतिषेधाद्दुःसुनोति दुःसेधतीत्यादौ तु षत्वेन न भवितव्यमिति दिक् ॥ मूर्धन्यादेशे फलितमाह—**सस्य षः स्यादिति** ॥ स्थादिषु 'प्राक् सितात्-' इत्यत्र क्रमज्ञानस्यापेक्षितत्वात्तेनैव क्रमेण षत्वसूत्राणि व्याचष्टे—**२२७१ सदिरप्रतेः** । अप्रतेः किम् ? प्रतिसीदति ॥ षष्ठ्यर्थे प्रथमेत्याह—**सदेरिति** ॥ **२२७२ स्तन्भेः** । **सौत्रस्येति** । 'स्तन्भुस्तुन्भु-' इति सूत्रे निर्दिष्टस्य रोधनार्थस्य, न तु 'ष्टभि प्रतिबन्धे' इत्यस्येति भावः । एवं 'जृस्तम्भु' इत्यङ्विधायकसूत्रेऽपि सौत्रस्यैव ग्रहणमिति बोध्यम् । एतच्च 'लक्षणप्रतिपदोक्त' परिभाषया लभ्यते । सौत्रो हि धातुर्नकारोपध इति प्रतिपदोक्तः । इदित्वान्नुमि ष्टभिर्लाक्षणिकः । तेन विस्तम्भते इत्यादौ षत्वं न । 'उदः स्थास्तम्भोः-' इति सूत्रे तु मकारोपधग्रहणेनोभयोरपि ग्रहणादुत्तम्भते इति द्वयोरपि रूपं तुल्यं, मकारस्योभयत्रापि लाक्षणिकत्वात् ॥—**उत्तरार्थ इति** । उत्तरसूत्रे स्तन्भेरेवानुवृत्त्यर्थ इति भावः ॥ ननु 'सदिस्तन्भोः' इति सूत्रितेऽपि एकदेशे स्वरितत्वप्रतिज्ञानात्कथंचिदनुवृत्तिर्भविष्यतीत्यत आह—**किंचेति** ॥—**नानुवर्तत इति** । तथा च 'स्तन्भेः' इत्यत्राऽननुवृत्तये योगविभाग आवश्यक इति भावः ॥ **२२७३ अवाच्चा—**। चकारश्चिन्त्यप्रयोजन इत्याहुः । आलम्बनमाश्रयणम् । यथा यष्टिमवष्टभ्य आस्ते । तामाश्रित्य तिष्ठतीत्यर्थः । आविदूर्यं सामीप्यम् । तच्च प्रयोगोपाधिः । अवष्टब्धा गौः । निरुद्धा सती समीपे आस्त इत्यर्थः ॥ एतयोः किम् ? अवस्तब्धो वृषलः शीतेन । केचिदिह अविदूरशब्दात्स्वार्थे ष्यञ् । आविदूर्यमनतिदूरम् । ईषद्दूरमित्यर्थः । तथा च अविदूरशब्दात् 'न नञ्पूर्वात्तत्पुरुषात्' इति निषेधे प्राप्ते अत एव निपातनाद्भावप्रत्यय इति मनोरमाग्रन्थोक्तिर्नातीवोपयुज्यत इत्याहुः । **२२७४ वेश्च—**। विष्वणति । सशब्दं भुङ्क्त इत्यर्थः । 'अट्कुप्वाङ्-' इति णत्वम् । एवमवष्वणति । व्यष्वणत् । विषष्वाण । 'स्थादिष्वभ्यासेन-' इति षत्वम् ॥ भोजने किम् ? विस्वनति वीणा ॥ **२२७५ परिनिविभ्यः—**। सेवेत्यत्र अकार उच्चारणार्थः । न च यङ्लुङ्निवृत्तये शपा निर्देश एवास्त्विति शङ्क्यम् । वकारान्तानामूठ्भाविनां यङ्लुङ् नास्तीति वक्ष्यमाणत्वात् । 'षेवृ सेवायाम्' परिषेवते । 'षिञ् बन्धने' । क्तान्तः सितशब्दः । एरजन्तः पचाद्यजन्तो वा सयशब्दः । विषितः । विषयः ॥ प्रत्ययविशिष्टग्रहणं किम् ? विसिनोति । 'षिवु तन्तुसन्ताने' । परिषीव्यति । 'षह मर्षणे' परिषहते । सुडागमः, परिष्करोति । विष्करोति । स्तुस्वञ्जोः 'उपसर्गात्सुनोति-' इत्येव सिद्धे परिनिविभ्यः परयोरेतयोः 'सिवादीनां वाऽड्व्यवायेऽपि' इति विकल्पार्थं पुनर्वचनम् ॥ **२२७६ प्राक्सितात्—**। 'उपसर्गात्सुनोति-' इत्यादिना विहितं षत्वम् अड्व्यवाय एवेति भ्रमनिवारणार्थमपिशब्दस्योपादानम् ॥—**तेषामिति** । पञ्चदशानामित्यर्थः । अभ्यषुणोदित्यादीन्युदाहर्तव्यानि ॥ **२२७७ स्थादिषु—**। इह द्वे वाक्ये, आद्यं षत्वविध्यर्थं, द्वितीयं तु नियमार्थमित्याशयेनाह—**व्यवायेऽपीति** ॥—**षत्वमेषामेव चेति** । स्थादीनां दशानामेवाभ्यासस्य षत्वमित्यर्थः । तत्फलं तु 'षू प्रेरणे' अभिसुसूषति । अत्रोक्तनियमादभ्याससकारस्य न षत्वं, द्वितीयस्य तु 'स्तौतिण्योः' इति नियमान्न भवति । अभिसिषासतीत्यत्र तु षणोऽभावादभ्यासात्परस्य षत्वं, पूर्वस्य तूक्तनियमान्नेति बोध्यम् ॥ **स्यादेतत्**—निषिषेधेत्यादौ अभ्यासस्य 'उपसर्गात्सुनोति-' इत्यनेन सिद्धम्, अभ्यासात्परस्य तु 'आदेशप्रत्यययोः' इत्यनेनेति किमाद्यवाक्येन ? **अत्राहुः**—फलत्रयार्थमाद्यं वाक्यम् । तथाहि—अषोपदेशार्थम्-सेनया अभियातुमिच्छति अभिषिषेणयिषति । अवर्णान्ताभ्यासार्थं च—'अर्वासनं गोत्रभिदोऽ-

२२७८ । **सेधतेर्गतौ** ।८।३।११३। गत्यर्थस्य सेधतेः षत्वं न स्यात् । गङ्गां विसेधति । ४९ षिधू शास्त्रे माङ्गल्ये च । शास्त्रं शासनम् ।

२२७९ । **स्वरतिसूतिसूयतिधूञूदितो वा** ।७।२।४४। स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड्वा स्यात् ।

२२८० । **झषस्तथोर्धोऽधः** ।८।२।४०। झषः परयोस्तथयोर्धः स्यात्, न तु दधातेः । जश्त्वम् । सिषेद्ध । सिषेधिथ । सेद्धा । सेधिता । सेत्स्यति । सेधिष्यति । असैत्सीत् ।

२२८१ । **झलो झलि** ।८।२।२६। झलः परस्य सस्य लोपः स्यात् झलि । असैद्धाम् । असैत्सुः । असैत्सीः । असैद्धम् । असैद्ध । असैत्सम् । असैत्स्व । असैत्स्म । पक्षे असेधीत् । असेधिष्टाम् । इत्यादि । ५० खादृ भक्षणे । ऋकार इत् । खादति । चखाद । ५१ खद स्थैर्ये हिंसायां च । चाद्भक्षणे । स्थैर्ये अकर्मकः । खदति ।

२२८२ । **अत उपधायाः** ।७।२।११६। उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे । चखाद ।

२२८३ । **णलुत्तमो वा** ।७।१।९१। उत्तमो णल्वा णित्स्यात् । चखाद–चखद ।

२२८४ । **अतो हलादेर्लघोः** ।७।२।७। हलादेर्लघोरकारस्य इडादौ परस्मैपदपरे सिचि वृद्धिर्वा स्यात् । अखादीत्–अखदीत् । ५२ बद स्थैर्ये । पवर्गीयादिः । बदति । बबाद । बेदतुः । बेदिथ । बबाद । बबद । अबादीत् । अबदीत् । ५३ गद व्यक्तायां वाचि । गदति ।

२२८५ । **नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च** ।८।४।१७। उपसर्गस्थान्निमित्तात्परस्य नेर्नस्य णः स्यात् गदादिषु । प्रणिगदति । जगाद । ५४ रद विलेखने । विलेखनं भेदनम् । रराद । रेदतुः । ५५ णद

---

धितष्ठौ' । षणि प्रतिप्रसवार्थं च, अभिषिषिक्षति । 'षिच क्षरणे' । 'स्तौतिण्योरेव–' इति नियमात् षभूते सनि निवर्तितमपि सत्वमुपसर्गमाश्रित्यात्र भवतीति ॥ **२२७८ सेधतेर्गतौ** । श्तिपा निर्देशाद्गत्यर्थादस्माद्यङ्लुकि न निषेधः । तेनोपसर्गमाश्रित्य षत्वं भवत्येव ॥—**विसेधतीति** । न च सेधेति शपा निर्देशाद्यङ्लुकि 'उपसर्गात्सुनोति–' इति षत्वं न भवेदिति शङ्क्यम् । दैवादिकनिवृत्त्यर्थतया शपा निर्देशस्य चारितार्थ्यात् । अन्यथा सेधतेरिति श्तिपा निर्देशस्य वैयर्थ्यापत्तेरिति दिक् । **षिधू** शास्त्रे । माङ्गल्यं मङ्गलक्रिया । स्वार्थे ष्यञ् ॥ **२२७९ स्वरतिसूति** —। 'स्वृ शब्दोपतापयोः' भ्वादिः ॥ ननु 'स्वरतिसूधूञूदितो वा' इति सूत्र्यतां, किमनेन सूतिसूयत्योः पृथग्ग्रहणेन ? मैवम् । तथाहि सति निरनुबन्धकपरिभाषया 'षू प्रेरणे' इति तौदादिकस्यैव ग्रहणं स्यान्न त्वादादिकदैवादिकयोरेतयोः ॥ न चैवं षूङ् इति पठ्यतामिति वाच्यम् । 'लुग्विकरणालुग्विकरणयोः' इति परिभाषया अलुग्विकरणस्य सूयतेरेव ग्रहणप्रसङ्गात् । अस्याश्च परिभाषायाः सूतिसूयत्योः पृथग्ग्रहणमेव ज्ञापकमित्याहुः । 'धूञ् कम्पने' स्वादिः क्र्यादिश्च । सानुबन्धकनिर्देशो 'धू विधूनने' इत्यस्य निवृत्त्यर्थः । 'इट् सनि वा' इत्यतो वेति वर्तमाने पुनर्वाग्रहणं लिङ्सिचोर्विकल्पनिवृत्त्यर्थम् । अन्यथा लिङ्सिज्विशिष्टं वापदमत्रापि लिङ्सिचोरेव विकल्पं कुर्यात् । पुनर्वाग्रहणे तु आर्धधातुकमात्रे विकल्पः सिद्ध इति भावः ॥ **२२८० झषस्तथोः**—। अध इति किम् ? धत्तः ॥—**असैत्सीदिति** । 'अस्तिसिचः–' इति ईडागमः । 'वदव्रज–' इति वृद्धिः । ततश्चर्त्वम् ॥ **२२८१ झलो झलि** । 'संयोगान्तस्य–' इत्यतो लोप इति, 'रात्सस्य' इत्यतः सस्येति चानुवर्तते, तदाह—**सस्य लोपः स्यादिति** । पदस्येत्यधिकारात्प्रत्यासत्तेर्झलो झलि सस्येति निर्दिष्टानां त्रयाणामेकपदसंबन्धित्वे लोपोऽयम् । तेन सोमसुत्स्थानमित्यत्र न भवति ॥ झलः किम् ? अनैष्टाम् ॥ झलि किम् ? असैत्सीत् ॥—**असेधीदिति** । 'नेटि' इति वृद्धिप्रतिषेधः । गुणः । **खादृ** भक्षणे ॥—**ऋकार इदिति** । तेन 'नाग्लोपि–' इति निषेधे–अचखादत् ॥ **२२८२ अत उप**—। अतः किम् ? तुतोद ॥ उपधायाः किम् ? गणयति । इह अतो लोपं बाधित्वा परत्वाद्वृद्धिः स्यात् ॥ **२२८४ अतो हलादेः** । इह 'सिचि वृद्धिः–' इति सूत्रमनुवर्तते । 'नेटि' इति सूत्रादिटि इति 'ऊर्णोतेर्विभाषा' इत्यतो विभाषाग्रहणं च, तदाह—**इडादावित्यादि** । **वृद्धिर्वा स्यादिति** । अतः किम् ? अदेवीत् ॥ हलादेः किम् ? मा भवानतीत्, अटीत् ॥ लघोः किम् ? अगर्दीत् । अरक्षीत् ॥ इडादौ किम् ? अपाक्षीत् ॥ परस्मैपदे किम् ? अयतिष्ट । अयतिषाताम् । अचकासीदित्यत्र चकारादकारस्य वृद्धिवारणाय 'येन नाव्यवधानम्' इति न्यायेन यद्येकवर्णव्यवधानमेवाश्रीयते तदा त्वरक्षीदित्यत्रापि प्रसक्त्यभावाल्लघोरिति शक्यमकर्तुमित्याहुः । तपरकरणं स्पष्टार्थम् ॥—**पवर्गीयादिरिति** । दन्त्योष्ठ्यादित्वे तु 'न शसदद–' इत्येत्वाभ्यासलोपनिषेधात् बेदतुः बेदिथेत्यादि न सिध्येदिति भावः ॥ **२२८५ नेर्गदनद**—। गदादीनां चतुर्णां शपा निर्देशः स्यति–इत्यादीनामेकादशानां श्तिपा निर्देशश्च यङ्लुङ्निवृत्त्यर्थः । तेन प्रनिजागदीति । प्रनिनानदीति । प्रनिसासाति । प्रनिजंघनीति–इत्यादौ णत्वं न । घुशब्देन घुसंज्ञका दाधादयः षट् गृह्यन्ते । **डुदाञ्**–प्रणिददाति । दाण्–प्रणियच्छति । दो–प्रणिद्यति । देङ्–प्रणिदयते । धेट्–प्रणिधयति ।

---

१ **सेधतेर्गताविति**—अयं निषेधोऽनन्तरस्येति न्यायेन 'आदेशप्रत्यययोः' इत्यस्य, तेन सिषेधेत्यादौ षत्वं भवत्येव इति केचित् । अन्ये तु सिचो यङीत्येतत्साहचर्यादयं सर्वषत्वनिषेधः, उपसर्गादित्यस्य तु नात्र संबन्धो विच्छिन्नत्वात्, तेन गङ्गां सिसेधेत्येव यथाभिधानमस्तीति वदन्ति । २ **सूतीति**—अत्र गुणाभावश्छान्दसः ।

अव्यक्ते शब्दे ।

२२८६ । **णो नः** ।६।१।६५ धातोरादेर्णस्य नः स्यात् ।—

**णोपदेशास्त्वनर्द-नाटि-नाथ्-नाध्-नन्द्-नक्क-नॄ-नृतः ।**

नाटेर्दीर्घाहस्य पर्युदासाद्धटादिर्णोपदेश एव । तवर्गचतुर्थान्तनाधतेर्नृनद्योश्च केचिण्णोपदेशतामाहुः ।

२२८७ । **उपसर्गादसमासेऽपि णोपदेशस्य** ।८।४।१४। उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात्समासेऽसमासेऽपि । प्रणदति । प्रणिनदति । ५६ **अर्द** गतौ याचने च । 'अत आदेः' २२४८ ।

२२८८ । **तस्मान्नुड् द्विहलः** ।७।४।७१। द्विहलो धातोर्दीर्घीभूतादकारात्परस्य नुट् स्यात् । आनर्द । आर्दीत् । ५७ **नर्द** ५८ **गर्द** शब्दे । णोपदेशत्वाभावान्न णः । प्रनर्दति । गर्दति । जगर्द । ५९ **तर्द** हिंसायाम् । तर्दति । ६० **कर्द** कुत्सिते शब्दे । कुत्सिते कौक्षे । कर्दति । ६१ **खर्द** दन्दशूके । दंशहिंसादिरूपायां दन्दशूकक्रियायामित्यर्थः । खर्दति । चखर्द । ६२ **अति** ६३ **अदि** बन्धने । अन्तति । आनन्त । अन्दति । आनन्द । ६४ **इदि** परमैश्वर्ये । इन्दति । इन्दांचकार । ६५ **बिदि** अवयवे । पवर्गतृतीयादिः । बिन्दति । अवयवं करोतीत्यर्थः । ६६ भिदीति पाठान्तरम् । ६७ **गडि** वदनैकदेशे । गण्डति । अन्तत्यादयः पञ्चैते न तिङ्विषया इति काश्यपः । अन्ये तु तिङमपीच्छन्ति । ६८ **णिदि** कुत्सायाम् । निन्दति । प्रणिन्दति । ६९ **टुनदि** समृद्धौ ।

२२८९ । **आदिर्ञिटुडवः** ।१।३।५। उपदेशे धात्वाद्या एते इतः स्युः । नन्दति । इदित्वान्नलोपो न, नन्द्यात् । ७० **चदि** आह्लादे । चचन्द । ७१ **त्रदि** चेष्टायाम् । तत्रन्द । ७२ **कदि** ७३ **क्रदि** ७४ **क्लदि** आह्वाने रोदने च । चकन्द । चक्रन्द । चक्लन्द । ७५ **क्लिदि** परिदेवने । चिक्लिन्द । ७६ **शुन्ध** शुद्धौ । शुशुन्ध । नलोपः, शुध्यात् ।

अथ कवर्गीयान्ता अनुदात्तेतो द्विचत्वारिंशत् ॥ ७७ **शीकृ** सेचने । तालव्यादिः । ७८ दन्त्यादिरित्येके । शीकते । शिशीके । ७९ **लोकृ** दर्शने । लोकते । लुलोके । ८० **श्लोकृ** संघाते । संघातो ग्रन्थः । स चेह ग्रथ्यमानस्य व्यापारो ग्रन्थितुर्वा । आद्ये अकर्मको द्वितीये सकर्मकः । श्लोकते । ८१ **द्रेकृ** ८२ **ध्रेकृ** शब्दोत्साहयोः । उत्साहो वृद्धिरौद्धत्यं च । दिद्रेके । दिध्रेके । ८३ **रेकृ** शङ्कायाम् । रेकते । ८४ **सेकृ** ८५ **स्रेकृ** ८६ **स्रकि** ८७ **श्रकि** ८८ **श्लकि** गतौ । त्रयो दन्त्यादयः । द्वौ तालव्यादी । अषोपदेशत्वान्न षः । सिसेके । ८९ **शकि** शङ्कायाम् । शङ्कते । शशङ्के । ९० **अकि** लक्षणे । अङ्कते । आनङ्के । ९१ **वकि** कौटिल्ये । वङ्कते । ९२ **मकि** मण्डने । मङ्कते । ९३ **कक** लौल्ये । लौल्यं गर्वश्चापल्यं च । ककते । चकके । ९४ **कुक** ९५ **वृक** आदाने । कोकते । चुकुके । वर्कते । ववृके ॥ ❀ **ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन** ॥ ९६ **चक** तृप्तौ प्रतीघाते च । चकते । चेके । ९७ **ककि** ९८ **वकि** ९९ **श्वकि** १०० **त्रकि** १०१ **ढौकृ** १०२ **त्रौकृ** १०३ **ष्वष्क** १०४ **वष्क** १०५ **मष्क** १०६ **टिकृ** १०७ **टीकृ** १०८ **तिकृ** १०९ **तीकृ** ११० **रघि** १११ **लघि** गत्यर्थाः । कङ्कते । डुढौके । तुत्रौके ॥ ❀ **सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधो वक्तव्यः** ॥ ष्वष्कते । षष्वष्के । अत्र तृतीयो दन्त्यादिरित्येके । लघि भोजननिवृत्तावपि । ११२ **अघि** ११३ **वघि** ११४ **मघि** गत्याक्षेपे । आक्षेपो निन्दा । 'गतौ गत्यारम्भे च' इत्यन्ये । अङ्घते । आनङ्घे । वङ्घते । मङ्घते । 'मघि' कैतवे च । ११५ **राघृ** ११६ **लाघृ** ११७ **द्राघृ** सामर्थ्ये । राघते । लाघते ।

---

डुधाञ्–प्रणिदधाति । माशब्देन मेङ्माङोरेव ग्रहणम्, घुप्रकृतिमाङिति पठित्वा भाष्यादौ तथा व्याख्यानात् ॥ **२२८६ णो नः** ॥—**धातोरिति** । 'धात्वादेः षः सः' इत्यतोऽनुवर्तनाद्धात्वादेरित्येव । नेह–अणति ॥ णोपदेशान्पर्युदासमुखेनाह—**णोपदेशास्त्वति** । 'नर्द शब्दे' । 'नट अवस्यन्दने' । चुरादिः । यस्तु नट नृत्ताविति घटादिः स नेह गृह्यते, नाटीति दीर्घनिर्देशात् । 'नाथृ नाधृ याञ्चादौ' । 'टुनदि समृद्धौ' । 'नक्क नाशने' । 'नॄ नये' । 'नृती गात्रविक्षेपे' । एभ्योऽष्टभ्यो भिन्ना इत्यर्थः ॥—**तवर्गेति** । तेषां मते तु पञ्चभ्यो भिन्ना णोपदेशाः ॥ **२२८७ उपसर्गाद**—। 'समासेऽङ्गुलेः सङ्गः' इत्यतोऽनुवर्तनात्समास एव स्यादित्यसमासग्रहणं, कृते तु तस्मिन्नसमास एव स्यादित्यपेर्ग्रहणं कृतम् ॥—**प्रणिनदतीति** । 'नेर्गद–' इति णत्वम् । धातुनकारस्य तु 'उपसर्गादसमास–' इति णत्वं न भवति, अडादिभिन्नेन व्यवधानात् । तस्मात् तच्छब्देन कृतदीर्घाकारः परामृश्यत इत्याह **२२८८ दीर्घीभूतादिति** । **खर्द** दन्दशूके । दन्दशूकस्य सर्पत्वात्तद्वाचित्वे धातुत्वं न संगच्छत इत्याह—**दन्दशूकक्रियायामिति** । दन्दशूककर्तृकायामित्यर्थः ॥—**आनन्तेति** । इदित्त्वान्नुम्, 'तस्मान्नुड् द्विहलः' इति नुट् ॥—**वदनैकदेश इति** । तत्क्रियायामित्यर्थः ॥ **२२८९ आदिर्ञिटुडवः** । 'उपदेशेऽजनुनासिक' इत्यतोऽनुवर्तनादाह—**उपदेश इति** । उपदेशे किम् ? ञिकारीयति । ञिष्वप्, 'ञीतः क्तः', सुप्तः । 'ट्वितोऽथुच्', नन्दथुः । 'ड्वितः क्त्रिः', कृत्रिमम् । **क्लिदि** परिदेवने । अनुदात्तेत्सु पठितस्येह पाठः परस्मैपदार्थः । क्रियाफलस्य कर्तृगामित्वेऽपि परस्मैपदार्थं स्वरितेत्स्वयं न पठितः । **शुन्ध** शुद्धौ । अयं शौचकर्मणि युजादौ । प्रथमं माङ्गलिक एवतिरुक्तस्तवर्गीयान्तस्तदनुरोधेन कतिचित् तवर्गीयान्ताः पठिताः । इदानीं लोकप्रसिद्धकादिपाठक्रमेणाह—**अथेत्यादि** ॥—**चुकुके इति** । परमपि गुणं बाधित्वा नित्यत्वात् 'असंयोगात्–' इति कित्त्वम् ॥—**सुब्धात्वित्यादि** । सुब्धातोरुदाहरणानि–षट् दन्ता अस्य षोडन्, तमाचष्टे

११८ ध्राघृ इत्यपि केचित् । 'द्राघृ' आयामे च । आयामो दैर्घ्यम् । द्राघते ११९ श्लाघृ कत्थने । श्लाघते ॥

अथ **परस्मैपदिनः पञ्चाशत्** । १२० **फक्क** नीचैर्गतौ । नीचैर्गतिः–मन्दगमनमसद्व्यवहारश्च । फक्कति । पफक्क । १२१ **तक** हसने । तकति । १२२ **तकि** कृच्छ्रजीवने । तङ्कति । १२३ **बुक्क** भषणे । भषणं श्वरवः । बुक्कति । १२४ **कख** हसने । प्रनिकखति । १२५ **ओखृ** १२६ **राखृ** १२७ **लाखृ** १२८ **द्राखृ** १२९ **ध्राखृ** शोषणालमर्थयोः । ओखति । ओखांचकार । १३० **शाखृ** १३१ **श्लाखृ** व्याप्तौ । शाखति । १३२ **उख** १३३ **उखि** १३४ **वख** १३५ **वखि** १३६ **मख** १३७ **मखि** १३८ **णख** १३९ **णखि** १४० **रख** १४१ **रखि** १४२ **लख** १४३ **लखि** १४४ **इख** १४५ **इखि** १४६ **ईखि** १४७ **वल्ग** १४८ **रगि** १४९ **लगि** १५० **अगि** १५१ **वगि** १५२ **मगि** १५३ **तगि** १५४ **त्वगि** १५५ **श्रगि** १५६ **श्लगि** १५७ **इगि** १५८ **रिगि** १५९ **लिगि** गत्यर्थाः । द्वितीयान्ताः पञ्चदश । तृतीयान्तास्त्रयोदश । इह खान्तेषु १६० **रिख** १६१ **त्रख** १६२ **त्रिखि** १६३ **शिखि** इत्यपि चतुरः केचित्पठन्ति ।

**२२९० । अभ्यासस्यासवर्णे** ।६।४।७८। अभ्यासस्य इवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि । उवोख । सन्निपातपरिभाषया 'इजादेः–' २२३७ इत्याम्न । ऊखतुः । ऊखुः । इह सवर्णदीर्घस्याभ्यासग्रहणेन ग्रहणाद्ध्रस्वः प्राप्तो न भवति, सकृत्प्रवृत्तत्वात् । आङ्गत्वाद्धि पर्जन्यवल्लक्षणप्रवृत्त्या ह्रस्वे कृते ततो दीर्घः । (प) **वार्णादाङ्गं बलीयः** इति न्यायात् परत्वाच्च । उङ्खति । ववखतुः । वङ्खति । मेखतुः । 'त्वगि' कम्पने च । १६४ **युगि** १६५ **जुगि** १६६ **वुगि** वर्जने । युङ्गति । १६७ **घघ** हसने । घघति । जघाघ । १६८ **मघि** मण्डने । मङ्घति । १६९ **शिघि** आघ्राणे । शिङ्घति ॥

अथ **चवर्गीयान्ताः** । **तत्रानुदात्तेत एकविंशतिः** । १७० **वर्च** दीप्तौ । वर्चते । १७१ **षच** सेचने सेवने च । सचते । सेचे । सचिता । १७२ **लोचृ** दर्शने । लोचते । लुलोचे । १७३ **शच** व्यक्तायां वाचि । शेचे । १७४ **श्वच** १७५ **श्वचि** गतौ । श्वचते । श्वञ्चते । १७६ **कच** बन्धने । कचते । १७७ **कचि** १७८ **काचि** दीप्तिबन्धनयोः । चकञ्चे । चकाञ्चे । १७९ **मच** १८० **मुचि** कल्कने । कल्कनं दम्भः शाठ्यं च । 'कथनम्' इत्यन्ये । मेचे । मुमुञ्चे । १८१ **मचि** धारणोच्छ्रायपूजनेषु । ममञ्चे । १८२ **पचि** व्यक्तीकरणे । पञ्चते । १८३ **ष्टुच** प्रसादे । स्तोचते तुष्टुचे । १८४ **ऋज** गतिस्थानार्जनोपार्जनेषु । अर्जते । नुड्विधौ ऋका-

णिचि टिलोपः–षोडयति । एवं षण्डं करोत्याचष्टे वा षण्डयति । षण्डीयतीत्यत्र षण्डशब्दात् क्यचि ईत्वं बोध्यम् । एतच्च वार्तिकं भाष्ये प्रत्याख्यातम् । तथाहि—'धात्वादेः–' इति सूत्रे उपदेश इति वर्तते । न च सुब्धातूनामुपदेशोऽस्ति । ष्ठिवुष्वष्कती तु यकारादी । 'लोपो व्योः–' इति यलोपः ॥—**प्रनिकखतीति** । 'शेषे विभाषा–' इत्यत्र अकखादाविति पर्युदासान्नेणत्वं नेति भावः ॥ **२२९० असवर्णेऽचीति** । असवर्णे किम् ? ऊखतुः ॥ अचि किम् ? इयाज, उवाय ॥—**उवोखेति** । 'द्विर्वचनेऽचि' इति निषेधात्पूर्वं द्वित्वं, पश्चादुकारस्य लघूपधगुणे कृते अभ्यासस्योवङ् । एवमियेषेत्यत्रेयङ् । असवर्णग्रहणसामर्थ्यादियङादौ कर्तव्ये गुणोऽत्र न स्थानिवदिति बोध्यम् ॥—**संनिपातपरिभाषयेति** । आमि सति लिट्परत्वं धातोर्न सिध्येदिति भावः ॥ **अन्ये तु**—'इजादेः–' इति सूत्रे गुरुमानिति नित्ययोगे मतुप् । ततश्च नित्यं यो गुरुमान् 'एध वृद्धौ' इत्यादिस्तत्रैव स्यादिति नात्र आमः प्रसक्तिरित्याहुः ॥—**ऊखतुरिति** । कित्त्वात् गुणाभावे 'अभ्यासस्यासवर्णे' इति उवङ् न भवति ॥ ननु इयेष उवोखेत्यत्राप्यन्तरङ्गत्वात्सवर्णदीर्घे कृतेऽच्परत्वाभावादियङुवङौ न स्त इतीष्टरूपासिद्धेः किं तेनात्रासवर्णग्रहणेनेति चेत् । **अत्राहुः**—'वार्णादाङ्गं बलीयः' इति परिभाषाज्ञापनार्थमेवासवर्णग्रहणं कृतम् । तेन भवतीत्यत्रान्तरङ्गमपि यणं बाधित्वा गुणो भवति । तथा करोतेर्घञि कार इत्यत्र यणं बाधित्वा वृद्धिर्भवति । न चैवं सिवेरौणादिके नप्रत्यये स्योन इत्यत्र 'छ्वोः शूड्–' इत्यूठि कृते लघूपधगुणं बाधित्वा यण् न स्यादिति वाच्यम् । समानाश्रय एव वार्णादाङ्गस्य बलीयस्त्वात् । इह तु निमित्तभेदेन व्याश्रयत्वमिति ॥—**अभ्यासग्रहणेनेति** । पूर्वस्यान्तवत्त्वेनेत्यर्थः ॥—**पर्जन्यवल्लक्षणेति** । उपयोगानुपयोगाविचारणेन प्रवर्तमानं शास्त्रं ह्रस्वस्थानेऽपि ह्रस्वं प्रवर्तयतीत्यर्थः । तथा चैकस्मिँल्लक्ष्ये लक्षणं सकृदेव प्रवर्तत इति न तस्य पुनः प्रवृत्तिरिति भावः ॥—**आङ्गं बलीय इति** । नन्वत्र ह्रस्वसवर्णदीर्घयोर्निमित्तभेदादसमानाश्रयत्वाभावे कथमाङ्गस्य बलीयस्त्वमिति चेत् । सत्यम् । इष्टानुरोधेन स्थानिनमादाय क्वचित्समानाश्रयत्वाभ्युपगमात् । अत एव ऊङ् शब्दे इत्यस्माल्लिटि ऊवे ऊवाते इत्यादीष्टं सिध्यति । उवङः प्राक् सवर्णदीर्घप्रवृत्तौ तन्न सिध्येदिति दिक् ॥—**परत्वाच्चेति** । आपाततोऽयं हेतुः, ह्रस्वस्याङ्गत्वेन बहिरङ्गत्वादन्तरङ्गं सवर्णदीर्घं प्रति परत्वोपन्यासस्यायुक्तत्वात् ॥—**उङ्खतीति** । इदित्त्वान्नुम् । लिटि–उङ्खांचकार । आशिषि–उंख्यात् ॥—**ववखतुरिति** । वादित्वादेत्वाभ्यासलोपौ न । णखति । इङ्खति । इङ्खांचकार । ईखति । ईखांचकार । इङ्गति । इङ्गांचकार ॥—**त्वगि कम्पने इति** । अयं 'उख उखि' इति दण्डके गतौ पठितस्य गतिविशेषे वृत्तिं बोधयितुं पठ्यते । अत एवानतिप्रयोजनत्वाद्बहुषु पुस्तकेषु न पठितः ॥—**सेवने चेति** । 'यं पूरवो वृत्रहणं सचन्ते' इत्यादौ सेवन्ते इत्यभियुक्तैर्व्याख्यातत्वात् । स्वरितेत्सु षच समवाय इति वक्ष्यते ॥ **लोचृ** । ऋदित्त्वात् 'नाग्लोपि–' इति ह्रस्वनिषेधः । अलुलोचत् । 'पचि व्यक्तीकरणे' । 'पचि विस्तारवचने' इति चुरादौ ॥ **ऋज गतीति** । अर्जनं प्राधान्येन, उपार्जनं तु प्रासङ्गिकम् ॥—**नुड्विधावि-**

रैकदेशो रेफो हल्त्वेन गृह्यते, तेन द्विहल्त्वान्नुट् । आनृजे । १८५ ऋजि १८६ भृजी भर्जने । ऋञ्जते । 'उपसर्गादृति–' ७४ इति वृद्धिः, प्रार्ञ्जते । ऋञ्जाञ्चक्रे । आर्ञ्जिष्ट । भर्जते । बभृज्जे । अभर्जिष्ट । १८७ एजृ १८८ भ्रेजृ १८९ भ्राजृ दीप्तौ । एजांचक्रे । १९० ईज गतिकुत्सनयोः । ईजांचक्रे ॥

अथ द्विसप्ततिर्व्रज्यन्ताः परस्मैपदिनः । १९१ शुच शोके । शोचति । १९२ कुच शब्दे तारे । कोचति । १९३ कुञ्च १९४ क्रुञ्च कौटिल्याल्पीभावयोः । 'अनिदिताम्–' ४१६ इति नलोपः । कुच्यात् । क्रुच्यात् । १९५ लुञ्च अपनयने । लुच्यात् । १९६ अञ्चु गतिपूजनयोः । अच्यात् । गतौ नलोपः । पूजायां तु अञ्च्यात् । १९७ वञ्चु १९८ चञ्चु १९९ तञ्चु २०० त्वञ्चु २०१ म्रुञ्चु २०२ म्लुञ्चु २०३ म्रुचु २०४ म्लुचु गत्यर्थाः । वच्यात् । चच्यात् । तच्यात् । त्वच्यात् । अम्रुञ्चीत् । अम्लुञ्चीत् ।

२२९१ । जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ।३।१।५८। एभ्यश्च्लेरङ् वा स्यात् । अम्रुचत् । अम्रोचीत् । अम्लुचत् । अम्लोचीत् । २०५ ग्रुचु २०६ ग्लुचु २०७ कुजु २०८ खुजु स्तेयकरणे । जुग्रोच । अग्रुचत् अग्रोचीत् । जुग्लोच । अग्लुचत् । अग्लोचीत् । अकोजीत् । अखोजीत् । २०९ ग्लुञ्चु २१० षस्ज गतौ । अङ्, अग्लुचत् । अग्लुञ्चीत् । सस्य श्चुत्वेन शः, जश्त्वेन जः, सज्जति । अयमात्मनेपद्यपि । सज्जते । २११ गुजि अव्यक्ते शब्दे । गुञ्जति । गुञ्ज्यात् । २१२ अर्च पूजायाम् । आनर्च । २१३ म्लेच्छ अव्यक्ते शब्दे । अस्फुटेऽपशब्दे चेत्यर्थः । म्लेच्छति । मिम्लेच्छ । २१४ लच्छ २१५ लाछि लक्षणे । ललच्छ । ललाञ्छ । २१६ वाछि इच्छायाम् । वाञ्छति । २१७ आछि आयामे । आञ्छति । 'अत आदेः' २२४८ इत्यत्र तपरकरणं स्वाभाविकह्रस्वपरिग्रहार्थकम्, तेन दीर्घाभावान्न नुट्, आञ्छ । तपरकरणं मुखसुखार्थमिति मते तु नुट्, आनाञ्छ । २१८ ह्रीच्छ लज्जायाम् । जिह्रीच्छ । २१९ हुर्छा कौटिल्ये । कौटिल्यमपसरणमिति मैत्रेयः । 'उपधायां च' २२६५ इति दीर्घः । हूर्च्छति । २२० मुर्छा मोहसमुच्छ्राययोः । मूर्च्छति । २२१ स्फुर्छा विस्तृतौ । स्फूर्च्छति । २२२ युच्छ प्रमादे । युच्छति । २२३ उछि उञ्छे ।

उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम् ।

इति यादवः । उञ्छति । उञ्छांचकार । २२४ उच्छी विवासे । विवासः समाप्तिः । प्रायेणायं विपूर्वः । व्युच्छति । २२५ ध्रज २२६ ध्रजि २२७ धृज २२८ धृजि २२९ ध्वज २३० ध्वजि गतौ । ध्रजति । ध्रञ्जति । धर्जति । धृञ्जति । ध्वजति । ध्वञ्जति । २३१ कूज अव्यक्ते शब्दे । चुकूज । २३२ अर्ज २३३ षर्ज अर्जने । अर्जति । आनर्ज । सर्जति । ससर्ज । २३४ गर्ज शब्दे । गर्जति । २३५ तर्ज भर्त्सने । तर्जति । २३६ कर्ज व्यथने । चकर्ज । २३७ खर्ज पूजने च । चखर्ज । २३८ अज गतिक्षेपणयोः । अजति ।

२२९२ । अजेर्व्यघञपोः ।२।४।५६। अजेर्वी इत्ययमादेशः स्यादार्धधातुकविषये घञमपं च वर्जयित्वा ।

---

स्यादि । 'नुड्विधिलादेशविनामेषु तु प्रतिविधेयम्' इति वचनान्नुडादिविधिषु वर्णैकदेशस्य वर्णत्वेन ग्रहणादिति भावः । यद्वा द्विहल्ग्रहणं भाष्यादौ प्रत्याख्यायते । न च आट आटतुरित्यत्रातिप्रसङ्गः । 'अश्नोतेश्च' इत्यनेन अवर्णोपधस्य यदि भवति तर्ह्यश्नोतेरेवेति नियमात्सिद्धमिष्टमित्यन्यत्र विस्तरः ॥**—ऋजिभृजी ।** भर्जनं जलं विना तण्डुलादेः संतापविशेषः । ईदित्त्वात् 'श्वीदितो निष्ठायाम्' इति नेट्, भृक्तः, भृक्तवान् ॥**—एजृ भ्रेजृ भ्राजृ ।** भ्राजेरॄदित्करणमनुदात्तेत्त्वमात्रफलम्, 'भ्राजभास–' इत्यादिना चङ्परे णौ उपधाह्रस्वस्य विकल्पितत्वात् । अबिभ्रजत् । अबभ्राजत् ॥**—परस्मैपदिन इति ।** चवर्गीयान्ताः परस्मैपदिनः ॥ **पूजायां त्विति ।** 'नाञ्चेः पूजायाम्' इति निषेधादिति भावः ॥ **२२९१ जॄस्तम्भु–॥** स्तम्भुः सौत्रः । अजरत् । अजारीत् । अस्तभत् । अस्तम्भीत् । अश्वत् । अश्वताम् । अश्वन् । अश्वयीत् । 'विभाषा धेट्श्व्योः' इति चङि-अशिश्वियत् ॥ **'अर्च पूजायाम्'** अयं पूजादौ स्वरितेत् । इह पाठस्तु कर्तृगेऽपि फले परस्मैपदार्थः ॥ **—दीर्घाभावादिति ।** स्वाभाविकह्रस्वस्थानिकदीर्घाभावादित्यर्थः ॥**—मुखसुखार्थमिति ।** कृतह्रस्वस्थानिकदीर्घाकारात्परस्यापि नुट् भवत्येवेति भावः ॥ **युच्छ प्रमादे ॥—युच्छतीति ।** अन्तरङ्गत्वात् 'छे च' इति तुकि लघूपधत्वाभावान्न गुणः । न च वार्णादाङ्गं बलीयः इति वाच्यम् । आङ्गवार्णयोर्युगपत्प्रवृत्तावेव आङ्गस्य बलीयस्त्वात् । न च युच्छेति चकारछकारावुच्चार्येतां किमनेन तुग्विधिनेति शङ्क्यम् । बहुषु धातुरूपेषु चकारछकारयोरुच्चारणे गौरवात्, 'छे च' इत्यस्य शिवच्छायेत्यादावावश्यकत्वाच्च ॥ **२२९२ अजेर्व्य—।** वी इति च्छेदः । तेन संवीतः संवीतिरित्यादि सिध्यति ॥**—आर्धधातुकविषय इति ।** तेन बीभावोत्तरं यङि वेवीयते इत्यादि सिध्यति, परसप्तम्यां तु हलादित्वाभावाद्यङ् न स्यादिति भावः । यङ्लुक् तु अस्मान्न भवति, लुका यङोऽपहारे आर्धधातुकविषयत्वाभावान्नार्धधातुकाभिव्यक्तिरिति वीभावस्यैवाप्रसक्तेः । एतच्च 'न लुमता–' इति सूत्रे कैयटे स्पष्टम् । अघञपोः किम् ? समाजः । 'समुदोरजः पशुषु' इत्यप् । समजः । उदजः ॥

॥ वलादावार्धधातुके वेष्यते ॥ विव्याय । विव्यतुः । विव्युः । अत्र वकारस्य हल्परत्वात् 'उपधायां च' २२६५ इति दीर्घे प्राप्ते 'अचः परस्मिन्–' ५० इति स्थानिवद्भावेनाच्परत्वम् । न च 'न पदान्त–' ५१ इति निषेधः । ॥ **स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत्** इत्युक्तेः । थलि 'एकाचः–' २२४६ इतीण्निषेधे प्राप्ते,

२२९३ । **कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि** ।७।२।१३। एभ्यो लिट इण्न स्यात् । क्रादीनां चतुर्णां ग्रहणं नियमार्थम्—'प्रकृत्याश्रयः प्रत्ययाश्रयो वा यावानिण्निषेधः स लिटि चेत्तर्हि क्रादिभ्य एव नान्येभ्यः' इति । ततश्चतुर्णां थलि भारद्वाजनियमप्रापितस्य वमादिषु क्रादिनियमप्रापितस्य चेटो निषेधार्थम् ।

२२९४ । **अचस्तास्वत्थल्यनिटो नित्यम्** ।७।२।६१। उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततः परस्य थल इण्न स्यात् ।

२२९५ । **उपदेशेऽत्वतः** ।७।२।६२। उपदेशे अकारवतस्तासौ नित्यानिटः परस्य थल इण्न स्यात् ।

२२९६ । **ऋतो भारद्वाजस्य** ।७।२।६३। तासौ

---

**—विव्यतुरिति ।** 'एरनेकाचः–' इति यण् ॥**—लोपाजादेश एवेति ।** एतच्च 'न पदान्त–' इति सूत्रे एवास्माभिरुपपादितम् ॥**—एकाच इतीति ।** अजेरुदात्तत्वेऽपि वीभावोऽनुदात्तः, उदृदन्तादिभिन्ना एकाचोऽजन्ताः सर्वेऽप्यनुदात्ता इत्यभ्युपगमात् ॥ **२२९३ कृसृभृ—।** 'डुकृञ् करणे' । 'कृञ् हिंसायाम्' । इह निरनुबन्धग्रहणादेकानुबन्धद्व्यनुबन्धयोरुभयोर्ग्रहणम् । एवमग्रेऽपि—'भृञ् भरणे', 'डुभृञ् धारणपोषणयोः' इत्युभयोर्ग्रहणम् । 'सृ गतौ' । 'वृङ् संभक्तौ' । 'वृञ् वरणे । इह निरनुबन्धकग्रहणाद्विनानुबन्धयोरप्युभयोर्ग्रहणम् ॥ कृ सृ भृ एषामनुदात्तत्वात् 'एकाच उपदेश–' इति प्रकृत्याश्रये निषेधे प्राप्ते वृङ्वृञोस्तूदात्तत्वात् 'श्र्युकः किति' इति प्रत्ययाश्रये निषेधे प्राप्ते नियमोऽयमित्याह**—क्रादीनां चतुर्णामिति ।** इह स्तुद्रुवादीनां चतुर्णां ग्रहणस्य भारद्वाजनियमप्रापितेण्निषेधोऽपि प्रयोजनमिति बोधयितुमष्टानां ग्रहणमिति नोक्तम् ॥**—इण्निषेध इति ।** 'नेड्वशि–' इति प्रक्रमाद्वशा प्रापितस्यैवाभावस्य नियमो न तु विभाषाबललभ्यस्यापि । 'अनन्तरस्य–' इति न्यायादपि संनिहितस्यैव नियम उचितः । तेन–सिषेधिथ, सिषेद्ध । सिषिधिव, सिषिध्व–इत्याद्युभयं भवति ॥**—नान्येभ्य इति ।** तेन–पेचिव, बभूविवेत्यादि सिद्धम् । न चैवं क्रादिनियमेनैव 'नेड्वशि कृति' इति निषेधस्याप्यप्रवृत्तौ सेदिवान् जक्षिवानित्यादि सिध्यत्येवेति 'वस्वेकाजाद्घसाम्' इतीड्विधानं किमर्थमिति शङ्क्यम् । तस्य नियमार्थत्वेन व्याख्यास्यमानत्वात् । अन्यथा बभूवानित्यत्रापीडागमः स्यादिति ॥ नन्विह क्रादिभ्यश्चेदिण् स्यात्तर्हि लिट्येवेति विपरीतनियमः किं न स्यात् । तथा च कर्ता अकार्षीदित्यादावपीडागमः स्यादिति चेत् । मैवम् । 'कृते ग्रन्थे', 'तमधीष्टो भृतः', 'परिवृतो रथः' इत्यादिनिर्देशविरोधापत्तेः ॥**—वमादिष्विति ।** आदिशब्देन से-ध्वे-वहि-महीनां ग्रहणम् । तुष्टुषे । तुष्टुध्वे । तुष्टुवहे । तुष्टुमहे–इत्यादि । **स्यादेतत्**—अस्तु प्रकृत्याश्रयनिषेधस्य नियमः, प्रत्ययाश्रयस्य तु न संभवति । वृञ्ग्रहणस्य ववर्थेत्यत्राप्राप्तनिषेधप्रापकत्वात् । न ह्यत्र प्रत्ययाश्रयो निषेधः प्राप्नोति, थलोऽकित्त्वात् । नापि प्रकृत्याश्रयः, वृञ उदात्तत्वात् । न चैवमपि वृङो नियमार्थत्वमस्त्विति वाच्यम् । तस्य विशिष्याग्रहणात् । यद्यपि विशिष्य ग्रहणं वृञोऽपि नास्ति, तथाप्यप्राप्तनिषेधप्रापिफलकत्वात् वृ इति वृञ एव ग्रहणं भवेत्, विधिनियमयोर्विधिरेव ज्यायानिति न्यायात् । एवं च बभूविवेत्यादौ 'श्र्युकः किति' इतीण्निषेधो दुर्वार इति चेत् । **अत्राहुः**—'बभूथाततन्थजगृभ्मववर्थे'ति सूत्रेण छन्दसि ववर्थेति निपातनाद्भाषायां वृञस्थल इटः स्वीकर्तव्यतया वृञ्ग्रहणस्य थल्विषयत्वायोगाद्वमादीनां च कित्त्वेन नियमस्य सुस्थत्वादिति ॥ **२२९४ अचस्तास्वत्—।** उत्तरसूत्रादुपदेश इत्यपकृष्यते, तच्चाजन्तस्य विशेषणमित्याह**—उपदेशेऽजन्त इति ।** धातुरित्याक्षेपाल्लभ्यते । न ह्यधातोस्थल् संभवति । नित्यग्रहणमनिटो विशेषणम् । क्व नित्यमनिट् ? इत्यपेक्षायां संनिधानात्तासावेवेति विज्ञायते । 'तासि च क्लृपः' इति सन्निहितं वाऽनुवर्तते । 'न वृद्भ्यः' इत्यस्मान्नेत्यनुवर्तते, तदाह**—तासौ नित्यानिट् ततः परस्येति ।** तासाविव तास्वदिति सप्तम्यन्ताद्वतिः । यथा तासौ न भवति, एवं थल्यपीत्यर्थः ॥ अच इति किम् ? बिभेदिथ । रुरोधिथ ॥ उपदेश इति किम् ? जहर्थ । इह परत्वान्नित्यत्वाच्च गुणे रपरत्वे च कृते अजन्तत्वाभावादेतस्याप्रवृत्ताविट् प्रसज्येतेत्युपदेश इत्युक्तम् ॥ थलीति किम् ? पपिव, पपिम ॥ नित्यमनिटः किम् ? सस्वरिथ । सस्वर्थ । नायं तासौ नित्यमनिट्, 'स्वरतिसूति–' इति विकल्पितेट्त्वात् ॥ इह तासीति नेति चानुवृत्त्यैवेष्टसिद्धेस्तास्वदित्येतन्नातीवोपयुज्यत इति **केचित् । अन्ये तु**—यस्य तासौ विद्यमानत्वं तस्मादेव परस्य थल इण्निषेध इत्येतल्लाभार्थं तत् । तेन–उवयिथ, जघसिथेत्यत्र न निषेध इत्याहुः ॥ **२२९५ उपदेशेऽत्वतः ।** पपक्थ । इयष्ठ ॥ उपदेशे किम् ? कर्ष्टा । चकर्षिथ ॥ अकारवदिति किम् ? भेत्ता । बिभेदिथ ॥ तपरकरणं किम् ? राद्धा । रराधिथ ॥ तासौ किम् ? जिघृक्षति । जग्रहिथ । 'सनि ग्रहगुहोश्च' इति सनि नित्यमनिट् । क्रान्तः । चक्रमिथ । उदित्त्वेन क्त्वायां वेट्कत्वात् 'यस्य विभाषा' इति निष्ठायां नेट् ॥ नित्यानिटः किम् ? अङ्क्ता । अञ्जिता । आनञ्जिथ । किंच नित्यग्रहणानुवर्तनाच्चक्रमिथेत्यपि सिध्यति । नहि क्रमिस्तासौ नित्यानिट्, 'स्नुक्रमोरनात्मनेपदनिमित्ते' इति परस्मैपदे सेट्कत्वात् ॥ **२२९६ ऋतो भारद्वाजस्य ।** तपरकरणात्कॄगॄप्रभृतिषु दीर्घान्तेषु नायं निषेधः प्रवर्तते । ह्रस्वान्तेषु हृञ्धृञादिषु 'अचस्तास्वत्–' इत्येव सिद्धं, वृञ्वृङौ तु यद्यपि सेटौ तथापि वृङः थलेव नास्ति, आत्मनेपदित्वात्, वृञस्तु छन्दसि 'ववर्थ' इति निपातनाद्ववरिथेति भाषायामिटा भाव्यम् ।

नित्यानिट् ऋदन्तादेव थलो नेट् भारद्वाजस्य मतेन । तेनान्यस्य स्यादेव । अयमत्र संग्रहः—

**अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम् ।**
**ऋदन्त ईदृङ्नित्यानिट्, क्राद्यन्यो लिटि सेड्भवेत् ॥१॥**

न च स्तुद्रुवादीनामपि थलि विकल्पः शङ्क्यः । 'अचस्तास्वत्–' २२९४ इति, 'उपदेशेऽत्वतः' २२९५ इति च योगद्वयप्रापितस्यैव हि प्रतिषेधस्य भारद्वाजनियमो निवर्तकः । (प) **'अनन्तरस्य'** इति न्यायात् । विवयिथ, विवेथ, आजिथ । विव्यथुः । विव्य । विवाय, विवय । विव्यिव । विव्यिम । वेता, अजिता । वेष्यति, अजिष्यति । अजतु । आजत् । अजेत् । वीयात् ।

२२९७ । **सिचि वृद्धिः परस्मैपदेषु** ।७।२।१। इगन्ताङ्गस्य वृद्धिः स्यात्परस्मैपदपरे सिचि । अवैषीत्, आजीत् । अवेष्यत्, आजिष्यत् । २३९ **तेज** पालने । तेजति । २४० **खज** मन्थे । खजति । २४१ **खजि** गतिवैकल्ये । खञ्जति । २४२ **एजृ** कम्पने । एजांचकार ।

२४३ **टुओस्फूर्जा** वज्रनिर्घोषे । स्फूर्जति । पुस्फूर्ज । २४४ **क्षि** क्षये । अकर्मकः । अन्तर्भावितण्यर्थस्तु सकर्मकः । क्षयति । चिक्षाय । चिक्षियतुः । चिक्षियुः । चिक्षयिथ, चिक्षेथ । चिक्षियिव । चिक्षियिम । क्षेता ।

२२९८ । **अकृत्सार्वधातुकयोर्दीर्घः** ।७।४।२५। अजन्ताङ्गस्य दीर्घः स्याद्यादौ प्रत्यये परे न तु कृत्सार्वधातुकयोः । क्षीयात् । अक्षैषीत् । २४५ **क्षीज** अव्यक्ते शब्दे । कूजिना सहायं पठितुं युक्तः । चिक्षीज । २४६ **लज** २४७ **लजि** भर्जने । २४८ **लाज** २४९ **लाजि** भर्त्सने च । २५० **जज** २५१ **जजि** युद्धे । २५२ **तुज** हिंसायाम् । तोजति । तुतोज । २५३ **तुजि** पालने । २५४ **गज** २५५ **गजि** २५६ **गृज** २५७ **गृजि** २५८ **मुज** २५९ **मुजि** शब्दार्थाः । 'गज' मदने च । २६०

---

तस्मान्नियमोऽयमित्याह—**ऋदन्तादेवेति ।** जहर्थ । दधर्थ ॥—**अन्यस्य स्यादेवेति ।** एवं च भारद्वाजमते स्यादन्यमते न स्यादिति विकल्पः फलितः । पपिथ । पपाथ । पेचिथ । पपक्थ । इयजिथ । इयष्ठ ॥—**अकारवानिति ।** ह्रस्वाकारवानित्यर्थः ॥—**ईदृगिति ।** यस्तास्यनिट् स ऋदन्तः थलि नित्यानिट् भवतीत्यर्थः ॥ ननु स्तुद्रुस्रुश्रुवामपि थलि भारद्वाजनियमादिट् स्यात् । न चैवं क्रादिसूत्रे तेषां पठनं निरर्थकं स्यादिति वाच्यम् । तत्पठनस्य वमादिष्विण्निवृत्त्यर्थतया सफलत्वात् । अन्यथा क्रादिनियमात्तत्र इडागमो दुर्वारः स्यादित्याशङ्क्याह—**न चेति ।**—**योगद्वयेति ।** क्रादियोगप्रापितस्य तु न निवर्तक इति भावः । कुत इत्याकाङ्क्षायामाह—**अनन्तरस्येति ।** न चैवम् 'उपदेशेऽत्वतः' इत्यस्यैव बाधः स्यादिति वाच्यम् । अत्वत्सु धातुषु ऋदन्तत्वादर्शनेन यद्यत्वतः थलि इण्निषेधस्तर्हि ऋदन्तादेवेति नियन्तुमशक्यत्वात् ॥ ननु तर्हि 'अचस्तास्वत्–' इत्यस्यैव बाधोऽस्तु तत्कथं योगद्वयप्रापितस्येत्युक्तम् । **अत्राहुः**—उपदेशेऽचस्तास्वदित्येवं सूत्रे कृतेऽपि तास्वत्थलीत्यादिपदानामिवोपदेशपदस्याप्यनुवृत्तिसंभवे 'अत्वत' इति सूत्रे उपदेशपदस्य, अच इति पूर्वसूत्रे तु तास्वत्थलीत्यादेश्च करणादुभयोः समानयोगक्षेम इति ज्ञायते । तस्मादिष्टानुरोधाच्च योगद्वयमपि भारद्वाजनियमेन बाध्यते ॥ यदि तु 'उपदेशेऽत्वतोऽचस्तास्वत्थल्यनिटो नित्यम्' इति एको योगः स्वीक्रियते, तदाऽत्र नास्त्येव शङ्कालेशोऽपीति बोध्यमिति ॥ अन्ये तु व्याचक्षते—'अचस्तास्वत्–' इति सूत्रानन्तरमेव 'ऋतो भारद्वाजस्य' इति पठनीयं द्वयोरनन्तरमस्यारम्भादिह, 'तास्वत्थल्यनिटो नित्यं' 'तासि' इत्यनुवर्त्य योऽयं तासि नित्यानिटस्थलि इण्निषेधः स भारद्वाजमते ऋकारान्तस्यैवेति व्याख्यायते । अनेन सर्वेष्टसिद्धिः । यद्वा क्रादिसूत्रे स्तुप्रभृतीनां ग्रहणमेवेड्द्वयस्यापि बाधकमस्तु । पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यात् । अनाश्रितविधानविशेषमिण्मात्रमनारभ्याधीतेन प्रतिषेधेन यथा बाध्येतेत्येतदर्थो हि स आरम्भः । अमुमेवार्थं सिद्धवत्कृत्य ततश्चतुर्णां थलि भारद्वाजनियमप्रापितस्य वमादिषु क्रादिनियमप्रापितस्य चेटो निषेधार्थमिति मूलेऽप्युपनिबद्धमिति ॥—**विव्यिव । विव्यिमेति ।** क्रादिनियमान्नित्यमिट् ॥ **२२९७ सिचि वृद्धिः**—। 'इको गुणवृद्धी' इति परिभाषोपस्थानादाह—**इगन्तेति ।** परस्मैपदेष्विति किम् ? अधविष्ट । अधोष्ट । सिचि किम् ? एति । बिभर्ति । गुणं बाधित्वा वृद्धिः स्यात् । **खज** मन्थे । कजेति केचित्पठन्ति । **एजृ** कम्पने । दीप्तौ त्वात्मनेपदी गतः । **टुओस्फूर्जा** । 'ट्वितोऽथुच्', 'स्फूर्जथुः । 'ओदितश्च' इति निष्ठानत्वार्थमोकारः, स्फूर्णः । स्फूर्णवान् । आकारस्तु 'आदितश्च' इति निष्ठायामिटो निषेधार्थः, 'विभाषा भावादिकर्मणोः' इति विकल्पार्थश्च, स्फूर्णं स्फूर्जितमनेनेत्यादि । 'उपधायां च' इति दीर्घस्यानित्यत्वज्ञापनार्थमिह दीर्घोपदेशः । तेन हुर्च्छति मुर्च्छति इत्यपि भवतीति केचित् । **क्षि** क्षये । अजन्तेष्वस्य पाठो युक्तः । 'क्षि निवासगत्योः' इति तुदादौ ॥ **२२९८ अकृत्सार्व—।** दीर्घग्रहणेन 'अचश्च' इति परिभाषोपस्थानादाह—**अजन्तेति ॥—यादौ प्रत्यय इति ।** 'अयङ् यि क्ङिति' इत्यतो यीत्यनुवर्त्य अङ्गाक्षिप्तप्रत्ययस्तेन विशेष्यते, विशेषणेन तदादिविधिः । 'यस्मिन्विधिः–' इति परिभाषोपस्थानादिति भावः ॥—**न त्विति ।** कृद्यकारे । प्रकृत्य । प्रहृत्य । उच्चैःकृत्य । तुकं बाधित्वा परत्वात् दीर्घः स्यात् । तुग्विधिस्तु—अग्निचित्, सोमसुत्–इत्यादौ चरितार्थः । ल्यपः पित्त्वमप्यनुदात्तार्थतया चरितार्थमित्याहुः । सार्वधातुकयकारे तु—चिनुयात् । सुनुयात् ॥—**कूजिनेति ।** अर्थैक्यादेकत्र पाठ उचित इति भावः ॥—**लज लजि ।** लज्यात् लञ्ज्यात् ॥ **लज** प्रकाशने इति कथादौ ॥—**भर्त्सने चेति ।** चात् भर्जने । **तुजि** पालने । भाषार्थोऽयं युजादौ । **गज गजि ।** 'गजा तु मदिराग्रहम्' । **गज** मदने च ।

वज २६१ व्रज गतौ । 'वदव्रज–' २२६७ इति वृद्धिः । अव्राजीत् ।

अथ टवर्गीयान्ताः शाड्यन्ता अनुदात्तेतः षट्त्रिंशत् ॥ २६२ अट्ट अतिक्रमणहिंसयोः । दोपधोऽयम् । 'तोपधः' इत्येके । अट्टते । आनट्टे । २६३ वेष्ट वेष्टने । विवेष्टे । २६४ चेष्ट चेष्टायाम् । अचेष्टिष्ट । २६५ गोष्ट २६६ लोष्ट संघाते । जुगोष्टे । लुलोष्टे । २६७ घट्ट चलने । जघट्टे । २६८ स्फुट विकसने । स्फोटते । पुस्फुटे । २६९ अठि गतौ । अण्ठते । आनण्ठे । २७० वठि एकचर्यायाम् । ववण्ठे । २७१ मठि २७२ कठि शोके । शोक इह आध्यानम् । मण्ठते । कण्ठते । २७३ मुठि पालने । मुण्ठते । २७४ हेठ विबाधायाम् । जिहेठे । २७५ एठ च । एठांचक्रे । २७६ हिडि गत्यनादरयोः । हिण्डते । जिहिण्डे । २७७ हुडि संघाते । जुहुण्डे । २७८ कुडि दाहे । चुकुण्डे । २७९ वडि विभाजने । २८० मडि च । ववण्डे । २८१ भडि परिभाषणे । परिहासः सनिन्दोपालम्भश्च परिभाषणम् । बभण्डे । २८२ पिडि संघाते । पिपिण्डे । २८३ मुडि मार्जने । मार्जनं शुद्धिर्न्यग्भावश्च । मुण्डते । २८४ तुडि तोडने । तोडनं दारणं हिंसनं च । तुण्डते । २८५ हुडि वरणे । वरणं स्वीकारः । हरण इत्येके । हुण्डते । २८६ चडि कोपे । चण्डते । २८७ शडि रुजायां संघाते च । शण्डते । २८८ तडि ताडने । तण्डते । २८९ पडि गतौ । पण्डते । २९० कडि मदे । कण्डते । २९१ खडि मन्थे । २९२ हेडृ २९३ होडृ अनादरे । जिहेडे । जुहोडे । २९४ वाडृ आप्लाव्ये । बशादिः । आप्लाव्यमाप्लवः । बाडते । २९५ द्राडृ २९६ ध्राडृ विशरणे । द्राडते । २९७ शाडृ श्लाघायाम् । शाडते ।

अथ आटवर्गीयान्तसमाप्तेः परस्मैपदिनः ॥ २९८ शौटृ गर्वे । शौटति । शुशौट । २९९ यौटृ बन्धे । यौटति । ३०० म्लेटृ ३०१ म्रेडृ उन्मादे । द्वितीयो डान्तः । टान्तमध्ये पाठस्त्वर्थसाम्यान्नाथतिवत् । म्लेडति । म्रेडति । ३०२ कटे वर्षावरणयोः । ३०३ चटे इत्येके । चकाट । सिचि 'अतो हलादेर्लघोः' २२८४ इति वृद्धौ प्राप्तायाम्,

२२९९ । ह्मयन्तक्षणश्वसजागृणिश्व्येदिताम् । ।७।२।५ हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्न स्यादिडादौ सिचि । अकटीत् । ३०४ अट ३०५ पट गतौ । आट । आटतुः । आटुः । पपाट । पेटतुः । पेटुः । ३०६ रट परिभाषणे । रराट । ३०७ लट बाल्ये । ललाट । ३०८ शट रुजाविशरणगत्यवसादनेषु । शशाट । ३०९ वट वेष्टने । ववाट । ववटतुः । ववटुः । ववटिथ । ३१० किट ३११ खिट त्रासे । केटति । खेटति । ३१२ शिट ३१३ षिट अनादरे । शेटति । शिशेट । सेटति । सिषेट । ३१४ जट ३१५ झट संघाते । ३१६ भट भृतौ । ३१७ तट उच्छ्राये । ३१८ खट काङ्क्षायाम् । ३१९ णट नृतौ । ३२० पिट शब्दसंघातयोः । ३२१ हट दीप्तौ । ३२२ षट अवयवे । ३२३ लुट विलोडने । ३२४ डान्तोऽयम्–इत्येके । ३२५ चिट परप्रेष्ये । ३२६ विट शब्दे । ३२७ बिट आक्रोशे । बशादिः । ३२८ हिट

---

मदनं–मदः-चित्तविकारः । **वज व्रज ।** वादित्वादेत्वाभ्यासलोपौ न । ववजतुः । वव्रजतुः ॥**—शाड्यन्ता इति ।** शाडृ श्लाघायामित्यन्ता इत्यर्थः ॥**—दोपधोऽयमिति ।** तथा च ष्टुत्वशास्त्रस्यासिद्धत्वात् 'न न्द्राः–' इति द्वित्वनिषेधेन दकारं विहाय टिशब्दस्य द्वित्वे पश्चाद्दकारस्य ष्टुत्वे चर्त्वे च अटिटिषते आट्टिटदित्यादि सिध्यति । टोपधत्वे तु–अटिट्टिषते, आटिट्टदिति स्यादिति भावः ॥**—तोपध इति ।** अस्मिंस्तु पक्षे अतिट्टिषते, आतिट्टदित्यादि बोध्यम् । हलादिःशेषेण टकारनिवृत्तौ तन्निमित्तस्यापि ष्टुत्वस्य निवृत्तत्वादिति नव्याः । मनोरमायां तु–'पूर्वत्रासिद्धीयमद्विर्वचने' इति ष्टुत्वस्यासिद्धत्वाभावाट्टकारद्वयसहितस्य द्वित्वे हलादिःशेषे अटिट्टिषते आटिट्टदित्यादि सिध्यतीत्युक्तम् । 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति त्वनित्यमिति तदाशयः ॥**—आनट्टे इति ।** इह 'न न्द्राः–' इति निषेधो न, तत्र द्वितीयस्येत्यनुवर्तनात्, द्वितीयैकाच एव नदराणां निषेधात् । **घट्ट** चलने । अयं चुरादावपि । **स्फुट ।** अयं कुटादावपि ॥**—आनण्ठे इति ।** 'तस्मान्नुड् द्विहलः' इति नुट् ॥**—वण्ठते इति ।** सहायं विना चरतीत्यर्थः । **मडि** च । पृथक्करणादयं वेष्टनेऽपीत्याहुः । मडि भूषायामित्यग्रे परस्मैपदिषु । **भडि ।** 'यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम्' इत्यमरः । **शडि ।** 'शण्डोऽसुरपुरोहितः' । **द्राडृ ।** विशरणमवयवविभागः । **शाडृ ।** डलयोरैक्यात् शाल्ते इति काश्यपः । **शौटृ** गर्वे । अस्योणादिषु ईरन्वक्ष्यते । 'तदेतदतिशौटीर्यमौडुलोमेर्न मृष्यति' इति कल्पतरुः ॥**—कटे ॥ २२९९ ह्मयन्तक्षण—।** अग्रहीत् । **टुवम् ।** अवमीत् । **हय** गतौ । अहयीत् । **क्षणु** हिंसायाम् । अक्षणीत् । **श्वस** प्राणने । अश्वसीत् । **जागृ** निद्राक्षये । अजागरीत् । **ण्यन्ते** छन्दसि 'नोनयतिध्वनयति–' इत्यादिना चङि निषिद्धे औनयीदिति तूदाहरणम् । **टुओश्वि ।** अश्वयीत् ॥**—इडादौ सिचीति ।** इडादौ किम् ? दह भस्मीकरणे, अधाक्षीत् ॥**—किट खिट । इट किटेति ।** किटिर्गतौ पठिष्यते । इह पाठस्त्वर्थभेदात् । **जट झट ।** जेटतुः । जझटतुः । इह त्वादेशादित्वादेत्वाभ्यासलोपौ न । **खट ।** 'अशूप्रुषिलटिखटिकणिविशिभ्यः क्वन्' । खट्वा । **णट** नृतौ । प्रणटति । णोपदेशपर्युदासेनाटीति सवृद्धिकनिर्देशेन नट अवस्यन्दने इति चौरादिकस्यैव ग्रहणादयं णोपदेश एव । **हट** दीप्तौ । हाटकं सुवर्णम् । 'संज्ञायां च' इति ण्वुल् बाहुलकादक्रियामपि । **षट ।** पचाद्यजन्ताट्टाप् । 'सटा जटाकेसरयोः' । **चिट ।** 'सर्वधातुभ्यः–' इति औणादिक इन् । चेटिः । 'कुदिका-

इत्येके। ३२९ **इट** ३३० **किट** ३३१ **कटी** गतौ । एटति। केटति । कटति । ईकारः 'श्वीदितो निष्ठायाम्' ३०३९ इतीण्निषेधार्थः । केचित्तु ३३२ **इदितं** मत्वा नुमि कृते कण्टतीत्यादि वदन्ति । अन्ते च ३३३ **इ** ३३४ **ई** इति प्रश्लिष्य–अयति । इयाय । इयतुः । इयुः । इययिथ । इयेथ । इयाय । इयय । दीर्घस्य तु 'इजादेश्च–' २२३७ इत्यामि 'अयांचकार' इत्याद्युदाहरन्ति । ३३५ **मडि** भूषायाम् । ३३६ **कुडि** वैकल्ये । कुण्डति । 'कुण्डते' इति तु दाहे गतम् । ३३७ **मुड** ३३८ **प्रुड** मर्दने । ३३९ **चुडि** अल्पीभावे । ३४० **मुडि** खण्डने । मुण्डति । ३४१ **पुडि** चेत्येके । पुण्डति । ३४२ **रुटि** ३४३ **लुटि** स्तेये । रुण्टति । लुण्टति । ३४४ **रुठि** ३४५ **लुठि** इत्येके । ३४६ **रुडि** ३४७ **लुडि** इत्यपरे । ३४८ **स्फुटिर्** विशरणे । इरित्त्वादङ्वा, अस्फुटत् । अस्फोटीत् । ३४९ **स्फुटि** इत्यपि केचित् इदित्त्वान्नुम्, स्फुण्टति । ३५० **पठ** व्यक्तायां वाचि । पेठतुः । पेठिथ । अपठीत् । अपाठीत् । ३५१ **वठ** स्थौल्ये । ववठतुः । ववठिथ । ३५२ **मठ** मदनिवासयोः । ३५३ **कठ** कृच्छ्रजीवने । ३५४ **रट** परिभाषणे । ३५५ **रठ** इत्येके । ३५६ **हठ** प्लुतिशठत्वयोः । बलात्कार इत्येके । हठति । जहाठ । ३५७ **रुठ** ३५८ **लुठ** ३५९ **उठ** उपघाते । ओठति । ३६० **ऊठ** इत्येके । ऊठति । ऊठांचकार । ३६१ **पिठ** हिंसासंक्लेशनयोः । ३६२ **शठ** कैतवे च । ३६३ **शुठ** प्रतिघाते । शोठति । ३६४ **शुठि** इति स्वामी । शुण्ठति । ३६५ **कुठि** च । कुण्ठति ३६६ **लुठि** आलस्ये प्रतिघाते च । ३६७ **शुठि** शोषणे । ३६८ **रुठि** ३६९ **लुठि** गतौ । ३७० **चुड्ड** भावकरणे । भावकरणमभिप्रायसूचनम् । चुड्डति । चुचुड्ड । ३७१ **अड्ड** अभियोगे । अड्डति । आनड्ड । ३७२ **कड्ड** कार्कश्ये । कड्डति । चुड्डादयस्त्रयो दोपधाः । तेन क्विपि–चुत्, अत्, कत्, इत्यादि । ३७३ **क्रीडृ** विहारे । चिक्रीड । ३७४ **तुडृ** तोडने। तोडति । तुतोड । ३७५ **तूडृ** इत्येके । ३७६ **हुडृ** ३७७ **हूडृ** ३७८ **होडृ** गतौ । हुड्यात् । हूड्यात् । होड्यात् । ३७९ **रौडृ** अनादरे । ३८० **रोडृ** ३८१ **लोडृ** उन्मादे । ३८२ **अड** उद्यमे । अडति । आड । आडतुः । आडुः । ३८३ **लड** विलासे । लडति । लडयोर्लळयोश्चैकत्वस्मरणाल्ललतीति स्वाम्यादयः । ३८४ **कड** मदे । कडति । ३८५ **कडि** इत्येके । कण्डति । ३८६ **गडि** वदनैकदेशे । गण्डति । **इति टवर्गीयान्ताः ॥**

अथ पवर्गीयान्ताः ॥ **तत्रानुदात्तेतः स्तोभत्यन्ताश्चतुस्त्रिंशत् ॥** ३८७ **तिपृ** ३८८ **तेपृ** ३८९ **ष्टिपृ** ३९० **ष्टेपृ** क्षरणार्थाः । आद्योऽनुदात्तः । क्षीरस्वामी त्वयं सेडिति बभ्राम । तेपते । तितिपे । क्रादिनियमादिट्, तितिपिषे । तेप्ता । तेप्स्यते ।

२३०० । **लिङ्सिचावात्मनेपदेषु** । १ । २ । ११ । इक्समीपाद्धलः परौ झलादी लिङ्, आत्मनेपदपरः सिचेत्येतौ कितौ स्तः । कित्त्वान्न गुणः । तिप्सीष्ट । तिप्सीयास्ताम् । तिप्सीरन् । लुङि 'झलो झलि' २२८१ इति सलोपः, अतिप्त । अतिप्साताम् । अतिप्सत । तेपते । तितेपे । तिष्टिपे । तिष्टिपाते । तिष्टिपिरे । तिष्टेपे । तिष्टेपाते । तिष्टेपिरे । **तेपृ** कम्पने च । ३९१ **ग्लेपृ** दैन्ये । ग्लेपते । ३९२ **टुवेपृ** कम्पने । वेपते । ३९३ **केपृ** ३९४ **गेपृ** ३९५ **ग्लेपृ** च । चात्कम्पने गतौ च । सूत्रविभागादिति स्वामी । मैत्रेयस्तु चकारमन्तरेण पठित्वा कम्पने इत्य-

---

रात्–' इति ङीष्, चेटी । **विट** । इगुपधलक्षणः कः, विटः ॥—**इयायेति** । द्वित्वे कृते णलि वृद्धौ सत्याम्–आयादेशः । 'अभ्यासस्यासवर्णे' इति इयङ् ॥—**इयतुरिति** । द्वित्वे कृते 'एरनेकाच–' इति यणं बाधित्वा अन्तरङ्गत्वात्सवर्णदीर्घः । ततः 'अचि श्नुधातु–' इतीयङ् । एकादेशस्य पूर्वान्तत्वेन अभ्यासग्रहणेन ग्रहणात् । 'अभ्यासस्यासवर्णे' इत्यनेनेत्येके । **केचित्तु**—'वार्णादाङ्गं बलीयः' इति दीर्घं बाधित्वा यण् । न चेह समानाश्रयत्वं नेति वाच्यम् । अभ्यासोत्तरस्येकारस्य सवर्णदीर्घयणौ प्रति स्थानित्वेन तयोः समानाश्रयत्वात् । अत एव ईयतुरित्यत्र 'इणो यण्' इति यणि ततो 'दीर्घ इणः किति' इत्यभ्यासस्य दीर्घो विधीयते । अन्यथा सूत्रमिदं निर्विषयं स्यात्, अभ्यासाभावादित्याहुः । **स्यादेतत्**—णल्थलोस्त्वभ्यासस्येयङ् दुर्लभः, तस्मिन्कर्तव्ये 'अचः परस्मिन्–' इति वृद्धिगुणयोः स्थानिवद्भावेन असवर्णे इति प्रतिषेधात्, इति चेत् । मैवम् । असवर्णग्रहणसामर्थ्यादेव स्थानिवत्त्वस्याप्रवृत्तेः ॥ ननु नास्ति सामर्थ्यम् । इयर्ति इयृत इत्यादौ सावकाशत्वादिति चेत् । **अत्राहुः**—न ह्येकमुदाहरणं योगारम्भं प्रयोजयति । अन्यथा ह्यभ्यासस्यार्ताविति ब्रूयात् । एवं चान्तरङ्गत्वात्सवर्णदीर्घे कृते ततो वृद्धिगुणयोः सतोः 'णलि' आय, 'थलि' एथ, इट्पक्षे तु 'अयिथ' इति स्यादित्याशङ्काऽपि न कार्या, 'अभ्यासस्यासवर्णे' इत्यस्य वैयर्थ्यापत्तेरिति । एता । एष्यति । 'अकृत्सार्व–' इति दीर्घः, ईयात् । ऐषीत् । **कुडि** । वैकल्यमविवेकः । **तुडृ** । तोडनं दारणं हिंसनं च । **रोडृ लोडृ** । उन्मादश्चित्तविभ्रमः । **गडि** । वदनैकदेशे । टवर्गीयप्रकरणादिह पाठस्तु उचितः । अन्तत्यादिषु तु पञ्चैते न तिङ्विषया इति मतान्तरं बोधयितुं प्रसङ्गादुपन्यस्तः । **तिपृ तेपृ** ॥ **२३०० लिङ्सिचावात्मनेपदेषु** । 'इको झल्', 'हलन्ताच्च' इति वर्तते । 'असंयोगाल्लिट् कित्' इत्यतः किदिति च, तदाह—**इक्समीपादित्यादि** । इकः किम् ? यक्षीष्ट । सति कित्त्वे संप्रसारणं स्यात् । आत्मनेपदेति किम् ? अद्राक्षीत् । कित्त्वे सति 'सृजिदृशोर्झल्यमकिति' इत्यम् न स्यात् । आत्मनेपदपरत्वं सिच एव विशेषणं न तु लिङः, लिङ्स्थानिकस्यात्मनेपदस्य लिङः परत्वासंभवात् । **तेपृ** कम्पने च । चकारात्क्षरणार्थस्य लाभादस्य पूर्वपाठस्त्यक्तुं शक्यः । केचित्तु तिपृ तेपृ इति पठन्ति । **टुवेपृ** । वेपथुः । **केपृ गेपृ ग्लेपृ** च । योगविभागात्पूर्वोत्तरार्थौ चकारेणानुकृष्येते, तदाह—**चात्कम्पने**

पेक्षत इत्याह । ग्लेपेरर्थभेदात्पुनः पाठः । ३९६ मेपृ ३९७ रेपृ ३९८ लेपृ गतौ । ३९९ त्रपूष् लज्जायाम् । त्रपते ।

२३०१ । **तॄफलभजत्रपश्च** ।६।४।१२२। एषामत एकारोऽभ्यासलोपश्च स्यात्किति लिटि सेटि थलि च । त्रेपे । त्रेपाते । त्रेपिरे । ऊदित्वादिड्वा, त्रपिता-त्रप्ता । त्रपिषीष्ट-त्रप्सीष्ट । ४०० **कपि** चलने । कम्पते । चकम्पे । ४०१ **रबि** ४०२ **लबि** ४०३ **अबि** शब्दे । ररम्बे । ललम्बे । आनम्बे । ४०४ **लबि** अवस्रंसने च । ४०५ **कबृ** कर्णे । चकबे । ४०६ **क्लीबृ** अधार्ष्ट्ये । चिक्लीबे । ४०७ **क्षीबृ** मदे । क्षीबते । ४०८ **शीभृ** कत्थने । शीभते । ४०९ **चीभृ** च । ४१० **रेभृ** शब्दे । रिरेभे । ४११ **अभि-रभी** ४१२ क्वचित्पठ्यते । अम्भते । रम्भते । ४१३ **ष्टभि** ४१४ **स्कभि** प्रतिबन्धे । स्तम्भते । उत्तम्भते, 'उदः स्थास्तम्भोः-' ११८ इति पूर्वसवर्णः । विस्तम्भते । 'स्तम्भेः-' २२७२ इति षत्वं तु न भवति, श्नुविधौ निर्दिष्टस्य सौत्रस्यैव तत्र ग्रहणात् । तद्बीजं तु-'उदः स्थास्तम्भोः-' ११८ इति पवर्गीयोपधपाठः, 'स्तम्भेः' २२७२ इति तवर्गीयोपधपाठश्चेति माधवः। केचिदस्य टकारओपदेशिक इत्याहुः । तन्मते-ष्टम्भते । टष्टम्भे । ४१५ **जभि** ४१६ **जृभी** गात्रविनामे ।

२३०२ । **रधिजभोरचि** ।७।१।६१। एतयोर्नुमागमः स्यादचि । जम्भते । जजम्भे । जम्भिता । अजम्भिष्ट । जृम्भते । जजृम्भे । ४१७ **शल्भ** कत्थने । शशल्भे । ४१८ **वल्भ** भोजने । दन्त्योष्ठ्यादिः । ववल्भे । ४१९ **गल्भ** धार्ष्ट्ये । गल्भते । ४२० **श्रम्भु** प्रमादे । तालव्यादिर्दन्त्यादिश्च । श्रम्भते । स्रम्भते । ४२१ **ष्टुभु** स्तम्भे । स्तोभते । विष्टोभते । तुष्टुभे । व्यष्टोभिष्ट ।

अथ परस्मैपदिनः ॥ ४२२ **गुपू** रक्षणे ।

२३०३ । **गुपूधूपविच्छिपणिपनिभ्य आयः** ।३।१।२८। एभ्य आयप्रत्ययः स्यात्स्वार्थे । 'पुगन्त-' २१८९ इति गुणः ।

२३०४ । **सनाद्यन्ता धातवः** ।३।१।३२। सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञाः स्युः । धातुत्वाल्लडादयः । गोपायति ।

२३०५ । **आयादय आर्धधातुके वा** ।३।१।३१। आर्धधातुकविवक्षायामायादयो वा स्युः ।

२३०६ । **कास्प्रत्ययादाममन्त्रे लिटि** ।३।१।३५। कास्धातोः प्रत्ययान्तेभ्यश्चाम् स्याल्लिटि, न तु मन्त्रे ॥

❀ **कास्यनेकाज्ग्रहणं कर्तव्यम्** ॥ सूत्रे प्रत्ययग्रहणमपनीय तत्स्थानेऽनेकाच इति वाच्यमित्यर्थः ।

२३०७ । **आर्धधातुके** ।६।४।४६। इत्यधिकृत्य ।

२३०८ । **अतो लोपः** ।६।४।४८। आर्धधातुकोपदे-

---

**गतौ चेति** । योगविभागसामर्थ्यादेवार्थद्वयलाभे चकारो व्यर्थ इत्यन्ये ॥—**पुनः पाठ इति** । दैन्ये पठितस्य कम्पनाद्यर्थलाभार्थमिति भावः ॥ **२३०१ तॄफल**—। तरतेरकारस्य गुणशब्देन भावितत्वात्फलभजोर्वैरूप्यसंपादकादेशादित्वात् त्रपतेस्त्वेकहल्मध्यस्थत्वाभावादप्राप्ते विधिरयम् । तेरतुः । तेरुः । फेलतुः । फेलुः । भेजतुः । भेजुः ॥ **अबि** शब्दे । अस्मात् 'गुरोश्च हलः' इति अप्रत्यये अम्बाशब्दः । तिस्रः अम्बा अकारोकारमकारात्मकाः शब्दा यस्य इति बहुव्रीहौ 'शेषाद्विभाषा' इति कप्रत्यये त्र्यम्बक इत्येके ॥ केचित्तु त्रीणि अम्बकानि नेत्राणि यस्येति विगृह्णन्ति ॥—**अभिरभी इति** । 'सर्वधातुभ्योऽसुन्' इत्यधिकारे 'उदके नुम्भौ च' इति वक्ष्यमाणत्वात् धात्वन्तरेणापि अम्भःशब्दः सिध्यतीति बोध्यम् । अम्भस्तोयम् । तस्यापत्यमाम्भिः-भीष्मः । 'अम्भसो लोपश्च' इति बाह्वादिपाठादिञि सलोपः ॥—**तद्बीजं त्विति** । पूर्वसवर्णप्रवृत्तेः षत्वाप्रवृत्तेश्च बीजमित्यर्थः ॥ **२३०२ रधिजभोरचि** । रन्धयति । परात्पि वृद्धिर्नित्येन नुमा बाध्यते ॥ अचीति किम् ? रद्धा । जब्धा ॥ **२३०४ सनाद्यन्ताः**—॥—**सनादय इति** । **'सन्क्यच्काम्यच्क्यङ्क्यषोऽथाचारक्विप्णिज्यङौ तथा । यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः'** ॥—**धातुत्वादिति** । प्रत्ययविशिष्टस्य धातुत्वादित्यर्थः । सुप्तिङन्तमित्यनेन 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति ज्ञापितत्वाद्विशिष्टस्य धातुसंज्ञालाभाय सूत्रेऽस्मिन् अन्तग्रहणं कृतम् । 'भूवादयो धातवः' इत्यस्यानन्तरं सनाद्यन्ताश्चेति न सूत्रितम्, सनादयो द्वादशैवेति निर्धारणलाभापत्तेः । 'सनाद्यन्ता धातवः' इत्यस्यानन्तरं तु 'भूवादयश्च' इति पठित्वा 'धातवः' इत्येतत्तत्र त्यक्तुं शक्यम् ॥ **२३०५ आयादयः**—। आय इयङ् णिङ् इत्यर्थः ॥—**विवक्षायामिति** । परसप्तम्यां तु आर्धधातुकोपदेशकाले यददन्तमित्यनुपदं वक्ष्यमाणं न संगच्छेतेति भावः ॥ **अन्ये तु** 'गुपू रक्षणे' इत्यस्मात् क्तिनि पश्चादायप्रत्यये गोपायतिरित्यनिष्टं प्रसज्येत, विवक्षायामित्युक्ते तु आयप्रत्यये कृते क्तिनं बाधित्वा 'अप्रत्ययात्' इत्यकारप्रत्यये टापि च गोपाया धूपायेति सिध्यतीत्याहुः ॥ **२३०६ कास्प्रत्यया**—। अमन्त्रेति किम् ? कृष्णो नोनाव । अच्छन्दसीति तु नोक्तम् । मन्त्रभिन्ने छन्दसि आम इष्टत्वात् । यथा—'पुत्रमामन्त्रयामास', प्रत्ययान्तत्वादाम् । 'अथ ह शुनःशेप ईक्षांचक्रे', 'इजादेश्च' इत्याम् । इह च लुम्पचकास्दरिद्रादिभ्य आमोऽप्राप्तौ 'कास्यनेकाच-' इति वार्तिकमारभ्यते ॥—**प्रत्ययग्रहणमपनीयेति** । अन्यथा अ इवाचरति अति । अस्य लिटि औ अतुरित्यादि वक्ष्यमाणं न सिध्येदिति भावः ॥ अन्ये तु भाष्यवार्तिकयोः प्रत्ययग्रहणमपनीयेत्यनुक्त्वा प्रत्ययान्तादेकाचोप्याम् भवत्येव । अ इवाचरति इत्याचारे क्विपि लिटि आंचकार आंचक्रतुरित्यादि-इत्याहुः ॥ **२३०८ अतो लोपः** । 'अनुदात्तोपदेश-' इति सूत्रादुपदेश इत्यनुवर्तते । तदाह—**आर्धधातुकोपदेशेत्यादि** । उपदेशे इति किम् ?

शकाले यदकारान्तं तस्याकारस्य लोपः स्यादार्धधातुके परे । गोपायांचकार । गोपायांबभूव । गोपायामास । जुगोप । जुगुपतुः । ऊदित्त्वाद्वेट्, जुगोपिथ–जुगोप्थ । गोपायिता–गोपिता–गोप्ता । गोपाय्यात्–गुप्यात् । अगोपायीत्–अगोपीत्–अगौप्सीत् । ४२३ धूप संतापे । धूपायति । धूपायांचकार । दुधूप । धूपायितासि । धूपितासि । ४२४ जप ४२५ जल्प व्यक्तायां वाचि । जप मानसे च । ४२६ चप सान्त्वने । ४२७ षप समवाये । समवायः संबन्धः सम्यगवबोधो वा । सपति । ४२८ रप ४२९ लप व्यक्तायां वाचि । ४३० चुप मन्दायां गतौ । चोपति । चुचोप । चोपिता । ४३१ तुप ४३२ तुम्प ४३३ त्रुप ४३४ त्रुम्प ४३५ तुफ ४३६ तुम्फ ४३७ त्रुफ ४३८ त्रुम्फ हिंसार्थाः । तोपति । तुतोप । तुम्पति । तुतुम्प । तुतुम्पतुः, संयोगात्परस्य लिटः कित्त्वाभावान्नलोपो न । 'किदाशिषि' २२१६' इति कित्वान्नलोपः, तुप्यात् ॥ (ग) प्रात्तुम्पतौ गवि कर्तरि इति पारस्करादिगणे पाठात्सुट्, प्रस्तुम्पति गौः । श्तिपा निर्देशाद्यङ्लुकि न, प्रतोतुम्पीति । त्रोपति । त्रुम्पति । तोफति । तुम्फति । त्रोफति । त्रुम्फति । इहाद्यौ द्वौ पञ्चमषष्ठौ च नीरेफाः । अन्ये सरेफाः । आद्याश्चत्वारः प्रथमान्ताः । ततो द्वितीयान्ताः । अष्टावप्युकारवन्तः । ४३९ पर्प ४४० रफ ४४१ रफि ४४२ अर्ब ४४३ पर्ब ४४४ लर्ब ४४५ बर्ब ४४६ मर्ब ४४७ कर्ब ४४८ खर्ब ४४९ गर्ब ४५० शर्ब ४५१ षर्ब ४५२ चर्ब गतौ । आद्यः प्रथमान्तः । ततो द्वौ द्वितीयान्तौ । तत एकादश तृतीयान्ताः । द्वितीयतृतीयौ मुक्त्वा सर्वे रोपधाः । पर्पति । पपर्प । रफति । रम्फति । अर्बति । आनर्ब । पर्बति । लर्बति । बर्बति, पवर्गीयादिरयम् । मर्बति । कर्बति । खर्बति । गर्बति । शर्बति । सर्बति । चर्बति । ४५३ कुबि आच्छादने । कुम्बति । ४५४ लुबि ४५५ तुबि अर्दने । लुम्बति । तुम्बति । ४५६ चुबि वक्त्रसंयोगे । चुम्बति । ४५७ षृभु ४५८ षृम्भु हिंसार्थौ । सर्भति । ससर्भ । सर्भिता । सृम्भति । ससृम्भ । सृभ्यात् । ४५९ षिभु ४६० षिम्भु इत्येके । सेभति । सिम्भति । ४६१ शुभ ४६२ शुम्भ भाषणे । भासने इत्येके । हिंसायामित्यन्ये ॥

अथानुनासिकान्ताः ॥ तत्र कम्यन्ता अनुदात्तेतो दश ॥ ४६३ घिणि ४६४ घुणि ४६५ घृणि ग्रहणे । नुम्, ष्टुत्वम्, घिण्णते । जिघिण्णे । घुण्णते । जुघुण्णे । घृण्णते । जघृण्णे । ४६६ घुण ४६७ घूर्ण भ्रमणे । घोणते । घूर्णते । इमौ तुदादौ परस्मैपदिनौ । ४६८ पण व्यवहारे स्तुतौ च । ४६९ पन च । स्तुतावित्येव संबध्यते, पृथङ्निर्देशात् । पनिसाहचर्यात्पणेरपि स्तुतावेवायप्रत्ययः । व्यवहारे तु–पणते । पेणे । पणितेत्यादि । स्तुतावनुबन्धस्य केवले चरितार्थत्वादायप्रत्ययान्तान्नात्मनेपदम्, पणायति । पणायांचकार । पेणे । पणायितासि । पणितासे । पणाय्यात् । पणिषीष्ट । पनायति । पनायांचकार । पेने । ४७० भाम क्रोधे । भामते । बभामे । ४७१ क्षमूष् सहने । क्षमते । चक्षमे । चक्षमिषे । चक्षंसे[1] । चक्षमिध्वे । चक्षन्ध्वे । चक्षमिवहे ।

२३०९ । म्वोश्च ।८।२।६५। मान्तस्य धातोर्मस्य नकारादेशः स्यान्मकारे वकारे च परे । णत्वम् । चक्षण्वहे । चक्षमिमहे । चक्षण्महे । क्षमिष्यते । क्षंस्यते । क्षमेत । आशिषि, क्षमिषीष्ट । क्षंसीष्ट । अक्षमिष्ट । अक्षंस्त । ४७२ कमु कान्तौ । कान्तिरिच्छा ।

२३१० । कमेर्णिङ् ।३।१।३०। स्वार्थे । ङित्त्वात्तङ्, कामयते ।

२३११ । अयामन्ताल्वाय्येत्न्विष्णुषु ।६।४।५५।

---

अय पय गतौ । आभ्यां क्विपि 'वेरपृक्तलोपाद्वलि लोपः पूर्वविप्रतिषेधेन' इति वार्तिकात् 'लोपो व्योः–' इति यलोपे 'अतो लोपः' इति लोपो मा भूत् । अत् । यत् । इह 'ह्रस्वस्य पिति–' इति तुक् । 'आर्धधातुके परे' इति किम् ? कथयति । वृद्धौ कर्तव्यायां 'अचः परस्मिन्–' इति स्थानिवत्त्वं यथा स्यात् ॥—**गोपायामिति** । नन्विह आयप्रत्ययस्यादन्ततामाश्रित्य लोपकरणे फलाभावादुच्चारणार्थं एव तत्राकारोऽस्त्विति चेत् । **अत्राहुः**—'गोपायतं नः' इत्यत्र गोपायशब्दस्य धातुत्वात् धातोरन्त उदात्तो भवति । ततः शबकारेणैकादेशोऽपि 'एकादेश उदात्तेन–' इत्युदात्त एव, तकाराकारस्तु 'तास्यनुदात्तेन्ङिददुपदेशात्' इत्यनुदात्तः । ततश्च 'उदात्तादनुदात्तस्य' इति स्वरितो भवति । 'स्वरितात्संहितायामनुदात्तानाम्' इति 'न' इत्यस्य एकश्रुतिः । आयप्रत्ययस्य अनदन्तत्वे तु नेदमिष्टं सिध्यतीति ॥—**स्तुतावेवेति** । **भट्टिस्तु** व्यवहारेऽपि आयं प्रायुङ्क्त—'न चोपलेभे वणिजां पणायाम्' इति । वणिजां व्यवहारमित्यर्थः । 'अ प्रत्ययात्' इति आयप्रत्ययान्तादकारप्रत्यये टाप् ॥—**चक्षंस इति** । इह 'अनुनासिकस्य क्विझलोः–' इत्युपधादीर्घो न कृतः, संज्ञापूर्वकविधेरनित्यत्वादिति स्थितस्य गतिमुत्प्रेक्षयन्ति ॥ **२३०९ कमु** कान्तौ । अस्य णिङभावे 'उदितो वा' इति क्त्वायामिड्विकल्पः । कमित्वा । कान्त्वा । निष्ठायां तु 'यस्य विभाषा' इति निषेधात्कान्तः ॥ **२३११ अयामन्ता**—। नामन्तेति सूत्रितेऽपि 'णेरनिटि' इति वक्ष्यमाणलोपस्य निषेधे गुणायादेशयोः सतोः कामयांचक्रे इत्यादिरूपाणि सिध्यन्त्येव, तथापि 'ल्यपि लघुपूर्वात्' इत्येवमर्थमयादेशवचनम् । प्रस्तनय्य । सङ्गमय्य । नह्यत्र गुणायादेशौ लभ्येते । आम्, कारयामास । अन्त, गण्डयन्तः, मण्डयन्तः,

---

[1] **चक्षंसे इति**—'अनुनासिकस्य–' इति दीर्घस्तु न, क्विप्साहचर्येण तिङ्भिन्नस्यैव झलादेर्ग्रहणात् ।

आम् अन्त आलु आय्य इलु इष्णु–एषु णेरयादेशः स्यात् । वक्ष्यमाणलोपापवादः । कामयांचक्रे । 'आयादय आर्धधातुके वा' २३०५, चकमे । कामयिता । कमिता । कामयिष्यते । कमिष्यते ॥

**२३१२ । णिश्रिद्रुस्रुभ्यः कर्तरि चङ्** ।३।१।४८। ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् स्यात्कर्त्रर्थे लुङि परे । 'अकाम्-इ-अत' इति स्थिते ।

**२३१३ णेरनिटि** ।६।४।५१। अनिडादावार्धधातुके परे णेर्लोपः स्यात् । परत्वात् 'एरनेकाचः–' २७२ इति यणि प्राप्ते । ॐ **ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन**–इति वार्तिकम् । णिलोपस्य तु पाचयतेः पाक्तिरित्यादि क्तिजन्तमवकाश इति भावः । वस्तुतस्तु 'अनिटि' इति वचनसामर्थ्यादार्धधातुकमात्रमस्य विषयः । तथा चेयङादेरपवाद एवायम् । इयङ्, अततक्षत् । यण्, आटिटत् । गुणः, कारणा । वृद्धिः, कारकः । दीर्घः, कार्यते ।

**२३१४ । णौ चङ्युपधाया ह्रस्वः** ।७।४।१। चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात् ।

**२३१५ । चङि** ।६।१।११। चङि परे अनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्तोऽजादेस्तु द्वितीयस्य ।

**२३१६ । सन्वल्लघुनि चङ्परेऽनग्लोपे** ।७।४।९३। 'चङ्परे' इति बहुव्रीहिः । स च 'अङ्गस्य' इति च द्वयमप्यावर्तते । अङ्गसंज्ञानिमित्तं यच्चङ्परं णिरिति यावत्, तत्परं यल्लघु तत्परो योऽङ्गस्याभ्यासस्तस्य सनीव कार्यं स्यात् णावग्लोपेऽसति । अथवा 'अङ्गस्य' इति नावर्तते, चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्येत्यादि प्राग्वत् ।

**२३१७ । सन्यतः** ।७।४।७९। अभ्यासस्यात इकारः स्यात्सनि ॥

---

'तृभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च' इत्यौणादिको झच् । 'झोऽन्तः' । 'स्पृहिगृहि–' इत्यालुच् । स्पृहयालुः । 'श्रुदक्षिस्पृहिगृहिभ्यः–' इत्यौणादिक आय्यः । 'स्पृहयाय्यः' । 'स्तनिहृषिपुषि–' इत्यौणादिक एव इत्नुच् । स्तनयित्नुः । 'णेश्छन्दसि' इति इष्णुच् । 'वीरुधः पारयिष्णवः' ॥ **२३१२ णिश्रिद्रु—**। च्लेः सिचोऽपवादः ॥ **२३१३ णेरनिटि**। णेरिति णिङ्णिचोर्ग्रहणम् । एवमन्यत्रापि बोध्यम् । अनिटीत्यनेनाधिकृतमार्धधातुक इत्येतद्विशेष्यते । 'यस्मिन्विधिः' इति तदादिविधिः ॥ 'अतो लोपः' इत्यस्माल्लोप इति चानुवर्तते, तदाह—**अनिडादावित्यादि** ॥—**यणि प्राप्त इति** । ननु परत्वादियङ्यणादिविधयो यथासंभवमत्र सन्तु नाम, तेषु स्थानिवद्भावाण्णिग्रहणेन ग्रहणाल्लोपो भविष्यतीति चेत् । नैवं शङ्क्यम् । इयङादेशे ह्यन्त्यलोपः प्रसज्येतेति दोषः स्यात् । एतच्च 'अतो लोपः' इति सूत्रे भाष्ये स्थितम् । न चात्र कारणा कारकः इत्यादौ गुणवृद्ध्योः कृतयोरन्तरङ्गत्वादयायादेशयोः कृतयोरन्त्यस्य लोपः प्राप्नोतीति कथमियङादेशे एव दोष उक्त इति शङ्क्यम् । 'वार्णादाङ्गं बलीयः' इत्ययायौ बाधित्वा णिलोपो भविष्यतीति भाष्याशयात् ॥—**ण्यल्लोपाविति** । णिलोपः इयङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन । अल्लोपस्तु वृद्धिदीर्घाभ्यामिति विवेकः ॥ णिलोपस्य निरवकाशत्वेन वार्तिकस्योक्तिसंभव एव नास्तीत्यत आह—**पाक्तिरित्यादि क्तिजन्तमिति** । तत्र 'तितुत्र–' इतीण्निषेधादिति भावः ॥—**वचनसामर्थ्यादिति** । अयं भावः—णेरित्येतावति सूत्रे कृतेऽप्यार्धधातुक इत्यनुवृत्त्या आर्धधातुके परतो वर्तमानो णिलोप इयङ्यणादिभिर्बाधितः सन् परिशेषात् क्तिन्येव स्यादित्यनिटीत्यस्य वैयर्थ्यं प्रसज्येत, तथा चानिडादार्धधातुकं सर्वमप्यस्य विषयः, न तु क्तिजन्तमेवेति ॥—**अयमिति** । णिलोप इत्यर्थः । अल्लोपांशे तु वचनमपेक्षितमेव । तेन चिकीर्षक इत्यत्र वृद्धिं, चिकीर्ष्यदित्यत्र 'अकृत्सार्व–' इति दीर्घं च बाधित्वा पूर्वविप्रतिषेधेन 'अतो लोपः' इति लोपो भवतीत्याहुः ॥ **२३१४ णौ चङ्युपधाया ह्रस्वः** । उपधायाः किम्? अचकाङ्क्षत् ॥ **२३१६ सन्वल्लघुनि—**। चङ्पर इत्येतावतैव णिरिति न लभ्यते, श्रिद्रुस्रुवामपि चङ्परत्वात्–अत आह—**अङ्गसंज्ञानिमित्तमिति** ॥—**अङ्गस्याभ्यास इति** । अङ्गस्य ये द्वे विहिते तयोः पूर्वोऽभ्यास इत्यर्थः ॥—**अङ्गस्येति नावर्तत इति** । अस्मिंस्तु व्याख्याने चङ्परे इत्येतावतैव णिरिति लभ्यते, श्रिद्रुस्रुषु परेषु अङ्गत्वासंभवादतो व्याचष्टे—**चङ्परे णौ यदङ्गमिति** । चङ्परे इत्यस्यैव व्याख्यानं णाविति ज्ञेयम् । अनग्लोपे किम्? अचकथत् ॥ **२३१७ सन्यतः** ॥ 'अत्र लोपोऽभ्यासस्य' इत्यतोऽभ्यासस्येति 'भृञामित्' इत्यत इद्ग्रहणं चानुवर्तते, तदाह—**अभ्यासस्येत्यादि** । तपरकरणं किम्? पापच्यतेः सन्–पापचिषते । न च सनि योऽभ्यासः सन्निमित्त इति विज्ञानात्तपरकरणाभावेऽपि नोक्तातिप्रसङ्गः, अभ्यासस्येह यन्निमित्तत्वादिति वाच्यम् । तादृशविवक्षायामधीषिषति प्रतीषिषतीत्यादावव्याप्तेः । न हि कार्यो निमित्तत्वेनाश्रीयते । यद्याश्रीयेत तर्हि 'द्विर्वचनेऽचि' इति निषेधेन रिस्शब्दस्य द्वित्वाप्रवृत्तावरिरिषतीत्यादि न सिध्येत् ॥ नन्वेवं पिपक्षतीत्यादावव्याप्तिः । अभ्यासस्य सन्परत्वाभावात् । न च 'येन नाव्यवधान–' न्यायेन सन्प्रवृत्त्या व्यवहितेऽप्यभ्यासस्येत्वं स्यादेवेति वाच्यम् । प्रतीषिषतीत्यादावभ्यासस्याव्यवहितसन्परत्वसंभवादुक्तन्यायस्याप्रवृत्तिरिति चेत् । **अत्राहुः**—सना धातुमाक्षिप्य सनि सति यो धातुः सन्नन्तस्तदीयाभ्यासस्येति व्याख्यानान्नोक्तदोषः । न च सनि परे अभ्यासस्येति यथाश्रुतं परित्यज्योक्तव्याख्याने किं मानमिति वाच्यम् । तपरकरणस्यैव तत्र मानत्वात् । किं च अकारग्रहणमपि तत्र मानम् । अन्यथा सन इत्येव ब्रूयात् ।

**२३१८। दीर्घो लघोः** ।७।४।९४ लघोरभ्यासस्य दीर्घः स्यात्सन्वद्भावविषये । अचीकमत । णिङभावपक्षे—

**॥ कमेश्च्लेश्चङ्वक्तव्यः** ॥ णेरभावान्न दीर्घसन्वद्भावौ, अचकमत ॥—

संज्ञायाः कार्यकालत्वादङ्गं यत्र द्विरुच्यते ॥
तत्रैव दीर्घः सन्वच्च, नानेकाक्ष्विति माधवः ॥ १ ॥
चकास्त्यर्थापयत्यूर्णोत्यादौ नाङ्गं द्विरुच्यते ॥
किं त्वस्यावयवः कश्चित्तस्मादेकाक्ष्विदं द्वयम् ॥ २ ॥
वस्तुतोऽङ्गस्यावयवो योऽभ्यास इति वर्णनात् ॥
ऊर्णौ दीर्घोऽर्थापयतौ द्वयं स्यादिति मन्महे ॥ ३ ॥
चकास्तौ तूभयमिदं न स्यात्स्याच्च व्यवस्थया ॥
णेर्विशेष्यं सन्निहितं लघुनीत्यङ्गमेव वा ॥ ४ ॥
इति व्याख्याविकल्पस्य कैयटेनैव वर्णनात् ॥
णेरग्लोपेऽपि संबन्धस्त्वगितामपि सिद्धये ॥ ५ ॥

---

तावताऽप्यधीषिषति प्रतीषिषतीत्यादावित्त्वप्रवृत्तिसिद्धेरिति ॥ **२३१८ दीर्घो लघोः** ॥—**लघोरभ्यासस्येति** । ननु अज्झल्समुदायस्याभ्यासस्य लघुसंज्ञा दुर्लभा, 'ह्रस्वं लघु' इति सूत्रितत्वात् । नैष दोषः । इमे हि न समानाधिकरणे षष्ठ्यौ, किं तु व्यधिकरणे, तथा चाभ्यासावयवस्य लघोर्दीर्घ इत्यर्थः ॥ 'लघुनि चङ्परेऽनग्लोपे' इति सर्वमिहानुवर्तते । तच्च प्राग्वदेव द्वेधा व्याख्येयम्, तदाह—**सन्वद्भावविषय इति** । हलादेरिति प्राचोक्तमिहोपेक्षितं, निष्प्रमाणत्वात् । न हि मुनित्रयोक्तिं विना हलादेरिति व्याख्यातुमुचितम् । न चैवमौन्दिदत् आड्टिटदित्यादौ दीर्घः स्यादिति शङ्क्यम् । अङ्गलघ्वोरुभयोरपि णिचं प्रति विशेष्यत्वे दीर्घस्य तत्राप्राप्तेः । चङ्परं हि यदङ्गम् 'उन्द' इति न तदीयोऽभ्यासो न वा चङ्परणिच्परं यल्लघु तत्परः । एतेन आड्टिटदित्यादिभाष्योदाहरणमेव 'हलादेः' इति व्याख्याने प्रमाणमिति केषांचिदुत्प्रेक्षाऽपि प्रत्युक्ता, दीर्घाप्राप्त्यैवोदाहरणसौष्ठवस्योक्तत्वात् ॥ लघोः किम् ? क्ष्णु हिंसायाम्, अचिक्ष्णवत् । शास्त्रेऽस्मिन् 'कार्यकालं संज्ञापरिभाषम्', 'यथोद्देशं संज्ञापरिभाषम्' इति पक्षद्वयमप्यस्ति, जातिव्यक्तिपक्षवत् । तथा च 'पूर्वोऽभ्यासः' इत्यस्य 'सन्वल्लघुनि—' इत्यादिना सह पक्षद्वयेऽपि एकवाक्यता समानैव, तथापि कार्यकालपक्षे पदैकवाक्यता, यथोद्देशपक्षे तु वाक्यैकवाक्यतेत्यस्ति विशेषः । तत्रेदानीं कार्यकालपक्षपाति माधवमतं तावद्व्याचष्टे—**संज्ञाया** इत्यादिना श्लोकद्वयेन ॥—**अङ्गं यत्रेति । अयं भावः**—'सन्वल्लघुनि—', 'दीर्घो लघोः' इति सूत्रद्वये अङ्गस्येत्यनुवर्तते, अभ्यासस्येति च । तेनाङ्गस्य ये द्वे तयोः पूर्वोऽभ्याससंज्ञकस्तस्येति फलितम् । द्वे इत्यत्र च उच्चारणे इति विशेष्यसमर्पकमध्याह्रियते, तच्च कृदन्तं, तद्योगादङ्गस्येति कर्मणि षष्ठी । तेन यत्राङ्गं द्विरुच्यते तत्रैव पूर्वस्य दीर्घसन्वद्भावौ स्त इति । अचीकरत् । अपीपचत् । युक्तं चैतत् । अङ्गस्येति षष्ठ्याः कारकविभक्तित्वसंभवे तदुपेक्ष्य शेषषष्ठीत्वकल्पनाया अन्याय्यत्वात् ॥—**नाङ्गं द्विरुच्यते इति** । एवं च अचचकासत् । आर्तथपत् । और्णुनवत् । इत्येव भवतीति भावः ॥—**अवयवः कश्चिदिति** । हलादेः प्रथमावयवो द्विरुच्यते, अनादेस्तु द्वितीयावयव इत्यर्थः । अङ्गं यत्र द्विरुच्यते तत्र पूर्वस्य दीर्घसन्वद्भावौ विधीयमानौ एकाक्ष्वेवेति च फलितम् । किंच अस्मिन्पक्षे एकाच इत्यङ्गस्य विशेषणं शब्दतोऽपि सुलभम्, 'एकाचो द्वे—' इत्यधिकारादित्याशयेनाह—**तस्मादेकाक्ष्विति** । **स्यादेतत्**—उक्तरीत्या ह्रस्वहलादिःशेषचुत्वादीन्यपि अनेकाक्षु न स्युः । न चेष्टापत्तिः । दिद्रासति । दिदरिद्रासति । जिगणयिषतीत्यादिलक्ष्यस्य सर्वसंमतत्वात् । तन्निर्वाहार्थं यथोद्देशपक्ष आश्रीयत इति चेत्, तर्हि इहापि स एवोचितः । अर्थाधिकारपक्षस्यैवाभ्यर्हितत्वात्, वृत्त्यादिषु स्वीकृतत्वाच्चेत्यभिप्रेत्याह—**वस्तुत इति** ॥—**ऊर्णौ दीर्घ इति** । स्यादित्यपकृष्यते । और्णुनवत् । इह सन्वद्भावस्तु नोपयुज्यते, णौ कृतस्यादेशस्य स्थानिवद्भावेन निषेधेन वा नुशब्दस्य द्वित्वे सति अभ्यासे अवर्णाभावादिति भावः ॥—**अर्थापयताविति** । अर्थमाचष्टे इत्यर्थे णिच्यापुगागमे ततश्च च्लेश्चङि दीर्घस्य 'सन्यतः' इतीत्वस्य च प्रवृत्तौ आर्तिथदित्येव भवतीति भावः । अर्थ उपयाच्ञायामित्यस्य तु चङ्परे णौ आर्तथतेति भवति, न तु तत्र दीर्घसन्वद्भावयोः प्रवृत्तिरिति चुरादिषु स्फुटीभविष्यति ॥—**उभयमिति** । दीर्घः सन्वच्चेत्येतद्द्वयमित्यर्थः ॥—**न स्यात्स्याच्च व्यवस्थयेति** । चङ्परे णौ यल्लघ्विति व्याख्याने न स्यात् । चङ्परे णौ यदङ्गमिति व्याख्याने तु स्यात् । एवं च अचचकासत् । अचीचकासदिति व्याख्याभेदेन रूपद्वयमित्यर्थः ॥ ननु यथा चङ्परे णौ यल्लघ्विति व्याख्याने 'येन नाव्यवधान—' न्यायेन अपीपचदित्यादावेवोभयं भवति, न त्वनेकव्यवाये अचचकासदित्यादौ, तथा न्यायसाम्येन लघुनि योऽभ्यास इत्यत्राप्येकेनैव व्यवायस्य स्वीकार्यत्वादचिक्ष्णदित्यादौ 'सन्वत्' इतीत्वं न स्यादिति चेत् । **अत्राहुः**—'अत्स्मृदृत्वर—' इतीत्वापवादेन अत्ववचनेन तुल्यजातीयापेक्षेण संयोगस्य व्यवधानेऽपीत्वस्य ज्ञापितत्वान्नोक्तदोषः । अत एव 'दीर्घो लघोः' इति सूत्रे लघोरिति सार्थकम् । माधवोऽपि जागृधातावित्थमेवाह । एवं च वदन् यथोद्देशपक्षमेवाशिश्रियत् । तथा च ऊर्णुधातौ यत्तेनोक्तमौर्णुनवदित्यत्र 'दीर्घो लघोः' इत्यभ्यासस्य दीर्घो न भवति चङ्परे णौ यदङ्गं तस्य योऽभ्यास इति सूत्रार्थात् । अत्र त्वङ्गावयवस्याभ्यासो न त्वङ्गस्येत्यादि, तत्र तस्याप्याग्रहो नास्तीति गम्यते । अत एव चकास्तावचीचकासदित्युदाजहार । तथा च मतभेदाभिप्रायेण पूर्वापरग्रन्थविरोधः समाधेय इति । कातन्त्रपरिशिष्टे त्वित्वदीर्घयोः अजीजागरदित्युदाहृतं, तन्मतद्वयेऽप्यसंभवादुपेक्ष्यम् । व्यवस्थामेव विवृणोति—**णेरिति** । सन्निहितमिति हेतुगर्भविशेषणं, लघुनीत्येतत् णेर्विशेष्यं भवति, सन्निहितत्वादित्यर्थः ॥—**अङ्गमेव वेति** । अस्य चङ्परे इत्यत्र आदेशरूपचङंशे आकाङ्क्षाभावेऽपि णाविति प्रत्ययांशे उत्थिताकाङ्क्षत्वादिति हेतुः स्पष्ट एवेति भावः ॥—**कैयटेनैवेति** । तथा च एकं हरदत्तमतम्, अपरं तु कैयटमतमिति विषयविभागेन व्याचक्षाणा उपेक्ष्या इति भावः । चङ्परे

अथ क्रम्यन्तास्त्रिंशत्परस्मैपदिनः ॥ ४७३ अण ४७४ रण ४७५ वण ४७६ भण ४७७ मण ४७८ कण ४७९ क्वण ४८० व्रण ४८१ भ्रण ४८२ ध्वण शब्दार्थाः । अणति । रणति । वणति । वकारादित्वादेत्वाभ्यासलोपौ न, ववणतुः । ववणिथ । ४८३ धणिः अपि कैश्चित्पठ्यते । धणति । ४८४ ओणृ अपनयने । ओणति । ओणांचकार । ४८५ शोणृ वर्णगत्योः । शोणति । शुशोण । ४८६ श्रोणृ संघाते । श्रोणति । ४८७ श्लोणृ च । शोणादयस्त्रयोऽमी तालव्योष्मादयः । ४८८ पैणृ गतिप्रेरणश्लेषणेषु । ४८९ प्रैणृ इति क्वचित्पठ्यते । पिपैण । ४९० ध्रण शब्दे । उपदेशे नान्तोऽयम् । 'रषाभ्याम्–' २३५ इति णत्वम् । ध्रणति । णोपदेशफलं तु यङ्लुकि, दंध्रन्ति । ४९१ बण इत्यपि केचित् । बेणतुः बेणिथ । ४९२ कनी दीप्तिकान्तिगतिषु । चकान । ४९३ ष्टन ४९४ वन शब्दे । स्तनति । वनति । ४९५ वन ४९६ षण संभक्तौ । वनेरर्थभेदात्पुनः पाठः । सनति । ससान । सेनतुः ।

२३१९ । ये विभाषा ।६।४।४३। जनसनखनामात्वं वा स्याद्यादौ क्ङिति । सायात्–सन्यात् । ४९७ अम गत्यादिषु । कनी दीप्तिकान्तीत्यत्र गतेः परयोः शब्दसंभक्त्योरादिशब्देन संग्रहः । अमति । आम । ४९८ द्रम ४९९ हम्म ५०० मीमृ गतौ । द्रमति । दद्राम । 'ह्म्यन्त–' २२८८ इति न वृद्धिः, अद्रमीत् । हम्मति । जहम्म । मीमति । मिमीम । अयं शब्दे च । ५०१ चमु ५०२ छमु ५०३ जमु ५०४ झमु अदने ।

२३२० । ष्ठिवुक्लमुचमां शिति ।७।३।७५ एषामचो दीर्घः स्याच्छिति ॥ ॐ आङि चम इति वक्तव्यम् ॥ आचामति । आङि किम् । चमति, विचमति । अचमीत् । ५०५ जिमिं केचित्पठन्ति । जेमति । ५०६ क्रमु पादविक्षेपे ।

२३२१ । वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ३।१।७०। एभ्यः श्यन्वा स्यात्कर्त्रर्थे सार्वधातुके परे ।

२३२२ । क्रमः परस्मैपदेषु ।७।३।७६। क्रमेर्दीर्घः स्यात्परस्मैपदपरे शिति । क्राम्यति–क्रामति । चक्राम । क्राम्यतु–क्रामतु[1] ।

२३२३ । स्नुक्रमोरनात्मनेपदनिमित्ते ।७।२।३६। अत्रैवेट्–अक्रमीत् ।

अथ रेवत्यन्ता अनुदात्तेतः ॥ ५०७ अय ५०८ वय ५०९ पय ५१० मय ५११ चय ५१२ तय ५१३ णय गतौ । अयते ।

२३२४ । दयायासश्च ।३।१।३७ दय अय आस एभ्य आम् स्याल्लिटि । आयांचक्रे । अयेत । अयिषीष्ट ।

२३२५ । विभाषेटः ।८।३।७९। इणः परो य इट् ततः[2] परेषां षीध्वंलुङ्लिटां धस्य वा मूर्धन्यः स्यात् । अयिषीढ्वम्, अयिषीध्वम् । आयिष्ट । आयिढ्वम्, आयिध्वम् ।

२३२६ । उपसर्गस्यायतौ ।८।२।१९। अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात् । प्लायते । पलायते । निसदुसोरुत्वस्यासिद्धत्वान्न लत्वम्, निरयते, दुरयते ।

---

इत्यावर्त्य अग्लोपविशेषणतयाऽपि योजितं तस्य फलमाह—णेरिति । श्रिद्रुस्रुषु परतोऽग्लोपित्वासंभवादिहापि चङ्पर इत्येतावतैव णाविति लभ्यत इति बोध्यम् ॥—अग्लितामपीति । पचिकमिशकिप्रभृतीनामित्यर्थः । नहीत्संज्ञकानां लोपो णिचं प्रतीक्षत इति भावः ॥—णोपदेशफलमिति । अनुस्वार इत्यर्थः ॥—दंध्रन्तीति । 'नुगतोऽनुनासिकान्तस्य' इत्यभ्यासस्य नुक् ॥ २३१९ गत्यादिष्विति । गतिशब्दसंभक्तिष्वित्यर्थः । मीमृ । ऋदित्फलं तु 'नाग्लोपि–' इति निषेधः । अमिमीमत् ॥ २३२० ष्ठिवुक्लमु—। ष्ठीवति । क्लाम्यति ॥—आङि चम इति । 'ष्ठिवुक्लम्वाचमाम्' इति वृत्तिकारोक्तपाठो युक्त इति भावः ॥—जिमिं केचिदिति । तथाच जेमनमिति भोजने प्रयुञ्जते ॥ २३२१ वा भ्राश—। उभयत्रविभाषेयम् । अनवस्थानार्थो भ्रमिः क्लमित्रसी च दिवादयः, तेभ्यो नित्यं प्राप्ते इतरेषामप्राप्ते चारम्भात् । भ्राशृ भ्लाशृ दीप्तौ । फणादावेतौ । भ्रमु चलने भ्वादिः, ज्वलादिः । फणादिरपि मनोरमायां पठ्यते, तद्भ्रमसादिति नव्याः । भ्रमु अनवस्थाने दिवादिः, पुषादिः, शमादिः, तत्र भ्वादेः–भ्रम्यति, भ्रमति । शमादेस्तु श्यनि दीर्घे भ्राम्यतीति त्रैरूप्यम् । क्लमु ग्लानौ, त्रसी उद्वेगे, त्रुट छेदने, लष कान्तौ ॥ २३२२ क्रमः—। 'ष्ठिवुक्लमुचमाम्–' इत्यतोऽनुवर्तनादाह—परस्मैपदे शितीति । परस्मैपदे किम् ? उपक्रमते । पराक्रमते ॥ २३२३ स्नुक्रमोः—॥—अनात्मनेपदनिमित्ते इति । आत्मनेपदनिमित्ताभावे इत्यर्थः । अन्ये तु द्विवचनस्थाने व्यत्ययेन एकवचनम्, अनात्मनेपदनिमित्तयोरित्यर्थ इत्याहुः । उभयोरपि भावकर्मकर्मव्यतिहारास्तङो निमित्तम्, क्रमेस्तु वृत्तिसर्गादयोऽपीति बोध्यम् ॥ स्नुक्रमोरुदात्तत्वादिटि सिद्धे नियमार्थोऽयमित्याह—अत्रैवेडिति । अनात्मनेपदेति किम् ? उपस्नोष्यते जलेन । उपक्रंस्यते । आक्रंस्यते । निमित्त इति किम् ? स्नौतीति स्नविता, स इवाचरति स्नवित्रीयते । इह क्यङ् आत्मनेपदनिमित्तं, न तु स्नौतिरित्याहुः ॥ २३२५ लुङ्लिटां धस्येति ।

---

१ क्रामत्विति—उत्क्रामेत्यत्र हेर्लुकि दीर्घो भवत्येव । 'क्रम' इति सूत्रेऽनुवृत्तस्याङ्गस्य परस्मैपदपरशिन्निरूपितस्यैव ग्रहणेन हेर्लुक्यपि शन्निरूपिताङ्गस्य कार्याभावेन 'न लुमता' इत्यस्याप्रवृत्तेः । २ ततः परेषामिति—यद्यपीटः षीध्वमवयवत्वात्तस्य ततः परत्वं दुरुपपादं, तथापि श्रुतिकृतानन्तर्यमात्रेण शास्त्रस्य प्रवृत्तिः सामर्थ्याद्बोध्या ।

निरदुरोस्तु-निलयते, दुलयते । 'प्रत्ययः' इति त्विणो रूपम् । अथ कथम्—उदयति विततोर्ध्वरश्मिरज्जाविति माघः । 'इटकिटकटी' इत्यत्र प्रश्लिष्टस्य भविष्यति । यद्वा, (प) **अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्**, चक्षिङो ङित्करणाज्ज्ञापकात् । वादित्वात्-ववये । पेये । मेये । चेये । तेये । प्रणयते । नेये । ५१४ दय दानगतिरक्षणहिंसादानेषु । आदानं ग्रहणम् । दयांचक्रे । ५१५ रय गतौ । ५१६ **ऊयी** तन्तुसन्ताने । ऊयांचक्रे । ५१७ **पूयी** विशरणे दुर्गन्धे च । पूयते । पुपूये । ५१८ **क्नूयी** शब्दे उन्दे च । चुक्नूये । ५१९ **क्ष्मायी** विधूनने । चक्ष्माये । ५२० **स्फायी** ५२१ **ओप्यायी** वृद्धौ । स्फायते । पस्फाये । प्यायते ।

२३२७ । **लिड्यङोश्च** ।६।१।२९। लिटि यङि च प्यायः पीभावः स्यात् । पुनःप्रसङ्गविज्ञानात्पीशब्दस्य द्वित्वम् । 'एरनेकाचः–' २७२ इति यण् । पिप्ये । पिप्याते । पिप्यिरे ।

२३२८ । **दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्** ।३।१।६१। एभ्यश्च्लेश्चिण्वा स्यादेकवचने तशब्दे परे ।

२३२९ । **चिणो लुक्** ।६।४।१०४। चिणः परस्य लुक् स्यात् । अप्यायि, अप्यायिष्ट । ५२२ **तायृ** सन्तानपालनयोः । सन्तानः प्रबन्धः । तायते । तताये । अतायि । अतायिष्ट । ५२३ **शल** चलनसंवरणयोः । ५२४ **वल** ५२५ **वल्ल** संवरणे संचरणे च । ववले । ववल्ले । ५२६ **मल** ५२७ **मल्ल** धारणे । मेले । ममल्ले । ५२८ **भल** ५२९ **भल्ल** परिभाषणहिंसादानेषु । बभले । बभल्ले । ५३० **कल** शब्दसंख्यानयोः । कलते । चकले । ५३१ **कल्ल** अव्यक्ते शब्दे । कल्लते । 'अशब्दे' इति स्वामी । अशब्दस्तूष्णींभाव इति च । ५३२ **तेवृ** ५३३ **देवृ** देवने । तितेवे । दिदेवे । ५३४ **षेवृ** ५३५ **गेवृ** ५३६ **ग्लेवृ** ५३७ **पेवृ** ५३८ **मेवृ** ५३९ **म्लेवृ** सेवने । 'परिनिविभ्यः–' २२७५ इति षत्वम् । परिषेवते । सिषेवे । अयं सोपदेशोऽपीति न्यासकारादयः, तद्भाष्यविरुद्धम् । गेवते । जिगेवे । जिग्लेवे । पिपेवे । मेवते । म्लेवते । ५४० **शेवृ** ५४१ **खेवृ** ५४२ **केवृ** इत्यप्येके । ५४३ **रेवृ** प्लवगतौ । प्लवगतिः प्लुतगतिः । रेवते ।

**अथावत्यन्ताः परस्मैपदिनः** ॥ ५४४ **मव्य** बन्धने । ममव्य । ५४५ **सूक्ष्र्य** ५४६ **ईक्ष्र्य** ५४७ **ईर्ष्य** ईर्ष्यार्थाः । ५४८ **हय** गतौ । अहयीत्, यान्तत्वान्न वृद्धिः । ५४९ **शुच्य** अभिषवे । अवयवानां शिथिलीकरणं सुरायाः सन्धानं वाऽभिषवः, स्नानं च । शुशुच्य । ५५० **चुच्य** इत्येके । ५५१ **हर्य** गतिकान्त्योः । जहर्य ५५२ **अल** भूषणपर्याप्तिवारणेषु । अलति । आल ।

२३३० । **अतो ल्रान्तस्य** ।७।२।२। 'ल्र' इति लुप्तषष्ठीकम् । अतः समीपौ यौ ल्रौ तदन्तस्याङ्गस्यातो वृद्धिः स्यात्परस्मैपदपरे सिचि । 'नेटि' २१६८ इति निषेधस्य

---

लिटि लिलिहिढ्वे । लिलिहिध्वे ॥ **२३२६ अथ कथमिति** । शानचा भाव्यमिति शङ्कितुराशयः । **क्नूयी** शब्दे उन्दे च । उन्दः क्लेदनम् ॥ **२३२७ लिड्यङोश्च** ॥ यङि पेपीयते ॥ **२३२८ दीपजन**—॥ दीपी दीप्तौ, जनी प्रादुर्भावे, बुध अवगमने, पूरी आप्यायने । एते दिवादयः ॥ **२३२९ चिणो लुक्** ॥—**परस्य लुक् स्यादिति** । 'तशब्दस्य' इति कैश्चित्पठ्यते तदार्थिकार्थकथनम् । तशब्दे परतः चिणि विहिते चिणः परस्य जायमानो लुक्–'प्रत्ययस्य लुक्श्लुलुपः' इति वचनात्तशब्दस्यैवेति स्पष्टत्वात् ॥—**अयमिति** । षेवृ धातुः ॥—**भाष्यविरुद्धमिति** । यदि सोपदेशः स्यात्तदा स्त्यायतिरिवायमपि षोपदेशलक्षणे पर्युदस्येत, तदकरणान्नास्ति सोपदेश इति भावः ॥—**प्लव गताविति** । केचित् प्लवेति धात्वन्तरमित्याहुः, तद्धि मनोरमायां दूषितम् । प्लवेति धात्वन्तरत्वे 'विभाषा ङि रुप्लुवोः' इत्यत्र प्लुवः पक्षे घञ्विधानं व्यर्थं स्यात् । प्लवेत्येतस्माद् घञि आप्लावशब्दस्य सिद्धत्वात् । तथा 'स्रवतिशृणोति–' इति सूत्रेण प्लवतेरभ्यासोकारस्येत्वविधानमपि व्यर्थं स्यात् । तद्धि पक्षे अपिप्लवदिति रूपसिद्ध्यर्थं क्रियते, तच्च रूपं प्लवधातोः 'सन्वतः' इत्यनेन सिद्धमिति किं तदुपादानेनेति ॥—**ममव्येति** । 'यस्य हलः' इति लोपस्तु न भवति, यस्येति संघातग्रहणमिति सिद्धान्तितत्वात् । वर्णग्रहणे त्वर्थवद्ग्रहणपरिभाषाया अप्रवृत्त्या पुत्रकाम्येत्यादावपि लोपः स्यादिति दिक् । लुटि, मव्यिता । आशिषि, मव्यात् । 'हलो यमाम्–' इति धातुयकारस्य वा लोपः । **सूक्ष्र्य ईक्ष्र्य** । णलि, सुषूक्ष्र्य । ईक्ष्र्याचकार । ईर्ष्याचकार । एभ्यः क्विपि 'लोपो व्योः–' यलोपे 'स्कोः' इति कलोपे जश्त्वचर्त्वयोः–सूर्ट्, ईर्ट् । संयोगान्तलोपस्त्विह न भवति, 'रात्सस्य' इति नियमात् । सूक्ष्र्य आदर इति वक्ष्यते तस्यापि सूर्ट् इत्येव रूपम् । **हय** गतौ । जहाय । हय्यात् ॥—**शिथिलीकरणमिति** । सोमनभिषुणोतीत्यादौ दर्शनात् ॥—**सुराया इति** । तत्प्रकरणे 'संधानं स्यादभिषवः' इत्यमरोक्तेः ॥ **२३३० अतो ल्रान्तस्य** । यद्यवयववचनेनान्तशब्देन बहुव्रीहिरङ्गं चान्यपदार्थस्तत्पक्षे विशेषणेन तदन्तविधेः सिद्धत्वादन्तग्रहणमनर्थकम् । अश्वल्लीदित्यत्रातिव्याप्तिश्च । समीपवाचिना अन्तशब्देन षष्ठीसमासपक्षे रपिरणिश्वल्लप्रभृतिष्वतिव्याप्तिः, अङ्गस्यातः ल्रोः समीपत्वात् । ल्रं च तदन्तश्चेति समीपवाचिनाऽन्तशब्देन कर्मधारयपक्षे ल्रन्तशब्दस्य विशेषणत्वात्पूर्वनिपातः स्यादत आह—**लुप्तषष्ठीकमिति** । अन्तशब्दः

'अतो हलादेः—' २२८४ इति विकल्पस्य चापवादः । मा भवानालीत् । अयं स्वरितेदित्येके । तन्मते—अलते इत्यापि । ५५३ ञिफला विशरणे । 'तृफल—' २३०१ इत्येत्वम्, फेलतुः । फेलुः । अफालीत् । ५५४ मील ५५५ श्मील ५५६ स्मील ५५७ क्ष्मील निमेषणे । निमेषणं संकोचः । द्वितीयस्तालव्यादिः । तृतीयो दन्त्यादिः । ५५८ पील प्रतिष्टम्भे । प्रतिष्टम्भो रोधनम् । ५५९ नील वर्णे । निनील । ५६० शील समाधौ । शीलति । ५६१ कील बन्धने । ५६२ कूल आवरणे । ५६३ शूल रुजायां संघोषे च । ५६४ तूल निष्कर्षे । निष्कर्षो निष्कोषणम् । तच्चान्तर्गतस्य बहिर्निःसारणम् । तुतूल । ५६५ पूल संघाते । ५६६ मूल प्रतिष्ठायाम् । ५६७ फल निष्पत्तौ । फेलतुः । फेलुः । ५६८ चुल्ल भावकरणे । भावकरणमभिप्रायाविष्कारः । ५६९ फुल्ल विकसने । ५७० चिल्ल शैथिल्ये भावकरणे च । ५७१ तिल गतौ । तेलति । ५७२ तिल्ल इत्येके । तिल्लति । ५७३ वेलृ ५७४ चेलृ ५७५ केलृ ५७६ खेलृ ५७७ क्ष्वेलृ ५७८ वेल्लृ चलने । पञ्च ऋदितः । षष्ठो लोपधः । ५७९ पेलृ ५८० फेलृ ५८१ शेलृ गतौ । ५८२ षेलृ इत्येके । ५८३ स्खल संचलने । चस्खाल । अस्खालीत् । ५८४ खल संचये । ५८५ गल अदने । गलति । अगालीत् । ५८६ षल गतौ । सलति । ५८७ दल विशरणे । ५८८ श्वल ५८९ श्वल्ल आशुगमने । शश्वाल । अश्वालीत् । शश्वल्ल । शश्वल्लीत् । ५९० खोलृ ५९१ खोर्ऋ गतिप्रतिघाते । खोलति । खोरति । ५९२ धोर्ऋ गतिचातुर्ये । धोरति । ५९३ त्सर छद्मगतौ । तत्सार । अत्सारीत् । ५९४ क्मर हूर्छने । चक्मार । ५९५ अभ्र ५९६ वभ्र ५९७ मभ्र ५९८ चर गत्यर्थाः । चरतिर्भक्षणेऽपि । अभ्रति । आनभ्र । मा भवानभ्रीत्, अङ्गान्त्यरेफस्यातः समीपत्वाभावान्न वृद्धिः । ५९९ ष्ठिवु निरसने । 'ष्ठिवुक्लमु—' २३२० इति दीर्घः । ष्ठीवति । अस्य द्वितीयस्थकारष्ठकारो वेति वृत्तिः । तिष्ठेव । तिष्ठिवतुः । तिष्ठिवुः । टिष्ठेव, टिष्ठिवतुः । टिष्ठिवुः । 'हलि च' ३५४ इति दीर्घः । ष्ठीव्यात् । ६०० जि जये । अयमजन्तेषु पठितुं युक्तः । जय उत्कर्षप्राप्तिः । अकर्मकोऽयम् । जयति ।

२३३१ । सन्लिटोर्जेः ।७।३।५७। जयतेः सन्लिण्निमित्तो योऽभ्यासस्ततः परस्य कुत्वं स्यात् । जिगाय । जिग्यतुः । जिग्युः । जिगयिथ । जिगेथ । जिगाय । जिगय । जिग्यिव । जिग्यिम । जेता । जीयात् । अजैषीत् । ६०१ जीव प्राणधारणे । जिजीव । ६०२ पीव ६०३ मीव ६०४ तीव ६०५ णीव स्थौल्ये । पिपीव । मिमीव । तितीव । निनीव । ६०६ क्षिवु ६०७ क्षेवु निरसने । ६०८ उर्वी ६०९ तुर्वी ६१० थुर्वी ६११ दुर्वी ६१२ धुर्वी हिंसार्थाः । ऊर्वांचकार । 'उपधायां च' २२६५ इति दीर्घः, तुतूर्व । ६१३ गुर्वी उद्यमने । गूर्वति । जुगूर्व । ६१४ मुर्वी बन्धने । ६१५ पुर्व ६१६ पर्व ६१७ मर्व पूरणे । ६१८ चर्व अदने । ६१९ भर्व

---

समीपवाचीत्यभिप्रेत्याह—अतःसमीपाविति ॥—अतो वृद्धिः स्यादिति । इह 'अतः' इत्यस्य तन्त्रावृत्त्यादिकं स्वीकर्तव्यम् । अन्यथा प्रयोजनाभावादिक्परिभाषानुपस्थानेऽप्यलोन्त्यपरिभाषयाऽन्त्यस्य स्यादिति भावः । यद्यपि 'अतो ल्रस्य' इत्युक्तेऽपि ल्रान्तस्याङ्गस्य अतः सिचि परे वृद्धिरित्यर्थे स्वीकृते 'येन नाव्यवधान' न्यायेनेष्टं सिध्यति तथाप्यङ्गस्य सिचि परे अतो वृद्धिरित्यर्थोऽपि प्रतीयेत । ततश्चाश्वल्लीदित्यत्रातिप्रसङ्गः स्यात् । तद्वारणाय सूत्रेऽन्तग्रहणं कृतमिति—तदनुरोधेनान्तशब्दस्य समीपवाचित्वम्, अत इत्यस्य चानुवृत्तिः स्वीकृतेति बोध्यम् ॥ अतः समीपाविति किम् ? अखोरीत् । अमीलीत् ॥ ल्रान्तस्याङ्गस्य किम् ? श्वल्ल आशु गमने, अश्वल्लीत् । अत्र अकारसमीपे यो ल्रकारः स नाङ्गस्यान्तः, यस्त्वङ्गस्यान्तः स तु नाकारस्य समीपः ॥ ननु ल्रेत्यस्य लुप्तषष्ठीकत्वाभ्युपगमेऽप्यन्तशब्दस्यावयववाचित्वं स्वीकृत्य अङ्गस्यान्तं यत् ल्रं तस्य अतः=तत्समीपस्यातो वृद्धिरिति व्याख्याने स्वत इत्यस्यावृत्तिर्नापेक्षितेति चेत् । अत्राहुः—'हलन्त्यम्' इति सूत्रे मनोरमायां 'सामीप्यं षष्ठ्यर्थः' इति पक्षस्य निराकरणात्तदनुरोधेनात्र 'अतः' इत्यस्यावृत्तिराश्रितेति । अत्र केचित्—'अतो ल्रान्तस्य' इत्यत्र ल्रेति लुप्तसप्तमीकम् । अथवा 'अतो ल्रान्ते' इति व्यस्तमेव सूत्रयितुं शक्यम् । तथा च 'अङ्गस्यान्तं यत् ल्रं तस्मिन्परेऽव्यवहितस्यातो वृद्धिः' इति व्याख्यानसंभवाच्च तन्त्रावृत्त्याद्याश्रयणक्लेशः । न चाङ्गस्य विशेष्यत्वेनैवान्वयो युज्यते, न तु विशेषणत्वेन; 'पदाङ्गाधिकारे तस्य च तदन्तस्य च' इति परिभाषायाः पदमङ्गं च विशेष्यं भवतीत्यभिप्रायवर्णनादिति वाच्यम् । 'अल्लोपोऽनः' इति सूत्रेऽङ्गावयवोऽसर्वनामस्थानेत्येवं भाष्यकारादिभिर्विशेषणतया व्याख्यानात्क्वचिद्विशेषणत्वेऽप्यङ्गस्य न क्षतिरित्याहुः॥—नेटीत्यादि । यद्यपि पुरस्तादपवादन्यायेन नेटीत्यस्यापवादो न तु विकल्पस्यापि, तथापि बाध्यसामान्यचिन्तायां स्वविषये प्राप्तं सर्वं बाध्यत इति पुरस्तादपवादन्यायोऽत्र न प्रवर्तत इति भावः ॥—मील संकोचे इति । नेत्रसंकोचे तु प्रचुरप्रयोगः । तिल गतौ । तिल स्नेहने इति चुरादौ । दल विशरणे । विशरणमवयवानां विभागः । धोर्ऋ । धोरितकमश्वानां गतिविशेषः । निष्ठान्तात्संज्ञायां कन् । त्सर छद्मगता । छद्मना कपटेन गतिः—छद्मगतिः । क्मर हूर्छने । हूर्छनं कौटिल्यम् । ष्ठिवु निरसने । अस्य ल्युटि ष्ठेवनम् । 'ष्ठीवनाऽसृक्शकृन्मूत्ररेतांस्यप्सु न निक्षिपेत्' इत्यत्र पृषोदरादित्वात्पक्षे दीर्घ ईकार इत्याहुः॥ २३३१ सन्लिटोर्जेः ॥—सन्लिण्निमित्त इति । यदि तु सनि लिटि च परे योऽभ्यास

हिंसायाम् । ६२० कर्व ६२१ खर्व ६२२ गर्व दर्पे । ६२३ अर्व ६२४ शर्व ६२५ षर्व हिंसायाम् । आनर्व । शर्वति । सर्वति । ६२६ इवि व्याप्तौ । इन्वति । इन्वांचकार । ६२७ पिवि ६२८ मिवि ६२९ णिवि सेचने । तृतीयो मूर्धन्योष्मादिरित्येके । 'सेवने' इति तरङ्गिण्याम् । पिन्वति । पिपिन्व । ६३० हिवि ६३१ दिवि ६३२ धिवि ६३३ जिवि प्रीणनार्थाः । हिन्वति । दिन्वति ।

**२३३२। धिन्विकृण्व्योर च** ।३।१।८०। अनयोरकारोऽन्तादेशः स्यादुप्रत्ययश्च शब्विषये । 'अतो लोपः' २३०८ । तस्य स्थानिवद्भावाल्लघूपगुणो न । उप्रत्ययस्य पित्सु गुणः । धिनोति । धिनुतः । धिन्वन्ति ।

**२३३३। लोपश्चास्यान्यतरस्यां म्वोः** ।६।४।१०७। असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तस्याङ्गस्य लोपो वा स्यात् म्वोः परयोः । धिन्वः–धिनुवः । धिन्मः–धिनुमः । मिपि तु परत्वाद्गुणः, धिनोमि ।

**२३३४। उतश्च प्रत्ययादसंयोगपूर्वात्** ।६।४।१०६। असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तादङ्गात्परस्य हेर्लुक् स्यात् । धिनु । नित्यत्वादुकारलोपात्पूर्वमाट्, धिनवाव । धिनवाम । जिन्वति । इत्यादि । ६३४ रिवि ६३५ रवि ६३६ धवि गत्यर्थाः । रिण्वति । रण्वति । धन्वति । ६३७ कृवि हिंसाकरणयोश्च । चकाराद्गतौ । कृणोतीत्यादि धिनोतिवत् । अयं स्वादौ च । ६३८ मव बन्धने । मवति । मेवतुः । मेवुः । अमवीत्, अमावीत् । ६३९ अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु । अवति । आव । मा भवानवीत् । ६४० धावु गतिशुद्ध्योः । स्वरितेत् । धावति । धावते । दधाव । दधावे ॥

अथोष्मान्ता आत्मनेपदिनः । ६४१ धुक्ष ६४२ धिक्ष संदीपनक्लेशनजीवनेषु । धुक्षते । दुधुक्षे । धिक्षते । दिधिक्षे । ६४३ वृक्ष वरणे । वृक्षते । ववृक्षे । ६४४ शिक्ष विद्योपादाने । शिक्षते । ६४५ भिक्ष भिक्षायामलाभे लाभे च । भिक्षते । ६४६ क्लेश अव्यक्तायां वाचि । 'बाधने' इति दुर्गः । क्लेशते । चिक्लेशे । ६४७ दक्ष वृद्धौ शीघ्रार्थे च । दक्षते । ददक्षे । ६४८ दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु । दीक्षते । दिदीक्षे । ६४९ ईक्ष दर्शने । ईक्षांचक्रे । ६५० ईष गतिहिंसादर्शनेषु । ईषांचक्रे । ६५१ भाष व्यक्तायां वाचि । भाषते । ६५२ वर्ष स्नेहने । दन्त्योष्ठ्यादिः । ववर्षे । ६५३ गेषृ अन्विच्छायाम् । ६५४ ग्लेषृ इत्येके । अन्विच्छा अन्वेषणम् । जिगेषे । ६५५ पेषृ प्रयत्ने । पेषते । ६५६ जेषृ ६५७ णेषृ ६५८ एषृ ६५९ प्रेषृ गतौ । जेषते । नेषते । एषांचक्रे । पिप्रेषे । ६६० रेषृ ६६१ हेषृ ६६२ ह्रेषृ अव्यक्ते शब्दे । आद्यो वृकशब्दे । ततो द्वावश्वशब्दे । रेषते । हेषते । ह्रेषते । ६६३ कासृ शब्दकुत्सायाम् । कासांचक्रे । ६६४ भासृ दीप्तौ । बभासे । ६६५ णासृ ६६६ रासृ शब्दे । नासते । प्रणासते । ६६७ णस कौटिल्ये ।

इति प्राचो व्याख्यानमाद्रियेत तदा 'येन नाव्यवधान' न्यायेन प्रकृतिव्यवधानं सोढव्यमेव, परं तु यङ्लुगन्तात्सनि जेजयिषतीत्यत्र कुत्वं स्यात्, न च तन्माधवग्रन्थसंमतमिति भावः ॥ **२३३२ धिन्विकृण्व्योर च** । 'अलोऽन्त्यस्य' इति वकारस्याकारादेशः । चकारेण तु उप्रत्ययोऽनुकृष्यते । बोपदेवेन त्वनयोस्तनादित्वं स्वीकृतम् । तन्मते तु चकारं विनाऽप्युप्रत्ययलाभः ॥—**अतो लोप इति** । यद्यप्युपदेशेऽदन्तत्वं नास्ति तथाप्यार्धधातुकोपदेशे तदस्त्येव । 'धिन्विकृण्व्योर च' इति श्रुतत्वात् अकारादेशे कृते चानुकृष्टस्य पश्चाज्जायमानत्वादिति भावः ॥ **२३३३ लोपश्चा–**॥—**यः प्रत्ययोकार इति** । असंयोगपूर्वो यः प्रत्यय इति प्रत्ययविशेषणं तु न कृतम् । 'अक्ष्णुवः–अक्ष्णुमः' इत्यादावनिष्टाभावेऽपि 'अक्ष्णुवहे' इत्यादावतिप्रसङ्गात् । एवम् 'उतश्च–' इति सूत्रेऽपि 'अक्ष्णुहि' इत्यत्र दोषाभावेऽपि 'अश्नुहि' इत्यत्रातिप्रसङ्गः स्यात्–इति–'असंयोगपूर्व' इति प्रत्ययविशेषणं न कृतमित्याहुः । 'अश्नुहि' इति परस्मैपदं यद्यपि लोके दुर्लभं, तथापि वेदाभिप्रायेण तत्प्रयोगस्य साधुत्वं बोध्यम् । 'आप्नुहि' इति पाठस्तूचितः ॥ **२३३४ कृवि—अयमिति** । [illegible] । स्वादौ हि कृवीत्ययं धातुर्न पठ्यते, किंतु कृञ् हिंसायामिति । तस्य च परस्मैपदेषु सार्वधातुके कृणोतीत्यादीनि रूपाणि तुल्यानीति फलितोऽर्थः । **अव** रक्षणे । एकोनविंशतिरर्थाः । **कान्तिः**–शोभा । **दीप्तिः**–तेज इत्याहुः । **तृप्तिः**–इच्छानाशः । **स्वाम्यर्थः**–स्वामित्वम् । **हिंसा**–हननम् । **आदानं**–ग्रहणम् । न चात्र दानमेवार्थोऽस्त्विति वाच्यम् । 'भागे वृद्धौ ग्रहे वधे' इत्येवमर्थानां विशिष्य बोपदेवेन गणितत्वात् । **भिक्ष** । याञ्चालाभालाभास्त्रयोऽर्थाः । स्वामी तु–क्लेश अव्यक्तायां वाचि च–इति पठित्वा इमावपि भिक्षधातोरर्थाविति मन्यते । क्लिश उपतापे इति दिवादौ । क्लिशू विबाधने इति क्र्यादौ । **दीक्ष** । पञ्चार्थाः । **ईष** गति । 'गुरोश्च हलः' इत्यप्रत्यये टाप्, ईषा । मनस ईषा मनीषा । शकन्ध्वादिः । मनीषामभिनिविष्टं–मनीषितम् । 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति णिचि तदन्तात् क्तः । ईष उञ्छे इति तु परस्मैपदिषु । ह्रस्वादयस्त्रयः–इष गतौ दिवादिः, इष इच्छायां तुदादिः, इष आभीक्ष्ण्ये क्र्यादिः ॥—**कासांचक्रे इति** । 'कास्प्रत्ययात्–'इत्याम् । **भासृ** दीप्तौ । अस्य ऋदित्त्वं भ्राजतेरिव तङ्मात्रफलकम्, 'भ्राजभास–' इत्यादिनोपधाह्रस्वस्य विकल्पितत्वात् । **णस** कौटिल्ये । लिङ्गिनिमित्तादेशादित्वाभावादेत्वम्, नेसे ।

१ एतदधिका मनोरमायामियं पङ्क्तिः—इह 'धिन्विकृण्व्योर च' इति श्रुतत्वादकारादेशे कृते चानुकृष्टस्य प्रत्ययस्य पश्चाद्विधानादिति भावः ।

नसते । ६६८ भ्यस भये । भ्यसते । बभ्यसे । ६६९ आङः शसि इच्छायाम् । आशंसते । आशशंसे । ६७० ग्रसु ६७१ ग्लसु अदने । जग्रसे । जग्लसे । ६७२ ईह चेष्टायाम् । ईहांचक्रे । ६७३ वहि ६७४ महि वृद्धौ । बंहते । बबंहे । मंहते ६७५ अहि गतौ । अंहते । आनंहे । ६७६ गर्ह ६७७ गल्ह कुत्सायाम् । जगर्हे । जगल्हे । ६७८ बर्ह ६७९ बल्ह प्राधान्ये । ओष्ठ्यादी । ६८० वर्ह ६८१ वल्ह परिभाषणहिंसाच्छादनेषु । दन्त्योष्ठ्यादी । केचित्तु पूर्वयोर्दन्त्योष्ठ्यादितामनयोरोष्ठ्यादितां चाहुः । ६८२ प्लिह गतौ । पिप्लिहे । ६८३ वेह्ट ६८४ जेह्ट ६८५ वाह्ट प्रयत्ने । आद्यो दन्त्योष्ठ्यादिः । अन्त्यः केवलोष्ठ्यादिः । ६८६ उभावप्योष्ठ्यादी इत्येके । ६८७ दन्त्योष्ठ्यादी इत्यपरे । जेहतिर्गत्यर्थोऽपि । बबाहे । ६८८ द्राह्ट निद्राक्षये । निक्षेपे इत्येके । ६८९ काशृ दीप्तौ । चकाशे । ६९० ऊह वितर्के । ऊहांचक्रे । ६९१ गाहू विलोडने । गाहते । जगाहे । जगाहिषे । जघाक्षे । जगाहिढ्वे–जगाहिध्वे–जगाढ्वे । गाहिता ।

**२३३५ । ढो ढे लोपः** ।८।३।१३। ढस्य लोपः स्याड्ढे परे । गाढा । गाहिष्यते–घाक्ष्यते । गाहिषीष्ट–घाक्षीष्ट । अगाहिष्ट–अगाढ । अघाक्षाताम् । अघाक्षत । अगाढाः । अघाढ्वम् । अघाक्षि । ६९२ गृहू ग्रहणे । गर्हते । जगृहे ॥ ॐ **ऋदुपधेभ्यो लिटः कित्वं गुणात्पूर्वविप्रतिषेधेन** ॥ जगृहिषे–जघृक्षे । जघृढ्वे । गर्हिता, गर्ढा । गर्हिष्यते–घर्क्ष्यते । गर्हिषीष्ट–घृक्षीष्ट । लुङि–अगर्हिष्ट । इडभावे—

**२३३६ । शल इगुपधादनिटः क्सः** ।३।१।४५। इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः स्यात् । अघृक्षत ।

**२३३७ । क्सस्याचि** ।७।३।७२। अजादौ तङि क्सस्य लोपः स्यात् । 'अलोऽन्त्यस्य' ४२, अघृक्षाताम् । अघृक्षन्त । ६९३ ग्लह च । ग्लहते । ६९४ घुषि कान्तिकरणे । घुंषते । जुघुंषे । केचित् ६९५ घष–इत्यदुपधं पठन्ति ॥

**अथार्हत्यन्ताः परस्मैपदिनः** । ६९६ **घुषिर्** अविशब्दने । विशब्दनं प्रतिज्ञानं ततोऽन्यस्मिन्नर्थे इत्येके । शब्दे इत्यन्ये पेठुः । घोषति । जुघोष । घोषिता । इरित्वादङ् वा । अघुषत्, अघोषीत् । ६९७ अक्षू व्याप्तौ ।

**२३३८ । अक्षोऽन्यतरस्याम्** ।३।१।७५। अक्षो वा श्नुप्रत्ययः स्यात्कर्त्रर्थे सार्वधातुके परे । पक्षे शप् । अक्ष्णोति । अक्ष्णुतः । अक्ष्णुवन्ति । अक्षति । अक्षतः । अक्षन्ति । आनक्ष । आनक्षिथ–आनष्ठ । अक्षिता–अष्टा । अक्षिष्यति । 'स्कोः–' ३८० इति कलोपः । 'षढोः कः सि' २९५, अक्ष्यति । अक्ष्णोतु । अक्ष्णुहि । अक्ष्णवानि । आक्ष्णोत् । आक्ष्णवम् । अक्ष्णुयात् । अक्ष्णुयुः । अक्ष्यात् । ऊदित्वाद्वेट्, 'नेटि' २२६७, मा भवानक्षीत् । अक्षिष्टाम् । अक्षिषुः । इडभावे तु–मा भवानाक्षीत् । आष्टाम् । आक्षुः । ६९८ तक्षू ६९९ त्वक्षू तनूकरणे ।

**२३३९ । तनूकरणे तक्षः** ।३।१।७६। श्नुः स्याद्वा शब्विषये । तक्ष्णोति–तक्षति वा काष्ठम् । ततक्षिथ–ततष्ठ । अतक्षीत् । अतक्षिष्टाम् । अताक्षीत् । अताष्टाम् । तनूकरणे किम् । वाग्भिः संतक्षति । भर्त्सयतीत्यर्थः ।

---

**आङः शसि** । शंसु स्तुताविति तु परस्मैपदिषु वक्ष्यते । **ग्रसु ग्लसु** । 'उदितो वा' इति क्त्वायां वेट्, ग्रसित्वा–ग्रस्त्वा । 'यस्य विभाषा' इति नेट्, ग्रस्तः । **वेह्ट जेह्ट वाह्ट** ॥—**आद्य इति** । वेहतेरति प्रत्यये वेहत्शब्दो निपातितः, 'पोटायुवति–' इति सूत्रे इति भावः । वेहद्गर्भोपघातिनी ॥—**अन्त्य इति** । बाहुशब्दस्य भुजपर्यायस्य, 'क्षुब्धस्वान्तध्वान्त–' इति निपातितस्य बाढशब्दस्य च निर्विवादत्वादिति भावः ॥—**दन्त्योष्ठ्यादी इति** । उभावपीत्यनुषज्यते । अनुदात्तेत्त्वकृतमात्मनेपदमनित्यम् । तेन 'ववाह रक्तं पुरुषास्ततो जाताः सहस्रशः' इति सिद्धम् । न चात्रार्थसंगतिः, धातूनामनेकार्थत्वात्प्रस्रवणार्थकत्वे बाधकाभावादित्याहुः । **ऊह** । कथं तर्हि 'अनुक्तमप्यूहति पण्डितो जनः' इति । **अत्राहुः**—अनुदात्तेत्त्वलक्षणस्य तङोऽनित्यत्वान्न दोष इति । **गाहू** । ऊदित्त्वादिड्वा । इडभावे ढत्वम्, 'एकाचः–' इति भष्भावः, 'षढोः कः सि' इति कः, कात्परस्य षत्वम्–जघाक्षे । 'विभाषेटः' इति वा मूर्धन्यः, जगाहिढ्वे । जगाहिध्वे । इडभावे तु भष्भावः ॥ **२३३५ ढो ढे लोपः** । जघाढ्वे ॥ ढे किम् ? ऊढः । इह पूर्वं ढलोपो मा भूत् । कृते तु ढेग्रहणे 'ष्टुना ष्टुः' इत्यस्य आश्रयात् सिद्धत्वं भवतीति [illegible] ॥—**अगाढेति** । 'झलो झलि' इति सलोपः । ढत्वधत्वष्टुत्वढलोपाः । सिचो लोपात्पूर्वं भष्भावस्तु न, असिद्धत्वात् । भष्भावस्तु [illegible]नन्तरमपि न भवति, सकारपरत्वाभावात् ॥ न च कृतेऽपि सलोपे प्रत्ययलक्षणेन सिच्परत्वाद्भष्भावो दुर्वार इति शङ्क्यम् । वर्णाश्रये प्रत्ययलक्षणाभावात् । अन्यथा गवे हितं गोहितमित्यत्रावादेशः स्यादिति दिक् ॥—**जगृहे इति** । कित्वात्परत्वात् 'पुगन्त–' इति गुणे प्राप्ते 'ऋदुपधेभ्यः–' इति वार्तिकात्कित्त्वे गुणाभावः ॥ **२३३६ शल इगुपधा—**। शल इति धातोर्विशेषणात्तदन्तलाभः ॥ शल इति किम् ? अतिप्त ॥ इगिति किम् ? अगाढ ॥ अनिटः किम् ? औहिष्ट ॥ **२३३७ क्सस्याचि** ॥—**अजादाविति** । अङ्गाक्षिप्तप्रत्ययोऽत्र विशेष्यः । तङीति तु केषांचित्प्रक्षेपः, तस्य काशिकादावनुक्तत्वादित्याहुः । अन्ये तु 'लुग्वा दुह–' इत्यत्र आत्मनेपद इत्यपकर्षणात्तङीति लभ्यते । तेन 'दृशेः क्सः' इति वार्तिकोक्तक्सप्रत्ययस्य लोपो न भवति–सदृक्षाः, अन्यादृक्षा इत्यत्रेत्याहुः । **घुषि** कान्तिकरणे । लुङि–अघुंषिष्ट । अघुंषिषाताम् । अदुपधपाठे तु–अघषिष्ट । अघषिषाताम् ॥ **२३३९ अतक्षीदिति** । 'नेटि' इति वृद्धि-

७०० उक्ष सेचने। उक्षांचकार। ७०१ रक्ष पालने। ७०२ णिक्ष चुम्बने। प्रणिक्षति। ७०३ तृक्ष ७०४ स्तृक्ष ७०५ णक्ष गतौ। तृक्षति। स्तृक्षति। नक्षति। ७०६ वक्ष रोषे। संघात इत्येके। ७०७ मृक्ष संघाते। ७०८ म्रक्ष इत्येके। ७०९ तक्ष त्वचने। त्वचनं संवरणं त्वचोग्रहणं च। ७१० पक्ष परिग्रह इत्येके। ७११ सूर्क्ष आदरे। सुसूर्क्ष। 'अनादरे' इति तु क्वचित्कोऽपपाठः। अवज्ञावहेलनमसूर्क्षणमित्यमरः। ७१२ काक्षि ७१३ वाक्षि ७१४ माक्षि काङ्क्षायाम्। ७१५ द्राक्षि ७१६ ध्राक्षि ७१७ ध्वाक्षि घोरवासिते च। ७१८ चूष पाने। चुचूष। ७१९ तूष तुष्टौ। ७२० पूष वृद्धौ। ७२१ मूष स्तेये। ७२२ लूष ७२३ रूष भूषायाम्। ७२४ शूष प्रसवे। प्रसवोऽभ्यनुज्ञानम्। तालव्योष्मादिः। ७२५ यूष हिंसायाम्। ७२६ जूष च। ७२७ भूष अलंकारे। भूषति। ७२८ ऊष रुजायाम्। ऊषांचकार। ७२९ ईष उञ्छे। ७३० कष ७३१ खष ७३२ शिष ७३३ जष ७३४ झष ७३५ शष ७३६ वष ७३७ मष ७३८ रुष ७३९ रिष हिंसार्थाः। तृतीयषष्ठौ तालव्योष्मादी। सप्तमो दन्त्योष्ठ्यादिः। चकाष। चखाष। शिशेष। शिशेषिथ। शेष्टा। क्सः, अशिक्षत्। अशेक्ष्यत्। जेषतुः। जझषतुः। शेषतुः। ववषतुः। मेषतुः।

२३४०। तीषसहलुभरुषरिषः ।७।२।४८। इच्छत्यादेः परस्य तादेरार्धधातुकस्येड्वा स्यात्। रोषिता। रोष्टा। रोषिष्यति। रेषिता। रेष्टा। रेषिष्यति। ७४० भष भर्त्सने। इह भर्त्सनं श्वरवः। भषति। बभाष। ७४१ उष दाहे। ओषति।

२३४१। उषविदजागृभ्योऽन्यतरस्याम् ।३।१।३८। एभ्यो लिट्याम्वा स्यात्। ओषांचकार। उवोष। ऊषतुः। उवोषिथ। ७४२ जिषु ७४३ विषु ७४४ मिषु सेचने। जिजेष। क्रादिनियमादिट्, विवेषिथ। विविषिव। वेष्टा। वेक्ष्यति। अविक्षत्। ७४५ पुष पुष्टौ। पोषति। पोषिता। पोषिष्यति। अपोषीत्, अनिट्सु पुष्येति श्यना निर्देशादयं सेट्, अतो न क्सः। अङ्विधौ दैवादिकस्य ग्रहणान्नाङ्। ७४६ श्रिषु ७४७ श्लिषु ७४८ प्रुषु ७४९ प्लुषु दाहे। श्रेषति। शिश्रेष। श्रेषिता। श्लेषति। शिश्लेष। श्लेषिता। अयमपि सेट्, अनिट्सु दैवादिकस्यैव ग्रहणमिति कैयटादयः। यत्त्वनिट्कारिकान्यासे द्वयोर्ग्रहणमित्युक्तं, तत्स्वोक्तिविरोधाद्ग्रन्थान्तरविरोधाच्चोपेक्ष्यम्। पुप्रोष। पुप्लोष। ७५० पृषु ७५१ वृषु ७५२ मृषु सेचने। मृषु सहने च। इतरौ हिंसासंक्लेशनयोश्च। पर्षति। पपर्ष। पृष्यात्। ७५३ घृषु संघर्षे। ७५४ हृषु अलीके। ७५५ तुस ७५६ ह्रस ७५७ ह्लस ७५८ रस शब्दे। तुतोस। जह्रास जह्लास। ररास। ७५९ लस श्लेषणक्रीडनयोः। ७६० घस्लृ अदने। अयं न सार्वत्रिकः, 'लिट्यन्यतरस्याम्' २४२४ इत्यदेर्घस्लादेशविधानात्। ततश्च यत्र लिङ्गं वचनं वाऽस्ति तत्रैवास्य प्रयोगः। अत्रैव पाठः शपि परस्मैपदे लिङ्गम्। लृदित्करणमङि। अनिट्कारिकासु पाठो वलाद्यार्धधातुके। क्मरचि तु विशिष्योपादानम्। घसति। घस्ता।

२३४२। सः स्यार्धधातुके ।७।४।४९। सस्य तः स्यात्सादावार्धधातुके। घत्स्यति। घसतु। अघसत्। घसेत्। लिङ्गाद्यभावादाशिष्यस्याप्रयोगः।

---

निषेधः। इडभावे तु–अताक्षीत् ॥—**प्रणिक्षतीति**। 'उपसर्गादसमासेऽपि' इति नित्यं णत्वम्। 'वा निंसनिक्षनिन्दाम्' इति तु कृद्विषयकम्। 'ण्वुल्तृचौ', प्रणिक्षकः। प्रनिक्षकः। प्रणिक्षिता। प्रनिक्षिता ॥—**अवज्ञेत्यादि**। सूर्क्षणम्=आदरस्ततोऽन्यदसूर्क्षणमित्यमरग्रन्थार्थः। यदि तु सूर्क्षणमनादर इत्युच्यते तर्हि असूर्क्षणमवज्ञापर्यायो न स्यादिति भावः। **काक्षि**। काङ्क्षा–इच्छा। **द्राक्षि ध्राक्षि ध्वाक्षि**। घोरवासितं घोरशब्दः। **वाशृ** शब्दे ॥—**ध्वाङ्क्षतीति**। ध्वाङ्क्षः–काकः। **द्राक्षि**धातोः 'गुरोश्च हलः' इति अप्रत्यये द्राक्षा। यवादिगणे निपातनान्नलोपः। द्राक्षामान्। इह मतोर्वत्त्वं तु न भवति, अयवादिभ्य इत्युक्तेः। **तूष** तुष्टौ। दिवादौ तु ह्रस्वोपधः। **मूष** स्तेये। संज्ञायां क्वुनि मूषकः। क्र्यादौ तु ह्रस्वोपधोऽयम्। **भूष** अलंकारे। अयं चुरादावपि। **ईष** उञ्छे। 'गुरोश्च हलः' इत्यप्रत्यये ईषा लाङ्गलदण्डः। **कष खष**। षान्तौ। **शिष**–इत्ययमप्यनिट्को न तु रौधादिक एव, संकोचे मानाभावादित्यभिप्रेत्योदाहरति—**शेष्टा**। **अशिक्षदित्यादि**। **२३४० तीषसह**—। इष इच्छायाम्। षह मर्षणे। लुभ गार्ध्ये। रुष रिष हिंसायाम्। एषिता। एष्टा। सहिता। सोढा। लोभिता। लोब्धा ॥ **२३४१ उवोषेति**। 'पुगन्त–' इति गुणः। 'अभ्यासस्यासवर्णे' इत्युवङ्। **घृषु** संघर्षे। ल्युटि घर्षणम्। **घस्लृ** अदने ॥—**अयमिति**। यद्ययं सार्वत्रिकः स्यात्तदा लिट्यपि प्रयुज्येत, ततश्च 'लिट्यन्यतरस्याम्' इति विकल्पेनादेशविधानं व्यर्थं भवेदिति भावः ॥—**अत्रैव पाठ इति**। भ्वादौ परस्मैपदे पाठ इत्यर्थः ॥ **क्मरचीति**। 'सृघस्यदः क्मरच्' इति सूत्रे ॥ **२३४१ सः स्यार्ध**—। 'सः सि' इति च्छेदः। सादौ किम्? घस्मरः। आर्धधातुके इति किम्? वस्से ॥—**आशिषीति**। आशीर्लिङीत्यर्थः। एतच्च कर्तरि प्रयोगमभिप्रेत्योक्तम्। कर्मणि तु यग्विषये प्रयोगो नेति

---

१ बालमनोरमायां 'त्रक्ष, ष्ट्रक्ष, णक्ष' अयं पाठो दृश्यते। २ **तादेरिति**—अत्र आर्धधातुकशब्दस्यानुवृत्तस्य सप्तम्यन्तत्वाभावेऽपि प्रकारान्तरेण तदादिविधिर्बोध्यः। तथाहि—पूर्वसूत्राद्वलादेरित्यनुवर्त्य [illegible] तकारो विशेषणं, तेन तकाररूपवलादेरिति वाच्योऽर्थ इति। एवं 'सेऽसिचि–' इत्यादावपि बोध्यम्।

२३४३ । पुषादिद्युताद्यॢदितः परस्मैपदेषु ।३।१।५५। श्यन्विकरणपुषादेर्द्युतादेर्ऌदितश्च परस्य च्लेरङ् स्यात्परस्मैपदेषु । अघसत् । ७६१ जर्ज ७६२ चर्च ७६३ झर्झ परिभाषणहिंसातर्जनेषु । ७६४ पिसृ ७६५ पेसृ गतौ । पिपिसतुः । पिपेसतुः । ७६६ हसे हसने । एदित्त्वान्न वृद्धिः, अहसीत् । ७६७ णिश समाधौ । तालव्योष्मान्तः । प्रणेशति । ७६८ मिश ७६९ मश शब्दे रोषकृते च । तालव्योष्मान्तौ । ७७० शव गतौ । दन्त्योष्ठ्यान्तस्तालव्योष्मादिः । शवति । अशवीत्, अशावीत् । ७७१ शश प्लुतगतौ । तालव्योष्माद्यन्तः । शशाश । शेशतुः शेशुः । शेशिथ । ७७२ शसु हिंसायाम् । दन्त्योष्मान्तः । 'न शसदद–' २२९३ इत्येत्वं न, शशसतुः । शशसुः । शशसिथ । ७७३ शंसु स्तुतौ । अयं दुर्गतावपीति दुर्गः । 'नृशंसो घातुकः क्रूर' इत्यमरः । शशंस । आशिषि नलोपः, शस्यात् । ७७४ चह परिकल्कने । कल्कनं शाठ्यम् । अचहीत् । ७७५ मह पूजायाम् । अमहीत् । ७७६ रह त्यागे । ७७७ रहि गतौ । रंहति । रंह्यात् । ७७८ दृह ७७९ दृहि ७८० बृह ७८१ बृहि वृद्धौ । दर्हति । ददर्ह । ददृहतुः । दृंहति । बर्हति । बृंहति । 'बृहि' शब्दे च । बृंहितं करिगर्जितम् । ७८२ बृहिर् इत्येके । अबृहत् । अबर्हीत् । ७८३ तुहिर् ७८४ दुहिर् ७८५ उहिर् अर्दने । तोहति । तुतोह । अतुहत्, अतोहीत् । दोहति । दुदोह । अदुहत्, अदोहीत् । अनिड्कारिकास्वस्य दुहेर्ग्रहणं नेच्छन्ति । ओहति । उवोह । ऊहतुः । ओहिता । माभवानुहत् । औहीत् । ७८६ अर्ह पूजायाम् । आनर्ह ॥

अथ कृपूपर्यन्ता अनुदात्तेतः ॥ ७८७ द्युत दीप्तौ । द्योतते ।

२३४४ । द्युतिस्वाप्योः संप्रसारणम् ।७।४।६७। अनयोरभ्यासस्य संप्रसारणं स्यात् । दिद्युते । दिद्युताते । द्योतिता ।

२३४५ । द्युद्भ्यो लुङि ।१।३।९१। द्युतादिभ्यो लुङः परस्मैपदं वा स्यात् । पुषादिसूत्रेण परस्मैपदेऽङ्, अद्युतत् । अद्योतिष्ट । ७८८ श्विता वर्णे । श्वेतते । शिश्विते । अश्वितत् । अश्वेतिष्ट । ७८९ ञिमिदा स्नेहने । मेदते ।

२३४६ । मिदेर्गुणः ।७।३।८२। मिदेरिको गुणः

---

ष्ठ्यम् ॥ २३४३ पुषादिद्युता—। पुष धातुर्भ्वादौ दिवादौ क्र्यादौ चुरादौ च पठ्यते । यदि तु पुष पुष्टाविति भौवादिकधातुमारभ्य पुषादिगणो गृह्येत तदा द्युतादिग्रहणमनर्थकं भवेत् । पुषेरुत्तरत्र द्युतादीनां पाठात् । नापि क्र्याद्यन्तर्गणः । तत्र हि पुषधातोरग्रे मुष स्तेये, खच भूतप्रादुर्भावे, हेठ च, ग्रह उपादाने, इति चत्वार एव पठ्यन्ते । यदि तु त एव जिघृक्षिताः स्युस्तर्हि लाघवाॢदित एव क्रियेरन् । ग्रहेः स्वरितेत्त्वेऽपि ऌकारेणैव तन्निर्वाहादनेकानुबन्धासङ्गगौरवशङ्काया अप्यभावात् । नापि चुरादिः । णिचा व्यवधानेन ततोऽनन्तरस्य च्लेरसंभवात् । अतः परिशेषात् दिवादय एव गृह्यन्त इत्याह—श्यन्विकरणपुषादेरिति । केचित्तु दिवाद्यन्तर्गण एव पुषादिर्गृह्यते, व्याख्यानादित्याहुः । 'चुरादीनां सर्वेषां णिज्विकल्पः' इति पक्षे चौरादिके पुषादेरपि परः च्लिः संभवतीति तेषामाशयः । 'नन्दिग्रहिपचादिभ्यः' इतिवत् 'पुषद्युताद्यॢदितः' इति सूत्रयितुमुचितम् ॥ ननु पुषादयो द्युतादयश्च ऌदित एव कुतो न कृता इति चेत् । अत्राहुः—निरनुबन्धेषु सानुबन्धेषु च प्रत्येकं ऌकारपाठे विपरीतं गौरवं स्यात् । न च अनुबन्धान्तरस्य यत्प्रयोजनमात्मनेपदं तत्तु ऌदित्करणेऽपि सिध्यतीत्यनेकानुबन्धासङ्गगौरवदोषो नास्तीत्यपि शङ्क्यम् । आदितामिदितानुदितां चैतेषु सत्त्वात् ऌकारेण तत्तत्कार्याणामनिर्वाहादनेकानुबन्धासङ्गगौरवस्य दुर्निवारत्वादिति । जर्ज चर्च झर्झ । एषां परिभाषणादिभिः सह यथासंख्यं नास्ति, व्याख्यानादित्याहुः । परिभाषणं-सनिन्दोपालम्भः । त्रयाणामपि चवर्गीयान्त्येषु पाठ उचितो न लिहोष्मान्तेषु । णिश समाधौ । समाधिरन्तःकरणनिरोधः ॥—प्रणेशतीति । 'उपसर्गादसमासेऽपि' इति णत्वम् ॥—रोषकृते चेति । चकारात्समाधौ । शश प्लुतगतौ । 'न शसदद–' इति प्रतिषेधसूत्रे सान्तस्य ग्रहणमित्यभिप्रेत्य व्याचष्टे—शेशतुरिति । प्राचा तु शशतुरित्युक्तं तदयुक्तमिति भावः ॥—अचहीदिति । 'ह्यन्त–' इति न वृद्धिः । रह त्यागे । अयं कथादावपि । 'ज्ञपमिच्च' इति मित्प्रकरणेऽप्ययमेकीयमतेन पठितः ॥—नेच्छन्तीति । व्याख्यानमेवात्रावलम्बनम् ॥—मा भवानुहदिति । 'न माङ्योगे' इत्यडभावः । 'इरितो वा' इत्यङ् वा ॥

अथ द्युतादिः ॥ द्युत दीप्तौ ॥ २३४४ द्युतिस्वाप्योः—। स्वापीति णिजन्तस्य ग्रहणम् ॥—दिद्युते इति । संप्रसारणे कृते 'संप्रसारणाच्च' इति पूर्वरूपम् । स्वापेरुदाहरणं तु सुष्वापयिषति । इह स्वापेर्णिजन्तस्याभ्यासनिमित्तप्रत्ययेनानन्तर्ये सति संप्रसारणमिष्यते । तेनेह न–स्वापेर्ण्वुल् स्वापकः, तमिच्छति स्वापकीयति, ततः सन् सिस्वापकीयिषति ॥ २३४५ द्युद्भ्यो लुङि । बहुवचननिर्देशात् 'सप्तमी शौण्डैः' इत्यत्रेव तदादिग्रहणम्, तदाह—द्युतादिभ्य इति । द्युतादयो घट चेष्टायामित्यवधिकाः । 'ङः सि–' इत्यत्रेव लुङीति सप्तम्याः षष्ठ्यर्थतेत्यभिप्रेत्याह—लुङः परस्मैपदमिति । ञिमिदा । २३४६ मिदेर्गुणः । 'ष्ठिवुक्लमुचमाम्–' इत्यतः शितीत्यनुवर्तते तत्र चाश्वासौ इश्चेति कर्मधारयात्सप्तमी । अङ्गाक्षिप्तप्रत्ययस्तु विशेष्यः । तेन 'यस्मिन्विधिः' इति तदादिविधिः प्रवर्तते, तदाह—

स्यादित्संज्ञकशकारादौ प्रत्यये। एश आदिशित्त्वाभावान्नानेन गुणः, मिमिदे। अमिदत्। अमेदिष्ट। ७९० **ञिष्विदा** स्नेहनमोचनयोः। मोहनयोरित्येके। स्वेदते। सिष्विदे। अस्विदत्। अस्वेदिष्ट। ७९१ **ञिक्ष्विदा** चेत्येके। अक्ष्विदत्। अक्ष्वेदिष्ट। ७९२ **रुच** दीप्तावभिप्रीतौ च। रोचते सूर्यः। हरये रोचते भक्तिः। अरुचत्। अरोचिष्ट। ७९३ **घुट** परिवर्तने। घोटते। जुघुटे। अघुटत्। अघोटिष्ट। ७९४ **रुट** ७९५ **लुट** ७९६ **लुठ** प्रतिघाते। अरुटत्। अरोटिष्ट। ७९७ **शुभ** दीप्तौ। ७९८ **क्षुभ** संचलने। ७९९ **णभ** ८०० **तुभ** हिंसायाम्। आद्योऽभावेऽपि। नभन्तामन्यके समे। मा भूवन्नन्यके सर्वे इति निरुक्तम्। अनभत्। अनभिष्ट। अतुभत्। अतोभिष्ट। इमौ दिवादौ क्र्यादौ च। ८०१ **स्रंसु** ८०२ **ध्वंसु** ८०३ **भ्रंसु** अवस्रंसने। ध्वंसु गतौ च। अङि नलोपः, अस्रसत्। अस्रंसिष्ट। नाध्वसत्कारिणां प्रेवमिति रघुकाव्ये। ८०४ **भ्रंशु** इत्यपि केचित्पेठुः। अत्र तृतीय एव तालव्यान्त इत्यन्ये। 'भ्रशु भ्रंशु अधःपतने' इति दिवादौ। ८०५ **स्रम्भु** विश्वासे। अस्रभत्। अस्रम्भिष्ट। दन्त्यादिरयम्। तालव्यादिस्तु प्रमादे गतः। ८०६। **वृतु** वर्तने। वर्तते।

२३४७। **वृद्भ्यः स्यसनोः** ।१।३।९२। वृतादिभ्यः परस्मैपदं वा स्यात्स्ये सनि च।

२३४८। **न वृद्भ्यश्चतुर्भ्यः** ।७।२।५९। एभ्यः सकारादेरार्धधातुकस्येण्न स्यात्तङानयोरभावे। वर्त्स्यति। वर्तिष्यते। अवृतत्। अवर्तिष्ट। अवर्त्स्यत्। अवर्तिष्यत। ८०७ **वृधु** वृद्धौ। ८०८ **शृधु** शब्दकुत्सायाम्। इमौ वृतिवत्। ८०९ **स्यन्दू** प्रस्रवणे। स्यन्दते। सस्यन्दे। सस्यन्दिषे, सस्यन्त्से। सस्यन्दिध्वे, सस्यन्ध्वे। स्यन्दिता, स्यन्ता। 'वृद्भ्यः स्यसनोः' २३४७ इति परस्मैपदे कृते ऊदिल्लक्षणमन्तरङ्गमपि विकल्पं बाधित्वा चतुर्ग्रहणसामर्थ्यात् 'न वृद्भ्यः–' २३४८ इति निषेधः, स्यन्त्स्यति, स्यन्दिष्यते, स्यन्त्स्यते। स्यन्दिषीष्ट, स्यन्त्सीष्ट। 'द्युद्भ्यो लुङि' २३४७ इति परस्मैपदपक्षे अङ्, नलोपः, अस्यदत्, अस्यन्दिष्ट, अस्यन्त। अस्यन्त्साताम्। अस्यन्त्सत। अस्यन्त्स्यत्। अस्यन्दिष्यत। अस्यन्त्स्यत।

२३४९। **अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु** ।८।३।७२। एभ्यः परस्याप्राणिकर्तृकस्य स्यन्दतेः सस्य षो वा स्यात्। अनुष्यन्दते–अनुस्यन्दते वा जलम्। अप्राणिषु किम्। अनुस्यन्दते हस्ती। 'अप्राणिषु' इति पर्युदासात् 'मत्स्योदके अनुष्यन्दते' इत्यत्रापि पक्षे षत्वं भवत्येव। 'प्राणिषु न' इत्युक्तौ तु न स्यात्। ८१० **कृपू** सामर्थ्ये।

२३५०। **कृपो रो लः** ।८।२।१८। 'कृप उः' इति छेदः। 'कृप' इति लुप्तषष्ठीकम्। तच्चावर्तते। कृपो यो रेफस्तस्य लः स्यात्। कृपेर्ऋकारस्यावयवो यो रेफसदृशस्तस्य च ऌकारसदृशः स्यात्। कल्पते। चक्लृपे। चक्लृपिषे,

---

**इत्संज्ञकशकारादाविति** ॥—**आदिशित्त्वाभावादिति**। मेद्यति, मेद्यत इत्यादौ 'दिवादिभ्यः' इति श्यन आदिशित्त्वात् गुणो भवत्येव ॥—**मिमिदे इति**। शितीति बहुव्रीहौ लिट स्यादेव गुणः। तथा पपे तस्थे इत्यादौ पिबादयोऽपि स्युरिति भावः। **ञिष्विदा**। अनिट्कारिकायां स्विद्यतिरिति श्यना निर्देशादयं सेट्। स्वेदिता। स्वेदिष्यते ॥—**ञिक्ष्विदा चेति**। पूर्वोक्तयोरेवार्थयोरयमिति बोध्यम् ॥—**हरये इति**। 'रुच्यर्थानाम्–' इति संप्रदानसंज्ञायां चतुर्थी। **घुट**। परिवर्तनमितस्ततो भ्रमणम् ॥—**जुघुटे इति**। 'असंयोगात्–' इति कित्त्वात् गुणाभावः। **क्षुभ** संचलने। संचलनं प्रकृतिविपर्यासो मन्थनं च। क्षोभते। क्षुभ्यतीति दिवादौ। क्षुभ्नातीति क्र्यादौ ॥—**नाध्वसदिति**। नाध्वंसदित्यपपाठ एव। न चेदं लङो रूपं, तत्र परस्मैपदासंभवादिति भावः॥ २३४७ **वृद्भ्यः**—। वृतादयः पञ्च ॥ २३४८ **न वृद्भ्यः**—। गणकार्यत्वादुभयोर्यङ्लुक्यप्रवृत्तिः। वर्वर्तिष्यति। वर्वर्तिषति। चतुर्ग्रहणफलं तु मूले एव स्फुटीभविष्यति। 'सेऽसिचि–' इति सूत्रात्से इत्यनुवर्तते तदाह—**सकारादेरिति** ॥—**इण् न स्यादिति**। स्यन्देरूदित्त्वाद्विकल्पे प्राप्ते इतरेषां नित्यमिटि प्राप्ते निषेधोऽयम् ॥—**तङानयोरिति**। जिगमिषिता–जिगमिषितारौ इत्यादौ तृचि परतः सन इडागमसिद्धये 'गमेरिट् परस्मैपदेषु' इत्यत्र परस्मैपदग्रहणं तङानयोरभावं लक्षयतीत्यभ्युपगम्यते। तच्चात्रापि तथैवानुवर्तत्से, अर्थाधिकाराश्रयणात्। तेन परस्मैपदाभावेऽपि तृचि विवृत्सितारावित्यत्र 'अतो हेः' इति हेर्लुकि 'विवृत्से' इत्यत्र च सन इण्निषेधः सिध्यतीति भावः। अत्र भाष्यवार्तिकयोर्वृतादीनामात्मनेपदेन समानपदस्थेङ्वचनादन्यत्र निषेध इति स्थितम्। तेन 'विवर्तिषते–विवर्धिषते' इत्यादाविट् भवति। विवृत्सिरेवाचरति विवृत्सित्रीयते इत्यत्र त्वात्मनेपदोत्पत्तेः पूर्वं [illegible]ऽयं निषेधः प्रवर्तते। स च पश्चात्तङि कृतेऽपि न निवर्तते, चतुर्ग्रहणसामर्थ्यादिति। **अत्र व्याचख्युः**—पञ्चभ्य इति वक्तुमुचितम्। एवं च 'तासि च' इत्येव सूत्रं कर्तव्यम्। न च वृतादिष्वतिव्याप्तिः, तङानयोः सत्त्वादिति ॥—**अस्यन्तेति**। अत्र 'अनिदिताम्–' इति नलोपो न भवति, सिज्लोपस्यासिद्धत्वेनानुपधत्वात् ॥ २३४९ **अनुविपर्यभिनिभ्यः**—॥—**एभ्य इति**। पञ्चभ्य इत्यर्थः ॥—**षत्वं भवत्येवेति**। प्राण्यप्राणिकर्तृकस्याप्यप्राणिकर्तृकत्वानपायादिति भावः। असमर्थसमासवाक्यभेदापत्तिदोषाभ्यां प्रसज्यप्रतिषेधो न सूत्रेऽभिप्रेत इत्याशयेनाह—**प्राणिषु नेत्युक्ताविति**। **कृपू** सामर्थ्ये। २३५० भाष्यकृतां व्याख्यामाह—**कृप उ इति**। 'कृपे रो लः' इति अर्वाचीनपाठस्तु नादर्तव्य इति ध्वनयति—**कृपेर्ऋकारस्येत्यादिना**। वर्णैकदेशस्य वर्णग्रहणेन ग्रहणादाह—**रेफसदृश इति**। एवं चात्र कृपेत्यस्यावृत्तिरवश्यं स्वीकर्तव्या। तथा च 'लुटि च कॢपः' इत्यादिसौत्रनिर्देशोऽप्युपपद्यत इति भावः ॥—

चक्लृप्से । इत्यादि स्यन्दिवत् ।

२३५१ । **लुटि च क्लृपः** ।१।३।९३। लुटि स्यसनोश्च क्लृपेः परस्मैपदं वा स्यात् ।

२३५२ । **तासि च क्लृपः** ।७।२।६०। क्लृपेः परस्य तासेः सकारादेरार्धधातुकस्य चेण्न स्यात्तङानयोरभावे । कल्प्तासि । कल्प्तास्थः । कल्पितासे, कल्प्तासे । कल्प्स्यति । कल्पिष्यते, कल्प्स्यते । कल्पिषीष्ट, क्लृप्सीष्ट । अक्लृपत्, अकल्पिष्ट, अक्लृप्त । अकल्प्स्यत्, अकल्पिष्यत, अकल्प्स्यत ॥ **वृत्** । वृत्तः संपूर्णो द्युतादिर्वृतादिश्चेत्यर्थः ॥

अथ त्वरत्यन्तास्त्रयोदशानुदात्तेतः षितश्च । ८११ **घट** चेष्टायाम् । घटते । जघटे । 'घटादयो मितः' इति वक्ष्यमाणेन मित्संज्ञा । तत्फलं तु णौ 'मितां ह्रस्वः' २५६८ इति 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' २७६२ इति च वक्ष्यते । घटयति । विघटयति । कथं तर्हि—'कमलवनोद्घाटनं कुर्वते ये' ।

'प्रविघाटयिता समुत्पतन् हरिदश्वः कमलाकरानिव' ।

इत्यादि । शृणु, 'घट संघाते' इति चौरादिकस्येदम् । न च तस्यैवार्थविशेषे मित्त्वार्थमनुवादोऽयमिति वाच्यम्, 'नान्ये मितोऽहेतौ'[1] इति निषेधात् । अहेतौ स्वार्थे णिचि ज्ञपादिपञ्चकव्यतिरिक्ताश्चुरादयो मितो नेत्यर्थः । ८१२ **व्यथ** भयसंचलनयोः । व्यथते ।

२३५३ । **व्यथो लिटि** ।७।४।६८। व्यथोऽभ्यासस्य संप्रसारणं स्याल्लिटि । हलादिःशेषापवादः । थस्य हलादिःशेषेण निवृत्तिः । विव्यथे । ८१३ **प्रथ** प्रख्याने । पप्रथे । ८१४ । **प्रस** विस्तारे । पप्रसे । ८१५ **म्रद** मर्दने । ८१६ **स्खद** स्खदने । स्खदनं विद्रावणम् । ८१७ **क्षजि** गतिदानयोः । मित्त्वसामर्थ्यादनुपधात्वेऽपि 'चिण्णमुलोः' २७६२ इति दीर्घविकल्पः । अक्षञ्जि, अक्षाञ्जि । क्षञ्जं क्षञ्जम्, क्षाञ्जं क्षाञ्जम् । ८१८ **दक्ष** गतिहिंसनयोः । योऽयं वृद्धिशैघ्र्ययोरनुदात्तेत्सु पठितस्तस्येहार्थविशेषे मित्त्वार्थोऽनुवादः । ८१९ **क्रप** कृपायां गतौ । ८२० **कदि** ८२१ **क्रदि** ८२२ **क्लदि** वैक्लव्ये । वैकल्य इत्येके । ८२३ त्रयोऽप्यनिदित इति नन्दी[2] । इदित इति स्वामी । कदिक्रदी इदितौ । ८२४ **क्रद** ८२५ **क्लद** इति चानिदिताविति मैत्रेयः । कदिक्रदिक्लदीनामाह्वानरोदनयोः परस्मैपदिषूक्तानां पुनरिह पाठो मित्त्वार्थ आत्मनेपदार्थश्च । ८२६ **ञित्वरा** संभ्रमे । (ग) **घटादयः षितः** । षित्वादङ् कृत्सु वक्ष्यते ॥

अथ फणान्ताः परस्मैपदिनः । ८२७ **ज्वर** रोगे । ज्वरति । जज्वार ८२८ **गड** सेचने । गडति । जगाड । ८२९ **हेड** वेष्टने । हेडृ अनादर इत्यात्मनेपदिषु गतः स एवोत्सृष्टानुबन्धोऽनूद्यते अर्थविशेषे मित्त्वार्थम् । परस्मैपदिभ्यो ज्वरादिभ्यः प्रागेवानुवादे कर्तव्ये तन्मध्येऽनुवादसामर्थ्यात्परस्मैपदम् । हेडति । जिहेड । हिडयति । अहिडि, अहीडि । अनादरे तु—हेडयति । ८३० **वट** ८३१ **भट** परिभाषणे । 'वट ३०९' वेष्टने 'भट ३१०' भृताविति पठितयोः परिभाषणे मित्त्वार्थोऽनुवादः । ८३२ **णट** नृत्तौ । इत्थमेव पूर्वमपि पठितम् । तत्रायं विवेकः—पूर्वं पठितस्य नाट्यमर्थः । यत्कारिषु नटव्यपदेशः । वाक्यार्थाभिनयो नाट्यम् । घटादौ तु नृत्यं नृत्तं

---

**२३५२ तासि च क्लृपः** । चकारात्साद्यार्धधातुकं गृह्यते ॥—**क्लृप्सीष्टेति** । 'लिङ्सिचावात्मनेपदेषु' इति कित्वान्न गुणः ॥—**वृदिति** । वृतु वर्तने इत्यस्मात्क्विप् । ञित्वरा संभ्रम इत्यस्यानन्तरं 'घटादयः षितः' इत्युक्तत्वात्त्वरत्यन्तास्त्रयोदशैव षितो न तु फणान्ताः सर्वेऽपीति सिद्धम्, तथापि स्पष्टप्रतिपत्त्यर्थमाह—**षितश्चेति** । प्रयोजनं तु 'षिद्भिदादिभ्यः—' इत्यङि टाप्, 'घटा—व्यथा' इत्यादिरूपसिद्धिः । **घट** चेष्टायाम् । ये धातवोऽन्यत्राधीतास्तेषामिह पाठोऽर्थनियमार्थः । ये त्विहैव पठ्यन्ते तेषामुपसर्गादिनाऽर्थान्तरपरत्वेऽपि मित्त्वमस्त्येवेति धातुवृत्त्यादिषु स्थितं, तदेतत् ध्वनयन्नुदाहरति—**विघटयतीति** ॥ **२३५३ व्यथो लिटि** ॥—**हलादिःशेषापवाद इति** । हलादिःशेषप्रक्रमणादिति भावः । एवं च 'उत्सर्गसदेशश्चापवादः' इति परस्यैव संप्रसारणं भवति न पूर्वस्येति कैयटाद्युक्त्या 'न संप्रसारणे' इति निषेधोऽत्र नापेक्षितः । **केचित्तु**—हलादिःशेषेण यकारनिवृत्तावपि वकारस्य सत्त्वात्सूत्रमिदं सावकाशमिति अपवादत्वं न संभवतीति मत्वा 'संप्रसारणं तदाश्रयं च कार्यं बलवत्' इति वचनाद्धलादिःशेषं बाधित्वा परस्य संप्रसारणे पूर्वस्य निषेधः । 'संप्रसारणं तदाश्रयं च कार्यं' इति वचनाभावे तु 'व्यथो लिटि' इति संप्रसारणस्य धातुविशेषप्रत्ययविशेषाश्रयत्वेन 'इग्यणः—' इति संज्ञाविशेषद्वयाश्रयत्वेन च बह्वपेक्षस्य बहिरङ्गत्वात्संप्रसारणं बाधित्वा हलादिःशेषे जाते वकारस्य संप्रसारणं स्यादित्याहुः ॥—**थस्येति** । संप्रसारणस्याभ्यासान्तर्गतयकारनिवृत्तेरपवादत्वं न तु थकारनिवृत्तेरिति भावः ॥ लिटीति किम्? विव्यथिषते । इह 'सन्यतः' इति इत्वम् । वाव्यथ्यते । वाव्यथीति । **क्रप कृपायां गतौ** । चकाराभावेऽपीहार्थद्वयमित्येव बोध्यमित्याहुः । **कदि क्रदि** । क्रन्दयति । अक्रन्दि । अक्रान्दि । क्रन्दं क्रन्दम् । क्रान्दं क्रान्दम् । **ञित्वरा** । आदित्वमिह व्यर्थम्, ह्रस्वोच्चारणेनाप्यात्मनेपदसिद्धेः । न च निष्ठायाम् 'आदितश्च' इतीट्प्रतिषेधार्थमिति शङ्क्यम् । 'रुष्यमत्वर—' इति निष्ठायामिटो विकल्पितत्वात् । तूर्णः । त्वरितः । **ज्वर रोगे** । णौ ज्वरयति । अज्वरि । अज्वारि । ज्वरं ज्वरम् । ज्वारं ज्वारम् । **गड** सेचने । णौ गडयति । अगडि । अगाडि । गडं गडम् । गाडं गाडम् । एवमन्यत्राप्यूह्यम् । **हेड** वेष्टने ॥—**उत्सृष्टानुबन्ध इति** ।

---

1 **नान्ये मित इति**—अनुवादानर्थक्येन तद्बाधकल्पनापेक्षया स्वातन्त्र्यकल्पनस्यैवौचित्यादिति भावः ॥ 2 नन्दीमतेन 'क्रद' इत्यपि धातुः । 3 अयं णोपदेशः ।

चार्थः। यत्कारिषु नर्तकव्यपदेशः। पदार्थाभिनयो नृत्यम्। गात्रविक्षेपमात्रं नृत्तम्। केचित्तु घटादौ नट नताविति पठन्ति। गताविल्यन्ये। णोपदेशपर्युदासवाक्ये भाष्यकृता 'नाटि' इति दीर्घपाठाद् घटादिर्णोपदेश एव। ८३३ ष्टक प्रतीघाते। स्तकति। ८३४ चक तृप्तौ। तृप्तिप्रतीघातयोः पूर्वं पठितस्य तृप्तिमात्रे मित्त्वार्थोऽनुवादः। आत्मनेपदिषु पठितस्य परस्मैपदिष्वनुवादात्परस्मैपदम्। ८३५ कखे हसने। एदित्वान्न वृद्धिः, अकखीत्। ८३६ रगे शङ्कायाम्। ८३७ लगे सङ्गे। ८३८ ह्रगे ८३९ ह्लगे ८४० षगे ८४१ ष्टगे संवरणे। ८४२ कगे नोच्यते। 'अस्यायमर्थः' इति विशिष्य नोच्यते, क्रियासामान्यार्थत्वात्। अनेकार्थत्वादित्यन्ये। ८४३ अक ८४४ अग कुटिलायां गतौ। ८४५ कण ८४६ रण गतौ। चकाण। रराण। ८४७ चण ८४८ शण ८४९ श्रण दाने च। शण गताविल्यन्ये। ८५० श्रथ ८५१ श्लथ ८५२ क्नथ ८५३ क्लथ हिंसार्थाः। 'जासिनिप्रहण-' ६१८ इति सूत्रे 'क्राथ' इति मित्त्वेऽपि वृद्धिर्निपात्यते। क्राथयति। मित्त्वं तु निपातनात्परत्वात् 'चिण्णमुलोः-' २७६२ इति दीर्घे चरितार्थम्। अक्रथि, अक्राथि। क्रथं क्रथम्, क्राथं क्राथम्। ८५४ वन च। हिंसायामिति शेषः। ८५५ वनु च नोच्यते। वनु इत्यपूर्व एवायं धातुर्न तु तानादिकस्यानुवादः, उदित्करणसामर्थ्यात्। तेन क्रियासामान्ये 'वनति' इत्यादि। प्रवनयति। अनुपसृष्टस्य तु मित्त्वविकल्पो वक्ष्यते। ८५६ ज्वल दीप्तौ। णप्रत्ययार्थं पठिष्यमाण एवायं मित्त्वार्थमनूद्यते। प्रज्वलयति। ८५७ ह्वल ८५८ ह्मल चलने। प्रह्वलयति। प्रह्मलयति। ८५९ स्मृ आध्याने। चिन्तायां पठिष्यमाणस्य आध्याने मित्त्वार्थोऽनुवादः। आध्यानमुत्कण्ठापूर्वकं स्मरणम्। ८६० दॄ भये। 'दॄ विदारणे' इति क्र्यादेरयं मित्त्वार्थोऽनुवादः। इणन्तं प्रेरयति दरयति। भयादन्यत्र दारयति। धात्वन्तरमेवेदमिति मते तु 'दरति' इत्यादि। केचिद्घटादौ 'अत्स्मृदृत्वर-' २५६६ इति सूत्रे च 'दॄ' इति दीर्घस्थाने ह्रस्वं पठन्ति। तन्नेति माधवः। ८६१ नॄ नये। क्र्यादिषु पठिष्यमाणस्यानुवादः। नयादन्यत्र—नारयति। ८६२ श्रा पाके। 'श्रै' इति कृतात्वस्य 'श्रा' इत्यादादिकस्य च सामान्येनानुकरणम्। (प) लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य (प) लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्-इति परिभाषाभ्याम्। श्रपयति। विक्लेदयतीत्यर्थः। पाकादन्यत्र श्रापयति। स्वेदयतीत्यर्थः। मारणतोषणनिशामनेषु ८६३ ज्ञा। निशामनं चाक्षुषज्ञानमिति माधवः। ज्ञापनमात्रमित्यन्ये। 'निशानेषु' इति पाठान्तरम्। निशानं तीक्ष्णीकरणम्। एष्वेवार्थेषु जानातिर्मित्। 'ज्ञप मिच्च' इति चुरादौ। ज्ञापनं मारणादिकं च तस्यार्थः। कथं—विज्ञापना भर्तृषु सिद्धि-

तेन वेष्टने 'नाग्लोपि-' इति निषेधशङ्कैव नास्तीति भावः॥—**णोपदेश एवेति**। प्रणटति, प्रणटयति। 'णाटि' इत्यस्य तु प्रनाटयति॥—**वृद्धिर्निपात्यत इति**। तेन 'मितां ह्रस्वः' इति न प्रवर्तत इति भावः॥—**निपातनात्परत्वादिति**। निपातनविषयीभूत-मितां ह्रस्व इत्यस्मात्परत्वात् 'मितां ह्रस्वः' इत्येतदेव निपातनेन बाध्यते न तु ततः परं 'चिण्णमुलोः-' इत्येतदित्यर्थः। **वन** च। संभक्तौ पठितस्य हिंसायां मित्त्वार्थोऽनुवादः। वनति। णौ वनयति। अवनि। अवानि। वनं वनम्। वानं वानम्॥—**तानादिकस्येति**। वनु याचन इत्यस्येत्यर्थः॥—**सामर्थ्यादिति**। अनुवादे तु-तत्र कृते-नोदित्त्वेन क्त्वायामिड्विकल्पस्य निष्ठायामिट्प्रतिषेधस्य च सिद्धेः पुनरुदित्करणं व्यर्थं स्यादिति भावः॥—**वनतीत्यादीति**। णौ, वनयति। तानादिकस्य तु-वनुते, वानयति॥—**मित्त्वविकल्प इति**। 'ग्लास्नावनुवमां च' इति गणसूत्रेण॥—**णप्रत्ययार्थमिति**। 'ज्वलितिकसन्तेभ्यो णः' इति ज्वलादिभ्यो णप्रत्ययार्थम्। **दॄ भये**। धातोरनेकार्थत्वाद्भयार्थकत्वम्। दृणाति। दरयति॥—**तन्नेतीति**। माधवस्यायमाशयः—सूत्रे दीर्घान्त एव पाठः सर्वसंमतः। घटादावपि दीर्घान्त एव सर्वैः पठ्यते। यद्ययं ह्रस्वान्तो भवेत्तर्हि 'शॄदॄप्रां ह्रस्वो वा' इति ह्रस्वविकल्पविधायके सूत्रे दॄग्रहणमनर्थकं स्यात्। धातुद्वयेन दद्रतुः ददरतुरिति रूपद्वयसिद्धेः। न च दॄ विदारणे इत्यस्य रूपद्वयलाभार्थं दॄग्रहणमावश्यकमिति वाच्यम्। धातूनामनेकार्थत्वात्समीहितसिद्धेरिति। **नॄ** नये। नृणाति। नरयति। अनरि। अनारि। नरं नरम्। नारं नारम्—**श्रै इतीति**। अयं हि वक्ष्यमाणो भौवादिकः॥—**लुग्विकरणेति**। **अत्र व्याचक्षते**—'स्वरतिसूति-' इति सूत्रे सूङ् इति पठितेऽपि द्वयोर्ग्रहणे सिद्धे सूतिसूयत्योः पृथग्ग्रहणं व्यर्थं सदिमां परिभाषां ज्ञापयति॥ न च लुग्विकरणं बलीय इति वैपरीत्यं किं न स्यादिति शङ्क्यम्। इष्टानुरोधात्। 'सूङ्' इति पठिते स्वरतिसाहचर्यादलुग्विकरणस्यैव ग्रहणं स्यान्न तूभयोरित्यपि न शङ्क्यम्, साहचर्यस्यानित्यत्वात्। तस्मात्पृथग्ग्रहणं व्यर्थं सज्ज्ञापकमेवेति। लक्षणप्रतिपदोक्तपरिभाषा तु न्यायसिद्धा, लाक्षणिकं हि विलम्बितोपस्थितिकम्, प्रतिपदोक्तं तु शीघ्रोपस्थितिकमिति॥—**परिभाषाभ्यामिति**। यद्यप्युक्तपरिभाषयोः परस्परविरोधेनाप्रवृत्तावपीष्टं सिध्यति तथाप्यविशेषादुभयोः प्रवृत्तिरत्र युक्तेवेति भावः॥—**मारणतोषण—**। निशामनमित्यस्य शम आलोचन इत्यस्मान्निष्पन्नत्वादाह—**चाक्षुषं ज्ञानमिति**॥—**एष्वर्थेष्विति**। पक्षे संज्ञपयति। मारयती-

१ **मित्त्वं तु इति**—निपातनं च 'चिण्णमुलोः-' इति दीर्घे चरितार्थम्। तदभावेऽपि न वृद्धिः, फले विशेषाभावेन दीर्घेण बाधस्य वैयर्थ्यापत्तेः, तच्छास्त्रस्य तदभावेऽपि तात्पर्यादिति भावः।

मेति-इति । 'तज्ज्ञापयत्याचार्यः' इति च । शृणु-माधवमतेऽचाक्षुषज्ञाने मित्त्वाभावात् । 'ज्ञापनमात्रे मित्त्वम्' इति मते तु 'ज्ञा नियोगे' इति चौरादिकस्य, धातूनामनेकार्थत्वात् । 'निशानेषु' इति पठतां हरदत्तादीनां मते तु न काऽप्यनुपपत्तिः । कम्पने ८६४ **चलिः** । 'चल कम्पने' इति ज्वलादिः । चलयति शाखाम् । कम्पनादन्यत्र तु-शीलं चालयति । अन्यथा करोतीत्यर्थः । 'हरतीत्यर्थः' इति स्वामी । सूत्रं चालयति । क्षिपतीत्यर्थः । ८६५ **छदिर्** ऊर्जने । 'छद अपवारणे' इति चौरादिकस्य स्वार्थे णिजभावे मित्त्वार्थोऽयमनुवादः । अनेकार्थत्वादूर्जेरर्थे वृत्तिः । छदन्तं प्रयुङ्क्ते छदयति । बलवन्तं प्राणवन्तं वा करोतीत्यर्थः । अन्यत्र-छादयति । अपवारयन्तं प्रयुङ्क्ते इत्यर्थः । स्वार्थे णिचि तु छादयति । बलीभवति, प्राणीभवति, अपवारयति वेत्यर्थः । जिह्वोन्मथने ८६६ **लडिः** । 'लड विलासे' इति पठितस्य मित्त्वार्थोऽनुवादः । उन्मथनं[2] ज्ञापनम् । जिह्वाशब्देन षष्ठीतत्पुरुषः । लडयति जिह्वाम् । तृतीयातत्पुरुषो वा । लडयति जिह्वया । अन्ये तु जिह्वाशब्देन तद्व्यापारो लक्ष्यते । समाहारद्वन्द्वोऽयम् । लडयति शत्रुम् । लडयति दधि । अन्यत्र-लाडयति पुत्रम् । ८६७ **मदी** हर्षग्लेपनयोः । ग्लेपनं दैन्यम् । दैवादिकस्य[1] मित्त्वार्थोऽयमनुवादः । मदयति । हर्षयति, ग्लेपयति वेत्यर्थः । अन्यत्र-मादयति । चित्तविकारमुत्पादयतीत्यर्थः । ८६८ **ध्वन** शब्दे । भ्वाद्ययं मित्त्वार्थोऽनूद्यते । ध्वनयति घण्टाम् । अन्यत्र-ध्वानयति । अस्पष्टाक्षरमुच्चारयतीत्यर्थः । अत्र भोजः-८६९ **दलि** ८७० **वलि** ८७१ **स्खलि-रणि-ध्वनि** ८७२ **त्रपि** ८७३ **क्षपयश्चेति** पपाठ । तत्र 'ध्वनिरणी' उदाहृतौ । दल विशरणे, वल संवरणे, स्खल संचलने, त्रपूष् लज्जायाम्-इति गताः । तेषां णौ दलयति । वलयति । स्खलयति । त्रपयति । 'क्षै क्षये' इति वक्ष्यमाणस्य कृतात्वस्य पुका निर्देशः । क्षपयति । ८७४ **स्वन** अवतंसने । 'शब्दे' इति पठिष्यमाणस्यानुवादः । स्वनयति । अन्यत्र-स्वानयति । (ग) **घटादयो मितः** । मित्संज्ञा इत्यर्थः ॥ (ग) **जनीजॄष्क्नसुरञ्जोऽमन्ताश्च** । मित इत्यनुवर्तते । जॄषिति षित्वनिर्देशाज्जीर्यतेर्ग्रहणम् । जृणातेस्तु जारयति । केचित्तु 'जनी जॄ ष्णसु' इति पठित्वा 'ष्णसु निरसने' इति दैवादिकमुदाहरन्ति । (ग) **ज्वलह्वलह्मलनमामनुपसर्गाद्वा** । एषां मित्त्वं वा । प्राप्तविभाषेयम् । ज्वलयति । ज्वालयति । उपसृष्टे तु नित्यं मित्त्वम् , प्रज्वलयति । कथं तर्हि-'प्रज्वालयति, उन्नामयति' इति ? घञन्तात् 'तत्करोति-' इति णौ । कथं संक्रामयतीति ? 'मितां ह्रस्वः' २५६८ इति सूत्रे 'वा चित्तविरागे' २६०५ इत्यतो वेत्यनुवर्त्य व्यवस्थितविभाषाऽऽश्रयणात् ।

त्यर्थः । विष्णुं विज्ञपयति । संतोषयतीत्यर्थः । संज्ञपयति रूपम् । माधवमते दर्शयतीत्यर्थः । मतान्तरे तु बोधयतीत्यर्थः । प्रज्ञपयति शरम् । तीक्ष्णीकरोतीत्यर्थः । **स्यादेतत्**—निशामनं ज्ञापनमात्रममिति वदतां मते 'श्लाघह्नुङ्स्था-' इति सूत्रे ज्ञीप्स्यमानो बोधयितुमभिप्रेत इति वृत्तिग्रन्थः संगच्छतां नाम । माधवमते तु तद्ग्रन्थस्य का गतिरित्यत आह—**ज्ञप मिच्चेति** ॥—**ज्ञापनमिति** । एवं च वृत्तिग्रन्थो माधवमतेऽपि संगच्छत इति भावः ॥—**मारणादिकं चेति** । एतच्च मतान्तराभिप्रायेणोक्तम् । चुरादिषु तु 'ज्ञपमिच्च, अयं ज्ञाने ज्ञापने च वर्तते' इति वक्ष्यमाणत्वात् ॥—**कथमिति** । ज्ञाधातोर्ज्ञपधातोश्च णौ मित्त्वात् ह्रस्वेन भवितव्यमिति भावः ॥—**मित्त्वाभावादिति** । एवं च बोधने ज्ञाधातोः-ज्ञापयति, ज्ञपधातोस्तु ज्ञपयतीति रूपद्वयं माधवमते बोध्यम् । **छदि**रूर्जने । **ऊर्ज** बलप्राणनयोः । अत्र छदिरिमित् । चुराद्यन्तर्गणो यौजादिकः ॥—**स्वार्थे णिजभाव इति** । 'आधृषाद्वा' इति वैकल्पिकत्वादिति भावः ॥—**लडयति जिह्वामिति** । जिह्वां ज्ञापयतीत्यर्थः ॥—**जिह्वयेति** । जिह्वया पदार्थान्तरं ज्ञापयतीत्यर्थः । जिह्वाव्यापारे उदाहरणमाह—**लडयति शत्रुमिति** । शत्रुमुद्दिश्य गालनादि करोतीत्यर्थः ॥—**लडयति दधीति** । उन्मथयति । विलोडयतीत्यर्थः । केचित्तु जिह्वाव्यापारे लडयति दधि, उन्मथने तु लडयति शत्रुमिति व्यत्यासेन योजयन्ति ॥—**लाडयति पुत्रमिति** । शर्करादिदानेनानुकूलयतीत्यर्थः ॥—**ध्वनिरणी उदाहृताविति** । ध्वनिरव्यवधानेनोदाहृतः, रणिस्तु कण रण गतावित्यत्रेत्यर्थः । **स्वन** अवतंसने । **अवतंसनं**-भूषणम् ॥—**स्वनयतीति** । भूषयतीत्यर्थः । अस्वनीत् । अस्वानीत् । अस्वनि । अस्वानि । स्वनंस्वनम् । स्वानंस्वानम् ॥—**घटादयो मितः । मित्संज्ञा इत्यर्थ इति** । अन्ये तु मकारानुबन्धा इति व्याचक्षते । घट चेष्टायामिति प्रत्येकं पाठे गौरवादेकत्रैव सर्वेषां मित्संज्ञा मकारानुबन्धकत्वं वाऽनेन सूत्रेण विधीयत इति भावः ॥—**जनीजृष** । जनी प्रादुर्भावे । जॄष् वयोहानौ । क्नसु ह्वरणदीप्त्योः । त्रयोऽपि दिवादयः । रञ्ज रागे । दैवादिको भौवादिकश्च । **अमन्ताः**-क्रमिगमीत्यादयः । जनयति । जरयति । क्नसयति । रजयति मृगान् । रञ्जयति पक्षिणः । क्रमयति । गमयति । रमयति ॥—**ज्वलह्वल** ॥—**एषां मित्त्वमिति** । 'मितः' इत्यनुवृत्तस्येह भावप्रधानता । 'अनुपसर्गात्' इति तु षष्ठ्यर्थे पञ्चमीत्येवं क्लेशेन व्याख्येयमिति भावः । 'नमोऽनुपसर्गाद्वा' इति पाठान्तरं, तत्र न कश्चित्क्लेशः ॥—**प्राप्तविभाषेति** । ज्वल दीप्तौ, ह्वल ह्मल चलने इति त्रयाणां पूर्वपठितत्वान्नमेस्त्वमन्तत्वादिति भावः ॥—**कथं संक्रामयतीति** । क्रमेः 'नोदात्तोपदेशस्य-' इति वृद्धिप्रतिषेधात् घञि क्रम इत्येव भवति न तु क्राम इति पूर्वोक्तसमाधानस्यात्रासंभवात्पृथक् प्रश्नः ॥

---

१ **दैवादिकस्येति**—अस्यैवानुवाद इत्यर्थबोधनार्थमीदित्वमिति भावः । २ उन्मथनं=क्षोभणमित्यपि पाठः ।

णादिति वृत्तिकृत्। एतेन 'रजो विश्रामयन् राज्ञाम्', 'धुर्यान्विश्रामयेति सः' इत्यादि व्याख्यातम्। (ग) **ग्लास्नावनुवमां च**। अनुपसर्गादेषां मित्त्वं वा स्यात्। आद्ययोरप्राप्ते इतरयोः प्राप्ते विभाषा। (ग) **न कम्यमिचमाम्**। अमन्तत्वात्प्राप्तं मित्त्वमेषां न स्यात्। कामयते। आमयति। चामयति। (ग) ८७५ **शमो दर्शने**। शाम्यतिर्दर्शने मिन्न स्यात्। निशामयति रूपम्। अन्यत्र तु–'प्रणयिनो निशमय्य वधूः कथाः'। कथं तर्हि–'निशामय तदुत्पत्तिं विस्तराद्गदतो मम' इति? 'शम आलोचने' इति चौरादिकस्य। धातूनामनेकार्थत्वाच्छ्रवणे वृत्तिः, शाम्यतिवत्। (ग) ८७६ **यमोऽपरिवेषणे**। यच्छतिर्भोजनातोऽन्यत्र मिन्न स्यात्। आयामयति। द्राघयति, व्यापारयति वेत्यर्थः। परिवेषणे तु–यमयति ब्राह्मणान्। भोजयतीत्यर्थः। 'पर्यवसितं नियमयन्' इत्यादि तु नियमवच्छब्दात्तत्करोतीति णौ बोध्यम्। (ग) ८७७ **स्खदिर् अवपरिभ्यां च**। मिन्नेत्येव। अवस्खादयति। परिस्खादयति। 'अपावपरिभ्यः' इति न्यासकारः। स्वामी तु 'न कमि–' इति नञमुत्तरत्रिसूत्र्यामननुवर्त्य 'शम अदर्शने' इति चिच्छेद। यमस्त्वपरिवेषणे मित्त्वमाह। तन्मते 'पर्यवसितं नियमयन्' इत्यादि सम्यगेव। 'उपसृष्टस्य स्खदेश्चेदवादिपूर्वस्य' इति नियमात् प्रस्खादयतीत्याह। तस्मात् सूत्रद्वये उदाहरणप्रत्युदाहरणयोर्व्यत्यासः फलितः। इदं च मतं वृत्तिन्यासादिविरोधादुपेक्ष्यम्।

८७८ **फण** गतौ। नेति निवृत्तम्, असंभवात्। निषेधात्पूर्वमसौ न पठितः, फणादिकार्यानुरोधात्।

२३५४। **फणां च सप्तानाम्** ।६।४।१२५। एषां वा एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च। फेणतुः। फेणुः। फेणिथ। पफणतुः। पफणुः। फणयति॥ **वृत्**॥ घटादिः समाप्तः॥ फणेः प्रागेव वृदित्येके। तन्मते 'फाणयति' इत्येव।

८७९ **राजृ** दीप्तौ। स्वरितेत्। राजति, राजते। रेजतुः, रराजतुः। रेजे, रराजे। 'अतः' इत्यनुवृत्तावपि विधानसामर्थ्यादात एत्वम्। ८८० **टुभ्राजृ** ८८१ **टुभ्राशृ** ८८२ **टुभ्लाशृ** दीप्तौ। अनुदात्तेतः। भ्राजतेरिह पाठः फणादिकार्यार्थः। पूर्वं पाठस्तु व्रश्चादिषत्वाभावार्थः। तत्र हि राजिसाहचर्यात् फणादेरेव ग्रहणम्। भ्रेजे, बभ्राजे। 'वा भ्राश–' २३२१ इति श्यन्वा, भ्राश्यते, भ्राशते। भ्रेशे, बभ्राशे। भ्लाश्यते, भ्लाशते। भ्लेशे, बभ्लाशे। द्वावपीमौ तालव्यान्तौ।

८८३ **स्यमु** ८८४ **स्वन** ८८५ **ध्वन** शब्दे॥ **स्यमादयः क्षरत्यन्ताः परस्मैपदिनः**। स्येमतुः, सस्यमतुः। अस्यमीत्। स्वेनतुः, सस्वनतुः। अस्वानीत्, अस्वनीत्। विष्वणति। अवष्वणति, सशब्दं भुङ्क्ते इत्यर्थः। 'वेश्च स्वनः–' २२७४ इति षत्वम्। **फणादयो गताः**। दध्वनतुः।

८८६ **षम** ८८७ **ष्टम** अवैकल्ये। ससाम। तस्ताम। ८८८ **ज्वल** दीप्तौ। अज्वालीत्। ८८९ **चल** कम्पने। ८९० **जल** घातने। घातनं तैक्ष्ण्यम्। ८९१ **टल** ८९२ **ट्वल** वैक्लव्ये। ८९३ **ष्ठल** स्थाने। ८९४ **हल** विलेखने। ८९५ **णल** गन्धे। 'बन्धने' इत्येके। ८९६ **पल** गतौ। पलति। ८९७ **बल** प्राणने धान्यावरोधने च। बलति। बेलतुः। बेलुः। ८९८ **पुल** महत्त्वे। पोलति। ८९९ **कुल** संस्त्याने बन्धुषु च। संस्त्यानं संघातः। बन्धुशब्देन तद्व्यापारो

---

**व्यवस्थितविभाषेत्यादि**। क्वचित् णौ मितां ह्रस्वो न प्रवर्तेत इति भावः॥**—वृत्तिकृदिति**। केचित्तु घञन्तात्क्रमशब्दात्प्रज्ञाद्यणि कामशब्दं स्वीकृत्य तस्मात् 'तत्करोति' इति णौ संक्रामयतीति समादधत इति भावः॥**—इतरयोः प्राप्ते इति**। वनेः पूर्वं पाठाद्वमेरमन्तत्वाच्चेति भावः। ग्लापयति। ग्लपयति। स्नापयति। स्नपयति। वानयति। वनयति। वामयति। वमयति॥**—शाम्यतिवदिति**। यथा शाम्यतिर्निशामयतीत्यादौ दर्शने प्रयुज्यते तथा चुरादिः शमधातुरपि श्रवणे भविष्यतीत्यर्थः॥**—यमोऽपरिवेषणे**॥**—यच्छतिरिति**। यम उपरमे इत्ययं धातुर्भोजनातोऽन्यत्र। भोजनाशब्दो 'ण्यासश्रन्थो युच्' इति युजन्तो ज्ञेयः। परिवेषणमिह भोजनानुकूलव्यापारस्ततोऽन्यस्मिन्नर्थे मिन्निषेधः॥**—नियमयन्निति**। नियमवच्छब्दाण्णिचि विन्मतोर्लुकि शतरि शप्प्रत्यये गुणे च ज्ञेयम्॥**—व्यत्यासः फलित इति**। स्वामिमते त्वपरिवेषणे आयमयति। परिवेषणे तु यमयति ब्राह्मणान्। अवादिपूर्वस्य स्खदेरवस्खदयति। परिस्खदयति। प्रपूर्वस्य तु प्रस्खादयतीत्येवं व्यत्यासो ज्ञेयः॥**—उपेक्ष्यमिति**। 'न पादम्याङ्–' इति सूत्रे आयामयत इत्युदाहृत्य वृत्तावुक्तं 'यमोऽपरिवेषणे' इत्यनेन मित्त्वं प्रतिषिध्यत इति। न्यासेऽपि तत्र 'न कम्यमि–' इत्यतो नेत्यनुवर्तत इत्युक्तम्। एवं हि निषेधानन्तरं पाठ उपपद्यते। अन्यथा 'न कमि–' इत्यतः प्रागेव त्रिसूत्रीं पठेतेति भावः। **फण** गतौ। लुङि-अफाणीत्। अफणीत्। णौ तु 'चिण्णमुलोः–' इति वा दीर्घः–अफाणि। अफाणि। फणंफणम्। फाणंफाणम्॥**—असंभवादिति**। मित्त्वप्राप्तिं विना निषेधासंभवादिह 'न' इत्येतन्न संबध्यते, किंतु मित्संज्ञैव। **२३५४** तदेतदाह**—फणयति॥ वृत्॥—सामर्थ्यादिति**। फणादिषु पाठसामर्थ्यादित्यर्थः॥**—तत्र हीति**। षत्वविधौ हीत्यर्थः। तथा च विभ्राट्, विभ्राड्भ्याम्। पूर्वं पठितस्य तु विभ्राक्, विभ्राग्भ्यामित्यादि सिध्यतीति भावः॥**—अस्यमीदिति**। मान्तत्वान्न वृद्धिः॥

अथ ज्वलादिः॥**—अज्वालीदिति**। 'अतो ल्रान्तस्य' २३३० इति वृद्धिः॥**—वैक्लव्य इति**। वैक्लव्यं भयादिजनितोद्वि-

गृह्यते । कोलति । चुकोल । ९०० शल ९०१ हुल ९०२ पत्लृ गतौ । शशाल । जुहोल । पपात । पेततुः । पतिता ।

२३५५ । **पतः पुम्** ।७।४।१९। अङि परे । अपप्तत् । 'नेर्गद–' २२८५ इति णत्वम्, प्रण्यपप्तत् । ९०३ **कथे** निष्पाके । कथति । चकाथ । अकथीत् । ९०४ **पथे** गतौ । अपथीत् । ९०५ **मथे** विलोडने । मेथतुः । अमथीत् । ९०६ **टुवम** उद्गिरणे । 'इहैव निपातनात् ऋत इत्त्वम्' इति सुधाकरः । ववाम । ववमतुः । वादित्वादेत्वाभ्यासलोपौ न । भागवृत्तौ तु 'वेमतुः' इत्याद्यप्युदाहृतं, तद्भाष्यादौ न दृष्टम् । ९०७ **भ्रमु** चलने । 'वा भ्राश–' २३२१ इति श्यन्वा । भ्रम्यति–भ्रमति । 'भ्राम्यति' इति तु दिवादेर्वक्ष्यते ।

२३५६ । **वा जॄभ्रमुत्रसाम्** ।६।४।१२४। एषामेत्वाभ्यासलोपौ वा स्तः किति लिटि सेटि थलि च । भ्रेमतुः, बभ्रमतुः । अभ्रमीत् । ९०८ **क्षर** संचलने । अक्षारीत् ।

अथ द्वावनुदात्तेतौ । ९०९ **षह** मर्षणे । 'परिनिविभ्यः–' २२७५ इति षत्वम् । परिषहते । सेहे । सहिता । 'तीषसह–' २३४० इति वा इट् । इडभावे ढत्वधत्वष्टुत्वढलोपाः ।

२३५७ । **सहिवहोरोदवर्णस्य** ।६।३।११२। अनयोरवर्णस्य ओत्स्याड्ढलोपे सति ।

२३५८ । **सोढः** ।८।३।११५। सोढ्रूपस्य सहेः सस्य षत्वं न स्यात् । परिसोढा ।

२३५९ । **सिवादीनां वाऽड्व्यवायेऽपि** ।८।३।७१। परिनिविभ्यः परेषां सिवादीनां सस्य षो वा स्यादड्व्यवायेऽपि । पर्यसहत । पर्यषहत । ९१० **रम** क्रीडायाम् । रेमे । रेमिषे । रन्ता । रंस्यते । रंसीष्ट । अरंस्त ॥

अथ कसन्ताः परस्मैपदिनः । ९११ **षद्लृ** विशरणगत्यवसादनेषु ।

२३६० । **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** ।७।३।७८। पादीनां पिबादयः स्युरित्संज्ञकशकाश्नता ॥—**तद्यापार इति** । बन्धुतानुकूलो व्यापारः । २३५५ **पतः पुम्** । मित्त्वादन्त्यादचः परः ॥—**अकथीदिति** । एदित्त्वान्न वृद्धिः । एवम्—अपथीत्, अमथीदित्यत्रापि । **टुवम्** । केचिदमुमुदितं पठित्वा 'वान्त्वा वमित्वा' इत्युदाहरन्ति तत्तु वामनेन विरुध्यते । तेन हि 'आदितश्च' इति चकारस्यानुक्तसमुच्चयार्थत्वमाश्रित्य 'वान्तः' इत्यत्र इडभावः साधितः । उदित्त्वे तु 'यस्य विभाषा' इत्यनेनैव 'वान्तः' इति सिद्धेस्तदसंगतं स्यात् । एवं च क्त्वाप्रत्यये 'वमित्वा' इत्येव साधु ॥—**निपातनादिति** । अन्यथा गुणे सति उद्गरण इति स्यात् । यद्यपि अर्थनिर्देश आधुनिकस्तथापि पृषोदरादित्वादित्वमित्यत्रैव तात्पर्यं बोध्यम् ॥—**इत्याद्यप्युदाहृतमिति** । 'वेमुश्च केचिद्रुधिरम्' इत्यादिप्रयोगानुरोधेन तथोदाहृतमित्याहुः ॥ ननु वादित्वेन निषेधादेत्वाभ्यासलोपौ कथमिह स्यातामिति चेत् । **अत्राहुः**—'न शसददवादिगुणानाम्' इति सूत्रितेऽपि वेत्यकारान्तसंघातग्रहणेनेष्टसिद्धेरादिग्रहणमौपदेशिकप्रतिपत्त्यर्थम् । एकान्ता अनुबन्धा इति च स्वीक्रियते । तथा च नायं वादिः किं तु ट्वादिरिति । अन्ये तु वमेरादौ 'लोपो व्योः–' इति लोपेन यकारः प्रश्लिष्यते । ततश्चोपदेशे वादित्वाभावान्निषेधो नेत्याहुः । **भ्रमु** चलने । मण्डलाकारेण चलनमेव धात्वर्थो न तु चलनमात्रं । तदभाववद्विशेष्यकं तत्प्रकारज्ञानं च धात्वर्थः । 'शुक्तिं पश्यन् रजतमिति भ्रमति' इति प्रयोगात् । 'उदितो वा' इति क्त्वायां वेट्, भ्रमित्वा । भ्रान्त्वा । 'यस्य विभाषा' इति निष्ठायां नेट्, भ्रान्तः ॥ नन्वस्य ज्वलादिगणे पाठः किमर्थः? न चात्र णप्रत्ययार्थमेव पाठ इति वाच्यम् । पचादेराकृतिगणत्वादच्प्रत्ययेनापि भ्रम इति रूपसिद्धेः, 'नोदात्तोपदेशस्य–' इति वृद्धिनिषेधात् णप्रत्यये अच्प्रत्यये च रूपस्य तुल्यत्वादिति चेत् । **अत्राहुः**—यदि पचादित्वादच्प्रत्ययः स्यात्तर्हि 'अभ्रमः' इत्यत्र 'अच्कावशक्तौ' इति नञः परमन्तोदात्तं स्यात् । णप्रत्यये त्विह 'तत्पुरुषे तुल्यार्थ–' इत्याद्युदात्तमेव भवतीति ॥ २३५६ **वा जॄभ्रमुत्रसाम्** । अप्राप्तविभाषेयम् ॥—**अभ्रमीदिति** । मान्तत्वान्न वृद्धिः ॥—**अक्षारीदिति** । हलन्तलक्षणाया वृद्धेः 'नेटि' इति निषेधेऽपि 'अतो ल्रान्तस्य' इति वृद्धिः । **षह** । अपराधे सत्यपि कोपानाविष्करणं मर्षणम् ॥ २३५७ **सहिवहो**—। इह रेफलोपस्यासंभवात् 'ढ्रलोपे पूर्वस्य–' इत्यतो ढ्लोप एवानुवर्तते, तदाह—**ढलोप इति** । ढलोपे किम्? सहते । वहते ॥ २३५८ **सोढः** ॥—**षत्वं नेति** । 'न रपर–' इति सूत्रान्नेत्यनुवर्तत इति भावः ॥ २३५९ **सिवादीनां**—। सिवुसहसुट्स्तुस्वञ्जः सिवादयः । पर्यषीव्यत् । पर्यसीव्यत् । पर्यष्करोत् । पर्यस्करोत् । न्यष्टौत् । न्यस्तौत् । व्यष्वजत् । व्यस्वजत् । **रम** क्रीडायाम् । अमुमुदितं मत्वा रन्त्वा रमित्वेति केचिदुदाजह्रुः, तन्माधवादयो न सहन्ते । तथा च क्त्वायां रन्त्वेत्येव साधु ॥—**रेमिषे इति** । क्रादिनियमादिट् । पचाद्यचि टाप् । रमा । घञि तु रामः । अमन्तत्वेन मित्त्वात् णौ ह्रस्वः । रमयति । **षद्लृ** । विशरणमवयवानां विश्लेषः । अवसादनं नाशः ॥ २३६० **पाघ्राध्मा**—। पा पाने । पा रक्षणे इति तु न गृह्यते, लुग्विकरणत्वात् । 'द्रष्टि' इति केषांचित्पाठः, तत्र 'सृजिदृशोः–' इत्यम् । अर्तीत्यादौ ऋच्छादेशाद्यभाव इव सौत्रत्वात्पश्यादेशाभाव इति बोध्यम् । दृश्यतीति पाठस्तु निर्दुष्ट एव ॥—**पादीनामिति** । एकादशानामेषां यथासंख्यमेकादश-पिबाद्यादेशाः स्युरित्यर्थः । 'ष्ठिवुक्लमुचमाम्–' इत्यतः शितीत्यनुवर्तते, स च

शादौ प्रत्यये परे । सीदति । ससाद । सेदतुः । सेदिथ,ससत्थ । सत्ता । सत्स्यति । लृदित्वादङ्, असदत् । 'सदिरप्रतेः-' २२७१, निषीदति । न्यषीदत् ।

२३६१ । सदेः परस्य लिटि ।८।३।११८। सदेरभ्यासात्परस्य षत्वं न स्याल्लिटि । निषसाद । निषेदतुः । ९१२ शद्लृ शातने । विशीर्णतायामयम् । शातनं तु विषयतया निर्दिश्यते ।

२३६२ । शदेः शितः ।१।३।६०। शिद्भाविनोऽस्मादात्मनेपदं स्यात् । शीयते । शशाद । शेदतुः । शेदिथ, शशत्थ । शत्ता । अशदत् । ८९३ क्रुश आह्वाने रोदने च । क्रोशति । क्रोष्टा । च्लेः क्सः, अक्रुक्षत् । ८९४ कुच संपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु । कोचति । चुकोच । ८९५ बुध अवगमने । बोधति । बोधिता । बोधिष्यति । ८९६ रुह बीजजन्मनि प्रादुर्भावे च । रोहति । रुरोह । रुरोहिथ । रोढा । रोक्ष्यति । अरुक्षत् । ८९७ कस गतौ । अकासीत्, अकसीत् । वृत् । ज्वलादिगणः समाप्तः ।

अथ गूहत्यन्ताः स्वरितेतः । ९१८ हिक्क अव्यक्ते शब्दे । हिक्कति, हिक्कते । ९१९ अञ्चु गतौ याचने च । अञ्चति, अञ्चते । ९२० अचु इत्येके । ९२१ अचि इत्यपरे । ९२२ डुयाचृ याच्ञायाम् । याचति, याचते । ९२३ रेटृ परिभाषणे । रेटति, रेटते । ९२४ चते ९२५ चदे याचने । चचात, चेते । अचतीत् । चचाद, चेदे । अचदीत् । ९२६ प्रोथृ पर्याप्तौ । पुप्रोथ । पुप्रोथे । ९२७ मिदृ ९२८ मेदृ मेधाहिंसनयोः । मिमेद, मिमिदे । मिमेदे । ९२९-९३० थान्ताविमाविति स्वामी । मिमेथ । ९३१-९३२ धान्ताविति न्यासः । ९३३ मेधृ सङ्गमे च । मेधति । मिमेधे । ९३४ णिदृ ९३५ णेदृ कुत्सासन्निकर्षयोः । निनेद । निनिदतुः । निनिद । निनेदे । ९३६ शृधु ९३७ मृधु उन्दने । उन्दनं क्लेदनम् । शर्धति, शर्धते । शर्धिता । मर्धति, मर्धते । ९३८ बुधिर् अवबोधने । बोधति, बोधते । इरित्त्वादङ् वा, अबुधत्-अबोधीत्-अबोधिष्ट । 'दीपजन-' २३२८ इति चिण् तु न भवति, पूर्वोत्तरसाहचर्येण दैवादिकस्यैव तत्र ग्रहणात् । ९३९ उबुन्दिर् निशामने । निशामनं ज्ञानम् । बुबुन्दे । अबुदत्, अबुन्दीत् । ९४० वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु । वेणति, वेणते । ९४१ नान्तोऽप्ययम् । ९४२ खनु अवदारणे । खनति, खनते ।

२३६३ । गमहनजनखनघसां लोपः क्ङित्यनङि ।६।४।९८। एषामुपधाया लोपः स्यादजादौ क्ङिति, न त्वङि । चख्नतुः । 'ये विभाषा' २३१९, खायात्, खन्यात् । ९४३ चीवृ आदानसंवरणयोः । चिचीव, चिचीवे । ९४४ चायृ पूजानिशामनयोः । ९४५ व्यय गतौ । अव्ययीत् । ९४६ दाशृ दाने । ददाश, ददाशे ।

कर्मधारय इत्यभिप्रेत्याह—इत्संज्ञकशकारादाविति । शकारादाविति किम् ? पपे । जिघ्रे । दध्मे । शितीति बहुव्रीहिरित्यभ्युपगमे त्विह पिबाद्यादेशाः स्युरेव ॥—सेदिथेति । 'उपदेशेऽत्वतः' इति क्रादिनियमप्राप्तस्येटो निषेधेऽपि भारद्वाजनियमादिट् ॥ २३६१ सदेः परस्य—। सदेरिति षष्ठी । फलितमाह—अभ्यासात्परस्येति । 'स्थादिष्वभ्यासेन च-' इति प्राप्तिः । लिटीति किम् ? निषिषित्सति । 'सदिस्वञ्ज्योः' इति वृत्त्यारूढोऽपि पाठ इहोपेक्षितः, भाष्याननुगुणत्वात् ॥—निषसादेति । 'सदिरप्रतेः' इत्यत्राप्रतेरिति पर्युदासात्प्रतिससादेत्यत्राभ्यासस्यापि षत्वं नेति बोध्यम् । शद्लृ । विशीर्णतायामिति वक्तव्ये शातने इत्युक्तिरसंगता-इत्याशङ्क्य कथंचित्समाधत्ते—शातनं त्विति । शदेरेव हि णिचि 'शदेरगतौ-' इति तत्वे ल्युटि च शातनमिति रूपम् । तथा चास्यैव धातोरिदं रूपं प्रसिद्धं चेत्यभिप्रेत्य तन्निर्देशः कृतः । यथा 'गम्लृ गतौ' 'डुपचष् पाके' इत्यादाविति भावः ॥ २३६२ कुच संपर्चनादौ । कुच शब्दे तारे इति चवर्गीयान्तेषु पठितस्य पुनरिह पाठः संपर्चनादावेव ज्वलादित्वप्रयुक्तो णप्रत्ययो यथा स्यादिति मनोरमादौ स्थितम् । अत्र नव्याः—अनेनैव ग्रन्थेन पाणिनिनाऽपि क्वचिदर्थनिर्देशः कृत इत्यनुमीयते, अन्यथाऽत्रत्यग्रन्थस्यारस्यभङ्गापत्तेरित्याहुः ॥—बोधितेति । बुध्यतेरेवानिट्कारिकासु पठितत्वादयं सेडिति भावः ॥—अकासीदिति । हलन्तलक्षणाया वृद्धेः 'नेटि' इति निषेधेऽपि 'अतो हलादेः-' इति वैकल्पिकी वृद्धिः ॥—वृदिति । अत्र नव्याः—'ज्वलितिकसन्तेभ्यः-' इति निर्देशाद्वृत्करणमिहानार्षमित्यनुमीयते । अन्यथा 'ज्वलादिभ्यो णः' इत्येव सूत्रयेदित्याहुः ॥ ज्वलादिः समाप्तः ॥ अञ्चु गतौ । 'अनिदिताम्-' इति नलोपः, अच्यात् । 'अचि' इत्येकीयमते तु इदित्त्वात्-अञ्च्यात् । मेधृ संगमे च । चात्पूर्वोक्तेऽर्थे । 'प्रजायै गृहमेधिनाम्' इत्यत्र गृहैः-दारैर्मेधन्ते-सङ्गच्छन्ते इति भावः । 'सुप्यजातौ-' इति णिनिः । शृधु मृधु ॥—क्लेदनमिति । आर्द्रीभाव इत्यर्थः । उदित्त्वात् क्त्वायां वेट्, शर्धित्वा । शृद्ध्वा । उबुन्दिर् । बुन्दित्वा । बुन्त्वा । निष्ठायां-बुन्नः । निशामनं-चाक्षुषं ज्ञानम् । वेणृ । गत्यादयः पञ्चार्थाः । वाद्यभाण्डस्य वादनार्थं ग्रहणं वादित्रग्रहणम् । वेणिः, वेणी, वेणुरित्यादिरूपाण्यस्यैव धातोः ॥—नान्तोऽपीति । 'उत माता महिषमन्ववेनत्' इत्यत्र नान्तदर्शनादिति भावः । खनु । खनित्वा । खात्वा । निष्ठायाम्-खातः ॥ २३६३ गमहन । 'अचि श्नुधातुभ्रुवाम्-' इत्यतोऽचीत्यनुवर्तते, 'ऊदुपधाया गोहः' इत्यत उपधाग्रहणं च, तदाह—एषामुपधाया इत्यादि । जग्मतुः । जग्मुः । जघ्नतुः । जघ्नुः । जज्ञे । जज्ञाते । जक्षतुः । जक्षुः । अनङीति किम् ? अगमत् ॥—चीवृ । चीवरं-वस्त्रं, 'चीवरपीवरमीवर-' इत्युणादिषु निपातितोऽयम् । व्यय गतौ । वित्तत्यागे तु नित्यमात्मनेपदी गत इति मनोरमा । न कुत्रापि गत इति चिन्त्यैव सा ॥—अव्ययीदिति । यान्तत्वान्न वृद्धिः । स्पश बाधनस्पर्श-

९४७ भेषृ भये । गतावित्येके । भेषति, भेषते । ९४८ भ्रेषृ ९४९ भ्लेषृ गतौ । ९५० अस गतिदीप्त्यादानेषु । असति, असते । आस, आसे । अयं ९५१ षान्तोऽपि । ९५२ स्पश बाधनस्पर्शनयोः । स्पर्शनं ग्रन्थनम् । स्पशति, स्पशते । ९५३ लष कान्तौ । 'वा भ्राश–' २३२१ इति श्यन्वा, लष्यति, लषति । लेषे । ९५४ चष भक्षणे । ९५५ छष हिंसायाम् । चच्छषतुः । चच्छषे । ९५६ झष आदानसंवरणयोः । ९५७ भ्रक्ष ९५८ भ्लक्ष अदने । ९५९ भक्ष इति मैत्रेयः । ९६० दासृ दाने । ९६१ माहृ माने । ९६२ गुहू संवरणे ।

२३६४ । ऊदुपधाया गोहः ।६।४।८९। गुह उपधाया ऊत्स्याद्गुणहेतावजादौ प्रत्यये[1] । गूहति, गूहते । ऊदित्त्वादिड्वा–गूहिता, गोढा । गूहिष्यति, घोक्ष्यति । गूहेत् । गुह्यात् । अगूहीत् । इडभावे क्सः, अघुक्षत् ।

२३६५ । लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ।७।३।७३। एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि । ढत्वधत्वष्टुत्वढलोपदीर्घाः । अगूढ, अघुक्षत । 'क्सस्याचि–' २३३७ इत्यन्तलोपः, अघुक्षाताम् । अघुक्षन्त । अगुह्वहि, अघुक्षावहि । अघुक्षामहि ।

**अथाजन्ता उभयपदिनः ।** ९६३ श्रिञ् सेवायाम् । श्रयति, श्रयते । शिश्रियतुः । श्रयिता । 'णिश्रि–' २३१२ इति चङ्, अशिश्रियत् । ९६४ भृञ् भरणे । भरति । बभार । बभ्रतुः । बभर्थ । बभृव । बभृषे । भर्ता ।

२३६६ । ऋद्धनोः स्ये ।७।२।७०। ऋतो हन्तेश्च स्यस्य इट् स्यात् । भरिष्यति ।

२३६७ । रिङ् शयग्लिङ्क्षु ।७।४।२८। शे यकि यादावार्धधातुके लिङि च ऋतो रिङादेशः स्यात् । रीङि प्रकृते रिङ्विधिसामर्थ्याद्दीर्घो न, भ्रियात् ।

२३६८ । उश्च ।१।२।१२। ऋवर्णात्परौ झलादी लिङ्सिचौ तङ्परः सिचेत्येतौ कितौ स्तः । भृषीष्ट । भृषीयास्ताम् । अभार्षीत् । अभार्ष्टाम् । अभार्षुः ।

२३६९ । ह्रस्वादङ्गात् ।८।२।२७। सिचो लोपः स्याज्झलि । अभृत । अभृषाताम् । अभरिष्यत् । ९६५ हृञ् हरणे । हरणं–प्रापणं, स्वीकारः, स्तेयं, नाशनं च । जहर्थ । जह्रिव । जह्रिषे । हर्ता । हरिष्यति । ९६६ धृञ् धारणे । धरति । अधार्षीत् । अधृत । ९६७ णीञ् प्रापणे । निनयिथ । निनेथ । निन्यिषे ।

**अथाजन्ताः परस्मैपदिनः ॥** ९६८ धेट् पाने । धयति ।

२३७० । आदेच उपदेशेऽशिति ।६।१।४५। उपदेशे एजन्तस्य धातोरात्वं स्यात्, न तु शिति ।

---

नयोः । 'णिश्रि–' इति च्लेश्चङि, अपस्पशत् । 'अत्स्मृदृत्वरप्रथ–' इत्यादिना अभ्यासस्यात्वं, सन्वदित्वापवादः । पस्पशा, यङन्तादचि 'यङोऽचि च' इति लुक् । 'अजाद्यतः–' इति टाप् । 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घस्तु न भवति, संज्ञापूर्वकविधेरनित्यत्वादित्याहुः । 'जपजभदहदशभञ्जपशां च' इत्यत्र 'पश' इति सौत्रो धातुः, पशति–इत्यादि । यङ्लुकोस्तु 'जपजभ–' इत्यनेनैवाभ्यासस्य नुक् । यङि–पंपश्यते । लुकि–पंपशीति । पंपस् इति कण्ड्वादिः, पंपस्यति ॥ **२३६४ ऊदुपधाया—॥—गुणहेताविति** । एतच्च गोह इति विकृतनिर्देशाल्लभ्यम् । 'अचि श्नुधातु–' इत्यतोऽनुवृत्तेनाचीत्यनेनाङ्गाक्षिप्तप्रत्ययो विशेष्यते, विशेषणेन तदादिविधिस्तदाह—**अजादाविति** ॥ **२३६५ दन्त्ये तङीति** । दन्त्यादौ तङीत्यर्थः । अदुग्ध । अधुक्षत । अदिग्ध । अधिक्षत । अलीढ । अलिक्षत–इत्यादि ॥ **२३६७ रिङ् शयग्लिङ्क्षु** । 'अयङ् यि क्ङिति' इत्यतोऽनुवृत्तं यीत्येतल्लिङ एव विशेषणं, शेऽसंभवात्, यकि तु वैयर्थ्यात् । तथा 'अकृत्सार्वधातुकयोः–' इत्यनुवृत्तमपि लिङ एव विशेषणमित्यभिप्रेत्याह—**यादावित्यादि** । शे–म्रियते, 'तुदादिभ्य' इति शः । यकि, क्रियते । म्रियते ॥ **२३६८ उश्च** । 'इको झल्' इत्यतो झल्ग्रहणं 'लिङ्सिचौ–' इति पूर्वसूत्रं चानुवर्तते, तदाह—**ऋवर्णादित्यादि** ॥ **—अभार्षीदिति** । 'सिचि वृद्धिः–' इति वृद्धिः ॥ **२३६९ ह्रस्वादङ्गात्** । ह्रस्वात् किम् ? अच्योष्ट । अप्लोष्ट । अङ्गग्रहणादिह 'रात्सस्य' इत्यतः सस्येत्यनुवृत्तावपि प्रत्ययस्यैव, तत्रापीष्टत्वात्सिच एव लोपो भवति । तेनेह न–अस्तं, द्विष्टमाम् । केचित्त्विहाङ्गग्रहणाभावे–अपाच्चिष्टाम्, अलाविष्टामित्यादावतिप्रसङ्गः स्यादित्याहुः । तदपरे न क्षमन्ते, संनिपातपरिभाषयाऽपि परिहारसंभवादिति । झलीति किम् ? अभृषाताम् । अभृषत । **हृञ् हरणे** । चत्वार इहार्थाः । भारं हरति, प्रापयतीत्यर्थः । अंशं हरति, स्वीकरोतीत्यर्थः । स्वर्णं हरति, चोरयति । पापं हरति, नाशयति । **धृञ्** । दधार । दध्रतुः । दधर्थ । दध्रे । दध्राते । धर्ता । ध्रियात् । **णीञ् ॥—निनयिथेति** । भारद्वाजनियमात्थलि [illegible] ॥ **२३७० आदेच उपदेशेऽशिति** । 'लिटि धातोः–' इत्यतो धातोरित्यनुवृत्तमेचा विशेष्यते, [illegible]—**[illegible] धातोरिति** । उपदेशे किम् ? चेता । स्तोता ॥ ननु लाक्षणिकत्वादेवात्र न भविष्यतीति चेत् । **अत्राहुः**—वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषा नाश्रीयत इति ज्ञापनार्थमुपदेशग्रहणम् । तेन 'क्रीङ्जीनां णौ' इति कृतात्वे क्रापयतीत्यादौ पुक्

---

१ **गुणहेताविति**—एतेन जुगूहतुरित्यादि सिद्धम् । २ **ह्रस्वादङ्गादिति**—यद्यपि 'ह्रस्वात्सिचः' इत्येव सिद्धम् । अलाविष्टामित्यादावपि न दोषः, आगमे कृते तत्सहितस्यैव प्रत्ययत्ववत्सिच्त्वम् इति स्वावयवत्वेन पौर्वापर्याभावात्, तथापि पदलाघवाभावादेवमेवोक्तम् ।

२३७१ । **आत औ णलः** ।७।१।३४। आदन्ताद्धातोर्णल औकारादेशः स्यात् । दधौ ।

२३७२ । **आतो लोप इटि च** ।६।४।६४। अजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः स्यात् । द्वित्वात्परत्वाल्लोपे प्राप्ते 'द्विर्वचनेऽचि–' २२४३ इति निषेधः । द्वित्वे कृते आलोपः, दधतुः । दधुः । दधिथ–दधाथ । दधिव । दधिम । धाता ।

२३७३ । **दाधा घ्वदाप्** ।१।१।२०। दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युः, दाप्दैपौ विना ।

२३७४ । **एर्लिङि** ।६।४।६७। घुसंज्ञानां मास्थादीनां च एत्वं स्यादार्धधातुके किति लिङि । धेयात् । धेयास्ताम् । धेयासुः ।

२३७५ । **विभाषा धेट्श्व्योः** ।३।१।४९। आभ्यां च्लेश्चङ् वा स्यात्कर्तृवाचिनि लुङि परे । 'चङि' २३१५ इति द्वित्वम्, अदधत् । अदधताम् ।

२३७६ । **विभाषा घ्राधेट्शाच्छासः** ।२।४।७८। एभ्यः सिचो लुग्वा स्यात्परस्मैपदे परे । अधात् । अधाताम् । अधुः ।

२३७७ । **यमरमनमातां सक् च** ।७।२।७३। एषां सक् स्यात्, एभ्यः सिच इट् स्यात्परस्मैपदेषु । अधासीत् । अधासिष्टाम् । अधासिषुः । ९६९ ग्लै ९७० म्लै हर्षक्षये । हर्षक्षयो धातुक्षयः । ग्लायति । जग्लौ । जग्लिथ, जग्लाथ ।

---

सिध्यतीति मनोरमाकृतः । धातोः किम् ? गोभ्याम् । नौभ्याम् । अस्ति ह्यत्रापि 'गमेर्डोः' 'ग्लानुदिभ्यां डौः' इत्युपदेशे एच् ॥ अशितीति प्रसज्यप्रतिषेध इत्याह—**न तु शितीति** । पर्युदासे तु जग्ले मम्ले इत्यादौ 'द्विर्वचनेऽचि' इति निषेधादात्वं न स्यात्, अभ्यासे इकारश्च श्रूयेत । **किं च** 'सुग्लः' इत्यत्र 'आतश्चोपसर्गे' इति कः । 'सुग्ला' इत्यत्र 'आतश्चोपसर्गे' इति स्त्रियामङ्, सुग्लान इत्यत्र 'आतो युच्' इति युच् न स्यात् । प्रत्ययनिमित्तं ह्यात्वं आदन्ताच्च प्रत्यय इत्यन्योन्याश्रयात् । प्रसज्यप्रतिषेधे तु न कोऽपि दोषः । 'ह्वावामश्च' इति सूत्रेण कबाधनार्थं पुनरण्विधानं च प्रतिषेधपक्षे ज्ञापकम् । **तदाहुः**—अनैमित्तिकमात्वं शिति तु प्रतिषेध इति ॥ नन्वेवमपि एशः शित्वाज्जग्ले मम्ले इत्यादि न सिध्यतीति चेत् । **अत्राहुः**—यदि तु शितीति बहुव्रीहिः स्यात्तदाऽत्र स्यादेव दोषः । किं तु कर्मधारयोऽयम् । तथा चाशितीत्यत्र 'इत्संज्ञकशकारादौ प्रत्यये परे न' इत्यर्थः, धातुग्रहणाक्षिप्तस्य प्रत्ययस्य शितीति कर्मधारयेण विशेषणात् । विषयसप्तम्यां तु इत्संज्ञकशकारादिभिन्नप्रत्ययविषये आत्वमित्यर्थात्पर्युदासेऽपि न क्षतिरिति ॥ **२३७१ आत औ णलः** । इह अङ्गस्येत्यनुवर्तते । धातोरिति तु फलितार्थकथनम् । आदन्तादङ्गादित्यर्थः ॥ **२३७२ आतो लोप इटि च** । आर्धधातुक इत्यनुवर्तते । 'दीडो युडचि क्ङिति' इत्यतोऽचि क्ङितीति च, तदेतत्फलितमाह—**अजाद्योरार्धधातुकयोरिति** । अजाद्योः किम् ? ग्लायते । यक्, जाग्लायते । यङ्, दासीय, डुदाञो लिङुत्तमैकवचनमिट् । आर्धधातुकयोः किम् ? यान्ति । वान्ति । व्यतिरै, रा दाने कर्मव्यतिहारे धातोर्लडुत्तमैकवचनमिट् ॥—**दधिथेति** । एवं च अजाद्यार्धधातुकस्य क्त्विेन दधिव दधिमेत्यादिष्वातो लोपसिद्धावपि दधिथ पपिथेत्यादिरूपसिद्धये सूत्रेऽस्मिन्निटीति ग्रहणमावश्यकमिति ज्ञेयम् । यदि तु इडागम एवात्र गृह्यते व्याख्यानात्तदाऽचि क्ङितीत्येतदार्धधातुकस्यैव विशेषणं, न तूभयोः ॥ **२३७३ दाधा घ्वदाप्** । इह दारूपाश्चत्वारः । डुदाञ् दाने, दाण् दाने, दो अवखण्डने, देङ् रक्षणे । धारूपौ तु द्वौ–डुधाञ् धारणपोषणयोः, धेट् पाने । अनुबन्धानामनेकान्तत्वात् 'आदेच उपदेशे–' इत्यात्वे दोदेङ्धेटामनुकरणे दाधारूपत्वमस्ति । एवं च दाश्च दाश्च दाश्च दाः । धाश्च धाश्च धौ । दाश्च धौ च दाधाः इति विग्रहः ॥—**दाप्दैपौ विनेति** । दाप् लवने, दैप् शोधने एतद्भिन्ना इत्यर्थः । दैपः पित्त्वमिह प्रतिषेधार्थं, न त्वनुदात्तार्थम्, 'अनुदात्तौ सुप्पितौ' इति प्रत्ययस्यैव पितोऽनुदात्तत्वात् । न च दैपो लाक्षणिकत्वान्नास्य प्रतिषेध इति शङ्क्यम् । पित्करणस्यानर्थक्यप्रसङ्गात् । इदमेव च दैपः पित्त्वं 'गामादाग्रहणेष्वविशेषः' इति परिभाषाया ज्ञापकमित्याहुः । अदाविति किम् ? दातं बर्हिः, लूनमित्यर्थः । इह 'दो दद्घोः' इति दद्भावो न । अवदातं मुखम्, शुद्धमित्यर्थः । इह तु 'अच उपसर्गात्–' इति तादेशो न ॥ **२३७४ एर्लिङि** ॥—**मास्थादीनामिति** । मास्थागापाजहातिसामित्यर्थः । माङ् माने । गामादाग्रहणेष्वविशेषेऽपि माङ्मेङौ नेह गृह्येते, लिङि कित्त्वासंभवात् । ष्ठा गतिनिवृत्तौ । गै शब्दे । गाङ् गतौ इति तु न गृह्यते, लिङि कित्त्वासंभवादेव । पा पाने । ओहाक् त्यागे । षोऽन्तकर्मणि । देयात् । धेयात् । स्थेयात् । गेयात् । पेयात् । हेयात् । अवसेयात् । आर्धधातुके किम् ? मायात् । मायाताम् । मायुः । कितीति किम् ? दासीष्ट । इह 'दीडो युडचि–' इत्यतः क्ङितीत्यनुवर्तमानेऽपि प्रकृतोपयोगितया कितीत्यस्यैवानुवृत्तिः कृता ॥ **२३७५ विभाषा धेट्** । 'च्लि लुङि' इत्यनुवर्तते 'णिश्रि–' इत्यस्मात्कर्तरीति च, तदाह—**च्लेश्चङ् वेत्यादि** ॥—**अदधदिति** । चङि आतोलोपः । श्वयतेरुदाहरणमशिश्वियत् ॥ **२३७६ विभाषा घ्रा—** । इह 'ण्यक्षत्रियार्ष–' इत्यतो लुगनुवर्तते, 'गातिस्था–' इत्यतः सिचः परस्मैपदेष्विति च, तदाह—**सिचो लुग्वेत्यादि**—॥—**अधुरिति** । 'आतः' इति झेर्जुस् । परस्मैपदे किम् ? व्यत्यघ्रास्त ॥ **२३७७ यमरमनमातां—** । इह 'आर्धधातुकस्येड्वलादेः' इतीडनुवर्तते । 'अञ्जेः सिचि' इत्यतः सिज्ग्रहणं, 'स्तुसुधूञ्भ्यः' इत्यतः परस्मैपदग्रहणं च, तदाह—**एभ्यः सिच इडित्यादि** । अयंसीत् । अयंसिष्टाम् । व्यरंसीत् । व्यरंसिष्टाम् । अनंसीत् । अनंसिष्टाम् । परस्मैपदेषु किम् ? उदायंस्त भारम् । अरंस्त । अरंसा-

२३७८ । **वाऽन्यस्य संयोगादेः** ।६।४।६८। घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वा स्यादार्धधातुके किति लिङि । ग्लायात्, ग्लेयात् । अग्लासीत् । ग्लायति । ९७१ द्यै न्यक्करणे । न्यक्करणं तिरस्कारः । ९७२ द्रै स्वप्ने । ९७३ ध्रै तृप्तौ । ९७४ ध्यै चिन्तायाम् । ९७५ रै शब्दे । ९७६ स्त्यै ९७७ ष्ट्यै शब्दसंघातयोः । स्त्यायति । षोपदेशस्यापि सत्वे कृते रूपं तुल्यम् । षोपदेशफलं तु 'तिष्ट्यासति' 'अतिष्ट्यपत्' इत्यत्र षत्वम् । ९७८ खै खदने । ९७९ क्षै ९८० जै ९८१ षै क्षये । क्षायति । जजौ । ससौ । साता । 'घुमास्था–' २४६२ इत्यत्र 'विभाषा घ्राधेट्–' २३७६ इत्यत्र च स्यतेरेव ग्रहणं, न त्वस्य । तेन एत्वसिज्लुकौ न, सायात् । असासीत् । ९८२ कै ९८३ गै शब्दे । गेयात् । अगासीत् । ९८४ शै ९८५ श्रै पाके । ९८६ पै ९८७ ओवै शोषणे । पायात् । अपासीत् । 'घुमास्था–' २४६२ इतीत्वं, तदपवाद 'एर्लिङि–' २३७४ इत्येत्वं, 'गातिस्था–' २२२३ इति सिज्लुक् च न, पारूपस्य लाक्षणिकत्वात् । ९८८ ष्टै वेष्टने । स्तायति । ९८९ ष्णै वेष्टने । 'शोभायां च' इत्येके । 'शौचे' इत्यन्ये । स्नायति । ९९० दैप् शोधने । दायति । अघुत्वादेत्वसिज्लुकौ न, दायात् । अदासीत् । ९९१ पा पाने । 'पाघ्राध्मा–' २३६० इति पिबादेशः । तस्यादन्तत्वान्नोपधागुणः । पिबति । पेयात् । अपात् । ९९२ घ्रा गन्धोपादाने । जिघ्रति । घ्रायात्–घ्रेयात् । अघ्रासीत्, अघ्रात् । ९९३ ध्मा शब्दाग्निसंयोगयोः । धमति । ९९४ ष्ठा गतिनिवृत्तौ । तिष्ठति । 'स्थादिष्वभ्यासेन–' २२७७ इति षत्वम्, अधितष्ठौ । 'उपसर्गात्–' २२७० इति षत्वम्, अधिष्ठाता । स्थेयात् । ९९५ म्ना अभ्यासे । मनति । ९९६ दाण् दाने । प्रणियच्छति । देयात् । अदात् । ९९७ ह्वृ कौटिल्ये । ह्वरति ।

२३७९ । **ऋतश्च संयोगादेर्गुणः** ।७।४।१० ऋदन्तस्य संयोगादेरङ्गस्य गुणः[1] स्याल्लिटि । किदर्थमपीदं परत्वाण्णल्यपि भवति । रपरत्वम्, उपधावृद्धिः, जह्वार । जह्वरतुः । जह्वरुः । जह्वर्थ । ह्वर्ता । 'ऋद्धनोः स्ये–' २३६६, ह्वरिष्यति ।

२३८० । **गुणोऽर्तिसंयोगाद्योः** ।७।४।२९ । अर्तेः संयोगादेर्ऋदन्तस्य च गुणः स्याद्यकि यादावार्धधातुके लिङि च । ह्वर्यात् । अह्वार्षीत् । अह्वार्ष्टाम् । ९९८ स्वृ शब्दोपतापयोः । 'स्वरतिसूति–' २२७९ इति वेट् । सस्वरिथ–सस्वर्थ । वमयोस्तु—

२३८१ । **श्र्युकः किति** ।७।२।११। श्रिञ एकाच

ताम् ॥ **२३७८ वान्यस्य—**। अन्यस्य किम् ? स्थेयात् । दै न्यक्करणे । दायति । दद्यौ । अद्यासीत् ॥—**घुमास्थेत्यत्रेति** । व्याख्यानात्, तन्त्रान्तरे 'जहातिस्यतीनाम्' इति श्यना निर्देशाच्चेति भावः ॥—**विभाषा घ्रेति** । श्यन्विकरणाभ्यां शाच्छाभ्यां साहचर्यादिति भावः । एवं 'शाच्छासा–' इति युग्विधावपि स्यतेरेव ग्रहणमिति बोध्यम् । तेनास्य धातोः 'अर्तिह्री–' इति पुगेव । सापयति । **पै ओवै** । पायति । वायति । शुष्यतीत्यर्थः । 'ओदितश्च' इति निष्ठानत्वम्, वानम् । 'शुष्के वानमुभे त्रिषु' इत्यमरः ॥—**अदन्तत्वादिति** । केचित्तु अङ्गवृत्तपरिभाषयाऽपि गुणाभावं समर्थयन्ति । **घ्रा** गन्धोपादाने । गन्धोपादानं गन्धग्रहणम् ॥ नन्वेवं कर्मणो धात्वर्थेनोपसंग्रहादकर्मकत्वेन 'जिघ्रति कुसुमम्' इत्यादिप्रयोगो न सिध्येदिति चेत् । **अत्राहुः**—यद्धात्वर्थेन कर्तृनिष्ठकर्मण उपसंग्रहस्तस्यैव धातोरकर्मकत्वं, नान्यस्य । भवति हि जीवतिनृत्यतीत्यादेरकर्मकत्वम्, तदर्थोपसंगृहीतकर्मणः कर्तृनिष्ठत्वात् । घ्राधातोः कर्मणस्त्वतथात्वान्नाकर्मकतेति । **ध्मा** शब्दाग्निसंयोगयोः । शब्दशब्देन तदनुकूलो वायुरिह गृह्यते । तेन शङ्खं धमतीतिवत् मृदङ्गं धमतीति प्रयोगो नेत्याहुः । अग्निसंयोगे सुवर्णं धमति । अग्निना संयुनक्तीत्यर्थः ॥—**स्थेयादिति** । 'एर्लिङि' इति नित्यमेत्वम् । लुङि–अस्थात् । **म्ना** अभ्यासे । मनति । विद्यामभ्यस्यतीत्यर्थः । मम्नौ । अम्नासीत् ॥—**अदादिति** । 'गातिस्था–' इति सिचो लुक् ॥ **२३७९ ऋतश्च—**। संयोगादेः किम् ? चक्रतुः । चक्रुः । तपरकरणं स्पष्टार्थम्, स्तॄञ् इत्यादेर्लिटि तस्तरतुरित्यादौ 'ऋच्छत्यॄताम्' इति गुणस्य जायमानत्वात् । चकारो मन्दप्रयोजनः ॥ 'दयतेर्दिगिलिटि' इत्यतोऽनुवर्तनादाह—**गुणः स्याल्लिटीति** । अवृद्धिनिमित्ते लिटीति प्राचो व्याख्यानं तु नादर्तव्यम् । न च स्वविषये वृद्धिर्बाधिकेति फलितार्थकथनपरतया तदुक्तिः संगच्छत इति वाच्यम् । परत्वेन गुणस्यैव न्याय्यत्वादिति भावः ॥ **२३८० गुणोऽर्ति—**। अर्तीति भ्वादिस्वाद्योर्ग्रहणम् । लुका निर्देशस्तु सौत्रः । ऋग्रहणे कर्तव्ये श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः । 'रीङ् ऋतः' इत्यस्मादृत इत्यनुवर्तते, तच्च संयोगादित्वेन विशेष्यते, तदाह—**संयोगादेरिति** । 'अर्तिसंयोगाद्योरः' इत्यकारे विधेये गुणग्रहणं चिन्त्यप्रयोजनम् । 'अयङ् यि क्ङिति' इति सूत्रात् यीत्यनुवर्तते । तच्च लिङो विशेषणम्, 'रिङ् शयग्लिङ्क्षु' इति सूत्राद्यग्ग्रहणस्य लिङ्ग्रहणस्य चानुवर्तनात्–इत्यभिप्रेत्याह—**यकि यादाविति** । आर्धधातुके इत्येतत् 'अकृत्सार्वधातुकयोः–' इत्यनुवृत्तिपर्यालोचनया फलितार्थकथनमिति ज्ञेयम् । संयोगादिरिति किम् ? क्रियात् । यादीति किम् ? संस्कृषीष्ट । आर्धधातुके किम् ? इयृयात् । **स्वृ** । उपतापो रोगः ॥ **२३८१ श्र्युकः किति** । 'एकाच उपदेशे' इत्यतः एकाच इत्यनुवर्तते तच्च उको विशेषणमित्याह—**एकाच**

[1] **गुण इति**—तपरत्वं स्पष्टार्थम् । अरैव सिद्धे गुणग्रहणं ऋच्छत्यॄतामित्यस्य इग्लक्षणत्वेन 'क्ङिति च' इति निषेधाय, क्सोः कित्त्वसामर्थ्यान्निषेधविषयस्यापि तस्य गुणस्य निषेधाङ्गीकारात् ।

उगन्ताच्च परयोर्गित्कितोरिण्न स्यात् । परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादनेन निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । सस्वरिव । सस्वरिम । परत्वात् 'ऋद्धनोः-' २३६६ इति नित्यमिट्, स्वरिष्यति । स्वर्यात् । अस्वारीत् । अस्वारिष्टाम् । अस्वार्षीत् । अस्वार्ष्टाम् । ९९९ स्मृ चिन्तायाम् । १००० ह्वृ संवरणे । १००१ स्रु गतौ । क्रादित्वान्नेट्, ससर्थ । सस्रुव । रिङ्, स्रियात् । असार्षीत् । असार्ष्टाम् ।

२३८२ । सर्तिशास्त्यर्तिभ्यश्च ।३।१।५६। एभ्यश्च्लेरङ् स्यात्कर्तरि लुङि । इह लुक्शपा शासिना साहचर्यात् सर्त्यर्ती जौहोत्यादिकावेव गृह्येते । तेन भ्वाद्योर्नाङ् । शीघ्रगतौ तु 'पाघ्राध्मा-' २३६० इति धौरादेशः । धावति । १००२ ऋ गतिप्रापणयोः । ऋच्छति ।

२३८३ । ऋच्छत्यृताम् ।७।४।११। तौदादिकऋच्छेर्ऋधातोर्ऋतां च गुणः स्याल्लिटि । णलि प्राग्वदुपधावृद्धिः, आर । आरतुः । आरुः ।

२३८४ । इडत्यर्तिव्ययतीनाम् ।७।२।६६। 'अद्' 'ऋ' 'व्येञ्' एभ्यस्थलो नित्यमिट् स्यात् । आरिथ । अर्ता । अरिष्यति । अर्यात् । आर्षीत् । आर्ष्टाम् १००३ गृ १००४ घृ सेचने । गरति । जगार । जगर्थ । जग्रिव । रिङ्, ग्रियात् । अगार्षीत् । १००५ ध्वृ हूर्छने । १००६ स्रु गतौ । सुस्रोथ । सुस्रुव । स्रुयात् । 'णिश्रि-' २३१२ इति चङ्, लघूपधगुणादन्तरङ्गत्वादुवङ्, असुस्रुवत् । १००७ षु प्रसवैश्वर्ययोः । प्रसवोऽभ्यनुज्ञानम् । सुषोथ, सुषविथ । सुषुविव । सोता ।

२३८५ । स्तुसुधूञ्भ्यः परस्मैपदेषु ।७।२।७२। एभ्यः सिच इट् स्यात्परस्मैपदेषु । असावीत् । 'पूर्वोत्तराभ्यां ञिभ्यां साहचर्यात्सुनोतेरेव ग्रहणम्' इति पक्षे-असौषीत् । १००८ श्रु श्रवणे ।

२३८६ । श्रुवः शृ च ।३।१।७४। श्रुवः 'शृ' इत्यादेशः स्यात् श्नुप्रत्ययश्च शब्विषये । शपोऽपवादः । श्नोर्ङित्त्वाद्धातोर्गुणो न, शृणोति । शृणुतः ।

२३८७ । हुश्नुवोः सार्वधातुके ।६।४।८७। जुहोतेः श्नुप्रत्ययान्तस्यानेकाचोऽङ्गस्य चासंयोगपूर्वोवर्णस्य यण् स्यादजादौ सार्वधातुके । उवङोऽपवादः । शृण्वन्ति । शृणोमि । शृण्वः, शृणुवः । शृण्मः, शृणुमः । शुश्रोथ । शुश्रुव । शृणु । शृणवानि । शृणुयात् । श्रूयात् । अश्रौषीत् । १००९ ध्रु स्थैर्ये । ध्रवति । अयं कुटादौ गत्यर्थोऽपि । १०१० दु १०११ द्रु गतौ । दुदोथ, दुदविथ । दुदविव । दुद्रोथ । दुद्रुव । 'णिश्रि-' २३१२ इति चङ्, अदुद्रुवत् । १०१२ जि १०१३ ज्रि अभिभवे । अभिभवो न्यूनीकरणं न्यूनीभवनं च । आद्ये सकर्मकः, शत्रून् जयति । द्वितीये त्वकर्मकः, अध्ययनात्पराजयते । अध्येतुं ग्लायतीत्यर्थः । 'विपराभ्यां जेः' २६८५ इति तङ् । 'पराजेरसोढः' ५८९ इत्यपादानत्वम् ।

अथ डीङन्ता ङितः ॥ १०१४ ष्मिङ् ईषद्धसने ।

---

**उगन्तादिति** । श्रितः । श्रितवान् । श्रित्वा । भूतः । भूत्वा । भूतिः । गित्युदाहरणम्—भूष्णुः । 'ग्लाजिस्थश्च-' इति ग्स्नुः । स च गिद्भवति न कित्, स्थास्नुरित्यत्र 'घुमास्था-' इतीत्वप्रसङ्गात् । एकाच इति किम् ? जागरितः । जागरितवान् । ऊर्णोतेस्तु नुवद्भावेन ऊर्णुतः, ऊर्णुतवान् इति सिध्यति । उगन्तात्किम् ? शयितः । शयितवान् ॥—**पुरस्तादित्यादि** । 'आर्धधातुकस्येड्वलादेः' इत्यादिविधिकाण्डात्प्रागेव 'नेड्वशि कृति' इत्यादिप्रतिषेधकाण्डारम्भसामर्थ्यादित्यर्थः ॥—**निषेधे प्राप्ते इति** । स्मृतः, सृतः, धृत इत्यादौ यथेति भावः । **सृ** गतौ । सरति । सरिष्यति ॥ **२३८२ सर्तिशास्त्यर्ति—**। परस्मैपदेष्विति न संबध्यते, पुषादियोगादस्य पृथक्करणात् । 'आङः शासु इच्छायाम्' इत्यस्यात्र न ग्रहणं, किं तु सर्त्यर्तिभ्यां साहचर्यात्परस्मैपदिनः शासेरेवेत्याहुः । असरत् । अशिषत् । आरत् ॥ **२३८३ प्राग्वदिति** । किदर्थमारब्धोऽपि गुणः परत्वाण्णल्यपि भवति । रपरत्वम् । तत उपधावृद्धिरित्यर्थः ॥ **२३८४ नित्यमिट् स्यादिति** । 'विभाषा सृजिदृशोः' इत्यतो विभाषा नानुवर्तत इति भावः । **ध्वृ** हूर्छने । **हूर्छनं**-कौटिल्यम् । **स्रु** गतौ । यद्यपि सामान्येन गतिरुक्ता तथापि द्रवद्रव्यस्यैव गतिरिह ज्ञेया । स्रवति घृतम् ॥—**प्रसवोऽभ्यनुज्ञानमिति** । 'देवस्य त्वा सवितुः प्रसवे' इत्यादावभ्यनुज्ञानार्थदर्शनात् ॥ **२३८५ स्तुसुधूञ्भ्यः—**। परस्मैपदेषु किम् ? अस्तोष्ट । अधोष्ट ॥ **२३८६ श्रुवः शृ च** । यद्ययं श्रुधातुः स्वादौ पठ्येत तर्हि चकारो न कर्तव्य इति लाघवमित्याहुः ॥ **२३८७ हुश्नुवोः—**। जुह्वति । सुन्वन्ति । हुश्नुवोः किम् ? योयुवति । नोनुवति । सार्वधातुके किम् ? जुहुवतुः । जुहुवुः । असंयोगपूर्वेति किम् ? अक्ष्णुवन्ति । असंयोगपूर्वग्रहणमोर्विशेषणं न तु श्नुप्रत्ययस्य । तेन 'आप्नुवन्ति' इत्यत्रापि यण्निषेधः सिध्यति । प्रत्ययविशेषणत्वे तु अक्ष्णुवन्तीत्यत्रैव निषेधः स्यादिति भावः । **स्यादेतत्**—यङ्लुकश्छान्दसत्वाद्योयुवतीत्यादौ प्रत्ययस्य 'छन्दस्युभयथा' इत्यनेनार्धधातुकत्वाश्रयणे यणादेशो न भवेदिति किमनेन हुश्नुग्रहणेन ? न च युवन्ति रुवन्ति इत्यत्रातिप्रसङ्गवारणार्थं तद्ग्रहणमिति वाच्यम् । 'अनेकाचः' इत्यस्यानुवर्तनेनोक्तदोषाभावादिति चेत् । **अत्राहुः**—'दाधर्तिदर्धर्तिदर्धर्षिबोभूतु-' इति च्छन्दसि निपातनाद्भाषायां यङ्लुकि बोभवीतीत्यादौ 'भूसुवोः-' इति गुणनिषेधो न प्रवर्तते । अत एव भाषायामपि यङ्लुक् सिद्ध इति वक्ष्यमाणत्वात् 'योयुवति' इत्यादावतिप्रसङ्गवारणाय हुश्नुग्रहणं कर्तव्यमेवेति । हुश्नुग्रहणाज्ज्ञापकात् भाषायामपि क्वचिद्यङ्लुग्भवतीति भाष्यकाराः । एवं च सार्वधातुकपरयोर्हुश्नुवोरनेकाच्त्वाव्यभिचारादनेकाच इत्यस्यानुवृत्तिरिह किमर्थेत्याशङ्काया निरवकाश एव । तदनुवृत्त्यभावे हुश्नुग्रहणस्य ज्ञापकत्वासंभवादिति दिक् ॥—**द्रुद-**

स्मयते । सिष्मिये । सिष्मियिढ्वे, सिष्मियिध्वे । १०१५ गुङ् अव्यक्ते शब्दे । गवते । जुगुवे । १०१६ गाङ् गतौ । गाते । गाते । गाते । इट एत्वे कृते वृद्धिः, गे । लङ इटि-अगे । गेत । गेयाताम् । गेरन् । गासीष्ट । 'गाङ्कुटादिभ्यः-' २४६१ इति सूत्रे इङादेशस्यैव गाङो ग्रहणं, न त्वस्य, तेनाङित्त्वात् 'घुमास्था-' २४६२ इतीत्वं न, अगास्त । आदादिकोऽयमिति हरदत्तादयः । फले तु न भेदः । १०१७ कुङ् १०१८ घुङ् १०१९ उङ् १०२० ङुङ् शब्दे । अन्ये तु-उङ् कुङ् १०२१ खुङ् १०२२ गुङ् घुङ् ङुङ् इत्याहुः । कवते । चुकुवे । ववते । अवते । ऊवे । (प) 'वार्णादाङ्गं बलीयः' इत्युवङ्; ततः सवर्णदीर्घः, ओता । ओष्यते । ओषीष्ट । औष्ट । ङवते । ङुङुवे । ङोता । १०२३ च्युङ् १०२४ ज्युङ् १०२५ प्रुङ् १०२६ प्लुङ् गतौ । १०२७ क्रुङ् इत्येके । १०२८ रुङ् गतिरेषणयोः । रेषणं हिंसा । रुरुवे । रवितासे । १०२९ धृङ् अवध्वंसने । धरते । दध्रे । १०३० मेङ् प्रणिदाने । प्रणिदानं-विनिमयः प्रत्यर्पणं च । प्रणिमयते, 'नेर्गद-' २२८५ इति णत्वम्, तत्र 'घुप्रकृतिमाङ्' इति पठित्वा ङितो माप्रकृतेरपि ग्रहणस्येष्टत्वात् । १०३१ देङ् रक्षणे । दयते ।

२३८८ । दयतेर्दिगि लिटि ।७।४।९। दिग्यादेशेन द्वित्वबाधनमिष्यत इति वृत्तिः । दिग्ये ।

२३८९ । स्थाघ्वोरिच्च ।१।२।१७। अनयोरिदादेशः स्यात्, सिच्च कित्स्यात्तङि । अदित । अदिथाः । अदिषि । १०३२ श्यैङ् गतौ । श्यायते । शश्ये । १०३३ प्यैङ् वृद्धौ । प्यायते । पप्ये । प्याता । १०३४ त्रैङ् पालने । त्रायते । तत्रे । १०३५ पूङ् पवने । पवते । पुपुवे । पविता । १०३६ मूङ् बन्धने । मवते । १०३७ डीङ् विहायसा गतौ । डयते । डिड्ये । डयिता । १०३८ तॄ प्लवनतरणयोः ।

२३९० । ऋत इद्धातोः ।७।१।१००। ऋदन्तस्य धातोरङ्गस्य इत्स्यात् ॥ ॐ इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन ॥ तरति । 'ऋच्छत्यृताम्' २३८३ इति

विथेति । भारद्वाजनियमादिट् ॥ **दुद्रोथ । दुद्रुवेति** । क्रादिलाल्लिटि नेट् । **गाङ्** गतौ ॥—**गाते गाते गाते इति** । पूर्वं शपा सह सवर्णदीर्घे कृते 'आतो ङितः' इति न प्रवर्तते । 'आत्मनेपदेष्वनतः' इति तु प्रवर्तते इति तातांझेषु तुल्यं रूपमित्याहुः । **गै** । गावहे । गामहे । जगे । जगाते । गाताम् । गाताम् । गाताम् । गास्व । उत्तमे तु-गै । गावहै । गामहै । अगात । अगाताम् ॥—**न त्वस्येति** । गाते, गाथ-इत्यादौ तङ प्रवर्त्य ङकारस्य चरितार्थत्वात् । आदेशङकारस्तु न चरितार्थः, स्थानिवद्भावेन ङित्त्वादेव तङः सिद्धत्वादिति भावः ॥—**आदादिकोऽयमिति** । एवं च गाते गाथे इत्यादावातामाथामोः परतः 'आतो ङितः' इत्यस्य प्रवृत्तिशङ्कव नास्तीति भावः ॥—**फले तु न भेद इति** । न च गाते गाथे इत्यादौ शपा सह सवर्णदीर्घे कृतेऽपि पूर्वस्मात्परस्य विधौ कर्तव्ये स्थानिवत्त्वादतः परत्वेन ङितामाकारस्य इय् स्यादिति शङ्क्यम् । पञ्चमीसमासपक्षस्यानित्यत्वाभ्युपगमादिति भावः ॥—**ङुङुवे इति** । 'कुहोश्चुः' इति ङस्य ञः ॥—**क्रुङ् इति** । अस्मात् पचाद्यचि विक्रवः । वबयोरभेदात्-विक्लब इत्यन्ये । **मेङ्** ॥—**प्रणिमयत इति** । ननु 'नेर्गद-' इति कथमिह णत्वं स्यात् । शिद्विषये आत्वाभावेन मारूपाभावात् । अशिद्विषये कृतात्वेऽप्यस्मिन् णत्वं दुर्लभमेव, प्रतिपदोक्तस्यैव माधातोर्ग्रहणौचित्यात्, न त्वस्य लाक्षणिकस्य । 'गामादाग्रहणेष्वविशेषः' इत्यभ्युपगमे तु मीनातिमिनोत्योरात्वे कृते प्रनिमाता प्रनिमास्यतीत्यादावतिप्रसङ्गः स्यादित्यत आह—**तत्रेति** ॥—**इष्टत्वादिति** । अयं भावः—घुसंज्ञासूत्रे प्रणिदयते प्रणिधयतीत्यादौ णत्वसिद्धये भाष्यकारैरित्थं सिद्धान्तितम्-'नेर्गदनद-' इति णत्वविधौ 'घुमा-' इत्यस्य स्थाने 'घुप्रकृतिमाङ्' इति पठनीयम् । घुश्च प्रकृतिश्च माङ् चेति द्वन्द्वः । प्रकृतिश्च कस्येत्याकाङ्क्षायां संनिधानात्पूर्वोत्तरयोरेव । तेन न क्वाप्यव्याप्तिः । नापि मा माने इत्यत्र मीनातिमिनोत्योश्चातिव्याप्तिः । माङ् इति ङकारानुबन्धकस्यैव पठितत्वादिति ॥ **२३८८ दिग्यादेशेनेति** । दयतेर्लिटि परे द्वित्वं प्राप्तं दिग्यादेशश्च । तत्र विशेषविहितेन दिग्यादेशेन द्वित्वशास्त्रस्य बाधः । न चैवं 'प्यायः पी', 'चक्षिङः ख्याञ्' इति पीख्याञोरपि विशेषविहितत्वात्ताभ्यां द्वित्वबाधः स्यादिति वाच्यम् । विषयसप्तमीमाश्रित्य लिङुत्पत्तेः प्रागेव तयोः प्रवृत्तत्वात् । दिग्यादेशविधौ तु लिटीति परसप्तम्येव, न तु विषयसप्तमी, लक्ष्यानुरोधात् । तदेतत्सूचयति—**इष्यत इति** । दयतेर्लिटि द्वित्वे प्राप्ते तद्बाधित्वा परत्वाद्दिग्यादेश इति तु नोक्तम् । परस्परलब्धावकाशयोरेव परस्य बलीयस्त्वात् । दिग्यादेशं विना द्वित्वस्य सावकाशत्वेऽपि द्वित्वं विना दिग्यादेशस्य तदभावादिति दिक् ॥ **२३८९ स्थाघ्वोरिच्च** । इह 'लिङ्सिचौ-' इति सूत्रादात्मनेपदेष्विति नानुवर्तते । परस्मैपदेषु 'गातिस्था-' इति लुकः प्रवृत्तेर्व्यावर्त्यालाभात् । अस्थित । अस्थिषाताम् । 'भाव्यमानोऽण् क्वचित्सवर्णान् गृह्णाति' इत्यत्रेदमपि तपरकरणं लिङ्गमित्याहुः । **अत्र वदन्ति**—विधीयमानस्य सवर्णग्राहकत्वेऽपि तपरकरणमिह व्यर्थम् । न चात्र दीर्घः स्यादिति वाच्यम् । 'घुमास्था-' इत्यनेनैव तत्सिद्धौ विधिवैयर्थ्यापत्तेः । न चैवमपि प्लुतः स्यादिति वाच्यम् । 'प्लुताऽप्लुतप्रसङ्गेऽपि प्लुतश्च विषये स्मृतः' इति सिद्धान्तादिति । **डीङ् । विहायसा**—आकाशेन । विहायसामिति पाठस्त्वनाकर इत्याहुः ॥ **२३९० ऋत इद्धातोः** । किरति । गिरति । कीर्णः । गीर्णः । स्तीर्णः । धातोः किम् ? मातॄणाम् ॥—**इत्वोत्वा-**

१ **फले तु न भेद इति**—'गा अ आते' इत्यत्र वार्णपरिभाषया सवर्णदीर्घं बाधित्वा 'आतो ङितः' इतीयादेशः स्यादिति भेदस्तु न शङ्क्यः । तस्याः स्थान्येकत्वे एव प्रवृत्तेः ।

गुणः, 'तृफल–' २३०१ इत्येत्वम्, तेरतुः । तेरुः ।

२३९१ । **वृतो वा** ।७।२।३८। वृङ्वृञ्भ्यामृदन्ताच्चेटो दीर्घो वा स्यान्न तु लिटि । तरीता–तरिता । अलिटीति किम् । तेरिथ । 'हलि च' ३५४ इति दीर्घः, तीर्यात् ।

२३९२ । **सिचि च परस्मैपदेषु** ।७।२।४०। अत्र वॄत इटो दीर्घो न । अतारिष्टाम् ।

अथाष्टावनुदात्तेतः ॥ १०३९ **गुप** गोपने । १०४० **तिज** निशाने । १०४१ **मान** पूजायाम् । १०४२ **बध** बन्धने ।

२३९३ । **गुप्तिज्किद्भ्यः सन्** ।३।१।५।

२३९४ । **मान्बधदान्शान्भ्यो दीर्घश्चाऽभ्यासस्य** ।३।१।६। सूत्रद्वयोक्तेभ्यः सन् स्यात्, मानादीनामभ्यासस्येकारस्य दीर्घश्च ॥ ॐ **गुपेर्निन्दायाम्** ॥ ॐ **तिजेः क्षमायाम्** ॥ ॐ **कितेर्व्याधिप्रतीकारे निग्रहे, अपनयने, नाशने, संशये च** ॥ ॐ **मानेर्जिज्ञासायाम्** ॥ ॐ **बधेश्चित्तविकारे** ॥ ॐ **दानेरार्जवे** ॥ ॐ **शानेर्निशाने** ॥ 'सनाद्यन्ता–' २३०४ इति धातुत्वम् ।

२३९५ । **सन्यङोः** ।६।१।९। सन्नन्तस्य यङन्तस्य च प्रथमस्यैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य । अभ्यासकार्यम् । गुपिप्रभृतयः किन्द्भिन्ना निन्दाद्यर्थका एवानुदात्तेतो दानशानौ च स्वरितेतौ । एते नित्यं सन्नन्ताः । अर्थान्तरेषु त्वननुबन्धकाश्चुरादयः । अनुबन्धस्य केवलेऽचरितार्थत्वात्सन्नन्तात्तङ् । 'धातोः' इत्यविहितत्वात्सनोऽत्र नार्धधातुकत्वम् । तेनेड्गुणौ न । जुगुप्सते । जुगुप्सांचक्रे । तितिक्षते । मीमांसते । भष्भावः, चर्त्वम्, बीभत्सते । १०४३ **रभ** राभस्ये । आरभते । आरेभे । रब्धा । रप्स्यते । १०४४ **डुलभष्** प्राप्तौ । लभते । १०४५ **ष्वञ्ज** परिष्वङ्गे ।

२३९६ । **दंशसञ्जस्वञ्जां शपि** ।६।४।२५।

२३९७ । **रञ्जेश्च** ।६।४।२६। एषां शपि नलोपः । स्वजते । परिष्वजते । 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वा' इति व्याकरणान्तरम् 'देभतुः', 'सस्वजे' इति भाष्योदाहरणादेकदेशानुमत्या इहाप्याश्रीयते । 'सदेः परस्य लिटि' २३६१ इति सूत्रे ॐ **स्वञ्जेरुपसंख्यानम्** । अतोऽभ्यासात्परस्य षत्वं न । परिषस्वजे, परिषस्वञ्जे । सस्वजिषे, सस्वञ्जिषे । स्वङ्क्ता । स्वङ्क्ष्यते । स्वजेत । स्वङ्क्षीष्ट । प्रत्यष्वङ्क्त, 'प्राक्सितात्–' २२७६ इति

---

**भ्यामिति** । 'परत्वाद् गुणवृद्धी भवत' इति वक्तव्ये किमिदं वार्तिकमिति चेत् । **अत्राहुः**—परादप्यन्तरङ्गं प्रबलमितील्वे प्राप्ते वार्तिकमिदमारब्धमिति ॥ **२३९१ वृतो वा** । इह 'आर्धधातुकस्येड्–' इत्यत इडित्यनुवर्तते 'ग्रहो लिटि' इत्यतो लिटि दीर्घ इति च तदाह—**इटो दीर्घो वेत्यादि** ॥ **२३९२ सिचि च**–। 'न लिङि' इत्यतो नेत्यनुवर्तनात्तदाह—**इटो दीर्घो नेति** ॥ **२३९४ मान्बध**—। अभ्यासस्येति च्छेदः । अभ्यासस्य विकारः–आभ्यासः । स चात्र 'सन्यतः' इतीत्वमेव । यदि तु ह्रस्व इत्येव गृह्येत तर्हि तद्धितनिर्देशो व्यर्थः स्यात्, तदेतदाह—**अभ्यासेकारस्येति** । वृत्तिकाराद्युपनिबद्धानर्थान्दर्शयति—**गुपेर्निन्दायामित्यादिना**[1] ॥ **२३९५ सन्यङोः**—। सप्तमीमाश्रित्य सनि यङि च परे इति व्याख्यायां–प्रतीषिषति, अटाट्यते–इत्यादि न सिध्येत्, सन्यङोः प्रकृतिभागस्यैव द्वित्वप्रसक्तेः, अत आह—**सन्नन्तस्येति** । ननु सप्तमीपक्षेऽपि सन्यङोरेव द्वित्वं स्यान्न तु प्रकृतिभागस्य, शपोऽकारणैव जुगुप्सते तितिक्षते इत्यादिरूपसिद्धेस्तयोरकारोच्चारणस्य 'अजादेर्द्वितीयस्य' इति द्वित्वार्थत्वात् । यद्यपि निमित्तस्य कार्यित्वस्वीकारे आट आटतुरित्यादौ लिटि परतः पूर्वभागमात्रस्य द्वित्वं न सिध्येत्तथाप्यकारोच्चारणसामर्थ्यात् सन्यङोः कार्यित्वमभ्युपगन्तुं शक्यमिति चेत् । मैवम् । अकारफलानां बहूनां सत्वात् । तथा हि—'दित्स्यं' 'धित्स्यं' इत्यत्र अचो यति कृते 'यतो नावः' इत्याद्युदात्तः सिद्ध्यति । अकाराभावे तु 'ऋहलोः–' इति ण्यतीष्टस्वरो न सिध्येत् । **किंच**—पिपठिषि ब्राह्मणकुलानीत्यत्राल्लोपस्य स्थानिवत्त्वात् झलन्तलक्षणो नुम् न भवति, अकाराभावे तु स्यादेव नुम् । **अपि च**—पापचक इत्यादावल्लोपस्य स्थानिवत्त्वात् 'अत उपधायाः' इति वृद्धिर्न प्रवर्तते । **अपि च**—'यस्य हलः' इत्यत्र यस्येति संघातग्रहणम् 'अहर्यात्' इत्यादौ यलोपव्यावृत्त्यर्थमिति सर्वसंमतम् । तथा च 'अपापचिष्ट' इत्यादौ यलोपोऽप्यकारफलमिति 'सन्यङोः' इति षष्ठ्येव युक्ता । एवं हि यङ्लुकि प्रत्ययलक्षणेन यङन्तत्वाद्द्वित्वं सिध्यति । परसप्तम्यां तु द्वित्वस्याङ्गकार्यत्वात् 'न लुमता–' इति निषेधः प्रवर्तेत–इति दिक् ॥—**दानशानौ चेति** । आर्जवनिशानार्थाविति भावः ॥—**अर्थान्तरे त्विति** । धातुपाठोपात्ते गोपनादिरूपेऽर्थे इत्यर्थः ॥—**अननुबन्धका इति** । सानुबन्धकत्वे तु केवलेऽचरितार्थत्वात् अनुबन्धस्य सन्नन्तादिवाकर्तृगफलात् ण्यन्तादपि तङ् स्यादिति भावः । एवं चानुपूर्वीमात्रसाम्येऽपि भ्वादयश्चुरादिभ्यो भिन्ना एवेति फलितम् ॥—**इड्गुणौ नेति** । यद्यपि 'हलन्ताच्च' इति सनः कित्त्वेनापि गुणाभावः सुसाधस्तथापि इडभावार्थमुक्तहेतुरेवाश्रयणीय इति किं हेत्वन्तराश्रयणेन ? इति भावः । केचित्तु अर्थवद्ग्रहणपरिभाषया इच्छासन एव हलन्ताच्च' इति सूत्रे ग्रहणमिति नास्य स्वार्थसनः कित्त्वमित्याहुः ॥ **रभ** राभस्ये । राभस्यमुपक्रमः । लिटि–रेभे । रेभाते । लुङि–अरब्ध । अरप्साताम् । **डुलभष्** । 'ञ्चितः क्तिः', लब्ध्रिमम् । 'षिद्भिदादिभ्यः–'

---

१ **गुपेर्निन्दायामिति**—गोपनाद्यर्थकानां निन्दादौ वृत्तिस्तु धातूनामनेकार्थत्वाद्बोध्या । २ **किन्द्भिन्ना इति**—अत्र मानं 'य एवं विद्वान् विचिकित्सति' इत्यादयः प्रयोगा इति भावः ।

षत्वम् । परिनिविभ्यस्तु 'सिवादीनां वा-' २३५९ इति विकल्पः । एतदर्थमेव 'उपसर्गात्सुनोति—' २२७० इत्येव सिद्धे स्तुस्वञ्ज्योः 'परिनिवि-' इत्यत्र पुनरुपादानम्, पर्यष्वङ्क-पर्यस्वङ्क । १०४६ हद पुरीषोत्सर्गे । हदते । जहदे । हत्ता । हत्स्यते । हदेत । हत्सीष्ट । अहत्त ।

अथ परस्मैपदिनः ॥ १०४७ ञिष्विदा अव्यक्ते शब्दे । १०४८ स्कन्दिर् गतिशोषणयोः । चस्कन्दिथ-चस्कन्थ । स्कन्ता । स्कन्त्स्यति । नलोपः, स्कद्यात् । इरित्वादङ् वा, अस्कदत्, अस्कान्त्सीत् । अस्कान्ताम् । अस्कान्त्सुः ।

२३९८ । वेः स्कन्देरनिष्ठायाम् ।८।३।७३। षत्वं वा स्यात् । कृत्येवेदम्[1], अनिष्ठायामिति पर्युदासात् । विष्कन्ता-विस्कन्ता । निष्ठायां तु-विस्कन्नः ।

२३९९ । परेश्च ।८।३।७४। अस्मात्परस्य स्कन्देः सस्य षो वा । योगविभागात् 'अनिष्ठायाम्' इति न संबध्यते । परिष्कन्दति-परिस्कन्दति । परिष्कण्णः-परिस्कन्नः । षत्वपक्षे णत्वम् । न च पदद्वयाश्रयतया बहिरङ्गत्वात्षत्वस्यासिद्धत्वम्, धातूपसर्गयोः कार्यमन्तरङ्गमित्यभ्युपगमात् । 'पूर्वं धातुरुपसर्गेण युज्यते ततः साधनेन' इति भाष्यम् । 'पूर्वं साधनेन' इति मतान्तरे तु न णत्वम् । १०४९ यभ मैथुने । येभिथ । ययब्ध । यब्धा । यप्स्यति । अयाप्सीत् । १०५० णम प्रह्वत्वे शब्दे च । नेमिथ-ननन्थ । नन्ता । अनंसीत् । अनंसिष्टाम् । १०५१ गम्लृ १०५२ सृप्लृ गतौ ।

२४०० । इषुगमियमां छः ।७।३।७७। एषां छः स्याच्छिति परे । गच्छति । जगाम । जग्मतुः । जग्मुः । जगमिथ-जगन्थ । गन्ता ।

२४०१ । गमेरिट् परस्मैपदेषु ।७।२।५८। गमेः परस्य सकारादेरिट् स्यात् । गमिष्यति । लृदित्त्वादङ्, 'अनङि' इति पर्युदासान्नोपधालोपः, अगमत् । सर्पति । ससर्प ।

२४०२ । अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ।६।१।५९। उपदेशेऽनुदात्तो य ऋदुपधस्तस्याम्वा स्याज्झलादावकिति परे । स्रप्ता-सर्प्ता । स्रप्स्यति-सर्प्स्यति । असृपत् । १०५३ यम उपरमे । यच्छति । येमिथ । ययन्थ । यन्ता । अयंसीत् । अयंसिष्टाम् । १०५४ तप संतापे । तप्ता । अताप्सीत् ।

२४०३ । निसस्तपतावनासेवने ।८।३।१०२। षः स्यात् । आसेवनं पौनःपुन्यं, ततोऽन्यस्मिन्विषये । निष्टपति । १०५५ त्यज हानौ । तत्यजिथ । तत्यक्थ । त्यक्ता । अत्याक्षीत् । १०५६ षञ्ज सङ्गे । 'दंशसञ्जस्वञ्जां शपि' इति नलोपः, सजति । सङ्क्ता । १०५७ दृशिर् प्रेक्षणे । पश्यति ।

२४०४ । विभाषा सृजिदृशोः ।७।२।६५। आभ्यां थल इड्वा ।

२४०५ । सृजिदृशोर्झल्यमकिति ।६।१।५८ अनयोरमागमः स्याज्झलादावकिति । दद्रष्ठ-ददर्शिथ । द्रष्टा । द्रक्ष्यति । दृश्यात् । इरित्त्वादङ् वा,

२४०६ । ऋदृशोऽङि गुणः ।७।४।१६। ऋवर्णान्तानां दृशेश्च गुणः स्यादङि । अदर्शत् । अङभावे—

२४०७ । न दृशः ।३।१।४७ दृशश्च्लेः क्सो न । अद्राक्षीत् । १०५८ दंश दशने । दशनं दंष्ट्राव्यापारः । पृषोदरादित्वादनुनासिकलोपः[2] । अत एव निपातनादित्येके । तेषामप्यत्रैव तात्पर्यम्, अर्थनिर्देशस्याधुनिकत्वात् । 'दंशसञ्ज-' २४९६ इति नलोपः, दशति । ददंशिथ-ददंष्ठ । दंष्टा । दङ्क्ष्यति । दश्यात् । अदाङ्क्षीत् । १०५९ कृष विलेखने । विलेखनमाकर्षणम् । क्रष्टा-कर्ष्टा । क्रक्ष्यति-कर्क्ष्यति ॥ ❀ स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः ॥ अक्राक्षीत् । अक्राष्टाम् । अकार्क्षीत् । अकार्ष्टाम् । अकार्क्षुः । पक्षे क्सः, अकृक्षत् । अकृक्षताम् । अकृक्षन् । १०६० दह भस्मीकरणे । देहिथ,

---

इत्यङ् । लभा । लिटि-लेभे । लुङि-अलब्ध ॥ **२३९८ वेः स्कन्देरनिष्ठायाम्** । 'सिवादीनाम्-' इत्यतो वेत्यनुवर्तते । अषोपदेशत्वादप्राप्ते विभाषेयम् । माधवादिग्रन्थानुरोधेनाह—**कृत्येवेदमिति** । प्राचा तु 'विस्कन्दति' इत्युदाहृतं, तत्र मूलं मृग्यमिति भावः ॥ **२३९९ न संबध्यत इति** । अत एव तिङन्तेऽपि षत्वमुदाहरन्ति—**परिष्कन्दतीति** ॥—**णम प्रह्वत्वे** । केचिदमुमुदितं पठन्ति तत्प्रामादिकमित्याहुः ॥ **२४०० जग्मतुरिति** । 'गमहन-' इत्युपधालोपः ॥ **२४०२ अनुदात्तस्य—**। 'आदेच उपदेशेऽशिति' इत्यत उपदेश इत्यनुवर्तते । उपदेशे किम् ? स्रप्तुम्, तुमुनि उदात्तः । ऋदुपधस्य किम् ? कर्ता । झलीति किम् ? ससर्प । अकितीति किम् ? सृप्तः ॥—**असृपदिति** । लृदित्त्वादङ् । 'स्पृशमृश-' इति सिज्विकल्पवार्तिके सृपं प्रक्षिप्य अस्राप्सीदिति केचिदुदाहरन्ति, तत्प्रामादिकमित्याहुः ॥—**अयंसीदिति** । 'यमरम-' इतीट्सकौ ॥ **२४०३ निसस्तपता—**। मूर्धन्य इत्यनुवर्तमाने फलितमाह—**षः स्यादिति** । आसेवने तु निस्तपति । पुनः पुनस्तपतीत्यर्थः ॥ **२४०४ विभाषा सृजिदृशोः** । क्रादिनियमान्नित्ये प्राप्ते विभाषेयम् ॥ **२४०५ सृजिदृशोः—**। झलि किम् ? ससर्ज । ददर्श । अकितीति किम् ? सृष्टः । सृष्टवान् । दृष्टः । दृष्टवान् ॥ **२४०७ अदाङ्क्षीदिति** । 'वदव्रज-' इति

---

१ **कृत्येवेदमिति**—परे तु अत्र भाष्याननुग्रहः । अत एव 'अनुविपरिभ्य-' इत्यत्रैव भगवतात्र सूत्रे पर्युदासप्रसज्यप्रतिषेधयोः फलभेदविचारो न कृतः । तस्माद्विपूर्वस्यास्य तिङ्यप्रयोगो वा सषत्वो वा प्रयोग इत्याहुः । २ **अनुनासिकलोप इति**—स च दंष्ट्राव्यापारार्थके दंशधातावेव, 'तनुत्रं वर्मदंशनम्' इत्यमरस्वरसात् ।

ददग्ध । दग्धा । धक्ष्यति । अधाक्षीत् । अदाग्धाम् । अधाक्षुः । १०६१ **मिह** सेचने । मिमेह । मिमेहिथ । मेढा । मेक्ष्यति । अमिक्षत् । १०६२ **कित** निवासे रोगापनयने च । चिकित्सति । संशये प्रायेण विपूर्वः । 'विचिकित्सा तु संशयः' इत्यमरः । अस्यानुदात्तेत्त्वमाश्रित्य 'चिकित्सते' इत्यादि कश्चिदुदाजहार । निवासे तु-केतयति ।

१०६३ **दान** खण्डने । १०६४ **शान** तेजने । इतो **वहत्यन्ताः स्वरितेतः** ॥ दीदांसति । दीदांसते । शीशांसति । शीशांसते । अर्थविशेषे सन् । अन्यत्र-दानयति । १०६५ **डुपचष्** पाके । पचति । पचते । पेचिथ-पपक्थ । पेचे । पक्ता । पक्षीष्ट । १०६६ **षच** समवाये । सचति । सचते । १०६७ **भज** सेवायाम् । बभाज । भेजतुः । भेजुः । भेजिथ । बभक्थ । भक्ता । भक्ष्यति । भक्ष्यते । अभाक्षीत् । अभक्त । १०६८ **रञ्ज** रागे । नलोपः । रजति । रजते । अराङ्क्षीत् । अरङ्क्त । १०६९ **शप** आक्रोशे । आक्रोशो विरुद्धानुध्यानम् । शशाप । शेपे । अशाप्सीत् । अशप्त । १०७० **त्विष** दीप्तौ । त्वेषति । त्वेषते । तित्विषे । त्वेक्ष्यति । त्विक्षीष्ट । अत्विक्षत् । अत्विक्षाताम् । १०७१ **यज** देवपूजासंगतिकरणदानेषु । यजति । यजते ।

२४०८ । **लिट्यभ्यासस्योभयेषाम्** ।६।१।१७। वच्यादीनां ग्रह्यादीनां चाभ्यासस्य संप्रसारणं स्याल्लिटि । इयाज ।

२४०९ । **वचिस्वपियजादीनां किति** ।६।१।१५ वचिस्वप्योर्यजादीनां च संप्रसारणं स्यात्किति । पुनःप्रसङ्गविज्ञानाद्द्वित्वम्, ईजतुः । ईजुः । इयजिथ-इयष्ठ ईजे । यष्टा । यक्ष्यति । इज्यात् । यक्षीष्ट । अयाक्षीत् । अयष्ट । १०७२ **डुवप्** बीजसन्ताने । बीजसन्तानं क्षेत्रे विकिरणं गर्भाधानं च । अयं छेदनेऽपि, केशान्वपति । उवाप । ऊपे । वप्ता । उप्यात् । वप्सीष्ट । प्रण्यवाप्सीत् । अवप्त । १०७३ **वह** प्रापणे । उवाह । उवहिथ । 'सहिवहोरोदवर्णस्य' २३५७, उवोढ । ऊहे । वोढा । वक्ष्यति । अवाक्षीत् । अवोढाम् । अवाक्षुः । अवोढ । अवक्षाताम् । अवक्षत । अवोढाः । अवोढ्वम् । १०७४ **वस** निवासे । परस्मैपदी । वसति । उवास ।

२४१० । **शासिवसिघसीनां च** ।८।३।६०। इण्कुभ्यां परस्यैषां सस्य षः स्यात् । ऊषतुः । ऊषुः । उवसिथ-उवस्थ । वस्ता । 'सः स्यार्धधातुके' २३४२, वत्स्यति । उष्यात् । अवात्सीत् । अवात्ताम्[1] । १०७५ **वेञ्** तन्तुसन्ताने । वयति । वयते ।

२४११ । **वेञो वयिः** ।२।४।४१। वा स्याल्लिटि । इकारउच्चारणार्थः[2] । उवाय ।

---

वृद्धिः । अदाङ्ष्टाम् । अदाङ्क्षुः । क्रष्टा, कर्ष्टा-इति 'अनुदात्तस्य च' इत्यम् वा ॥—**धक्ष्यतीति** । घत्वषत्वभष्भावाः ॥—**अधाक्षीदिति** । 'अस्तिसिचः' इतीट् । वृद्धिः । घत्वादि प्राग्वत् । **मिह** सेचने । सेचनमिह शिश्नकरणकं विवक्षितं न तु सेचनमात्रम् । 'मेढ्रं मेहनशेफसी' इत्यमरः । **कित** निवासे । कितेर्व्याधिप्रतीकारादावेव सन्-इत्युक्तं, तदुदाहरति—**चिकित्सतीति** । रोगमपनयतीत्यर्थः । शत्रुं चिकित्सति । निगृह्णातीत्यर्थः । क्षेत्रे तृणं चिकित्सति । अपनयति, नाशयति वेत्यर्थः । अर्थान्तरे तु चुरादिरित्युक्तं, तदुदाहरति—**केतयतीति** । **षच** समवाये । समवायः संबन्धः ॥—**भेजतुरिति** । 'तृफलभज-' इत्येत्वम् ॥—**भक्ष्यतीति** । कुत्वषत्वे । **त्विष** दीप्तौ ॥—**अत्विक्षदिति** । 'शलइगुपधात्-' इति क्सः । कत्वषत्वे ॥—**अत्विक्षातामिति** । 'क्सस्याचि' इति लोपः । **यज** देव-। देवपूजा त्विह देवतोद्देशेन विधिबोधितो द्रव्यत्यागः ॥ २४०८ **लिट्यभ्यासस्येति** । वच्यादयः-वचिस्वपियजादयः । ग्रह्यादयस्तु 'ग्रहिज्यावयि-' इत्यादयः । यद्यपि ग्रहिपृच्छतिभृज्जतीनामभ्यासस्य संप्रसारणे कृतेऽकृते च विशेषो नास्ति, तथापि पर्जन्यवल्लक्षणं प्रवर्तते । जग्राह । पप्रच्छ । बभ्रज्ज । वृश्चतेस्तु विशेषोऽस्ति-संप्रसारणस्याकरणे वव्रश्चेत्यत्र वकारस्य संप्रसारणं स्यात् । कृते तु संप्रसारणे 'न संप्रसारणे' इति निषेधप्रवृत्तिरिति । लिटीति किम् ? विवक्षति । यियक्षति ॥ २४०९ **वचिस्वपि—। आगणान्ता यजादयः । 'यजिर्वपिर्वहिश्चैव वसिर्वेञ् व्येञ इत्यपि । ह्वेञ्वदी श्वयतिश्चेति यजाद्याः स्युरिमे नव'** ॥ कितीति किम् ? इयष्ठ । **डुवप्** । 'ड्वितः क्त्रिः' । उप्त्रिमम् ॥ २४१० **शासिवसिघसीनां च** । धातुसकारस्याप्राप्ते विधिरयम् ॥ ननु सुपिसौ सुपिस इत्यादावतिप्रसङ्गवारणाय धातोः सकारस्य चेदेषामेवेति नियमार्थतां स्वीकृत्य 'आदेशप्रत्यययोः' इति सूत्रं त्यज्यतामिति चेत् । **अत्राहुः**—आदेशावयवस्य षत्ववारणाय आदेशस्येत्यंशस्तावदावश्यकः । तद्ग्रहणे कृते धातुभिन्नसकारस्य चेद्भवति आदेशरूपस्यैवेति नियमप्रसङ्गवारणाय प्रत्ययग्रहणमपि कर्तव्यमेवेति ॥—**अवात्सीदिति** । 'वदव्रज-' इति वृद्धिः । 'सः सि' इति तः । 'अस्तिसिचः' इतीट् ॥—**उच्चारणार्थ इति** । इत्संज्ञायां तु 'इदितः' इति नुम् स्यादिति भावः ॥—**उवायेति** । 'ग्रहिज्या-' इत्यत्र वयिग्रहणात् 'वेञः' २४१५ इति निषेधोऽत्र न प्रवर्तत इत्याहुः ॥—**ग्रहिज्यावयि—**। गृह्णाति । गृह्णीतः । जिनाति । जिनीतः । जीनः । ङिति वयेरुदाहरणं नास्ति । किति तु 'वचिस्वपियजादीनाम्-' इति सिद्धम्, यजादिषु वेञः पाठात् । अत एवाभ्याससंप्रसारणमपि सिद्धम् ॥ २४११ **वेञ इति** । संप्रसारणनिषेधस्तु 'लिटि

---

१ **अवात्तामिति**—सिज्लोपस्यासिद्धत्वात् 'सः सि' इति तत्वे सिज्लोपः । २ **उच्चारणार्थ इति**—इत्संज्ञकत्वे नुम् स्यादित्यभिमानः । परे तु वयिरित्यादौ स्थानिवद्भावेन भाव्यातिदेशिकं धातुत्वमादाय धातुनिर्देशे इकः सत्वेन न नुम् इत्याहुः ।

२४१२ । **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च** ।६।१।१६। एषां किति ङिति च संप्रसारणं स्यात् । इति यकारस्य प्राप्ते—

२४१३ । **लिटि वयो यः** ।६।१।३८। वयो यस्य संप्रसारणं न स्याल्लिटि । ऊयतुः । ऊयुः ।

२४१४ । **वश्चास्यान्यतरस्यां किति** ।६।१।३९। वयो यस्य वो वा स्यात्किति लिटि । ऊवतुः । ऊवुः । वयेस्तासावभावात्थलि नित्यमिट्, उवयिथ । स्थानिवद्भावेन ञित्त्वात्तङ्, ऊये । ऊवे । वयादेशाभावे–

२४१५ । **वेञः** ।६।१।४०। वेञो न संप्रसारणं स्याल्लिटि । ववौ । ववतुः । ववुः । वविथ–ववाथ । ववे । वाता । ऊयात् । वासीष्ट । अवासीत् । १०७६ व्येञ् संवरणे । व्ययति ।

२४१६ । **न व्यो लिटि** ।६।१।४६। व्येञ आत्वं न स्याल्लिटि । वृद्धिः । परमपि हलादिःशेषं बाधित्वा यस्य संप्रसारणम्, उभयेषां ग्रहणसामर्थ्यात् । अन्यथा वच्यादीनां ग्रह्यादीनां चानुवृत्त्यैव सिद्धे किं तेन ? विव्याय । विव्यतुः । विव्युः । 'इडत्त्यर्ति–' २३८४ इति नित्यमिट्, विव्ययिथ । विव्याय–विव्यय । विव्ये । व्याता । वीयात् । व्यासीष्ट । अव्यासीत् । अव्यास्त । १०७७ ह्वेञ् स्पर्धायां शब्दे च ।

२४१७ । **अभ्यस्तस्य च** ।६।१।३३। अभ्यस्तीभविष्यतो ह्वेञः संप्रसारणं स्यात् । ततो द्वित्वम्, जुहाव । जुहुवतुः । जुहुवुः । जुहविथ–जुहोथ । जुहुवे । ह्वाता । हूयात् । ह्वासीष्ट ।

२४१८ । **लिपिसिचिह्वश्च** ।३।१।५३। एभ्यश्च्लेरङ् स्यात् ।

२४१९ । **आत्मनेपदेष्वन्यतरस्याम्** ।३।१।५४। 'आतो लोपः' २३७२, अह्वत् । अह्वताम् । अह्वन् । अह्वत–अह्वास्त ।

अथ द्वौ परस्मैपदिनौ ॥ १०७८ वद व्यक्तायां वाचि । अच्छ वदति । उवाद । ऊदतुः । उवदिथ । वदिता । उद्यात् । 'वदव्रज–' २२६७ इति वृद्धिः, अवादीत् । १०७९ टुओश्वि गतिवृद्ध्योः । श्वयति ।

२४२० । **विभाषा श्वेः** ।६।१।३०। श्वयतेः संप्रसारणं वा स्याल्लिटि यङि च । शुशाव । शुशुवतुः । ॐ **श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधः** ॥ तेन 'लिट्यभ्यासस्य–' २४०८ इति संप्रसारणं न । शिश्वाय । शिश्वियतुः । श्वयिता । श्वयेत् । शूयात् । 'जॄस्तम्भु–' २२९१ इत्यङ् वा ।

२४२१ । **श्वयतेरः** ।७।४।१८। श्वयतेरिकारस्य अकारः स्यादङि । पररूपम्, अश्वत् । अश्वताम् । अश्वन् । 'विभाषा धेट्श्व्योः' २३७५ इति चङ्, इयङ्, अशिश्वियत् । 'ह्म्यन्त–' २२९९ इति न वृद्धिः, अश्वयीत् ।

---

वयो यः' इति निषेधारम्भान्न प्रवर्तते । तस्मात् ग्रहिज्यादिषु वयिग्रहणं स्पष्टार्थमेवेति बोध्यम् ॥ २४१४ **वश्चास्य—** । **अस्ये**त्यनेन 'वयो यः' इति परामृश्यते, तदाह—**वयो यस्येति** । 'वो वा किति' इत्येव सुवचम्, 'लिटि वयो यः' इति प्रकृतत्वात् ॥ 'उपदेशेऽत्वतः' इति निषेधमाशङ्क्याह—**वयस्तासावभावादिति** ॥ ननु स्थानिनस्तासौ विद्यमानत्वात् स्थानिवद्भावेन तासौ विद्यमानत्वं सुलभमिति चेत् । **अत्राहुः**—शास्त्रीयकार्ये हि स्थानिवद्भावो न तु लौकिके । 'अचस्तास्वत्' इति निषेधस्य शास्त्रीयत्वेऽपि सोऽत्र नातिदिश्यते, अच इत्युक्तेरल्विधित्वादिति ॥ २४१५ **वेञः** । लिटि किम् ? उतम् । उतवान् ॥ २४१६ **न व्यो लिटि** । लिटि किम् ? व्याता । व्यास्यति ॥—**हलादिःशेषं बाधित्वेति** । हलादिःशेषे तु वस्य संप्रसारणं स्यादिति भावः ॥ अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेड् भवतीत्याशङ्कायामाह—**नित्यमिडिति** । **वीयादिति** । संप्रसारणे 'अकृत्सार्व–' इति दीर्घः । **ह्वेञ्** । शब्द इति सामान्योक्तावपि आकारणरूपशब्द एवात्र गृह्यत इत्याहुः । तथा च माघे—'यान्तोऽन्यतः प्लुतकृतस्वरमाशु दूरादुद्बाहुना जुहुविरे मुहुरात्मवर्ग्याः' इति कर्मणि प्रयोगः ॥ २४१७ 'ह्वः संप्रसारणमभ्यस्तस्य च' इति सूत्रं योगविभागेन व्याचष्टे—**अभ्यस्तस्य चेति** । पूर्वयोगस्तु 'णौ च संश्चङोः' विषये प्रवर्तते । जुहावयिषति । अजूहवत् ॥—**अभ्यस्तीभविष्यतो ह्वेञ इति** । अभ्यस्तनिमित्ते प्रत्यये परे द्विर्वचनात्प्रागेव ह्वेञः संप्रसारणमिति फलितोऽर्थः । अभ्यस्तमस्यास्तीति–अभ्यस्तः=सनादिस्तस्य यो ह्वेञ् तत्प्रकृतिभूतस्तस्येत्यादिव्याख्यानस्य स्वीकारात् । तेन जिह्वायकीयिषतीत्यत्र ह्वेञः संप्रसारणं न भवति, ण्वुलो द्वित्वनिमित्तत्वाभावात् । अत एव णिचो द्वित्वनिमित्तत्वं नेति 'ह्वः संप्रसारणम्' इति योगविभागः क्रियते । एतच्च आकरे स्पष्टम् ॥ २४१८ **लिपिसिचि—**। लिप उपदेहे । षिच क्षरणे । अलिपत् । असिचत् ॥ २४१९ **अच्छ वदतीति** । अच्छेत्यस्य वदयोगे गतित्वाद्धातोः प्रागेव प्रयोगः ॥ २४२० **विभाषा श्वेः** ।—**लिटि यङि चेति** । 'लिड्यङोश्च' इति पूर्वसूत्रमिहानुवर्तत इति भावः । उभयत्रविभाषेयम्, लिडंशे अतुसादौ नित्यं प्राप्तेर्णलादावप्राप्तेः । यङंशे त्वप्राप्ते विभाषा । शोशूयते । शेश्वीयते ॥—**संप्रसारणं नेति** । अन्यथा शुश्वायेत्यादि स्यादिति भावः ॥ २४२१ **श्वयतेरः** । अलोऽन्त्यपरिभाषालभ्यमाह—**इकारस्येति**—॥ **पररूपमिति** । अतो लोपस्तु न भवति, आर्धधातुकोपदेशे यदकारान्तमिति व्याख्यातत्वात् ॥—**इयङिति** । लघूपधगुणापेक्षयाऽन्तरङ्गत्वादिति भावः ॥—**अश्वयीदिति** । नन्विहान्तरङ्गत्वाद्गुणायादेशयोः कृतयोर्यान्तत्वादेव वृद्धिनिषेधो भवेदिति किमनेन णिश्विग्रहणेनेति चेत् । **अत्राहुः**—न सिच्यन्तरङ्गमस्तीति ज्ञापनार्थं णिश्विग्रहणम् । तेन चिरिणोति-

वृत् । यजादयो वृत्ताः । भ्वादिस्त्वाकृतिगणः । तेन चुलुम्पतीत्यादिसंग्रहः ॥ **इति तिङन्ते भ्वादयः ॥**

२४२२ । **ऋतेरीयङ्** ।३।१।२९। १०८० ऋतिः सौत्रः तस्मादीयङ् स्यात्स्वार्थे । जुगुप्सायामयं धातुः' इति बहवः । 'कृपायां च' इत्येके । 'सनाद्यन्ता–' २३४ इति धातुत्वम् । ऋतीयते । ऋतीयांचक्रे । आर्धधातुकविवक्षायां तु 'आयादय आर्धधातुके वा' २३०५ इतीयङभावे 'शेषात्कर्तरि–' २२५९ इति परस्मैपदम्, आनर्त । अर्तिष्यति । आर्तीत् ।

---

## अथ तिङन्ते अदादयः ।

१०८१ अद् भक्षणे । द्वौ परस्मैपदिनौ ।

२४२३ । **अदिप्रभृतिभ्यः शपः** ।२।४।७२। लुक् स्यात् । अत्ति । अत्तः । अदन्ति ।

२४२४ । **लिट्यन्यतरस्याम्** ।२।४।४०। अदो घस्लृ वा स्याल्लिटि । जघास । 'गमहन–' २३६३ इत्युपधालोपः । तस्य चर्विधिं प्रति स्थानिवद्भावनिषेधाद्घस्य चर्त्वम्, 'शासिवसि–' २४१० इति षत्वम्, जक्षतुः । जक्षुः । घसस्तासावभावात्थलि नित्यमिट्, जघसिथ । आद । आदतुः । 'इडत्यर्ति–' २३८४ इति नित्यमिट्, आदिथ । अत्ता । अत्स्यति ।

२४२५ । **हुझल्भ्यो हेर्धिः** ।६।४।१०१। होर्झलन्तेभ्यश्च हेर्धिः स्यात् । अद्धि । अत्तात् । अदानि ।

२४२६ । **अदः सर्वेषाम्** ।७।३।१००। अदः परस्यापृक्तसार्वधातुकस्य अडागमः स्यात्सर्वमतेन । आदत् । आत्ताम् । आदन् । आदः । आत्तम् । आत्त । आदम् । आद्व । आद्म । अद्यात् । अद्याताम् । अद्युः । अद्यास्ताम् । अद्यासुः ।

२४२७ । **लुङ्सनोर्घस्लृ** ।२।४।३७। अदो घस्लृ स्यात् लुङि सनि च । लृदित्वादङ्, अघसत् । १०८२ हन हिंसागत्योः । प्रणिहन्ति ।

२४२८ । **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** ।६।४।३७। 'अनुनासिक–' इति लुप्तषष्ठीकं पदं वनतीतरेषां विशेषणम् । अनुनासिकान्तानामेषां वनतेश्च लोपः स्याज्झलादौ क्ङिति परे । यमि रमि नमि गमि हनि मन्यतयोऽनुदात्तोपदेशाः । तनु षणु क्षणु क्षिणु ऋणु तृणु घृणु वनु मनु तनोत्यादयः । हतः । घ्नन्ति ।

२४२९ । **वमोर्वा** ।८।४।२३। उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य णो वा स्याद्वमयोः परयोः । प्रहण्मि–प्रहन्मि । प्रहण्वः–प्रहन्वः । 'हो हन्तेः–' ३५८ इति कुत्वम्, जघान । जघ्नतुः । जघ्नुः ।

२४३० । **अभ्यासाच्च** ।७।३।५५। अभ्यासात्परस्य

---

जिरिणोत्योर्यङ्लुगन्तानां चिनीप्रभृतीनां च सिचि बहिरङ्गा वृद्धिरेव भवति । अचिरायीत् । अजिरायीत् । अचेचायीत् । अनेनायीत् इति ॥—**तेनेति** । उक्तं च वार्तिककृता—'कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थम्' इति ॥—**चुलुम्पतीति** । लुम्पतीत्यर्थः । 'चुलुम्प लोपे' इति कविकल्पद्रुमे उक्तत्वात् ॥ **इति भ्वादयः ॥**

**२४२२ ऋतेरीयङ्** । तान्तोऽयं धातुरिकानिर्दिष्टो न लिकारान्तः, 'वञ्चिलुञ्च्यृतश्च' इति निर्देशात् । केचित्तु ईयङ् इति दीर्घोच्चारणात्तान्तोऽयमिति ज्ञाप्यते । इदन्तत्वे हि सवर्णदीर्घेणैव सिद्धेरियङमेव कुर्यादित्याहुस्तच्चिन्त्यम् । इदन्तत्वे तु 'एरनेकाच–' इति यणा सवर्णदीर्घस्य बाधात् । न च ऋतेर्यङ्विधौ 'अकृत्सार्व–' इति दीर्घोपपत्तेरीयङ्विधानं तान्तत्वे लिङ्गं भवत्येवेति वाच्यम् । यङ्विधौ 'सन्यङोः' इति द्वित्वापत्तेः ॥—**कृपायां चेति** । 'अर्तनं च ऋतीया च घृणीया च घृणार्थकाः' इति, 'जुगुप्सा करुणा घृणा' इति चामरः ॥ **२४२५ हुझल्भ्यो हेर्धिः** । जुहुधि । 'घसिभसोर्हलि' इत्यतो हलीत्यनुवर्त्य हलादेरिति व्याख्यानात् । रुदिहि स्वपिहि इत्यादाविडादेर्हेर्धिर्न भवति, अत्तादित्यत्र तु धित्वात्परत्वात्तातङि कृते स्थानिवद्भावेन पुनर्धित्वं तु 'सकृद्गतौ' इति न्यायान्नेत्याहुः । अन्ये तु 'हेर्धिः' इत्यत्र स्थान्यादेशयोर्द्वयोरपीकार उच्चारणार्थ इति हकारस्य धकार आदेशः । तेन हलीत्यनुवृत्तिर्न कर्तव्या, नापि तातङो धित्वप्रसङ्ग इति सकृद्गतिन्यायाश्रयणमपि मास्त्वित्याहुः ॥ **२४२६ अदः सर्वेषाम्** । 'अड्गार्ग्यगालवयोः' इत्यतः अडित्यनुवर्तते । गार्ग्यगालवयोरित्यस्य त्वनुवृत्तिशङ्कां निवारयितुं सर्वेषां ग्रहणम् ॥ **२४२७ लुङ्सनोः**—। जिघत्सति ॥—**प्रणिहन्तीति** । 'नेर्गद–' इति णत्वम् ॥ **२४२८ अनुदात्तोपदेश**—यद्यत्र एतेषामनुनासिकस्य लोप इति व्याख्यायेत तदा मन्यतेर्नम्नहमिहमुच्मस्जादीनां चानन्त्यस्यापि लोपः स्यात्, तथा च मतः नतः नद्धः मीढः मुक्तः मग्न इत्यादि न सिध्येत्, अत आह—**लुप्तषष्ठीकमिति** ॥ **वनतीतरेषामिति** । वनतेरव्यभिचाराद्विशेषणं व्यर्थमिति भावः । वतिः । इह क्तिनि 'तितुत्रतथ–' इतीण्निषेधाज्झलि क्ङिति नलोपः ॥–**लोपः स्यादिति** । 'अलोऽन्त्यस्य' इत्यन्त्यस्येति भावः । अनुनासिकान्तानुदात्तोपदेशान्दर्शयति–**यमिरमीति** ॥ तनोत्यादीनप्यनुनासिकान्तान्दर्शयति—**तनुषणुक्षणुक्षिण्विति** । करोतिवर्जितास्तनोत्यादयो नव, तन्मध्ये सनोतेः 'जनसनखनाम्–' इत्यात्वं वक्ष्यतीति न स परिगणितः । 'ततः क्षतः क्षितः' इत्यादीन्युदाहरणानि । तनोत्यादीनामुदित्त्वात् क्त्वायामिड्विकल्पनान्निष्ठायां नेट् । अनुनासिकान्तानामिति किम् ? शक्त । रुद्धः । झलीति किम् ? गम्यते । नम्यते । क्ङितीति किम् ? गन्ता । मन्ता ॥ **२४२९ जघान । जघ्नतुरिति** । यद्यप्यत्र 'अभ्यासाच्च' इत्यस्यापि प्रवृत्तिरस्ति तथाप्यन्त-

हन्तेर्हस्य कुत्वं स्यात् । जघनिथ-जघन्थ । हन्ता । 'ऋद्धनोः-' २३६६ इतीट्, हनिष्यति । हन्तु । हतात् । घ्नन्तु ।

२४३१ । **हन्तेर्जः** ।६।४।३६। हौ परे । आभीयतया जस्यासिद्धत्वाद्धेर्न लुक्, जहि । हनानि । हनाव । हनाम । अहन् । अहताम् । अघ्नन् । अहनम् ।

२४३२ । **आर्धधातुके** ।२।४।३५। इत्यधिकृत्य ।

२४३३ । **हनो वध लिङि** ।२।४।४२।

२४३४ । **लुङि च** ।२।४।४३। वधादेशोऽदन्तः । 'आर्धधातुके' इति विषयसप्तमी । तेनार्धधातुकोपदेशे अकारान्तत्वात् 'अतो लोपः' २३०८, वध्यात् । वध्यास्ताम् । आर्धधातुके किम् । विध्यादौ-हन्यात् । 'हन्तेः' ३५९ इति णत्वम्, प्रहण्यात् । अल्लोपस्य स्थानिवत्त्वात् 'अतो हलादेः-' २२८४ इति न वृद्धिः, अवधीत् ।

**अथ चत्वारः स्वरितेतः** ॥ १०८३ **द्विष** अप्रीतौ । द्वेष्टि । द्विष्टे । द्वेष्टा । द्वेक्ष्यति । द्वेक्ष्यते । द्वेष्टु । द्विष्टात् । द्विड्ढि । द्वेषाणि । द्वेषै । द्वेषावहै । अद्वेट् ।

२४३५ । **द्विषश्च** ।३।४।११२। लङो झेर्जुस्वा स्यात् । अद्विषुः । अद्विषन् । अद्वेषम् । द्विष्यात् । द्विषीत । द्विक्षीष्ट । अद्विक्षत् । १०८४ **दुह** प्रपूरणे । दोग्धि । दुग्धः । धोक्षि । दुग्धे । धुक्षे । धुग्ध्वे । दोग्धु । दुग्धि । दोहानि । धुक्ष्व । धुग्ध्वम् । दोहै । अधोक् । अदोहम् । अदुग्ध । अधुग्ध्वम् । अधुक्षत् । अधुक्षत । 'लुग्वा दुह-' २३६५ इति लुक्पक्षे तथास्ध्वम्वहिषु लङ्वदपि । १०८५ **दिह** उपचये । प्रणिदेग्धि । १०८६ **लिह** आस्वादने । लेढि । लीढः । लिहन्ति । लेक्षि । लीढे । लिक्षे । लीढ्वे । लेढु । लीढि । लेहानि । अलेट् । अलिक्षत् । अलिक्षत । अलीढ । अलिक्षावहि । अलिह्वहि । १०८७ **चक्षिङ्** व्यक्तायां वाचि । अयं दर्शनेऽपि । इकारोऽनुदात्तो युजर्थः । 'विचक्षणः प्रथयन्' । नुम् तु न, अन्तेदित इति व्याख्यानात् । ङकारस्तु (१) 'अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यम्' इति ज्ञापनार्थः । तेन 'स्फायन्निर्मोकसन्धि-' इत्यादि सिध्यति । चष्टे । चक्षाते । 'आर्धधातुके' २३७७ इत्यधिकृत्य,

२४३६ । **चक्षिङः ख्याञ्** ।२।४।५४।

२४३७ । **वा लिटि** ।२।४।५५। अत्र भाष्ये ख्शादिरयमादेशः । असिद्धकाण्डे ॐ **'शस्य यो वा'** इति स्थितम् । ञित्त्वात्पदद्वयम् । चख्यौ । चख्ये । चक्शौ । चक्शे । ॐ **'चयो द्वितीया'**—इति तु न, चर्त्वस्यासिद्धत्वात् । चचक्षे । ख्याता । क्शाता । ख्यास्यति । ख्यास्यते । क्शास्यति । क्शास्यते । अचष्ट । चक्षीत । ख्यायात् । ख्येयात् । क्शायात् । क्शेयात् ।

२४३८ । **अस्यतिवक्तिख्यातिभ्योऽङ्** ।३।१।५२। एभ्यश्च्लेरङ् । अख्यत् । अख्यत । अक्शासीत् । अक्शास्त ॥ ॐ **वर्जने ख्शाञ् नेष्टः** ॥ समचक्षिष्ट । इत्यादि ।

**अथ पृच्यन्ता अनुदात्तेतः** ॥ १०८८ **ईर** गतौ कम्पने च । ईर्ते । ईरांचक्रे । ईरिता । ईर्ताम् । ईर्ष्व । ईर्ध्वम् । ऐरिष्ट । १०८९ **ईड** स्तुतौ । ईट्टे ।

२४३९ । **ईशः से** ।७।२।७७।

२४४० । **ईडजनोर्ध्वे च** ।७।२।७८ ईशीड्जनां

---

रङ्गत्वात् 'हो हन्तेः-' इत्युपन्यस्तम् ॥ २३३१ **आभीयतयेति** । सन्निपातपरिभाषयाऽपि हेर्लुक् नेति वक्तुं शक्यमिति केचित् । तन्मन्दम् । 'अतो हेः' इत्यारम्भसामर्थ्यात्तस्या अप्रवृत्तेरिति नव्याः ॥ २४३४ **वधादेशोऽदन्त इति** । तेन आदेशोपदेशेऽनेकाच्त्वात् 'अवधीत्' इत्यत्र 'एकाचः-' इतीण्निषेधाप्रवृत्ताविडादौ सिचि 'अतो हलादेः-' इति प्राप्ता वृद्धिरल्लोपस्य स्थानिवत्त्वान्नेति भावः । **दुह** प्रपूरणे । प्रपूरणं प्याजनम् ॥ २४३५ **लङ्वदपीति** । अदुग्ध । अदुग्धाः । अधुग्ध्वम् । अदुह्वहि ॥—**दिह** । उपचयो वृद्धिः ॥—**प्रणिदेग्धीति** । 'नेर्गद-' इति णत्वम् ॥—**अलिक्षतेति** । 'शल इगुपधा-' इति क्सः । अलिक्षाताम् । अलिक्षन्त ॥—**अलीढेति** । 'लुग्वा दुह-' इति वा लुक् । अलीढाः । अलीढ्वम् ॥—**चक्षिङ्** ॥—**दर्शनेऽपीति** । 'विश्वा रूपा अभिचष्टे शचीभिः' इत्यत्र दर्शनार्थत्वेन व्याख्यातत्वादिति भावः ॥—**युजर्थ इति** । 'अनुदात्तेतश्च हलादेः' इति युच् ॥—**अन्तेदित इति** । 'इदितः-' इति नुम्विधौ 'गोः पादान्त' इत्यस्मात् 'अन्ते' इत्यनुवर्तत इति भावः । एवं च नुमागमशङ्काऽनुत्थानाय चक्षिङ इकारस्थानेऽकार एवासक्तुमुचितः । 'अनुदात्तत्वेनैव तङि सिद्धे ङकारो व्यर्थः' इत्याशङ्क्याह—**ङकारस्त्विति** ॥—**स्फायन्निति** । स्फायी वृद्धावित्यनुदात्तेतो लटः शत्रादेशः ॥—**चष्टे इति** । 'स्कोः-' इति कलोपः । ष्टुत्वम् ॥ २४३७ **ख्शादिरिति** । तेन पुंख्यानमित्यत्र 'पुमः खय्यम्परे' इति रुत्वं नेत्यादि पूर्वार्धे एवोक्तम् ॥—**असिद्धकाण्ड इति** । णत्वप्रकरणानन्तरमिति शेषः । तेन पर्याख्यानमित्यत्र शकारेण व्यवधानात् 'कृत्यचः' इति णत्वं न । तथा सुप्रख्येन निर्वृत्तं सौप्रख्यं तत्र भवः सौप्रख्यीयः । यत्वस्यासिद्धत्वात् 'धन्वयोपधात्-' इति वुञ् न । किं तु छ एवेति बोध्यम् ॥—**अचष्टेति** । 'स्कोः-' इति कलोपः । ष्टुत्वम् ॥ 'अस्यतिवक्तिख्याति-' इत्यत्र विधिसामर्थ्याद्यत्वं नासिद्धम्, स्वतन्त्रस्य ख्याधातोः सार्वधातुकमात्रविषयतया वक्ष्यमाणत्वात् । अस्यतेः पुषादिपाठादङि सिद्धे तदर्थं ग्रहणमित्यादि पुषादिषु वक्ष्यति ॥ २४३८ **वक्तीति** । 'ब्रुवो वचिः' 'वच परिभाषणे' इति उभयोर्ग्रहणम् । **ईर** । ईरिता । ईरिष्यते । लङि-ऐर्त । ऐराताम् । ऐरत । ऐरि । ऐर्वहि । ऐर्महि ॥ २४३९ **ईशः से** । यथाश्रुत-

---

१ **ज्ञापनार्थ इति**— इदं च माधवमतानुरोधेन । परे तु ज्ञापकत्वं भाष्यानुक्तम्, स्फायन्नित्यादि तु असाध्वेवेति वदन्ति ।

'से' 'ध्वे' शब्दयोः सार्वधातुकयोरिट् स्यात् । योगविभागो वैचित्र्यार्थः । ईडिषे । ईडिध्वे । एकदेशविकृत-स्यानन्यत्वात्–ईडिष्व । ईडिध्वम् । विकृतिग्रहणेन प्रकृतेरग्रहणात्–ऐड्ढ्वम् । १०९० **ईश** ऐश्वर्ये । ईष्टे । ईशिषे । ईशिध्वे । १०९१ **आस** उपवेशने । आस्ते । 'दयायासश्च' १३२३, आसांचक्रे । आस्स्व । आध्वम् । आसिष्ट । १०९२ **आङः शासु** इच्छायाम् । आशास्ते । आशासाते । आङ्पूर्वत्वं प्रायिकम् । तेन 'नमोवाकं प्रशास्महे' इति सिद्धम् । १०९३ **वस** आच्छादने । वस्ते । वस्से । वध्वे । ववसे । वसिता । १०९४ **कसि** गतिशासनयोः । कंस्ते । कंसाते । कंसते । अयं १०९५ अनिदिदित्येके । कस्ते । १०९६ तालव्यान्तोऽप्यनिदित् । कष्टे । कशाते । कक्षे । कड्ढ्वे । १०९७ **णिसि** चुम्बने । निंस्ते । दन्त्यान्तोऽयम् । आभरणकारस्तु 'तालव्यान्तः' इति बभ्राम । १०९८ **णिजि** शुद्धौ । निङ्क्ते । निङ्क्षे । निञ्जिता । १०९९ **शिजि** अव्यक्ते शब्दे । शिङ्क्ते । ११०० **पिजि** वर्णे । 'संपर्चने' इत्येके । 'उभयत्र' इत्यन्ये । 'अवयवे' इत्यपरे । 'अव्यक्ते शब्दे' इतीतरे । पिङ्क्ते । ११०१ **पृजि** इत्येके । पृङ्क्ते । ११०२ **वृजी** वर्जने । दन्त्योष्ठ्यादिः । ईदित् । वृक्ते । वृजाते । वृक्षे । ११०३ इदित् इत्यन्ये । वृङ्क्ते । ११०४ **पृची** संपर्चने । पृक्ते । ११०५ **षूङ्** प्राणिगर्भविमोचने । सूते । सुषुवे । सुषुविषे । सोता–सविता । 'भूसुवोः–' २२२४ इति गुणनिषेधः, सुवै । सविषीष्ट । सोषीष्ट । असविष्ट–असोष्ट । ११०६ **शीङ्** स्वप्ने ।

२४४१ । **शीङः सार्वधातुके गुणः** ।७।४।२१। 'क्ङिति च–' २२१७ इत्यस्यापवादः । शेते । शयाते ।

२४४२ । **शीङो रुट्** ।७।१।६। शीङः परस्य झादेशस्यातो रुडागमः स्यात् । शेरते । शेषे । शेध्वे । शये । शेवहे । शिश्ये । शयिता । अशयिष्ट ।

**अथ स्तौत्यन्ताः परस्मैपदिनः । ऊर्णुस्तूभयपदी ।**

११०७ **यु** मिश्रणेऽमिश्रणे च ।

२४४३ । **उतो वृद्धिर्लुकि हलि** ।७।३।८९। लुग्विषये उकारस्य वृद्धिः स्यात्पिति हलादौ सार्वधातुके, न त्वभ्यस्तस्य । यौति । युतः । युवन्ति । युयाव । यविता । युयात् । इह 'उतो वृद्धिः–' २४४३ न, भाष्ये 'पिच्च ङिन्न, ङिच्च पिन्न' इति व्याख्यानात्, विशेषविहितेन ङित्त्वेन पित्त्वस्य बाधात् । यूयात् । अयावीत् । ११०८ **रु** शब्दे ।

२४४४ । **तुरुस्तुशम्यमः सार्वधातुके** ।७।३।९५। एभ्यः परस्य सार्वधातुकस्य हलादेस्तिङ ईड्वा स्यात् । 'नाभ्यस्तस्य–' २५०३ इत्यतोऽनुवृत्तिसंभवे पुनः सार्वधातुकग्रहणमपिदर्थम् । रवीति–रौति । रुवीतः–रुतः । हलादेः किम् । रुवन्ति । तिङः किम् । शाम्यति ।

---

सूत्रन्यासे ईशो ध्वे शब्दे परे ईशिध्वे ईशिध्वमिति न सिध्येदत आह—**ईशीड्जनामिति** ॥—**वैचित्र्यार्थ इति** । 'ध्वे' इत्यस्य पूर्वत्रापकर्षः । 'से' इत्यस्योत्तरत्रानुवृत्तिरित्येवं विचित्रबोधार्थ इत्यर्थः । इह काशिकादौ जनेरुदाहरणमुक्तम् । तथा हि—'जनी प्रादुर्भावे' इत्यस्मात् श्यनश्छान्दसो लुक् उपधालोपाभावश्च । जनिषे । जनिध्वे । जनिष्व । जनिध्वम् । 'जन जनने' इति श्लुविकरणस्याप्युपधालोपे–व्यतिजज्ञिषे, व्यतिजज्ञिध्वे, 'कर्तरि कर्मव्यतिहारे' इति तङ् ॥—**नमोवाकमिति** । 'नमस्ते रुद्र मन्यवे' इत्यादि नमोवचनम् । वचेर्घञ् । 'चजोः' इति कुत्वम् ॥—**ववसे इति** । वादित्वादेत्वाभ्यासलोपौ न । **णिसि** चुम्बने ॥—**बभ्रामेति** । 'नुम् विसर्जनीय–' इति सूत्रे वृत्तिपदमञ्जर्यादिभिरुक्तं–'नुमादिभिः प्रत्येकं व्यवाये षत्वमिष्यते, तेन निंस्से निंस्स्वे इत्यत्र न भवति' इति । तच्चास्य सान्तत्वे युज्यते । शान्तत्वे तु 'व्रश्च–' इति षत्वे 'षढोः–' इति कत्वे कवर्गात्परत्वेन षत्वं दुर्वारमिति प्रत्युदाहरणमिदं न संगच्छत इति भावः । **णिजि** शुद्धौ । अनिट्केषु णिजिरिति जौहोत्यादिकस्य ग्रहणादयं सेडिति ध्वनयति—**निञ्जितेति** ।—**शिजि** अव्यक्ते शब्दे । क्तप्रत्यये–शिञ्जितम् । आवश्यकेणिन्यन्तान्ङीपि–शिञ्जिनी । 'भूषणानां तु शिञ्जितम्', 'मौर्वी ज्या शिञ्जिनी गुणः' इति चामरः ॥—**सुषुविषे इति** । 'स्वरतिसूति–' इति विकल्पं बाधित्वा 'श्र्युकः किति–' इति निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । **शीङ्** स्वप्ने ॥ **२४४१ क्ङिति चेत्यस्येति** । अन्यत्र 'सार्वधातुकार्धधातुकयोः' इत्यनेन सिद्ध इति भावः ॥ **२४४२ शीङो रुट्** । 'झोऽन्तः' इत्यतो झ इत्यनुवर्तते । 'अदभ्यस्तात्' इत्यतोऽदिति च । तथा चेष्टानुरोधेनादिति प्रथमान्तस्य षष्ठ्यन्तत्वमाश्रित्य व्याचष्टे—**झादेशस्यात इति** । झस्यैव रुडागमे तु अदादेशो दुर्लभ इति अदित्यस्याप्यनुवृत्तिः कृता ॥—**शिश्ये इति** । 'एरनेकाचः' इति यण् । शेताम् । शयाताम् । शेरताम् । शेष्व । शयाथाम् । शेध्वम् ॥ **२४४३ उतो वृद्धिः**—। 'नाभ्यस्तस्याचि पिति–' इत्यतो निषेधानुवृत्तेराह—**न त्वभ्यस्तस्येति** । उतः किम् ? एति । एषि । लुकीति किम् ? सुनोति । जुहोति । हलि किम् ? यवानि । यवाव । 'आडुत्तमस्य–' इत्याडागमः पित् । पिति किम् ? युतः । रुतः । 'नाभ्यस्तस्य' इति किम् ? योयोति । रोरोति । सार्वधातुके किम् ? यूयात् । न चात्र ङिच्च पिन्नेति व्याख्यानान्निर्वाहः शङ्क्यः, 'किदाशिषि' इति यासुटः कित्त्वात् । केचित्तु युयात् स्तुयात् इत्यादावपि ङिच्च पिन्नेत्येतदनाश्रित्य व्याचक्षते—संज्ञापूर्वकविधेरनित्यत्वाद्वृद्धिर्न भवति । अन्यथा 'उत औत्' इत्येव वदेदिति ॥ **२४४४ तुरुस्तु**—। तुः सौत्रो धातुरिति वक्ष्यति ॥—**अपिदर्थमिति** । एभ्यः परस्य पितः सार्वधातुकस्येति प्राचो व्याख्यानं प्रामादिकं, रुवीतः स्तुवीतः इत्याद्यसिद्ध्यापत्तेरिति भावः । शम्यमोरुदाहरणं तु–शमीध्वम् । अभ्यमीति । अभ्यन्ति । शम्यमोश्छन्दसि विकरणस्य लुकि सति झलादिसार्वधातुकमनन्तरं संभवतीति काशिकायामुक्तम् । आपिशलास्तु 'तुरुस्तुशम्यमः सार्वधातुके छन्दसि' इति पठन्ति । तन्मते सूत्रमिदं छन्द-

सार्वधातुके किम् । आशिषि–रूयात् । विध्यादौ तु–रुयात्, रुवीयात् । अरावीत् । अरविष्यत् । ११०९ तु इति सौत्रो धातुर्गतिवृद्धिहिंसासु । 'अयं च लुग्विकरणः' इति स्मरन्ति[1] । तवीति, तौति । तुवीतः, तुतः । तोता । तोष्यति । १११० णु स्तुतौ । नौति । नविता । ११११ टुक्षु शब्दे । क्षौति । क्षविता । १११२ क्ष्णु तेजने क्ष्णौति । क्ष्णविता । १११३ ष्णु प्रस्रवणे । स्नौति । सुष्णाव । स्नविता । स्नुयात् । स्नूयात् । १११४ ऊर्णुञ् आच्छादने ।

२४४५ । ऊर्णोतेर्विभाषा ।७।३।९०। वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके । ऊर्णौति, ऊर्णोति । ऊर्णुतः । ऊर्णुवन्ति । ऊर्णुते । ऊर्णुवाते । ऊर्णुवते ॥ ॐ ऊर्णोतेराम्नेति वाच्यम् ।

२४४६ । न न्द्राः संयोगादयः ।६।१।३। अचः पराः संयोगादयो नदरा द्विर्न भवन्ति । नुशब्दस्य[2] द्वित्वम्, णत्वस्यासिद्धत्वात् । (प) 'पूर्वत्रासिद्धीयमद्विर्वचने' इति त्वनित्यम्, 'उभौ साभ्यासस्य' २६०६ इति लिङ्गात् । ऊर्णुनाव । ऊर्णुनुवतुः । ऊर्णुनुवुः ।

२४४७ । विभाषोर्णोः ।१।२।३। इडादिप्रत्ययो वा ङित्स्यात् । ऊर्णुनुविथ, ऊर्णुनविथ । ऊर्णुविता, ऊर्णविता । ऊर्णौतु, ऊर्णोतु । ऊर्णवानि । ऊर्णवै ।

२४४८ । गुणोऽपृक्ते ।७।३।९१। ऊर्णोतेर्गुणः स्यादपृक्ते हलादौ पिति सार्वधातुके । वृद्ध्यपवादः । और्णोत् । और्णोः । ऊर्णुयात् । ऊर्णुयाः । इह वृद्धिर्न, 'ङिच्च पिन्न' इति भाष्यात् । ऊर्णूयात् । ऊर्णविषीष्ट, ऊर्णुविषीष्ट । और्णुवीत् । और्णुविष्टाम् ।

२४४९ । ऊर्णोतेर्विभाषा ।७।२।६। इडादौ सिचि परस्मैपदे परे वा वृद्धिः स्यात् । पक्षे गुणः । और्णावीत् । और्णाविष्टाम् । और्णाविषुः । और्णवीत् । १११५ द्यु अभिगमने । द्यौति । द्योता । १११६ षु प्रसवैश्वर्ययोः । प्रसवोऽभ्यनुज्ञानम् । सोता । असौषीत् । १११७ कु शब्दे । कोता । १११८ ष्टुञ् स्तुतौ । स्तौति, स्तवीति । स्तुतः, स्तुवीतः । स्तुते, स्तुवीते । 'स्तुसुधूञ्भ्यः–' २३८५ इतीट्, अस्तावीत् । 'प्राक्सितात्–' २२७६ इति षत्वम्, अभ्यष्टौत् । 'सिवादीनां वा' २३५९, पर्यष्टौत्–पर्यस्तौत् । १११९ ब्रूञ् व्यक्तायां वाचि ।

२४५० । ब्रुवः पञ्चानामादित आहो ब्रुवः ।३।४।८४। ब्रुवो लटः परस्मैपदानामादितः पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः । अकार उच्चारणार्थः । आह । आहतुः । आहुः ।

---

स्यैव ॥ **२४४५ ऊर्णोतेर्विभाषा** । 'उतो वृद्धिः' इति नित्ये प्राप्ते विभाषेयम् । हलादौ किम् ? ऊर्णवानि । पिति किम् ? ऊर्णुतः । सार्वधातुके किम् ? ऊर्णूयात् ॥—**ऊर्णोतेराम्नेति** । 'ऊर्णोतेर्णुवद्भावो वाच्यः' इति वक्ष्यमाणस्य आमभावोऽपि फलमिति भावः ॥ **२४४६ न न्द्राः**—। अजादेरिति वर्तते । स च कर्मधारयः । आदिग्रहणस्य तु प्रकृतेऽनुपयोगस्तदेतदाह—**अचः परा इति** । उन्दिदिषति । इन्दिदिषति । अड्डिडिषति । अर्चिचिषति । 'न न्द्राः' इति किम् ? ईक्षतेः सनि–ईचिक्षिषते । संयोगादयः किम् ? प्राणिणिषति । अरिरिषति । अचः पराः किम् ? इन्द्रीयितुमिच्छतीति क्यजन्तात्सनि–इन्दिद्रीयिषति । इह नकारस्य द्वित्वाभावेऽपि दकारस्तु द्विरुच्यत एव, अचः परत्वाभावात् ॥—**नुशब्दस्येति** । उपदेशे नकार एव । णत्वं तु 'रषाभ्याम्–' इत्यनेनेति भावः ॥—**पूर्वत्रासिद्धीयमिति** । अत्र द्विर्वचनशब्देन षाष्ठमाष्टमिकं चोभयं गृह्यते । तत्र षाष्ठस्य ऊढिमाख्यत्–औडिढत् इत्युदाहरणम् । आष्टमिकस्य तु–द्रोग्धा–द्रोग्धा, द्रोढा–द्रोढा इति । इह त्रिपादीस्थं घत्वढत्वादिकं द्विर्वचने सिद्धमेव । असिद्धत्वे तु त्रिपादीस्थकार्यात्पूर्वमेव 'द्रोह् ता' इत्यस्य द्वित्वे पश्चात् 'वा द्रुह–' इह घत्वढत्वयोः प्रवृत्तौ 'द्रोग्धा द्रोढा' इत्यपि द्विर्वचने कदाचित्स्यात् न तु द्रोग्धा–द्रोग्धा इति समानजातीयस्यैव नियमेन द्विर्वचनं सिध्यति । किंच षट् सन्त इत्यत्र डस्य चर्त्वे टकारस्य द्वित्वं, 'पूर्वत्रासिद्धीयमद्वित्वे' इत्युक्तेरिति मनोरमादावुक्तम् । अत एव सुध्युपास्य इत्यत्र धस्य जश्त्वेन दकारे व्यक्तिभेदाद्दकारस्यापि द्वित्वं सुवचमेवेत्याहुः ॥—**अनित्यमिति** । अत एव हृतिशब्दस्य द्वित्वम्, औजिढदित्यपि नामधातुषु वक्ष्यति ॥—**उभौ साभ्यासस्येति** । 'अनितेः' इत्यनेन णत्वं कृत्वा द्विर्वचने कृते प्राणिणत्–प्राणिणिषतीति सिद्धमिति सूत्रमिदं ज्ञापकमित्यर्थः । एवं च प्रणिनायेत्यादौ द्वितीयस्य णत्वाभावः सिद्धः ॥ **२४४७ विभाषोर्णोः** । 'गाङ्कुटादिभ्यः' इत्यतो ङिदिति 'विज इट्' इत्यत इडिति चानुवर्तते इत्याशयेनाह—**इडादिप्रत्यय इत्यादि** । तेन गुणविकल्पे पक्षे उवङ् ॥ **२४४८ गुणोऽपृक्ते** । 'नाभ्यस्तस्याचि' इत्यतः पिति सार्वधातुके इति 'उतो वृद्धिर्लुकि हलि' इत्यतो हलीति चानुवर्तते तदाह—**हलादावित्यादि** ॥ **२४४९ ऊर्णोतेर्विभाषा** । 'सिचि वृद्धिः' इति सूत्रं 'नेटि' इत्यत्र इटीति चानुवर्तत इत्याशयेनाह—**इडादावित्यादि** ॥—**स्तवीतीति** । 'तुरुस्तुशम्यमः' इति ईड्वा । 'स्तुसुधूञ्भ्यः–' इत्यत्र परस्मैपदेष्वित्युक्तेः आत्मनेपदे तु नेट् । अस्तोष्ट । अस्तोषाताम् ॥ **२४५० ब्रुवः पञ्चानाम्**—। 'विदो लटो वा' इत्यतो 'लटो वा' इति वर्तते । ब्रुव इत्येतदादिमं पञ्चम्यन्तमन्तिमं तु षष्ठ्यन्तमित्याशयेनाह—**ब्रुवो लट**

---

१ **स्मरन्तीति**—अव्यवहिततिङि ईड्विधानमत्र बीजम् । विकरणव्यवधाने तन्न सिध्येत् । २ **नुशब्दस्येति**—णत्वस्यासिद्धतया नुबुद्ध्यैव द्वित्वकरणात् । यद्बुध्या शास्त्रप्रवृत्तिस्तदीयद्वितीयप्रयोगस्यैव साधुत्वान्वाख्यानान्नोत्तरखण्डे णश्रवणम्, पूर्वोच्चारणेन व्यवधानान्न शास्त्रेण तत्प्रसङ्ग इति भावः ।

२४५१ । **आहस्थः** ।८।२।३५। झलि परे । चर्त्वम्, आत्थ । आहथुः ।

२४५२ । **ब्रुव ईट्** ।७।३।९३। ब्रुवः परस्य हलादेः पित ईट् स्यात् । 'आत्थ' इत्यत्र स्थानिवद्भावात्प्राप्तोऽयं 'झलि' इति थत्वविधानान्न भवति । ब्रवीति । ब्रूतः । ब्रूते । ब्रुवन्ति । आर्धधातुकाधिकारे—

२४५३ । **ब्रुवो वचिः** ।२।४।५३। उवाच । ऊचतुः । ऊचुः । उवचिथ, उवक्थ । ऊचे । वक्ता । ब्रवीतु–ब्रूतात्, 'ङिच्च पिन्न' इत्यपित्त्वादीण्न । ब्रवाणि । ब्रवै । ब्रूयात् । उच्यात् । 'अस्यतिवक्ति–' २४३८ इत्यङ्,

२४५४ । **वच उम्** ।७।४।२०। अङि परे । अवोचत् । अवोचत ।

**अथ शास्यन्ताः परस्मैपदिनः** । इङ् त्वात्मनेपदी । ११२० इण् गतौ । एति । इतः ।

२४५५ । **इणो यण्** ।६।४।८१। अजादौ प्रत्यये परे । इयङोऽपवादः । यन्ति । इयाय ।

२४५६ । **दीर्घ इणः किति** ।७।४।६९। इणोऽभ्यासस्य दीर्घः स्यात्किति लिटि । ईयतुः । ईयुः । इययिथ–इयेथ । एता । इतात् । इहि । अयानि । ऐत् । ऐताम् । आयन्[1] । इयात् । ईयात् ।

२४५७ । **एतेर्लिङि** ।७।४।२४। उपसर्गात्परस्य इणोऽणो ह्रस्वः स्यादार्धधातुके किति लिङि । निरियात् । '**उभयत आश्रयणे नान्तादिवत्**–' अभीयात् । अणः किम् । समेयात् । 'समीयात्' इति प्रयोगस्तु भौवादिकस्य ।

२४५८ । **इणो गा लुङि** ।२।४।४५। 'गातिस्था–' २२२३ इति सिचो लुक् । अगात् । अगाताम् । अगुः । ११२१ इङ् अध्ययने । नित्यमधिपूर्वः । अधीते । अधीयाते । अधीयते ।

२४५९ । **गाङ् लिटि** ।२।४।४९। इङो गाङ् स्याल्लिटि, लावस्थायां विवक्षिते वा । अधिजगे । अधिजगाते । अधिजगिरे । अध्येता । अध्येष्यते । अध्ययै । गुणायादेशयोः कृतयोरुपसर्गस्य यण् । 'पूर्वं धातुरुपसर्गेण–' इति दर्शनेऽन्तरङ्गत्वाद्गुणात्पूर्वं सवर्णदीर्घः प्राप्तः, 'णेरध्ययने वृत्तम्' ३०३६ इति निर्देशान्न भवति । अध्यैत । परत्वादियङ्, तत आट्, वृद्धिः, अध्यैयाताम् । अध्यैयत । अध्यैयि । अध्यैवहि । अधीयीत । अधीयीयाताम् । अधीयीध्वम् । अधीयीय । अध्येषीष्ट ।

२४६० । **विभाषा लुङ्लृङोः** ।२।४।५०। इङो गाङ् वा स्यात् ।

---

इत्यादि॥ २४५१ **चर्त्वमिति** । प्रक्रियालाघवात् 'आहस्तः' इत्येव सुवचमित्याहुः ॥ २४५२ **ब्रुव ईट्** । हलादेः किम् ? ब्रवाणि । पितः किम् ? ब्रूतः ॥—**झलीति थत्वविधानादिति** । ईडागमे कृते झलादित्वाभावादिति भावः ॥ २४५४ **इण् गतौ** ॥ २२५५ **इयङोऽपवाद इति** । येन नाप्राप्तिन्यायेनेति भावः । गुणवृद्धी तु परत्वादस्य बाधिके । अयनम् । आयकः । २४५६ **दीर्घ इणः किति** । 'अत्र लोपोऽभ्यासस्य' इत्यतोऽभ्यासस्येत्यनुवर्तते । 'व्यथो लिटि' इत्यतो लिटीति च । किति किम् ? इयाय । अत्र वदन्ति—इह दीर्घे कृतेऽपि 'अभ्यासस्यासवर्णे' इतीयङा रूपसिद्धेः कितीति व्यर्थम् । न च दीर्घस्येयङि दीर्घविधानं व्यर्थमिति वाच्यम् । ईयतुः–ईयुरित्यत्र 'वार्णादाङ्गं बलीयः' इति यणि कृते दीर्घविधेरावश्यकत्वात् । किंच लिटीत्यनुवर्तनमपीह व्यर्थमेव, व्यावर्त्याभावादिति । एता । एष्यति । एतु । इतात् । इताम् । यन्तु । इहि । उत्तमे तु–अयानि । अयाव । अयाम । लङ्मध्यमे–ऐः । ऐतम् । ऐत । उत्तमे तु–आयम् । ऐव । ऐम ॥—**ईयादिति** । 'अकृत्सार्व–' इति दीर्घः ॥ २४५७ **एतेर्लिङि** । इहार्धधातुक इति स्वरूपकथनार्थं प्रक्षिप्तम्, किति लिङीत्येतावतैवेष्टसिद्धेः ॥—**उभयत आश्रयण इति** । अन्तादिशब्दाववयवविशेषवाचिनौ । तत्र यदि पूर्वस्यावयवबुद्ध्या एकादेश आश्रीयते तदा तस्यैव परस्य कथमादिवद्भावः स्यात् । एवं परस्यादिवत्त्वे पूर्वस्यान्तवद्भावो न स्यात्, एकस्योभयापेक्षया पारतन्त्र्यविरोधादिति भावः ॥ नन्वेवं रामौ इत्यस्य 'सुप्तिङन्तम्–' इति पदत्वं न स्यात्, परादित्वे 'राम' इति प्रकृतेरभावात् । 'यस्मात्प्रत्ययविधिस्तदादेस्तदन्तस्य ग्रहणम्' इति स्वीकारात् राम्–इत्यस्याप्रकृतित्वात् । पूर्वान्तत्वे तु परत्र प्रत्ययाभावात् । **अत्राहुः**—पूर्वं पदसंज्ञा पश्चादेकादेश इति नोक्तदोषः । इह च ज्ञापकं 'सुपिसूतिसमाः' इति । विध्यादौ समीयादिति न भवत्येव । आशीर्लिङि तु 'अकृत्सार्व–' इति दीर्घे कृते ह्रस्वेन भाव्यमित्याशङ्क्याह—**भौवादिकस्येति** । इटकिटकटीत्यत्र प्रश्लिष्टस्य इधातोराशीर्लिङि इदं रूपम् । वी गतीत्यत्र ईकारोऽपि धात्वन्तरं प्रश्लिष्यत इति मते तु विध्यादिलिङ्यपि भवत्येवेति बोध्यम् ॥ २४५९ **गाङ् लिटि** ।—**लावस्थायामिति** । वार्तिकमते तु एकादेशात्प्रागेव गाङादेशे 'द्विर्वचनेऽचि' इति सूत्रं न प्रवर्तते, द्वित्वनिमित्ताचोऽभावात् ॥—**विवक्षित इति** । भाष्यमते तु सुतरां न प्रवर्तते, अनैमित्तिकत्वादिति भावः ॥—**निर्देशान्न भवतीति** । 'वार्णादाङ्गं बलीयः' इति समाधानं तु न प्रवर्तते, व्याश्रयत्वादिति भावः ॥—**अध्यैयतेति** । 'आत्मनेपदेष्वनतः' इति झस्य अत् । लङ् मध्यमे तु–अध्यैथाः । अध्यैयाथाम् । अध्यै-

---

१ **आयन्निति**—यण आभीयासिद्धत्वादाट् । तदसिद्धत्वप्रत्याख्याने तु लावस्थायामडेव कर्तव्यः, 'आडजादीनाम्' इति च न कार्यम्, 'आटश्च' इति सूत्रमटश्चेति कार्यम्, तेन ऐज्यतेत्यादौ न दोषः, आयन्नित्यत्र चान्तरङ्गत्वाद्वृद्धावायादेशः, वृद्धौ कृतायामिणो यणिति तु न, तत्र एरित्यपकर्षणेनेकाररूपस्यैवेणो यणित्यर्थात् ।

२४६१ । **गाङ्कुटादिभ्योऽञ्णिन्ङित्** ।१।२।१। गाङादेशात्कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः ।

२४६२ । **घुमास्थागापाजहातिसां हलि** ।६।४।६६। एषामात ईत्स्याद्धलादौ क्ङित्यार्धधातुके । अध्यगीष्ट, अध्यैष्ट । अध्यगीष्यत, अध्यैष्यत । ११२२ **इक्** स्मरणे । अयमप्यधिपूर्वः, 'अधीगर्थदयेशाम्–' ६१४ इति लिङ्गात् । अन्यथा हि 'इगर्थ–' इत्येव ब्रूयात् । ॐ **इण्वदिक इति वक्तव्यम्** । अधियन्ति । अध्यगात् । केचित्तु आर्धधातुकाधिकारोक्तस्यैवातिदेशमाहुः । तन्मते यण्न । तथा च भट्टिः—'ससीतयो राघवयोरधीयन्' इति । ११२३ **वी** गतिव्याप्तिप्रजनकान्त्यसनखादनेषु । प्रजनं गर्भग्रहणम् । असनं क्षेपणम् । वेति । वीतः । वियन्ति । वेषि । वेमि । वीहि । अवेत् । अवीताम् । अवियन् । 'अडागमे सत्यनेकाच्त्वाद्यण्' इति केचित्, अव्यन् । अत्र ११२४ इकारोऽपि धात्वन्तरं प्रश्लिष्यते । एति । ईतः । इयन्ति । ईयात् । ऐषीत् । ११२५ **या** प्रापणे । प्रापणमिह गतिः । प्रणियाति । यातः । यान्ति ।

२४६३ । **लङः शाकटायनस्यैव** ।३।४।१११। अदन्तात्परस्य लङो झेर्जुस्वा स्यात् । अयुः, अयान् । यायात् । यायाताम् । यायास्ताम् । ११२६ **वा** गतिगन्धनयोः । गन्धनं सूचनम् । ११२७ **भा** दीप्तौ । ११२८ **ष्णा** शौचे । ११२९ **श्रा** पाके । ११३० **द्रा** कुत्सायां गतौ । ११३१ **प्सा** भक्षणे । ११३२ **पा** रक्षणे । पायास्ताम् । अपासीत् । ११३३ **रा** दाने । ११३४ **ला** आदाने । 'द्वावपि दाने' इति चन्द्रः । ११३५ **दाप्** लवने । प्रणिदाति, प्रनिदाति । दायास्ताम् । अदासीत् । ११३६ **ख्या** प्रकथने । अयं सार्वधातुकमात्रविषयः । ॐ **'सस्थानत्वं नमः ख्यात्रे'** इति वार्तिकं तद्भाष्यं चेह लिङ्गम् । सस्थानो जिह्वामूलीयः । स नेति ख्याञादेशस्य ख्शादित्वे प्रयोजनमित्यर्थः । 'संपूर्वस्य ख्यातेः प्रयोगो न' इति न्यासकारः । ११३७ **प्रा** पूरणे । ११३८ **मा** माने । अकर्मकः । 'तनौ ममुस्तत्र न कैटभद्विषः' इति माघः । उपसर्गवशेनार्थान्तरे तु सकर्मकः–'उदरं परिमाति मुष्टिना' । 'नेर्गद–' २२८५ इत्यत्र नास्य ग्रहणम्, प्रणिमाति–प्रनिमाति । ११३९ **वच** परिभाषणे । वक्ति । वक्तः । अयमन्तिपरो न प्रयुज्यते । 'बहुवचनपरः' इत्यन्ये ।

---

ध्वम् ॥—**अध्येषीष्टेति** । लिङः सीयुट् । अध्येषीयास्ताम् । अध्येषीरन् ॥ **२४६१ गाङ्कुटादिभ्यो–** । इह गाङ् गतावित्यस्य न ग्रहणम् । तङर्थतया ङकारानुबन्धस्य तत्र चरितार्थत्वात् । आदेशङकारस्तु अचरितार्थः, स्थानिवद्भावेनैव तङः सिद्धत्वादत आह—**गाङादेशादिति** । कुटादिस्तुदाद्यन्तर्गणः । केचित्तु कुट आदिर्येषां ते कुटादयः । कुटस्य आदिः कुटादिः, कुटादिश्च कुटादयश्च कुटादयः इति समासद्वयमाश्रित्य कुटपूर्वस्य लिखधातोरपि ग्रहणाल्लिखनमिति प्रयोगः सिद्ध इत्याहुः । तच्च 'रलो व्युपधात्–' इति सूत्रस्थेन लिखित्वा लेखित्वा लिलिखिषति लिलेखिषति इति वृत्तिग्रन्थेन, 'शकुनिष्वालेखने' इति सौत्रप्रयोगेण च विरुध्यते । अञ्णिदिति किम् ? घञि–कोटः । पोटः । णलि–चुकोट । पुपोट ॥ **२४६२ घुमास्था–** । 'दीङो युडचि–' इत्यतः क्ङितीत्यनुवर्तते । आर्धधातुक इति चाधिक्रियत एव । क्ङिति किम् ? दाता । धाता । हलादौ किम् ? ददतुः । ददुः । अन्यथा आतो लोपात्परत्वादीत्वं स्यात् । आर्धधातुके किम् ? मातः । माथः ॥ —**अध्यगीष्टेति** । सिचो ङित्त्वादीत्वम् । **इक्** स्मरणे । ककार इह 'इण्वदिकः' इति विशेषणार्थः । एरित्युक्ते तु इट किट कटीत्यत्र प्रश्लिष्टस्य इधातोरपि ग्रहणं स्यादित्याहुः ॥—**केचित्त्विति** । आर्धधातुकाधिकारे वार्तिकपाठात्तदधिकारोक्तानामेव कार्याणामुपस्थितत्वादतिदेश इति भावः ॥—**अधीयन्निति** । स्मरन्नित्यर्थः । राघवयोरित्यत्र 'अधीगर्थदयेशां कर्मणि' इति षष्ठी ॥—**वी गति—**॥—**अवियन्निति** । अडागमात्परत्वादियङ् ॥—**अडागमे सतीति** । कृताकृतप्रसङ्गित्वमात्रेण अटो नित्यत्वादिति भावः । अत एवापरितोषात् 'असिद्धवदत्राभात्' इति समानाश्रये यणि कर्तव्ये अटोऽसिद्धत्वादियङेवोचित इत्याशयेन वा 'केचित्' इत्युक्तम् । लावस्थायामेवाडागम इति पक्षे तु यणेवेति बोध्यम् ॥—**ईकारोऽपीति** । प्रयुञ्जते च—'न हि तरणिरुदीते दिक्पराधीनवृत्तिः' इति । व्याख्यातं च मनोरमायाम्—कर्मव्यतिहारे तङ् । न च 'न गतिहिंसार्थेभ्यः' इति निषेधः शङ्क्यः, उत्पूर्वस्याविर्भावार्थत्वादिति । **अत्र वदन्ति**—व्यतिशब्दं विना कर्मव्यतिहारकल्पनं क्लेशावहम् । परकीयकर्म च कर्मव्यतिहारेऽपेक्ष्यते, तच्चात्र नोपात्तम् । परस्परकरणं तु न संभवत्येव । ततश्चोदीते इति भावे निष्ठा ज्ञेया । तथा चोदये दिक्पराधीनवृत्तिस्तरणिर्नेत्यर्थः सुगम इति ॥ **२४६३ प्रनिदातीति** । 'शेषे विभाषा–' इति णत्वविकल्पः ॥—**अदासीदिति** । अघुत्वान्न सिज्लुक् ॥—**नमः ख्यात्रे इति** । यद्ययमार्धधातुकेऽपि प्रयुज्येत तर्हि तृजन्तेऽस्मिन्परे 'शर्परे विसर्जनीयः' इत्यस्याप्रवृत्त्या 'कुप्वोः–' इति जिह्वामूलीयो दुर्वारः स्यादेवेति तद्भावः । ख्शादित्वे प्रयोजनमिति वार्तिककाराद्युक्तिर्व्याकुप्येतेति भावः ॥—**संपूर्वस्येत्यादि** । संख्यातीत्यादिप्रयोगो नास्त्येव । संख्येति प्रयोगस्तु ख्याञादेशस्येति न्यासकाराशयः । **मा** माने ॥—**नास्येति** । घुप्रकृतिमाङ् इति पाठात् ङितामेव तत्र ग्रहणं, ततश्च 'शेषे विभाषा–' इति विकल्प एव प्रवर्तत इत्याह—**प्रणिमाति । प्रनिमातीत्यादि । वच** परिभाषणे । उवाच । वक्ता । वक्ष्यति । वक्तु । वच्यात् । अवक् । अवक्ताम् ॥—**अयमन्तिपर इति** । तथा च वचन्ति, वक्ष्यन्ति, वचन्तु, अवचन्, अवोचन्, अवक्ष्यन्नित्येतेऽसाधवः ॥—**बहुवचनपर इति** ।

'झिपरः' इत्यपरे । वग्धि । वच्यात् । उच्यात् । अवोचत् । ११४० विद ज्ञाने ।

**२४६४ । विदो लटो वा** ।३।४।८३। वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः । वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म । पक्षे—वेत्ति । वित्तः । इत्यादि । विवेद । विविदतुः । 'उषविद–' २३४१ इत्याम्पक्षे 'विद' इत्यकारान्तनिपातनान्न लघूपधगुणः, विदांचकार । वेदिता ।

**२४६५ । विदांकुर्वन्त्वित्यन्यतरस्याम्** ।३।१।४१। वेत्तेर्लोण्याम्, गुणाभावः, लोटो लुक्, लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते । पुरुषवचने न[1] विवक्षिते, इतिशब्दात् ।

**२४६६ । तनादिकृञ्भ्य उः** ।३।१।७९। तनादेः कृञश्च 'उ'प्रत्ययः स्यात् । शपोऽपवादः । तनादित्वादेव सिद्धे कृञ्ग्रहणं गणकार्यस्यानित्यत्वे लिङ्गम् । तेन—'न विश्वसेदविश्वस्तम्' इत्यादि सिद्धम् । विदांकरोतु ।

**२४६७ । अत उत्सार्वधातुके** ।६।४।११०। उप्रत्ययान्तस्य कृञोऽकारस्य उत्स्यात्सार्वधातुके क्ङिति । 'उत्' इति तपरकरणसामर्थ्यान्न गुणः । विदांकुरुतात् । विदांकुरुताम् । 'उतश्च–' २३३४ इति हेर्लुक्, आभीयत्वेन लुकोऽसिद्धत्वादुत्वम्, विदांकुरु । विदांकरवाणि । अवेत् । अवित्ताम् । 'सिजभ्यस्त–' २२२६ इति झेर्जुस्, अविदुः ।

**२४६८ । दश्च** ।८।२।७५। धातोर्दस्य[2] पदान्तस्य सिपि परे रुः स्याद्वा । अवेः, अवेत् । ११४१ अस भुवि । अस्ति ।

**२४६९ । श्नसोरल्लोपः** ।६।४।१११। श्नस्यास्तेश्चाकारस्य लोपः स्यात्सार्वधातुके[3] क्ङिति । स्तः । सन्ति । 'तासस्त्योः–' २१९१ इति सलोपः, असि । स्थः । स्थ । अस्मि । स्वः । स्मः ॥ 'आर्धधातुके' २४३२ इत्यधिकृत्य,

**२४७० । अस्तेर्भूः** ।२।४।५२। बभूव । भविता । अस्तु । स्तात् । स्ताम् । सन्तु ।

**२४७१ । घ्वसोरेद्धावभ्यासलोपश्च** ।६।४।११९। घोरस्तेश्च एत्वं स्याद्धौ परे अभ्यासलोपश्च । आभीयत्वेन एत्वस्यासिद्धत्वाद्धेर्धिः । 'श्नसोः–' २४६९ इत्यल्लोपः । एधि । तातङ्पक्षे एत्वं न, परेण तातङा बाधात्, '(प) सकृद्गतौ' इति न्यायात्, स्तात् । स्तम् । स्त । असानि । असाव । असाम । 'अस्तिसिचः–' २२२५ इतीट्, आसीत् । 'श्नसोः–' २४६९ इत्यल्लोपस्याभीयत्वेनासिद्धत्वादाट्, आस्ताम् । आसन् । स्यात् । भूयात् । अभूत्, सिचोऽस्तेश्च विद्यमानत्वेन विशेषणादीण्न ।

---

अस्मिन् पक्षे लटि मध्यमे–वक्थ । उत्तमे तु–वच्मः । लिटि–ऊचुः । मध्यमे–ऊच । उत्तमे तु–ऊचिम । लुटि—वक्तारः । लिङि–उच्यासुः, वच्यासुरित्यादयोऽप्यसाधवः ॥—**झिपर इति** । अस्मिंस्तु पक्षे–वक्थ । वच्मः । ऊच । ऊचिमेत्यादयः साधव इति दिक् ॥ **२४६४ विदो लटो वा** । पञ्चमीयं न तु षष्ठी । तेन विद्यतिविन्दत्योरव्यवहितपरस्य लटोऽभावान्नैते आदेशास्तदाह—**वेत्तेरिति** ॥ **२४६५ लोटो लुगिति** । 'आमः' इति सूत्रे 'मन्त्रे घस–' इत्यतो लेरित्यनुवर्त्य आमः परस्य लेर्लुगिति व्याकुर्वतां मतेनेदमुक्तम् । निष्कर्षे तु तेनैव लुगिति बोध्यम् ॥—**पुरुषवचने इति** । प्रथमपुरुषो बहुवचनं चेत्यर्थः । परस्मैपदमप्यविवक्षितमेवेति केषांचिन्मते कर्मव्यतिहारे तङि–व्यतिविदांकुरुताम्, व्यतिविदांकुर्वातामित्यादि ज्ञेयम् ॥ **२४६६ तेनेति** । विश्वसेदित्यत्र शपो लुगभावः सिद्ध इति भावः । एवमप्यविश्वस्तमित्यत्रेडभावः कथमिति चेदागमशास्त्रस्यानित्यत्वादिति गृहाण ॥ **२४६७ अत उत्सार्व—**। क्ङिति किम् ? करोति । करोषि ॥—**लुकोऽसिद्धत्वादिति** । सार्वधातुकग्रहणमुत्तरार्थमेव नात्रावश्यकम् । इह भूतपूर्वगत्या सार्वधातुकपरत्वमाश्रीयत इति वृत्तिमते त्वसिद्धत्ववर्णनस्योपयोगलेशोऽपि नास्तीति ज्ञेयम् ॥ **२४६८ दश्च** । 'सिपि धातोरुर्वा' इत्यनुवर्तते, पदस्येति, 'झलां जशोऽन्ते' इत्यस्मादन्त इति च तदाह—**धातोर्दस्येत्यादि** । सिपि किम् ? तिपि–अवेत् । दान्तस्य धातोः सिपि रुर्वेत्येतावतैवेष्टसिद्धौ पदान्तानुवृत्तिर्मन्दप्रयोजनेत्याहुः । तच्चिन्त्यम् । वेत्सीत्यत्रातिप्रसङ्गात्, चर्त्वस्यासिद्धत्वेन दान्तत्वात् ॥—**श्नसोरल्लोपः** । 'अत उत्–' इति सूत्रादत इत्यनुवर्त्याद्ग्रहणं त्यक्तुं शक्यमित्याहुः ॥ **२४६९ श्नसोरिति** । शकन्ध्वादित्वात्पररूपमित्याह—**श्नस्यास्तेश्चेति** । श्नसोदाहरणम्–रुन्धः, रुन्धन्तीत्यादि । क्ङिति किम् ? रुणद्धि, अस्ति । तपरकरणमास्तामासन्नित्यत्र ह्याडागमे कृते तस्य लोपो माभूदित्येतदर्थम् । निष्कर्षस्तु अनुपदं स्फुटीभविष्यति ॥ **२४७१ घ्वसोरेद्धा–**। एत्वमलोन्त्यस्य, लोपस्तु शित्त्वात्सर्वस्येति भाष्यादौ स्पष्टम् । देहि । धेहि ॥—**असिद्धत्वादाडिति** । नन्वेवमाटोऽसिद्धत्वात् 'श्नसोः–' इत्यल्लोपो न भवेदिति तपरकरणं तत्र व्यर्थमिति चेत् । **अत्राहुः**—आभाच्छास्त्रस्यानित्यताज्ञापनाय तपरकरणम् । तेन देभतुरित्यादि सिद्धमिति । **स्यादेतत्—अत्र केचित्**—अद्ग्रहणस्य निष्फलत्वे तपरकरणस्य ज्ञापनार्थत्वं न सिध्येत् । न च 'अत उत्–' इति सूत्रस्थतपरकरणमेव ज्ञापनार्थमस्त्विति वाच्यम् । अस्येत्युक्तौ

---

१ **न विवक्षिते इति**—तयोर्नान्तरीयकतया उच्चार्यमाणत्वादिति भावः । २ 'धातोर्दान्तस्य पदस्य सिपि परे रुः स्याद्वा' इति बालमनोरमासम्मता वृत्तिः । ३ **सार्वधातुके क्ङितीति**—अत्र सार्वधातुके इति निष्फलम् । आर्धधातुके तस्य भूभावात् । ईहामासेत्यादौ 'अत आदेः' इति दीर्घे सति परस्य लोपेऽपि क्षत्यभावात् । श्नस्य सार्वधातुके एव सत्त्वाच्च ।

२४७२ । **उपसर्गप्रादुर्भ्यामस्तिर्यच्परः** ।८।३।८७ उपसर्गेणः प्रादुसश्च परस्यास्तेः सस्य षः स्याद्यकारेऽचि च परे । निष्यात् । प्रादुःष्यात् । निषन्ति । प्रादुःषन्ति । यच्परः किम् । अभिस्तः । **११४२ मृजू** शुद्धौ ।

२४७३ । **मृजेर्वृद्धिः** ।७।२।११४। मृजेरिको वृद्धिः स्याद्धातुप्रत्यये परे ॥ ॐ **क्ङित्यजादौ वेष्यते** ॥ 'व्रश्च–' २९४ इति षः, मार्ष्टि । मृष्टः । मृजन्ति, मार्जन्ति । ममार्ज । ममार्जतुः, ममृजतुः । ममार्जिथ, ममार्ष्ठ । मार्जिता, मार्ष्टा । मृड्ढि । अमार्ट् । अमार्जम् । अमार्जीत्, अमार्क्षीत् । **११४३ रुदिर्** अश्रुविमोचने ।

२४७४ । **रुदादिभ्यः सार्वधातुके** ।७।२।७६। रुद् स्वप् श्वस् अन् जक्ष एभ्यो वलादेः सार्वधातुकस्येट् स्यात् । रोदिति । रुदितः । हौ परत्वादिटि धित्वं न, रुदिहि ।

२४७५ । **रुदश्च पञ्चभ्यः** ।७।३।९८। हलादेः पितः सार्वधातुकस्यापृक्तस्य ईट् स्यात् ।

२४७६ । **अड्गार्ग्यगालवयोः** ।७।३।९९। अरोदीत्, अरोदत् । अरुदिताम् । अरुदन् । अरोदीः, अरोदः । प्रकृतिप्रत्ययविशेषापेक्षाभ्यामडीड्भ्यामन्तरङ्गत्वाद्यासुट्, रुद्यात् । अरुदत्, अरोदीत् । **११४४ ञिष्वप्** शये । स्वपिति । स्वपितः । सुष्वाप । सुषुपतुः । सुषुपुः । सुष्वपिथ, सुष्वप्थ ।

२४७७ । **सुविनिर्दुर्भ्यः सुपिसूतिसमाः** ।८।३।८८। एभ्यः सुप्यादेः सस्य षः स्यात् । पूर्वं धातुरुपसर्गेण युज्यते । किति लिटि परत्वात्संप्रसारणे षत्वे च कृते द्वित्वम् । '(प) **पूर्वत्रासिद्धीयमद्विर्वचने**' । सुषुपुपतुः । सुषुपुपुः । अकिति तु द्वित्वेऽभ्यासस्य संप्रसारणम् । षत्वस्यासिद्धत्वात्ततः पूर्वं 'हलादिः शेषः' २१७९, नित्यत्वाच्च । ततः सुपिरूपाभावान्न षः । सुसुष्वाप । सुस्वप्ता । अस्वपीत्, अस्वपत् । स्वप्यात् । सुप्यात् । सुषुप्यात् । अस्वाप्सीत् । **११४५ श्वस** प्राणने । श्वसिति । श्वसिता । अश्वसीत्, अश्वसत् । श्वस्याताम् । श्वस्यास्ताम् । 'ह्यन्तक्षण–' २२९९ इति न वृद्धिः, अश्वसीत् । **११४६ अन** च । अनिति । आन । अनिता । आनीत्, आनत् ।

२४७८ । **अनितेः** ।८।४।१९ उपसर्गस्थान्निमित्तात्परस्यानितेर्नस्य णः स्यात् । प्राणिति । **११४७ जक्ष** भक्षहसनयोः । जक्षिति । जक्षितः ।

२४७९ । **अदभ्यस्तात्** ।७।१।४। झस्य अत्स्यात् । अन्तापवादः । जक्षति । 'सिजभ्यस्त–' २२२६ इति झेर्जुस्, अजक्षुः । 'अयमन्तस्थादिः' इत्युज्ज्वलदत्तो बभ्राम ।

रुदादयः पञ्च गताः ।

**११४८ जागृ** निद्राक्षये । जागर्ति । जागृतः । जाग्रति । 'उषविद–' २३४१ इत्याम्वा, जागरांचकार–जजागार ।

२४८० । **जाग्रोऽविचिण्णल्ङित्सु** ।७।३।८५ जागर्तेर्गुणः स्याद्विचिण्णल्ङिद्भ्योऽन्यस्मिन् वृद्धिविषये

---

गौरवादर्धमात्रालाघवाय तत्र तपरत्वमिति सुवचत्वात् । तस्मादुक्तज्ञापनार्थमद्ग्रहणमावश्यकमित्याहुः ॥ **२४७२ उपसर्गप्रादुर्भ्याम्**—। प्रादुस् इति सान्तमव्ययम् । प्रादुषश्चेति पाठे प्रादुर्भ्यामिति निर्देशो न युज्यते इति प्राचां षान्तपाठः प्रामादिकः ॥—**परस्येति** । अयमस्तेः सस्य विशेषणं, न त्वस्तेः । तेन प्रादुरस्तीत्यत्र न षत्वम् । उपसर्गेत्यादि किम् ? दधि स्यात् । अस्तेः किम् ? परिसृजति । **मृजू** शुद्धौ । अयं न षित्, भिदादिपाठसामर्थ्यात् ॥ **२४७३ मृजेर्वृद्धिः** । गुणापवादः । धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमित्याह—**धातुप्रत्यये इति** । धातुप्रत्यये किम् ? कंसंपरिमृड्भ्याम् ॥—**क्ङित्यजादाविति** । एतच्चान्येषां वैयाकरणानां मतं 'इको गुणवृद्धी' इति सूत्रे भाष्यकृता स्वीकृतम् ॥—**मृड्ढीति** । 'हुझल्भ्यः–' इति हेर्धिः । षत्वष्टुत्वजश्त्वानि ॥ **२४७४ वलादेः सार्वधातुकस्येति** । वलादेः किम् ? रुन्दन्ति । सार्वधातुके किम् ? स्वप्ता ॥—**धित्वं नेति** । सकृद्गताविति न्यायात्, हेर्धिरिति स्थान्यादेशयोरिकार उच्चारणार्थ इत्यादिप्रागुक्तसमाधानाद्वेति भावः ॥ **२४७५ रुदश्च**—। पञ्चभ्यः किम् ? जागर्तेर्लङि–अजागः ॥ **२४७६ प्रकृतिप्रत्ययेत्यादि** । हलादिपित्सार्वधातुकापृक्तापेक्षत्वाच्च बहिरङ्गत्वमडीटोः ॥—**अरुददिति** । 'इरितो वा' इत्यङ् ॥—**अरोदीदिति** । 'अस्तिसिच–' इति ईट् । 'रुदश्च–' इत्यनेन तु न, सिचा व्यवधानेन रुदादेः परत्वाभावात् ॥—**सुषुपतुरिति** । 'वचिस्वपि–' इति संप्रसारणम् । ततो द्वित्वम् ॥ **२४७७ सुपिसूतिसमा इति** । सूतीति क्तिन्नन्तः । समेति पचाद्यजन्तः । सुषुप्तिः । सुषूतिः । सुषमा । विषमः ॥—**अद्विर्वचन इति** । तेन षत्वसहितस्य द्वित्वम् ॥—**सुपिरूपाभावादिति** । 'एकदेशविकृतमनन्यवत्' इति तु न प्रवर्तते, तस्य स्थानिवत्सूत्रशेषत्वात् । षत्वस्य त्रैपादिकत्वेन तत्कार्यं प्रति स्थानिवत्त्वाभावादित्याहुः । वस्तुतस्तु 'स्थानिवदादेश–' इत्येनं प्रति त्रिपादी सिद्धेत्युक्तम् । तस्मादिह समाधानान्तरमूह्यमिति–**अन्ये** ॥ **२४७८ अनितेः** । 'उपसर्गादसमासेऽपि–' इत्यत उपसर्गादिति वर्तते, 'रषाभ्याम्–' इत्यतो 'नो णः' इति च, तदाह—**उपसर्गस्थादित्यादि** ॥ **२४७९ अन्तापवाद इति** । 'झोऽन्तः' इत्यस्य अदादेशोऽपवादः, अस्य त्वपवादो जुसिति ज्ञेयम् ॥—**बभ्रामेति** । 'जक्षन् क्रीडन् रममाणः' इत्युपनिषदि जशादित्वस्य निर्विवादत्वात् । 'नाभ्यस्ताच्छतुः' इति निषेधेन 'जक्षन्' इति नुमश्छान्दसत्वेऽपि जशादित्वस्य तत्कल्पनाया अन्याय्यत्वात् । धातुवृत्त्यादौ जशादिपाठाच्च ॥ **२४८० जाग्रोऽविचिण्णल्**—॥ **ङिद्भ्योऽन्यस्मिन्निति** । जागृविः । विशब्देन वादिप्रत्ययो

प्रतिषेधविषये च । जजागरतुः । अजागः । अजागृताम् । अभ्यस्तत्वाज्जुस्,

२४८१ । जुसि च ।७।३।८३। अजादौ जुसीगन्ताङ्गस्य गुणः स्यात् । अजागरुः । अजादौ किम् । जागृयुः । आशिषि तु–जागर्यात् । जागर्यास्ताम् । जागर्यासुः । लुङि–अजागरीत् । 'जागृ इस्' इत्यत्र यण् प्राप्तः, तं सार्वधातुकगुणो बाधते, तं सिचि वृद्धिः, तां जागर्तिगुणः, तत्र कृते हलन्तलक्षणा प्राप्ता, 'नेटि' २२६८ इति निषिद्धा, ततः 'अतो हलादेः–' २२८४ इति बाधित्वा 'अतो लरान्तस्य' २३३० इति प्राप्ता, 'ह्म्यन्त–' २२९९ इति निषिध्यते । तदाहुः—

गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम् ।
पुनर्वृद्धिर्निषेधोऽतो यण्पूर्वाः प्राप्तयो नव ॥ इति ।

११४९ दरिद्रा दुर्गतौ । दरिद्राति ।

२४८२ । इद्दरिद्रस्य ।६।४।११४। दरिद्रातेरिकारः स्याद्धलादौ क्ङिति सार्वधातुके । दरिद्रितः ।

२४८३ । श्नाभ्यस्तयोरातः ।६।४।११२। अनयोरातो लोपः स्यात् क्ङिति सार्वधातुके । दरिद्रति । अनेकाच्त्वादाम्, दरिद्रांचकार । 'आत औ णलः' २३७१ इत्यत्र 'ओ' इत्येव सिद्धे औकारविधानं दरिद्रातेरालोपे कृते श्रवणार्थम् । अत एव ज्ञापकादाम्नेत्येके । ददरिद्रौ । ददरिद्रतुः । इत्यादि । यत्तु णलि 'ददरिद्र' इति, तन्निर्मूलमेव ।

॥ दरिद्रातेरार्धधातुके विवक्षिते आलोपो वाच्यः ॥ ॥ लुङि वा ॥ ॥ सनि ण्वुलि ल्युटि च न ॥ दरिद्रिता । अदरिद्रात् । अदरिद्रिताम् । अदरिद्रुः । दरिद्रियात् । दरिद्र्यात् । अदरिद्रीत् । इट्सकौ, अदरिद्रासीत् । ११५० चकासृ दीप्तौ । चकास्ति । झस्य अत्, चकासति । चकासांचकार । 'धि च' २२४९ इति सलोपः सिच एवेत्येके, चकाद्धि । 'चकाधि' इत्येव भाष्यम् ।

२४८४ । तिप्यनस्तेः ।८।२।७३। पदान्तस्य सस्य दः स्यात्तिपि न त्वस्तेः । अचकात्, अचकाद् । अचकासुः ।

२४८५ । सिपि धातो रुर्वा ।८।२।७४। पदान्तस्य धातोः सस्य रुः स्याद्वा । पक्षे दः । अचकाः, अचकात् । ११५१ शासु अनुशिष्टौ । शास्ति ।

२४८६ । शास इदङ्हलोः ।६।४।३४। शास उपधाया इत्स्यादङि हलादौ क्ङिति च । 'शासिवसि–' २४१०

---

गृह्यते । इकारस्तूच्चारणार्थ इति वदतां मते क्वसावपि न भवति–जजागृवान् । जजागृवांसौ । चिण्–अजागारि । णल्–जजागार । ङित्–जागृतः । जागृथः ॥ **वृद्धिविषये इति** । ण्वुलि–जागरकः । घञि–जागरः । णिचि—जागरयति । न चैतेषु गुणे कृतेऽपि 'अत उपधायाः' इति वृद्धिः स्यादिति वाच्यम् । गुणविधेश्चिण्णल्प्रतिषेधस्य चानर्थक्यापत्तेः ॥ **२४८१ जुसि च** । चकारः स्पष्टप्रतिपत्त्यर्थः । 'क्सस्याचि' इत्यतोऽचीत्यनुवर्तत इत्याह—**अजादाविति** ॥—**जागृयुरिति** । एवं शृणुयुः–चिनुयुरित्यादावपि गुणो नेति बोध्यम् । 'यासुटो ङित्त्वाच्छृणुयुरित्यादौ गुणो न' इति प्राचोक्तिस्तु मनोरमायां दूषिता, 'जुसि च' इति गुणस्य निषेधापवादत्वादिति । केचित्तु—'जुसि च' इत्यत्र उसीत्यावर्त्य उस्रूपे जुसीति व्याख्यानान्नोक्तदोष इत्याहुः । अजादौ जुसीति समाधानं तु भाष्यारूढम् ॥ जागर्तेः सिच इटि कृते यणादिप्राप्तिक्रमं दर्शयति—**जागृ इस् इत्यत्रेति** ॥—**तत्र कृते इति** । हलन्तलक्षणाया वृद्धेर्जागर्तिगुणेन बाधः, तेन गुणेन हलन्तत्वसंपादनात् । या हि गुणप्रवृत्तिसमये वृद्धिः सा बाध्यते, नान्येति भावः । अजागरिष्ट । अजागरिष्टाम् । अजागरिषुः । अजागरीदित्यादि । **दरिद्रा** ॥ **२४८२ इद्दरिद्रस्य** । 'इद्दरिद्रः' इति वक्तुमुचितम् ॥ **२४८३ श्नाभ्यस्त—** । क्रीणन्ति । क्रीणते । पुनन्ति । पुनते । दधति । दधते । क्ङिति किम् ? क्रीणाति । पुनाति । दधाति । आतः किम् ? बिभ्रति ॥—**ओ इत्येव सिद्धे इति** । प्रथमत्यागे मानाभावादिति भावः ॥—**निर्मूलमेवेति** । यत्तु व्याख्यातृभिः समर्थ्यते–आमोऽभावे आतो लोपे कृते आदन्तत्वाभावादौत्वं नेति । तन्न । 'आत औ णलः' इत्यत्र प्राथम्यादोकारे कर्तव्ये औकारविधानं दरिद्रातेरालोपेऽपि श्रवणार्थं सत् आमभावे लिङ्गमिति हरदत्तमाधवादिग्रन्थैः स्वग्रन्थेन च विरोधात्, तत्कथमौत्वस्याप्रवृत्तिर्भवेत् । यदप्युक्तम्–ओकारौकारयोर्द्विमात्रत्वाविशेषादौकारविधानमिति । तदपि स्थवीयः । तस्मिन्पक्षे आमो दुर्वारत्वप्रसङ्गात् ॥—**विवक्षित इति** । तेन दरिद्रातीति–दरिद्र इति पचाद्यजेव भवति । परसप्तम्यां तु 'शाद्यधा–' इत्यादन्तलक्षणो णः स्यात् । सति तु तस्मिन् 'आतो युक् चिण्कृतोः' इति युकि दरिद्राय इति स्यादिति भावः ॥ **सनि ण्वुलीति** । एतेष्वालोपो नेत्यर्थः । दिदरिद्रासति । दरिद्रायकः । दरिद्राणम् ॥—**अदरिद्रुरिति** । 'सिजभ्यस्त–' इति झेर्जुस् । 'लङः शाकटायनस्यैव' इत्यादन्तलक्षणो विकल्पस्तु न भवति । परत्वात् 'श्नाभ्यस्तयोः–' इत्यालोपे आकारान्तस्यैवाभावात् । 'ई हल्यघोः' इति–आत ईत्वमिह न शङ्क्यमेव, झेर्जुसि हलादिपरत्वाभावादिति भावः ॥ ननु दरिद्रा झि इति स्थिते जुसः प्रागेव आल्लोपात्परत्वादपवादत्वाच्च ईत्वं स्यात् । मैवम् । अकृतव्यूहपरिभाषाया जागरूकत्वात् । ईत्वनिमित्तं हि हलादित्वं तच्च विनाशोन्मुखं, जुसो भावित्वात् ॥—**झस्य अदिति** । 'अदभ्यस्तात्' इत्यनेन ॥ **२४८४ तिप्यनस्तेः** । पदान्तस्य किम् ? चकास्ति । सस्येति किम् ? वशेर्लङि तिपि–अवट् । तिपि किम् ? क्विपि–चकाः । अनस्तेः किम् ? सर्वमा इदम् । 'आ' इति लङि तिपि अस्ते रूपम् । 'बहुलं छन्दसि' इति ईट् न ॥ **२४८६ शास इदङ्हलोः** । अङि–अशिषत् । अशिषताम् ।

इति षः । शिष्टः । शासति । शशासतुः । शास्तु, शिष्टात् । शासतु ।

२४८७ । शा हौ ।६।४।३५। शास्तेः शादेशः स्याद्धौ परे । तस्याभीयत्वेनासिद्धत्वाद्धेर्धिः, शाधि । अशात् । अशिष्टाम् । अशासुः । अशाः, अशात् । शिष्यात् । 'सर्तिशास्ति–' २३८२ इत्यङ्, अशिषत् । अशासिष्यत् ।

११५२ दीधीङ् दीप्तिदेवनयोः । एतदादयः पञ्च धातवश्छान्दसाः । दीधीते । 'एरनेकाचः–' २७२ इति यण्, दीध्याते ।

२४८८ । यीवर्णयोर्दीधीवेव्योः ।७।४।५३। एतयोरन्त्यस्य लोपः स्याद्यकारे इवर्णे च परे । इति लोपं बाधित्वा नित्यत्वाट्टेरेत्वम्, दीध्ये । 'दीधीवेवीटाम्' २१९० इति गुणनिषेधः । दीध्यांचक्रे । दीधिता । दीधिष्यते । ११५३ वेवीङ् वेतिना तुल्ये । 'वी गति' इत्यनेन तुल्येऽर्थे वर्तत इत्यर्थः ।

अथ त्रयः परस्मैपदिनः ॥ ११५४ षस[1] ११५५ सस्ति स्वप्ने । सस्ति । सस्तः । ससन्ति । ससास । सेसतुः । सस्तु । सधि, 'पूर्वत्रासिद्धम्' १२ इति सलोपस्यासिद्धत्वात् 'अतो हेः' २२०२ इति न लुक् । असत् । असस्ताम् । असः, असत् । सस्यात् । असासीत्, अससीत् ॥ सन्त्ति । सन्त्तः । संस्तन्ति । 'बहूनां समवाये द्वयोः संयोगसंज्ञा न' इत्याश्रित्य 'स्कोः–' ३८० इति लोपाभावात्—संस्त्ति । संस्त्तः । संस्तन्ति । इत्येके । ११५६ वश कान्तौ । कान्तिरिच्छा । वष्टि । उष्टः । उशन्ति । वक्षि । उष्ठः । उवाश । ऊशतुः । वशिता । वष्टु, उष्टात् । उड्ढि । अवट्, अवड् । औष्टाम् । औशन् । अवशम् । उश्यातात् । उश्यास्ताम् । अवाशीत्, अवशीत् । (ग) चर्करीतं च ॥ यङ्लुगन्तमदादौ बोध्यम् । ११५७ ह्नुङ् अपनयने । ह्नुते । जुह्नुवे । ह्नुवीत । ह्नोषीष्ट । अह्नोष्ट ।

इत्यदादयः ॥

---

## अथ तिङन्ते जुहोत्यादयः ।

११५८ हु दानादनयोः । 'आदाने च' इत्येके । 'प्रीणनेऽपि' इति भाष्यम् । दानं चेह प्रक्षेपः । स च वैधे आधारे, हविषश्चेति स्वभावाल्लभ्यते । इतश्चत्वारः परस्मैपदिनः ।

२४८९ । जुहोत्यादिभ्यः श्लुः ।२।४।७५। शपः श्लुः स्यात् ।

२४९० । श्लौ ।६।१।१०। धातोर्द्वे स्तः । जुहोति । जुहुतः । अदभ्यस्तात्' २४७९ इत्यत्, 'हुश्नुवोः–' २३८७ इति यण्, जुह्वति ।

२४९१ । भीह्रीभृहुवां श्लुवच्च ।३।१।३९। एभ्यो

---

क्ङिति–शिष्टः । शिष्टवान् । शिष्यात् । शिष्यास्ताम् । अङ्साहचर्यात्परस्मैपद एवेत्वम् । नेह–आशास्ते । अन्ये तु–यस्माच्छासेरङ् संभवति तस्यैवेत्वमिति व्याख्याय व्यतिशिष्टे व्यतिशिढ्वे इत्यात्मनेपदेऽपि इत्वं स्वीकुर्वन्ति ॥ **२४८७ शा हौ ।** पूर्वसूत्रे उपधापदान्वयानुरोधेन शास इत्यवयवषष्ठ्यपि इह स्थानषष्ठ्येव, उपधाया इत्यस्य निवृत्तत्वादित्याह—**शास्तेः शादेश इति ।** 'धि च' इति सलोपेन शाधीति रूपे सिद्धेऽपि सलोपस्यासिद्धत्वात् 'शास इत्–' इति इत्वं स्यात्, तद्वारणाय शाविधानमित्याहुः ॥ **२४८८ यीवर्णयोः–।** य्वोरित्युक्तेऽपीष्टसिद्धौ यकारेकारयोरिति स्फुटप्रतिपत्तिर्न स्यादिति वर्णग्रहणं कृतम् । यिश्च इवर्णश्च–यीवर्णौ तयोः । यिश्चेति इकार उच्चारणार्थो न तु विवक्षित इत्याह—**यकारे इवर्णे चेति ।** 'यिवर्णयोः' इति पाठस्तूचितः ॥—**लोपं बाधित्वेति ।** लोपस्य तूदाहरणम्–आदीध्य गतः । आवेव्य गतः । दीधिता । दीधिष्यते । वेविता । वेविष्यते । यीवर्णयोरिति किम् ? आदीध्यनम् । आवेव्यनम् । **षस** ॥—**असदिति ।** 'तिप्यनस्तेः' इति दत्वम् ॥—**अस इति ।** 'सिपि धातोः–' इति रुर्वा । पक्षे दः ॥—**सन्त्तीति ।** इदित्त्वान्नुमि सन्स्त् ति इति स्थिते 'स्कोः' इति सलोपे 'झरो झरि सवर्णे' इति तकारस्य वा लोपः ॥—**संस्त्ति संस्त्त इति ।** इहापि पूर्ववत्तलोपो वा बोध्यः । **वश** कान्तौ । भाषायामप्यस्य प्रयोगो दृश्यते । 'वष्टि भागुरिरल्लोपं', 'जयाय सेनान्यमुशन्ति देवाः' इति ॥—**चर्करीतं च ।** गणसूत्रमिदम् । चर्करीतमिति यङ्लुगन्तस्य पूर्वाचार्याणां संज्ञा ॥—**अदादौ बोध्यमिति ।** तेन यङ्लुगन्तेषु 'अदिप्रभृतिभ्यः–' इति शपो लुग् भवतीति भावः । प्राचा तु चर्करीतमिति यङ्लुगन्तं परस्मैपदमित्युक्तं, तच्चेहाप्रकृतत्वादुपेक्षितम् ॥ **इत्यदादिप्रकरणम् ॥**

**हु दाना–॥** यद्यपि स्वत्वनिवृत्तिपूर्वकं परस्वत्वापादनमेव दानं तथापि प्रयोगमनुसृत्य व्याचष्टे—**प्रक्षेप इति** ॥—**वैध इति ।** आहवनीयादौ ॥—**हविष इति ।** विधिबोधितद्रव्यस्येत्यर्थः ॥—**स्वभावादिति ।** तेन आहवनीये पुरोडाशे प्रक्षेप्तव्ये प्रमादेन कोपेन वा पाषाणः प्रक्षिप्तः, पुरोडाशो वा गर्तादौ, स तु प्रक्षेपो न होम इति ज्ञेयम् ॥—**परस्मैपदिन इति ।** तेन 'ह्वोष्ये' इति केषांचित्प्रयोगोऽसाधुरेव । 'स्मरामो जुह्वानाः' इत्यानन्दलहरीप्रयोगस्तु साधुरेव,

---

१ **षससस्तीति**—'जक्षित्यादयः' इति सूत्रस्थभाष्यप्रयोगात्तु सस्तिधातुरत्र नास्तीति प्रतीयते । मूलपाठस्तु माधवानुरोधेनेति बोध्यम् ।

लिङ्वाम्वा स्यात्, आमि श्लाविव कार्यं च । जुहवांचकार, जुहाव । होता । होष्यति । जुहोतु । जुहुतात् । हेधिं:, जुहुधि । आटि परत्वाद्गुणः, जुहवानि । परत्वात् 'जुसि च' २४८१ इति गुणः, अजुहवुः । जुहुयात् । हूयात् । अहौषीत् । ११५९ ञिभी भये । बिभेति ।

२४९२ । भियोऽन्यतरस्याम् ।६।४।११५। इकारः स्याद्धलादौ क्ङिति सार्वधातुके । बिभितः, बिभीतः । बिभ्यति । बिभयांचकार, बिभाय । भेता । ११६० ह्री लज्जायाम् । जिह्रेति । जिह्रीतः । जिह्रियति । जिह्रयांचकार, जिह्राय । ११६१ पृ पालनपूरणयोः ।

२४९३ । अर्तिपिपर्त्योश्च ।७।४।७७। अभ्यासस्य इकारोऽन्तादेशः स्यात् श्लौ ।

२४९४ । उदोष्ठ्यपूर्वस्य ।७।१।१०२। अङ्गावयवौष्ठ्यपूर्वो य ॠत्तदन्तस्याङ्गस्य उत्स्यात् । गुणवृद्धी परत्वादिमं बाधेते । पिपर्ति । उत्वम्, रपरत्वम्, 'हलि च' ३५४ इति दीर्घः, पिपूर्तः । पिपुरति । पपार । किति लिटि 'ऋच्छत्यृताम्' २३८३ इति गुणे प्राप्ते,

२४९५ । शॄदॄप्रां ह्रस्वो वा ।७।४।१२। एषां किति लिटि ह्रस्वो वा स्यात् । पक्षे गुणः । पप्रतुः । पप्रुः । पपरतुः । पपरुः । परिता, परीता । अपिपः । अपिपूर्ताम् । अपिपरुः । पिपूर्यात् । पूर्यात् । अपारीत् । अपारिष्टाम् । ह्रस्वान्तोऽयमिति केचित् । पिपर्ति । पिपृतः । पिप्रति । पिपृयात् । आशिषि-प्रियात् । अपार्षीत् । पाणिनीयमते तु 'तं रोदसी पिपृतम्' इत्यादौ छान्दसत्वं शरणम् । ११६२ डुभृञ् धारणपोषणयोः ।

२४९६ । भृञामित् ।७।४।७६। भृञ् माङ् ओहाङ् एषां त्रयाणामभ्यासस्य इत्स्यात् श्लौ । बिभर्ति । बिभृतः । बिभ्रति । बिभृध्वे । इलुवद्भावाद् द्वित्वेत्वे, बिभरामास । बभार । बभर्थ । बभृव । बिभृहि । बिभराणि । अबिभः । अबिभृताम् । अबिभरुः । बिभृयात् । भ्रियात् । भृषीष्ट । अभार्षीत् । अभृत । ११६३ माङ् माने शब्दे च ।

२४९७ । ई हल्यघोः ।६।४।११३। श्नाभ्यस्तयोरात ईत्स्यात्सार्वधातुके क्ङिति हलि न तु घुसंज्ञकस्य । मिमीते । 'श्नाभ्यस्तयोः-' २४८३ इत्याल्लोपः, मिमाते । मिमते । मम्यमास्त । ११६४ ओहाङ् गतौ । जिहीते । जिहाते । जिहते । जहे । हाता । हास्यते । ११६५ ओहाक् त्यागे । परस्मैपदी । जहाति ।

२४९८ । जहातेश्च ।६।४।११६। इत्स्याद्वा हलादौ क्ङिति सार्वधातुके । पक्षे ईत्वम् । जहितः, जहीतः । जहति । जहौ ।

२४९९ । आ च हौ ।६।४।११७। जहातेर्हौ परे आ स्यात् चादिदीतौ । जहाहि, जहिहि, जहीहि । अजहात् । अजहुः । अजहाः ।

२५०० । लोपो यि ।६।४।११८। जहातेरालोपः स्याद्यादौ सार्वधातुके । जह्यात् । 'एर्लिङि' २३७४, हेयात् । अहासीत् । ११६६ डुदाञ् दाने । प्रणिददाति । दत्तः । ददति । दत्ते । ददौ । 'घ्वसोः-' २४७१ इत्येत्वाभ्यासलोपौ, देहि । अददात् । अदत्ताम् । अददुः । दद्यात् । देयात् । अदात् । अदाताम् । अदुः । अदित । ११६७ डुधाञ् धारणपोषणयोः । 'दानेऽपि' इत्येके । प्रणिदधाति ।

२५०१ । दधस्तथोश्च ।८।२।३८। द्विरुक्तस्य झष-

---

शानचोऽप्रवृत्तावपि चानशन्तत्वात् ॥ २४९१ आटीति । 'आडुत्तमस्य-' इत्यनेन ॥—परत्वादिति । 'हुश्नुवोः-' इति यणपेक्षया परत्वादित्यर्थः ॥ २४९२ भियोऽन्यतरस्याम् । सार्वधातुके किम् ? बेभीयते । बिभीयै । हलादौ किम् ? बिभ्यति । क्ङिति किम् ? बिभेति । केचिदत्र हलादौ क्ङितीत्येतन्नातीवोपयुज्यते, इत्वविधानस्य बिभित इत्यादौ चरितार्थत्वात्, बिभ्यति बिभेतीत्यादौ यणादेः प्रवृत्तिसंभवादित्याहुः ॥ २४९३ अर्तिपिपर्त्योश्च । अर्तेरुदाहरणमियर्तीति वक्ष्यति ॥ २४९४ उदोष्ठ्य-। अङ्गावयवेति किम् ? ॠ गतौ । क्र्यादिस्तस्मात् क्तप्रत्यये 'श्र्युकः किति' इति इण्निषेधात् समीर्णे इति भवति । अन्यथा तु समूर्ण इति स्यात् ॥ २४९५ शॄदॄप्रां-। शॄ हिंसायाम् । दॄ विदारणे । इमौ क्र्यादी ॥—पक्षे गुण इति । 'ऋच्छत्यृताम्' इत्यनेन ॥—पप्रतुरिति । ह्रस्वपक्षे यण् ॥ ननु ह्रस्वग्रहणमिह मास्तु, गुणानुवृत्त्या तस्यैव विकल्पोऽस्तु । तथा च यणादेशेन पप्रतुः शश्रतुरित्यादि सिध्यत्येव । गुणपक्षे तु पपरतुः शशरतुरित्याद्यपि सिध्यतीति चेत् । मैवम् । गुणाभावपक्षे 'ॠत इद्धातोः' इतीत्वप्रसङ्गात् । न चान्तरङ्गत्वाद्यणेव स्यादिति वाच्यम् । वार्णादाङ्गस्य बलीयस्त्वात् । डुभृञ्-। 'ड्वितः क्त्रिः' । भृत्रिमम् ॥ २४९६ भृञामित् । णिजां त्रयाणामित्यतोऽनुवर्तनादाह—एषां त्रयाणामिति । केचित्तु कपिञ्जलाधिकरणन्यायेन त्रयाणामिति लभ्यत इत्याहुः । त्रयाणां किम् ? जहाति । श्लौ किम् ? बभार ॥ २४९७ ई हल्यघोः । श्नाभ्यस्तयोरिति । लुनीते । पुनीते । क्ङितीति किम् ? लुनाति । अघोः किम् ? धत्तः । दत्तः ॥—मिमीते इति । 'घुमास्था-' इतीत्वमिह न प्रवर्तते, तत्रार्धधातुक इत्यनुवृत्तेः । अन्यथा मातः, माथः, गाते, गासे-इत्यादावतिप्रसङ्गात् । अत एव काशिकायामुक्तम्-आर्धधातुक इत्यधिकारो 'न ल्यपि' इति योगं यावदिति ॥ २४९८ जहातेश्च । क्ङितीति किम् ? जहाति । सार्वधातुके किम् ? हीयते ॥ २४९९ चादिदीताविति । अत एव भट्टिः प्रायुङ्क्त—'जहिहि जहीहि जहाहि रामभार्याम्' इति ॥ २५०० लोपो यि । सार्वेति किम् ? हेयात् ॥—प्रणिददातीति । 'नेर्गद-' इति णत्वम् ॥—दत्त इति । 'श्नाभ्यस्तयोः' इत्यालोपः । अघोरित्युक्तत्वादीत्वं तु न ॥—अदादिति । 'गातिस्था-' इति सिचो लुक् ॥ २५०१ दधस्तथोश्च । दध इति कृतद्विर्वचनाभ्यासकार्यो धात्वेव गृह्यते, न तु दध धारण इत्ययमिति व्याचष्टे—द्विरुक्तस्येति ।—झषन्तस्य

न्तस्य धातो बशो भष् स्यात्तथयोः स्ध्वोश्च परतः । 'वचनसामर्थ्यादालोपो न स्थानिवत्' इति वामनमाधवौ । वस्तुतस्तु 'पूर्वत्रासिद्धीये न स्थानिवत्' । धत्तः । दधति । धत्थः । धत्थ । दध्वः । दध्मः । धत्ते । धत्से । धद्ध्वे । धेहि । अधित ।

अथ त्रयः स्वरितेतः ॥ ११६८ णिजिर् शौचपोषणयोः ।

२५०२ । निजां त्रयाणां गुणः श्लौ ।७।४।७५। निज्-विज्-विषामभ्यासस्य गुणः स्यात् श्लौ । नेनेक्ति । नेनिक्तः । नेनिजति । निनेज । नेक्ता । नेक्ष्यति । नेनेक्तु । नेनिग्धि ।

२५०३ । नाभ्यस्तस्याचि पिति सार्वधातुके ।७।३।८७। लघूपधगुणो न स्यात् । नेनिजानि । अनेनेक् । अनेनिक्ताम् । अनेनिजुः । नेनिज्यात् । निज्यात् । अनिजत्, अनैक्षीत् । अनिक्त । ११६९ विजिर् पृथग्भावे । वेवेक्ति । वेविक्ते । विवेजिथ । अत्र 'विज इट्' २५३६ इति ङित्त्वं न, ओविजी इत्यस्यैव तत्र ग्रहणात् । 'णिजिविजी' रुधादावपि । ११७० विष्लृ व्याप्तौ । वेवेष्टि । वेविष्टे । लृदित्त्वादङ्, अविषत् । तङि क्सः । अजादौ 'क्सस्याचि' २३३७ इति अल्लोपः । अविक्षत । अविक्षाताम् । अविक्षन्त ।

अथ आगणान्ताः परस्मैपदिनश्छान्दसाश्च ॥ ११७१ घृ क्षरणदीप्त्योः । 'जिघर्म्यग्निं हविषा घृतेन' । 'भृञामित्' २४९६ 'बहुलं छन्दसि' ४५९८ इति इत्वम् । ११७२ हृ प्रसह्यकरणे । 'अयं स्रुवो अभिजिहर्ति होमान्' ११७३ ऋ ११७४ सृ गतौ । 'बहुलं छन्दसि' ३५९६ इत्येव सिद्धे 'अर्तिपिपर्त्योश्च' २४९३ इतीत्वविधानादयं भाषायामपि । 'अभ्यासस्यासवर्णे' २२९० इतीयङ्, इयर्ति । इयृतः । इय्रति । आर । आरतुः । 'इडत्त्यर्ति-' २३८४ इति नित्यमिट्, आरिथ । अर्ता । अरिष्यति । इयराणि । ऐयः । ऐयृताम् । ऐयरुः । इयृयात् । अर्यात् । आरत् । ससर्ति । ११७५ भस भर्त्सनदीप्त्योः । बभस्ति । 'घसिभसोर्हलि च' ३५४८ इत्युपधालोपः, 'झलो झलि' २२८१ इति सलोपः, बब्धः । बप्सति । ११७६ कि ज्ञाने । चिकेति । ११७७ तुर त्वरणे । तुतोर्ति । तुतूर्तः । तुतुरति । ११७८ धिष शब्दे । दिधेष्टि । दिधिष्टः । ११७९ धन धान्ये । दधन्ति । दधन्तः । दधनति । ११८० जन जनने । जजन्ति ।

२५०४ । जनसनखनां सञ्झलोः ।६।४।४२। एषामाकारोऽन्तादेशः स्याज्झलादौ सनि झलादौ क्ङिति च । जजातः । जज्ञति । जजंसि । जजान । जजन्यात्, जजायात् । जन्यात्, जायात् । ११८१ गा स्तुतौ । 'देवाञ्जिगाति सुम्नयुः' । जिगीतः । जिगति ।

इति जुहोत्यादयः ।

## अथ तिङन्ते दिवादयः ।

११८२ दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु । शृषन्ताः परस्मैपदिनः ।

२५०५ । दिवादिभ्यः श्यन् ।३।१।६९। शपोऽपवादः । 'हलि च' ३५४ इति दीर्घः । दीव्यति । दिदेव । देविता । देविष्यति । दीव्यतु । अदीव्यत् । दीव्येत् । दीव्यात् । अदेवीत् । अदेविष्यत् । ११८३ षिवु तन्तुसन्ताने । परिषीव्यति । परिषिषेव । न्यषेवीत्, न्यसेवीत् । ११८४ स्रिवु गतिशोषणयोः । ११८५ ष्ठिवु

किम् ? दधाति ॥ नन्वेवं 'धत्ते' इत्यादावपि न स्यादालोपस्य स्थानिवत्त्वेनाझषन्तत्वादत आह—वचनसामर्थ्यादिति । २५०२ निजाम्—। श्लाविति किम् ? निनेज ॥ २५०३ नाभ्यस्तस्य—। अभ्यस्तस्य किम् ? द्वेपाणि । अचि किम् ? वेवेष्टि । पिद्ग्रहणम् 'उतो वृद्धिर्लुकि हलि' इत्युत्तरार्थम् । सार्वेति किम् ? निनेज ॥—बहुलं छन्दसीतीत्वमिति । एतच पूर्वोत्तरान्वयि ॥—इयर्तीति । अभ्यासस्य इयङ्, अभ्यासादुत्तरस्य तु गुणः ॥—इय्रतीति । 'अदभ्यस्तात्' इत्यत् ॥—अर्यादिति । 'गुणोऽर्ति-' इति गुणः ॥—आरदिति । 'सर्तिशास्ति-' इत्यङि 'ऋदृशोऽङि-' इति गुणः ॥—बब्ध इति । तसस्तकारस्य 'झषस्तथोः-' इति धत्वम् ॥—तुतूर्त इति । 'हलि च' इति दीर्घः । धन धान्ये । धान्यार्जन इत्यर्थः ॥—दधन्त इति । छान्दसत्वात् 'अनुनासिकस्य-' इति दीर्घो नेत्याहुः ॥ २५०४ जनसनखनाम्—। जन जनने, जनी प्रादुर्भावे इत्युभयोरपि ग्रहणम् । झलादौ सनि-सिषासति ॥—जज्ञतीति । 'गमहन-' इत्युपधालोपः । —जजायादिति । 'ये विभाषा' इति वा आत्वम् । एवं जायादित्यत्रापि ॥—जिगातीति । 'बहुलं छन्दसि' इति इत्वम् ॥ इति जुहोत्यादिप्रकरणम् ॥

दिवु क्रीडा—। उदित्करणं दस्त्वागमिति... निष्ठायामनिडर्थं च । देवित्वा । द्यूत्वा । द्यूतम् । क्रीडायाम्-दीव्यन्ति माणवकाः । विजिगीषायाम्-शत्रुं दीव्यति । विजिगीषते इत्यर्थः । कान्तिरिच्छा, द्युतेः पृथग्ग्रहणात् ॥ २५०५ षिवु ॥—परिषिषेवेति । 'स्थादिष्वभ्यासेन-' इति नियमो नेह प्रवर्तते, तत्र 'प्राक् सितात्' इत्यनुवृत्तेः । अस्य चाप्राक्सितीयत्वात् । तेनाभ्यासस्य षत्वं 'परिनिविभ्यः-' इत्यनेन भवत्येव ॥—न्यषेवीदिति । 'सिवादीनां वा-' इति विकल्पः । नृती । ईदित्करणं 'श्वीदित-' इति निष्ठायामिण्निषेधार्थम् । यद्यपि 'सेसिचि-' इति इटो विकल्पितत्वात् 'यस्य विभाषा' इत्यनेनैवेट् सिध्यति, तथापि 'यस्य विभाषा' इत्यस्यानित्यत्वज्ञापनार्थमीदित्करणं, तेन 'धावितमिभराजधिया' इत्यादि

निर सने । केचिदिहेमं न पठन्ति । ११८६ ष्णुसु अदने । 'आदाने' इत्येके । 'अदर्शने' इत्यपरे । स्नुस्यति । सुष्णोस । ११८७ ष्णसु निरसने । स्नस्यति । सस्नास । ११८८ क्नसु ह्वरणदीप्त्योः । ह्वरणं कौटिल्यम् । चक्नास । ११८९ व्युष दाहे । वुव्योष । ११९० प्लुष च । ११९१ **नृती** गात्रविक्षेपे । नृत्यति । ननर्त ।

२५०६ । **सेऽसिचि कृतचृतच्छृदतृदनृतः** ।७।२।५७। एभ्यः परस्य सिज्भिन्नस्य सादेरार्धधातुकस्येड्वा स्यात् । नर्तिष्यति, नर्त्स्यति । नृत्येत् । नृत्यात् । अनर्तीत् । ११९२ **त्रसी** उद्वेगे । 'वा भ्राश–' २३२१ इति श्यन्वा, त्रस्यति, त्रसति । त्रेसतुः, तत्रसतुः । ११९३ **कुथ** पूतीभावे । पूतीभावो दौर्गन्ध्यम् । ११९४ **पुथ** हिंसायाम् । ११९५ **गुध** परिवेष्टने । ११९६ **क्षिप** प्रेरणे । क्षिप्यति । क्षेप्ता । ११९७ **पुष्प** विकसने । पुष्प्यति । पुपुष्प । ११९८ **तिम** ११९९ **ष्टिम** १२०० **ष्टीम** आर्द्रीभावे । तिम्यति । स्तिम्यति । स्तीम्यति । १२०१ **व्रीड** चोदने लज्जायां च । व्रीड्यति । १२०२ **इष** गतौ । इष्यति । १२०३ **षह** १२०४ **षुह** चक्यर्थे । चक्यर्थ-स्तृप्तिः । सह्यति । सुह्यति । १२०५ **जॄष्** १२०६ **झॄष्** वयोहानौ । जीर्यति । जजरतुः, जेरतुः । जरिता, जरीता । जीर्येत् । जीर्यात् । 'जॄस्तम्भु–' २२९१ इत्यङ्वा, 'ऋदृशोऽङि गुणः' २४०६, अजरत् , अजारीत् । अजारिष्टाम् । झीर्यति । जझरतुः । अझारीत् । १२०७ **षूङ्** प्राणिप्रसवे । सूयते । सुषुवे । 'स्वरतिसूति–' २२७९ इति विकल्पं बाधित्वा 'श्र्युकः किति' २३८१ इति निषेधे प्राप्ते क्रादिनियमान्नित्य-मिट्, सुषुविषे । सुषुविवहे । सोता, सविता । १२०८ **दूङ्** परितापे । दूयते । १२०९ **दीङ्** क्षये । दीयते ।

२५०७ । **दीङो युडचि क्ङिति** ।६।४।६३। दीङः परस्याजादेः क्ङित आर्धधातुकस्य युट् स्यात् । ॐ **वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ** । दिदीये ।

२५०८ । **मीनातिमिनोतिदीङां ल्यपि च** ।६।१।५०। एषामात्वं स्यात् ल्यपि, चकारादशित्येज्निमित्ते । दाता । दास्यते । अदास्त । अदास्थाः । १२१० **डीङ्** विहायसा गतौ । डीयते । डिड्ये । १२११ **धीङ्** आधारे । धीयते । दिध्ये । धेता । १२१२ **मीङ्** हिंसायाम् । हिंसाऽत्र प्राणवियोगः । मीयते । १२१३ **रीङ्** श्रवणे ।

---

सिद्धम् ॥ **२५०६ सेऽसिचि–** ॥–**नर्तिष्यति । नर्त्स्यतीति** । निनर्तिषति । निनृत्सति । कर्तिष्यति । कर्त्स्यति । चिकर्तिषति । चिकृत्सति । इत्यादि ज्ञेयम् ॥–**अनर्तीदिति** । असिचीत्युक्तत्वादिह नित्यमिट् ॥–**त्रेसतुरिति** । 'वा जॄभ्रमुत्रसाम्' इत्येत्वाभ्यासलोपौ । **कुथ** । **पूतीभावः**–पवित्रीभवनम् । कुथ्यति भूमिः । पवित्रीभवतीत्यर्थः । **पुष्प** विकसने । 'कालात्साधुपुष्प्यत्पच्यमानेषु–' इति सूत्रे पुष्प्यत्–इति शत्रन्तः । पचाद्यचि–पुष्पम् । संज्ञायां कन्, पुष्पकम् । **व्रीड** । 'गुरोश्च हलः' इत्यप्रत्यये टाप्, व्रीडा । घञि तु–व्रीडः । अत एव 'व्रीडमावहति मे स संप्रति' इति कालिदासः । 'व्रीडादिवाभ्यासगतैर्विलिल्ये' इति माघश्च । **षह षुह** । 'परिनिविभ्यः–' इत्यत्र तु सहेत्यकार उच्चारणार्थ इति षत्वमिह भवति । परिषह्यति । 'तीषसह–' इतीड्विकल्पस्तु नास्य भवति, सहेति शबन्तनिर्देशात्, किं तु 'षह मर्षणे' इत्यस्यैव स **इत्यात्रेयादयः** । सहेति निर्देशस्योभयत्र तुल्यत्वे 'तीषसह–' इत्यत्र शपा निर्देशः, 'परिनिविभ्यः–' इत्यत्र तु नेत्यर्धजरतीयमिदं हेयमेव । **तत्त्वं** तु प्रयोगमनुसृत्य महद्भिरेव निर्धार्यम् । नपुंसके भावे क्तः, सुहितं तृप्तिः । अत एव 'पूरणगुण–' इति सूत्रे सुहितार्थास्तृप्त्यर्था इति व्याख्यातम् ॥–**जेरतुरिति** । 'ऋच्छत्यॄताम्' इति गुणे कृते 'न शसदद–' इति गुणशब्देन भावितस्य निषेधात् 'अत एकहल्मध्ये' इत्यप्रवृत्तौ 'वा जॄभ्रमुत्रसाम्' इत्येत्वाभ्यासलोपविकल्पः । **षूङ्** । **प्रसवः**–उत्पत्तिः । मृत्पिण्डो घटं सूयत इत्यादिप्रयोगाभावात्**प्राणी**त्युक्तम् । 'स्वादय ओदितः' इति वक्ष्यमाणत्वात् 'ओदितश्च' इति निष्ठातस्य नत्वम् । प्रसूनम् ॥–**विकल्पमिति** । परमपीति शेषः ॥–**निषेधे प्राप्ते इति** । पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादिति भावः ॥ **२५०७ दीङो–** । पञ्चमीत्यभिप्रायेण व्याचष्टे–**परस्येति** ॥–**अजादेरिति** । 'ङः सि–' इत्यत्रेव 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति सप्तम्याः षष्ठीकल्पनम् । अचि किम् ? देदीयते । क्ङितीति किम् ? उपदानम् ॥ आभीयत्वेनासिद्धत्वमाशङ्क्याह–**वुग्युटाविति**– ॥–**दिदीये इति** । परमपि यणं बाधित्वा नित्यत्वादादौ युट् । सति तु यणि ईकारस्य श्रवणं न स्यादिति युटः सिद्धत्वमुक्तम् ॥ **२५०८ मीनाति–** । मीञ् हिंसायाम् । डुमिञ् प्रक्षेपणे । प्रमाय । उपदाय । प्रमातव्यम् । उपदातव्यम् । एज्निमित्त इति विषयसप्तमी । तेन आदावात्वं पश्चाद्ल्यप् 'आतो युक्' इति युक् । उपदाय इति सिध्यति । अन्यथा एरचि कृते तत आत्वे उपदा इति स्यात् ॥–**अदास्तेति** । 'दीङः प्रतिषेधः स्थाघ्वोरित्वे' इति न घुत्वमिति 'अदित' इति रूपं न भवतीत्येके । अन्ये तु 'स्थाघ्वोरिच्च' इत्येतत्तु न भवति, दीङोऽनुकरणे दारूपासंभवेनाघुत्वात् । अत एव प्रनिदातेत्यादौ 'नेर्गद–' इति णत्वमपि न भवतीत्याहुः । **अयं भावः**–'दो अवखण्डने' इत्यादेर्दारूपत्वं संभवति । 'आदेच उपदेशे–' इत्यस्यानैमित्तिकत्वात् । दीङस्तु एज्निमित्तप्रत्ययविषये आत्वं, 'दा' इत्यनुकरणे एज्निमित्तस्याभावित्वान्न घुत्वम् । एवं च घुप्रकृतित्वमपि नास्तीति णत्वस्याप्रसक्तिरिति । **डीङ्** । डीनः । डीनवान् । स्वादिषु पाठसामर्थ्यान्निष्ठायामिण्न । इटि हि सति व्यवधानात् 'ओदितश्च' इति नत्वं न स्यादिति । स्वादिषु पाठसामर्थ्यादिड्व्यवधानेऽपि णत्वमस्त्विति न शङ्क्यम्, इष्टानुरोधात् । 'डयितः' इति प्रयोगस्तु भौवादिकस्य । 'निष्ठा शीङ्–' इत्यत्र निष्ठेति योगविभागादकित्वे गुण इत्याहुः । **मीङ् हिंसायाम्** । मीञ् इति क्र्यादौ ॥–**प्राणवियोग इति** । मीयते–प्राणैर्वियुज्यत

रीयते । १२१४ लीङ् श्लेषणे ।

२५०९ । **विभाषा लीयतेः** ।६।१।५१। लीयतेरिति यका निर्देशो न तु श्यना । लीलीङोरात्वं वा स्यादेज्विषये ल्यपि च । लेता, लाता । लेष्यते, लास्यते । एज्विषये किम् । लीयते । लिल्ये । १२१५ व्रीङ् वृणोत्यर्थे । व्रीयते । विव्रिये । (ग) स्वादय ओदितः । तत्फलं तु निष्ठानत्वम् । १२१६ पीङ् पाने । पीयते । १२१७ माङ् माने । मायते । ममे । १२१८ ईङ् गतौ । ईयते । अयांचक्रे । १२१९ प्रीङ् प्रीतौ । सकर्मकः । प्रीयते । पिप्रिये ।

अथ परस्मैपदिनश्चत्वारः ॥ १२२० शो तनूकरणे ।

२५१० । **ओतः श्यनि** ।७।३।७१। लोपः स्यात् श्यनि । श्यति । श्यतः । श्यन्ति । शशौ । शशतुः । शाता । शास्यति । 'विभाषा घ्राधेट्–' २३७६ इति सिचो वा लुक्, लुगभावे 'यमरम–' २३३७ इतीट्सकौ, अशात् । अशाताम् । अशुः । अशासीत् । अशासिष्टाम् । १२२१ छो छेदने । छ्यति । १२२२ षोऽन्तकर्मणि । स्यति । ससौ । अभिष्यति । अभ्यष्यत् । अभिससौ । १२२३ दो अवखण्डने । द्यति । ददौ । प्रणिदाता । देयात् । अदात् ।

अथात्मनेपदिनः पञ्चदश ॥ १२२४ जनी प्रादुर्भावे ।

२५११ । **ज्ञाजनोर्जा** ।७।३।७९। अनयोर्जादेशः स्याच्छिति । जायते । जज्ञे । जज्ञाते । जज्ञिरे । जनिता । जनिष्यते । 'दीपजन–' २३२८ इति वा चिण्,

२५१२ । **जनिवध्योश्च** ।७।३।३५। अनयोरुपधाया वृद्धिर्न स्याच्चिणि, ञिति णिति कृति च । अजनि, अजनिष्ट । १२२५ दीपी दीप्तौ । दीप्यते । दिदीपे । अदीपि, अदीपिष्ट । १२२६ पूरी आप्यायने । पूर्यते । अपूरि । अपूरिष्ट । १२२७ तूरी गतित्वरणहिंसनयोः । तूर्यते । तुतूरे । १२२८ धूरी १२२९ गूरी हिंसागत्योः । धूर्यते । दुधूरे । गूर्यते । जुगूरे । १२३० घूरी १२३१ जूरी हिंसावयोहान्योः । १२३२ शूरी हिंसास्तम्भनयोः । १२३३ चूरी दाहे । १२३४ तप ऐश्वर्ये वा । अयं धातुरैश्वर्ये मा तङ्श्यनौ लभते । अन्यदा तु शब्विकरणः परस्मैपदीत्यर्थः । केचित्तु वाग्रहणं वृतुधातोराद्यवयवमिच्छन्ति । तप्यते । तप्ता । तप्स्यते । १२३५ पत इति व्यत्यासेन पाठान्तरम् । 'द्युत द्यामानि युतः पत्यमानः' । १२३६ वृतु वरणे । वृत्यते । पक्षान्तरे–वावृत्यते । 'ततो वावृत्यमाना सा रामशालां न्यविक्षत' इति भट्टिः । १२३७ क्लिश उपतापे । क्लिश्यते । क्लेशिता । १२३८ काशृ दीप्तौ । काश्यते । १२३९ वाशृ शब्दे । वाश्यते । ववाशे ।

अथ पञ्च स्वरितेतः ॥ १२४० मृष तितिक्षायाम् । मृष्यति । मृष्यते । ममर्ष । ममृषे । १२४१ ईशुचिर् पूतीभावे । पूतीभावः क्लेदः । शुच्यति । शुच्यते । शुशोच । शुशुचे । अशुचत्, अशोचीत् । अशोचिष्ट । १२४२ णह बन्धने । नह्यति । नह्यते । ननाह । ननद्ध, नेहिथ । नेहे । नद्धा । नत्स्यति । अनात्सीत् । १२४३ रञ्ज रागे । रज्यति । रज्यते । १२४४ शप आक्रोशे । शप्यति । शप्यते ।

अथैकादशानुदात्तेतः ॥ १२४५ पद गतौ । पद्यते । पेदे । पत्ता । पद्येत । पत्सीष्ट ।

२५१३ । **चिण् ते पदः** ।३।१।६०। पदश्च्लेश्चिण्

---

इत्यर्थः । **लीङ्** । ली श्लेषण इति क्र्यादौ ॥ **२५०९ यकेति** । 'सार्वधातुके यक्' इति विहितेन ॥—**न तु श्यनेति** । अन्यथा '**लीङः**' इत्येव ब्रूयादिति भावः । यका निर्देशस्य फलमाह—**लीलीङोरिति** । ल्यपि–विलाय, विलीय । **व्रीङ्** । वृणोत्यर्थः–वरणम्, वृञ् वरण इति स्वादौ पठिष्यमाणत्वात् । वरणे इति वक्तव्ये वृणोत्यर्थ इति वचनं वैचित्र्यार्थम् । व्री वरण इति क्र्यादौ । **माङ्** ॥—**मायत इति** । 'घुमास्था–' इतीत्वं तु न, तत्रार्धधातुक इत्यधिकारात् ॥ **२५१० षोऽन्त** ।—**अन्तकर्म**–नाशनम् । 'राघव स्य शरैर्घोरैर्घोरं रावणमाहवे' इति । राघवेति संबुद्ध्यन्तम् । स्येति लोण्मध्यमैकवचनम् ॥—**अभिष्यतीति** । 'उपसर्गात्सुनोति–' इति षत्वम् ॥—**अभ्यष्यदिति** । 'प्राक्सितादड्व्यवायेऽपि' इति षत्वम् ॥—**अभिससाविति** । 'स्थादिषु–' इति नियमान्न षत्वम् । **दो** अवखण्डने । अवेत्युपसर्गप्रयोगो वैचित्र्यार्थः, खण्डने इत्येतावत्युक्तेऽपीष्टसिद्धेः ॥—**प्रणिदातेति** । 'नेर्गद–' इति णत्वम् ॥—**देयादिति** । 'एर्लिङि' इत्येत्वम् ॥—**अदादिति** । 'गातिस्था–' इति सिचो लुक् ॥ **२५११ ज्ञाजनोर्जा** । जानाति । शिति किम् ? ज्ञाता । ज इति ह्रस्वोच्चारणेऽपि 'अतो दीर्घो यञि' इति दीर्घे सिद्धे जाग्रहणमङ्गवृत्तपरिभाषाज्ञापनार्थम् । तेन पाधातोः पिबादेशे कृते गुणो न भवति । पिबादेशस्यादन्तत्वाश्रयणं तूपायान्तरमित्याहुः ॥ **२५१२ ञिति णिति कृति चेति** । ञिति कृत्युदाहरणं–घञि–जनः । णिति कृति तु—जनकः । जनयतीत्यत्रोपधावृद्धौ सत्यां 'जनीजॄष्–' इति मित्त्वात् 'मितां ह्रस्वः' इति ह्रस्वः । **दीपी** दीप्तौ । ईदित्त्वान्निष्ठायामिण्न, दीप्तः । एवं 'पूरी' इत्यादेरीदित्त्वात्पूर्ण इत्यादि ज्ञेयम् ॥—**केचित्त्विति** । तेषां मते ऐश्वर्ये तप्यते इत्येव प्रयोगो न तु तपतीति ॥—**न्यविक्षतेति** । निपूर्वाद्विशतेर्लुङि 'शल इगुपधा–' इति क्सः । 'नेर्विशः' इति तङ् । **वाशृ** शब्दे । 'मन्दिवाशि–' इत्युरच् । वाशुरा रात्रिः ॥—**तितिक्षायामिति** । 'गुप्तिज्किद्भ्यः–' इति सन् । तत्र हि 'तिजेः क्षमायामि'त्युक्तम् । **ईशुचिर्** । ईदित्त्वान्नेट्, शुक्तम् । क्लिन्नमित्यर्थः ॥—**ननद्धेति** । 'नहो धः' इति धत्वम् ॥ **२५१३ चिण्**

स्यात्तशब्दे परे । प्रण्यपादि । अपत्सातामू । अपत्सत । १२४६ खिद दैन्ये । खिद्यते । चिखिदे । खेत्ता । अखित्त । १२४७ विद सत्तायाम् । विद्यते । वेत्ता । १२४८ बुध अवगमने । बुध्यते । बुबुधे । बोद्धा । भोत्स्यते । भुत्सीष्ट । अबोधि । अबुद्ध । अभुत्साताम् । १२४९ युध संप्रहारे । युध्यते । युयुधे । योद्धा । अयुद्ध । कथं युध्यतीति ? युधमिच्छतीति क्यच् ॥ '(प) अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति वा' । १२५० अनो रुध कामे । अनुरुध्यते । १२५१ अण प्राणने । अण्यते । आणे । आणिता । १२५२ 'अन' इति दन्त्यान्तोऽयमित्येके । १२५३ मन ज्ञाने । मन्यते । मेने । मन्ता । १२५४ युज समाधौ । समाधिश्चित्तवृत्तिनिरोधः । अकर्मकः । युज्यते । योक्ता । १२५५ सृज विसर्गे । अकर्मकः । 'संसृज्यते सरसिजैररुणांशुभिन्नैः' । ससृजिषे । स्रष्टा । स्रक्ष्यते । 'लिङ्सिचौ–' २३०० इति कित्त्वान्न गुणो नाप्यम्, सृक्षीष्ट । असृष्ट । असृक्षाताम् । १२५६ लिश अल्पीभावे । लिश्यते । लेष्टा । लेक्ष्यते । लिक्षीष्ट । अलिक्षत । अलिक्षाताम् ।

**अथागणान्ताः परस्मैपदिनः** ॥ १२५७ राधोऽकर्मकाद्वृद्धावेव । एवकारो भिन्नक्रमः । राधोऽकर्मकादेव श्यन् । उदाहरणमाह–वृद्धाविति । यन्मह्यमपराध्यति । द्रुह्यतीत्यर्थः । विराध्यन्तं क्षमेत कः । द्रुह्यन्तमित्यर्थः राध्यत्योदनः । सिध्यतीत्यर्थः । कृष्णाय राध्यति । दैवं पर्यालोचयतीत्यर्थः । दैवस्य धात्वर्थेऽन्तर्भावाज्जीवत्यादिवदकर्मकत्वम् । रराध । रराधतुः । रराधिथ । 'राधो हिंसायाम्' २५२२ इत्येत्वाभ्यासलोपाविह न, हिंसार्थस्य सकर्मकतया दैवादिकत्वायोगात् । राद्धा । रात्स्यति । अयं स्वादिश्चुरादिश्च । १२५८ व्यध ताडने । 'ग्रहिज्या–' २४१२ इति संप्रसारणम् । विध्यति । विव्याध । विविधतुः । विव्यद्ध, विव्यधिथ । व्यद्धा । व्यत्स्यति । विध्येत् । विध्यात् । अव्यात्सीत् । १२५९ पुष पुष्टौ । पुष्यति । पुपोष । पुपोषिथ । पोष्टा । पोक्ष्यति । 'पुषादि–' २३४३ इत्यङ्, अपुषत् । १२६० शुष शोषणे । अशुषत् । १२६१ तुष प्रीतौ । १२६२ दुष वैकृत्ये । १२६३ श्लिष आलिङ्गने । श्लिष्यति । शिश्लेष । श्लेष्टा । श्लेक्ष्यति ।

(१) २५१४ । श्लिषः—अस्मात्परस्यानिटश्च्लेः क्सः स्यात् । पुषाद्यङोऽपवादः, न तु चिणः, पुरस्तादपवादन्यायात् ।

(२) २५१४ । आलिङ्गने ।३।१।४६। श्लिषश्च्लेरालिङ्गन एव क्सो नान्यत्र । योगविभागसामर्थ्यात् 'शल इगुपधात्–' २३३६ इत्यस्याप्ययं नियमः । 'अश्लिक्षत्कन्यां देवदत्तः' । आलिङ्गन एवेति किम् । समश्लिषज्जतु काष्ठम्, अङ् । प्रत्यासत्ताविह श्लिषिः । कर्मणि अनालिङ्गने सिजेव, न तु क्सः । एकवचने चिण्, अश्लेषि । अश्लिक्षाताम् । अश्लिक्षत । अश्लिष्ठाः । अश्लिड्ढ्वम् । १२६४ शक विभाषितो मर्षणे । 'विभाषितः' इत्युभयपदीत्यर्थः । शक्यति, शक्यते वा हरिं द्रष्टुं भक्तः । शशाक । शेकिथ, शशक्थ । शेके । शक्ता । शक्ष्यति । शक्ष्यते । अशकत् । अशक्त । सेट्कोऽयमित्येके । तन्मतेनानिट्कारिकासु लृदित्पठितः । शकिता । शकिष्यति । १२६५ ष्विदा गात्रप्रक्षरणे । घर्मस्रुताविल्यर्थः । 'अयं जीत्' इति न्यासकारादयः । नेति हरदत्ता-

---

ते पदः ॥—**तशब्द इति** । सामर्थ्यादात्मनेपदप्रथमपुरुषैकवचनम् । तशब्दे किम् ? अपत्थाः ॥—**प्रण्यपादीति** । 'चिणो लुक्' इति तशब्दस्य लुक् । 'नेर्गद–' इति णत्वम् ॥—**अबोधीति** । 'दीपजनबुध–' इति चिण् । **अनो रुध कामे** । अनोः परो रुधधातुः कामे । **कामः**—इच्छा । दिवादिषु पाठसामर्थ्यात् 'रुधादिभ्यः–' इति श्नमं बाधित्वा श्यन् ॥—**नाप्यमिति** । 'सृजिदृशोर्झल्यमकिति' इत्यकित्येव विधानात् । **लिश** । आतपादिनाऽनल्पस्य अल्पभावः–अल्पीभावः ॥—**लिक्षीष्टेति** । 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वान्न गुणः ॥—**अलिक्षतेति** । 'शल इगुपधाद्–' इति क्सः ॥—**राधोऽकर्मकात्**—। भिन्नक्रमं दर्शयति—**अकर्मकादेवेति** । राधो वृद्धावेव श्यन्निति व्याख्यायामकर्मकादिति विशेषणं व्यर्थं स्यात्, वृद्धावस्याकर्मकत्वात् । अकर्मकात्किम् ? शत्रुमपराध्नोति । हिनस्तीत्यर्थः । राध संसिद्धाविति स्वादौ । 'राधो हिंसायाम्' इत्यनुवादाद्धिंसायामप्ययम् ॥—**उदाहरणमाहेति** । अकर्मकत्वप्रयोजकस्य यस्य कस्यचिदर्थस्येति भावः । अकर्मके श्यन्नन्तस्य प्रयोगान्दर्शयति—**यन्मह्यमित्यादिना** ॥—**कृष्णायेति** । 'राधीक्ष्योः–' इति चतुर्थी ॥ —**अपुषदिति** । ङित्त्वाद्गुणाभावः । **शुष** । शोष्टा । शोक्ष्यति ॥—'श्लिष आलिङ्गने' इति सूत्रं योगविभागेन व्याचष्टे —**श्लिष इति** ॥ **२५१४ अनिटश्च्लेः क्स इति** । एतच्च 'च्लेः सिच्', 'शल इगुपधात्–' इत्यतोऽनुवर्तत इति भावः । अनिटः किम् ? 'श्लिषु दाहे' इति भौवादिकस्य सेटो माभूत् । अश्लेषीत् । 'शल इगुपध–' इति सिद्धे पुनः क्सविधेः फलमाह—**पुषाद्यङिति** ॥—**सामर्थ्यादिति** । यदि हि 'श्लिषः' इति प्राप्त एव क्सो नियम्येत तर्हि योगविभागो व्यर्थः स्यादिति भावः ॥—**शल इगुपधादित्यस्यापीति** । तेन कर्मणि आतांप्रभृतिष्वनालिङ्गने सिजेव भवति, न तु क्सः । समाश्लिक्षत जतूनि काष्ठैरिति । क्सप्रत्यये सति तु समाश्लिक्षन्तेति स्यादिति भावः ॥—**प्रत्यासत्ताविति** । आलिङ्गनं हि प्राणिकर्तृकं न तु काष्ठादिकर्तृकमिति भावः । श्लिषश्च्लेरालिङ्गन एव क्स इति व्याख्यानस्य फलं दर्शयति—**कर्मणीत्यादिना** । अश्लिक्षातामित्यादौ यद्यपि क्ससिचोर्विशेषो नास्ति, 'क्सस्याचि' इत्यकारलोपात्; तथापि थासादावस्त्येव विशेष इति ध्वनयन्नुदाहरति—**अश्लिष्ठाः । अश्लिड्ढ्वमिति** ॥—**न्यासकारादय इति** । तथा च तन्मते 'जीतः क्तः' इति

दयः । खिद्यति । सिष्वेद । सिष्वेदिथ । स्वेत्ता । अस्विदत् । १२६६ क्रुध क्रोधे । क्रोद्धा । क्रोत्स्यति । १२६७ क्षुध बुभुक्षायाम् । क्षोद्धा । कथं 'क्षुधितः' इति? संपदादिक्विबन्तात्तारकादित्वादितजिति माधवः । वस्तुतस्तु 'वसतिक्षुधोः–' ३०४६ इतीट् वक्ष्यते । १२६८ शुध शौचे । शुध्यति । शुशोध । शोद्धा । १२६९ षिधु संराद्धौ । ऊदित्पाठः प्रामादिकः । सिध्यति । सेद्धा । सेत्स्यति । असिधत् । १२७० रध हिंसासंराद्ध्योः । संराद्धिर्निष्पत्तिः । रध्यति । 'रधिजभोरचि' २३०२ इति नुम्, ररन्धतुः ।

२५१५ । रधादिभ्यश्च ।७।२।४५। रध नश् तृप् दृप् द्रुह् मुह् ष्णुह् ष्णिह् एभ्यो वलाद्यार्धधातुकस्य वेट् स्यात् । ररन्धिथ, ररद्ध । ररन्धिव, रेध्व ।

२५१६ । नेट्यलिटि रधेः ।७।१।६२। लिड्वर्जे इटि रधेर्नुम्न स्यात् । रधिता, रद्धा । रधिष्यति, रत्स्यति । अङि नुम्, 'अनिदिताम्–' ४१५ इति नलोपः, अरधत् । १२७१ णश अदर्शने । नश्यति । ननाश । नेशतुः । नेशिथ ।

२५१७ । मस्जिनशोर्झलि ।७।१।६०। नुम् स्यात् । ननंष्ठ । नेशिव, नेश्व । नेशिम, नेश्म । नशिता, नंष्टा । नशिष्यति, नङ्क्ष्यति । नश्येत् । नश्यात् । अनशत् । प्रणश्यति ।

२५१८ । नशेः षान्तस्य ।८।४।३६। णत्वं न स्यात् । प्रनंष्टा । अन्तग्रहणं भूतपूर्वप्रतिपत्त्यर्थम् । प्रनङ्क्ष्यति । नशिष्यति । १२७२ तृप प्रीणने । प्रीणनं–तृप्तिस्तर्पणं च । 'नाग्निस्तृप्यति काष्ठानाम्' 'पितॄनताप्र्सीत्' इति भट्टिः, इत्युभयत्र दर्शनात् । ततर्पिथ, तत्रप्थ, ततर्प्थ । तर्पिता, तर्प्ता, त्रप्ता । '* स्पृशमृशकृष' इति सिज्वा, अताप्र्सीत्, अत्राप्सीत्, अतर्पीत्, अतृपत् । १२७३ दृप हर्षमोहनयोः । मोहनं गर्वः । दृप्यतीत्यादि ।

'रधादित्वादिमौ वेट्कावमर्थमनुदात्तता' ।

१२७४ द्रुह जिघांसायाम् । 'वा द्रुहमुह–' ३२७ इति वा घः । पक्षे ढः । दुद्रोग्ध, दुद्रोढ, दुद्रोहिथ । द्रोहिता, द्रोग्धा, द्रोढा । द्रोहिष्यति, ध्रोक्ष्यति । ढत्वघत्वयोस्तुल्यं रूपम् । अद्रुहत् । १२७५ मुह वैचित्ये । वैचित्यमविवेकः । मुह्यति । मुमोहिथ, मुमोग्ध, मुमोढ । मोग्धा, मोढा, मोहिता । मोहिष्यति, मोक्ष्यति । अमुहत् । १२७६ ष्णुह उद्गिरणे । स्नुह्यति । सुष्णोह । सुष्णोहिथ, सुष्णोग्ध, सुष्णोढ । सुष्णुहिव, सुष्णुह्व । स्नोहिता, स्नोग्धा, स्नोढा । स्नोहिष्यति, स्नोक्ष्यति । अस्नुहत् । १२७७ ष्णिह प्रीतौ । स्निह्यति । सिष्णेह । वृत् ॥ रधादयः समाप्ताः ॥ पुषादयस्तु आ गणान्तादिति सिद्धान्तः ।

१२७८ शमु उपशमे ।

२५१९ । शमामष्टानां दीर्घः श्यनि ।७।३।७४। शमादीनामित्यर्थः । प्रणिशाम्यति । शेमतुः । शेमिथ । शमिता । अशमत् । १२७९ तमु काङ्क्षायाम् । ताम्यति । तमिता । अतमत् । १२८० दमु उपशमे । 'उपशमे' इति ण्यन्तस्य । तेन सकर्मकोऽयम्, न तु शमिवदकर्मकः । अदमत् । १२८१ श्रमु तपसि खेदे च । श्राम्यति । अश्रमत् । १२८२ भ्रमु अनवस्थाने । 'वा भ्राश–' २३२१ इति श्यन्वा । तत्र कृते 'शमामष्टानाम्–' २५१९ इति दीर्घः । भ्राम्यति । लुङ्यङ्, अभ्रमत् । शेषं भ्वादिवत् । १२८३ क्षमू सहने । क्षाम्यति । चक्षमिथ, चक्षन्थ । चक्षमिव, चक्षण्व । चक्षमिम, चक्षण्म । क्षमिता, क्षन्ता । अयमषित् । भ्वादिस्तु षित् ।

अषितः–क्षाम्यति क्षान्तिः, क्षमूषः–क्षमते क्षमा ।

१२८४ क्लमु ग्लानौ । क्लाम्यति, क्लामति । शपीव श्यन्यपि 'ष्ठिवुक्लमु–' २३२० इत्येव दीर्घे सिद्धे शमादिपाठो घिनुणर्थः । अङ्, अक्लमत् । १२८५ मदी हर्षे । माद्यति । अमदत् ॥ शमादयोऽष्टौ गताः ।

१२८६ असु क्षेपणे । अस्यति । आस । असिता ।

२५२० । अस्यतेस्थुक् ।७।४।१७। अङि परे ।

---

वर्तमाने क्तो भवति । आदित्त्वान्निष्ठायां नेट्, खिन्नः । 'विभाषा भावादिकर्मणोः'—खिन्नम्, खेदितमित्यादि सिद्धम् । **षिधु** । संराद्धिर्निष्पत्तिः । 'उदितो वा' इति क्त्वायामिड्विकल्पः । इट्पक्षे 'रलो व्युपधात्–' इति वा कित्त्वम् । सिधित्वा । सेधित्वा । सिद्ध्वा ॥—**प्रामादिक इति** । ऊदित्त्वे त्वनुदात्तेषु सिध्यतेः पाठो व्यर्थः स्यादिति भावः ॥ **२५१५ रधादिभ्यश्च** । 'स्वरतिसूति–' इत्यतो वेत्यनुवर्तते । योगविभागो वैचित्र्यार्थः । गणनिर्देशाद्यङ्लुकि–'राराधिता' इत्येव, न तु रारद्धेति ॥ **२५१६ नेट्यलिटि**— । इटीति किम्? रन्धकः । अलिटीति किम्? ररन्धिव । नुमि कृते संयोगात्परत्वेन क्ङित्त्वाभावान्नलोपो न ॥ **२५१७ नंष्टेति** । 'नशेर्वा' इति कुत्वमिह न शङ्क्यं, पदान्त एव तद्विधानात् । अन्यथा नष्टं नष्टिरित्यादि न सिध्येत् ॥—**प्रणश्यतीति** । 'उपसर्गादसमासेऽपि–' इति णत्वम् ॥ **२५१८ नशेः** । 'न भाभूपूकमिगमि–' इत्यतो नेत्यनुवर्तते, तदाह—**णत्वं न स्यादिति** ॥ षस्येत्युक्तेऽपि पदस्येत्यस्य विशेषणेन षान्तस्येति लाभादन्तग्रहणं व्यर्थं सज्ज्ञापयतीत्याह—**भूतपूर्वेति** ॥—**काष्ठानामिति** । करणस्य शेषत्वविवक्षायां षष्ठी ॥—**तत्रप्थेति** । 'अनुदात्तस्य चर्दुपधस्य–' इति विकल्पेनामागमः ॥—**रधादय इति** । रधनशतृपदृपद्रुहमुहष्णुहष्णिह इत्यर्थः । **शमु** । उदित्त्वात्क्त्वायां वेट्, शमित्वा । शान्त्वा । 'यस्य विभाषा' इति निष्ठायामनिट्, शान्तः ॥ **२५१९ भ्रमु** अनवस्थाने ॥—**शेषमिति** । श्यनि–दीर्घः, लुङि–अङ् च विशेष उक्तस्ततोऽन्यदित्यर्थः ॥—**चक्षण्वेति** । 'म्वोश्च' इति मस्य नत्वे कृते णत्वम् ॥—**शमादिपाठ**

आस्थत्। अस्य पुषादित्वादङि सिद्धे 'अस्यतिवक्ति–'२४३८ इति वचनं तङर्थम्। तङ् तु—'उपसर्गादस्यत्यूह्योः–' इति वक्ष्यते। पर्यास्थत। १२८७ यसु प्रयत्ने।

२५२१। यसोऽनुपसर्गात् ।३।१।७१।

२५२२। संयसश्च ।३।१।७२। श्यन्वा स्यात्। यस्यति, यसति। संयस्यति, संयसति। अनुपसर्गात्किम्। प्रयस्यति। १२८८ जसु मोक्षणे। जस्यति। १२८९ तसु उपक्षये। १२९० दसु च। तस्यति। अतसत्। दस्यति। अदसत्। १२९१ वसु स्तम्भे। वस्यति। ववास। ववसतुः, 'न शसदद–' २२६३ इति निषेधः। बशादिरयमिति मते तु–बेसतुः। बेसुः। १२९२ व्युष विभागे। अयं दाहे पठितः। अर्थभेदेन त्वङर्थं पुनः पठ्यते। अव्युषत्। ओष्ठ्यादिर्दन्त्यान्तोऽयं १२९३ व्युस इत्यन्ये। अयकारः १२९४ वुस इत्यपरे। १२९५ प्लुष दाहे। अप्लुषत्। पूर्वत्र पाठः सिजर्थ इत्याहुः। तद् भ्वादिपाठेन गतार्थमिति सुवचम्। १२९६ बिस प्रेरणे। बिस्यति। अबिसत्। १२९७ कुस संश्लेषणे। अकुसत्। १२९८ बुस उत्सर्गे। १२९९ मुस खण्डने। १३०० मसी परिणामे। परिणामो विकारः। १३०१ समी इत्येके। १३०२ लुठ विलोडने। १३०३ उच समवाये। उच्यति। उवोच। ऊचतुः। मा भवानुचत्। १३०४ भृशु १३०५ भ्रंशु अधःपतने। बभर्श। अभृशत्। 'अनिदिताम्' ४१५ इति नलोपः, भ्रश्यति। अभ्रशत्। १३०६ वृश वरणे। वृश्यति। अवृशत्। १३०७ कृश तनूकरणे। कृश्यति। १३०८ ञितृषा पिपासायाम्। १३०९ हृष तुष्टौ। श्यन्नङौ भौवादिकाद्विशेषः। १३१० रुष १३११ रिष हिंसायाम्। 'तीषसह–' २३४० इति वेट्, रोषिता, रोष्टा। रेषिता, रेष्टा। १३१२ डिप क्षेपे। १३१३ कुप क्रोधे। १३१४ गुप व्याकुलत्वे। १३१५ युप १३१६ रुप १३१७ लुप विमोहने। युप्यति। रुप्यति। लुप्यति। लोपिता। लुप्यतिः, सेट्कः, अनिट्कारिकासु लिपिसाहचर्यात्तौदादिकस्यैव ग्रहणात्। १३१८ लुभ गार्ध्ये। गार्ध्यमाकाङ्क्षा। 'तीषसह–' २३४० इति वेट् लोभिता, लोब्धा। लोभिष्यति। लुभ्येत्। लुभ्यात्। अलुभत्। भ्वादेरवृत्करणात् 'लोभति' इत्यपीत्याहुः। १३१९ क्षुभ संचलने। क्षुभ्यति। १३२० णभ १३२१ तुभ हिंसायाम्। क्षुभिनभितुभयो द्युतादौ क्र्यादौ च पठ्यन्ते। तेषां द्युतादित्वादङ् सिद्धः। क्र्यादित्वात्पक्षे सिज्भवत्येव। इह पाठस्तु श्यनर्थः। १३२२ क्लिदू आर्द्रीभावे। क्लिद्यति। चिक्लेदिथ, चिक्लेत्थ। चिक्लिदिव, चिक्लिद्व। चिक्लिदिम, चिक्लिद्म। क्लेदिता, क्लेत्ता। १३२३ ञिमिदा स्नेहने। 'मिदेर्गुणः' २३४६। मेद्यति। अमिदत्। द्युतादिपाठादेव 'अमिदत्–अमेदिष्ट' इति सिद्धे इह पाठः 'अमेदीत्' इति माभूदिति। द्युतादिभ्यो बहिरेवात्मनेपदिषु पाठस्तूचितः। १३२४ ञिक्ष्विदा स्नेहनमोचनयोः। १३२५ ऋधु वृद्धौ। आनर्ध। आर्धत्। १३२६ गृधु अभिकाङ्क्षायाम्। अगृधत्। वृत्। पुषादयो दिवादयश्च वृत्ताः। केचित्तु पुषादिसमाप्त्यर्थमेव वृत्करणम्। दिवादिस्तु भ्वादिवदाकृतिगणः। तेन 'क्षीयते' 'मृग्यति' इत्यादिसिद्धिरित्याहुः॥ इति दिवादयः॥

---

## अथ तिङन्ते स्वादयः।

१३२७ षुञ् अभिषवे। अभिषवः–स्नपनं, पीडनं, स्नानं, सुरासंधानं च। तत्र स्नानेऽकर्मकः।

२५२३। स्वादिभ्यः श्नुः ।३।१।७३। सुनोति। सुनुतः। 'हुश्नुवोः–' २३८७ इति यण्। सुन्वन्ति। सुन्वः, सुनुवः। सुन्वहे, सुनुवहे। सुषाव। सुषुवे। सोता। सुनु। सुनवानि। सुनवै। सुनुयात्। सूयात्। 'स्तुसुधूञ्भ्यः–' २३८५ इतीट्, असावीत्। असोष्ट। अभिषुणोति। अभ्यषुणोत्। अभिसुषाव।

२५२४। सुनोतेः स्यसनोः ।८।३।११७। स्ये सनि च परे सुञः षो न स्यात्। विसोष्यति। १३२८ षिञ् बन्धने। सिनोति। विसिनोति। सिषाय। सिष्ये। सेता। १३२९ शिञ् निशाने। तालव्यादिः। शेता। १३३० डुमिञ् प्रक्षेपणे। 'मीनातिमिनोति–' २५०८ इत्यात्वम्। ममौ। ममिथ, ममाथ। मिम्ये। माता। मीयात्। मासीष्ट। अमासीत्। अमासिष्टाम्। अमास्त। १३३१ चिञ् चयने। प्रणिचिनोति।

२५२५। विभाषा चेः ।७।३।५८। अभ्यासात्परस्य चिञः कुत्वं वा स्यात्सनि लिटि च। प्रणिचिकाय,

---

इति। 'शमित्यष्टाभ्यो घिनुण्'॥—**शमादय इति**। शमुतमुदमुश्रमुभ्रमुक्षमुक्लमुमद इत्यर्थः॥ **२५२१ यसोऽनुप—**। अत्र वदन्ति—'यसः' इत्येवास्तु। ततः 'समः'। नियमार्थमिदम्–सोपसर्गाद्यसश्चेत्संपूर्वकादेवेति। एवं च पूर्वसूत्रेऽनुपसर्गादिति ग्रहणमुत्तरत्र च यसश्चेति ग्रहणं त्यक्तुं शक्यमिति॥ **२५२२ दाहे पठित इति**। व्युष दाह इत्यस्मिन्नेव गणे पठित इत्यर्थः॥—**अङर्थमिति**। दाहे पठितस्य तु सिजेव। अव्योषीत्॥ **इति दिवादिगणप्रकरणम्**॥

**षुञ्**॥ **२५२३ सुन्व इति**। 'लोपश्चास्या–' इत्युकारस्य वा लोपः॥—**सुनवानीति**। 'आडुत्तमस्य–' इत्याटि कृते 'हुश्नुवोः–' इति यणं बाधित्वा परत्वाद्गुणः॥ **२५२४ सुनोतेः स्यसनोः**। 'न रपर–' इत्यस्मान्नेत्यनुवर्तते–इत्याशयेनाह—**षो न स्यादिति**। सनि तु अभिसुसूः। सन्नन्तादस्मात्क्विप्यतो लोपे रुत्वे कृते दीर्घः। सुसूषतीत्येतत्तु नोदाहरणम्, 'स्तौतिण्योरेव षणि' इति नियमेनैव षत्वाभावसिद्धेः। एतच्च काशिकायां स्पष्टम्। **चिञ्**। **चयनं**–रचनाविशेषः॥ **२५२५ विभाषा चेः**। 'चजोः' इति सूत्रात्कुरनुवर्तते 'सन्लिटोर्जेः' इत्यतः सन्लिटोरिति च। सन्युदाहरणम्—चिकीषति, चिची-

चिचाय । चिक्ये, चिच्ये । अचैषीत् । अचेष्ट । १३३२ स्तृञ् आच्छादने । स्तृणोति । स्तृणुते । 'गुणोर्ति–' २३८० इति गुणः, स्तर्यात् ।

२५२६ । ऋतश्च संयोगादेः ।७।२।४३। ऋदन्तात्संयोगादेः परयोर्लिङ्सिचोरिड्वा स्यात्तङि । स्तरिषीष्ट, स्तृषीष्ट । अस्तरिष्ट, अस्तृत । १३३३ कृञ् हिंसायाम् । कृणोति । कृणुते । चकार । चकर्थ । चक्रे । क्रियात् । कृषीष्ट । अकार्षीत् । अकृत । १३३४ वृञ् वरणे ।

२५२७ । बभूथाततन्थजगृभ्मववर्थेति निगमे ।७।२।६४। एषां वेदे इडभावो निपात्यते । तेन भाषायां थलीट्, ववरिथ । वव्रृव । वव्रृवहे । वरिता, वरीता ।

२५२८ । लिङ्सिचोरात्मनेपदेषु ।७।२।४२। वृङ्वृञ्भ्यामृदन्ताच्च परयोर्लिङ्सिचोरिड्वा स्यात्तङि ।

२५२९ । न लिङि ।७।२।३९। वृतो लिङ इटो दीर्घो न स्यात् । वरिषीष्ट, वृषीष्ट । अवारीत् । अवरिष्ट, अवरीष्ट, अवृत । १३३५ धुञ् कम्पने । धुनोति । धुनुते । अधौषीत् । अधोष्यत् । १३३६ दीर्घान्तोऽप्ययम् । धूनोति । धूनुते । 'स्वरतिसूति–' २२७९ इति वेट्, दुधविथ । दुधोथ । किति लिटि तु 'श्र्युकः–' २३८१ इति निषेधं बाधित्वा क्रादिनियमान्नित्यमिट्, दुधुविव । 'स्तुसुधूञ्भ्यः–' २३८५ इति नित्यमिट्, अधावीत् । अधविष्ट, अधोष्ट ।

अथ परस्मैपदिनः ॥ १३३७ टुदु उपतापे । दुनोति । १३३८ हि गतौ वृद्धौ च ।

२५३० । हिनुमीना ।८।४।१५। उपसर्गस्थान्निमित्तात्परस्य एतयोर्नस्य णः स्यात् । प्रहिणोति ।

२५३१ । हेरचङि ।७।३।५६। अभ्यासात्परस्य हिनोतेर्हस्य कुत्वं स्यान्न तु चङि । जिघाय । १३३९ पृ प्रीतौ । पृणोति । पर्ता । १३४० स्पृ प्रीतिपालनयोः । 'प्रीतिचलनयोः' इत्यन्ये । 'चलनं जीवनम्' इति स्वामी । स्पृणोति । पस्पार । १३४१ स्मृ इत्येके । स्मृणोति । पृणोत्यादयस्त्रयोऽपि छान्दसा इत्याहुः । १३४२ आप्लृ व्याप्तौ । आप्नोति । आप्नुतः । आप्नुवन्ति । आप्नुवः । आप । आप्ता । आप्नुहि । लृदित्त्वादङ्, आपत् । १३४३ शक्लृ शक्तौ । अशकत् । १३४४ राध १३४५ साध संसिद्धौ । राध्नोति ।

२५३२ । राधो हिंसायाम् ।६।४।१२३। एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च । अपरेधतुः । रेधुः । रेधिथ । राद्धा । साध्नोति । साद्धा । असात्सीत् । असाद्धाम् ।

अथ द्वावनुदात्तेतौ ॥ १३४६ अशू व्याप्तौ संघाते च । अश्नुते ।

२५३३ । अश्नोतेश्च ।७।४।७२। दीर्घादभ्यासादवर्णात्परस्य नुट् स्यात् । आनशे । अशिता, अष्टा । अशिष्यते, अक्ष्यते । अश्नुवीत । अक्षीष्ट, अशिषीष्ट । आशिष्ट, आष्ट । आक्षाताम् । १३४७ ष्टिघ आस्कन्दने । स्तिघ्नुते । तिष्टिघे । स्तेघिता ।

अथ आगणान्तात्परस्मैपदिनः ॥ १३४८ तिक १३४९ तिग गतौ च । चादास्कन्दने । तिक्नोति । तिग्नोति । १३५० षघ हिंसायाम् । सघ्नोति । १३५१ ञिधृषा प्रागल्भ्ये । धृष्णोति । दधर्ष । धर्षिता । १३५२ दम्भु दम्भने । दम्भनं दम्भः । दभ्नोति । ददम्भ । 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वा' इति व्याकरणान्तरमिहाप्याश्रीयत इत्युक्तम् । 'अनिदिताम्–' ४१५ इति नलोपः । तस्याभीयत्वादसिद्धत्वेन एत्वाभ्यासलोपयोरप्राप्तौ— * दम्भेश्च एत्वाभ्यासलोपौ वक्तव्यौ ॥ देभतुः । ददम्भतुः । इदं कित्त्वं पिदपिद्विषयकमिति सुधाकरादयः । तन्मते तिप्सिप्मिप्सु–देभ । देभिथ । देभ–इति रूपान्तरं बोध्यम् । अपिद्विषयकमिति न्यासकारादिमते तु–ददम्भ । ददम्भिथ । ददम्भ–इत्येव । दभ्यात् । १३५३ ऋधु वृद्धौ । १३५४ तृप प्रीणने इत्येके ।

---

षति ॥ २५२६ ऋतश्च संयोगादेः । 'इट् सनि वा' इत्यत इट् वेत्यनुवर्तते । 'लिङ्सिचोः–' इति सूत्रादात्मनेपदेष्विति च, तदाह—इड् वा स्यात्तङीति । तङि किम् ? स्तर्यात् । अस्तार्षीत् ॥ २५२७ बभूथाततन्थ—। भूधातोस्तनोतेश्च थलि इडभावो निपात्यते । 'त्वं हि होता प्रथमो बभूथ' । 'येनान्तरिक्षमुर्वाततन्थ' । भाषायां तु–बभूविथ । तेनिथ । 'जगृभ्माते दक्षिणमिन्द्र हस्तम्' । भाषायां तु–जगृहिम । वृणोतेस्थलि क्रादिसूत्रेणेण्निषेधे सिद्धेऽपि निगम एव निषेधो नान्यत्रेति नियमार्थं ववर्थग्रहणम् । 'ववर्थ त्वं हि ज्योतिषाम्' । भाषायां तु–ववरिथ । वव्रृषे ॥ २५२८ लिङ्सिचोः—। वृत इत्यनुवर्तते । आत्मनेपदेषु किम् ? अवारीत् । अवारिष्टाम् । अवारिषुः । 'सिचि च परस्मैपदेषु' इति निषेधादिह 'वृतो वा' इति न दीर्घः ॥ २५३० हिनु मीना । प्रमीणाति ॥—हेरचङि । जेघीयते । अचङीति किम् ? अजीहयत् । इह ण्यन्तस्य धात्वन्तरत्वात्केवलस्य त्वभ्यासनिमि[illegible] नास्तीत्यचङीति निषेधो व्यर्थः सन् ज्ञापयति–ण्यधिकस्यापि कुत्वं भवतीति । तेन–जिघापयिषतीत्यादि सिद्धम् ॥—आप्नुहीति । संयोगपूर्वत्वात् 'उतश्च प्रत्ययात्–' इति हेर्लुङ् न ॥ २५३२ राधो हिंसायाम् । अत इत्यनुवर्तमानेऽपि सामर्थ्यादकारमात्रं स्थानित्वेनाश्रीयते ॥ २५३३ अश्नोतेश्च । 'तस्मान्नुड्' इत्यनुवर्तत इत्याह—दीर्घादिति । श्नुविकरणनिर्देशः किम् ? क्र्यादेरश भोजन इत्यस्य माभूत्, आश । आशतुः । ञिधृषा । शूलेन धृष्णोति–प्रगल्भते इति–शूलधृक्, शूलधृषौ । 'ऋत्विक्दधृक्–' इति क्विनो विधानादन्यत्रापि पदान्तविषये कुत्वम् । दम्भु । लोकवञ्चनाय विहितकर्मानुष्ठानं दम्भः । तृप । अयं सेट्कः, अनुदात्तेषु श्यना निर्दे-

क्षुभ्नादित्वाण्णत्वं न, तृभ्नोति । (ग) छन्दसि । आ गणान्तादधिकारोऽयम् । १३५५ अह व्याप्तौ । अह्नोति । १३५६ दघ घातने पालने च । दघ्नोति । १३५७ चमु भक्षणे । चम्नोति । १३५८ रि १३५९ क्षि १३६० चिरि १३६१ जिरि १३६२ दाश १३६३ दृ हिंसायाम् । रिणोति । क्षिणोति । 'अयं भाषायामपि' इत्येके । 'न तद्यशः शस्त्रभृतां क्षिणोति' । १३६४ ऋक्षि इत्येक एवाजादिरित्यन्ये । ऋक्षिणोति । चिरिणोति । जिरिणोति । दाश्नोति । दृणोति ॥ इति स्वादयः ॥

---

## अथ तिङन्ते तुदादयः ।

१३६५ तुद व्यथने ॥ इतः षट् स्वरितेतः ॥

२५३४ । तुदादिभ्यः शः ।३।१।७७। तुदति । तुदते । तुतोद । तुतोदिथ । तुतुदे । तोत्ता । अतौत्सीत् । अतुत्त । १३६६ णुद प्रेरणे । नुदति । नुदते । नुनोद । नुनुदे । नोत्ता । १३६७ दिश अतिसर्जने । अतिसर्जनं दानम् । देष्टा । दिक्षीष्ट । अदिक्षत् । अदिक्षत । १३६८ भ्रस्ज पाके । 'ग्रहिज्या–' २४१२ इति संप्रसारणम्, सस्य श्चुत्वेन शः, शस्य जश्त्वेन जः, भृज्जति । भृज्जते ।

२५३५ । भ्रस्जो रोपधयो रमन्यतरस्याम् ।६।४।४७। भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके । मित्त्वादन्त्यादचः परः । स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः । बभर्ज । बभर्जतुः । बभर्जिथ, बभर्ष्ठ । बभर्जे । रमभावे–बभ्रज्ज । बभ्रज्जतुः । बभ्रज्जिथ । 'स्कोः–' ३८० इति सलोपः, 'व्रश्च–' २९४ इति षः, बभ्रष्ठ । बभ्रज्जे । भ्रष्टा–भर्ष्टा । भ्रक्ष्यति–भर्क्ष्यति ।

---

शात् । अह व्याप्तौ । अस्मात् 'ऋहलोर्ण्यत्' इति 'अह्यः' इति 'तस्यादित उदात्तमर्धह्रस्वम्' इत्यत्रास्माभिरुपपादितम् । **अन्ये त्वाहुः**—'शतचक्रं यो ३ ह्यो वर्तनिः' इत्यत्र अह्य इति षष्ठ्यन्तमेव । 'घेर्ङिति' इति गुणस्तु अहिशब्दस्य च्छान्दसत्वेनेति । **रिक्षि** । एते षट् धातवः । एक एवाजादिरिति मते तु पञ्च धातवः ॥ **इति स्वादिप्रकरणम्** ॥

**२५३४ तुदतीति** । परमपि लघूपधगुणं बाधित्वा नित्यत्वात् श इत्येके । अकृतव्यूहपरिभाषया गुणो न प्रवर्तत इत्यन्ये । **भ्रस्ज** पाके । भर्जनरूपः पाकोऽत्र धात्वर्थो न त्वोदनादेः पाकः, तत्र प्रयोगाभावादित्याहुः । 'भ्रस्जो' इति केषांचित्पाठे तु 'ओदितश्च' इति निष्ठानत्वप्रसक्त्या भृष्टः भृष्टवानिति न सिध्येत् ॥ **२५३५ भ्रस्जो रोपधयोः**—। रम्यकार उच्चारणार्थः । रमित्यस्यान्त्यादचः परत्वे 'रोपधयोः' इति षष्ठीनिर्देशस्य वैयर्थ्यमाशङ्क्याह—**निवृत्तिरिति** । **अयं भावः**—स्थानविशेषलाभाय मित्त्वस्य करणाच्च रोपधयोः स्थाने रम् भवति । यत्र ह्यनिर्धारितः स्थानषष्ठ्या निर्दिश्य विधीयते स तत्स्थाने भवति । यथा 'इको यणचि' इत्यादौ यणादिः । प्रकृते तु रमो निर्दिष्टस्थानिकत्वाद्रोपधयोः स्थाने न भवति । एवं चास्य आदेशागमत्वे भवतः, यथा श्नमः प्रत्ययागमत्वे इति । **अन्ये तु**—एतादृग् व्याख्यानमयुक्तमिति मत्वा 'सनः क्तिचि' इत्यतो लोपमनुवर्त्य भ्रस्जो रोपधयोर्लोपः, रम् तु आगम एवेत्याहुः । **अपरे तु**—'भ्रस्जो रस रन्यतरस्याम्' इत्येव सूत्रमस्तु । रसः ऋ इति च्छेदः । रस इति रेफाकारसकाराणां यः संघातस्तस्य ऋ इत्यादेशः स्यादित्यर्थः । ततश्च अक्ङिति–भर्जको भर्जनं बभर्जेत्यादि सिध्यति । ऋकाराभावपक्षे तु–भ्रज्जको भ्रज्जनं बभ्रज्जेत्यादि । क्ङिति तु ऋकारपक्षे–भृष्टिः भृज्यादित्यादि । तदभावे संप्रसारणे सति तदेव रूपम् । एवं च बरीभृज्यत इत्यादौ रीको रेफस्य निवृत्तिं वारयितुम् 'अनुदात्तोपदेश–' इत्यत उपदेशग्रहणमनुवर्त्यम्, इदानीं तु नानुवर्त्य, 'क्ङिति रमागमं बाधित्वा संप्रसारणम्' इति, पूर्वविप्रतिषेधश्च न कर्तव्य इति महदेव लाघवमित्याहुः । इदं च रसोर्वर्वचनात्सिद्धमिति वार्तिकाशयवर्णनमेव न त्वपूर्वम् । 'वर्वचनात्' इत्यस्य वा ऋवचनादिति छेदः । भाष्यकारैस्तु—'सूत्रं भिद्यते यथान्यासमेवास्तु' इति वदद्भिरस्यां कल्पनायां दुष्टत्वं सूचितं, तच्च मनोरमायां स्पष्टम् । तथा हि—रेफाकारसकारसमुदायस्य ऋभावे पञ्च दोषाः । अपिल्लिटि–बभर्जतुः बभर्जुरित्यादिरिष्यते, बभृजतुः बभृजुरित्यादि स्यात् । न चात्र गुणेन निर्वाहः । ऋभावे सति 'असंयोगाल्लिट् कित्' इति कित्त्वप्रवृत्त्या तन्निषेधात् । 'सनीवन्त–' इति इड्विकल्पात्–बिभर्क्षतीत्यादि इष्यते, बिभृक्षतीत्यादि स्यात् । ऋभावे 'हलन्ताच्च' इति सनः कित्त्वप्रवृत्तेः । लिङ्सिचोस्तङि–भर्क्षीष्ट अभर्ष्टेत्यादि इष्यते । भृक्षीष्ट अभृष्टेत्यादि स्यात् । 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वात् । णिजन्ताच्चङि–अबभर्जदितीष्यते । अबीभृजदित्यपि स्यात् । इररारामपवादत्वेन 'उर्ऋत्' इति ऋत्वप्रवृत्तौ 'सन्वल्लघुनि–' इति सन्वद्भावात् 'सन्यतः' इतीत्वे 'दीर्घो लघोः' इति प्रवृत्तेः । यद्यपि 'उर्ऋत्' इत्यस्य वैकल्पिकत्वादबभर्जदिति सिध्यत्येव तथापि पक्षे अबीभृजदित्यनिष्टं स्यादिति बोध्यम् । 'ऋजिभृजी भर्जने' इति भ्वादेस्तादृशं रूपमिष्टमिति चेत् । मैवम् । भर्जनार्थे हि तादृग् रूपमिष्टं, न तु पाकसामान्ये । उभयोरेकार्थत्वाभ्युपगमेऽपि प्राचीनाश्चत्वारो दोषास्तु दृढा एव । न हि तेऽपि धात्वन्तरेण सुपरिहराः । अपिल्लिटि भृजेरपि धातोर्गुणाभावात्, अनुदात्तत्वेन आत्मनेपदित्वाच्च बभर्जतुरित्यादिरूपस्य तेनाप्यसिद्धेः । तथा भृजेरुदात्तत्वेन ततः परेषां सन्लिङ्सिचामिडागमध्रौव्यात्—बिभर्क्षति भर्क्षीष्ट अभर्ष्टेत्यादिरपि तेन न सिध्यति । एतेन 'भ्रस्जेर्भृजिरादेशः' इति पक्षोऽपि निरस्तः, पूर्वोक्तदूषणगणप्रसङ्गात् । किं च अस्मिन्पक्षे यङ्लुकि अधिको दोषः । वधादेशवत्साभ्यासस्य भृज्यादेशे पुनर्द्विर्वचनस्य दुर्लभत्वात्, स्थानिवत्त्वेनानभ्यासस्येति निषेधात् । स्वीकृतेऽपि द्विर्वचने रुग्रिग्रीकोऽभ्यासस्य स्युरेवेति रुगादिरहितं 'बाभर्जिता–बाभर्जिष्यति' इत्यादि रूपं नैव सिध्येत् । यदि तु लाघवे पक्षपातेन स्वातन्त्र्यं चिकीर्ष्यते

॥ क्ङिति रमागमं बाधित्वा संप्रसारणं पूर्वविप्रतिषेधेन ॥ भृज्यात् । भृज्यास्ताम् । भर्क्षीष्ट, भ्रक्षीष्ट । अभार्क्षीत्, अभ्राक्षीत् । अभर्ष्ट, अभ्रष्ट । १३६९ क्षिप प्रेरणे । क्षिपति । क्षिपते । क्षेप्ता । अक्षैप्सीत् । अक्षिप्त । १३७० कृष विलेखने । कृषति । कृषते । क्रष्टा, कर्ष्टा । कृष्यात् । कृक्षीष्ट । '॥ स्पृशमृशकृष–' इति सिज्वा । पक्षे क्सः । सिचि अम्वा, अक्राक्षीत्, अकार्क्षीत्, अकृक्षत् । तङि 'लिङ्सिचौ–' २३०० इति कित्वादम्न, अकृष्ट । अकृक्षाताम् । अकृक्षत । अकृक्षत । अकृक्षाताम् । अकृक्षन्त । १३७१ ऋषी गतौ । परस्मैपदी । ऋषति । आनर्ष ।

१३७२ जुषी प्रीतिसेवनयोः ॥ आत्मनेपदिनश्चत्वारः । जुषते । १३७३ ओविजी भयचलनयोः । प्रायेणायमुत्पूर्वः । उद्विजते ।

२५३६ । विज इट् ।१।२।२। विजेः पर इडादिः प्रत्ययो ङिद्वत् । उद्विजिता । उद्विजिष्यते । १३७४ ओलजी १३७५ ओलस्जी व्रीडायाम् । लजते । लेजे ॥ लज्जते । ललज्जे ।

अथ परस्मैपदिनः ॥ १३७६ ओव्रश्चू छेदने । 'ग्रहिज्या–' २४१२, वृश्चति । वव्रश्च । वव्रश्चतुः । वव्रश्चिथ, वव्रष्ठ, 'लिट्यभ्यासस्य–' २४०८ इति संप्रसारणम्–रेफस्य ऋकारः । 'उरत्' २२४४, तस्य च 'अचः परस्मिन्–' ५० इति स्थानिवद्भावात् 'न संप्रसारणे–' ३६२ इति वस्योत्वं न । व्रश्चिता, व्रष्टा । व्रश्चिष्यति, व्रक्ष्यति । वृश्च्यात् । अव्रश्चीत्, अव्राक्षीत् । अव्रश्चत् । १३७७ व्यच व्याजीकरणे । विचति । विव्याच । विविचतुः । व्यचिता । व्यचिष्यति । विच्यात् । अव्याचीत्, अव्यचीत् । '(ग) व्यचेः कुटादित्वमनसि' इति तु नेह प्रवर्तते, अनसीति पर्युदासेन कृन्मात्रविषयत्वात् । १३७८ उछि उञ्छे । उञ्छति । १३७९ उछी विवासे । उच्छति । १३८० ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु । 'ऋच्छत्यृताम्' २३८३ इति

---

तर्हि 'भ्रस्जे रसोः' इति पठित्वा 'रस्' इति समुदायस्य अरेव विधीयतां तथा च न कोऽपि दोष इति । अयमत्र संग्रहः—**'रस ऋत्वेदपिल्लिट्सन्लिङ्सिच्चङ्परणिक्षु ते । दोषो भ्रस्जेर्भृजौ चैवं दोषो यङ्लुकि चाधिकः ॥ साभ्यासस्य हि भृज्भावो भवेद्धन्तेर्वधिर्यथा । द्वित्वं पुनर्न लभ्येत स्थानिवत्त्वाद्वधेरिव ॥ तस्मादस्तु यथान्यासं स्वातन्त्र्येऽस्तु रसोरिति'** ॥—**पूर्वविप्रतिषेधेनेति** । नित्यत्वादित्यपि सुवचम् । न च संप्रसारणात्पूर्वं धातो रेफस्य, पश्चात्तु रमागमरेफस्येति शब्दान्तरप्राप्त्या संप्रसारणस्य नित्यत्वं नेति शङ्क्यम् । लक्ष्यानुरोधेन कृताकृतप्रसङ्गित्वमात्रेणापि क्वचिन्नित्यत्वस्वीकारात् ॥ **२५३६ विजइट्** । इह 'वृद्धिर्यस्य–' इति सूत्रान्मण्डूकप्लुत्या 'यस्यादिः' इति अनुवर्तते तेन इडादिप्रत्ययो लभ्यत इति मनोरमायां स्थितम् । नव्यास्तु–इह इडित्येतत् उत्तमैकवचनं न गृह्यते । तथा च सति विजिषीयेत्यत्रैव स्यान्न तूद्विजितेत्यादौ । ततश्चेष्टसिद्ध्यर्थमिडागमो गृह्यते । तस्य तु ङित्त्वं व्यर्थम्, तन्निमित्तगुणस्याप्राप्तेः । अतो लक्षणया इड्वान् गृह्यते–इट्=प्रत्ययस्यादिरिति । फलितार्थकथनम्–इडादिप्रत्ययो ङिद्वदिति । एवं च इडादिरिति लाभाय यस्यादिरित्यनुवर्तनक्लेशो व्यर्थ एवेत्याहुः । इह ओविजीति तुदादौ रुधादिश्च गृह्यते, न तु विजिर् पृथग्भावे इति जुहोत्यादिः, व्याख्यानात् । यस्त्वत्र **हरदत्तेन** जुहोत्यादेरग्रहणे हेतुरुक्तः—तस्यानिट्कत्वादिति । तदयुक्तम् । क्रादिनियमेन लिटि इट्संभवात् । न च तत्र कित्त्वेन गतार्थत्वादिटो ङित्त्वं व्यर्थमिति वाच्यम् । अपिल्लिटः कित्त्वेऽपि विवेजिथेत्यत्र पित्त्वेन कित्त्वाभावात् ॥—**वव्रश्चेति** । अत्र नव्याः—वव्रश्चेत्यादौ 'लिट्यभ्यासस्य—' इत्यभ्यासावयवयोर्द्वयोरपि यणोः संप्रसारणप्रसक्तौ पूर्वस्य यणो निषेधाय 'न संप्रसारणे–' इति सूत्रं स्वीक्रियते । ततश्च 'अत एव ज्ञापकात्परस्य प्रथमं संप्रसारणम्' इति परिकल्प्य 'आ पादपरिसमाप्तेरङ्गाधिकारः' इति पक्षमभ्युपगम्य [illegible] 'अचः परस्मिन्–' इति स्थानिवद्भावप्रवृत्त्या संप्रसारणपरत्वमाश्रित्य वकारस्य संप्रसारणनिषेधः कथंचिदुपपद्यते । 'परस्य संप्रसारणं' 'परस्य यणः संप्रसारणम्' इति वा सूत्रिते तु परस्यैव संप्रसारणं न तु पूर्वस्य यण इत्यर्थलाभाद् उक्तक्लेशं विनैव 'वव्रश्च–यूनः' इत्यादि सर्वं सिध्यति ॥ न चैवं 'लिटि वयो यः' 'वेञः' इत्यत्र संप्रसारणनिषेधाय नञोऽनुवृत्तिर्न लभ्येतेति वाच्यम् । 'न लिटि वयो यः' इति सूत्रकरणे बाधकाभावात्, 'न संप्रसारणे–' इति यथाश्रुतसूत्रप्रणयने त्वन्ततो मात्राद्वयस्याधिक्याच्च । एवं च लघूपायेनेष्टसिद्धौ 'न संप्रसारणे–' इति सूत्रारम्भो ज्ञापयति–'निमित्तभेदाभावेऽपि स्थानिभेदे पुनरपि कार्यं प्रवर्तते' इति । तथा च सुध्युपास्य इत्यादौ उकारात्परस्य धकारस्य द्वित्वे कृते पुनरुकारात्परस्य दकारस्यापि द्वित्वमिति प्रक्रियाकारादिव्याख्यानं सूत्रकाराभिप्रेतमेव । यदि स्थानिभेदेऽपि निमित्तैक्ये कार्याप्रवृत्तिः क्वचिद् दृश्येत तत्र तु 'ज्ञापकसिद्धं न सर्वत्र' इति स दोषः परिहियतामित्याहुः ॥—**अव्रश्चीदिति** । ऊदित्त्वात्पक्षे इट् । 'वदव्रज–' इति वृद्धेः 'नेटि' इति निषेधः ॥—**अव्राक्षीदिति** । 'स्कोः' इति सलोपः । 'व्रश्च' इति षः । 'षढोः कः सि' इति कः । ततः सस्य षत्वम् । न चात्र सकारस्य कथं लोप इति वाच्यम् । धातुपाठे सकारस्य पाठात् । तदाहुः—**'नकारजावनुस्वारपञ्चमौ झलि धातुषु । सकारजः शकारश्चेर्पाट्टवर्गस्तवर्गजः'** इति । **व्यच** । **व्याजीकरणं**–छद्मकरणम् ॥—**पर्युदासेनेति** । प्रसज्यप्रतिषेधे हि वाक्यभेदोऽसमर्थसमासश्च प्रसज्येतेति भावः ॥—**कृन्मात्रविषयत्वादिति** । तेन उद्विचिता उद्विचितुमित्यत्र संप्रसारणं भवति । व्यचिता व्यचिष्यति–इत्यादौ तु तिङ्विषये न भवति ।

---

१ भ्रस्जे रस ऋभावे पञ्च दोषाः–'अपिल्लिट्' इत्यादयः । तस्यैव 'भृज्'आदेशे दोषानाह—**एवं दोषो यङ्लुकि**—इत्यादयः । अवयवापेक्षायां तु स्वातन्त्र्येण 'रसोऽर्'='रस अर्' इत्येव ।

गुणः । द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वान्नुट्, आनर्च्छ । आनर्च्छतुः । ऋच्छिता । १३८१ मिच्छ उत्क्लेशे । उत्क्लेशः पीडा । मिमिच्छ । अमिच्छीत् । १३८२ जर्ज १३८३ चर्च १३८४ झर्झ परिभाषणभर्त्सनयोः । १३८५ त्वच संवरणे । तत्वाच । १३८६ ऋच स्तुतौ । आनर्च । १३८७ उब्ज आर्जवे । १३८८ उज्झ उत्सर्गे । १३८९ लुभ विमोहने । विमोहनमाकुलीकरणम् । लुभति । लोभिता, लोब्धा । लोभिष्यति । १३९० रिफ कत्थनयुद्धनिन्दाहिंसादानेषु । रिफति । रिरेफ । १३९१ रिह इत्येके । 'शिशुं न विप्रा मतिभी रिहन्ति' । १३९२ तृप[1] १३९३ तृम्फ तृप्तौ । आद्यः प्रथमान्तः । द्वितीयो द्वितीयान्तः । द्वावपि द्वितीयान्तावित्यन्ये । तृपति । ततर्प । तर्पिता । 'स्पृशमृश–' इति सिज्विकल्पः पौषादिकस्यैव, अङ्पवादत्वात् । तेनात्र नित्यं सिच्, अतर्पीत् । तृम्फति । शस्य ङित्वात् 'अनिदिताम्–' ४१६ इति नलोपे ॥ ❀ शे तृम्फादीनां नुम्वाच्यः ॥ आदिशब्दः प्रकारे । तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः । तृम्फति । ततृम्फ । तृफ्यात् । १३९४ तुप १३९५ तुम्प १३९६ तुफ १३९७ तुम्फ हिंसायाम् । तुपति । तुम्पति । तुफति । तुम्फति । १३९८ दृप १३९९ दृम्फ उत्क्लेशे । प्रथमः प्रथमान्तः । द्वितीयो द्वितीयान्तः । १४०० 'प्रथमो द्वितीयान्तः' इत्येके । दृपति । दृम्फति । १४०१ ऋफ १४०२ ऋम्फ हिंसायाम् । ऋफति । आनर्फ । ऋम्फति । ऋम्फांचकार । १४०३ गुफ १४०४ गुम्फ ग्रन्थे । गुफति । जुगोफ । गुम्फति । जुगुम्फ । १४०५ उभ १४०६ उम्भ पूरणे । उभति । उवोभ । उम्भति । उम्भांचकार । १४०७ शुभ १४०८ शुम्भ शोभार्थे । शुभति । शुम्भति । १४०९ दृभी ग्रन्थे । दृभति । १४१० चृती हिंसाग्रन्थनयोः । चर्तिता । 'सेसिचि–' २५०६ इति वेट् । चर्तिष्यति, चर्त्स्यति । अचर्तीत् । १४११ विध विधाने । विधति । वेधिता । १४१२ जुड गतौ । १४१३ 'तवर्गपञ्चमान्तः' इत्येके । जुडति । 'मरुतो जुनन्ति' । १४१४ मृड सुखने । मृडति । मर्डिता । १४१५ पृड च । पृडति । १४१६ पृण प्रीणने । पृणति । पपर्ण । १४१७ वृण च । वृणति । १४१८ मृण हिंसायाम् । १४१९ तुण कौटिल्ये । तुतोण । १४२० पुण कर्मणि शुभे । पुणति । १४२१ मुण प्रतिज्ञाने । १४२२ कुण शब्दोपकरणयोः । १४२३ शुन गतौ । १४२४ द्रुण हिंसागतिकौटिल्येषु । १४२५ घुण १४२६ घूर्ण भ्रमणे । १४२७ षुर ऐश्वर्यदीप्त्योः । सुरति । सुषोर । आशिषि–सूर्यात् । १४२८ कुर शब्दे । कुरति । कूर्यात् । अत्र 'न भकुर्छुराम्' १६३० इति निषेधो न, करोतेरेव तत्र ग्रहणादित्याहुः । १४२९ खुर छेदने । १४३० मुर संवेष्टने । १४३१ क्षुर विलेखने । १४३२ घुर भीमार्थशब्दयोः । १४३३ पुर अग्रगमने । १४३४ वृहू उद्यमने । दन्त्योष्ठ्यादिः । १४३५ 'पवर्गीयादिः' इत्यन्ये । १४३६ तृहू १४३७ स्तृहू १४३८

---

विव्याच–इत्यत्र कुटादित्वे जातेऽपि न क्षतिः, 'गाङ्कुटादिभ्यः' इति सूत्रे—अञ्णितः प्रत्यया ङितः स्युरित्युक्तत्वात् । उत्तमे णलि तु णित्त्वाभावपक्षे ङित्वात्संप्रसारणे 'विव्यच' इति न सिध्येदिति 'अनसि' इति पर्युदास आवश्यक इति बोध्यम् । **'उछि उञ्छे' 'उछी विवासे'** । इमौ भ्वादिगणे व्याख्यातौ । इह पाठस्तु 'उच्छति उञ्छति' इत्यत्र 'आच्छीनद्योः' इति नुम्विकल्पार्थः । पूर्वं पाठस्तु स्वरार्थः । तथाहि—उञ्छति उच्छतीत्यादौ पिद्वचने शप्तिबादीनां पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तं पदम् । शे तु प्रत्ययस्वरेण मध्योदात्तमिति । न च 'सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' इति वक्ष्यमाणत्वात्कथमिह मध्योदात्ततेति वाच्यम् । कुरुत इत्यादौ तसादेर्विकरणात्परत्वेन तत्स्वरस्योदात्तस्य विकरणस्वरापेक्षया प्रबलत्वेऽपि शस्य धातोः परत्वेन धातुस्वरापेक्षया शस्वरस्योदात्तस्य प्रबलत्वात् ॥**—उपलक्षणत्वादिति** । अत एव 'अदुपधस्य चेत् अश्नोतेरेव' इति नियममाश्रित्य द्विहल्ग्रहणं भाष्यकारैः प्रत्याख्यातम् । अन्यथा तन्न संगच्छेतेति भावः ॥**—आनर्च्छेति** । अनृच्छ इति पर्युदासान्नाम् । **नव्यास्तु**—'ऋच्छत्यॄताम्' इति लिटि परे गुणविधानसामर्थ्यादामभावः सिद्ध इति 'इजादेः' इति सूत्रे अनृच्छ इत्येतत्स्पष्टप्रतिपत्त्यर्थमित्याहुः । **अन्ये तु**—'ऋच्छत्यॄताम्' इत्यत्र तौदादिकऋच्छेरिति सर्वैरेव व्याख्यातत्वात् गणान्तरेऽपि ऋच्छिरस्तीत्यनुमीयते, तद्धातोस्तु लिटि आम्निवारणाय अनृच्छ इत्येतदावश्यकमित्याहुः । **मिच्छ** । उत्कटः क्लेशः**—उत्क्लेशः** । **ऋच** स्तुतौ । ऋच्यते स्तूयते देवतादिकमनयेति ऋक् । बाहुलकादिह करणे क्विप् ॥ **लोभिता । लोब्धा–इति** । 'तीषसह–' इति वेट् ॥**—शिशुं न विप्रा इति** । नशब्द इवार्थे । विप्राः–ब्राह्मणाः शिशुमिव मतिभी रिहन्ति–हिंसन्ति । न्यूनीकुर्वन्तीत्यर्थः । **चृती** हिंसाग्रन्थनयोः । ईदित्करणं 'श्वीदितो निष्ठायाम्' इतीण्निषेधार्थम् । यद्यप्यस्य वेट्कत्वान्निष्ठायामिण्निषेधः सिध्यति, तथापि 'यस्य विभाषा' इत्यस्यानित्यतां ज्ञापयितुमीदित्करणम् । तेन 'धावितमिभराजधिया' इत्यादि सिद्धमित्याहुः । **कुर** शब्दे ॥**—करोतेरेवेति** । सुप्रसिद्धत्वात् । कुर्यादित्युक्ते हि लोकानां कृञ एवोपस्थितिर्भवति नास्येति भावः । **मुर** संवेष्टने । इगुपधलक्षणः कः । मुरो दैत्यः । मुरारिर्विष्णुः । **क्षुर** विलेखने । विलेखनं छेदनम् । केशान् क्षुरति । 'इगुपध–' इति कः ।

---

१ **तृपतृम्फेति**—'शे मुचादीनाम्' इति सूत्रभाष्ये 'शे तृम्पादीनां नुम् वाच्यः, तृम्पति, तृम्फति' इति पाठदर्शनादाद्योऽपि सनकारः प्रतीयते । मूलं तु धातुवृत्त्यनुसारीति बोध्यम् ।

तृंहू हिंसार्थाः । तृहति । ततर्ह । स्तृहति । तस्तर्ह । तर्हिता, तर्ढा । स्तर्हिता, स्तर्ढा । अतृंहीत्, अताङ्क्षीत् । अतार्ढाम् । **१४३९ इष** इच्छायाम् । 'इषगमि–' २४०० इति छः । इच्छति । एषिता, एष्टा । एषिष्यति । इष्यात् । ऐषीत् । **१४४० सिष** स्पर्धायाम् । सिषति । सेषिता । १४४१ **किल** श्वैत्यक्रीडनयोः । **१४४२ तिल** स्नेहने । १४४३ **चिल** वसने । **१४४४ चल** विलसने । **१४४५ इल** स्वप्नक्षेपणयोः । **१४४६ विल** संवरणे । दन्त्योष्ठ्यादिः । **१४४७ बिल** भेदने । ओष्ठ्यादिः । **१४४८ णिल** गहने । **१४४९ हिल** भावकरणे । **१४५० शिल १४५१ षिल** उञ्छे । **१४५२ मिल** श्लेषणे । **१४५३ लिख** अक्षरविन्यासे । लिलेख । **१४५४ कुट** कौटिल्ये । 'गाङ्कुटादिभ्यः–' २४६१ इति ङित्त्वम्, चुकुटिथ । चुकोट, चुकुट । कुटिता । **१४५५ पुट** संश्लेषणे । **१४५६ कुच** सङ्कोचने । **१४५७ गुज** शब्दे । **१४५८ गुड** रक्षायाम् । **१४५९ डिप** क्षेपे । **१४६० छुर** छेदने । 'न भकुर्छुराम्' १६२९ इति न दीर्घः, छुर्यात् । **१४६१ स्फुट** विकसने । स्फुटति । पुस्फोट । **१४६२ मुट** आक्षेपमर्दनयोः । **१४६३ त्रुट** छेदने । 'वा भ्राश–२३२१ इति श्यन्वा । त्रुट्यति, त्रुटति । तुत्रोट । त्रुटिता । **१४६४ तुट** कलहकर्मणि । तुटति । तुतोट । तुटिता । **१४६५ चुट १४६६ छुट** छेदने । **१४६७ जुड** बन्धने । **१४६८ कड** मदे । **१४६९ लुट** संश्लेषणे । **१४७० कृड** घनत्वे । घनत्वं सान्द्रता । चकर्ड । कृडिता । **१४७१ कुड** बाल्ये । **१४७२ पुड** उत्सर्गे । **१४७३ घुट** प्रतिघाते । **१४७४ तुड** तोडने । तोडनं भेदः । **१४७५ थुड १४७६ स्थुड** संवरणे । थुडति । तुथोड । तुस्थोड । **१४७७ खुड १४७८ छुड** इत्येके । **१४७९ स्फुर १४८० स्फुल** संचलने । **स्फुर** स्फुरणे । **स्फुल** संचलन इत्येके ।

२५३७ । **स्फुरतिस्फुलत्योर्निर्निविभ्यः** ।८।३।७६। षत्वं वा स्यात् । निःष्फुरति, निःस्फुरति । **१४८१ स्फर** इत्यकारोपधं केचित्पठन्ति । पस्फार । **१४८२ स्फुड १४८३ चुड १४८४ व्रुड** संवरणे । '**१४८५ क्रुड १४८६ भृड** निमज्जने' इत्येके । **१४८७ गुरी** उद्यमने । अनुदात्तेत् । गुरते । जुगुरे । गुरिता ।

**१४८८ णू** स्तवने । दीर्घान्तः । 'परिणूतगुणोदयः' ॥ **इतश्चत्वारः परस्मैपदिनः** ॥ नुवति । अनुवीत् । **१४८९ धू** विधूनने । धुवति । **१४९० गु** पुरीषोत्सर्गे । जुगुविथ, जुगुथ । गुता । गुष्यति । अगुषीत् । 'ह्रस्वादङ्गात्' २३६९, अगुताम् । अगुषुः । **१४९१ ध्रु** गतिस्थैर्ययोः । **१४९२ ध्रुव** इति पाठान्तरम् । आद्यस्य 'ध्रुवति' इत्यादि गुवतिवत् । द्वितीयस्तु सेट् । दुध्रुविथ । ध्रुविता । ध्रुविष्यति । ध्रूव्यात् । अध्रुवीत् । अध्रुविष्टाम् । **१४९३ कुङ्** शब्दे । **१४९४** '**दीर्घान्तः**' इति कैयटादयः, कुविता । अकुविष्ट । ह्रस्वान्त इति न्यासकारः, कुता । अकुत । **वृत्** । **कुटादयो वृत्ताः** ॥

**१४९५ पृङ्** व्यायामे । प्रायेण व्याङ्पूर्वः । रिङ्, इयङ्, व्याप्रियते । व्यापप्रे । व्यापप्राते । व्यापरिष्यते । व्यापृत । व्यापृषाताम् । **१४९६ मृङ्** प्राणत्यागे ।

२५३८ । **म्रियतेर्लुङ्लिङोश्च** ।१।३।६१। लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङ् नान्यत्र । ङित्त्वं स्वरार्थम् । म्रियते । ममार । ममर्थ । मम्रिव । मर्तासि । मरिष्यति । मृषीष्ट । अमृत ॥

---

क्षुरः शस्त्रम् । **तिल** स्नेहने । तिलति । 'इगुपध–' इति कप्रत्यये–तिलः । तिल गतौ, तेलति–इति शपि गतम् । **लिख** अक्षरविन्यासे । 'लिखितुं–लिखिष्यति' इति प्रयोगः प्रामादिकः । यत्तु कैश्चित्—कुटस्यादिः कुटादिः कुटः आदिर्येषां ते कुटादयः कुटादिश्च कुटादयश्च कुटादयः–इत्येकशेषं स्वीकृत्य लिखितुमित्यादि समर्थितम् । तदसत् । लेखिता लेखिष्यतीत्यादौ गुणनिषेधापत्तेः । नचेष्टापत्तिः । वृत्तिकारहरदत्तादिग्रन्थविरोधात् । 'गाङ्लिखादिभ्यः' इत्येव सूत्रितव्ये कुटादिभ्य इति पठनस्य स्वारस्यभङ्गापत्तेश्च । किं च 'शकुनिष्वालेखने' इति सौत्रप्रयोगोऽपि विरुध्यत इति प्रागेवोक्तमित्यास्तां तावत् । 'लिखापयति' इति प्रयोगस्तु मनोरमायामित्थं समर्थितः–अपनम् आपः–प्राप्तिः, लिखस्यापः–लिखापस्तं करोति–इति । **स्फुट** विकसने । स्फुटत्यर्थोऽस्मादिति स्फोटः स च पदस्फोटवाक्यस्फोटादिभेदेनानेकविधः । **कड** मदे । कुटादिकार्याभावेऽपि डान्तानुरोधेनायं कुटादौ पठितः । भ्वादौ पठितस्य पुनरत्र पाठः शतरि नुम्विकल्पार्थः । पूर्वं पाठस्तु उच्छतीत्यादाविव कडतीत्यादौ आद्युदात्तार्थः ॥ **२५३७ स्फुरतिस्फुलत्योः**—। 'सिवादीनाम्–' इत्यतो वेत्यनुवर्तनादाह—**षत्वं वा स्यादिति** ।

**परिणूतेति** । 'श्र्युकः किति' इतीण्निषेधः ॥ **२५३८ म्रियतेर्लुङ्लिङोश्च** । चात् शित इति अनुकृष्यते, तदाह—**शितश्च प्रकृतिभूतादिति** ॥—**तङिति** । आत्मनेपदमित्यर्थः । तेन 'म्रियमाणे' इति सिद्धम् ॥—**स्वरार्थमिति** । 'मा हि मृत' इत्यत्र 'तास्यनुदात्तेन्ङिद्दुपदेशाल्लसार्वधातुकमनुदात्तम्' इत्यनेन ङितः परस्य लादेशसार्वधातुकस्यानुदात्तत्वे कृते धातुरुदात्तः । ङित्त्वाभावे तु प्रत्ययस्योदात्तत्वे धातुरनुदात्तः स्यात् । न च सिज्लोपस्यासिद्धत्वात् ङितः परत्वं लसार्वधातुकस्य दुरुपपादमिति तस्य कथमनुदात्तता स्यादिति शङ्क्यम् । ङित्त्वसामर्थ्यात् सिज्लोपस्यासिद्धत्वं नेति सुवचत्वात् । 'अमृत' इत्यत्राडागमस्यैवोदात्तत्वात् मृङो ङित्त्वस्य न किंचित्प्रयोजनमिति 'अड्' निवारणाय मा हि मृतेति माङः प्रयोगे 'तिङ्ङतिङः' इति तिङन्तनिघातेऽपि ङित्त्वं व्यर्थमेव स्याद् इति हिशब्दप्रयोगः । हिप्रयोगे तु 'हि च' इत्यनेन तिङ-

अथ परस्मैपदिनः सप्त ॥ १४९७ रि १४९८ पि गतौ । अन्तरङ्गत्वादियङ्, रियति । पियति । रेता । पेता । १४९९ धि धारणे । १५०० क्षि निवासगत्योः । १५०१ षू प्रेरणे । सुवति । सविता । १५०२ कॄ विक्षेपे । किरति । किरतः । चकार । चकरतुः । करिता, करीता । कीर्यात् । अकारीत् ।

२५३९ । **किरतौ लवने** ।६।१।१४०। उपात्किरतेः सुडागमः स्याच्छेदेऽर्थे । उपस्किरति । ॐ **अडभ्यासव्यवायेऽपि सुट् कात्पूर्व इति वक्तव्यम्** । उपास्किरत् । उपचस्कार ।

२५४० । **हिंसायां प्रतेश्च** ।६।१।१४१। उपात्प्रतेश्च किरतेः सुट् स्याद्धिंसायाम् । उपस्किरति । प्रतिस्किरति । १५०३ गॄ निगरणे ।

२५४१ । **अचि विभाषा** ।८।२।२१। गिरते रेफस्य लत्वं वा स्यादजादौ । गिरति, गिलति । जगार, जगाल । जगरिथ, जगलिथ । गरिता, गरीता । गलिता, गलीता ॥

१५०४ दृङ् आदरे । आद्रियते । आद्रियेते । आदद्रे । आदद्रिषे । आदर्ता । आदरिष्यते । आदृषीष्ट । आदृत । आदृषाताम् । १५०५ धृङ् अवस्थाने । ध्रियते ॥

अथ परस्मैपदिनः षोडश ॥ १५०६ प्रच्छ ज्ञीप्सायाम् । पृच्छति । पप्रच्छ । पप्रच्छतुः । पप्रच्छिथ, पप्रष्ठ । प्रष्टा । प्रक्ष्यति । अप्राक्षीत् । वृत् । किरादयो वृत्ताः ॥ १५०७ सृज विसर्गे । 'विभाषा सृजिदृशोः' २४०४, ससर्जिथ, सस्रष्ठ । स्रष्टा । स्रक्ष्यति, 'सृजिदृशोर्झल्यमकिति' २४०५ इत्यमागमः । सृजेत् । सृज्यात् । अस्राक्षीत् । १५०८ टुमस्जो शुद्धौ । मज्जति । ममज्ज । 'मस्जिनशोर्झलि' २५१७ इति नुम् । ॐ **मस्जेरन्त्यात्पूर्वो नुम्वाच्यः** ॥ संयोगादिलोपः, ममङ्क्थ, ममज्जिथ । मङ्क्ता । मङ्क्ष्यति । अमाङ्क्षीत् । अमाङ्क्ताम् । अमाङ्क्षुः । १५०९ रुजो भङ्गे । रोक्ता । रोक्ष्यति । अरौक्षीत् । अरौक्ताम् । १५१० भुजो कौटिल्ये । रुजिवत् । १५४११ छुप स्पर्शे । छोप्ता । अच्छौप्सीत् । १५१२ रुश १५१३ रिश हिंसायाम् । तालव्यान्तौ । रोष्टा । रोक्ष्यति । रेष्टा । रेक्ष्यति । १५१४ लिश गतौ । अलिक्षत् । १५१५ स्पृश संस्पर्शने । स्प्रष्टा, स्पर्ष्टा । स्प्रक्ष्यति, स्पर्क्ष्यति । अस्प्राक्षीत्, अस्पार्क्षीत्, अस्पृक्षत् । १५१६ विच्छ गतौ । 'गुपूधूप–' २३०३ इत्यायः । आर्धधातुके, वा । विच्छायति । विच्छायांचकार, विविच्छ । १५१७ विश प्रवेशने । विशति । वेष्टा । १५१८ मृश आमर्शने । आमर्शनं स्पर्शः । अम्राक्षीत्, अमार्क्षीत्, अमृक्षत् । १५१९ णुद प्रेरणे । कर्त्रभिप्रायेऽपि फले परस्मैपदार्थः पुनः पाठः । १५२० षद्लृ विशरणगत्यवसादनेषु । 'सीदति' इत्यादि भौवादिकवत् । इह पाठो नुम्विकल्पार्थः-सीदती, सीदन्ती । ज्वलादौ पाठस्तु णार्थः—सादः । स्वरार्थश्च–शबनुदात्तः, शस्तूदात्तः । १५२१ शद्लृ शातने । स्वरार्थ एव पुनः पाठः । शता तु नास्ति, 'शदेः शितः–' २३६२ इत्यात्मनेपदोक्तेः ।

अथ षट् स्वरितेतः ॥ १५२२ मिल सङ्गमे । 'मिल संश्लेषणे' इति पठितस्य पुनः पाठः । कर्त्रभिप्राये तङर्थः । मिलति । मिलते । मिमेल । मिमिले । १५२३ मुच्लृ मोक्षणे ।

२५४२ । **शे मुचादीनाम्** ।७।१।५९। नुम् स्यात् । मुञ्चति । मुञ्चते । मोक्ता । मुच्यात् । मुक्षीष्ट । अमुचत् । अमुक्त । अमुक्षाताम् । १५२४ लुप्लृ छेदने । लुम्पति । लुम्पते । अलुपत् । अलुप्त । १५२५ विद्लृ लाभे । विन्दति । विन्दते । विवेद । विविदे । व्याघ्रभूत्यादिमते सेट्कोऽयम्, वेदिता । भाष्यादिमतेऽनिट्कः, वेत्ता । परिवेत्ता, परिविर्जने, ज्येष्ठं परित्यज्य दारानग्नींश्च लब्धवानित्यर्थः । तृन्तृचौ । १५२६ लिप उपदेहे । उपदेहो वृद्धिः । लिम्पति । लिम्पते । लेप्ता । लिपिसिचि–'२४१८

---

न्तनिघातनिषेधादिष्टस्वरः सिध्यतीति बोध्यम् । **रि पि** गतौ । परत्वाल्लघूपधगुणः स्यादित्याशङ्कायामाह—**अन्तरङ्गत्वादिति** । **२५३९ किरतौ लवने** । 'उपात्प्रतियत्न' इति सूत्रादुपादिति वर्तते । लवने किम् ? उपकिरति ॥ **२५४० हिंसायां प्रतेश्च** । चादुपात् । 'उरोविदारं प्रतिचस्करे नखैः' इति माघः । कर्मणि लिट् । 'ऋच्छत्यृताम्' इति गुणः ॥ **२५४१ दृङ्** आदरे । 'तथाऽऽद्रियन्ते न बुधाः सुधामपि' इति श्रीहर्षः । **प्रच्छ** ज्ञीप्सायाम् । ज्ञातुमिच्छा ज्ञीप्सा । अत्र ज्ञपिर्ज्ञाने । 'आप्ज्ञप्यृधामीत्', 'अत्र लोपः–' इत्यभ्यासलोपः । ण्वुलि–प्रच्छकः । पृच्छाशब्दात् 'तत्करोति–' इति णिजन्ताण्ण्वुलि तु पृच्छकः । पृच्छाशब्दस्तु भिदादेराकृतिगणत्वादङि संप्रसारणे बोध्यः ॥—**किरादयो वृत्ता इति** । एते च 'भूषाकर्मकिरादिसनाम्' इति वक्ष्यमाणयक्चिणादिनिषेधवार्तिके उपयोक्ष्यन्ते । 'किरश्च पञ्चभ्यः' इत्यत्र पञ्चभ्य इत्येतदुत्तरसूत्रेऽनुवृत्त्यर्थमिति बोध्यम् ॥—**ससर्जिथेति** । 'विभाषा सृजिदृशोः' इति थलि वेट् ॥—**विच्छ** गतौ । तुदादिपाठसामर्थ्यादायप्रत्ययान्तादपि शो न तु शप् । तेन विच्छायति विच्छायन्तीति नुम्विकल्पः । केचित्तु तुदादिपाठसामर्थ्यादायप्रत्ययस्य पाक्षिकत्वं स्वीकृत्य विच्छति विच्छन्तीति नुम्विकल्पं विच्छति विच्छतः विच्छन्तीत्यादिरूपाणि चोदाजह्रुः । तेषां मते तु तुदादिपाठस्य केवले चरितार्थत्वादायप्रत्ययान्ताच्छबेव । तेन विच्छायन्तीति नित्यमेव 'शप्श्यनोः–' इति नुम् ॥—**पठितस्येति** । अस्मिन्नेव गणे परस्मैपदिषु पठितस्येत्यर्थः ॥—**तङर्थ इति** । पूर्वं पाठस्तु

इत्यङ्, तङि तु वा, अलिपत्। अलिपत। अलिप्त। १५२७ षिच क्षरणे। सिञ्चति। सिञ्चते। असिचत्। असिचत। असिक्त। अभिषिञ्चति। अभ्यषिञ्चत्। अभिषिषेच।

अथ त्रयः परस्मैपदिनः॥ १५२८ कृती छेदने। कृन्तति। चकर्त। कर्तिता। कर्तिष्यति। कर्त्स्यति। अकर्तीत्। १५२९ खिद् परिघाते। खिन्दति। चिखेद। खेत्ता। अयं दैन्ये दिवादौ रुधादौ च। १५३० पिश अवयवे। पिंशति। पेशिता। अयं दीपनायामपि, त्वष्टा रूपाणि पिंशतु। वृत्। मुचादयो वृत्ताः, तुदादयश्च।

इति तुदादयः॥

---

## अथ तिङन्ते रुधादयः।

१५३१ रुधिर् आवरणे। नव स्वरितेत इरितश्च॥

२५४३। रुधादिभ्यः श्नम् ।३।१।७८ शपोऽपवादः। मित्त्वादन्त्यादचः परः। नित्यत्वाद्गुणं बाधते। रुणद्धि। 'श्नसोरल्लोपः' २४६९। णत्वस्यासिद्धत्वादनुस्वारः परसवर्णः। तस्यासिद्धत्वाण्णत्वं न। 'न पदान्त–' ५१ इति सूत्रेणानुस्वारपरसवर्णयोरल्लोपो न स्थानिवत्। रुन्धः। रुन्धन्ति। रुन्धे। रोद्धा। रोत्स्यति। रोत्स्यते। रुणद्धु। रुन्द्धात्। रुन्धि। रुणधानि। रुणधै। अरुणत्। अरुन्धाम्। अरुणत्, अरुणः। अरुणधम्। अरुधत्, अरौत्सीत्। अरुद्ध। १५३२ भिदिर् विदारणे। भिनत्ति। भिन्ते। भेत्ता। भेत्स्यति। भेत्स्यते। अभिनत्, अभिनः। अभिन्ताम्। अभिनदम्। अभिन्त। अभिदत्, अभैत्सीत्। अभित्त। १५३३ छिदिर् द्वैधीकरणे। अच्छिदत्, अच्छैत्सीत्। अच्छित्त। १५३४ रिचिर् विरेचने। रिणक्ति। रिङ्क्ते। रिरेच। रिरिचे। रेक्ता। अरिणक्। अरिचत्, अरैक्षीत्। अरिक्त। १५३५ विचिर् पृथग्भावे। विनक्ति। विङ्क्ते। १५३६ क्षुदिर् संपेषणे। क्षुणत्ति। क्षुन्ते। क्षोत्ता। अक्षुदत्, अक्षौत्सीत्। अक्षुत्त। १५३७ युजिर् योगे। योक्ता। १५३८ उच्छृदिर् दीप्तिदेवनयोः। छृणत्ति। छृन्ते। चच्छर्द। 'सेसिचि–' २५०६ इति वेट्, चच्छृदिषे, चच्छृत्से। छर्दिता। छर्दिष्यति, छर्त्स्यति। अच्छृदत्, अच्छर्दीत्। अच्छर्दिष्ट। १५३९ उतृदिर् हिंसानादरयोः। तृणत्ति। इत्यादि छृणत्तिवत्। १५४० कृती वेष्टने। परस्मैपदी। कृणत्ति। आर्धधातुके तौदादिकवत्॥

१५४१ ञिइन्धी दीप्तौ॥ त्रय आत्मनेपदिनः॥

२५४४ श्नान्न लोपः ।६।४।२३। श्नमः परस्य नस्य लोपः स्यात्। 'श्नसोरल्लोपः' २४६९, इन्धे। इन्त्से। इन्धिता। इनधै। ऐन्ध। ऐन्धाः। १५४२ खिद दैन्ये। खिन्ते। खेत्ता। १५४३ विद विचारणे। विन्ते। वेत्ता॥

अथ परस्मैपदिनः। १५४४ शिष्लृ विशेषणे। शिनष्टि। शिंष्टः। शिंषन्ति। शिशेषिथ। शेष्टा। शेक्ष्यति। हेर्धिः। जश्त्वम्, ष्टुत्वम्, 'झरो झरि–' ७१ इति वा डलोपः, अनुस्वारपरसवर्णौ, शिण्ढि–शिण्ड्ढि। शिनषाणि। अशिनट्। लृदित्त्वादङ्, अशिषत्। १५४५ पिष्लृ संचूर्णने। शिषिवत्। पिनष्टि। १५४६ भञ्जो आमर्दने। भनक्ति। बभञ्जिथ, बभङ्क्थ। भङ्क्ता। १५४७ भुज पालनाभ्यवहारयोः। भुनक्ति। भोक्ता। भोक्ष्यति। अभुनक्। १५४८ तृह १५४९ हिसि हिंसायाम्।

२५४५। तृणह इम् ।७।३।९२। तृहः श्नमि कृते इमागमः स्याद्धलादौ पिति। तृणेढि। तृण्ढः। ततर्ह। तर्हिता। अतृणेट्॥ हिनस्ति। जिहिंस। हिंसिता।

---

संश्लेषणे कर्त्रभिप्रायेऽपि परस्मैपदार्थः॥ २५४२ षिच क्षरणे॥ 'षिचिर्' इति केचिदिरितं पठन्ति। तत्तु फलाभावादुपेक्ष्यम्। इह 'लिपिसिचिह्वश्च' इति च्लेरङ् विधीयते, स चाप्राप्तविधिः। इरित्त्वे तु विकल्पेन प्राप्तौ नित्यार्थो विधिरिति फलाभावः॥ —पिंशत्विति। दीपयत्वित्यर्थः॥ इति तुदादयः॥

**२५४३ रुधादिभ्यः श्नम्।** प्रत्ययलेऽपि मित्त्वादन्त्यादचः परः। प्रत्ययसंज्ञाफलं तु शस्येत्संज्ञा। शस्योच्चारणं तु 'श्नसोरल्लोपः', 'श्नान्नलोपः' इत्यत्र विशेषणार्थं न तु सार्वधातुकसंज्ञार्थं, फलाभावात्। न चापित्सार्वधातुकस्य ङित्त्वे गुणनिषेधः फलमिति शङ्क्यम्। इगन्तस्याङ्गस्याभावात्॥—**अरुण इति।** सिपि दश्चेति रुर्वा। एवम् 'अभिनः' इत्यत्रापि। **उच्छृदिर्।** उकारः क्त्वायामिड्विकल्पार्थः। छृत्वा। छर्दित्वा। इट्पक्षे 'न क्त्वा सेट्' इति कित्त्वनिषेधाद् गुणः॥ **२५४४ श्नान्नलोपः।** अस्य मुख्योदाहरणम्—अनक्ति, भनक्ति। 'श्नात्' इत्युत्सृष्टमकारानुबन्धस्य श्नमो ग्रहणमित्यर्थः—श्नमः **परस्येति।** एवं च 'यजयाच–' इति विश्नशब्दस्यापि नुटि विश्नानामित्यत्र लक्षणप्रतिपदोक्तप्रत्ययग्रहणपरिभाषयोः प्रवृत्त्या नलोपश‍ङ्केव नास्तीत्याहुः। **इन्धे। इन्त्से।** श्नमो नकारस्यानुस्वारपरसवर्णौ। 'अनिदिताम्–' इति नलोपस्तु न भवति, अल्लोपस्य 'असिद्धवदत्र–' इत्यसिद्धत्वात्स्थानिवत्त्वाद्वा। **भञ्जो।** ओदित्करणं निष्ठानत्वार्थम्–भग्नः। **भुज** पालनादौ। 'भुजोऽनवने' इत्यात्मनेपदं वक्ष्यते–भुङ्क्ते। भुञ्जाते। भुञ्जते॥ **२५४५ तृणह इम्।** 'तृहः' इति वक्तव्ये सश्नमो ग्रहणं विशेषविहितेन इमा श्नमो बाधा माभूदित्येवमर्थम्। न च तौदादिकस्य तृह इत्यस्य व्यावृत्त्यर्थमेवास्त्विति शङ्क्यम्। ततः परस्य हलादेः पितः सार्वधातुकस्य विकरणेन व्यवधानात्। 'नाभ्यस्तस्याचि पिति–' इत्यतः पितीति 'उतो वृद्धिः' इत्यतो हलीति च वर्तते, तदाह **—हलादौ पितीति।** 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति सूत्रस्थभाष्यकारीयनिष्कर्षे तु हलीति नानुवर्तते, किं तु पितीति अनुवर्तत एव। तेन तृढ इत्यत्र नातिप्रसङ्गः। न च हलीत्यननुवृत्तौ तृणहानीत्यत्रातिप्रसङ्ग इति वाच्यम्। 'अचि' इत्यननु-

१५५० उन्दी क्लेदने । उनत्ति । उन्तः । उन्दन्ति । उन्दाञ्चकार । औनत् । औन्ताम् । औन्दन् । औनः, औनत् । औनदम् । १५५१ अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । अनक्ति । अङ्क्तः । अञ्जन्ति । आनञ्ज । आनञ्जिथ, आनङ्क्थ । अङ्क्ता, अञ्जिता । अङ्ग्धि । अनजानि । आनक् ।

२५४६ । अञ्जेः सिचि ।७।२।७१। अञ्जेः सिचो नित्यमिट् स्यात् । आञ्जीत् । १५५२ तञ्चू सङ्कोचने । तनक्ति । तङ्क्ता, तञ्चिता । १५५३ ओविजी भयचलनयोः । विनक्ति । विङ्क्तः । 'विज इट्' २५३६ इति ङित्त्वम्, विविजिथ । विजिता । अविनक् । अविजीत् । १५५४ वृजी वर्जने । वृणक्ति । वर्जिता । १५५५ पृची संपर्के । पृणक्ति । पपर्च ॥ इति रुधादयः ॥

---

## अथ तिङन्ते तनादयः ।

अथ सप्त स्वरितेतः ॥ १५५६ तनु विस्तारे । 'तनादिकृञ्भ्य उः' २४६६ । तनोति । तन्वः, तनुवः । तनुते । ततान । तेने । तनु । अतनीत्, अतानीत् ।

२५४७ । तनादिभ्यस्तथासोः ।२।४।७९। तनादेः सिचो वा लुक् स्यात्तथासोः परतः । थासा साहचर्यादेकवचनं तशब्दो गृह्यते । तेनेह न—यूयमतनिष्ट, अतानिष्ट । 'अनुदात्तोपदेश–' २४२८ इत्यनुनासिकलोपः । तङि–अतत, अतनिष्ट । अतथाः, अतनिष्ठाः । १५५७ षणु दाने सनोति । सनुते । 'ये विभाषा–' २३१९, सायात्, सन्यात् । 'जनसन'– २५०४ इत्यात्वम्, असात, असनिष्ट । असाथाः, असनिष्ठाः । १५५८ क्षणु हिंसायाम् । क्षणोति । क्षणुते । 'ह्म्यन्त–' २२९९ इति न वृद्धिः, अक्षणीत् । अक्षत, अक्षणिष्ट । अक्षथाः, अक्षणिष्ठाः । १५५९ क्षिणु च । उप्रत्ययनिमित्तो लघूपधगुणः । '(प) संज्ञापूर्वको विधिरनित्यः' इति न भवति–इति आत्रेयादयः । भवत्येवेत्यन्ये । क्षिणोति, क्षेणोति । क्षेणितासि । क्षेणितासे । अक्षेणीत् । अक्षित, अक्षेणिष्ट । १५६० ऋणु गतौ । ऋणोति, अर्णोति । अर्णुतः । अर्ण्वन्ति । आनर्ण । आनृणे । अर्णितासि । आर्णीत् । आर्त, आर्णिष्ट । आर्थाः, आर्णिष्ठाः । १५६१ तृणु अदने । तृणोति, तर्णोति । तृणुते । तर्णुते । १५६२ घृणु दीप्तौ । जघर्ण । जघृणे ।

अथ द्वावनुदात्तेतौ ॥ १५६३ वनु याचने । वनुते । ववने । चान्द्रमते परस्मैपदी । वनोति । ववान । १५६४ मनु अवबोधने । मनुते । मेने । १५६५ डुकृञ् करणे । करोति । 'अत उत्सार्वधातुके' २४६७, कुरुतः । यण्, 'न भकुर्छुराम्' १६२९ इति न दीर्घः, कुर्वन्ति ।

२५४८ । नित्यं करोतेः ।६।४।१०८। करोतेः प्रत्ययोकारस्य नित्यं लोपः स्याम्वोः परयोः । कुर्वः । कुर्मः । चकर्थ । चकृव । चकृषे । कर्ता । करिष्यति ।

२५४९ । ये च ।६।४।१०९। कृञ उलोपः स्यादादौ प्रत्यये परे । कुर्यात् । आशिषि–क्रियात् । कृषीष्ट । अकार्षीत् । 'तनादिभ्यः–' २५४७ इति लुकोऽभावे 'ह्रस्वादङ्गात् २३६९ इति सिचो लोपः, अकृत । अकृथाः ।

२५५० । संपरिभ्यां करोतौ भूषणे ।६।१।१३७।

२५५१ । समवाये च ।६।१।१३८। संपरिपूर्वस्य करोतेः सुट् स्याद्भूषणे संघाते चार्थे । संस्करोति, अलंकरोतीत्यर्थः । संस्कुर्वन्ति, सङ्घीभवन्तीत्यर्थः, संपूर्वस्य क्वचिदभूषणेऽपि सुट्, 'संस्कृतं भक्षाः' १२१७ इति ज्ञापकात् । 'परिनिविभ्यः' २२७५ इति षः, परिष्करोति । 'सिवादीनां वा–' २३५९, पर्यष्कार्षीत्–पर्यस्कार्षीत् ।

२५५२ । उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च ।६।१।१३९। उपात्कृञः सुट् स्यादेष्वर्थेषु, चात्प्रागुक्तयोरर्थयोः । प्रतियत्नो गुणाधानम् । विकृतमेव वैकृतं–विकारः । वाक्यस्याध्याहारः–आकाङ्क्षितैकदेशपूरणम् । उपस्कृता कन्या, अलंकृतेत्यर्थः । उपस्कृता ब्राह्मणाः, समुदिता इत्यर्थः । एधो दकस्योपस्कुरुते, गुणाधानं करोतीत्यर्थः । उपस्कृतं भुङ्क्ते, विकृतमित्यर्थः । उपस्कृतं ब्रूते, वाक्याध्याहारेण ब्रूत इत्यर्थः ।

२५५३ । सुट्कात्पूर्वः ।६।१।१३५। 'अडभ्यासव्यवायेऽपि' इत्युक्तम् । संचस्कार । 'कात्पूर्वः' इत्यादि भाष्ये प्रत्याख्यातम् । तथाहि—पूर्वं धातुरुपसर्गेण युज्यते । अन्तरङ्गत्वात्सुट् । ततो द्वित्वम् । एवंच 'ऋतश्च संयोगादेर्गुणः' २३८९, संचस्करतुः । 'कुसृभृ–' २२९३ इति सूत्रे

---

वर्तनात् । उन्दी । क्लेदनमार्द्रीभावः । अञ्जू । व्यक्तिर्विवेचनम् । म्रक्षणं स्निग्धता ॥ २५४६ अञ्जेः सिचि । नित्यमिट् स्यादिति । विभाषाग्रहणं नानुवर्तत इति भावः । सिचि किम् ? अङ्क्ता । पृची संपर्चने । ईदित्त्वान्निष्ठायां नेट् । पृक्तः । 'अपृक्त एकाल्–' इत्यत्र नञ्पूर्वः ॥ इति रुधादिप्रकरणम् ॥

२५४७ अतनिष्ट अतानिष्टेति । 'तस्थस्थमिपाम्–' इति तादेशः । 'अतो हलादेः–' इति वा वृद्धिः ॥—अततेति । 'तनादिभ्यस्तथासोः' इति सिज्लुक्यनुनासिकलोपः ॥—अतनिष्टेति । लुगभावपक्षे इट् । षणु दाने । नान्तोऽयं । णकारस्तु लाक्षणिकः । तेन यङ्लुकि संसन्ति संसन्तः इत्यादावनुस्वारपरसवर्णौ । क्षणु हिंसायाम् । क्षिणु च । इमावपि लाक्षणिकणकारौ । तेन चङ्क्षति । चेक्षति इत्यत्रानुस्वारपरसवर्णौ ॥ २५४९ सिचो लोप इति । न चास्मिन्पक्षे प्रत्ययलक्षणप्र-

---

१ अत्र उवर्णान्तस्य धातुत्वाभावेन उवङः प्राप्त्यभावात् 'इको यणचि' इति यण् । २ 'वमयोः परयोः' इत्यपि पाठः ।

'ऋतो भारद्वाजस्य' २२९६ इति सूत्रे च ॐ कृञोऽसुट् इति वक्तव्यम् । तेन ससुट्कात्परस्येट्, संचस्करिथ । संचस्करिव । 'गुणोऽर्ति–' २३८० इति सूत्रे 'नित्यं छन्दसि' ३५८७ इति सूत्रात् 'नित्यम्' इत्यनुवर्तते । 'नित्यं यः संयोगादिस्तस्य' इत्यर्थात्सुटि गुणो न, संस्क्रियात् । 'ऋतश्च संयोगादेः–' २५२६ इति लिङ्सिचोर्नेट्, 'एकाच उपदेशे' २२७६ इति सूत्रात् 'उपदेशे' इत्यनुवर्त्य 'उपदेशे यः संयोगादिः' इति व्याख्यानात् । संस्कृषीष्ट । समस्कृत । समस्कृषाताम् ॥ **इति तनादयः** ॥

---

## अथ तिङन्ते क्र्यादयः ।

**१५६६ डुक्रीञ् द्रव्यविनिमये ।**

**२५५४ । क्र्यादिभ्यः श्ना** ।३।१।८१। क्रीणाति । 'ई हल्यघोः' २४९७, क्रीणीतः । ईत्वात्पूर्वं झेरन्तादेशः, परत्वान्नित्यत्वादन्तरङ्गत्वाच्च । एवं झस्याद्भावः । ततः 'श्नाभ्यस्तयोः–' २४८३ इत्याल्लोपः, क्रीणन्ति । क्रीणीते । क्रीणाते । क्रीणते । चिक्राय । चिक्रियतुः । चिक्रयिथ, चिक्रेथ । चिक्रियिव । चिक्रियिषे । क्रेता । क्रेष्यति । क्रीयात् । क्रेषीष्ट । अक्रैषीत् । अक्रेष्ट । **१५६७ प्रीञ्** तर्पणे कान्तौ च । कान्तिः–कामना । प्रीणाति । प्रीणीते । **१५६८ श्रीञ्** पाके । **१५६९ मीञ्** हिंसायाम् । 'हिनुमीना' २५३०, प्रमीणाति । प्रमीणीतः । 'मीनातिमिनोति–' २५०८ इत्येज्विषये आत्वम्, ममौ । मिम्यतुः । ममिथ । ममाथ । मिम्ये । माता । मास्यति । मीयात् । मासीष्ट । अमासीत् । अमासिष्टाम् । अमास्त । **१५७० षिञ्** बन्धने । सिनाति । सिनीते । सिषाय । सिष्ये । सेता । **१५७१ स्कुञ्** आप्रवणे ।

**२५५५ । स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च** ।३।१।८२। चात् श्ना । स्कुनोति । स्कुनुते । स्कुनाति । स्कुनीते । चुस्काव । चुस्कुवे । स्कोता । अस्कौषीत् । अस्कोष्ट । **१५७२,७३,७४,७५ स्तम्भ्वादयश्चत्वारः सौत्राः** सर्वे रोधनार्था इत्येके । माधवस्तु प्रथमतृतीयौ स्तम्भार्थौ द्वितीयो निष्कोषणार्थश्चतुर्थो धारणार्थ इत्याह । सर्वे परस्मैपदिनः । नलोपः, विष्टभ्नोति, विष्टभ्नाति । अवष्टभ्नोति, अवष्टभ्नाति । अवतष्टम्भ । 'जृस्तम्भु–' २२९१ इत्यङ्वा, व्यष्टभत्, व्यष्टम्भीत् । स्तुभ्नोति, स्तुभ्नाति ।

**२५५६ । वेः स्कभ्नातेर्नित्यम्** ।८।३।७७। वेः परस्य स्कभ्नातेः सस्य षः स्यात् । विष्कभ्नाति । विस्कभ्नोति, स्कुभ्नोति, स्कुभ्नाति ।

**२५५७ । हलः श्नः शानज्झौ** ।३।१।८३। हलः परस्य श्नः शानजादेशः स्याद्धौ परे । स्तभान । स्तुभान । स्कभान । स्कुभान । पक्षे–स्तभ्नुहि–इत्यादि । **१५७६ युञ्** बन्धने । युनाति । युनीते । योता । **१५७७ क्नूञ्** शब्दे । क्नूनाति । क्नूनीते । क्नविता । **१५७८ द्रूञ्** हिंसायाम् । द्रूणाति । द्रूणीते । **१५७९ पूञ्** पवने ।

**२५५८ । प्वादीनां ह्रस्वः** ।७।३।८०। शिति परे । पुनाति । पुनीते । पविता । **१५८० लूञ्** छेदने । लुनाति । लुनीते । **१५८१ स्तॄञ्** आच्छादने । स्तृणाति । स्तृणीते । तस्तार । तस्तरतुः । स्तरिता, स्तरीता । स्तृणीयात् । स्तृणीत । आशिषि–स्तीर्यात् । 'लिङ्सिचोः' २५२८ इति वेट् । 'न लिङि' २५२९ । वृत इटो लिङि दीर्घो न स्यात् । स्तरिषीष्ट । 'उश्च' २३६८ इति कित्त्वम्, स्तीर्षीष्ट । 'सिचि च परस्मैपदेषु' २३९२ इति न दीर्घः, अस्तारीत् । अस्तारिष्टाम् । अस्तरिष्ट, अस्तरीष्ट, अस्तीर्ष्ट । **१५८२ कॄञ्** हिंसायाम् । कृणाति । कृणीते । चकार । चकरे । **१५८३ वृञ्** वरणे । वृणाति । वृणीते । ववार । ववरे । वरिता, वरीता । आशिषि 'उदोष्ठ्यपूर्वस्य' २४९४, वूर्यात् । वरिषीष्ट, वूर्षीष्ट । अवारीत् । अवारिष्टाम् । अवरिष्ट, अवरीष्ट, अवूर्ष्ट । **१५८४ धूञ्** कम्पने । धुनाति । धुनीते । दुधविथ, दुधोथ । दुधुविव । धोता, धविता । 'स्तुसुधूञ्भ्यः–' २३८५ इतीट्, अधावीत् । अधविष्ट, अधोष्ट ।

**अथ वध्नात्यन्ताः परस्मैपदिनः । १५८५ शॄ** हिंसायाम् । 'शॄदॄप्रां ह्रस्वो वा' २४९९ इति ह्रस्वपक्षे यण् । अन्यदा 'ऋच्छत्यृताम्' २३८३ इति गुणः ।

---

वृत्त्या अकृतेत्यत्र गुणः स्यादिति वाच्यम् । 'उश्च' इति सिचः कित्त्वेन तन्निषेधात् ॥ **२५५०** 'संपर्युपेभ्यः–' इति वृत्तिस्थपाठं विहाय भाष्यवार्तिकानुसारेणाह—**संपरिभ्यामिति** ॥ **इति तनादिप्रकरणम्** ॥

**२५५४ एवं झस्याद्भाव इति** । 'आत्मनेपदेष्वनतः' इत्यनेन ॥ **२५५५ सौत्रा इति** । नकारोपधा इत्यपि ज्ञेयाः ॥—**विष्टभ्नोतीति** । 'अनिदिताम्–' इति नलोपः । 'स्तम्भेः' इति षत्वम् ॥ **२५५६ वेः स्कभ्नातेर्नित्यम्** । 'सिवादीनां वा' इत्यतो वेति नानुवर्तते इति ध्वननार्थमिह नित्यग्रहणम् ॥—**विस्कभ्नोतीति** । स्कभ्नातेरित्यत्र श्नाविशिष्टं रूपं न विवक्षितं किं तु धातुमात्रम् । अन्यथा विष्कम्भिता विष्कम्भितमित्यादावपि षत्वं न स्यात् । न चेष्टापत्तिः, माधवादिग्रन्थविरोधादिति भावः ॥ **२५५७ हलः श्नः**—॥—**स्तभानेति** । 'अतो हेः' इत्यारम्भसामर्थ्यात्संनिपातपरिभाषाया अप्रवृत्तेर्हेर्लुक् । अत एव जहीत्यत्र हिलोपवारणायेयं परिभाषा नोपन्यस्तेत्याहुः । यत्तु कैश्चित्—शानजादेशो धातुपाठपठितेभ्यः परस्य श्नो भवति न तु सौत्रेभ्य इति व्याख्याय स्तभ्नीहीत्युदाहृतं, तन्निष्प्रमाणं माधवादिग्रन्थविरुद्धं च ॥ **२५५८ प्वादीनां ह्रस्वः** । 'ष्ठिवुक्लमुचमाम्–' इत्यतः शितीत्यनुवर्तत इत्याह—**शिति पर इति** ॥—**न लिङीति** । अनेन वृत इटो लिङि दीर्घो नेति स्मारितम् ॥—**उदोष्ठ्य**—। दन्तोष्ठ्योऽपि ओष्ठ्यग्रहणेन गृह्यत इत्याह—**वूर्यादिति** ॥—**वरिषीष्टेति** । 'लिङ्सिचोरात्मनेपदेषु'

शश्रतुः, शशरतुः । 'श्रयुकः किति' २३८१ इति निषेधस्य क्रादिनियमेन बाधः । शशरिव, शश्रिव । शरिता, शरीता । शृणीहि । शीर्यात् । अशारिष्टाम् । १५८६ पॄ पालनपूरणयोः । पप्रतुः, पपरतुः । आशिषि–पूर्यात् । १५८७ वॄ वरणे । 'भरणे' इत्येके । १५८८ भॄ भर्त्सने । 'भरणे' अप्येके । १५८९ मॄ हिंसायाम् । मृणाति । ममार । १५९० दॄ विदारणे । ददरतुः, दद्रतुः । दद्रुः[1] । १५९१ जॄ वयोहानौ । १५९२ झॄ इत्येके । १५९३ धॄ इत्यन्ये । १५९४ नॄ नये । १५९५ कॄ हिंसायाम् । १५९६ ऋॄ गतौ । ऋणाति । अरांचकार । अरिता, अरीता । आर्णात् । आर्णीताम् । ईर्यात् । आरीत् । आरिष्टाम् । १५९७ गॄ शब्दे । १५९८ ज्या वयोहानौ । 'ग्रहिज्या–' २४१२ ।

२५५९ । हलः ।६।४।२। अङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्ताङ्गस्य दीर्घः स्यात् । इति दीर्घे कृते 'प्वादीनां ह्रस्वः' २२५८, जिनाति । जिज्यौ । जिज्यतुः । १५९९ री गतिरेषणयोः । रेषणं–वृकशब्दः । १६०० ली श्लेषणे । 'विभाषा लीयतेः' २५०९ इत्येज्विषये आत्वं वा, ललौ–लिलाय[2] । लाता–लेता । १६०१ व्ली वरणे । व्लिनाति । १६०२ प्ली गतौ । वृत् । ल्वादयो वृत्ताः । प्वादयोऽपीत्येके ।

१६०३ व्री वरणे । १६०४ भ्री भये । 'भरणे' इत्येके । १६०५ क्षीष् हिंसायाम् । एषां त्रयाणां ह्रस्वः । केषांचिन्मते तु न । १६०६ ज्ञा अवबोधने । 'ज्ञाजनोर्जा' २५११, जानाति । दीर्घनिर्देशसामर्थ्यान्न ह्रस्वः । १६०७ बन्ध बन्धने । बध्नाति । बबन्धिथ, बबन्ध । बन्धा । बन्धारौ । भन्त्स्यति । बधान । अभान्त्सीत् । 'पूर्वत्रासिद्धम्' १२ इति भष्भावात्पूर्वं 'झलो झलि' २१८१ इति सिज्लोपः । प्रत्ययलक्षणेन सादिप्रत्ययमाश्रित्य भष्भावो न, प्रत्ययलक्षणं प्रति सिज्लोपस्यासिद्धत्वात् । अबान्धाम् । अभान्त्सुः । १६०८ वृङ् संभक्तौ । वृणीते । वव्रे । ववृषे । ववृढ्वे । वरिता, वरीता । अवरिष्ट, अवरीष्ट, अवृत ।

१६०९ श्रन्थ विमोचनप्रतिहर्षयोः ॥ इतः परस्मैपदिनः । श्रथ्नाति । '* श्रन्थिग्रन्थि–' इत्यादिना कित्त्वपक्षे एत्वाभ्यासलोपावप्यत्र वक्तव्यौ, इति हरदत्तादयः । श्रेथतुः । श्रेथुः । 'इदं कित्त्वं पितामपि' इति सुधाकरमते–श्रेथिथ । अस्मिन्नपि पक्षे णलि, शश्राथ । उत्तमे तु–शश्राथ शश्रथ– इति माधवः । तत्र मूलं मृग्यम् । १६१० मन्थ विलोडने । १६११ श्रन्थ १६१२ ग्रन्थ सन्दर्भे । अर्थभेदाच्छ्रन्थेः पुनः पाठः । रूपं तूक्तम् । १६१३ कुन्थ संश्लेषणे । 'संक्लेशे' इत्येके । कुथ्नाति । चुकुन्थ । १६१५ कुथ इति दुर्गः । चुकोथ । १६१६ मृद क्षोदे । मृद्नाति । मृदान । १६१७ मृड च । अयं सुखेऽपि । ष्टुत्वम्, मृड्णाति । १६१८ गुध रोषे । गुध्नाति । १६१९ कुष निष्कर्षे । कुष्णाति । कोषिता ।

२५६० । निरः कुषः ।७।२।४६। निरः परात्कुषो वलादेरार्धधातुकस्य इड्वा स्यात् । निष्कोषिता, निष्कोष्टा । निरकोषीत्, निरकुक्षत् । १६२० क्षुभ संचलने ।

'क्षुभ्नादिषु च' ७९३ क्षुभ्नाति । क्षुभ्नीतः । क्षोभिता । क्षुभाण[3] । १६२१ णभ १६२२ तुभ हिंसायाम् । नभ्नाति । तुभ्नाति । 'नभते' 'तोभते' इति शपि । 'नभ्यति' 'तुभ्यति' इति श्यनि । १६२३ क्लिशू विबाधने । 'शात्' ११२ इति श्चुत्वनिषेधः, क्लिश्नाति । क्लेशिता, क्लेष्टा । अक्लेशीत्, अक्लिक्षत् । १६२४ अश भोजने । अश्नाति । आश । १६२५ उध्रस उञ्छे । उकार इत् । ध्रस्नाति । उकारो १६२६ धात्ववयवः इत्येके । उध्रसांचकार । १६२७ इष आभीक्ष्ण्ये । पौनःपुन्यं भृशार्थो वा आभीक्ष्ण्यम् । इष्णाति ।

इति वेट् ॥—वूर्षिष्ट । अवूर्ष्टेति । 'उश्व' इति लिङ्सिचोः कित्त्वाद् गुणाभावे सत्युत्वम् ॥ २५५९ हलः । संप्रसारणस्येत्यनुवर्तते । अङ्गस्येत्यवयवषष्ठी । हल इति पञ्चमी, तदेतदाह—अङ्गावयवादिति । अङ्गावयवात्किम् ? निरुतम् । दुरुतम् । तदन्ताङ्गस्य किम् ? विध्यति । क्षीष् हिंसायाम् । षित्त्वादङ्, क्षिया । 'हेति क्षियायाम्' 'क्षियाशीः–' इत्यादौ क्षिया–धर्मव्यतिक्रम आचारभेद इति वक्ष्यति ॥—दीर्घनिर्देशसामर्थ्यादिति । ननु दीर्घग्रहणेनाङ्गवृत्तपरिभाषा ज्ञाप्यत इत्याकरे स्थितम् । अन्यथा ज्ञाजनोर्जं विदध्यात् । 'अतो दीर्घो यञि' इति दीर्घसिद्धेः । तथा च दीर्घनिर्देशसामर्थ्यस्योपक्षयात्कथमिह ह्रस्वाभावसिद्धिरिति चेत् । अत्राहुः—ह्रस्वाभावे सत्येव दीर्घनिर्देश उक्तपरिभाषाया ज्ञापकः । सति तु ह्रस्वे पुनरङ्गकार्यं प्रवृत्तमेवेति न ज्ञापकः । तथा च ह्रस्वाभावसिद्धौ न किंचिद्बाधकमिति । किंच 'अङ्गवृत्ते पुनर्वृत्तावविधिः' इत्येव परिभाषाशरीरम् । तच्चोक्तज्ञापकात्सिद्धम् । यदि तु 'भ्यसो भ्यम्' इति सूत्रे भाष्ये परिनिष्ठितस्येत्येव पाठस्तर्हि स्वतन्त्रमेवेदं वचनं न तु ज्ञापकसिद्धमिति पक्षोऽपि युष्मदस्मच्छब्दगतमनोरमाग्रन्थादवगम्यते । तस्मिंस्तु पक्षे दीर्घग्रहणसामर्थ्यं नोपक्षीणमिति सम्यगेवायं ग्रन्थ इति । केचित्तु संज्ञापूर्वकविधेरनित्यत्वान्न ह्रस्व इति व्याख्येयमित्याहुः ॥—बध्नातीति । 'अनिदिताम्–' इति नलोपः ॥—अभान्त्सीदिति । 'वदव्रज–' इति वृद्धिः । भष्भावः ॥—अबान्धामिति । 'झषस्तथोः–' इति तस्य धत्वम् । 'झरो झरि' इति वा लोपः । वृङ् संभक्तौ । भक्तिर्भजनम् । श्रन्थ ॥—कित्त्वपक्ष इति । श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वेति व्याकरणान्तरमित्युक्तत्वात् ॥ २५६० निरः कुषः । 'स्वरति–' इति सूत्राद्वेत्यनुवर्तते, 'आर्धधातुकस्येट्–' इत्यधिक्रियत एव, तदाह—वलादेरित्यादि । निरः किम् ? कोषिता । कोषितुम् ॥ निरकु-

1 'दद्रुः' इत्यस्य पाठः क्वचिन्नास्ति । 'दीर्यात्' इत्यपि पाठो दृश्यते । 2 'लिलाय' इत्यस्याग्रे–आत्वपक्षे–ललिथ, ललाथ । आत्वाभावे–लिलयिथ, लिलेथ, लिलाय, लिलय । इत्यपि पाठो दृश्यते । 3 'क्षुभ्ना' इति निर्देशात् श्ना घटितस्य णत्वनिषेधः । 'क्षुभान' इत्यत्रस्थानिवद्भावेन श्नाघटितत्वम् । केचिदत्र णत्वमाहुः । वृत्तिकारस्तु–'क्षुभ्नादिषु च' इति णत्वनिषेधो यत्रैतद्रूपं तत्रैवेति 'क्षोभणः' इत्यत्र रूपान्तरे न भवति । क्षुभ्नीतेत्यादौ स्थानिवत्त्वाद्भवति–इत्याह ।

'तीषसह–' २३४० इत्यत्र सहिना साहचर्यादकारविकरणस्य तौदादिकस्यैव इषेर्ग्रहणं न तु इष्यतीष्णात्योरित्याहुः । एषिता । वस्तुतस्तु इष्णातेरपि इड्विकल्प उचितः । तथा च वार्तिकम्—॥ इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेध इति । १६२८ विष विप्रयोगे । विष्णाति । वेष्टा । १६२९ प्रुष १६३० प्लुष स्नेहनसेवनपूरणेषु । प्रुष्णाति । प्लुष्णाति । १६३१ पुष पुष्टौ । पोषिता । १६३२ मुष स्तेये । मोषिता । १६३३ खच भूतप्रादुर्भावे । भूतप्रादुर्भावोऽतिक्रान्तोत्पत्तिः । खच्नाति । १६३४ वान्तोऽयमित्येके ।

२५६१ । च्छ्वोः शूडनुनासिके च ।६।४।१९। सतुक्कस्य छस्य वस्य च क्रमात् 'श' 'ऊठ्' एतावादेशौ स्तोऽनुनासिके क्वौ झलादौ च क्ङिति । खौनाति । चखाव । खविता । शानचः परत्वादूठि कृते हलन्तत्वाभावान्न शानच्, खौनीहि । १६३५ हेठ च । ष्टुत्वम् । हेठ्णाति । १६३६ ग्रह उपादाने । स्वरितेत् । 'ग्रहिज्या–' २४१२, गृह्णाति । गृह्णीते ।

२५६२ । ग्रहोऽलिटि दीर्घः ।७।२।३७। एकाचो ग्रहेर्विहितस्येटो दीर्घः स्यान्न तु लिटि । ग्रहीता । लिटि तु जग्रहिथ । गृह्यात् । ग्रहीषीष्ट । 'ह्यन्त–' २२९९ इति न वृद्धिः, अग्रहीत् । अग्रहीष्टाम् । अग्रहीष्ट । अग्रहीषाताम् । अग्रहीषत । इति क्र्यादयः ॥

## अथ तिङन्ते चुरादयः ।

१६३७ चुर स्तेये ।

२५६३ । सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ।३।१।२५। एभ्यो णिच् स्यात् । चूर्णान्तेभ्यः "(ग) प्रातिपदिकाद्धात्वर्थे' इत्येव सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम् । चुरादिभ्यस्तु स्वार्थे । 'पुगन्त–' २१८९ इति गुणः । 'सनाद्यन्ताः–' २३०४ इति धातुत्वम् । तिप्शबादि । गुणायादेशौ, चोरयति ।

२५६४ । णिचश्च ।१।३।७४। णिजन्तादात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले । चोरयते । चोरयामास । चोरयिता । चोर्यात् । चोरयिषीष्ट । 'णिश्रि–' २३१२ इति चङ्, 'णौ चङि–' २३१४ इति ह्रस्वः, द्वित्वम्, 'हलादिः शेषः' २१७९, 'दीर्घो लघोः' २३१८ इत्यभ्यासदीर्घः, अचूचुरत् । अचूचुरत । १६३८ चिति स्मृत्याम् । चिन्तयति । अचिचिन्तत् । 'चिन्त' इति पठितव्ये इदित्करणं णिचः पाक्षिकत्वे लिङ्गम् । तेन 'चिन्त्यात् । चिन्त्यते' इत्यादौ नलोपो न । चिन्तति । चिन्तेत् । एतच्च ज्ञापकं सामान्यापेक्षमित्येके, 'अत एकहल्–' २२६० इत्यत्र वृत्तिकृता जगाण जगणतुरित्युदाहृतत्वात् । विशेषापेक्षमित्यपरे । अत एव '(ग) आधृषाद्वा' इत्यस्य न वैयर्थ्यम् । १६३९ यत्रि संकोचे । यन्त्रयति ।

---

क्षदिति । इडभावे क्सः ॥—**सहिना साहचर्यादिति** । यद्यपि षह षुह चक्यर्थ इति दिवादिरपि सहिरस्ति तथापि 'सह' इति शपा निर्देशाद् भौवादिकेनैव सहिना साहचर्यमित्याहुः ॥—**श्यन्प्रत्ययादिति** । बहुव्रीहिरयम् । श्यन्प्रत्ययवत इषेस्तकारे परत इड्विकल्पप्रतिषेध इति वार्तिकार्थः । तथा च दैवादिकाद्विकल्पो नेति फलितम् । एवं च 'तीषसह–' इत्यत्र इष्णातेरपि ग्रहणमिति बोध्यम् ॥—**पोषितेति** । अनिट्केषु पुष्येति श्यना निर्देशादयं सेडिति भावः ॥ **२५६१ च्छ्वोः । शूडनु—**। च्छ्वोरिति सतुक्कस्यानुकरणम् । चुत्वेन तकारस्थाने चकार इत्याह—**सतुक्कस्येति** । एवं च सूत्रे छकारात्पूर्व चकारो ज्ञेयः । सतुक्कस्य किम् ? विच्छप्रच्छाभ्यां नङ्प्रत्यये छकारस्य शकारे कृते तुकोऽश्रवणं यथा स्यात् । अकृतव्यूहपरिभाषा त्वनित्या, अस्मादेव सतुक्ग्रहणात् । तेनातिक्रान्तो भवकन्तमतिभवकानित्यादिति सिद्धमित्याहुः । सूत्रस्थेन चशब्देन क्विझलोः क्ङितीत्यनुकृष्यत इत्याह—**क्वावित्यादि** ॥ **२५६२ ग्रहोऽलिटि दीर्घः** । एकाचः किम् ? जाग्रहिता । जाग्रहिष्यति । इत्यादौ यङ्लुकि माभूत् । विहितस्येति किम् ? ग्राहितम् । न चात्र णिलोपस्य स्थानिवद्भावाद्ग्रहेः परत्वं नेति वाच्यम् । दीर्घविधौ स्थानिवत्त्वनिषेधात् । त्रैपादिकदीर्घविधावेव स्थानिवत्त्वनिषेध इत्यभ्युपगमे तु विहितविशेषणं व्यर्थमेवेत्याहुः । प्रकृतस्येटो ग्रहणात् 'ग्राहिता ग्राहिष्यते' इत्यादौ चिण्वदिटो न दीर्घः ॥ **ग्रहीषीष्टेति** । वृत इत्यनुवृत्तेः 'न लिङि' इति दीर्घनिषेधो न प्रवर्तते ॥—**अग्रहीषातामिति** । लुङात्मनेपदद्विवचनम् ॥ **इति क्र्यादिप्रकरणम्** ॥

**२५६३ सत्यापपाश—**॥ एतस्योदाहरणानि अग्रे नामधातुषु स्फुटीभविष्यन्तीति नास्माभिरुपपाद्यन्ते । त्वचशब्दोऽकारान्तः ॥—**प्रपञ्चार्थमिति** । सत्यापग्रहणं तु आपुगर्थमिति ज्ञेयम् । **अन्ये त्वाहुः**—सापेक्षेभ्योऽपि णिजर्थेनानुगा-नम् । अन्यथा रमणीयं कटं करोतीत्यादाविव रमणीयं रूपयतीत्यादावपि णिज् न स्यादिति ॥ **२५६४ अचूचुरदिति** । अत्र प्राचा व्याख्यात्रा 'सन्वल्लघुनि–' इति सन्वद्भाव इत्युक्तं, तद्भ्रमसात् । सन्वद्भावविषये हि जायमानो दीर्घः सन्वद्भावं नापेक्षत इति ॥—**सामान्यापेक्षमिति** । सर्वेऽपि चुरादयो विकल्पेन णिचं लभन्त इत्येतदर्थमित्याहुः । न चैवम् 'आधृषाद्वा' इति व्यर्थमिति वाच्यम् । ज्ञापकसिद्धस्यासार्वत्रिकत्वात् । एवं चास्मिन्पक्षे आधृषीयागणेनैच्छिको विकल्पः, अन्येषां तु शिष्टप्रयोगाद्व्यवस्थित इत्यर्थः ॥—**जगाण । जगणतुरिति** । वृत्तौ चकाण चकणतुरिति प्रचुरः पाठः

---

१ क्वचित् 'हिठ च' इति पाठः, तन्मते–हिठ्णाति । धातुवृत्तौ तु–'क्वचित् हेठ इति पठ्यते' इत्युक्तम् । **२ एकाच इति**—हरदत्तानुरोधेनेदमुक्तम् । अग्रहीष्टामित्यादौ लावस्थायामडिति पक्षे एकाचो विहितत्वाभावाद्दीर्घाप्राप्त्या विहितविशेषणमसंगतमिदं हरदत्तोक्तमिति बोध्यम् ।

'यत्र' इति पठितुं शक्यम् । यत्तु इदित्करणात् 'यन्त्रति' इति माधवेनोक्तं, तच्चिन्त्यम् । एवं कुद्रितत्रिमत्रिषु । १६४० स्फुडि परिहासे । स्फुण्डयति । इदित्करणात्, स्फुण्डति । १६४१ स्फुटि इति पाठान्तरम् । स्फुण्टयति । १६४२ लक्ष दर्शनाङ्कनयोः । १६४३ कुद्रि अनृतभाषणे । कुन्द्रयति । १६४४ लड उपसेवायाम् । लाडयति । १६४५ मिदि स्नेहने । मिन्दयति, मिन्दति । १६४६ ओलडि उत्क्षेपणे । ओलण्डयति, ओलण्डति । १६४७ 'ओकार इत्' इत्येके । लण्डयति, लण्डति । १६४८ 'उकारादिः' अयमित्यन्ये । उलण्डयति । १६४९ जल अपवारणे । १६५० 'लज' इत्येके । १६५१ पीड अवगाहने । पीडयति ।

२५६५ । भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ।७।४।३। एषामुपधाया ह्रस्वो वा स्याच्चङ्परे णौ । अपीपिडत्, अपिपीडत् । १६५२ नट अवस्कन्दने । अवस्कन्दनं नाट्यम् । १६५३ श्रथ प्रयत्ने । 'प्रस्थाने' इत्येके । १६५४ बध संयमने । बाधयति । १६५५ 'बन्ध' इति चान्द्राः । १६५६ पॄ पूरणे । पारयति । दीर्घो[1]च्चारणं णिचः पाक्षिकत्वे लिङ्गम् । तद्धि सेट्कत्वाय । एवं च पृणातिपिपर्तिभ्यां 'परिता' इत्यादिसिद्धावपि 'परतेः' इत्यादिसिद्धिः फलम् । १६५७ ऊर्ज बलप्राणनयोः । १६५८ पक्ष परिग्रहे । १६५९ वर्ण १६६० चूर्ण प्रेरणे । 'वर्ण वर्णने' इत्येके । १६६१ प्रथ प्रख्याने । प्राथयति । 'नान्ये मितोऽहेतौ' इति वक्ष्यमाणत्वान्नास्य मित्त्वम् ।

२५६६ । अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम् ।७।४।९५। एषामभ्यासस्य अकारोऽन्तादेशः स्याच्चङ्परे णौ । इत्वापवादः । अपप्रथत् । १६६२ पृथ प्रक्षेपे । पर्थयति ।

२५६७ । उर्ऋत् ।७।४।७। उपधाया ऋवर्णस्य स्थाने ऋत्स्याद्वा चङ्परे णौ । इररारामपवादः । अपीपृथत्, अपपर्थत् । १६६३ 'पथ' इत्येके । पाथयति । १६६४ षम्ब संबन्धने । सम्बयति । अससम्बत् । १६६५ शम्ब च । अशशम्बत् । १६६६ 'साम्ब' इत्येके । १६६७ भक्ष अदने । १६६८ कुट्ट छेदनभर्त्सनयोः । 'पूरणे' इत्येके । कुट्टयति । १६६९ पुट्ट १६७० चुट्ट अल्पीभावे । १६७१ अट्ट १६७२ षुट्ट अनादरे । अट्टयति । अयं दोपधः । ष्टुत्वस्यासिद्धत्वात् 'नन्द्राः–' २२४६ इति निषेधः, आट्टिटत् । १६७३ लुण्ठ[2] स्तेये । लुण्ठयति । लुण्ठतीति 'लुठि स्तेये'

तस्मिंस्तु पाठे नास्त्येव प्रकृतार्थसिद्धिः । केचित्तु णिजभावे गणयामासेत्यादिरूपाभावेऽपि गणधातोरदन्तत्वाद्गणामासेत्यामा भवितव्यमिति जगाणेत्यादिपाठश्चिन्त्य इत्याहुः ॥—न वैयर्थ्यमिति । 'वैयर्थ्यशङ्काऽपि न' इत्ययमेव पक्षो युक्त इति भावः । न च पूर्वोक्तपक्षस्य शिथिलत्वे जगाण जगणतुरिति वृत्तिप्रयोगः कथं संगच्छतामिति शङ्क्यम् । भ्वादेराकृतिगणत्वात् तत्र तद्धातोस्तद्रूपसिद्धेः ॥—तच्चिन्त्यमिति । यत्रितत्रिमत्र्यादिषु इकारो व्यर्थ एव न तु ज्ञापनार्थः, तेषां संयोगान्तत्वात् । यन्त्रतन्त्रमन्त्र इति नकारे पठितेऽपि 'अनिदिताम्–' इति लोपो न लभ्यते, नकारस्यानुपधात्वात् । 'चिन्त्यात्' इत्यत्र तु चिन्त स्मृत्यामिति नकारोपधपाठे नलोपः स्यादेवेति तद्वारणाय क्रियमाण इकारस्तु ज्ञापक इति भावः । लड । स्नेहपूर्विका सेवा-उपसेवा । लाडयति पुत्रम् । लडयोरभेदात्—लालयति ॥—ओकार इदित्येके इति । ओदित्करणं 'ओदितश्च' इति धातोरव्यवहितस्य निष्ठातकारस्य नत्वार्थमिति तद्बलात्सेडित्येके—लण्ड्णः । ओदिद्बलादिड्व्यवधानेऽपि नत्वमित्यन्ये—लण्डिनः । पीड अवगाहने । 'भ्राजभास–' इति ह्रस्वपक्षे सन्वद्भावविषयत्वात् 'दीर्घो लघोः' इत्यभ्यासस्य दीर्घः । २५६५ ह्रस्वाभावपक्षे तु न दीर्घ इत्याह—अपीपिडदित्यादि ॥ पॄ पूरणे ॥—दीर्घोच्चारणमित्यादि । पारयतीत्यादिरूपाणि ह्रस्वोच्चारणेऽपि सिध्यन्तीति परतीत्याद्यर्थं दीर्घोच्चारणमित्यर्थः । अत्र वदन्ति—धातुपाठकृता पाणिनिना विशिष्यैव उदात्ता अनुदात्ताश्च पठिताः, न हि 'ऋकारान्ताः सेट्काः' इति तेन परिभाषितं, येनेत्थं तस्याशयः कल्प्येत । कविकल्पद्रुमे त्वस्य नित्यण्यन्तत्वमुक्तमिति । एवं चास्मिन्पक्षे दीर्घोच्चारणं व्यर्थमिति फलितम् । अन्ये तु—दीर्घोच्चारणं परिता परीतेत्यादौ 'वृतो वा' इति इटो दीर्घविकल्पार्थम् । ततश्च णिज्विकल्पः सिद्ध एवेति परतीत्यादिरूपमाहुः । ऊर्ज । ऊर्जयति । बलवान्भवति, जीवति वेत्यर्थः ॥ २५६७ उर्ऋत् । 'जिघ्रतेर्वा' इत्यतो वेत्यनुवर्तते ॥—इररारामिति । ऋकारोपधे तु 'उपधायाश्च' इति 'अचीकृतत्' इत्यादौ इर् प्राप्तः, अमीमृजदित्यत्र मृजेर्वृद्धिरार् प्राप्तः, इतरेषां ऋदुपधानां गुणेन अपीपृथदित्यादावर् इति विवेकः ॥ नन्विह उरित्यनूद्यमानः सवर्णान् गृह्णाति, ऋदिति विधीयमानस्तु न गृह्णाति । तथा च अचीक्लृपदित्यत्र 'उर्ऋत्' इत्यनेन ऋवर्णे सति अचीकृपदिति प्रसज्येतेति चेत् । मैवम् । लत्वस्यासिद्धत्वेन प्रथमम् 'उर्ऋत्' इत्यस्य प्रवृत्तौ पश्चात् 'कृपो रो लः' इत्यनेन ऋकारैकदेशस्य लृकारैकदेशविधानादिष्टसिद्धेः । न च चलीक्लृप्यत इत्यादौ रीगागमादेर्लत्वार्थं 'कृपो रो लः' इत्यस्यावश्यकत्वेऽपि क्लृपूधातुः 'क्लृपू सामर्थ्ये' इत्येव पठ्यताम् । एवं हि प्रक्रियालाघवं लभ्यते । ऋकारैकदेशस्य लृकारैकदेश इति व्याख्यानक्लेशोऽपि न भवतीति वाच्यम् । अचीक्लृपदित्यत्र 'उर्ऋत्' इत्यस्य प्रवृत्तावनिष्टरूपप्रसङ्गात् । 'कृपो रो लः' इत्यनेन ऋकारैकदेशस्य लृकारैकदेश इत्यभ्युपगमे तु उक्तव्याख्यानक्लेशध्रौव्यात् । ( इदं च कैयटरीत्योक्तम् । न त्विदं क्षोदक्षमम्, 'ऋत उत्' इत्यनेन तपरकरणेन लृवर्णग्राहकत्वे रूपसिद्धेः स्पष्टत्वात् ) ॥—अयं

१ दीर्घोच्चारणमित्यादि—वस्तुतस्तु इदमपि ज्ञापकं चिन्त्यमेव, दीर्घपाठस्य संदिग्धत्वादिति केचित् । २ 'लुण्ठ' इति वृत्तिसम्मतः पाठः । ३ ( ) एतच्चिह्नस्थितः पाठो बहुषु पुस्तकेषु नोपलभ्यते ।

इति भौवादिकस्य । १६७४ शठ १६७५ श्वठ असंस्कारगत्योः । १६७६ 'श्वठि' इत्येके । १६७७ तुजि १६७८ पिजि हिंसाबलादाननिकेतनेषु । तुञ्जयति । पिञ्जयति । इदित्करणात्-तुञ्जति, पिञ्जति । १६७९ 'तुज' १६८० 'पिज' इति केचित् । १६८१ लजि १६८२ लुजि इत्येके । १६८३ पिस गतौ । पेसयति । पेसतीति तु शपि गतम् । १६८४ षान्त्व सामप्रयोगे । १६८५ श्वल्क १६८६ वल्क परिभाषणे । १६८७ ष्णिह स्नेहने । १६८८ स्फिट इत्येके । १६८९ स्मिट अनादरे । अषोपदेशत्वान्न षः । असिस्मिटत् । १६९० ष्मिङ् अनादर इत्येके । ङित्त्वस्यावयवेऽचरितार्थत्वाण्णिजन्तात्तङ्, स्माययते । १६९१ श्लिष श्लेषणे । १६९२ पथि गतौ । पन्थयति । पन्थति । १६९३ पिच्छ कुट्टने । १६९४ छदि संवरणे । छन्दयति । छन्दति । १६९५ श्रण दाने । प्रायेणायं विपूर्वः । विश्राणयति । १६९६ तड आघाते । ताडयति । १६९७ खड १६९८ खडि १६९९ कडि भेदने । खाडयति । खण्डयति । खण्डति । कण्डयति । कण्डति । १७०० कुडि रक्षणे । १७०१ गुडि वेष्टने । 'रक्षणे' इत्येके । १७०२ 'कुठि' इत्यन्ये । अवकुण्ठयति । अवकुण्ठति । १७०३ 'गुठि' इत्यपरे । १७०४ खुडि खण्डने । १७०५ वठि विभाजने । १७०६ 'वडि' इत्येके । १७०७ मडि भूषायां हर्षे च । १७०८ भडि कल्याणे । १७०९ छर्द वमने । १७१० पुस्त १७११ बुस्त आदरानादरयोः । १७१२ चुद संचोदने । १७१३ नक्क १७१४ धक्क नाशने । णोपदेशलक्षणे पर्युदस्तोऽयम् । प्रनक्कयति । १७१५ चक्क १७१६ चुक्क व्यथने । १७१७ क्षल शौचकर्मणि । १७१८ तल प्रतिष्ठायाम् । १७१९ तुल उन्माने । तोलयति । तोलयामास । अतूतुलत् । कथं 'तुलयति' 'तुलना' इत्यादि । 'अतुलोपमाभ्याम्–'६३१ इति निपातनादङन्तस्य तुलाशब्दस्य सिद्धौ ततो णिच् । १७२० दुल उत्क्षेपे । दोलयति । दोलयामास । अदूदुलत् । १७२१ पुल महत्त्वे । १७२२ चुल समुच्छ्राये । १७२३ मूल रोहणे । मूलयति । मूलयामास । १७२४ कल १७२५ विल क्षेपे । कालयति । १७२६ बिल भेदने । १७२७ तिल स्नेहने १७२८ चल भृतौ । १७२९ पाल रक्षणे । १७३० लूष हिंसायाम् । १७३१ शुल्ब माने । १७३२ शूर्प च । १७३३ चुट छेदने । १७३४ मुट संचूर्णने । १७३५ पडि १७३६ पसि नाशने । पण्डयति । पण्डति । पंसयति । पंसति । १७३७ व्रज[1] १७३८ मार्ग संस्कारगत्योः । १७३९ शुल्क अतिस्पर्शने । १७४० चपि गत्याम् । चम्पयति । चम्पति । १७४१ क्षपि क्षान्त्याम् । क्षम्पयति । क्षम्पति । १७४२ छजि कृच्छ्रजीवने । १७४३ श्वर्त गत्याम् । १७४४ श्वभ्र च । १७४५ ज्ञप मिच्च । अयं ज्ञाने ज्ञापने च वर्तते ।

२५६८ । मितां ह्रस्वः ।६।४।९२। मितामुपधाया ह्रस्वः स्याण्णौ परे । ज्ञपयति । १७४६ यम च परिवेषणे । चान्मित् । परिवेषणमिह वेष्टनम् । न तु भोजना नापि वेष्टना । यमयति चन्द्रम् । परिवेष्टत इत्यर्थः । १७४७ चह परिकल्कने । चहयति । अचीचहत् । कथादौ वक्ष्यमाणस्य तु अदन्तत्वेनाग्लोपित्वाद्दीर्घसन्वद्भावौ न, अचचहत् । १७४८ 'चप' इत्येके । चपयति । १७४९ रह त्यागे इत्येके । अरीरहत् । कथादेस्तु अररहत् । १७५० बल प्राणने । बलयति । १७५१ चिञ् चयने ।

२५६९ । चिस्फुरोर्णौ ।६।१।५४। आत्वं वा स्यात् ।

२५७० । अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ

**दोपध इति** । टोपधत्वे तु 'आटिट्टत्' इति स्यादिति भावः । **शठ श्वठ** । शाठयति । असंस्कृतो भवति, गच्छति वेत्यर्थः ॥ **—स्माययत इति** । आत्वं तु नेह भवति, 'नित्यं स्मयतेः' इति निर्देशेन 'स्मिङ् ईषद्धसने' इति भौवादिकादेव हेतुमण्णौ तद्विधानात् । **श्रण दाने** । विश्राणनं वितरणम् । **चुद** संचोदने । 'ण्यासश्रन्थः–' इति युचि चोदना । **व्रज मार्ग** । व्राजयति । मार्गयति । केचित्तु 'मार्ग' इति न धात्वन्तरं किं तु 'व्रज' इत्येक एव धातुर्मार्गसंस्कारे गतौ चेति व्याचख्युः । **ज्ञप मिच्च** । चाद्गताविल्येके । ज्ञपधातुर्णिचं लभते मित्संज्ञकश्चेत्यन्ये ॥**—ज्ञाने ज्ञापने चेति** । 'प्रतिपज्ज्ञप्तिचेतनाः' । प्रच्छ ज्ञीप्सायामित्यत्र ज्ञाने । 'श्लाघह्नुङ्–' इति सूत्रे ज्ञीप्स्यमानो बोधयितुमिष्यमाण इति व्याख्यया ज्ञापने च प्रयोगदर्शनादिति भावः ॥ **२५६८ वेष्टनमिति** । 'परिवेषस्तु परिधिः' इत्यमरः ॥**—न त्वित्यादि । अयं भावः**—घटादौ 'यमोऽपरिवेषणे' इति पठितं तत्र परिवेषणमिति हेतुमण्ण्यन्तस्य रूपम् । हेतुमण्ण्यन्तस्य हि भोजना वेष्टना चार्थः । तथा च 'अपरिवेषणे' इत्यनेन भोजनातो वेष्टनातश्चान्यत्र मित्त्वनिषेधेऽपि तयोरर्थयोरत्वमन्तत्वादेव मित्त्वसिद्धिरिति । यद्यपि घटादौ यच्छतिर्भोजनातोऽन्यत्र मिन्नेति व्याख्यातं तथाप्यत्रत्यग्रन्थानुगुण्येनोपलक्षणतया तद्व्याख्येयमित्याहुः ॥ **अत्रेदं बोध्यम्**—घटादौ 'यमोऽपरिवेषणे' इत्यत्र परिपूर्वकस्य विषेर्णिजन्तस्य ल्युटि रूपम्, 'यम च परिवेषणे' इत्यत्र तु केवलस्यैव ल्युटि रूपं न तु णिजन्तस्य । तथा च भोजनावद्वेष्टनाया अपि परिवेषणशब्दार्थत्वादुभयत्राप्यमन्तत्वेनैव मित्त्वं सिध्यति । वेष्टने तु 'अपरिवेषणे' इत्यनेन अमन्तत्वप्रयुक्तमित्वस्य निषेधे 'यम च परिवेषणे' इत्यनेन मित्त्वं सिध्यतीति दिक् ॥ **२५६९ चिस्फुरोर्णौ** । 'आदेच उपदेशे' इत्यत आदित्यनुवर्तते 'विभाषा लीयतेः' इत्यतो विभाषाग्रहणं च, तदाह—**आत्वं वा स्यादिति** ॥ **२५७० आर्तिह्री–** । परत्वादन्तरङ्गत्वाच्च आदौ पुक् पश्चाद्गुणः । अर्पयति । ह्रेपयति । व्लेपयति ।

१ वृत्तौ 'व्रज–मार्गसंस्कारगत्योः' इति पाठः । 'वजि-मार्गसंस्कारयोः गतौ च' इति मैत्रेयादयः । स्वामी तु 'वज मार्ग संस्कारगत्योः' इति मार्गधातुमाह । तत्वबोधिनीकारोऽपि पृथक् मार्गधातुं मन्यते । बालमनोरमाकारश्च 'मार्ग व्रज' इति धातुद्वयमाह ।

।७।३।३६। ञ्चपयति । चययति । ञित्करणसामर्थ्यादस्य णिज्विकल्पः । चयति । चयते । प्रणिचयति । प्रनिचयति । (ग) **नान्ये मितोऽहेतौ** । अहेतौ स्वार्थे णिचि ज्ञपादिभ्योऽन्ये मितो न स्युः । तेन शमादीनाममन्तत्वप्रयुक्तं मित्त्वं न । १७५२ **घट्ट** चलने । १७५३ **मुस्त** संघाते । १७५४ **खट्ट** संवरणे । १७५५ **षट्ट** १७५६ **स्फिट्ट** १७५७ **चुबि** हिंसायाम् । १७५८ **पूल** संघाते । १७५९ '**पूर्ण**' इत्येके । १७६० '**पुण**' इत्यन्ये । १७६१ **पुंस** अभिवर्धने । १७६२ **टकि** बन्धने । टङ्कयति । टङ्कति । १७६३ **धूस** कान्तिकरणे । धूसयति । दन्त्यान्तः । १७६४ 'मूर्धन्यान्तः' इत्येके । १७६५ 'तालव्यान्तः' इत्यपरे । १७६६ **कीट** वर्णे । १७६७ **चूर्ण** संकोचने । १७६८ **पूज** पूजायाम् । १७६९ **अर्क** स्तवने । तपन इत्येके । १७७० **शुठ** आलस्ये । १७७१ **शुठि** शोषणे । शुण्ठयति । शुण्ठति । १७७२ **जुड** प्रेरणे । १७७३ **गज** १७७४ **मार्ज** शब्दार्थौ । गाजयति । मार्जयति । १७७५ **मर्च** च । मर्चयति । १७७६ **घृ** प्रस्रवणे । स्रावण इत्येके । १७७७ **पचि** विस्तारवचने । पञ्चयति । पञ्चति । पञ्चते इति व्यक्तार्थस्य शपि गतम् । १७७८ **तिज** निशाने । तेजयति । १७७९ **कृत** संशब्दने ।

२५७१ । **उपधायाश्च** ।७।१।१०१। धातोरुपधाभूतस्य ऋत इत्स्यात् । रपरत्वम् । 'उपधायां च' २२६७ इति दीर्घः, कीर्तयति । 'उर्ऋत्' २५६८, अचीकृतत्, अचिकीर्तत् । १७८० **वर्ध** छेदनपूरणयोः । १७८१ **कुबि** आच्छादने । कुम्बयति । कुम्बति । १७८२ '**कुभि**' इत्येके । १७८३ **लुबि** १७८४ **तुबि** अदर्शने । अर्दन इत्येके । १७८५ **ह्लप** व्यक्तायां वाचि । १७८६ '**क्लृप**' इत्येके । १७८७ **चुटि** छेदने । १७८८ **इल** प्रेरणे । एलयति । ऐलिलत् । १७८९ **म्रक्ष** म्लेच्छने । १७९० **म्लेच्छ** अव्यक्तायां वाचि । १७९१ **ब्रूस** १७९२ **वर्ह** हिंसायाम् । केचिदिह १७९३ '**गर्ज**' १७९४ '**गर्द**' शब्दे । १७९५ '**गर्ध**' अभिकाङ्क्षायामिति पठन्ति । १७९६ **गुर्द** १७९७ **पूर्व** निकेतने । १७९८ **जसि** रक्षणे । मोक्षण इति केचित् । जंसयति । जंसति । १७९९ **ईड** स्तुतौ । १८०० **जसु** हिंसायाम् । १८०१ **पिडि** संघाते । १८०२ **रुष** रोषे । १८०३ '**रुट**' इत्येके । १८०४ **डिप** क्षेपे । १८०५ **ष्टुप** समुच्छ्राये ।

**आ कुस्मादात्मनेपदिनः** । 'कुस्मनाम्नो वा' इति वक्ष्यते तमभिव्याप्येत्यर्थः । अकर्तृगामिफलार्थमिदम् । १८०६ **चित** संचेतने । चेतयते । अचीचितत । १८०७ **दशि** दंशने । दंशयते । अददंशत । इदित्त्वाण्णिजभावे—दंशति । आकुस्मीयमात्मनेपदं णिच्सन्नियोगेनैवेति व्याख्यातारः । नलोपे सञ्जिसाहचर्याद् भ्वादेरेव ग्रहणम् । १८०८ **दसि** दर्शनदंशनयोः । दंसयते । दंसति । १८०९ '**दस**' इत्यप्येके । १८१० **डप** १८११ **डिप** संघाते । १८१२ **तत्रि** कुटुम्बधारणे । तन्त्रयते । १८१३ चान्द्रास्तु धातुद्वयमिति कृत्वा कुटुम्बयते इत्युदाहरन्ति । १८१४ **मत्रि** गुप्तपरिभाषणे । १८१५ **स्पश** ग्रहणसंश्लेषणयोः १८१६ **तर्ज** १८१७ **भर्त्स** तर्जने । १८१८ **बस्त** १८१९ **गन्ध**

---

रेपयति । यलोपः, क्नोपयति । क्ष्मापयति । स्थापयति ॥—**चपयतीति** । वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्तते, 'आतोऽनुपसर्गे' इति कबाधनाय 'ह्वावामश्च' इत्यारम्भादिति भावः ॥—**ज्ञपादिभ्य इति** । मुख्यमते पञ्च ज्ञपादयः । मतान्तरे तु सप्त ॥—**पूर्ण इत्येके । पुण इत्यन्ये इति** । ईदृशेषु पाठशुद्धिर्निर्णेतुमशक्या । अत एव क्षीरस्वामिनोक्तम्—**'पाठेऽर्थे चागमभ्रंशान्महतामपि मोहतः । न विद्मः किं जिहीमोऽत्र किमुपादद्महे वयम् ॥'** इति । **पूल-पूर्णादिषु** पाठे **भ्रंशः** । वजधातोर्मार्गसंस्कारोऽर्थः, उत संस्कार एवेत्यर्थे **भ्रंशः** । **आगमभ्रंशात्**—शास्त्रभ्रंशात् । **चूर्ण** संकोचने । प्रेरणे पठितस्य पुनः पाठोऽर्थभेदकृतः ॥—**मर्च चेति** । क्वचिद्धातुपाठेऽस्यादृष्टत्वेऽपि नायमप्रामाणिक इति मन्तव्यम् । 'मिदचोऽन्त्यात्परः' इति सूत्रे कैयटेनास्योपन्यस्तत्वात् । 'मर्तो मर्त मर्चयति द्वयेन' इति प्रयोगदर्शनाच्च ॥ २५७१ **उपधायाश्च** । 'ऋत इद्धातोः' इति वर्तते तदाह—**धातोरुपधाया इति** । ननु 'ऋत इद्धातोः' इति सूत्रे धातोर्ऋत इत्—इति वैयधिकरण्येन व्याख्याने सिद्धमिष्टमिति किमनेन सूत्रेणेति चेत् । मैवम् । तथा हि सति ऋकारीयतीत्यत्रापि इत्वप्रसङ्गात् ॥—**अर्दन इत्येक इति । अत्र वदन्ति**—अर्दने लुबितुबी भ्वादौ पठितौ तयोस्तत्र पाठो वृथा स्यात्, इदित्त्वादेव लुम्बति तुम्बतीत्यादिरूपसिद्धेः । अदर्शने त्वर्थेऽर्थभेदात् भ्वादिपाठः सार्थक इत्यर्दनार्थत्वं चौरादिकयोरयुक्तमित्यस्वरसात् **'एके'** इत्युक्तमिति । **म्रक्ष** म्लेच्छने । म्रक्षणेऽप्ययम् । तच्च तैलादिनाऽभ्यञ्जनम् । म्रक्षयति । अमम्रक्षत् । **गुर्द पूर्व** निकेतने । गुर्दयति । पूर्वयति । केचित्तु पूर्वनिकेतने इति पठित्वा गुर्दधातुः पूर्वनिवासे वर्तते इति व्याचक्षते । **जसु** हिंसायाम् । क्त्वायामिड्विकल्पार्थमुदित्करणमिति तत्सामर्थ्यादस्य णिजनित्यः । जासयति । जसति । जसित्वा । जस्त्वा । जस्तम् । **चित** संचेतने । संचेतनं मूर्च्छाद्यवस्थानिवृत्त्युत्तरकालिकं ज्ञानम् ॥—**दंशतीति** । इह 'दंशसञ्ज—' इति नलोपमाशङ्क्याह—**सञ्जिसाहचर्यादिति** । **स्पश** । स्पाशयते । 'अत्स्मृदृत्वर—' इत्यादिनाऽभ्यासस्य अत्वम्, इत्वापवादः, अपस्पशत् । **तर्ज भर्त्स** तर्जने । तर्जयते । भर्त्सयते । 'तर्जयन्निव केतुभिः' इति प्रयोगस्तु णिजन्तादस्मा-

अर्दने । बस्तयते । गन्धयते । १८२० विष्क हिंसायाम् । १८२१ 'हिष्क' इत्येके । १८२२ निष्क परिमाणे । १८२३ लल ईप्सायाम् । १८२४ कूण संकोचने । १८२५ तूण पूरणे । १८२६ भ्रूण आशाविशङ्कयोः । १८२७ शठ श्लाघायाम् । १८२८ यक्ष पूजायाम् । १८२९ स्यम वितर्के । १८३० गूर उद्यमने । १८३१ शम १८३२ लक्ष आलोचने । 'नान्ये मितः' इति मित्त्वनिषेधः । शामयते । १८३३ कुत्स अवक्षेपणे । १८३४ त्रुट छेदने । १८३५ 'कुट' इत्येके । १८३६ गल स्रवणे । १८३७ भल आभण्डने । १८३८ कूट आप्रदाने । अवसादने इत्येके । १८३९ कुट्ट प्रतापने । १८४० वञ्चु प्रलम्भने । १८४१ वृष शक्तिबन्धने । शक्तिबन्धनं प्रजननसामर्थ्यं शक्तिबन्धश्च । वर्षयते । १८४२ मद तृप्तियोगे । मादयते । १८४३ दिवु परिकूजने । १८४४ गॄ विज्ञाने । गारयते । १८४५ विद चेतनाख्याननिवासेषु । वेदयते ।

**सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे ।**
**विन्दते विन्दति प्राप्तौ श्यन्लुक्श्नम्शेष्विदं क्रमात्**

१८४६ मान स्तम्भे । मानयते । १८४७ यु जुगुप्सायाम् । यावयते । (ग) १८४८ कुस्म नाम्नो वा । कुस्मेति धातुः कुत्सितस्मयने वर्तते । कुस्मयते । अचुकुस्मत । अथवा कुस्मेति प्रातिपदिकं ततो धात्वर्थे णिच् । इत्याकुस्मीयाः ।

१८४९ चर्च अध्ययने । १८५० बुक्क भषणे । १८५१ शब्द उपसर्गादाविष्कारे च । चाद्भषणे । प्रतिशब्दयति । प्रतिश्रुतमाविष्करोतीत्यर्थः । (ग) अनुपसर्गाच्च । आविष्कारे इत्येव । शब्दयति । १८५२ कण निमीलने । काणयति । 'णौ चङ्युपधाया ह्रस्वः' १३२४ '⊛ काण्यादीनां वा' इति विकल्प्यते, अचीकणत् । अचकाणत् । १८५३ जभि नाशने । जम्भयति । जम्भति । १८५४ षूद क्षरणे । सूदयति । असूषुदत् । १८५५ जसु ताडने । जासयति । जसति । १८५६ पश बन्धने । पाशयति । १८५७ अम रोगे । आमयति । 'नान्ये मितः' इति निषेधः । अम गत्यादौ शपि गतः । तस्माद्धेतुमण्णौ 'न कम्यमिचमाम्–' इति निषेधः । आमयति । १८५८ चट १८५९ स्फुट भेदने । विकासे शशपोः–स्फुटति स्फोटते इत्युक्तम् । १८६० घट संघाते । घाटयति । (ग) हन्त्यर्थाश्च । नवगण्यामुक्ता अपि हन्त्यर्थाः स्वार्थे णिचं लभन्त इत्यर्थः । १८६१ दिवु मर्दने । उदित्त्वाद्देवतीत्यपि । १८६२ अर्ज प्रतियत्ने । अयमर्थान्तरेऽपि । द्रव्यमर्जयति । १८६३ घुषिर् विशब्दने । घोषयति । 'घुषिरविशब्दने' २०६३ इति सूत्रेऽविशब्दन इति निषेधाल्लिङ्गादनित्योऽस्य णिच्, घोषति । इरित्त्वादङ्वा, अघुषत् । अघोषीत् । ण्यन्तस्य तु अजूघुषत् । आङः १८६४ क्रन्द सातत्ये । भौवादिकः क्रन्दधातुराह्वानाद्यर्थे उक्तः स एवाङ्पूर्वो णिचं लभते सातत्ये । आक्रन्दयति । अन्ये तु आङ्पूर्वो घुषिः 'क्रन्दसातत्ये' इत्याहुः । आघोषयति । १८६५ लस शिल्पयोगे । १८६६ तसि १८६७ भूष

---

द्भौवादिकात् तर्जतेर्वा हेतुमण्णिचि बोध्यः । **भ्रूण** । भ्रूणयते । 'भ्रूणोऽर्भके स्त्रैणगर्भे' इत्यमरः । **गूर** उद्यमने । दीर्घोपधोऽयम् । गूरयते । ह्रस्वोपधस्तु दिवादौ तुदादौ चेति मनोरमायां स्थितम् । यद्यपि तुदादौ 'गुरी उद्यमने' इति पाठाद्ध्रस्वोपध एव तथापि दिवादौ 'धूरी गूरी हिंसागत्योः' इति पाठान्नास्ति ह्रस्वोपध इति नव्याः । **शम लक्ष** । ननु 'निशामय तदुत्पत्तिम्' इत्यत्र शामय इत्येतत् शमु उपशम इत्यस्माण्णिचि रूपं चेत् अमन्तत्वान्मित्त्वे सति ह्रस्वेन भाव्यमित्याशङ्क्य कथमनेन सिद्धमिति वदन्ति । आकुस्मीयत्वात्तङि निशामयस्वेति रूपस्य सर्वसंमतत्वादिति चेत् । **अत्राहुः**—स्वार्थण्यन्तादस्माद्धेतुमण्णिचि निशामयेति रूपम् । न चार्थासंगतिः । 'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते' इति सिद्धान्तादिति । **कुत्स** अवक्षेपणे । 'यूनश्च कुत्सायाम्' इति निर्देशादङ्, कुत्सा । 'ण्यासश्रन्थ–' इति युच्, कुत्सना । **भल** । **आभण्डनं**–निरूपणमित्याहुः । **वञ्चु** प्रलम्भने । ल्युटि–वञ्चनम् । उदित्करणस्य क्त्वायामिड्विकल्पार्थत्वाण्णिजनित्यः, वञ्चयति । वञ्चति । वचित्वा । वञ्चित्वा । वक्त्वा, 'वञ्चिलुञ्च्यृतश्च' इति सेटः क्त्वः कित्त्वविकल्पनात् पाक्षिको नलोपः । इडभावे तु नित्यम् । निष्ठायां तु–वक्तम्, 'यस्य विभाषा' इतीण्निषेधः । 'नाम्नो वा' इति वाशब्दं व्याचष्टे—**अथ वेति**—॥—**प्रातिपदिकमिति** । 'अन्येष्वपि दृश्यते' इति सूत्रे अन्येभ्योऽपीति वक्ष्यमाणत्वात्कुपूर्वात्स्मयतेर्डप्रत्यये टिलोपे 'कुगति–' इति समासे च निष्पन्नमित्यर्थः । यद्यपि कुपूर्वस्य स्मिङो लडादिषु कुस्मयते इत्यादि सिद्धं तथापि प्रकुस्मयते इत्यादि न सिध्येत्, उपसर्गस्य धातुना व्यवधानायोगात् । कुस्मयांचक्रे इत्याद्यर्थमपि कुस्मेति पाठोऽर्थवान् ॥ **इत्याकुस्मीयाः** ॥ ॥ **चर्च** । सर्वोऽपि चुरादिर्णिच् पाक्षिक इति पक्षे, 'गुरोश्च हलः' इत्यप्रत्ययः, चर्चा । **कण** निमीलने । एकनेत्रनिमीलन एवायं शब्दः स्वभावात्, काणः ॥—**काण्यादीनामिति** । एते हेतुमण्ण्यन्तेषु वक्ष्यन्ते ॥ **हन्त्यर्थाश्च** । तेन घातयति हन्तीत्येतौ समानार्थौ । **अर्ज** । प्रतियत्नो गुणाधानम् ॥—**अर्जयतीति** । संगृह्णातीत्यर्थः । **घुषिर् । विशब्दनं**–प्रतिज्ञानम् ॥—**निषेधाल्लिङ्गादिति** । 'घुषिरविशब्दने' इति सूत्रेण अविशब्दने निष्ठाया इण्निषिध्यते । विशब्दनार्थादेतस्मादनन्तरा निष्ठा नास्त्येव, णिचा व्यवधानात् । अतो 'घुषिर् अविशब्दने' इति भौवादिकादेव निष्ठाया इण्निषेधो भवेदिति किं विशब्दनप्रतिषेधेन । ततश्चानेनैव विशब्दनप्रतिषेधेनानित्योऽस्य णिजिति ज्ञाप्यते इति भावः । इरित्करणादपि णिज्विकल्पः सिध्यतीति केचित् ॥—**शिल्पयोग इति** । क्रियाकौशलं शिल्पम् ।

अलंकरणे । अवतंसयति । अवतंसति । भूषयति । १८६८ अर्ह पूजायाम् । १८६९ ज्ञा नियोगे । आज्ञापयति । १८७० भज विश्राणने । १८७१ शृधु प्रसहने । अशशर्धत् । अशीशृधत् । १८७२ यत निकारोपस्कारयोः । १८७३ रक १८७४ लग आस्वादने । १८७५ 'रघ' इत्येके । १८७६ 'रग' इत्यन्ये । १८७७ अञ्चु विशेषणे । अञ्चयति । उदित्वमिड्विकल्पार्थम् । अत एव विभाषितो णिच् । अञ्चति । एवं शृधुजसुप्रभृतीनामपि बोध्यम् । १८७८ लिगि चित्रीकरणे । लिङ्गयति । लिङ्गति । १८७९ मुद संसर्गे । मोदयति सक्तून् घृतेन । १८८० त्रस धारणे । ग्रहण इत्येके । वारण इत्यन्ये । १८८१ उध्रस उञ्छे । उकारो धात्ववयव इत्येके । १८८२ 'नेत्यन्ये' । ध्रासयति । ध्रसति । उध्रासयति । १८८३ मुच प्रमोचने मोदने च । १८८४ वस स्नेहच्छेदापहरणेषु । १८८५ चर संशये । १८८६ च्यु सहने । हसने चेत्येके । च्यावयति । १८८७ 'च्युस' इत्येके । च्योसयति । १८८८ भुवोऽवकल्कने । अवकल्कनं मिश्रीकरणमित्येके । चिन्तनमित्यन्ये । भावयति १८८९ कृपेश्च । कल्पयति ।

(ग) आ स्वदः सकर्मकात् । स्वदिमभिव्याप्य संभवत्कर्मभ्य एव णिच् । १८९० ग्रस ग्रहणे । ग्रासयति फलम् । १८९१ पुष धारणे । पोषयत्याभरणम् । १८९२ दल विदारणे । दालयति । १८९३ पट १८९४ पुट १८९५ लुट १८९६ तुजि १८९७ मिजि १८९८ पिजि १८९९ लुजि १९०० भजि १९०१ लघि १९०२ त्रसि १९०३ पिसि १९०४ कुसि १९०५ दशि १९०६ कुशि १९०७ घट १९०८ घटि १९०९ बृहि १९१० बर्ह १९११ बल्ह १९१२ गुप १९१३ धूप १९१४ विच्छ १९१५ चीव १९१६ पुथ १९१७ लोकृ १९१८ लोचृ १९१९ णद १९२० कुप १९२१ तर्क १९२२ वृतु १९२३ वृधु भाषार्थाः । पाटयति । पोटयति । लोटयति । तुञ्जयति । तुञ्जति । एवं परेषाम् । घाटयति । घण्टयति ।

२५७२ । नाग्लोपिशास्वृदिताम् ।७।४।२। णिच्-ग्लोपिनः शास्तेर्ऋदितां च उपधाया ह्रस्वो न स्याच्चङ्परे णौ । अलुलोकत् । अलुलोचत् । वर्तयति । वर्धयति । उदित्त्वात्—वर्तति । वर्धति । १९२४ रुट १९२५ लजि १९२६ अजि १९२७ दसि १९२८ भृशि १९२९ रुशि १९३० शीक १९३१ रुसि १९३२ नट १९३३ पुटि १९३४ जि १९३५ चि १९३६ रघि १९३७ लघि १९३८ अहि १९३९ रहि १९४० महि च । १९४१ लडि १९४२ तड १९४३ नल च । १९४४ पूरी आप्यायने । ईदित्त्वं निष्ठायामिण्निषेधाय । अत एव णिज्वा, पूरयति । पूरति । १९४५ रुज हिंसायाम् । १९४६ ष्वद आस्वादने । 'स्वाद' इत्येके । असिष्वदत् । दीर्घस्य त्वषोपदेशत्वात्, असिस्वदत् । इत्यास्वदीयः ।

(ग) आ धृषाद्वा ॥ इत ऊर्ध्वं विभाषितणिचो धृषधातुमभिव्याप्य । १९४७ युज १९४८ पृच संयमने । योजयति । योजति । अयौक्षीत् । पर्चयति । पर्चति । पर्चिता । अपर्चीत् । १९४९ अर्च पूजायाम् । १९५० षह मर्षणे । साहयति ॥

स एवायं नागः सहति कलभेभ्यः परिभवम् ।

१९५१ ईर क्षेपे । १९५२ ली द्रवीकरणे । लाययति[1] । लयति । लेता । १९५३ वृजी वर्जने । वर्जयति । वर्जति । १२५४ वृञ् आवरणे । वारयति । वरति । वरते । वरिता । वरीता । १९५५ जॄ वयोहानौ । जारयति । जरति । जरिता । जरीता । १९५६ज्रि च । ज्राययति । ज्रयति । ज्रेता । १९५७

---

**यत** निकारोपस्कारयोः । यत्नो वा प्रैषो वा निकारः । 'निकारापस्कारयोः' इति पाठान्तरम् । क्रियानिघण्टौ च— **'यत्ने प्रैषे निराकारे पादपे चाप्युपस्कृतौ । नित्योऽयं धान्यधनयोः प्रतिदाने'** धनयोः प्रतिदाने' इत्युक्तम् । **अस्यार्थः**—यत्नाद्यर्थेषु चतुर्षु यतधातुं प्रयुञ्जीत । निसः परभागे चेत्प्रयुज्यते तदाऽयं धान्यधनयोः प्रतिदाने च वर्तत इति । ऋणं निर्यातयति । प्रतिददातीत्यर्थः ॥ **अञ्चु** विशेषणे । विशेषणं **विशेषणं**—व्यावर्तनम् । **'भुवोऽवकल्कने'** । भूधातोर्णिच् स्यात् ॥—**भावयतीति** । मिश्रीकरोति चिन्तयति वेत्यर्थः । **कृपेश्च** । कृपेर्णिच् स्यादवकल्कने ॥ **आ स्वदः** ॥—**अभिव्याप्येति** । आकुस्मादिति पूर्वत्र, आधृषादागर्वादिति परत्र च आङोऽभिविध्यर्थतायाः सर्वसंमतत्वेन तन्मध्यपतितेऽत्रापि तथैव व्याख्यानमुचितमिति भावः । **अन्ये तु**—आङ्पूर्वकात्स्वदः सकर्मकाण्णिजिति व्याचख्युः । आस्वदीयेषु धातवः सर्वे सकर्मकाः ॥—**घाटयतीति** । अयं चुरादावेव संघाते गतः, पुनः पाठस्तु अर्थभेदात् ॥ **२५७२ स्वाद इत्येके इति** । अस्मिन्मते पूर्वत्रापि 'आ स्वादः सकर्मकात्' इति पाठ्यम् ॥ ननु दीर्घपाठो व्यर्थः । ह्रस्वपाठेऽप्युपधावृद्ध्या स्वादयतीति रूपाणां तुल्यत्वादत आह—**दीर्घस्य त्विति** ॥ 'सः स्विदिस्वदिसहीनां च' इति सूत्रेण अभ्यासेणः परस्य सस्य सकारो न तु षत्वमिति वक्ष्यमाणत्वात्सन्नन्तेऽपि सिस्वादयिषतीत्यादि रूपं तुल्यमेवेत्यभिप्रेत्याह—**असिस्वददिति** ॥ इत्यास्वदीयाः ॥ ॥—**आधृषाद्वा** । व्याख्यानात्, योग्यताबलाद्वा णिजिति संबध्यते ॥—**अयौक्षीदिति** । णिजभावपक्षे अनिट्कोऽयमिति भावः । **ली** द्रवीकरणे । लिनातिलीयत्योर्यका निर्देश इति भाष्यकारोक्त्या 'विभाषा लीयतेः' इत्यात्वमिह न प्रवर्तत इति ध्वनयति—**लेतेति** ॥—**वरीतेति** । 'वॄतो वा' इति वा दीर्घः । लिङि—वूर्यात् । आत्मनेपदे तु—वृषीष्ट । वरिषीष्ट, 'लिङ्सिचोरात्मनेपदेषु' इति वेट्, 'न लिङि' इति इटो दीर्घनि-

---

1 **लाययतीति**—'लीलोः—' इति नुक् न भवति, लासाहचर्याद्धेतुमण्णावेव तस्य प्रवृत्तेः ।

रिच वियोजनसंपर्चनयोः । रेचयति । रेचति । रेक्ता । १९५८ शिष असर्वोपयोगे । शेषयति, शेषति । शेष्टा । अशिक्षत् । अयं विपूर्वोऽतिशये । १९५९ तप दाहे । तापयति, तपति । तप्ता । १९६० तृप तृप्तौ । 'संदीपने' इत्येके । तर्पयति, तर्पति । तर्पिता । १९६१ छृदी सन्दीपने । छर्दयति, छर्दति । छर्दिता । छर्दिष्यति । 'सेसिचि–' २५०६ इति विकल्पो न, साहचर्यात्तत्र रौधादिकस्यैव ग्रहणात् । १९६२ चृप १९६३ 'छृप' १९६४ तृप १९६५ 'दृप' संदीपन इत्येके । चर्पयति । छर्पयति । १९६६ दृभी भये । दर्भयति, दर्भति । दर्भिता । १९६७ दृभ संदर्भे । अयं तुदादावीदित् । १९६८ श्रथ मोक्षणे । हिंसायामित्येके । १९६९ मी गतौ । माययति, मयति । मेता । १९७० ग्रन्थ बन्धने । ग्रन्थयति, ग्रन्थति । १९७१ शीक आमर्षणे । १९७२ चीक च । १९७३ अर्द हिंसायाम् । स्वरितेत् । अर्दयति । अर्दति । अर्दते । १९७४ हिसि हिंसायाम् । हिंसयति । हिंसति । हिनस्तीति श्नमि गतम् । १९७५ अर्ह पूजायाम् । आङः १९७६ षद पद्यर्थे । आसादयति । आसीदति । 'पाघ्रा–' २३६० इति सीदादेशः, आसत्ता । आसात्सीत् । १९७७ शुन्ध शौचकर्मणि शुन्धिता । अशुन्धीत् । अशुन्धिष्टाम् । १९७८ छद अपवारणे । स्वरितेत् । १९७९ जुष परितर्कणे । परितर्कणमूहो हिंसा वा । 'परितर्पणे' इत्यन्ये । परितर्पणं परितृप्तिक्रिया । जोषयति, जोषति । प्रीतिसेवनयोर्जुषते इति तुदादौ । १९८० धूञ् कम्पने । णावित्यधिकृत्य ❀ धूञ्प्रीञोर्नुग्वक्तव्यः । धूनयति । धवति । धवते । केचित्तु 'धूञ्प्रीणोः' इति पठित्वा प्रीणातिसाहचर्याद्धुनोतेरेव नुकमाहुः । धावयति । अयं स्वादौ क्र्यादौ तुदादौ च । स्वादौ ह्रस्वश्च । तथा च कविरहस्ये— धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् । वायुर्विधूनयति चम्पकपुष्परेणून्यत्कानने धवति चन्दनमञ्जरीश्च । १९८१ प्रीञ् तर्पणे । प्रीणयति । 'धूञ्प्रीणोः–' इति हरदत्तोक्तपाठे तु—प्राययति । प्रयति । प्रयते । १९८२ श्रन्थ १९८३ ग्रन्थ सन्दर्भे । १९८४ आपॢ लम्भने । आपयति । आपिपत् । आपति । आप्ता । आपत् । स्वरितेदयमित्येके, आपते । १९८५ तनु श्रद्धोपकरणयोः । '(ग) उपसर्गाच्च दैर्घ्ये' तानयति । वितानयति । तनति । वितनति । चन श्रद्धोपहननयोरित्येके । चानयति । चनति । १९८६ वद संदेशवचने । वादयति । स्वरितेत्, वदति । वदते 'अनुदात्तेत्' इत्येके । ववदतुः । ववदिथ । ववदे । वद्यात् । १९८७ वच परिभाषणे । वाचयति । वचति । वक्ता । अवाक्षीत् । १९८८ मान पूजायाम् । मानयति । मानति । मानिता । विचारणे तु भौवादिको नित्यसन्नन्तः । स्तम्भे मानयते । इत्याकुस्मीयाः ॥ मन्यते इति दिवादौ । मनुते इति तनादौ च । १९८९ भू प्राप्तावात्मनेपदी । भावयते, भवते । णिच्सन्नियोगेनैवात्मनेपदमित्येके । भवति । १९९० गर्ह विनिन्दने । १९९१ मार्ग अन्वेषणे । १९९२ कठि शोके । उत्पूर्वोऽयमुत्कण्ठायाम् । 'कण्ठते' इत्यात्मनेपदी गतः । १९९३ मृजू शौचालंकारयोः । मार्जयति, मार्जति । मार्जिता, मार्ष्टा । १९९४ मृष तितिक्षायाम् । स्वरितेत् । मर्षयति, मर्षति । मर्षते । 'मृष्यति–मृष्यते' इति दिवादौ । सेचने शपि मर्षति । १९९५ धृष प्रसहने । धर्षयति, धर्षति । इत्याधृषीयाः ।

अथादन्ताः । १९९६ कथ वाक्यप्रबन्धे । अल्लोपस्य स्थानिवद्भावान्न वृद्धिः, कथयति । अग्लोपित्वान्न दीर्घसन्वद्भावौ, अचकथत् । १९९७ वर ईप्सायाम् । वरयति । वारयतीति गतम् । १९९८ गण संख्याने । गणयति ।

---

षेधः । इडभावपक्षे 'उश्च' इति कित्त्वान्न गुणः । लुङि–अवारीत् । अवारिष्टाम् । अवारिषुः, 'सिचि च परस्मैपदेषु' इति दीर्घनिषेधः । आत्मनेपदे तु–अवरिष्ट । अवरीष्ट । इडभावे सिचो लोपः, अवृत । **रिच** । णिजभावे अयमनिडित्याह–**रेक्तेति** ॥—**अशिक्षदिति** । 'शल इगुपधात्–' इति क्सः । **तृप** । अनिट्सु श्यना निर्देशादयं सेडिति ध्वनयति—**तर्पितेति** । **छृदी** । ईदित्वान्निष्ठायान्नेट्, ऋवर्णान्नस्य णत्वम्, छृण्णः । छृण्णवान् ॥—**ह्रस्वश्चेति** । धुञ् कम्पने इत्यर्थः ॥—**अवाक्षीदिति** । 'अस्यतिवक्ति–' इति लुका निर्देशादङ् नेति भावः । 'वचिस्वपि–' इति संप्रसारणम्, उच्यात् । **धृष** प्रसहने । केचित्त्वादितमाहुस्तन्मते–धृष्टः । मुख्यमते तु–धृषितः ॥ नन्वत्र 'निष्ठा शीङ्–' इत्यादिना सेण्निष्ठायाः कित्त्वनिषेधाद्गुणेन भाव्यमिति चेत् । **अत्राहुः**—आदित्साहचर्यादादित एव ञिधृषेत्यस्य तत्र ग्रहणात् । न च आदितो निष्ठाया इट् दुर्लभ इति शङ्क्यम् । 'विभाषा भावादिकर्मणोः' इति तत्संभवादिति ॥ **इत्याधृषीया युजादयः** ॥ ॥ **अथादन्ता इति** । वक्ष्यमाणेषु धातुषु अन्त्यावयवोऽकारो न चोच्चारणार्थ इत्यर्थः ॥—**स्थानिवत्त्वान्न वृद्धिरिति** । 'अचः परस्मिन्–' इति सूत्रेणेत्यर्थः । न च स्थानिनि सति यत्कार्यं तदेव स्थानिवदित्यनेनातिदिश्यते न त्वादेशप्रयुक्तं वार्यते । अन्यथा 'नायकः पावकः' इत्यादि न सिध्येदिति वृद्धिरत्र दुर्वारेति वाच्यम् । 'अचः परस्मिन्' इत्यत्र स्थानिवदित्यनुवर्त्य शब्दाधिकारपक्षाश्रयेण भावाभावावुभावप्यतिदिश्येते इति सिद्धान्तात् । स्थानिनि सत्यभवन्त्या वृद्धेरादेशेऽप्यभावात् । 'स्थानिनि सति यन्न भवति तदादेशेऽपि न भवति' इत्यत्र तु 'न पदान्त–' इति सूत्रस्थयलोपादिग्रहणमेव लिङ्गमिति दिक् ॥

२५७३ । **ई च गणः** ।७।४।९७। गणेरभ्यासस्य ई स्याच्चङ्परे णौ । चादत् । अजीगणत्, अजगणत् । १९९९ **शठ** २००० **श्वठ** सम्यगवभाषणे । २००१ **पट**[1] २००२ **वट** ग्रन्थे । २००३ **रह** त्यागे । अररहत् । २००४ **स्तन** २००५ **गदी** देवशब्दे । स्तनयति । गदयति । अजगदत् । २००६ (ग) **पत गतौ वा** । वा णिजन्तः । वाऽदन्त इत्येके । आद्ये-पतयति । पतति । पतांचकार । अपतीत् । द्वितीये-पातयति । अपीपतत् । २००७ **पष** अनुपसर्गात् । गतावित्येव । पषयति । २००८ **स्वर** आक्षेपे । स्वरयति । २००९ **रच** प्रतियत्ने । रचयति । २०१० **कल** गतौ संख्याने च । २०११ **चह** परिकल्कने । परिकल्कनं दम्भः शाठ्यं च । २०१२ **मह** पूजायाम् । महयति । महतीति शपि गतम् । २०१३ **सार** २०१४ **कृप** २०१५ **श्रथ** दौर्बल्ये । सारयति । कृपयति । श्रथयति । २०१६ **स्पृह** ईप्सायाम् । २०१७ **भाम** क्रोधे । अबभामत् । २०१८ **सूच** पैशुन्ये । सूचयति । अषोपदेशत्वान्न षः, असूसुचत् । २०१९ **खेट** भक्षणे । २०२० 'तृतीयान्तः' इत्येके । २०२१ '**खोट**' इत्यन्ये । २०२२ **क्षोट** क्षये । २०२३ **गोम** उपलेपने । अजुगोमत् । २०२४ **कुमार** क्रीडायाम् । अचुकुमारत् । २०२५ **शील** उपधारणे । उपधारणमभ्यासः । २०२६ **साम** सान्त्वप्रयोगे । अससामत् । 'साम सान्त्वने' इत्यतीतस्य तु-असीषमत् । २०२७ **वेल** कालोपदेशे । वेलयति । २०२८ '**काल**' इति पृथग्धातुरित्येके । कालयति । २०२९ **पल्यूल** लवनपवनयोः । २०३० **वात** सुखसेवनयोः । 'गतिसुखसेवनेषु' इत्येके । वातयति । अववातत् । २०३१ **गवेष** मार्गणे । अजगवेषत् । २०३२ **वास** उपसेवायाम् । २०३३ **निवास** आच्छादने । अनिनिवासत् । २०३४ **भाज** पृथक्कर्मणि । २०३५ **सभाज** प्रीतिदर्शनयोः । प्रीतिसेवनयोरित्यन्ये । सभाजयति । २०३६ **ऊन** परिहाणे । ऊनयति । 'ओः पुयण्जि' २५७७ इति सूत्रे 'पयोः' इति वक्तव्ये वर्गप्रत्याहारजग्रहो लिङ्गं 'णिचि अच आदेशो न स्याद्द्वित्वे कार्ये' इति । यत्र द्विरुक्तावभ्यासोत्तरखण्डस्याद्योऽच् प्रक्रियायां परिलिष्टिते

---

**२५७३ ई च गणः** । 'अत्स्मृदृत्वर-' इत्यत्र योऽत् स चकारेण समुच्चीयते । **स्तन गदी** । 'गदी'[2] इत्यत्र इका निर्देशादतो लोपः । अनेकाच्त्वेनाषोपदेशत्वात्षत्वं न—तिस्तनयिषति । 'स्तनिहृषिपुषि-' इति णेरित्नुचि 'अयामन्ता-' इत्ययादेशः—'स्तनयित्नुर्बलाहकः' ॥ **पत गतौ वा** । गणसूत्रमिदम् ॥—**कृपयतीति** । 'कृपो रो लः' इति न प्रवर्तते, तत्र कृपू सामर्थ्ये इत्यस्य ग्रहणात्, कृपप्रकृतिकणिजन्तस्य तु धात्वन्तरत्वात् । **स्पृह** । आप्तुमिच्छा ईप्सा ॥—**अबभामदिति** । अल्लोपस्य स्थानिवत्त्वात् 'णौ चङि-' इत्युपधाह्रस्वो न । **सूच** । पिशुनो दुर्जनस्तस्य कर्म पैशुन्यम् ॥—**अषोपदेशत्वादिति** । अनेकाच्त्वादिति भावः ॥—**साम सान्त्वने इत्यतीतस्य त्विति** । अयं धातुः इतः प्राङ् मूलपुस्तके न कुत्रापि दृष्टः पुस्तकान्तरेषु मृग्यः । केचित्तु साम सान्त्वने इत्यस्य क्वाप्यपठितत्वेऽपि षान्त्व सामप्रयोगे इति प्राक्पठितमेव । तत्र च षान्त्व सामेति धातुद्वयं प्रयोगे वर्तते । प्रयोगश्च सान्त्वप्रयोगपरः । स च सान्त्वनमेवेत्येवं ग्रन्थकाराशयं वर्णयित्वा स्थितस्य गतिं समर्थयन्ते । **गवेष** । **मार्गणम्**-अन्वेषणम् । **ऊन** परिहाणे । अस्माण्णौ चङि द्वित्वात्परत्वादन्तरङ्गत्वाच्च अल्लोपेन 'अजादेर्द्वितीयस्य' इति णिचा सह द्वित्वे औनिनदित्यनिष्टं प्रसज्येत, किं तु औननदित्येवं रूपमिष्टम् । तच्च नशब्दस्य द्वित्वं विना न संभवति । न च 'द्विर्वचनेऽचि' इति सूत्रेण द्वित्वे कर्तव्ये अल्लोपस्य स्थानिवद्भावान्निषेधाद्वा नशब्दस्य द्वित्वं सिध्यतीति वाच्यम् । णिचो द्वित्वनिमित्तत्वाभावात्-अत आह—**ओः पुयण्जीत्यादि** । संपूर्णसूत्रं लिङ्गमिति केषांचिद् भ्रमं निवर्तयितुमाह—**पयोरिति** । **अयं भावः**—'स्मिपूङ्रञ्ज्वशां सनि', 'सनीवन्तर्ध-' इति सूत्राभ्यां पूङ्यौतिभ्यां परस्य सन इडागमे कृते 'द्विर्वचनेऽचि' इति स्थानिवद्भावादादेशनिषेधाद्वा उवर्णान्तस्यैव द्वित्वमिति-पुपविषते, पुपविषतीत्यनिष्टं प्रसज्येत । ततश्चाभ्यासोवर्णस्येत्वार्थं 'पयोः' इत्यपेक्षितम् । अन्यथा पिपविषते । पिपविषतीति न सिध्येदिति ॥—**वर्गप्रत्याहारेति** । पुयण्जीति वर्गादिग्रहणफलं तु—अबीभवत् अमीमवत् अरीरवत् अलीलवत् अजीजवत् विभावयिषति मिमावयिषति रिरावयिषति लिलावयिषतीत्यादिरूपसिद्धिरिति वाच्यम् । तद्दुरुपपादम् । णिचि परत्वादन्तरङ्गत्वाच्च वृद्ध्यादौ कृते द्वित्वे सत्यभ्यासे उवर्णस्य दुर्लभत्वादकारस्य 'सन्यतः' इतीत्वेन रूपसिद्धेश्च । ततो वर्गादिग्रहणं व्यर्थं सदुक्तार्थे ज्ञापकमिति भावः । ज्ञापनफलं तु यत्र 'ओः पुयण्जि-' इत्यस्याप्राप्तिस्तत्र बोध्यम् । तद्यथा—चुक्षावयिषति । चङि-अचुक्षवत् । उडुरिवाचरति उडवति । 'सर्वप्रातिपदिकेभ्यः-' इत्याचारे क्विप् तदन्ताद्धातोर्णौ सन्, उड्डावयिषति । चङि-औड्डवत् । 'तु' इति सौत्रो धातुस्ततो णौ सन्-तुतावयिषति । चङि-अतूतवत् । नुनावयिषति । अनूनवत् । पुस्फारयिषति । अपुस्फुरत् । 'चिस्फुरोर्णौ' इति वा आत्वम्, अपुस्फरत्-इत्यादिष्वभ्यासे उकारश्रवणं भवति ज्ञापनवशात्, अन्यथा चिक्षावयिषतीत्यादि प्रसज्येत । तदेतत्सकलमभिप्रेत्य वार्तिककृतोक्तम् 'ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्य' इति । स्थानिवद्भावः प्रतिषेधस्याप्युपलक्षणम् ॥—**अच आदेशो न स्यादिति** । प्रतिषेधपक्षो मुख्य इत्यभिप्रेत्येदमुक्तम् । प्रतिषेधः स्थानिवद्भावस्याप्युपलक्षणमिति वा बोध्यम् ॥ नन्वेवं कृत संशब्दन इति धातोर्णौ चङि इरादेशात्प्रागेव कृत इत्यस्य द्वित्वे उरदत्वे च अचकीर्तदिति स्यान्न तु अचिकीर्तदित्यत आह—**यत्र द्विरुक्ताविति** ॥—**आद्योऽजिति** । चङ्सहितस्योत्तरखण्डत्वमभ्युपेत्येदमुक्तम् । अन्ये तु आद्यग्रहणं स्पष्टप्रतिपत्त्यर्थं, धातोरवयवस्यैकाचो

---

१ 'पठ वठ' ग्रन्थे इति पाठोऽपि दृश्यते । २ 'स्तन गदी' इत्ययं स्तनश्च गदिश्चेति द्वन्द्वः, तस्माद्द्विवचनं । गद इत्यस्मादिकि प्रत्यये अतो लोपः । तेन तस्यादन्तत्वं सुस्थमेव ।

यत् । आर्यैर्गृह्यते आर्यगृह्यः । तत्पक्षाश्रित इत्यर्थः ।

२८७१ । **विभाषा कृवृषोः** ।३।१।१२०। क्यप्स्यात् । कृत्यम् । वृष्यम् । पक्षे—

२८७२ । **ऋहलोर्ण्यत्** ।३।१।१२४। ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत्स्यात् । कार्यम् । वर्ष्यम् ।

२८७३ । **युग्यं च पत्रे** ।३।१।१२१। पत्रं=वाहनम् । युग्यो गौः । अत्र क्यप् कुत्वं च निपात्यते ।

२८७४ । **अमावस्यदन्यतरस्याम्** ।३।१।१२२। अमोपपदाद्वसेरधिकरणे ण्यत्, वृद्धौ सत्यां पाक्षिको ह्रस्वश्च निपात्यते । अमा=सह वसतोऽस्यां चन्द्रार्कौ–अमावस्या, अमावास्या । 'ऋहलोर्ण्यत्' २८७२, 'चजोः–' २८६३ इति कुत्वम्, पाक्यम् ॥ ॐ **पाणौ सृजेर्ण्यद्वाच्यः** । ऋदुपधलक्षणस्य क्यपोऽपवादः । पाणिभ्यां सृज्यते पाणिसर्ग्या रज्जुः । ॐ **समवपूर्वाच्च** । समवसर्ग्या ।

२८७५ । **न क्वादेः** ।७।३।५९। क्वादेर्धातोश्चजोः कुत्वं न । गर्ज्यम् । वार्तिककारस्तु 'चजोः–' २८६३ इति सूत्रे 'निष्ठायामनिटः' इति पूरयित्वा 'न क्वादेः' २८७५ इत्यादिप्रत्याचख्यौ । तेन अर्जितर्जिप्रभृतीनां न कुत्वम्, निष्ठायां सेट्त्वात् । मुचुग्लुञ्चुप्रभृतीनां तु क्वादित्वेऽपि कुत्वं स्यादेव । सूत्रमते तु यद्यपि विपरीतं प्राप्तं, तथापि 'यथोत्तरं मुनीनां प्रामाण्यम्' ।

२८७६ । **अजिव्रज्योश्च** ।७।३।६०। न कुत्वम् । समाजः । परिव्राजः ।

२८७७ । **भुजन्युब्जौ पाण्युपतापयोः** ।७।३।६१। एतयोरेतौ निपात्यौ । भुज्यतेऽनेनेति भुजः पाणिः । 'हलश्च' ३३०० इति घञ् । न्युब्जन्त्यस्मिन्निति न्युब्जः । उपतापो रोगः । पाण्युपतापयोः किम् । भोगः, समुद्गः ।

२८७८ । **प्रयाजानुयाजौ यज्ञाङ्गे** ।७।३।६२। एतौ निपात्यौ यज्ञाङ्गे । पञ्च प्रयाजाः । त्रयोऽनुयाजाः । यज्ञाङ्गे किम् । प्रयागः, अनुयागः ।

२८७९ । **वञ्चेर्गतौ** ।७।३।६३। कुत्वं न । वञ्च्यम् । गतौ किम् । वङ्क्यं काष्ठम् । कुटिलीकृतमित्यर्थः ।

२८८० । **ओक उचः के** ।७।३।६४। उचेर्गुणकुत्वे निपात्येते के परे । ओकः=शकुन्तवृषलौ । इगुपधलक्षणः कः । घञा सिद्धे अन्तोदात्तार्थमिदम् ।

२८८१ । **ण्य आवश्यके** ।७।३।६५। कुत्वं न । अवश्यपाच्यम् ।

---

वृद्धिः । नञ्पूर्वस्तु–अस्वैरी ॥—**गृह्यका इति** । 'अनुकम्पायाम्' इति कन् । 'गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते' इत्यमरः ॥ **२८७१ विभाषा कृ–**। करोतेः क्यप्यप्राप्ते वृषेस्तु ऋदुपधत्वान्नित्यं प्राप्तेऽयमारम्भः ॥—**पत्रं वाहनमिति** । पतत्यनेनेत्यर्थे 'दाम्नीशस–' इत्यादिना करणे ष्ट्रन् ॥—**युग्यो गौरिति** । यद्यपि 'तद्वहति रथयुगप्रासङ्गम्' इति तद्धितयताऽपि इदं सिध्यति, तथापि ण्यतं व्यावर्तयितुमिदं सूत्रम् । अन्यथा हि योग्यो गौरिति स्यात् । **अन्ये त्वाहुः—**युग्यो हस्तीति हि वृत्तावुदाहृतं तत्तु तद्धितेन न सिध्यति । न हि हस्ती युगं वहति । कृता तु सिध्यति । युज्यते संबध्यते ह्यसौ कुथादिनेति । ततश्चात्र वैयर्थ्यशङ्कैव नास्तीति दिक् ॥—**वृद्धौ सत्यामिति** । तेन 'अमावास्याया वा' इति विहितस्तद्धितो ह्रस्वपक्षेऽपि सिध्यति, एकदेशविकृतस्यानन्यत्वात् । यदि तु यत्प्रत्ययान्तस्येदं पाक्षिकं निपातनमित्याश्रीयेत तदा यता मुक्तेऽधिकरणे ण्यदेव तावद् दुर्लभः । अथापि बाहुलकाल्लभ्येत । एवमपि ण्यदन्तमनूद्य विहितस्तद्धितो यदन्तान्न स्यादिति दिक् ॥ **२८७२ ऋहलोः—**। पञ्चम्यर्थे षष्ठी । ऋ इति ऋधातोर्न ग्रहणं किंतु ऋवर्णस्य, हला साहचर्यात्, 'परं कार्यम्' इति निर्देशात्, 'ईडवन्द–' इत्यादिलिङ्गाच्च ॥ 'ऋहलोः'–इत्येतदनुवर्तमानस्य धातोर्विशेषणं विशेषणेन तदन्तविधिस्तदेतदाह **—ऋवर्णान्तादित्यादि । अत्रेदमवधेयम्—**मूलपुस्तकेषु सर्वत्र 'विभाषा कृवृषोः' इत्यत्र पक्षे ण्यत् भवतीति वक्तुं 'ऋहलोर्ण्यत्' इति सूत्रं पठित्वा पश्चात् 'युग्यं च पत्रे', 'अमावस्यदन्यतरस्याम्' इति पठितम् । मनोरमायां तु सूत्रपाठक्रमेण 'युग्यं च पत्रे', 'अमावस्यदन्यतरस्याम्' इति व्याख्याय पश्चात् 'ऋहलोः–' इति सूत्रं व्याख्यातं, तथैवात्रापि व्याख्यातव्यमिति ॥ **२८७५ गर्ज्यमिति** । 'गर्ज शब्दे' 'ऋहलोः–' इति ण्यति 'चजोः–' इति कुत्वे प्राप्तेऽयं निषेधः ॥—**कुत्वं स्यादेवेति** । 'ऊदितो वा' इति क्त्वायामिड्विकल्पात् 'यस्य विभाषा' इति निष्ठायामनिट्त्वादिति भावः ॥—**विपरीतमिति** । सूत्रकारमते मुचुग्लुञ्चुप्रभृतीनां 'न क्वादेः' इति कुत्वं न भवति, वार्तिककारमते तु निष्ठायामनिट्त्वात् 'चजोः–' इति कुत्वं भवतीति परस्परविरुद्धमित्यर्थः ॥—**यथोत्तरमिति** । तथा च वार्तिकानुरोधेन कुत्वं स्वीकर्तव्यमिति भावः ॥ **२८७६ समाज इति** । अज गतिक्षेपणयोरित्यस्माद्घञि 'चजोः–' इति कुत्वे प्राप्तेऽयं निषेधः । एवं व्रजेरपि ॥ **२८७७ न्युब्ज इति** । उब्ज आर्जवे । निपूर्वस्यास्य जस्य कुत्वाभावो दस्य च वकारो निपात्यते ॥ **२८८० घञा सिद्धे इति** । उच समवाये इत्यस्माद्घञि 'चजोः–' इति कुत्वे लघूपधगुणे च ओक इति रूपं सिध्यति, परं तु 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वमनिष्टं स्यादिति भावः ॥ **२८८१ । ण्य आवश्यके** । अवश्यंभावः–आवश्यकम् । मनोज्ञादित्वाद्वुञ् । अव्ययानां भमात्रे टिलोपः ॥—**अवश्यपाच्यमिति** । 'आवश्यकाधमर्ण्ययोर्णिनिः' 'कृत्याश्च' इति ण्यत् । आवश्यकशब्दोऽर्थद्योतनार्थो न तु प्रयोगार्थः । तेनार्थप्रकरणादिगम्येऽपि तस्मिन् ण्यत्कुत्वाभावश्च भवति । यथा 'अशोच्यानन्वशोचस्त्वम्' इति । केचित्तु—शोचितुमर्हाः शोच्याः, न शोच्या अशोच्या इति भगवद्गीतास्विदं व्याचक्षते । तच्चिन्त्यम् । 'अर्हे कृत्यतृचश्च' इति ण्यति 'चजोः–' कुत्वप्रसङ्गात् ।

२८८२ । **यजयाचरुचप्रवचर्चश्च** ।७।३।६६। ण्ये कुत्वं न । याज्यम् । याच्यम् । रोच्यम् । प्रवाच्यं ग्रन्थविशेषः । ऋच्, अर्च्यम् । ऋदुपधत्वेऽप्यत एव ज्ञापकात् ण्यत् ॥ ❀ **त्यजेश्च** । त्याज्यम् । 'त्यजिपूज्योश्च' इति काशिका । तत्र पूजेर्ग्रहणं चिन्त्यम्, भाष्यानुक्तत्वात् । 'ण्यत्प्रकरणे त्यजेरुपसंख्यानम्' इति हि भाष्यम् ।

२८८३ । **वचोऽशब्दसंज्ञायाम्** ।७।३।६७। वाच्यम् । शब्दाख्यायां तु—वाक्यम् ।

२८८४ । **प्रयोज्यनियोज्यौ शक्यार्थे** ।७।३।६८। प्रयोक्तुं शक्यः प्रयोज्यः । नियोक्तुं शक्यो नियोज्यो भृत्यः ।

२८८५ । **भोज्यं भक्ष्ये** ।७।३।६९। भोग्यमन्यत् । ❀ **ण्यत्प्रकरणे लपिदम्भिभ्यां चेति वक्तव्यम्** । लाप्यम् । दम्भिर्धातुष्वपठितोऽपि वार्तिकबलात्स्वीकार्यः । दाभ्यः ।

२८८६ । **ओरावश्यके** ।३।१।१२५। उवर्णान्ताद्धातोर्ण्यत्स्यादवश्यंभावे द्योत्ये । लाव्यम् । पाव्यम् ।

२८८७ । **आसुयुवपिरपित्रपिचमश्च** ।३।१।१२६। षुञ्, आसाव्यम् । 'यु मिश्रणे' याव्यम् । वाप्यम् । राप्यम् । त्राप्यम् । आचाम्यम् ।

२८८८ । **आनाय्योऽनित्ये** ।३।१।१२७। आङ्पूर्वान्नयतेर्ण्यदायादेशश्च निपात्यते । दक्षिणाग्निविशेष एवेदम् । स हि गार्हपत्यादानीयतेऽनित्यश्च, सततमप्रज्वलनात् । आनेयोऽन्यो घटादिः, वैश्यकुलादेरानीतो दक्षिणाग्निश्च ।

२८८९ । **प्रणाय्योऽसंमतौ** ।३।१।१२८। संमतिः=प्रीतिविषयीभवनं कर्मव्यापारः । तथा भोगेष्वादरोऽपि संमतिः । प्रणाय्यश्चोरः । प्रीत्यनर्ह इत्यर्थः । प्रणाय्योऽन्तेवासी । विरक्त इत्यर्थः । प्रणेयोऽन्यः ।

२८९० । **पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु** ।३।१।१२९। मीयतेऽनेन—पाय्यं मानम्, ण्यत् धात्वादेः पत्वं च, 'आतो युक्—' २७५१ इति युक् । सम्यङ् नीयते होमार्थमग्निं प्रति इति—सान्नाय्यं हविर्विशेषः, ण्यत्, आयादेशः, समो दीर्घश्च निपात्यते । निचीयतेऽस्मिन्धान्यादिकं निकाय्यो निवासः, अधिकरणे ण्यत्, आय्, धात्वादेः कुत्वं च निपात्यते । धीयतेऽनया समिदिति धाय्या ऋक् ।

२८९१ । **क्रतौ कुण्डपाय्यसंचाय्यौ** ।३।१।१३०। कुण्डेन पीयतेऽस्मिन्सोमः—कुण्डपाय्यः क्रतुः । संचीयतेऽसौ—संचाय्यः ।

---

'चजोः—' इति कुत्वं 'निष्ठायामनिटः' इति वार्तिकमते तु सम्यगेवेति दिक् ॥ २८८२ । **यज—**। यज देवपूजादौ । टुयाचृ याच्ञायाम् । रुच दीप्तौ । प्रपूर्वो वच परिभाषणे । ऋच स्तुतौ ॥—**ग्रन्थविशेष इति** । तथा च संज्ञेयमिति 'वचोऽशब्दसंज्ञायाम्' इत्यस्याप्रसङ्गान्निषेधोऽयमिति भावः ॥—**ज्ञापकादिति** । सरूपत्वाद्वासरूपविधिना ण्यद्भवेदिति न शङ्कनीयमिति भावः ॥ २८८३ **वाक्यमिति** । 'तिङ्सुबन्तचयो वाक्यम्' ॥ २८८५ **भोज्यम्—**। भक्ष्यमिहाभ्यवहार्यमात्रं विवक्षितं न तु खरविशदमभ्यवहार्यम् । तेन भोज्या यवागूरित्यपि भवतीत्याहुः ॥—**भोग्यमन्यदिति** । पालनीयमुपभोग्यं चेत्यर्थः ॥—**लपिदम्भिभ्यां चेति** । 'पोरदुपधात्' इति प्राप्तस्य यतोऽपवादः । **जयादित्यस्तु** 'आसुयुवपिरपि—' इति सूत्रे लपिं प्रक्षिप्य रपिलपित्रपिचपीति पठित्वाऽनुक्तसमुच्चयार्थेन चकारेण दम्भेः संग्रह इत्युक्तवान् । तत्र वैषम्येण व्याख्यानं निर्बीजं, भाष्यविरोधश्च स्पष्ट एवेति बोध्यम् ॥—**स्वीकार्य इति** । 'कास्यनेकाच आम्वक्तव्यश्चुलुम्पाद्यर्थम्' इति वार्तिकबलाद्यथा चुलुम्पादिभ्य आम् स्वीक्रियते तद्वदिति भावः । तथा च प्रयुज्यते—'न ता नशन्ति न दभाति तस्करः', 'विष्णुर्गोपा अदाभ्यः' इति ॥ २८८६ **लाव्यमिति** । आवश्यके उपपदे इति व्याख्याने तु नेदं सिध्यतीति भावः । **कश्चित्तु** लाघवं प्रत्यनादरात् व्यतिसे इत्यादौ व्यतिशब्दवत् द्योतितार्थस्यापि प्रयोगो दृश्यते—अवश्यलाव्यम् । अत्रोपपदसमासासंभवेऽपि मयूरव्यंसकादेराकृतिगणत्वात्समासः ॥ २८८७ **आसु—**। **षुञ्, आसाव्यमिति** । षुञ् अभिषव इत्ययं गृह्यते, न तु षु प्रसवैश्वर्ययोरिति, 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणादिति भावः ॥—**यु मिश्रण इति** । युञ् बन्धन इति तु न गृह्यते, सानुबन्धकत्वादिति भावः । अत्र युप्रभृतीनां द्वन्द्वं कृत्वा पश्चादासुशब्देन द्वन्द्वः । तेन 'अल्पाच्तरम्' इति युशब्दस्य न पूर्वनिपातः शङ्क्यः । इहाद्ययोः 'अचो यत्' इत्यनेन, रपित्रपिचमां तु 'पोरदुपधात्' इत्यनेन यत्प्रत्यये प्राप्तेऽयमारम्भः ॥ २८८८ अनित्यमात्रे यदि प्रयोगस्तर्हि घटादावतिप्रसङ्ग इत्यत आह—**दक्षिणाग्निविशेष इत्यादि । वैश्यकुलादेरिति** । दक्षिणाग्नेर्हि योनिर्विकल्प्यते—वैश्यकुलाद्वित्तवतो भ्राष्ट्राद्वा गार्हपत्याद्वेति ॥ २८८९ **कर्मव्यापार इति** । तथा चायमर्थः—लोकानां या प्रीतिस्तद्विषयीभवनं यस्मिन्नास्ति चोरादौ सोऽसंमतिरिति । वस्तुतस्तु प्रीतिविषयीभवनापेक्षया लाघवात्प्रीतिरेव संमतिः सा यस्मिन् चोरादौ नास्ति लोकानां सोऽसंमतिः । यद्वा संमतिः=प्रीतिर्विषयेषु यस्य नास्ति स विरक्तोऽसंमतिः । तन्त्रेणार्थद्वयमपि गृह्यते ॥ २८९० **पाय्यसान्नाय्य—**। चतुर्षु अर्थेषु चत्वारो निपात्यन्ते । मीयतेऽनेनेति माङः करणे ण्यत् । मेयमन्यत् ॥—**हविर्विशेष इति** । 'ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायाम्' इति विहितो दधिपयोरूपः ॥—**धीयते अनयेति** । अत्र सर्वा सामिधेनी न ग्राह्या, किंतु समिध्यमानवतीं समिद्धवतीं चान्तरेण विकृतिषु प्रक्षिप्यमाणा 'पृथुपाजा अमर्त्यः' इत्यादिकैव । अयं च विशेषो निपातनस्य रूढ्यर्थत्वाल्लभ्यते ॥ नन्वेवं निपातनात्सामिधेनीविशेषवाचकत्वे सामिधेनीग्रहणं व्यर्थमिति चेत् । अत्राहुः—सूत्रे सामिधेनीग्रहणं प्रयोगविशेषोपलक्षणार्थम् । तथा चासामिधेन्यामपि दृश्यते—'धाय्या शंसति' इति । न हि शस्त्रेण समित् प्रक्षिप्यते ॥ २८९१ **क्रतौ कुण्डपाय्य—**। कुण्डशब्दे तृतीयान्ते उपपदे

**२८९२ । अग्नौ परिचाय्योपचाय्यसमूह्याः** ।३।१।१३१। अग्निधारणार्थे स्थलविशेषे एते साधवः । अन्यत्र तु—परिचेयम् । उपचेयम् । संवाह्यम् ।

**२८९३ । चित्याग्निचित्ये च** ।३।१।१३२। चीयतेऽसौ चित्योऽग्निः । अग्नेश्चयनमग्निचित्या ।

'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' २८१७ । त्वया गन्तव्यम् । गमनीयम् । गम्यम् । इह लोटा बाधा मा भूदिति पुनः कृत्यविधिः 'स्त्र्यधिकारादूर्ध्वं वासरूपविधिः क्वचिन्न' इति ज्ञापयति । तेन 'क्तल्युट्तुमुन्खलर्थेषु न' इति सिद्धम् ।

'अर्हे कृत्यतृचश्च' २८२२ । स्तोतुमर्हः स्तुत्यः, स्तुतिकर्म । स्तोता, स्तुतिकर्ता । लिङा बाधा माभूदिति कृत्यतृचोर्विधिः ।

**२८९४ । भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा** ।३।४।६८। एते कृत्यान्ताः कर्तरि वा निपात्यन्ते । पक्षे 'तयोरेव–' २८३३ इति सकर्मकात्कर्मणि, अकर्मकात्तु भावे ज्ञेयाः । भवतीति भव्यः, भव्यमनेन वा । गायतीति गेयः साम्नामयम्, गेयं सामानेन वा, इत्यादि ।

'शकि लिङ् च' २८२३ । चात्कृत्याः । वोढुं शक्यो वोढव्यः, वहनीयः, वाह्यः । लिङा बाधा मा भूदिति कृत्योक्तिः । लाघवादनेनैव[1] ज्ञापनसंभवे 'प्रैष–' २८१७ आदिसूत्रे 'कृत्याश्च' इति सुत्यजम्, 'अर्हे–' २८२२ कृत्यतृचोर्ग्रहणं च ॥ इति कृत्यप्रकरणम् ॥

---

## अथ पूर्वकृदन्तप्रकरणम् ।

**२८९५ । ण्वुल्तृचौ** ।३।१।१३३। धातोरेतौ स्तः । 'कर्तरि कृत्' २८३२ इति कर्त्रर्थे । 'युवोरनाकौ' १२४९, कारकः । कर्ता । वोढुमर्हो वोढा । कारिका । कर्त्री । 'गाङ्कुटा–' २४६१ इति ङित्त्वम्, कुटिता । 'अञ्णित्' इत्युक्तेर्न ङित्त्वम्, कोटकः । 'विज इट्' २५३६, विजिता । 'हनस्तोऽचिण्णलोः' २५७४, घातकः । 'आतो युक्–' २७६१, दायकः । 'नोदात्तोपदेशस्य–' २७६३ इति न वृद्धिः, शमकः । दमकः । अनिटस्तु–नियामकः । 'जनिवध्योश्च' २५१२, जनकः । 'वध हिंसायाम्' वधकः । 'रधिजभोरचि' २३०२, रन्धकः । जम्भकः । 'नेड्वशि कृति' रधेः' २५१६, रधिता । रद्धा । 'मस्जिनशोः—' २५१७ इति नुम्, मङ्क्ता । नंष्टा, नशिता । 'रभेरशब्लिटोः'

~~~~~~~~~~

पिबतेरधिकरणे यत्प्रत्ययो युगागमश्च निपात्यते ॥ नन्वत्र ण्यदेव निपात्यतां, प्रकृतत्वात् । एवं च 'आतो युक् चिण्कृतोः' इति सिद्धत्वात् युक् च न निपातनीय इति लाघवमस्तीति चेत् । मैवम् । तित्स्वरप्रसङ्गात् । इष्यते तु 'यतोऽनावः' इत्याद्युदात्तः कृदुत्तरपदप्रकृतिस्वरः । तथा च प्रयुज्यते-प्रणाय्यात् कुण्डपाय्य इति । संपूर्वाच्चिनोतेस्तु ण्यदायौ निपात्येते । क्रतौ किम् ? कुण्डपानम् । संचेयम् ॥ **२८९२ अग्नौ परि–**।अग्निरिह न ज्वलनः किं तु तद्धारणार्थमिष्टकाचयनेन निर्मितं स्थलं, तदाह—**स्थलविशेष इति** ॥—**एते साधव इति** । स्थलविशेषेऽभिधेये परिपूर्वाच्चिनोतेर्ण्यदायादेशयोः संपूर्वस्य वहेस्तु संप्रसारणदीर्घयोश्च निपातनादिति भावः ॥ **२८९३ चित्योऽग्निरिति** । चिनोतेः कर्मणि क्यप्, यतोऽपवादः । इह सूत्रे अग्नावित्यनुवर्तते, तच्च चित्यशब्दस्यैव विशेषणं न द्वितीयस्य । तस्य भावार्थकत्वेनाग्निवाचकत्वासंभवात् । अग्नेरन्यत्र–चेयमित्येव । शब्दकौस्तुभादौ तु अग्निचित्येत्यत्र भावे यकारप्रत्ययस्तुक् च निपात्यते, न तु क्यप् । तेनान्तोदात्तत्वं भवति । क्यपि तु कृते क्यपः पित्त्वादनुदात्तत्वे धातुस्वरेण चित्य इवाद्युदात्तः स्यादिति स्थितम् ॥ ननु वासरूपविधिना कृत्या अपि भविष्यन्तीत्यत आह—**स्त्र्यधिकारादूर्ध्वमित्यादि** ॥—**क्तल्युडिति** । हसितं हसनं छात्रस्य, 'नपुंसके भावे क्तः' 'ल्युट् च' इत्यनयोर्विषये भावे इति यन्न । इच्छति भोक्तुम्, अत्र 'इच्छार्थेषु लिङ्लोटौ' इति लोण्न । लिङ् तु भवत्येव, 'समानकर्तृकेषु तुमुन्' 'लिङ् चे'ति वचनात् । ईषत्पानः, 'आतो युच्' इति युच् । अत्र 'ईषद्दुःसुषु–' इति खल् न ॥—**लिङा बाधेति** । चकारेण 'लिङ् यदि' इत्यतो लिङनुकृष्यत इति भावः ॥ **२८९४ भव्य–**। 'तयोरेव–' इति नियमात्कर्तर्यप्राप्ते वचनम् ॥—**साम्नामिति** । कर्मणि षष्ठी ॥—**इत्यादीति** । प्रवक्तीति प्रवचनीयो गुरुः स्वाध्यायस्य । प्रवचनीयो गुरुणा स्वाध्यायः । उपस्थानीयः शिष्यो गुरोः । उपस्थानीयो गुरुः शिष्येण । जायते जन्यः जन्यमनेन वा । आप्लवते आप्लाव्यः, ण्यत् । आप्लाव्यमनेन वा ॥—**शकि लिङ् चेति** ॥—**वोढव्य इति** । वह प्रापणे इत्यस्मात्तव्यः । हस्य 'हो ढः' इति ढत्वे 'झषस्तथोः–' इति धत्वे 'ष्टुना ष्टुः' इति ष्टुत्वे 'ढो ढे लोपः' 'सहिवहोः–' इत्यवर्णस्यौत्वम् । अत्र ढलोपे कर्तव्ये ष्टुत्वमसिद्धमिति न शङ्क्यम्, आश्रयासिद्धत्वात् ॥—**बाधा मा भूदिति** । कृत्यानामिति शेषः ॥—**कृत्योक्तिरिति** । कृत्यानुकर्षकचकारोक्तिरित्यर्थः ॥ **इति कृत्यप्रकरणं समाप्तम्** ॥

**२८९५ ण्वुल्तृचौ** ॥ णकारो वृद्ध्यर्थः । लकारो 'लिति' इति स्वरार्थः । तृचश्चकारस्तु 'तुरिष्ठेमेयस्सु', 'तुश्छन्दसि' इत्यादौ सामान्यग्रहणाविघातार्थः । 'चितः' इत्यन्तोदात्तार्थस्तु न भवति, 'आद्युदात्तश्च' इत्यनेनैव सिद्धेः । एवं च 'अतृन्–' इति सूत्रे तृन्तृचोः पृथग्ग्रहणं विहाय अतृस्वसृ इत्येव सुवचमित्येके । **अन्ये तु** सामान्यग्रहणेऽपि क्वचिद्विशेषस्यैव ग्रहणं भवतीति ज्ञापनार्थम् 'अतृन्–' इति सूत्रे तृन्तृचोरुभयोर्ग्रहणम् । तेन कोपधग्रहणेन तद्धितवुग्ग्रहणमित्येतत्सिद्धमित्याहुः ॥—**वोढेति** 'अर्हे कृत्यतृचश्च' इति तृच्, ढत्वादयस्तु वोढव्य इत्यत्रेवात्राप्यूह्याः ॥—**रधितेति** । 'रधादिभ्यश्च' इति वेट् ॥—**रद्धेति** । इह 'नेड्वशि कृति–' इति निषेधाप्रवृत्तावपि 'रधि–' इत्यनेन अच्परत्वाभावान्नुम्न ॥ —**मङ्क्तेति** । टुमस्जो शुद्धौ । अस्मात् तृच्, 'मस्जि–' इति नुम् अन्त्यात्पूर्वः । 'स्कोः–' इति सलोपः । जस्य कुत्वे

---

[1] **लाघवादनेनैवेति** । एतत्सूत्रस्थचकारेणैव वासरूपविधेः स्त्र्यधिकारादूर्ध्वमनित्यत्वज्ञापने कृत्याश्चेत्यादि सुत्यजमिति भावः ।
~~~~~~~~~~

२५८१, रम्भकः । रब्धा । 'लभेश्च' २५८२, लम्भकः । लब्धा । 'तीषसह–' २३४० इति वेट्, एषिता । एष्टा । सहिता । सोढा । दरिद्रातेरालोपः, दरिद्रिता । ण्वुलि न, दरिद्रायकः । 'कृत्यल्युटः–' २८४१ इत्येव सूत्रमस्तु, यत्र विहितास्ततोऽन्यत्रापि स्युरित्यर्थात् । एवं च बहुलग्रहणं योगविभागेन कृन्मात्रस्यार्थव्यभिचारार्थम् । पादाभ्यां ह्रियते पादहारकः, कर्मणि ण्वुल् ॥ ॐ **क्रमेः कर्तर्यात्मनेपदविषयात्कृत इण्निषेधो वाच्यः ।** प्रक्रन्ता । कर्तरीति किम । प्रक्रमितव्यम् । आत्मनेपदेति किम् । संक्रमिता । अनन्यभावे विषयशब्दः । तेन 'अनुपसर्गाद्वा' २७१६ इति विकल्पार्हस्य न निषेधः । क्रमिता । तदर्हत्वमेव तद्विषयत्वम् । तेन 'क्रन्ता' इत्यपीति केचित् । 'गमेरिट्–' २४०१ इत्यत्र परस्मैपदग्रहणं तङानयोरभावं लक्षयति । संजिगमिषिता । एवं 'न वृद्भ्यश्चतुर्भ्यः' २३४८, विवृत्सिता । यङन्तात् ण्वुल्, अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः, पापचकः । यङ्लुगन्तात्तु–पापाचकः ।

२८९६ । **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** ।३।१।१३४। नन्द्यादेर्ल्युर्ग्रह्यादेर्णिनिः पचादेरच् स्यात् । नन्दयतीति नन्दनः । जनमर्दयतीति जनार्दनः । मधुसूदनः । विशेषेण भीषयतीति विभीषणः । लवणः, नन्द्यादिगणे निपातनाण्णत्वम् । ग्राही । स्थायी । मन्त्री । विशयी, वृद्ध्यभावो निपातात् । विषयी, इह षत्वमपि । परिभावी, परिभवी, पाक्षिको वृद्ध्यभावो निपात्यते । पचादिराकृतिगणः, 'शिवशमरिष्टस्य करे' ३४८८ 'कर्मणि घटोऽठच्' १८३६ इति सूत्रयोः करोतेर्घटेश्चाच्प्रयोगात्, अच्प्रत्यये परे यङ्लुग्विधानाच्च । केषांचित्पाठस्त्वनुबन्धासञ्जनार्थः । केषांचित्प्रपञ्चार्थः । केषांचिद्बाधकबाधनार्थः । पचतीति पचः । नदट्, चोरट्, देवट्–इत्यादयष्टितः । नदी । चोरी । देवी । दीव्यतेः 'इगुपध–' २९९७ इति कः प्राप्तः । जारभरा, श्वपचा, अनयोः 'कर्मण्यण्' २९१३ प्राप्तः । न्यङ्क्वादिषु पाठात् 'श्वपाकः' अपि । 'यङोऽचि च' २६५० इति लुक्, 'न धातुलोपे–' २६५६ इति गुणवृद्धिनिषेधः, चेक्रियः । नेन्यः । लोलुवः । पोपुवः । मरीमृजः । ॐ **चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्येति वक्तव्यम्** । आगमस्य दीर्घत्वसामर्थ्यादभ्यासह्रस्वः, 'हलादिः शेषः' २१७९ च न । चराचरः । चलाचलः । पतापतः । वदावदः । ॐ **हन्तेर्घत्वं च** । घत्वमभ्यासस्य, उत्तरस्य तु 'अभ्यासाच्च' २४३० इति कुत्वम्, घनाघनः । ॐ **पाटेर्णिलुक्चोक्च दीर्घश्चाभ्यासस्य** । पाटूपटः । पक्षे–चरः । चलः । पतः । वदः । हनः । पाटः । 'रात्रेः कृति–' १००८ इति वा मुम्, रात्रिञ्चरः । रात्रिचरः ।

---

चत्वम् । अनुस्वारपरसवर्णौ । 'बहूनां समवाये द्वयोर्द्वयोः संयोगः' इति पक्षे तु नुमागमस्याचपरत्वेऽपि 'स्कोः–' इति सलोपो भवत्येवेति ज्ञेयम् ॥**—नंष्टेति** । रधादित्वादिडभावपक्षे नुम् ॥**—लब्धेति** । 'झषस्तथोः' इति धः, भकारस्य जश्त्वम् । 'लभेश्च' इति नुम् तु न भवति, अचीत्यनुवर्तनात् ॥**—ण्वुलि नेति** । 'सनि ण्वुलि ल्युटि च न' इति वचनात् ॥**—योगविभागेनेति** । 'कृत्यल्युटो बहुलम्' इति सूत्रे 'कृतो बहुलम्' इत्येवाकरे स्थितम् । तथा च योगविभागं विनैव सर्वेष्टसिद्धिरित्याहुः ॥**—प्रक्रन्तेति** । 'प्रोपाभ्यां समर्थाभ्याम्' इति क्रमेरात्मनेपदविषयता ॥ **अनन्यभावे विषयशब्द इति** । तदन्याविषयत्वे सति तद्विषयत्वमनन्यभावः । तथा च विकल्पार्हस्य क्रमेः परस्मैपदात्मनेपदोभयप्राप्तिविषयत्वान्निषेधो नेति भावः ॥**—संजिगमिषितेति** । संपूर्वाद्गमेः सन्, 'सन्यङोः' इति द्वित्वे हलादिःशेषे 'सन्यतः' इत्यभ्यासस्येत्वम् । 'आर्धधातुकस्य–' इति सन इट्, षत्वं, सन्नन्तात्तृच्, पुनरिट् ॥**—अल्लोपस्येति** । प्राचा तु 'न धातुलोप–' इति सूत्रे इक इत्यनुवृत्तेर्वृद्धेरनिषेधः–पापाचक इत्युक्तं, तन्न । यङन्ते अल्लोपस्य स्थानिवत्त्वेन वृद्धेः प्राप्त्यभावात् ॥ ननु यङ्लुगन्तपापाचकरूपाभिप्रायेण तथोक्तम् । तत्र हि अकारविशिष्टस्यैव यङो लुगिति सर्वसंमतत्वेन स्थानिवत्त्वाभावादिति चेत् । मैवम् । एवं तर्हि आर्धधातुकस्य धात्ववयवलोपनिमित्तत्वाभावेन यङ्लुगन्ते 'न धातुलोप–' इति निषेधस्य प्रसक्त्यभावात् ॥ **२८९६ नन्दिग्रहि—**। द्वन्द्वान्ते श्रूयमाण आदिशब्दः प्रत्येकं संबध्यते तदाह**—नन्द्यादेर्ल्युरित्यादि ॥—मधुसूदन इति** । मधुं दैत्यं सूदयतीति विग्रहः । षूद क्षरणे । इह अर्दिसूदिभ्यां कर्मण्यणि प्राप्ते नन्द्यादिपाठात् ल्युः ॥**—विभीषण इति** । 'भियो हेतुभये षुक्' ॥**—ग्राहीति** । णिनेर्णित्त्वादुपधावृद्धिः ॥**—स्थायीति** । आतो युक् ॥**—मन्त्रीति** । मन्त्रीति चुरादाविदित्पाठान्नुम्, 'णेरनिटि' इति लोपः ॥**—विषयीति** । 'षिञ् बन्धने' 'धात्वादेः–' इति षस्य सत्वे 'आदेशप्रत्यययोः' इति प्राप्तस्य षत्वस्य 'सात्पदाद्योः' इति निषेधादाह**—इह षत्वमपीति** । निपातनादित्यनुषज्यते । 'परिनिविभ्यः–' इति सूत्रे 'सितसय' इति क्तान्ताजन्तसिनोतेर्ग्रहणाण्णिन्यन्तसिनोतेर्निपातनं विना षत्वं दुर्लभमिति भावः ॥**—जारभरेत्यादि** । जारं बिभर्ति, श्वानं पचतीति विग्रहः ॥**—श्वपाकोऽपीति** । कर्मण्यणपि पक्षे भवतीति भावः ॥**—चेक्रिय इति** । संयोगपूर्वत्वात् 'एरनेकाचः–' इति न यण् ॥**—लोलुव इति** । इह सुबभावात् 'ओः सुपि' इति यण्नेति 'अचि श्नुधातु–' इत्युवङ् ॥**—मरीमृज इति** । 'रीगृदुपधस्य च' इति रीगागमः ॥**—हलादिःशेषश्च नेति** । सति तु हलादिःशेषे आगमस्य आदेशस्य वा विशेषो नास्तीति–आचाभ्यासस्यत्येव ब्रूयादिति भावः ॥**—पाटेर्णिलुगिति** । 'णेरनिटि' इति लोपे हि प्रत्ययलक्षणन्यायेन पाटूपट इत्यत्रोपधावृद्धिः

२८९७ । **इगुपधज्ञाप्रीकिरः कः** ।३।१।१३५। एभ्यः कः स्यात् । क्षिपः । लिखः । बुधः । कृशः । ज्ञः । प्रीणातीति प्रियः । किरतीति किरः । वासरूपविधिना ण्वुल्तृचावपि, क्षेपकः । क्षेप्ता ।

२८९८ । **आतश्चोपसर्गे** ।३।१।१३६। कः स्यात् । 'श्याद्व्यधा–' २९०३ इति णस्यापवादः । सुग्लः । प्रज्ञः ।

२८९९ । **पाघ्राध्माधेट्दृशः शः** ।३।१।१३७। पिबतीति पिबः । जिघ्रः । धमः । धयः । धया कन्या । धेटष्टित्वात् 'स्तनन्धयी' इति खशीव ङीप् प्राप्तः । 'खशोऽन्यत्र नेष्यते' इति हरदत्तः । पश्यतीति पश्यः ॥ ॐ **घ्रः संज्ञायां न** । 'व्याघ्रादिभिः–' ७३५ इति निर्देशात् ।

२९०० । **अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च** ।३।१।१३८। शः स्यात् । लिम्पः । विन्दः । धारयः । पारयः । वेदयः । उदेजयः । चेतयः । सातिः सुखार्थः सौत्रो हेतुमण्ण्यन्तः, सातयः । वाऽसरूपन्यायेन क्विपि–'सात्' परमात्मा । सात्वन्तो भक्ताः 'षह मर्षणे' चुरादिः, हेतुमण्ण्यन्तो वा, साहयः । अनुपसर्गात्किम् । प्रलिपः ॥ ॐ **नौ लिम्पेर्वाच्यः** ॥ निलिम्पा देवाः ॥ ॐ **गवादिषु विन्देः संज्ञायाम्** । गोविन्दः । अरविन्दम् ।

२९०१ । **ददातिदधात्योर्विभाषा** ।३।१।१३९। शः स्यात् । ददः । दधः । पक्षे वक्ष्यमाणो णः । अनुपसर्गादित्येव, प्रदः । प्रधः ।

२९०२ । **ज्वलितिकसन्तेभ्यो णः** ।३।१।१४०। 'इति'शब्द आद्यर्थः । ज्वलादिभ्यः कसन्तेभ्यो णः स्याद्वा । पक्षेऽच् । ज्वालः, ज्वलः । चालः, चलः । अनुपसर्गादित्येव । उज्ज्वलः ॥ ॐ **तनोतेरुपसंख्यानम्** । इह 'अनुपसर्गात्' इति 'विभाषा' इति च न संबध्यते । अवतनोतीति–अवतानः ।

२९०३ । **श्याऽऽद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च** ।३।१।१४१। श्यैङ्प्रभृतिभ्यो नित्यं णः स्यात् । श्यैङोऽवस्यतेश्चाऽऽदन्तत्वात्सिद्धे पृथग्ग्रहणमुपसर्गे कं बाधितुम् । अवश्यायः । प्रतिश्यायः । आत्, दायः । धायः । व्याधः । 'स्रु गतौ' आङ्पूर्वः संपूर्वश्च–आस्रावः । संस्रावः । अत्यायः । अवसायः । अवहारः ।

---

स्यादिति भावः । इहापि पूर्ववद्ध्रस्वहलादिःशेषयोरभावः ॥ **२८९७ इगुपध–** । इक् उपधा यस्य सः । ज्ञा अवबोधने, प्रीञ् तर्पणे, कॄ विक्षेपे । एषामितरेतरयोगद्वन्द्वे व्यत्ययेन पञ्चम्येकवचने कृशब्दस्य धात्वनुकरणत्वेन प्रकृतिवदनुकरणमित्यतिदेशात् 'ऋत इद्धातोः' इति इत्वम् । समाहारद्वन्द्वे तु नपुंसकह्रस्वत्वे सति इत्वं न स्यात् ॥—**ज्ञ इति** । जानातीति ज्ञः, 'आतो लोप इटि च' इत्यालोपः ॥ **२८९९ पाघ्राध्मा–** । पा पाने । पा रक्षणे इत्ययं तु न गृह्यते, लुग्विकरणत्वात् । इह सूत्रे 'उपसर्गे' इति केचिदनुवर्तयन्ति तद्बहूनामसंमतम् । तथा च श्रीहर्षः—'फलानि धूमस्य धयानधोमुखान्' इति । श्रूयते च 'यदा पश्यः पश्यते रुक्मवर्णम्' इति ॥ **२९०० अनुपसर्गाल्लिम्पविन्द** । इह लिम्पविन्देति भाविना नुमा सनुम्कौ निर्दिष्टौ । तेन लाभार्थस्यैव विन्देर्ग्रहणं, न तु सत्ताद्यर्थकानाम् ॥—**धारय इति** । धृञ् धारणे, धृङ् अवस्थाने । ण्यन्तयोर्द्वयोरपि ग्रहणम् । अथ कथं 'न मद्यमत्रोत्तरधारयस्य किं' इति श्रीहर्षः ? परत्वाद्धि सूत्रधारादिष्विव कर्मण्यणा भाव्यम् । तथाच वार्तिकम्—'अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेन' इति । सत्यम् । कर्मणः शेषत्वविवक्षायामणोऽप्राप्त्या शे कृते शेषषष्ठ्यन्तेन समासो भविष्यति । एतेन–गङ्गाधरभूधरजलधरादयो व्याख्याताः ॥—**पारय इति** । 'पार कर्मसमाप्तौ' चुरादिण्यन्तः । 'पॄ पालनपूरणयोः' इति वा हेतुमण्ण्यन्तः ॥—**वेदय इति** । 'विद चेतनाख्यानादिपु' चुरादिः, ज्ञानाद्यर्थानामन्यतमो वा हेतुमण्ण्यन्तः । इहोदाहरणेषु लिपिविदिभ्यां 'तुदादिभ्यः शः', 'शे मुचादीनाम्' इति नुम् । धार्यादिभ्यस्तु शप्, गुणायादेशौ ॥—**अरविन्दमिति** । चक्रस्य नाभिनेम्योरन्तराले स्थितानि काष्ठानि अराः, तदाकाराणि दलानि तत्सादृश्यात् अरास्तान् विन्दति=लभते इत्यर्थे कर्मण्यणो बाधनायेदम् ॥ **२९०१ ददातिदधात्योर्विभाषा** ॥—**ददः । दध इति** । शे परे 'जुहोत्यादिभ्य–' इति श्लुः, 'श्लौ' इति द्वित्वम् । अपित्सार्वधातुकस्य शस्य ङित्त्वात् 'आतो लोपः–' इत्यालोपः ॥—**वक्ष्यमाणो ण इति** । 'श्याद्व्यधा–' इति णप्रत्यये आतो युकि—दायः । धायः ॥—**प्रदः । प्रधः इति** । 'आतश्चोपसर्गे' इति कः । स्यादेतत्—दद दाने, दध धारणे, आभ्यामचि—ददः, दधः–इति सिद्धम् । दाधाभ्यामादन्तलक्षणे णप्रत्यये–दायः, धायः–इत्यपि, ततश्चेदं सूत्रं व्यर्थमिति चेत् । सत्यम् । स्वरार्थमिदं सूत्रम् । अददः । अदधः । इह हि अव्ययपूर्वपदप्रकृतिस्वर इष्यते । अजन्तत्वे तु 'अच्कावशक्तौ' इत्यन्तोदात्तत्वं स्यात् ॥ **२९०२ इतिशब्द आद्यर्थ इति** । निपातानामनेकार्थत्वादिति भावः ॥ **२९०३ श्याद्व्यधा—** । अनुपसर्गादिति निवृत्तम्, उत्तरसूत्रे पुनरनुपसर्गग्रहणात् । एवं च तत्संबद्धं विभाषाग्रहणमपि निवृत्तं, तदाह—**नित्यमिति** । इह सूत्रे 'श्यैङ् गतौ' इत्यस्य आत्वे 'श्या–आत्' इति प्रश्लेषः । न तु शीङो यणादेशेन, नापि–अततेः–अच्छब्दान्तानां वा यतिप्रभृतीनां, नाप्यकारान्तानां वा प्रश्लेषेण ग्रहणं, व्याख्यानादिति भावः ॥—**कं बाधितुमिति** । अन्यथा 'आतश्चोपसर्गे' इति विशेषविहितः कः सामान्यविहितस्य णस्य बाधकः स्यादित्यर्थः । स्रु गतौ । प्राचा तु सूत्रे 'आश्रु' 'संश्रु' इति तालव्यं पठित्वा श्रृणोतिरुदाहृतः । तदनाकरम् । तथा च प्रयुञ्जते—'अनाश्रवा वः किमहं कदापि वक्तुं विशेषात्परमस्ति शेषः' इति नैषधादौ । अमरोऽप्याह—'वचने स्थित आश्रवः' इति । यदि तु सूत्रे

लेहः । श्लेषः । श्वासः ।

२९०४ । **दुन्योरनुपसर्गे** ।३।१।१४२। णः स्यात् । दुनोतीति दावः । नीसाहचर्यात्सानुबन्धकाद्दुनोतेरेव णः । द्रवतेस्तु पचाद्यच्, द्रवः । नयतीति नायः । उपसर्गे तु-प्रद्रवः । प्रणयः ।

२९०५ । **विभाषा ग्रहः** ।३।१।१४३। णो वा । पक्षेऽच् । व्यवस्थितविभाषेयम् । तेन जलचरे-ग्राहः । ज्योतिषि-ग्रहः ॥ 'भवतेश्च' इति काशिका । भवो देवः संसारश्च । भावाः पदार्थाः । भाष्यमते तु प्राप्त्यर्थाच्चुरादिण्यन्तादच्, भावः ।

२९०६ । **गेहे कः** ।३।१।१४४। गेहे कर्तरि ग्रहेः कः स्यात् । गृह्णाति धान्यादिकमिति-गृहम् । तात्स्थ्यात्-गृहा दाराः ।

२९०७ । **शिल्पिनि ष्वुन्** ।३।१।१४५। क्रियाकौशलं शिल्पं, तद्वति कर्तरि ष्वुन् स्यात् । ॐ **नृतिखनिरञ्जिभ्य एव** । नर्तकः । नर्तकी । खनकः । खनकी ॥ ॐ **असि अके अने च रञ्जेर्नलोपो वाच्यः** । रजकः । रजकी । भाष्यमते तु नृतिखनिभ्यामेव ष्वुन् । रञ्जेस्तु (उ) **'क्वुन् शिल्पिसंज्ञयोः'** इति क्वुन्, टाप्, रजिका । पुंयोगे तु रजकी ।

२९०८ । **गस्थकन्** ।३।१।१४६। गायतेस्थकन् स्यात् शिल्पिनि कर्तरि । गाथकः ।

२९०९ । **ण्युट् च** ।३।१।१४७। गायनः । स्त्रियां-गायनी ।

२९१० । **हश्च व्रीहिकालयोः** ।३।१।१४८। हाको हाङश्च ण्युट् स्यात् व्रीहौ काले च कर्तरि । जहात्युदकमिति हायनो व्रीहिः । जहाति भावानिति हायनो वर्षम् । जिहीते-प्राप्नोतीति वा ।

२९११ । **प्रुसृल्वः समभिहारे वुन्** ।३।१।१४९। समभिहारग्रहणेन साधुकारित्वं लक्ष्यते । प्रवकः । सरकः । लवकः ।

२९१२ । **आशिषि च** ।३।१।१५०। आशीर्विषयार्थवृत्तेर्धातोर्वुन् स्यात्कर्तरि । जीवतात्-जीवकः । नन्दतात्-नन्दकः । आशीः प्रयोक्तुर्धर्मः । आशासितुः पित्रादेरियमुक्तिः ।

२९१३ । **कर्मण्यण्** ।३।२।१। कर्मण्युपपदे धातोरण् प्रत्ययः स्यात् । उपपदसमासः । कुम्भं करोतीति कुम्भकारः । 'आदित्यं पश्यति' इत्यादावनभिधानान्न । ॐ **शीलिकामिभक्ष्याचरिभ्यो णः** । अणोऽपवादार्थं वार्तिकम् । मांसशीला । मांसकामा । मांसभक्षा । कल्याणाचारा । ॐ **ईक्षिक्षमिभ्यां च** । सुखप्रतीक्षा । बहुक्षामा । कथं

---

अस्मिन् श्रृणोतेर्ग्रहणं स्यात्तर्हि 'ऋदोरप्' इति सामान्यविहितमपं बाधित्वा आङ्पूर्वकाच्छृणोतेर्विशेषविहितो ण एव स्यात्, तथा च आश्रव इति रूपं न स्यात्किन्तु 'आश्रावः' इति स्यादिति दिक् ॥—**लेहः श्लेष इति** । 'इगुपधज्ञा-' इति कप्रत्यये गुणो न स्यादिति भावः ॥ **२९०४ दुनोतेरिति** । टुदु उपतापे इत्यस्मात् ॥—**द्रवतेरिति** । द्रु गतावित्यस्मात् ॥—**द्रव इति** । 'दवदावौ वनारण्यवह्नी' इत्यमरः ॥ **२९०५ काशिकेति** । भाष्ये त्वेतद्वार्तिकं नास्तीति तन्मते भावशब्दोऽसाधुरित्यत आह—**भाष्यमते त्विति** ॥ **२९०६ गेहे कः** । 'गेहे' इति प्रत्ययार्थस्य कर्तुर्विशेषणं, नोपपदम् । 'गृहपतिना संयुक्ते ञ्यः' इति निर्देशादित्यभिप्रेत्याह—**गेहे कर्तरीति** । एतत्सूत्रं तु शक्यमकर्तुम्, गृहू ग्रहणे इति भ्वादेरिगुपधलक्षणे कप्रत्यये कृते गृहशब्दस्य सिद्धेः ॥—**तात्स्थ्यादिति** । भवति हि तात्स्थ्यात्ताच्छब्द्यम् । मञ्चाः क्रोशन्तीत्यादौ मञ्चशब्देन पुरुषा अपि व्यपदिश्यन्ते, एवं च गृहशब्दो वेश्मनि मुख्यो दारेषु त्वौपचारिक इत्यर्थः । अत्रेदमवधेयम्—गृहशब्दोऽयमर्धर्चादित्वादुभयलिङ्गः । तत्र नपुंसकलिङ्गोऽभिधेयवचनः, पुंलिङ्गस्तु बहुवचनान्त एव । 'गृहाः पुंसि च भूम्न्येव' इत्यमरोक्तेरिति ॥ **२९०७ शिल्पिनि ष्वुन्** । पूर्वेण साहचर्याच्छिल्पिनीत्यपि प्रत्ययार्थस्य विशेषणं, न तूपपदमित्याह—**तद्वति कर्तरीति** ॥—**भाष्यमते त्विति** । तथा च षष्ठे 'रजकरजनरजःसूपसंख्यानम्' इति वार्तिकं प्रत्याख्यातुं भाष्यकृतोक्तम्—रजकरजनरजःसु कित्वात् सिद्धं, कित एवैते औणादिका इति । कैयट आह—रजक इति-'क्वुन् शिल्पि-' इति क्वुन् । रजनमिति—'रञ्जेः क्युन्' इति क्युन् । रज इति—'भूरञ्जिभ्यां कित्' इत्यसुन् प्रत्ययः' इत्यादि ॥ **२९०८ गस्थकन्** । गामादाग्रहणेष्वविशेषेऽपि गै शब्द इत्ययमेवेह गृह्यते न तु गाङ् गताविति । थकन् प्रत्ययो हि गायत्यर्थविषयमेव शिल्पिनमभिधातुं समर्थ इत्याशयेनाह—**गायतेरिति** ॥ **२९०९ ण्युट् च** । योगविभाग उत्तरत्र अस्यैवानुवृत्त्यर्थः ॥—**गायन इति** । आतो युक् ॥ **२९१० जहात्युदकमिति** । उदकादधिकं वर्धनात् ॥—**भावानिति** । भावाः पदार्थाः, तान् जिहीते इति । 'ओहाङ् गतौ' 'भृञामित्' इत्यभ्यासस्येत्वम् ॥ **२९११ प्रुसृल्वः**–। पञ्चमीस्थाने व्यत्ययेन जस् । 'ओः सुपि' इति यण् ॥—**लक्ष्यत इति** । भूयः सहचारात्, यो हि यां क्रियां पुनःपुनरनुभवति स तत्र प्रायेण कौशलं लभते तेन सकृदपि यः सुष्ठु करोति तत्र वुन् । यस्तु बहुशोऽपि दुष्टं करोति तत्र नेति भावः ॥ **२९१२ आशिषि च** । अप्राप्तप्रार्थनमाशीः । सा च प्रयोक्तृधर्मो न प्रत्ययार्थः, 'कर्तरि कृत्' इति कर्त्रर्थे विधानादित्याशयेनाह—**आशीर्विषयार्थेत्यादिना** ॥—**जीवतादिति** । जीवनं तव भूयादित्यर्थः ॥—**जीवक इति** । स्त्रियां तु टापि 'आशिषि वुनश्च न' इति निषेधात् 'प्रत्ययस्थात्-' इति इत्वाभावः । जीवका ॥ **२९१३ कर्मण्यण्** ॥—**उपपदसमास इति** । 'तत्रोपपदम्-' इति कर्मादिवाच्यकुम्भादिवाचकपदस्योपपदसंज्ञायाम् 'उपपदमतिङ्' इति समास इत्यर्थः ॥—**कुम्भकार इति** । अणि कृते 'कर्तृकर्मणोः

तर्हि—गङ्गाधरभूधरादयः? कर्मणः शेषत्वविवक्षायां भविष्यन्ति ।

२९१४ । **ह्वावामश्च** ।३।२।२। अण् स्यात् । कापवादः । स्वर्गह्वायः । तन्तुवायः । धान्यमायः ।

२९१५ । **आतोऽनुपसर्गे कः** ।३।२।३। आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे कः स्यान्नाऽण् । 'आतो लोप–' २३७२, गोदः । पार्ष्णित्रम् । अनुपसर्गे किम् । गोसंदायः ॥ ॐ **कविधौ सर्वत्र प्रसारणिभ्यो डः** ॥ ब्रह्म जिनाति ब्रह्मज्यः । सर्वत्रग्रहणात् 'आतश्चोपसर्गे' २८९८, आह्वः । प्रह्वः ।

२९१६ । **सुपि स्थः** ।३।२।४। 'सुपि' इति योगो विभज्यते । सुपि उपपदे आदन्तात्कः स्यात् । द्वाभ्यां पिबतीति द्विपः । समस्थः । विषमस्थः । ततः 'स्थः' । सुपि तिष्ठतेः कः स्यात् । आरम्भसामर्थ्याद्भावे । आखूनामुत्थानमाखूत्थः ।

२९१७ । **प्रष्ठोऽग्रगामिनि** ।८।३।९२। प्रतिष्ठत इति प्रष्ठो गौः । अग्रतो गच्छतीत्यर्थः । अग्रेति किम् । प्रस्थः ।

२९१८ । **अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः** ।८।३।९७। 'स्थः' इति कप्रत्ययान्तस्यानुकरणम् । षष्ठ्यर्थे प्रथमा । एभ्यः स्थस्य सस्य षः स्यात् । द्विष्ठः । त्रिष्ठः । इत ऊर्ध्वं 'कर्मणि' 'सुपि' इति द्वयमप्यनुवर्तते । तत्राकर्मकेषु 'सुपि' इत्यस्य संबन्धः ।

२९१९ । **तुन्दशोकयोः परिमृजापनुदोः** ।३।२।५। तुन्दशोकयोः कर्मणोरुपपदयोराभ्यां कः स्यात् ॥ ॐ **आलस्यसुखाहरणयोरिति वक्तव्यम्** ॥ तुन्दं परिमार्ष्टीति तुन्दपरिमृजः, अलसः । शोकापनुदः, सुखस्याहर्ता । अलसादन्यत्र—तुन्दपरिमार्ज एव । यश्च संसारासारत्वोपदेशेन शोकमपनुदति सः—शोकापनोदः ॥ ॐ **कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्** ॥ मूलानि विभुजतीति मूलविभुजो रथः । आकृतिगणोऽयम् । महीध्रः । कुध्रः । गिलतीति गिलः ।

२९२० । **प्रे दाज्ञः** ।३।२।६। दारूपाज्ञानातेश्च प्रोपसृष्टात्कर्मण्युपपदे कः स्यात् । अणोऽपवादः । सर्वप्रदः । पथि-

---

कृति' इति षष्ठ्यन्तस्य कुम्भशब्दस्य कारशब्देन समासः ॥—**शेषत्वविवक्षायामिति** । पदसंस्कारपक्षे तु धरतीति धरः, गङ्गाया धर इति कर्मणि या षष्ठी तदन्तेन समास इति सुवचम् । **स्यादेतत्**—धातोर्विधीयमानस्याणादेः पदविधित्वाभावेन समर्थपरिभाषाया अनुपस्थानात् 'पश्यति कुम्भं' 'करोति कटम्' इत्यादावसमर्थादपि धातोरणादयः स्युरिति चेत् । **अत्राहुः**—कुम्भाद्युपपदे विधीयमानस्याणादेरपि पदाश्रितविधित्वात्समर्थपरिभाषोपस्थानान्नोक्तदोषः । उपोच्चारितं पदं ह्युपपदं, पदं च सुप्तिङन्तमिति प्रागेवोक्तत्वादिति ॥ **२९१४ ह्वावामश्च** ॥—**कापवाद इति** । 'आतोऽनुपसर्गे—' इति प्राप्तिर्बोध्या ॥—**स्वर्गह्वाय इत्यादि** । ह्वेञ्वेञोः 'आदेच–' इत्यात्वे 'आतो युक्–' इति युक् । माङ् माने । मेङ् प्रणिदाने । अनयोरिह ग्रहणं न तु मा माने इत्यस्य, अकर्मकत्वात् । २९१५ कविधानस्य फलमाह—**आतो लोप इति** ॥—**पार्ष्णित्रमिति** । पार्ष्णिं त्रायत इति । त्रैङ् पालने ॥—**गोसंदाय इति** । अण्, युक् ॥—**प्रसारणिभ्य इति** । प्रसारणमिति संप्रसारणपर्यायः ॥—**जिनातीति** । ज्या वयोहानौ । 'क्र्यादिभ्यः–' इति श्नाप्रत्यये 'ग्रहिज्या–' इति संप्रसारणे पूर्वरूपे 'हलः' इति दीर्घे च कृते 'प्वादीनाम्–' इति ह्रस्वः ॥—**ब्रह्मज्य इति** । डित्त्वसामर्थ्यादभस्यापि टेर्लोपः । पूर्वेण के हि सति कित्त्वात्संप्रसारणादौ च 'ब्रह्मजियः' इति स्यात् ॥—**आह्वः । प्रह्व इति** । के हि सति 'वचिस्वपि–' इत्यादिना ह्वेञः संप्रसारणे सति 'आहुव' 'प्रहुवः' इति स्यादिति बोध्यम् ॥ **२९१६ सुपि स्थः** । सुबिति प्रत्याहारो गृह्यते न तु सप्तमीबहुवचनम्, कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणात् ॥—**आरम्भसामर्थ्यादिति** । कर्तरि पूर्वेणैव सिद्धत्वादिह 'कर्तरि कृत्' इति न संबध्यते, अनिर्दिष्टार्थश्च स्वार्थे, धातोः स्वार्थो भाव एव ॥ नन्वेवं 'घञर्थे कविधानम्' इत्यनेन गतार्थतेति चेत् । न । वार्तिकं दृष्ट्वा सूत्रकृतोऽप्रवृत्तेः । किंच 'षष्ठी' इति सूत्रेण पाक्षिकसमासे प्रसक्ते 'उपपदमतिङ्' इति नित्यसमासार्थमिदम् । अत एव ल्युडन्तेनास्वपदविग्रहमाह—**आखूनामुत्थानमिति** । नन्वेवं घञर्थे कविधाने 'स्थास्नापाव्यधिहनियुध्यर्थम्' इति वार्तिके स्थाग्रहणं व्यर्थमिति चेत् । **अत्राहुः**—अकर्तरि कारके विधानार्थं तत्र स्थाग्रहणमिति ॥—**आखूत्थ इति** । स्था इत्यस्य के परे 'आतो लोपः' इत्यालोपः, 'उदः स्थास्तम्भोः–' इति उदः परस्य सस्य थः, उदो दस्य चर्त्वम् । **अत्र प्राचा**—आखूत्थं वर्तत इति नपुंसकं पठितं । तदुपेक्ष्यमिति मनोरमायामुक्तम्, भाष्यादौ सर्वत्र पुंलिङ्गस्यैवोदाहृतत्वात् । 'ल्युः कर्तरीमनिज् भावे को घोः किः प्रादितोऽन्यतः' इत्यमरकोशे भावे कस्य पुंस्त्वविधानात्, 'भावे नणकचिद्भ्योऽन्ये' इति नपुंसकविधाने कस्य पर्युदासाच्चेति । नणकचिद्भ्य इत्यत्र चकार इद्यस्य स चित् नश्च णश्च कश्च चिच्च—नणकचितस्तेभ्योऽन्य इति विग्रहः ॥ **२९१८ अम्बाम्ब**—॥—**कप्रत्ययान्तस्येति** । तेन भूमिस्थितं गोस्थानमित्यादौ नेति भावः । प्राचा तु स्थस्य सस्येति व्याख्यातव्ये स्थः सस्येति व्याख्यातं, तदाकरविरोधेन कप्रत्ययान्तस्येत्यध्याहृत्य व्याख्येयम् ॥—**द्विष्ठः । त्रिष्ठ इति** । द्वयोस्तिष्ठतीत्यादिविग्रहः । एवम्—अम्बष्ठः आम्बष्ठः गोष्ठः भूमिष्ठः सव्यष्ठः अपष्ठः कुशेष्ठः कुष्ठः शङ्कुष्ठः अङ्गुष्ठः मञ्जिष्ठः पुञ्जिष्ठः परमेष्ठः बर्हिष्ठः दिविष्ठः अग्निष्ठः ॥ **२९१९ आभ्यामिति** । परिमृजापनुदोरित्यत्र पञ्चम्यर्थे षष्ठीति भावः ॥—**तुन्दपरिमृज इति** । अत्र मृजेः '(क्ङिति) अजादौ' इति वैकल्पिकी वृद्धिर्व्यवस्थितविभाषया नेत्येके । स्यादेवेत्यन्ये ॥—**मूलविभुजादिभ्य इति** । तादर्थ्ये एषा चतुर्थी । मूलविभुजादिसिध्यर्थमित्यर्थः ॥ **२९२० प्रे दाज्ञः** । गामादाग्रहणेष्वविशेषादाह—**दारूपादिति** ।—**प्रथिप्रज्ञ**

प्रज्ञः । 'अनुपसर्गे' इत्युक्तेः प्रादन्यस्मिन्सति न कः, गोसंप्रदायः ।

२९२१ । समि ख्यः ।३।२।७। गोसंख्यः ।

२९२२ । गापोष्टक् ।३।२।८। अनुपसृष्टाभ्यामाभ्यां टक् स्यात्कर्मण्युपपदे । सामगः । सामगी । उपसर्गे तु सामसंगायः ॥ **ॐ पिबतेः सुराशीध्वोरिति वाच्यम्** ॥ सुरापी । शीधुपी । अन्यत्र—क्षीरपा ब्राह्मणी, सुरां पाति रक्षतीति-सुरापा ।

२९२३ । **हरतेरनुद्यमनेऽच्** ।३।२।९। अंशहरः । अनुद्यमने किम् । भारहारः ॥ **ॐ शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुष्षु ग्रहेरुपसंख्यानम्** ॥ शक्तिग्रहः । लाङ्गलग्रहः ॥ **ॐ सूत्रे च धार्येऽर्थे** ॥ सूत्रग्रहः । यस्तु सूत्रं केवलमुपादत्ते न तु धारयति तत्राणेव, सूत्रग्राहः ।

२९२४ । **वयसि च** ।३।२।१०। उद्यमनार्थं सूत्रम् । कवचहरः कुमारः ।

२९२५ । **आङि ताच्छील्ये** ।३।२।११। पुष्पाण्याहरति तच्छीलः पुष्पाहरः । ताच्छील्ये किम् । भारहारः ।

२९२६ । **अर्हः** ।३।२।१२। अर्हतेरच् स्यात्कर्मण्युपपदे । अणोऽपवादः । पूजार्हा ब्राह्मणी ।

२९२७ । **स्तम्बकर्णयो रमिजपोः** ।३।२।१३। **ॐ हस्तिसूचकयोरिति वक्तव्यम्** ॥ स्तम्बे रमते स्तम्बेरमो हस्ती । 'तत्पुरुषे कृति–'९७२ इति 'हलदन्तात्–' ९६८ इति वा ङेरलुक् । कर्णेजपः सूचकः ।

२९२८ । **शमि धातोः संज्ञायाम्** ।३।२।१४। शंभवः । शंवदः । पुनर्धातुग्रहणं बाधकविषयेऽपि प्रवृत्त्यर्थम् । कृञो हेत्वादिषु टो मा भूत् । शंकरा नाम परिव्राजिका तच्छीला ।

२९२९ । **अधिकरणे शेतेः** ।३।२।१५। खे शेते खशयः ॥ **ॐ पार्श्वादिषूपसंख्यानम्** ॥ पार्श्वाभ्यां शेते पार्श्वशयः । पृष्ठशयः । उदरेण शेते उदरशयः ॥ **ॐ उत्तानादिषु कर्तृषु** ॥ उत्तानः शेते उत्तानशयः । अवमूर्धशयः । अवनतो मूर्धा यस्य स अवमूर्धा । अधोमुखः शेते इत्यर्थः ॥ **ॐ गिरौ डश्छन्दसि** ॥ गिरौ शेते गिरिशः । कथं तर्हि–'गिरिशमुपचचार प्रत्यहं सा सुकेशी' इति ? गिरिरस्यास्तीति विग्रहे लोमादित्वात् १९०७ शः ।

२९३० । **चरेष्टः** ।३।२।१६। अधिकरणे उपपदे । कुरुचरः । कुरुचरी ।

२९३१ । **भिक्षासेनादायेषु च** ।३।२।१७। भिक्षां चरतीति भिक्षाचरः । सेनाचरः । 'आदाय' इति ल्यबन्तम्, आदायचरः । कथं–'प्रेक्ष्य स्थितां सहचरीम्' इति ? पचादिषु 'चरट्' इति पाठात् ।

२९३२ । **पुरोऽग्रतोऽग्रेषु सर्तेः** ।३।२।१८। पुरस्सरः । अग्रतस्सरः । अग्रमग्रेणाग्रे वा सरतीत्यग्रेसरः, सूत्रेऽग्रे इति एदन्तत्वमपि निपात्यते । कथं तर्हि–'यूथं तदग्रसरगर्वितकृष्णसारम्' इति ? बाहुलकादिति हरदत्तः ।

२९३३ । **पूर्वे कर्तरि** ।३।२।१९। कर्तृवाचिनि पूर्वशब्दे उपपदे सर्तेष्टः स्यात् । पूर्वः सरतीति पूर्वसरः । कर्तरि किम् । पूर्वं देशं सरतीति पूर्वसारः ।

२९३४ । **कृञो हेतुताच्छील्यानुलोम्येषु** ।३।

---

**इति** । पन्थानं प्रकर्षेण जानातीत्यर्थः ॥—**प्रादन्यस्मिन्निति** । प्रशब्दमात्रोपपदे अस्य सूत्रस्य चरितार्थत्वादुपसर्गान्तरे सति 'आतोऽनुपसर्ग–' इत्यनेनापि न भवतीति भावः ॥ **२९२१ गोसंख्य इति** । गाः संचष्टे इति विग्रहः, चक्षिङः ख्याञ् । 'ख्या प्रकथने' इत्यस्य तु संपूर्वस्य प्रयोगो नास्तीति न्यासकारः । सार्वधातुकमात्रविषयोऽसौ धातुरिति च मनोरमादौ स्थितम् ॥ **२९२२ गापोष्टक्** । इह गामादाग्रहणेष्वविशेषेऽपि गायतेरेव ग्रहणं न तु गाङ् गतौ गा स्तुतौ इत्यनयोः, अनभिधानात् ॥—**सामगः । सामगीति** । एतेन टकः कित्त्वमालोपार्थं, टित्त्वं तु ङीबर्थमिति ध्वनितम् । प्रत्ययाधिकाराट्टकः प्रत्ययत्वेन 'प्रत्ययः' 'परश्च' इति धातोः पर एव स्यादिति 'आद्यन्तौ टकितौ' इत्यस्यात्र आशङ्कैव नास्तीति बोध्यम् ॥—**सामसंगाय इति** । कर्मण्यणि सति 'आतो युक्–' इति युक् ॥—**पिबतेरिति** । 'लुग्विकरणालुग्विकरणयोः' इति परिभाषालब्धार्थकथनम्, उपपदपरिगणनं तु वाचनिकमेव ॥—**क्षीरपेति** । क्षीरं पिबति । 'आतोऽनुपसर्गे कः' ॥ **२९२३ शक्तीति** । घटग्रहणेनैव सिद्धे घटीग्रहणं लिङ्गविशिष्टपरिभाषाया अनित्यत्वज्ञापनार्थं, तेन मद्रराज्ञीत्यत्र टच् न, द्विषतीताप इत्यत्र 'द्विषत्परयोः–' इति खच् नेति दिक् ॥ **२९२४ कवचहर इति** । कवचोद्यमनं क्रियमाणं संभाव्यमानं वा वयो गमयति । तेनासत्यपि कवचग्रहणे कवचहर इति भवत्येव ॥ **२९२७ हस्तिसूचकयोरिति** । अन्यत्र—स्तम्बे रन्ता । कर्णे जपिता ॥ **२९२८ शमि धातोः**—। शमि उपपदे धातुमात्रात्संज्ञायामच् स्यात् ॥—**पुनर्धातुग्रहणमिति** । असति धातुग्रहणे 'शमि संज्ञायाम्' इत्यस्यावकाशः–शंभवः । शंवदः । 'कृञो हेतुताच्छील्य' इत्यस्यावकाशः—श्राद्धकरः । शंकर इत्यत्रोभयप्रसङ्गे परत्वाट्ट एव स्यात् । धातुग्रहणे कृते तु तत्सामर्थ्यादजेव भवति तदाह—**शंकरा नामेत्यादि** ॥ २९२९ अनधिकरणार्थमुपसंख्यानमिति दर्शयति—**पार्श्वाभ्यामित्यादिना** ॥ **२९३० कुरुचर इति** । कुरुषु देशेषु चरति=अटतीत्यर्थः ॥ **२९३१ भिक्षासेना**—। अनधिकरणार्थं आरम्भः ॥—**भिक्षां चरतीति** । चरतिरत्र चरणपूर्वके अर्जने वर्तते । चरणेन भिक्षामर्जयतीत्यर्थः । —**सेनाचर इति** । सेनां चरति=प्रविशतीत्यर्थः ॥—**पचादिष्विति** । टविधानं तु 'उपपदमतिङ्' इति नित्यसमासार्थम् । सहचरः, सहचरीत्यत्र तु सुप्सुपेति वैकल्पिकः समासः ॥ **२९३४ कृञो**—। हेतुरिह लौकिको न तु 'तत्प्रयोजको हेतुश्च'

२।२०। एषु द्योत्येषु करोतेष्टः स्यात् । 'अतः कृकमि-' १६० इति सः, यशस्करी विद्या । श्राद्धकरः । वचनकरः ।

२९३५ । **दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु** ।३।२।२१। एषु कृञष्टः स्याद् अहेत्वादावपि । दिवाकरः । विभाकरः । निशाकरः । कस्कादित्वात्सः, भास्करः । बहुकरः । बहुशब्दस्य वैपुल्यार्थं संख्यापेक्षया पृथग्ग्रहणम् । लिपिलिबिशब्दौ पर्यायौ । संख्या—एककरः । द्विकरः । कस्कादित्वात्-अहस्करः । 'नित्यं समासेऽनुत्तरपदस्थस्य' १५९ इति षत्वम्, धनुष्करः । अरुष्करः ॥ ॐ **किंयत्तद्बहुषु कृञोऽज्विधानम्**-इति वार्तिकम् । किंकरा । यत्करा । तत्करा । हेत्वादौ टं बाधित्वा परत्वादच् । पुंयोगे ङीष्, किंकरी ।

२९३६ । **कर्मणि भृतौ** ।३।२।२२। कर्मशब्दे उपपदे करोतेष्टः स्यात् । कर्मकरो भृतकः । कर्मकारोऽन्यः ।

२९३७ । **न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु** ।३।२।२३। एषु कृञष्टो न । हेत्वादिषु प्राप्तः प्रतिषिध्यते । शब्दकारः । इत्यादि ।

२९३८ । **स्तम्बशकृतोरिन्** ।३।२।२४। ॐ व्रीहिवत्सयोरिति वक्तव्यम् । स्तम्बकरिर्व्रीहिः । शकृत्करिर्वत्सः । व्रीहिवत्सयोः किम् । स्तम्बकारः । शकृत्कारः ।

२९३९ । **हरतेर्दृतिनाथयोः पशौ** ।३।२।२५। दृतिनाथयोरुपपदयोर्हृञ इन् स्यात्पशौ कर्तरि । दृतिं हरतीति दृतिहरिः । नाथं=नासारज्जुं हरतीति नाथहरिः । पशौ किम् । दृतिहारः । नाथहारः ।

२९४० । **फलेग्रहिरात्मम्भरिश्च** ।३।२।२६। फलानि गृह्णाति फलेग्रहिः, उपपदस्य एदन्तत्वं ग्रहेरिन्प्रत्ययश्च निपात्यते । आत्मानं बिभर्तीति—आत्मम्भरिः, आत्मनो मुमागमः, भृञ इन् । चात्—कुक्षिम्भरिः । चान्द्रास्तु 'आत्मोदरकुक्षिषु' इति पेठुः । 'ज्योत्स्नाकरम्भमुदरम्भरयश्चकोराः' इति मुरारिः ।

२९४१ । **एजेः खश्** ।३।२।२८। ण्यन्तादेजेः खश् स्यात् ।

२९४२ । **अरुर्द्विषदजन्तस्य मुम्** ।६।३।६७। अरुषो

---

इति कृत्रिमः, केवले कृञि तदसंभवात् ॥—**द्योत्येष्विति** । न तु वाच्येषु, 'कर्तरि कृत्' इत्यस्य बाधापत्तेरिति भावः । हेत्वादिषु क्रमेणोदाहरति—**यशस्करीत्यादि** । एषु किम् ? कुम्भकारः । इह प्रसिद्धतरत्वाद् द्व्यनुबन्धोऽपि करोतिरेव गृह्यते न तु कृञ् हिंसायामिति । **हेतुः**=कारणम् । **आनुलोम्यम्**=आराध्यचित्तानुवर्तनम् ॥ २९३५ **दिवाविभा**—। ननु अन्तकरशब्देन नञ्समासे स्वीकृतेऽपीष्टसिद्धौ सूत्रे त्वन्तशब्दात्पृथगनन्तग्रहणं व्यर्थमिति चेत् । अत्राहुः—स्वरे तु विशेषोऽस्ति । नञ्समासे हि अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तः स्यात्, अनन्तशब्दस्योपपदत्वे तु 'गतिकारकोपपदात्कृत्' इति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वमिति ॥—**दिवाकर इति** । दिवा=दिवसं करोतीति विग्रहः । दिवाभूता रात्रिरित्यादाविव दिवाशब्दस्य वृत्तिविषये शक्तिमत्परत्वात् । मूलानुक्तान्यपि कानिचिदुदाहरणानि ऊह्यानि—कर एव कारः । प्रज्ञादित्वादण्, कारं करोतीति कारकरः आदिकरः नान्दीकरः किंकरः बलिकरः भक्तिकरः कर्तृकरः चित्रकरः क्षेत्रकरः जङ्घाकरः बाहुकरः इति ॥ —**वार्तिकमिति** । कैयटहरदत्तादिरीत्योक्तम् । माधवस्तु इष्टिरियमित्याह ॥—**पुंयोगे ङीषिति** । यत्तु न्यासकृतोक्तं— 'हेत्वादिषु पूर्वसूत्रेण ट एव भवति, तेन 'किंकरणशीला किंकरी' इत्युपपन्नं भवति' इति । तन्नादर्तव्यम् । परत्वादचा टचो बाधितत्वात्, पूर्वविप्रतिषेधस्य निर्मूलत्वाच्चेति भावः । वृत्तौ तु **पक्षान्तरमप्युक्तम्**—अथवा पचादिषु पाठः करिष्यत इति । 'दिवाविभा—' इत्यस्मिन् सूत्रे किमादिग्रहणमपनीय पचादिष्वेव 'किंयत्तद्बहुषु कृञः' इति पठितव्यं, वार्तिकमपीत्थमेव नेयमिति । तस्याशयः । अस्मिन्पक्षे कर्मण्यणं बाधित्वा चरितार्थमिदं वचनं हेत्वादिविवक्षायां परत्वाट्टेन बाध्यते । तेन पुंयोगं विनापि किंकरी स्यादेव, पुंयोगविवक्षायां तु निर्विवादो ङीप्, किंयत्तद्बहुष्वज्वेति प्रक्रियायां विकल्पोक्तिस्त्वाकरविरुद्धत्वात् कर्मण्यणोऽपि पक्षे प्रसङ्गाच्चायुक्तैव । न चाजभावे 'दिवाविभा—' इति टः स्यादिति वाच्यम् । सूत्रे किमादिग्रहणापनयनस्य हरदत्तादिभिरुक्तत्वात् । **अथवा** सूत्रे किमाद्यपनयनं मास्त्विति प्रौढिवादेन प्रक्रियाग्रन्थः प्रवृत्त इति स्वीक्रियते । तथा च हेत्वाद्यविवक्षायां किंयत्तदिति वार्तिकेनाच्, तद्विवक्षायां तु परत्वाट्ट इति विषयविशेषे व्याख्याभेदात् फलितं विकल्पमाश्रित्य प्रक्रियायामज्वेति प्राचोक्तमिति स्थितस्य गतिः समर्थनीया ॥ २९३६ **कर्मणि भृतौ** । भृतिर्वेतनम् । कर्मानुवृत्तौ पुनः कर्मग्रहणात्स्वरूपपरतेत्याह—**कर्मशब्द इति** ॥ २९३८ **स्तम्बकरिरित्यादि** । इनो नित्त्वात् कृदुत्तरप्रकृतिस्वरेणोत्तरपदमाद्युदात्तम् ॥—**कुक्षिम्भरिरिति** । एवं च '**गिरिस्तु कनकाचलः, कति न सन्ति चाश्मव्रजाः ? किटिस्तु धरणीधरः, कति न सन्ति भूदारकाः ? । मरुत्तु मलयानिलः, कति न सन्ति झञ्झानिलाः ? प्रभुस्तु विबुधाश्रयः, कति न सन्ति कुक्षिम्भराः ?**' । इति केषांचित्प्रयोगः प्रामादिक एव ॥ २९४१ **एजेः खश्** । एजृ कम्पने । एजेरिति ण्यन्तस्य निर्देशो न तु शुद्धस्येका निर्देशः, खशः शित्करणाल्लिङ्गात् । तद्धि सार्वधातुकत्वे सति शप् यथा स्यादिति । न च शुद्धस्य शपि सत्यसति वा विशेषोऽस्ति । न चोत्तरार्थं शित्त्वमिति वाच्यम् । इहार्थवत्त्वे संभवति केवलोत्तरार्थत्वस्यान्याय्यत्वात् । तदेतदाह—**ण्यन्तादेजेरिति** ॥ २९४२ **अरुर्द्विषत्**—। वर्णग्रहणे तदन्तविधेः सिद्धावप्यन्तग्रहणं शुनिंधय इत्यादौ ह्रस्वे कृते मुमूप्रवृत्त्यर्थम् । तथा हि—अन्तःशब्दः-

द्विषतोऽजन्तस्य च मुमागमः स्यात् खिदन्ते उत्तरपदे, न त्वव्ययस्य । शित्त्वाच्छबादिः । जनमेजयतीति जनमेजयः ॥

❀ **वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः खश उपसंख्यानम्** ॥ वातमजा मृगाः ।

२९४३ । **खित्यनव्ययस्य** ।६।३।६६। खिदन्ते परे पूर्वपदस्य ह्रस्वः स्यात् । ततो मुम् । शुनिन्धयः । तिलन्तुदः । शर्धञ्जहा माषाः । शर्धोऽपानशब्दः तं जहाति इति विग्रहः । जहातिरन्तर्भावितण्यर्थः ।

२९४४ । **नासिकास्तनयोर्ध्माधेटोः** ।३।२।२९। अत्र वार्तिकम्—❀ **स्तने धेटो नासिकायां ध्मश्चेति वाच्यम्** । स्तनं धयतीति स्तनन्धयः । धेटष्टित्वात् स्तनन्धयी । नासिकन्धमः । नासिकन्धयः ।

२९४५ । **नाडीमुष्ट्योश्च** ।३।२।३०। एतयोरुपपदयोः कर्मणोर्ध्माधेटोः खश् स्यात् ॥ ❀ **यथासंख्यं नेष्यते** ॥ नाडिन्धमः । नाडिन्धयः । मुष्टिन्धमः । मुष्टिन्धयः ❀ ॥ **घटीखारीखरीषूपसंख्यानम्** ॥ घटिन्धमः । घटिन्धयः । इत्यादि । खारी=परिमाणविशेषः । खरी=गर्दभी ।

२९४६ । **उदि कूले रुजिवहोः** ।३।२।३१। उत्पूर्वाभ्यां रुजिवहिभ्यां कूले कर्मण्युपपदे खश् स्यात् । कूलमुद्रुजतीति कूलमुद्रुजः । कूलमुद्वहः ।

२९४७ । **वहाभ्रे लिहः** ।३।२।३२। वहः=स्कन्धः, तं लेढीति वहंलिहो गौः, अदादित्वाच्छपो लुक्, खशो ङित्वान्न गुणः । अभ्रंलिहो वायुः ।

२९४८ । **परिमाणे पचः** ।३।२।३३। प्रस्थम्पचा स्थाली । खारिम्पचः कटाहः ।

२९४९ । **मितनखे च** ।३।२।३४। मितम्पचा ब्राह्मणी । नखम्पचा यवागूः । पचिरत्र तापवाची ।

२९५० । **विध्वरुषोस्तुदः** ।३।२।३५। विधुन्तुदः । मुमि कृते संयोगान्तस्य लोपः, अरुन्तुदः ।

२९५१ । **असूर्यललाटयोर्दृशितपोः** ।३।२।३६। 'असूर्यम्' इत्यसमर्थसमासः, दृशिना नञः संबन्धात् । सूर्यं न पश्यन्तीति—असूर्यम्पश्या राजदाराः । ललाटन्तपः सूर्यः ।

२९५२ । **उग्रम्पश्येरम्मदपाणिन्धमाश्च** ।३।२।३७। एते निपात्यन्ते । 'उग्रम्' इति क्रियाविशेषणं, तस्मिन्नुपपदे दृशेः खश् । उग्रं पश्यतीति—उग्रम्पश्यः । इरा=उदकं, तेन माद्यति=दीप्यतेऽबिन्धनत्वादिति इरंमदो मेघज्योतिः । इह निपातनात् श्यन्न । पाणयो ध्मायन्तेऽस्मिन्निति पाणिंधमोऽध्वा । अन्धकाराद्यावृत इत्यर्थः । तत्र हि सर्पाद्यपनोदनाय पाणयो ध्मायन्ते ।

२९५३ । **प्रियवशे वदः खच्** ।३।२।३८। प्रियंवदः ।

---

समीपपरः, अच्चासावन्तश्चेति विग्रहः । निपातनाद्विशेषणस्य परनिपातः । 'अन्तः=समीपः 'खित्यनव्ययस्य' इति सूत्रेण विहितो योऽच् तदन्तस्य मुम्' इति व्याख्यायते । एवं च जनमेजय इत्यादौ स्वतो ह्रस्वेऽपि मुम्सिद्धये प्रथमं 'खिति—' इति ह्रस्वः प्रवर्तनीय इत्यवधेयम् ॥ **२९४३ शर्धजहा इति** । शर्धनं शर्धः । शृधु कुत्सायाम् । घञ्, तं जहति इति ॥ ननु माषाः शर्धमपानशब्दं त्याजयन्ति न तु स्वतो जहातीत्याशङ्कायामाह—**अन्तर्भावितण्यर्थ इति** । **२९४४** यथासंख्यं वारयितुमाह—**अत्रेति**— । —**धेटष्टित्वादिति** । अवयवे अचरितार्थत्वादिति भावः । खश्प्रत्ययान्तादेव धेटो ङीबिष्टो नान्यत इति वर्धमानक्षीरस्वामिहरदत्तादयः । तेन 'पाघ्राध्माधेट्—' इति शप्रत्यये 'आतोऽनुपसर्गे कः' इति कप्रत्यये च टाबेव । धया कन्या । गां धयतीति गोधा । अत्र च संप्रदाय एव शरणम् ॥—**नासिकंधम इति** । 'पाघ्राध्मा—' इति धमादेशः ॥ **२९४५ नाडीमुष्ट्योश्च** ॥—**यथासंख्यं नेति** । एतच्चेहैव सूत्रे भाष्ये वृत्तौ च स्थितम् । यत्तु 'यथासंख्यम्' इति सूत्रे नाडीमुष्ट्योरित्युदाहृतं भाष्ये, तत्प्राप्तिमात्राभिप्रायेणेत्येके । शब्दकौस्तुभे तु मतभेदेन तद्बोध्यमिति स्थितम् ॥—**घटीखारीखरीष्विति** । जयादित्यस्तु वातशब्दमप्युदाजहार—वातंधमः, वातंधयः इति । तत्तु भाष्यादौ न दृश्यत इति मूलेऽत्रोपेक्षितम् ॥ **२९४६ उदि कूले**—। ननु कूलस्येव उच्छब्दस्यापि सप्तम्यन्तत्वादुपपदत्वं स्यात्ततश्च रुजिवहिभ्यां सह यथासंख्यं स्यादिति चेत् । अत्राहुः—नाडीमुष्ट्योरितिवल्लाघवादुत्कूलयोरिति वक्तव्ये उदीति व्यस्तोच्चारणान्नोपपदम् । एवं च 'उदि' इति पञ्चम्याः स्थाने सप्तमी, रुजिवहोरिति तु पञ्चम्याः स्थाने षष्ठीति । एतच्च यथासंख्यसूत्रे कैयटे स्पष्टम् । किं च रुजेः सकर्मकत्वात्कर्मणीत्युपतिष्ठते, तेन कूलं विशेष्यते नोच्छब्दः, असत्त्ववाचित्वेनासंभवात् । तदेतदाह—**उत्पूर्वाभ्यामित्यादिना** ॥ **२९५० विधुन्तुद इति** । 'अरुर्द्विषदजन्तस्य' इत्युकारात्परो मुम् । 'तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः' इत्यमरः ॥—**अरुन्तुद इति** । 'अरुन्तुदं तु मर्मस्पृक्' इत्यमरः । 'व्रणोऽस्त्रियामीर्ममरुः' इति च ॥ **२९५१ असूर्यंपश्या इति** । 'पाघ्राध्मा—' इति पश्यादेशः । गुप्तिपरं चेदम् । एवं नाम राजदारा गुप्ताः—यदपरिहार्यदर्शनं सूर्यमपि न पश्यन्ति किं पुनः परपुरुषम् ? इति । तेन सत्यपि सूर्यदर्शने प्रयोगो न विरुध्यते । यदा तु सूर्याभावदर्शनमात्रं, सूर्येतरचन्द्रादेर्दर्शनं वा विवक्षितं तदा खश् न भवति, अनभिधानादिति न्यासकारादयः ॥ **२९५३ प्रियवशे वदः खच्** । खकारो मुमर्थः, चकारस्तु 'खचि ह्रस्वः' इति विशेषणार्थ इति **वृत्तिः** । 'खे ह्रस्वः' इत्युच्यमाने एजेः खशि जनमेजय इत्यत्रापि स्यादिति तदाशयः । 'एकानुबन्धग्रहणे द्व्यनुबन्धस्य न ग्रहणम्' इति खशि न भविष्यतीत्यादिना वृत्तिग्रन्थस्यायुक्तत्वमाहुः । खशि प्रकृते प्रत्ययान्तरकरणमुत्तरार्थम्—द्विषन्तप इत्यत्र ह्रस्वणिलोपौ यथा स्यातां शप च माभूदिति ॥ नन्वेवमुत्तरत्रैव क्रियतामिति चेत् । सत्यम् । इह करणमन्यतो-

वशंवदः ॥ ॐ **गमेः सुपि वाच्यः** ॥ असंज्ञार्थमिदम् । मितङ्गमो हस्ती ॥ ॐ **विहायसो विह इति वाच्यम्** । ॐ **खच्च डिद्वा वाच्यः** ॥ विहंगमः, विहङ्गः । भुजंगमः, भुजंगः ।

२९५४ । **द्विषत्परयोस्तापेः** ।३।२।३९। खच् स्यात् ।

२९५५ । **खचि ह्रस्वः** ।६।४।९४। खच्परे णौ उपधाया ह्रस्वः स्यात् । द्विषन्तं परं वा तापयतीति–द्विषंतपः । परंतपः । घटघटीग्रहणाल्लिङ्गविशिष्टपरिभाषा अनित्या । तेनेह न—द्विषतीं तापयतीति द्विषतीतापः ।

२९५६ । **वाचि यमो व्रते** ।३।२।४०। वाक्शब्दे उपपदे यमेः खच् स्यात् व्रते गम्ये ।

२९५७ । **वाचंयमपुरन्दरौ च** ।६।३।६९। वाक्पुरोरमन्तत्वं निपात्यते । वाचंयमो मौनव्रती । व्रते किम् । अशक्त्यादिना वाचं यच्छतीति वाग्यामः ।

२९५८ । **पूःसर्वयोर्दारिसहोः** ।३।२।४१। पुरं दारयतीति पुरन्दरः । सर्वंसहः । सहिग्रहणमसंज्ञार्थम् । 'भगे च दारेः' इति काशिका । बाहुलकेन लब्धमिदमित्याहुः । भगं दारयतीति भगन्दरः ।

२९५९ । **सर्वकूलाभ्रकरीषेषु कषः** ।३।२।४२। सर्वङ्कषः खलः । कूलङ्कषा नदी । अभ्रङ्कषो वायुः । करीषङ्कषा वात्या ।

२९६० । **मेघर्तिभयेषु कृञः** ।३।२।४३। मेघङ्करः । ऋतिङ्करः । भयङ्करः । भयशब्देन तदन्तविधिः, अभयङ्करः ।

२९६१ । **क्षेमप्रियमद्रेऽण् च** ।३।२।४४। एषु कृञोऽण् स्यात् । चात् खच् । क्षेमङ्करः, क्षेमकारः । प्रियङ्करः, प्रियकारः । मद्रङ्करः, मद्रकारः । 'वा' इति वाच्ये अण्ग्रहणं हेत्वादिषु टो मा भूदिति । कथं तर्हि–'अल्पारम्भाः क्षेमकराः' इति ? कर्मणः शेषत्वविवक्षायां पचाद्यच् ।

२९६२ । **आशिते भुवः करणभावयोः** ।३।२।४५। आशितशब्दे उपपदे भवतेः खच् । आशितो भवत्यनेनाशितम्भव ओदनः । आशितस्य भवनं आशितम्भवः ।

२९६३ । **संज्ञायां भृतृवृजिधारिसहितपिदमः** ।३।२।४६। विश्वं बिभर्तीति विश्वंभरः । विश्वंभरा । रथंतरं साम । इह रथेन तरतीति व्युत्पत्तिमात्रं, न त्ववयवार्थानुगमः । पतिंवरा कन्या । शत्रुंजयो हस्ती । युगंधरः पर्वतः । शत्रुंसहः । शत्रुंतपः । अरिंदमः । दमिः शमनार्थो, तेन सकर्मक इत्युक्तम् । मतान्तरे तु अन्तर्भावितण्यर्थोऽत्र दमिः ।

२९६४ । **गमश्च** ।३।२।४७। सुतंगमः ।

२९६५ । **अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः** ।३।२।४८। 'संज्ञायाम्' इति निवृत्तम् । एषु गमेर्डः स्यात् । डित्त्वसामर्थ्यादभस्यापि टेर्लोपः । अन्तं गच्छतीत्यन्तगः । इत्यादि ॥ ॐ **सर्वत्रपन्नयोरुपसंख्यानम्** ॥ सर्वत्रगः । पन्नं=पतितं गच्छतीति पन्नगः । पन्नमिति पद्यतेः क्तान्तं क्रियाविशेषणम् ॥ ॐ **उरसो लोपश्च** ॥ उरसा गच्छतीति–उरगः । ॐ **सुदुरोरधिकरणे** ॥ सुखेन गच्छत्यत्र सुगः । दुर्गः । ॐ **अन्यत्रापि दृश्यत इति वक्तव्यम्** । ग्रामगः । ॐ **डे च विहायसो विहादेशो वक्तव्यः** । विहगः ।

---

ऽपि क्वचित् भवतीति ज्ञापनार्थं, तेन 'गमेः सुपि–' इति नापूर्वं वार्तिकं किंतु ज्ञापकसिद्धमेव ॥—**असंज्ञार्थमिति** । संज्ञायां तु वक्ष्यमाणेन 'गमश्च' इति सूत्रेणैव सिद्धमिति भावः ॥—**विहंगम इति** । विहायसा आकाशेन गच्छतीति विग्रहः ॥ पूर्ववार्तिकेनैक्यमकृत्वा 'खच्च डिद्वा' इति पृथक्करणसामर्थ्यादन्यत्रापि क्वचिद्भवतीत्याशयेनोदाहरति—**भुजंगमः । भुजंग इति** । इह 'गमेः सुपि—' इति खच् ॥ **२९५५ द्विषंतप इति** । 'अरुर्द्विषत्—' इति मुमि कृते संयोगान्तलोपः ॥ **२९५६ वाचि यमो व्रते** ॥ **२९५७ निपात्यत इति** । न चैवं खच् प्रत्ययोऽप्यत्रैव निपात्यतामिति वाच्यम् । व्रतादन्यत्रापि प्रसङ्गात् । यदि तु निपातनबलादेव व्रतविषयता आश्रीयते, तत्रैव वा व्रतग्रहणं क्रियते—'वाचंयमो व्रते' 'पुरंदरश्च' इति तदा इह 'वाचि यमो व्रते' इति सूत्रं, 'पूःसर्वयोः–' इत्यत्र पुरिदारेरित्यंशश्च शक्यमकर्तुम् ॥ **२९५८ पूःसर्वयोः—** 'दॄ विदारणे' अयमेव गृह्यते न तु 'दॄ भये–दृङ् आदरे' इत्येताविति संप्रदायः ॥—**असंज्ञार्थमिति** । संज्ञायां तु 'संज्ञायां भृतृवृजि–' इति वक्ष्यमाणेन सिध्यतीति भावः ॥ **२९६२ आशितंभव इति** । यावता ओदनेन अतिथ्यादिर्भोजितो भवति स एवमुच्यते । इह वासरूपविधिना ल्युडपि, आशितभवनः, भावे–आशितभवनं । घञ् तु बाध्यत एव, सरूपत्वादित्याहुः । न चात्र क्त्ल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नेति ल्युटो निषेधः शङ्क्यः । यत्र हि घञादेर्बाधकत्वेन क्त्ल्युडादयः प्रसक्तास्तत्र नित्यं बाधो न तु विकल्पेनेति तस्यार्थः । इह तु ल्युटोऽपवादः खच् । अत्र वासरूपन्यायो निर्बाध एव । एतच्च आशितभवनमित्युदाहरतो जयादित्यस्यापि संमतमेवेति दिक् ॥ **२९६३ संज्ञायां भृतृ—**। 'विश्वंभरः कैटभजित्' । 'रसा विश्वंभरा स्थिरा' इत्यमरः ॥—**व्युत्पत्तिमात्रमिति** । तत्फलं तु स्वरावग्रहौ, 'रथंतरमाजभारा वसिष्ठः' इत्यत्र हि रथमित्यवगृह्णन्ति । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वं चाधीयते । अखण्डत्वे त्ववग्रहो न स्यान्नब्विषयस्येत्याद्युदात्तश्च स्यात् ॥—**इत्युक्तमिति** । माधवाद्यनुरोधेनेत्यर्थः ॥—**मतान्तरे त्विति** । हरदत्तादिमत इत्यर्थः । चित्तव्यापारोपरमः=शमः, इन्द्रियव्यापारोपरमस्तु=दम इत्यादि वेदान्तग्रन्थाश्चेहानुकूलाः । संज्ञायां किम् ? कुटुम्बं बिभर्तीति कुटुम्बंभारः ॥ **२९६४ गमश्च** । पूर्वसूत्र एव गमिर्नोक्तः, उत्तरसूत्रे गमेरेवानुवृत्तिर्यथा स्यात्, भृतृप्रभृतीनां माभूदिति ॥ **२९६५ सुदुरोरिति** ।

२९६६। **आशिषि हनः** ।३।२।४९। शत्रुं वध्याच्छत्रुहः। आशिषि किम्। शत्रुघातः॥ ॐ **दारावाहनोऽणन्तस्य च टः संज्ञायाम्**॥ दारुशब्दे उपपदे आङ्पूर्वाद्धन्तेरण् टकारश्चान्तादेशो वक्तव्य इत्यर्थः। दार्वाघाटः॥ ॐ **चारौ वा**॥ चार्वाघाटः, चार्वाघातः॥ ॐ **कर्मणि समि च**॥ कर्मण्युपपदे संपूर्वाद्धन्तेरुक्तं वेत्यर्थः। वर्णान्संहन्तीति वर्णसङ्घाटः। पदसङ्घाटः। वर्णसङ्घातः। पदसङ्घातः।

२९६७। **अपे क्लेशतमसोः** ।३।२।५०। अपपूर्वाद्धन्तेर्डः स्यात्। अनाशीरर्थमिदम्। क्लेशापहः पुत्रः। तमोपहः सूर्यः।

२९६८। **कुमारशीर्षयोर्णिनिः** ।३।२।५१। कुमारघाती। शिरसः शीर्षभावो निपात्यते, शीर्षघाती।

२९६९। **लक्षणे जायापत्योष्टक्** ।३।२।५२। हन्तेष्टक् स्याल्लक्षणवति कर्तरि। जायाघ्नो ना। पतिघ्नी स्त्री।

२९७०। **अमनुष्यकर्तृके च** ।३।२।५३। जायाघ्नस्तिलकालकः। पतिघ्नी पाणिरेखा। पित्तघ्नं घृतम्। अमनुष्येति किम्। आखुघातः शूद्रः। अथ कथं 'बलभद्रः प्रलम्बघ्नः' 'शत्रुघ्नः' 'कृतघ्नः' इत्यादि? मूलविभुजादित्वात्सिद्धम्। 'चोरघातो नगरघातो हस्ती' इति तु बाहुलकादणि।

२९७१। **शक्तौ हस्तिकपाटयोः** ।३।२।५४। हन्तेष्टक् स्यात् शक्तौ द्योत्यायाम्। मनुष्यकर्तृकार्थमिदम्। हस्तिघ्नो ना। कपाटघ्नश्चोरः। 'कवाट' इति पाठान्तरम्।

२९७२। **पाणिघताडघौ शिल्पिनि** ।३।२।५५। हन्तेष्टक् टिलोपो घत्वं च निपात्यते पाणिताडयोरुपपदयोः। पाणिघः। ताडघः। शिल्पिनि किम्। पाणिघातः। ताडघातः॥ ॐ **राजघ उपसंख्यानम्**॥ राजानं हन्ति राजघः।

२९७३। **आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्** ।३।२।५६। एषु च्व्यर्थेष्वच्व्यन्तेषु कर्मसूपपदेषु कृञः ख्युन् स्यात्। अनाढ्यमाढ्यं कुर्वन्त्यनेन आढ्यंकरणम्। अच्वौ किम्। आढ्यीकुर्वन्त्यनेन। प्रतिषेधसामर्थ्यात् इह ल्युडपि नेति काशिका। भाष्यमते तु ल्युट् स्यादेव। अच्वावित्युत्तरार्थम्।

२९७४। **कर्तरि भुवः खिष्णुच्खुकञौ** ।३।२।५७। आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु भवतेरेतौ स्तः। अनाढ्य आढ्यो भवतीति आढ्यंभविष्णुः। आढ्यंभावुकः।

'स्पृशोऽनुदके क्विन्' ४३२। घृतस्पृक्। कर्मणीति

---

कर्मणि तु 'ईषद्दुःसुषु–' इति खलेव। सुखेन गम्यत इति सुगमः पन्थाः। दुर्गमः॥ २९६६ **दाराविति**। शब्दापेक्षया पुंलिङ्गता, तदाह—**दारुशब्दे इति**। 'काष्ठं दार्विन्धनं त्वेधः' इत्यमरः। टविधानार्थमिदम्। अण् तु 'कर्मण्यण्' इत्येव सिद्धः। 'अलोऽन्त्यस्य' इत्येव सिद्धेऽन्तग्रहणं स्पष्टार्थम्। अन्यथा हि टः प्रत्ययः संभाव्येत॥ दार्वाऽऽहन्तीति दार्वाघाटः। गोधाकालकादार्वाघाटस्ते वनस्पतीनाम्॥ २९६८ **कुमारशीर्षयोर्णिनिः**। अनयोः कर्मणोरुपपदयोर्हन्तेर्णिनिः स्यात्। 'सुप्यजातौ–' इत्यादिभिः सिद्धे ताच्छील्यावश्यकाधमर्ण्यविरहेऽपि णिन्यर्थं, शिरसः शीर्षभावार्थं च वचनम्॥ २९६९ **लक्षणवतीति**। सूत्रे लक्षणशब्दोऽर्शआद्यजन्त इति भावः॥—**जायाघ्न इति**। जायामरणसूचकं पाणिरेखाविशेषादिकं यस्यास्ति स तां हन्तीति गौणो व्यवहारः। एवं पतिघ्नीत्यत्रापि बोध्यम्॥ २९७० **अमनुष्यकर्तृके च**। मनुष्यभिन्नकर्तृकेऽर्थे वर्तमानाद्धन्तेः कर्मण्युपपदे टक्। यद्यप्यमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाहेति प्रागुक्तं, तथापीह लक्ष्यानुरोधेन व्याख्यातव्यमित्याशयेनाह—**तिलकालक इत्यादि**। नानुबन्धकृतमसारूप्यमिति टगणोः सारूप्याद्वासरूपविध्यप्रवृत्तेराह—**बाहुलकादिति**॥ २९७१ **शक्तौ हस्ति–**। शक्तौ किम्? विषेण हस्तिनं हन्तीति हस्तिघातः। यद्यपीह शक्तिरस्ति, अशक्तस्य कर्तृत्वानुपपत्तेः। तथापि शक्तिग्रहणसामर्थ्यादत्युत्कर्षो विज्ञायते, तेन स्वबलेनैव हन्तुं या शक्तिः सा गृह्यते॥—**कपाटघ्न इति**। कं शिरः पाटयति प्रविशत इति कपाटम्। पाठान्तरे तु अटतेः पचाद्यच्। 'कवं चोष्णे' इत्यत्र योगविभागात्कोः कवादेश इति हरदत्तः॥ २९७३ **आढ्यसुभग—**॥—**च्व्यर्थेष्विति**। अभूततद्भावविषयेष्वित्यर्थः॥—**आढ्यंकरणमिति**। लिङ्गविशिष्टपरिभाषया आढ्यशब्देऽप्युपपदे यदा ख्युन् तदापि 'खित्यनव्ययस्य' इति ह्रस्वेन एतदेव रूपम्॥—**आढ्यीकुर्वन्त्यनेनेति**। न चेह ख्युनोऽभावेऽपि 'करणाधिकरणयोश्च' इति ल्युटा भवितव्यम्–इत्यत आह—**प्रतिषेधसामर्थ्यादिति**। तथाहि—आढ्यीकरणमिति रूपं ल्युट्ख्युनोस्तुल्यम्। न च ख्युनि मुमूह्रस्वौ स्यातामिति वाच्यम्। अनव्ययस्येति पर्युदासात्। 'ऊर्यादिच्विडाचश्च' इति निपातसंज्ञात्वेन च्व्यन्तस्य अव्ययत्वात्। न च ख्युनि सति 'उपपदमतिङ्' इति नित्यसमासो लभ्यते, ल्युटि तु नेति वाच्यम्। ल्युट्यपि गतिसमासस्य संभवात्। तस्यापि नित्यसमासत्वात्। न च स्त्रीप्रत्यये विशेषः, ल्युटि 'टिड्ढा–' इति सूत्रेण, ख्युनि तत्रत्येन ख्युन उपसंख्यानेन च ङीपस्तुल्यत्वात्। नापि स्वरे विशेषः, ल्युटि लित्स्वरेण, ख्युनि नित्स्वरेण कृञ उदात्तत्वाविशेषात्। न चोत्तरार्थमच्वावित्युक्तमिति वाच्यम्। केवलोत्तरार्थत्वेन हि तत्रैव ब्रूयात्। तदेतदुक्तम्—**इह ल्युडपि नेति**॥—**भाष्यमते त्विति**। भाष्यवार्तिकस्वरसेन ल्युडिष्ट इति केवलोत्तरार्थत्वं लभ्यते। अतस्तद्विरोधात् वृत्तिकृन्मतमयुक्तमिति कैयटः॥ २९७४ **कर्तरि भुवः**॥—**अच्व्यन्तेष्विति**। अच्वावित्यनुवर्तते। अन्यथा आढ्यीभविष्णुः आढ्यीभावुक इति स्यादिति भावः। कर्तृग्रहणं करणानुवृत्तिभ्रमनिरासार्थम्, उत्तरार्थं चेति प्राञ्चः। वस्तुतस्तु व्यर्थमेव, अस्वरितत्वादेवाननुवृत्तिसिद्धेः, उत्तरत्राप्युपयोगो नेति स्पष्टीकरिष्यमाणत्वाच्च। खकारो मुमर्थः। चकारः 'चितः'

निवृत्तम् । मन्त्रेण स्पृशतीति मन्त्रस्पृक् ।

'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च' ३७३ । व्याख्यातम् ।

'त्यदादिषु दृशोऽनालोचने कञ्च' ४२९ । ॐ **समानान्ययोश्चेति वाच्यम्** । सदृक् । सदृशः । अन्यादृक् । अन्यादृशः । ॐ **क्सोऽपि वाच्यः** । तादृक्षः । सदृक्षः । अन्यादृक्षः ।

२९७५ । **सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्** ।३।२।६१। एभ्यः क्विप्स्यादुपसर्गे सत्यसति च सुप्युपपदे । द्युसत् । उपनिषत् । अण्डसूः । प्रसूः । मित्रद्विट् । प्रद्विट् । मित्रध्रुक् । प्रध्रुक् । गोधुक् । प्रधुक् । अश्वयुक् । प्रयुक् । वेदवित् । निवित् । इत्यादि । ॐ **अग्रग्रामाभ्यां नयतेर्णो वाच्यः** । अग्रणीः । ग्रामणीः ।

२९७६ । **भजो ण्विः** ।३।२।६२। सुप्युपसर्गे चोपपदे भजेर्ण्विः स्यात् । अंशभाक् । प्रभाक् ।

२९७७ । **अदोऽनन्ने** ।३।२।६८। विट् स्यात् । आममत्ति आमात् । सस्यात् । अनन्ने किम् । अन्नादः ।

२९७८ । **क्रव्ये च** ।३।२।६९। अदेर्विट् । पूर्वेण सिद्धे वचनमण्बाधनार्थम् । क्रव्यात्=आममांसभक्षकः । कथं तर्हि 'क्रव्यादोऽस्रप आशरः' इति ? पक्वमांसशब्दे उपपदेऽण्, उपपदस्य क्रव्यादेशः पृषोदरादित्वात् ।

२९७९ । **दुहः कब्घश्च** ।३।२।७०। कामदुघा ।

२९८० । **अन्येभ्योऽपि दृश्यन्ते** ।३।२।७५। छन्दसीति निवृत्तम् । मनिन् क्वनिप् वनिप् विच् एते प्रत्यया धातोः स्युः ।

२९८१ । **नेड्वशि कृति** ।७।२।८। वशादेः कृत इण्न स्यात् । शॄ, सुशर्मा । प्रातरित्वा ।

२९८२ । **विड्वनोरनुनासिकस्यात्** ।६।४।४१। अनुनासिकस्य आत्स्यात् । विजायत इति विजावा । ओणृ, अवावा । विच्—रोट् । रेट् । सुगण् ।

२९८३ । **क्विप् च** ।३।२।७६। अयमपि दृश्यते । 'सत्सूद्विष-' २९७५ इति त्वस्यैव प्रपञ्चः । उखास्रत् । पर्णध्वत् । वाहभ्रट् ।

२९८४ । **अन्तः** ।८।४।२०। पदान्तस्यानितेर्नस्य णत्वं

---

इत्यन्तोदात्तार्थः । ञकारो वृद्ध्यर्थः । **स्यादेतत्**—खिष्णुच इकारो मास्तु 'ख्नुः' इत्येवोच्यताम्, एवं चकारोऽपि न कर्तव्यः, प्रत्ययस्वरेणैवाभिमतसिद्धेः, इकारादित्वसिद्धये इडागमे कृतेऽपि 'आगमा अनुदात्ताः' इति तस्यानुदात्तत्वात् । न च 'कृत्योकेष्णुच्चार्वादयश्च' इति स्वरसूत्रे अस्य ग्रहणं न स्यात्, चकारानुबन्धाभावात्; इकारस्य लाक्षणिकत्वात्षत्वणत्वयोरसिद्धत्वेनेष्णु इति रूपाभावाच्चेति वाच्यम् । कृतेऽपि इकारे 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य' इति परिभाषया 'अलंकृञ्–' आदि 'इष्णुचः' एव ग्रहणं स्यान्न त्वेतस्य । इकारोच्चारणसामर्थ्यादस्यापि ग्रहणमिति चेत् हन्त ! एवं 'ख्स्नुच्' अयमस्तु, तत्रेटि कृते चकारानुबन्धसामर्थ्यादस्यापि ग्रहणमस्त्विति किमिकारेण ? इति **चिन्त्यमेतत्** । न चेह लाघवाभावादिकारोऽस्तु चकार एव मास्त्विति शङ्क्यम् । एकमात्रो ह्रस्वः व्यञ्जनं त्वर्धमात्रकमिति सर्वसंमतत्वात् ॥ यत्तु **हरदत्तेनोक्तं**—षत्वणत्वयोः सामर्थ्यादस्य ग्रहणमिति । तदापाततः । स्नुजपेक्षया ष्णुजुक्तौ प्रत्युत प्रक्रियालाघवेन षत्वणत्वयोः करणस्योचिततया सामर्थ्यायोगादिति दिक् ॥—**निवृत्तमिति** । ननु स्पृशेः सकर्मकत्वात्कर्मण्युपपद इत्येव प्राप्येत इति चेत् । अत्र **प्राञ्चः**—पूर्वसूत्रात्कर्तरि इत्यनुवर्तते । सा चानुवृत्तिः 'कर्तरि कृत्' इत्यनेनैव कर्तरि क्विनः सिद्धत्वाद्व्यर्था सती कर्तृप्रचयार्था, कर्मण्युपपदे एकः कर्ता, करणादौ चापरः, इत्येवं कर्तृप्रचयः, तथा च 'सुबन्ते उपपदे' इति फलितं भवतीति मन्त्रस्पृगित्याद्यपि सिद्धमिति । वस्तुतस्तु कर्तृग्रहणं व्यर्थमिति पूर्वसूत्र एवोक्तम् । न चेह कर्तृप्रचयार्थं तदावश्यकमिति शङ्क्यम् । मन्त्रस्पृगित्यादेः क्विपाऽपि सिद्धेः । न च क्विपि कुत्वं न स्यादिति वाच्यम् । क्विन्प्रत्ययो यस्मादिति बहुव्रीहिबलादेव कुत्वसंभवादिति दिक् ॥—**सदृगिति** । तमिवेमं पश्यन्ति जनाः स इवायं पश्यति=ज्ञानविषयो भवतीति व्युत्पत्त्या कर्मकर्तरि प्रत्ययः, रूढ्यर्थानुगुणत्वात् ॥ **२९७५ सत्सूद्विष-।** षद्लृ विशरणादौ । 'सू' इति द्विषा [illegible] ग्रहणं न तु सुवतिसूयत्योः । युजिर् योगे, युज समाधौ, द्वयोरपि ग्रहणम् । विद ज्ञाने, विद विचारणे, विद सत्तायां, त्रयाणामपि ग्रहणम् । विद्लृ लाभे इत्यस्य तु न ग्रहणम्, विदेर्लृकारस्य विवक्षितत्वात् ॥—**द्युसदिति** । 'पूर्वपदात्–' इति षत्वं तु न भवति, छन्दसीत्यनुवृत्तेः । तथा च माघः—'मनस्सु येन द्युसदां न्यधीयत' इति । 'आदितेया दिविषदः' इत्यत्र तु सुषामादित्वात्षत्वमिति माधवादयः ॥ **उपनिषदिति ।** अत्र तु 'सदिरप्रतेः' इति षः ॥—**अग्रग्रामाभ्यामिति** । 'स एषां ग्रामणीः' इति निर्देशेन ज्ञापितमेतत् । नीरूपप्रत्ययविषयं चेदं, तेन कर्मण्यणि णत्वं न भवति–ग्रामनायः । ज्ञापकस्य सामान्यविषयत्वात् अग्रशब्दोपपदादपि णत्वं, तेनाग्रणीरित्यपि सिद्धमित्याहुः ॥ **२९७७ अदोऽनन्ने** ॥—**विट् स्यादिति** । 'जनसनखनक्रमगमो विट्' इति पूर्वसूत्रानुवृत्तेः । पूर्वसूत्रं त्विह नोपन्यस्तम्, तत्र हि 'छन्दसि सहः' इत्यतः छन्दसीत्यनुवर्तनात् ॥ **२९७९ कामदुघेति** । धेनुरिति शेषः । कामं दोग्धीति विग्रहः ॥ **२९८० अन्येभ्योऽपि दृश्यन्ते** । इह 'विजुपे छन्दसि' इत्यतो विच् प्रत्ययः, 'आतो मनिन्–' इति सूत्रान्मनिनादयश्चानुवर्तन्ते तदाह—**मनिन्क्वनिबित्यादि** ॥ **२९८१ सुशर्मेति ।** सुष्ठु शृणातीति विग्रहः । प्रातः एतीति प्रातरित्वा, इणः क्वनिपि 'ह्रस्वस्य पिति–' इति तुक् ॥ **२९८२ अवावेति** । अनुनासिकस्य आत्वे अवादेशः । सौ दीर्घनलोपौ ॥ —**रोट् रेडिति** । 'रुष रिष हिंसायाम्' उपधागुणः, जश्त्वचर्त्वे ॥—**वाहभ्रडिति** । वाहादश्वात् भ्रश्यतीति विग्रहः । वृत्तौ तु वहाभ्रडिति पाठः । वहः=स्कन्धः 'अन्येषामपि दृश्यते' इति पूर्वपदान्तस्य दीर्घ इति हरदत्तः ॥ **२९८४ अन्तः** । अनि-

स्यादुपसर्गस्थान्निमित्तात्परश्चेत् । हे प्राण् । 'शास इत्-' २४८६ इतीत्वम्, मित्राणि शास्ति मित्रशीः । ॐ आशासः क्वावुपधाया इत्वं वाच्यम् । आशीः । इत्वोत्वे-गीः, पूः ।

२९८५ । **हस्वत्रन्किषु च** ।६।४।९७। एषु छादेर्ह्रस्वः स्यात् । तनुच्छत् । 'अनुनासिकस्य क्वि-' २६६६ इति दीर्घः, 'मो नो धातोः' ३४१, प्रतान् । प्रशान् । 'च्छ्वोः' २५६१ इत्यूठ्, अक्षद्यूः । 'ज्वरत्वर' २६५४ इत्यूठ्, जूः । जूरौ । जूरः । तूः । स्रूः । ऊः, वृद्धिः, जनानवतीति जनौः । जनावौ । जनावः । मूः । मुवौ । मुवः । सुमूः । सुम्वौ । सुम्वः । 'राल्लोपः' २६५५, मुर्च्छा, मूः । मुरौ । मुरः । धुर्वी, धूः ।

२९८६ । **गमः क्वौ** ।६।४।४०। अनुनासिकलोपः स्यात् । अङ्गत् । ॐ **गमादीनामिति वक्तव्यम्** । परीतत् । संयत् । सुनत् । ॐ **ऊङ् च गमादीनामिति वक्तव्यम्** । **लोपश्च** । अग्रेगूः । अग्रेभ्रूः ।

२९८७ । **स्थः क च** ।३।२।७७। चात् क्विप् । शंस्थः । शंस्थाः । 'शमि धातोः-' २९२८ इत्यचं बाधितुं सूत्रम् ।

२९८८ । **सुप्यजातौ णिनिस्ताच्छील्ये** ।३।२।७८। अजात्यर्थे सुपि धातोर्णिनिः स्यात्ताच्छील्ये द्योत्ये । उष्णभोजी । शीतभोजी । अजातौ किम् । ब्राह्मणान् आमन्त्रयिता । ताच्छील्ये किम् । उष्णं भुङ्क्ते कदाचित् । इह वृत्तिकारेणोपसर्गभिन्न एव सुपि णिनिरिति व्याख्याय 'उत्प्रतिभ्यामाङि सर्तेरुपसंख्यानम्' इति पठितम् । हरदत्तमाधवादिभिश्च तदेवानुसृतम् । एतच्च भाष्यविरोधादुपेक्ष्यम् ।

---

तेरिति वर्तते, अन्तश्चोत्तरपदापेक्षो गृह्यते नानितेरपेक्षया, अव्यभिचारादत आह—**पदान्तस्येति**—॥—**हे प्राणिति** । अन प्राणने क्विप्, 'अनुनासिकस्य-' इति दीर्घः । 'न ङिसंबुद्ध्योः' इति नलोपनिषेधः । अन्यत्र तु नलोपेन भाव्यमिति संबुद्ध्यन्तमुदाहृतम् ॥—**मित्रशीरिति** । लुप्तेऽपि क्विप्प्रत्यये प्रत्ययलक्षणन्यायेन हलादिकित्प्रत्ययपरत्वमस्ति, वर्णाश्रये नास्ति प्रत्ययलक्षणमित्येतद्वर्णप्राधान्य एवेत्युक्तत्वादिति भावः ॥—**आशास इति** । शासु अनुशिष्टौ, 'आङः शासु इच्छायाम्' आत्मनेपदी । 'शास इत्-' इत्यादिना सिद्धे 'क्वावेव उपधाया इत्वम्' इति नियमार्थमिदम् । तेन 'आशास्ते' इति सिद्धमित्येके । **अन्ये तु**—विध्यर्थमेवेदं न नियमार्थं, प्राप्त्यभावात् । न च 'शास इदङ्हलोः' इति इत्वस्य प्राप्तिरस्तीति वाच्यम् । तत्र अङ्साहचर्यात्परस्मैपदिन एव शासेर्ग्रहणात् । यद्यपि 'सर्तिशास्ति-' इति सूत्रे पृथग्योगकरणादर्तेर्लुङि 'आरत्-समारत' इति पदद्वयेऽप्यङिति सिद्धान्तः, तथाप्युत्तरार्थतया परस्मैपदग्रहणानुवृत्तेरप्याकरे स्पष्टतया परस्मैपदे दृष्टो यः शासिस्तस्मात्परस्याङिति निष्कर्षः । तथा च 'आशास्ते' इत्यत्र इत्वप्रसक्तिरेव नास्तीत्याहुः । वस्तुतस्तु 'आशिषि लिङ्लोटौ', 'क्षियाशीःप्रैषेषु' इत्यादिनिर्देशेनैव सिद्धमिति नेदमपूर्वं वार्तिकम् । ततश्च 'इत्वं वाच्यम्' इत्यस्य इत्वं व्याख्येयमित्यर्थः, आशिषीत्याद्युक्तनिर्देशादिति दिक् ॥ २९८५ **सुम्वाविति** । 'ओः सुपि' इति यण् ॥ २९८७ **स्थः क च** ॥—**शंस्था इति** । क्विपि लुप्ते 'घुमास्था-' इति ईत्वं न, स्थानिवद्भावस्य अनल्विधाविति निषेधात् । प्रत्ययलक्षणसूत्रं तु प्रत्ययस्यासाधारणरूपं यत्राश्रीयते तत्रैवेति नियमार्थमिति निष्कर्षात् । यत्तु **कैयटेनोक्तम्**—'ईत्वमवकारादौ' इति वचनात् भाष्यकारीयोदाहरणप्रामाण्याद्वा प्रत्ययलक्षणेन ईत्वं नेति-तत् अतृणेडित्यादिसिद्धये प्रत्ययप्राधान्ये अल्विध्यर्थं प्रत्ययलक्षणसूत्रमिति पक्षमभिप्रेत्य । तत्रापि 'अवकारादौ' इति वचनस्वीकारे सुधीवेति न सिध्येदित्यपरितोषेण पक्षान्तरस्वीकार इति बोध्यम् ॥ ननु नियमार्थमिति निष्कर्षपक्षे तु प्रागुक्तमित्रशीरित्यत्र कथमित्वं भवेदिति चेत्, **अत्राहुः**—'**शासः इत्**'-क्ङिति । ततः-**अङि**, नियमार्थमिदम्-'अजादौ चेदित्वं स्यादङ्येव नान्यत्र' इति हल्ग्रहणं मास्त्विति ज्ञेयमिति । न चैवमपि हलादौ पिति सार्वधातुके तृणह इमो विधानात् 'अतृणेट्' इत्यादि तु नियमपक्षे न सिध्यतीति 'अल्विध्यर्थम्' इति पक्षोऽपि स्वीकार्य इति वाच्यम् । 'उतो वृद्धिः-' इति सूत्राद्धल्ग्रहणमननुवर्त्य तृणहानीत्यत्रानिष्टवारणाय 'नाभ्यस्तस्याचि-' इति सूत्रादचि नेत्यनुवर्त्य व्याख्यानात् । एतच्च रुधादिगण एव व्याख्यातम् । **स्यादेतत्**—'सुपि स्थः' 'क्विप् च' इति सूत्राभ्यां कक्विपौ सिद्धौ, तत्राह—**शमीत्यादि** । धातुग्रहणसामर्थ्याद्धि धातुमात्राद्भवन् अच्प्रत्ययो हेत्वादिषु कृनष्टं यथा बाधते तथा तिष्ठतेः कक्विपावपि बाधेतेति 'स्थः क च' इत्यारम्भ इति भावः ॥ नन्वेवं 'शमि धातोः-' इत्यस्यानन्तरं 'स्थः क च' इति सूत्र्यताम् । चकारेणाचि समुच्चिते सवर्णदीर्घेण 'शंस्थाः' इति भविष्यति । एवं चोत्सर्गापवादयोः समानदेशतया संदर्भशुद्धिरपि लभ्यते, ईत्वाभावार्थं च न यतनीयमिति महल्लाघवमिति चेत् । **अत्राहुः**—'अशंस्थाः' इत्यत्र 'अच्कावशक्तौ' इति सूत्रेणोत्तरपदमन्तोदात्तं स्यात्, 'कृद्ग्रहणे गतिकारकपूर्वस्यापि' इति शंस्थाशब्दस्याजन्तत्वात् । क्विबन्तेन नञ्समासे तु नञ्पूर्वपदप्रकृतिस्वरः सिध्यतीति ॥ २९८८ **उष्णभोजीति** । उष्णं भोक्तुं शीलमस्य ॥—**आमन्त्रयितेति** । 'मत्रि गुप्तपरिभाषणे' चुरादिराङ्पूर्वः, इदित्त्वान्नुम्, ताच्छील्यस्य विवक्षितत्वात्तृन् । अत एव 'न लोक-' इति निषेधात् 'ब्राह्मणान्' इत्यत्र कर्मणि षष्ठी न कृता ॥—**उपसर्गभिन्न एवेति** । 'सत्सूद्विष-' इति सूत्रे उपसर्गेऽपीत्युक्तत्वात् उपसर्गभिन्नस्य च सुपो लाभायास्मिन्सूत्रे पुनः सुप्ग्रहणं कृतमिति भावः ॥—**भाष्यविरोधादिति** । उक्तं च **भाष्ये**—'सुपीति वर्तमाने पुनः सुब्ग्रहणं किमर्थम् ? अनुपसर्ग इत्येवं तदभूत्, इदं सुप्मात्रे यथा स्यात्—उदासारिण्यः प्रत्यासारिण्यः' इति । अस्यायमाशयः—'सत्सूद्विष-' इति सूत्रे 'सुपि स्थः' इत्यतः सुपीत्यनुवर्तते, तच्च उपसर्गेतरपरम्, उपसर्गेऽपीति पृथगुक्तेः । तदिहानुवर्तमानमर्थाधिकारादुपसर्गेतरपरमेव स्यादिति । निष्कर्षे तु—मा भूदिह सुब्वचनग्रहणम् ।

क्ष्यम् । प्रसिद्धश्चोपसर्गेऽपि णिनिः—'स बभूवोपजीविनाम्' 'अनुयायिवर्गः' 'पतत्यधो धाम विसारि' 'न वञ्चनीयाः प्रभवोऽनुजीविभिः' इत्यादौ । ❀ **साधुकारिण्युपसंख्यानम्** । ❀ **ब्रह्मणि वदः** । अताच्छील्यार्थं वार्तिकद्वयम् । (साधुकारी) । साधुदायी । ब्रह्मवादी ।

२९८९ । **कर्तर्युपमाने** ।३।२।७९। णिनिः स्यात् । उपपदार्थः कर्ता प्रत्ययार्थस्य कर्तुरुपमानम् । उष्ट्र इव क्रोशति उष्ट्रक्रोशी । ध्वाङ्क्षरावी । अताच्छील्यार्थं जात्यर्थं च सूत्रम् । कर्तरि किम् । अपूपानिव भक्षयति माषान् । उपमाने किम् । उष्ट्रः क्रोशति ।

२९९० । **व्रते** ।३।२।८०। णिनिः स्यात् । स्थण्डिलशायी ।

२९९१ । **बहुलमाभीक्ष्ण्ये** ।३।२।८१। पौनःपुन्ये द्योत्ये सुप्युपपदे णिनिः । क्षीरपायिण उशीनराः ।

२९९२ । **मनः** ।३।२।८२। सुपि मन्यतेर्णिनिः स्यात् । दर्शनीयमानी ।

२९९३ । **आत्ममाने खश्च** ।३।२।८३। स्वकर्मके मनने वर्तमानान्मन्यतेः सुपि खश् स्यात् । चाण्णिनिः । पण्डितमात्मानं मन्यते—पण्डितंमन्यः । पण्डितमानी । 'खित्यनव्ययस्य' २९४३, कालिंमन्या । अनव्ययस्य किम् । दिवामन्या ।

२९९४ । **इच एकाचोऽम्प्रत्ययवच्च** ।६।३।६८। इजन्तादेकाचोऽम् स्यात्स च स्वाद्यम्वत्खिदन्ते परे । 'औतोऽम्शसोः' २८५, गांमन्यः । 'वाऽम्शसोः' ३०२, स्त्रियंमन्यः । स्त्रींमन्यः । नॄ, नरंमन्यः । भुवंमन्यः । श्रियमात्मानं मन्यते श्रिमन्यं कुलम् । भाष्यकारवचनात् श्रीशब्दस्य ह्रस्वो मुममोरभावश्च ।

---

उपसर्गेऽपीत्यंशस्याप्यनुवृत्त्या निर्वाहात् । सर्वथापि 'सुब्मात्रे उपपदे णिनिः, न त्वनुपसर्ग एव' इति सिद्धान्तः । एतच्च शब्दकौस्तुभे स्पष्टम् ॥—**प्रसिद्धश्चेति** । एवं च 'पाणिनीयानुसारिणीम्' इति प्रक्रियाकारप्रयोगोऽपि निर्बाध एव । अमरश्च प्रायुङ्क्त—'लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः' इति दिक् ॥—**साधुकारिणीति** । एतच्च ज्ञापकसिद्धम् । 'आ क्वेः—' इति सूत्रे हि तच्छीलात्पृथक् साधुकारी गृह्यते, तच्च ताच्छील्यं विनापि णिनौ सत्येव संगच्छते ॥ ❀ **ब्रह्मणि वद इति** । इदं तु वाचनिकमेव ॥—**अताच्छील्यार्थमिति** । एतच्च कैयटहरदत्तादिग्रन्थे स्पष्टम् । यत्तु **भट्टवार्तिके**—ब्रह्मवादिशब्दस्य तच्छीलतद्धर्मतत्साधुकारिपरतया व्याख्यानं कृतम् । 'आ क्वेः' इत्यधिकारे तु ब्रह्मणि वदेर्णिनिविधायकं वचनं नास्त्येवेति कथमिदं संगच्छेत ? इति चेत् । **अत्राहुः**—भट्टपादानामयमाशयः—'सुप्यजातौ—' इति सूत्रेण ताच्छील्ये णिनिः । उपसंख्यानेन ज्ञापकेन वा साधुकारिणि णिनिः । 'आवश्यकाधमर्ण्ययोर्णिनिः' इत्यावश्यके णिनिस्तु तद्धर्मे पर्यवस्यति, न त्विह 'आ क्वेः—' इति सूत्रस्य व्यापारोऽस्तीति ॥ ननु 'ब्रह्मवादिनो वदन्ति' इत्यत्र ब्रह्म=वेद इति ब्रह्मशब्दस्यापि जातिवाचकत्वात्कथमिह ताच्छील्ये णिनिरिति समर्थनम् ? इति चेत् । **अत्र नव्याः**—'सुप्यजातौ—' इत्यत्र प्राणिजातिरेव पर्युदस्यते, ताच्छील्यसमभिव्याहारात्, ब्राह्मणानामन्त्रयितेति प्रत्युदाहरणानुगुण्याच्चेति न काऽप्यनुपपत्तिरिति ॥ **२९९२ मनः** । बहुलग्रहणानुवृत्तेरिह 'मन ज्ञाने' इति दैवादिकस्यैव ग्रहणं न तु 'मनु अवबोधने' इति तानादिकस्य । तेन उत्तरसूत्रे खशि श्यनेव भवति न तु 'उ'प्रत्ययस्तदाह—**मन्यतेरिति** ॥ **२९९३ आत्ममाने**— । मननं मानः, भावे घञ्, आत्मनो मान इति कर्मणि षष्ठ्या समासः । स्वपर्याय आत्मशब्दः, प्रत्ययार्थत्वेन सन्निहितः कर्ता स्वपदार्थस्तदाह—**स्वकर्मक इत्यादि** ॥—**चादिति** । ननु वासरूपविधिना लभ्यत एव णिनिरिति किमर्थश्चकार इति चेत् । **अत्राहुः**—चकारेणाविच्छेदाय णिनिः समुच्चीयते । तेन 'करणे यजः' इत्यादौ णिनिरेवानुवर्तते न तु खश्, एवं चोक्तप्रयोजनानुरोधेन चानुकृष्टं नोत्तरत्रेतीह न प्रवर्तते—**इति** ॥—**पण्डितमात्मानमिति** । एकस्याप्यात्मनः स्वरूपेण कर्तृत्वं, पण्डितत्वविशिष्टरूपेण च कर्मत्वं बोध्यम् । आत्ममाने किम् ? दर्शनीयमानी देवदत्तो यज्ञदत्तस्य ॥—**कालिंमन्येति** । 'स्त्रियाः पुंवत्—' इति प्राप्तं पुंवद्भावं बाधित्वा परत्वात् ह्रस्वः । यत्त्वत्र 'क्यङ्मानिनोः—' इति प्राप्तः पुंवद्भाव इति प्रसादकृतोक्तं । तद्भ्रमोक्तमेव, [illegible] स्पष्टत्वात् ॥—**दिवामन्येति** । [illegible] वृत्तिस्वभावात्कर्मत्वम् ॥ **२९९४ इच एकाचः—** । अम्ग्रहणमिहानुवर्तते, तत्र एकेन अम् विधीयते परेण प्रत्ययो विशेष्यते, तदाह—**स्वाद्यम्वदिति** । एवं च 'न विभक्तौ तुस्माः' इति निषेधान्मकारस्य नेत्संज्ञा, अत एव परश्च भवति । 'औतोऽम्शसोः' इत्यत्र शसा साहचर्यात् सुबेवाम् गृह्यत इत्युक्तत्वात् ओत आकारश्च भवतीत्याशयेनोदाहरति—**गांमन्य इति** ॥—**नरंमन्य इति** । 'ऋतोऽङि—' इत्यादिना गुणः ॥—**भाष्यकारेति** । **अयं भावः**—यथा प्रष्ठादयः शब्दाः पुंयोगात्स्त्रियां वर्तन्ते—प्रष्ठी गणिकेति । तथेह श्रीशब्दः परित्यक्तस्वलिङ्गः क्लीबः सन् कुले वर्तते, तत्र 'ह्रस्वो नपुंसके—' इति ह्रस्वः । मुम् तु न, अपवादेन अमा बाधात् । 'स्वमोर्नपुंसकात्' इत्यमो लुक् । न चैवं गांमन्य इत्यादावपि 'सुपो धातुप्रातिपदिकयोः' इति लुक् स्यादिति वाच्यम् । अम्विधिसामर्थ्यादेव तद्बाधादित्याहुः । अम्प्रत्ययस्तु 'मध्येऽपवादा—' इति न्यायेन 'सुपो धातुप्रातिपदिकयोः' इति लुकमेव बाधते न तु 'स्वमोर्नपुंसकात्' इति लुकमिति भाष्यादौ स्थितम् । **स्यादेतत्**—नपुंसकह्रस्वे कृते मुमः प्राप्तिरेव नास्ति, कथमत्र 'अपवादेन अमा बाधात्' इत्युक्तिः संगच्छेत ? 'अरुर्द्विषत्—' इति सूत्रे हि अन्तग्रहणस्य सनीपवाचित्वेन 'खित्यनव्ययस्य' इति ह्रस्वे कृते [illegible]ति व्याख्यातत्वात् । सत्यम् । जनमेजय इत्यत्र स्वतःसिद्धेऽपि ह्रस्वे यथा 'खित्यनव्ययस्य' इति पुनर्ह्रस्वो मुमर्थे स्वीक्रियते तथाऽत्रापि भवेदि-

२९९५। **भूते** ।३।२।८४। अधिकारोऽयम्। 'वर्तमाने लट्' २१५१ इति यावत्।

२९९६। **करणे यजः** ।३।२।८५। करणे उपपदे भूतार्थाद्यजेर्णिनिः स्यात्कर्तरि। सोमेनेष्टवान् सोमयाजी। अग्निष्टोमयाजी।

२९९७। **कर्मणि हनः** ।३।२।८६। पितृव्यघाती। 'कर्मणि' इत्येतत् 'सहे च' ३००६ इति यावदधिक्रियते।

२९९८। **ब्रह्मभ्रूणवृत्रेषु क्विप्** ।३।२।८७। एषु कर्मसूपपदेषु हन्तेर्भूते क्विप्स्यात्। ब्रह्महा। भ्रूणहा। वृत्रहा। 'क्विप् च' २९८३ इत्येव सिद्धे नियमार्थमिदम्। ब्रह्मादिष्वेव, हन्तेरेव, भूते एव, क्विबेव-इति चतुर्विधोऽत्र नियम इति काशिका। ब्रह्मादिष्वेव, क्विबेव-इति द्विविधो नियम इति भाष्यम्।

२९९९। **सुकर्मपापमन्त्रपुण्येषु कृञः** ।३।२।८९। सौ कर्मादिषु च कृञः क्विप्स्यात्। त्रिविधोऽत्र नियम इति काशिका। सुकृत्। कर्मकृत्। पापकृत्। मन्त्रकृत्। पुण्यकृत्। क्विबेव-इति नियमात् 'कर्म कृतवान्' इत्यत्राण्न। 'कृञ एव' इति नियमात् मन्त्रमधीतवान्मन्त्राध्यायः, अत्र न क्विप्। 'भूत एव' इति नियमान्मन्त्रं करोति करिष्यति वेति विवक्षायां न क्विप्। 'स्वादिष्वेव' इति नियमाभावादन्यस्मिन्नप्युपपदे क्विप्, शास्त्रकृत्। भाष्यकृत्।

३०००। **सोमे सुञः** ।३।२।९०। सोमसुत्। चतुर्विधोऽत्र नियम इति काशिका। एवमुत्तरसूत्रेऽपि।

३००१। **अग्नौ चेः** ।३।२।९१। अग्निचित्।

---

त्यस्येव मुमः प्राप्तिरिति ॥ २९९५ **भूते**। धातोरित्यधिकाराद्धात्वर्थस्य विशेषणमिदम्। भूतेऽर्थे विद्यमानाद्धातोरित्यर्थः॥ २९९६ **करणे-**। स्वरितत्वाण्णिनिरेवानुवर्तते न तु खश् इत्याह—**णिनिः स्यादिति। सोमेन**=लताविशेषेण यागं कृतवानित्यर्थः॥ —**अग्निष्टोमेति**। अग्निष्टोमस्तोत्रेण समाप्यमानो यो यागः स लक्षणया—अग्निष्टोमः, तेनापूर्वं भावितवानित्यर्थः। उक्तं च **काशिकायाम्**—'अग्निष्टोमः फलभावनायां करणम्' इति॥ २९९७ **कर्मणि हनः**॥—**पितृव्यघातीति**। अत्र काशिका —'कुत्सितग्रहणं कर्तव्यम्, इह माभूत्–चोरं हतवान्' इति। यद्यपीदं भाष्ये नास्ति तथापि शब्दशक्तिस्वाभाव्यादिदं लभ्यत इत्याहुः॥ २९९८ **चतुर्विध इति। अयमाशयः**—इह सूत्रे श्रुतत्वात्पूर्वं ब्रह्मादय उद्देश्याः, ततोऽनन्तरं प्रकृतित्वाद्धन्तिः, ततः परिशेषाद्भूत इति। क्विप् तु सर्वान्ते निर्देष्टव्यः, विधेयत्वात्। तदेवं वचनव्यक्तिः—ब्रह्मादिषूपपदेषु हन्तेर्भूते क्विबिति। एवं स्थिते यत्रैवकारस्ततोऽन्यत्र नियम इति न्यायेन नियमोऽत्र भवन्ननन्तरे भवति। ततश्च 'ब्रह्मादिष्वेव' इत्यवधारणे हन्तेस्तदनन्तरं निर्दिष्टत्वादुपपदान्तरसंबन्धनिवृत्तिफलः [**प्रकृति**]नियमो भवति। 'ब्रह्मादिषु हन्तेरेव भूते' इत्यवधारणे त्वनन्तरत्वाविशेषेऽपि प्राथम्यादु**पपदनि**यमो धात्वन्तरनिवृत्तिफलकः। 'ब्रह्मादिषु हन्तेर्भूते एव क्विप्' इत्यवधारणे तु क्विप्हन्त्योरानन्तर्येऽविशिष्टेऽपि प्राधान्यात्कालान्तरसंबन्धनिवृत्तिफलकः **प्रत्यय**नियमः। 'ब्रह्मादिषु हन्तेर्भूते क्विबेव' इति वचनव्यक्तौ प्रत्ययान्तरसंबन्धनिवृत्तिफलकः **काल**नियमः। सोऽयं प्रकृत्युपपदप्रत्ययकालनियमानां विवेकः। अगृह्यमाणविशेषत्वात्तु चतुर्विधस्यापीह ग्रहणम्। तत्र 'ब्रह्मादिष्वेव हन्तेः' इति प्रकृतिनियमे भूत इत्याश्रयणाद्वर्तमानकाले भविष्यत्काले चोपपदान्तरेऽपि भवत्येव—पुरुषं हन्ति हनिष्यति वा पुरुषहा। 'हरिहयोऽरिहयोगविचक्षणः'। अरीन् हन्तीति अरिहा, स चासौ योगश्च–अरिहयोगः। तत्र विचक्षण इत्यर्थः। **प्रकृतिनियमफलं तु**—पुरुषं हतवान् पुरुषह इति भूतार्थे प्रयोगाभावः। 'ब्रह्मादिषु हन्तेरेव' इत्युपपदनियमेऽपि भूत इत्याश्रयणाद्वर्तमानभविष्यत्कालयोर्धात्वन्तरादपि भवत्येव—वृत्रं जयति जेष्यति वा वृत्रजिदिति। **उपपदनियमफलं तु**—वृत्रं जितवान् वृत्रजिदिति प्रयोगाभावः। 'भूत एव क्विप्' इति प्रत्ययनियमेऽपि ब्रह्मादिष्वित्युक्तेरुपपदान्तरे वर्तमानभविष्यत्कालयोर्हन्तेः क्विप् भवत्येव—पुरुषं हन्ति हनिष्यति वा पुरुषहा, अरिहेति प्राग्वत्। **प्रत्ययनियमफलं तु**—ब्रह्माणं हन्ति ब्रह्महेत्यादिप्रयोगाभावः। 'भूते क्विबेव' इति कालनियमेऽपि ब्रह्मादिष्वित्युक्तेरुपपदान्तरे भूतेऽपि प्रत्ययान्तरं भवत्येव—पितृव्यं हतवान् पितृव्यघाती। इह 'कर्मणि हनः' इति भूते णिनिः। **कालनियमफलं तु**—ब्रह्माणं हतवान् ब्रह्मघातीति प्रयोगाभावः। सोपपदश्च प्रत्ययो नियमेन व्यावर्त्यते। निष्ठा तु भवत्येव—वृत्रं हतवानिति। **भाष्यकारस्तु** प्रकृतिकालनियमावेवाशिश्रियत्। तस्यायमाशयः—धातुकालौ नेह सूत्रे श्रुतौ, किं तु प्रकरणलक्षणजघन्यप्रमाणेनोपस्थितौ। अतस्तयोरेवोपरोधो न्याय्यो न तूपपदप्रत्यययोः, श्रुत्युपस्थापितत्वात्। एवं न्यायोपबृंहितेन भाष्येण सह विरोधात् वृत्तिमतमुपेक्ष्यमेवेति कैयटे स्थितम्। यत्त्विह **हरदत्तेनोक्तं**—धातूपपदविषयं नियमद्वयं भाष्ये प्रदर्शितमिति। तत्र धातुकालविषयमिति वक्तव्ये उपपदग्रहणं प्रामादिकमित्यवधेयम्॥ २९९९ **सुकर्म**—॥—**त्रिविध इति**। धातुनियमस्त्विह नेष्यत इति भावः॥—**क्विबेवेतीति**। 'भूते क्विबेव' इति प्रत्ययान्तरसंबन्धनिवृत्तिफलककालनियमादित्यर्थः॥—**कृञ एवेतीति**। 'सुकर्मादिषु कृञ एव' इति धात्वन्तरसंबन्धनिवृत्तिफलकोपपदनियमादित्यर्थः॥—**भूत एवेतीति**। 'भूत एव क्विप्' इति कालान्तरसंबन्धनिवृत्तिफलकप्रत्ययनियमादित्यर्थः॥—**स्वादिष्वेवेतीति**। 'स्वादिष्वेव कृञः' इत्युपपदान्तरसंबन्धनिवृत्तिफलकधातुनियमाभावादित्यर्थः॥ ३००० **सोमे सुञः**। इहापि चतुर्विधो नियम इति वृत्तिः। एवमुत्तरसूत्रेऽपि। तत्र भूतकालस्य क्विपि नियतत्वात्सोमं सुतवान् सोमसावः—अग्निं चितवान् अग्निचाय इत्यण् न भवति, सुनोतेः सोम एव उपपदे नियतत्वाच्चिनोतेस्त्वग्नावेवोपपदे नियतत्वात्। सुरां सुतवान् सुरासुत्, इष्टकाश्चितवानिष्टकाचिदिति न भवति, किं तु सुरासावः इष्टकाचाय इत्यणेव भवति, सोमस्य सुनोतावेव धातोर्नियतत्वात्। अग्नेस्तु चिनोतावेव

**३००२। कर्मण्यग्न्याख्यायाम्** ।३।२।९२। कर्मण्युपपदे कर्मण्येव कारके चिनोतेः क्विप्स्यात्, अग्न्याधारस्थलविशेषस्याख्यायाम् । श्येन इव चित श्येनचित् ।

**३००३ कर्मणीनि विक्रियः** ।३।२।९३। कर्मण्युपपदे विपूर्वात्क्रीणातेरिनिः स्यात् । ❀ कुत्सितग्रहणं कर्तव्यम् । सोमविक्रयी । घृतविक्रयी ।

**३००४। दृशेः क्वनिप्** ।३।२।९४। कर्मणि भूत इत्येव । पारं दृष्टवान् पारदृश्वा ।

**३००५। राजनि युधि कृञः** ।३।२।९५। क्वनिप् स्यात् । युधिरन्तर्भावितण्यर्थः । राजानं योधितवान् राजयुध्वा । राजकृत्वा ।

**३००६। सहे च** ।३।२।९६। कर्मणीति निवृत्तम् । सहयुध्वा । सहकृत्वा ।

**३००७। सप्तम्यां जनेर्डः** ।३।२।९७। सरसिजम् । मन्दुरायां जातो मन्दुरजः, 'ङ्यापो.–' १००३ इति ह्रस्व. ।

**३००८। पञ्चम्यामजातौ** ।३।२।९८। जातिशब्दवर्जिते पञ्चम्यन्ते उपपदे जनेर्ड. स्यात् । संस्कारज. । अदृष्टजः ।

**३००९। उपसर्गे च संज्ञायाम्** ।३।२।९९। 'प्रजा स्यात्सन्ततौ जने' ।

**३०१० । अनौ कर्मणि** ।३।२।१००। अनुपूर्वाज्जने· कर्मण्युपपदे ड. स्यात् । पुमांसमनुरुध्य जाता पुमनुजा ।

**३०११। अन्येष्वपि दृश्यते** ।३।२।१०१। अन्येष्वप्युपपदेषु जनेर्ड. स्यात् । अज. । द्विज । ब्राह्मणज । अपिशब्द सर्वोपाधिव्यभिचारार्थ. । तेन धात्वन्तरादपि कारकान्तरेष्वपि क्वचित् । परित. खाता परिखा ।

**३०१२। क्तक्तवतू निष्ठा** ।१।१।२६। एतौ निष्ठासंज्ञौ स्त. ।

**३०१३ । निष्ठा** ।३।२।१०२। भूतार्थवृत्तेर्धातोर्निष्ठा स्यात् । तत्र 'तयोरेव–' २८३३ इति भावकर्मणो क्त. । 'कर्तरि कृत्' २८३२ इति कर्तरि क्तवतु । उकावितौ । स्नात मया । स्तुतस्त्वया विष्णु । विष्णुर्विश्व कृतवान् ।

**३०१४ । निष्ठायामण्यदर्थे** ।६।४।६०। ण्यदर्थौ भावकर्मणी, ततोऽन्यत्र निष्ठाया क्षियो दीर्घ. स्यात् ।

**३०१५। क्षियो दीर्घात्** ।८।२।४६। दीर्घात् क्षियो निष्ठातस्य नः स्यात् । क्षीणवान् । भावकर्मणोस्तु क्षितः

---

नियतत्वात् । सोम क्रीतवान् सोमक्री , अग्निं भृतवान् अग्निभृत् इति क्विप न भवति, कि तु सोमक्राय अग्निभार इत्यणेव भवति । भूत एव क्विपो नियतत्वात्सोम सुनोति सोष्यति वेत्यर्थे क्विप् न भवति । तथा अग्निं चिनोति चेष्यति वेत्यर्थे किबभाव , किंत्वणेव ॥ **३००२ कर्मण्यग्न्याख्यायाम्** ॥—**श्येनचिदिति** । समुदायोऽयं आहवनीयधारणार्थे इष्टकानिर्मितस्थलविशेषे निरूढ ॥ **३००३ कर्मणीनि–**॥—**कुत्सितग्रहणमिति** । एतच्च वार्तिक पुन कर्मग्रहणसामर्थ्याल्लभ्यते, यत्कर्म क्रियया सबध्यमानं कर्तु कुत्सामात्रहति तत्रेत्यर्थ । सोमादयश्च विक्रीयमाणा शास्त्रे प्रतिषेधात्कुत्सावहा । कुत्सितग्रहणान्नेह—धान्यविक्राय ॥ **३००४ दृशेः क्वनिप्** । 'अन्येभ्योऽपि दृश्यन्ते' इति सिद्धे नियमार्थमिद—क्वनिबेव यथा स्यात्तत्सहनिर्दिष्टौ मनिन्वनिपौ माभूता, न वा अणादय इति । सोपपदप्रत्ययस्यैव नियमेन निवर्तनान्निष्ठा तु भवत्येव ॥—**पारं दृष्टवानिति** । एवं स्थिते 'विश्वदृश्वनयना वयमेव' इत्यादौ विश्व पश्यन्ति विश्वदृश्वानि तानि नयनानि येषा ते—विश्वदृश्वनयना इत्येवं क्वनिबन्तस्य लटा विग्रहेऽपि न क्षति , प्रत्ययान्तरनिवृत्त्यर्थं सूत्रमित्येवं वृत्तिकारादिभिर्व्याख्यातत्वात् । कालान्तरनिवृत्त्यर्थमिदमिति कैरप्यभियुक्तैरनुक्तत्वादिति दिक् ॥ **३००५ राजनि युधि कृञः** ॥ **३००६ सहे च** । इदमपि सूत्रद्वयं 'दृशे क्वनिप्' इतिवन्नियमार्थमिति न्याय्यम् । वस्तुतस्तु दृशिग्रहणेन निर्वाहस्यागतिकत्वादियं त्रिसूत्री विधात्रीत्यपि सुवचम् । प्राचा ग्रन्थास्त्विहोदासीना एवेति शब्दकौस्तुभे स्थितम् ॥ **३००७ मन्दुरायामिति** । 'वाजिशाला तु मन्दुरा' इत्यमर ॥ **३०१० पुमनुजेति** । इह जनि सकर्मक , अनुरोधविशिष्टजननवृत्तित्वात् ॥ **३०११ अन्येष्वपि दृश्यते** । 'सप्तम्या जने.–' इत्युक्तमसप्तम्यामपि दृश्यत इत्याह—**अजः** । **द्विज इति** । न जायत इत्यज , द्विर्जातो द्विज , 'जन्मना जायते शूद्र· कर्मणा जायते द्विज ' इत्यभियुक्तोक्ते । 'पञ्चम्यामजातौ' इत्युक्तं जातावपि दृश्यत इत्याह—**ब्राह्मणज इति** ॥—**अपिशब्द इति** । यत्तु 'अन्तात्यन्ताध्व–' इति प्रकरणे 'अन्यत्रापि दृश्यते' इत्युपसख्यातम् , तद्भूतकाल विनाऽपि यथा स्यादित्येवमर्थम् । वस्तुतस्तु प्रकृतसूत्रस्थस्य 'अपि'ग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात्तद्वार्तिकमनेनैव गतार्थम् । विभावित चेद 'इको गुणवृद्धी' इति सूत्रे जनेर्ड प्रक्रम्य 'गमेरप्ययं डो वक्तव्य ' इति वदता भाष्यकारेण । एवं च प्रकृतसूत्रस्थं 'अन्येभ्योऽपि दृश्यते' इति वार्तिकमपि गतार्थमिति बोध्यम् ॥ **३०१२ क्तक्तवतू निष्ठा** । ननु क्तक्तवत्वो सिद्धयोर्निष्ठेति सज्ञासिद्धि , सिद्धाया निष्ठासज्ञाया क्तक्तवत्वोर्विधानमित्यन्योन्याश्रय इति चेत् । **अत्राहुः**—भाविनी सज्ञाऽत्र विज्ञायते । स भूते भवति यस्योत्पन्नस्य निष्ठेति सज्ञा भवति इत्याश्रयणे सामर्थ्यात् क्तक्तवत्वोर्विधानमेतदिति नास्त्युक्तदोष इति ॥ **३०१४ ण्यदर्थौ भावकर्मणी इति** । यद्यपि याज्याऋगित्यादौ करणादावपि बाहुलकाण्ण्यद्भवति, तथापि 'तयोरेव–' इति वचनाद्भावकर्मणी एव साक्षादुपात्तोऽर्थ इति स एवेह विवक्षित इति भाव ॥ **३०१५ क्षियो–**। क्षि क्षये, क्षि निवासगत्यो , द्वयोरपि ग्रहणम् ॥—**क्षितः काम इति** । अन्तर्भावितण्यर्थत्वेन सकर्मकत्वात्कर्मणि क्त. । एतच्च 'अक्षितोत. सनेदिमम्' इति मन्त्रव्याख्याया माधवग्रन्थे स्पष्टम् । भावे तु

कामो मया । 'श्र्युकः किति' २३८१, श्रितः । श्रितवान् । भूतः । भूतवान् । क्षुतः । ॐ **ऊर्णोतेर्णुवद्भावो वाच्यः** । तेन एकाच्त्वान्नेट्, ऊर्णुतः । नुतः । वृतः ।

३०१६ । **रदाभ्यां निष्ठातो नः पूर्वस्य च दः** ।८।२।४२। रेफदकाराभ्यां परस्य निष्ठातस्य नः स्यात्, निष्ठापेक्षया पूर्वस्य धातोर्दकारस्य च । शॄ, 'ॠत इत्-' २३९०, रपरः, णत्वम्, शीर्णः । बहिरङ्गत्वेन वृद्धेरसिद्धत्वान्नेह—कृतस्यापत्यं कार्तिः । भिन्नः । छिन्नः ।

३०१७ । **संयोगादेरातो धातोर्यण्वतः** ।८।२।४३। निष्ठातस्य नः स्यात् । द्राणः । स्त्यानः । ग्लानः । म्लानः ।

३०१८ । **ल्वादिभ्यः** ।८।२।४४। एकविंशतेर्लूञादिभ्यः प्राग्वत् । लूनः । ज्या, 'ग्रहिज्या-' २४१२, जीनः । ॐ **दुग्वोर्दीर्घश्च** । 'दु गतौ', दूनः । 'टुदु उपतापे' इत्ययं तु न गृह्यते, सानुबन्धकत्वात् । 'मृदुतया दुतया' इति माघः । गूनः । ॐ **पूञो विनाशे** । पूना यवाः । विनष्टा इत्यर्थः । पूतमन्यत् । ॐ **सिनोतेर्ग्रासकर्मकर्तृकस्य** । सिनो ग्रासः । ग्रासेति किम् । सिता पाशेन सूकरी । कर्मकर्तृकेति किम् । सितो ग्रासो देवदत्तेन ।

३०१९ । **ओदितश्च** ।८।२।४५। भुजो, भुग्नः । टुओश्वि, उच्छूनः । ओहाक्, प्रहीणः । '( ग. ) स्वादय ओदितः' इत्युक्तम् । सूनः । सूनवान् । दूनः । दूनवान् । ओदिन्मध्ये डीङः पाठसामर्थ्यान्नेट्, उड्डीनः ।

३०२० । **द्रवमूर्तिस्पर्शयोः श्यः** ।६।१।२४। द्रवस्य मूर्तौ काठिन्ये स्पर्शे चार्थे श्यैङः संप्रसारणं स्यान्निष्ठायाम् ।

३०२१ । **श्योऽस्पर्शे** ।८।२।४७। श्यैङो निष्ठातस्य नः स्यादस्पर्शेऽर्थे । 'हलः-' २५५९ इति दीर्घः, शीनं घृतम् । अस्पर्शे किम् । शीतं जलम् । द्रवमूर्तिस्पर्शयोः किम् । संश्यानो वृश्चिकः । शीतात्संकुचित इत्यर्थः ।

३०२२ । **प्रतेश्च** ।६।१।२५। प्रतिपूर्वस्य श्यः संप्रसारणं स्यान्निष्ठायाम् । प्रतिशीनः ।

३०२३ । **विभाषाऽभ्यवपूर्वस्य** ।६।१।२६। श्यः संप्रसारणं वा स्यात् । अभिश्यानं घृतम् । अभिशीनम् । अवश्यानः-अवशीनो वृश्चिकः । व्यवस्थितविभाषेयम् । तेनेह न—समवश्यानः ।

३०२४ । **अञ्चोऽनपादाने** ।८।२।४८। अञ्चो निष्ठातस्य नः स्यान्न त्वपादाने ।

३०२५ । **यस्य विभाषा** ।७।२।१५। यस्य क्वचिद्विभाषयेड्विहितस्ततो निष्ठाया इण्न स्यात् । 'उदितो वा' ३३२८ इति क्त्वायां वेट्त्वादिह नेट्—समक्नः । अनपादाने किम् । उदक्तमुदकं कूपात् । नत्वस्यासिद्धत्वात् 'व्रश्च-' २९४ इति षत्वे प्राप्ते, ॐ **निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वाच्यः** । वृक्णः । वृक्णवान् ।

---

'क्षितं कामेन' इत्युदाहरणीयम् ॥ इण्निषेधसूत्रं स्मारयति—**श्र्युकः कितीति** ॥—**क्षुत इति** । टुक्षु शब्दे ॥—**नुत इति** । णु स्तुतौ ॥—**वृत इति** । वृङ् संभक्तौ, वृञ् वरणे ॥ **३०१६ रदाभ्याम्**—। इह रदाभ्यामित्यनेन तकारो विशेष्यते न निष्ठा, तेन चरितमुदितमित्यत्र न, तकारस्येटा व्यवहितत्वात्तदेतदाह—**परस्य निष्ठातस्येति** ॥—**बहिरङ्गत्वेनेति** । निष्ठातकाराद्बहिर्भूततद्धितञित्प्रत्ययमाश्रित्याङ्गस्यादेरचो विधीयमानत्वाद्वृद्धिर्बहिरङ्गेति भावः ॥ **३०१७ द्राण इति** । द्रा कुत्सायां गतौ ॥—**ग्लानः । म्लान इति** । ग्लै म्लै हर्षक्षये ॥ **३०१८ एकविंशतेरिति** । क्र्यादिषु प्वादयो द्वाविंशतिः पठ्यन्ते, तत्र पूञं विहाय ल्वादयो ज्ञेयाः ॥—**जीन इति** । हल इति दीर्घः । सिद्धत्वान्नित्यत्वाच्च 'ग्रहिज्या-' इति संप्रसारणे कृते 'संयोगादेरातः-' इत्यस्याप्राप्तिः ॥—**गून इति** । गु पुरीषोत्सर्गे ॥—**विनष्टा इति** । धातूनामनेकार्थत्वात्पूञ् पवन इत्यस्य विनाशेऽपि वृत्तिः ॥—**सिनोतेरिति** । षिञ् बन्धने । ग्रासरूपं कर्म-ग्रासकर्म, तत्कर्तृ यस्य सिनोतेस्ततः परस्य निष्ठातस्य नः स्यादित्यर्थः ॥—**सिनो ग्रास इति** । पिण्डीक्रियमाणो ग्रासो यदा दध्यादिव्यञ्जनवशाद् बन्धनेऽनुकूलो भवति तदा कर्मण एव कर्तृत्वमिति बोध्यम् ॥—**ग्रासेति किमिति** । ग्रासकर्मकर्तृकस्येति किमर्थमित्यर्थः ॥—**कर्मकर्तृकेति किमिति** । ग्रासकर्मकस्येत्येवास्तु, कर्तृपदं किमर्थमित्यर्थः । कर्मपदं विहाय ग्रासकर्तृकस्येत्युक्तौ तु 'ग्रासेन कण्ठः सितः' इत्यत्रापि स्यादिति बोध्यम् ॥ **३०१९ भुग्न इति** । भुजो कौटिल्ये । नत्वस्यासिद्धत्वात् झलि परतः कुत्वम् ॥—**उच्छून इति** । श्वयतेर्यजादित्वात्संप्रसारणे पूर्वरूपे च 'हलः' इति दीर्घः ॥—**प्रहीण इति** । 'घुमास्था-' इति ईत्वम् ॥—**सून इति** । षूङ् प्राणिप्रसवे ॥—**दून इति** । दूङ् परितापे ॥—**ओदिन्मध्ये इति** । यदि डीङ इट् स्यात्तर्हि धातोः परो निष्ठातकारो न संभवतीति नत्वार्थः पाठोऽनर्थकः स्यादिति भावः । न च ओदिन्मध्ये पाठसामर्थ्यादिटा व्यवधाने नत्वं भवेदिति वैपरीत्यं किं न स्यादिति शङ्क्यम् । लक्ष्यानुरोधेन इडभावकल्पनाया एव न्याय्यत्वात् । **अन्ये तु** सत्यपि इडागमे सवर्णदीर्घे चैकादेशस्य पूर्वान्तत्वेन ग्रहणादिटा व्यवधानं नास्त्येवेतीष्टं सिध्यतीत्याहुः ॥ **३०२१ संश्यान इति** । श्यैङ् गतावित्यस्य 'आदेच-' इत्यात्वे 'संयोगादेरातः-' इति निष्ठातस्य नः ॥ **३०२५ यस्य विभाषा** । यस्येत्यार्धधातुकापेक्षया षष्ठी । यदीयस्यार्धधातुकस्येत्यर्थः ॥ **समक्न इति** । 'अञ्चु गतिपूजनयोः' संपूर्वः, नत्वस्यासिद्धत्वात् झलि परतः कुत्वम् ॥—**उदक्तमिति** । उद्धृतमित्यर्थः । व्यक्तमित्येतत्तु अञ्जू व्यक्तीत्यस्य, न त्वञ्चेः । तेनात्र नत्वाभावः ॥—**वृक्ण इति** । ओव्रश्चू छेदने, 'ग्रहिज्या-' इति संप्रसारणम् । नत्वस्यासिद्धत्वात् 'स्कोः-' इति सलोपः, 'चोः कुः' इति कुत्वं च । ऊदित्त्वेन वेट्कत्वात् 'यस्य विभाषा' इति निष्ठाया इडभावः । नुड्विधिलादेशविनामेषु वर्णैकदेशस्यापि वर्णत्वेन ग्रहणादृकारैकदेशो रेफो निमित्तमिति 'अट्कुप्वाङ्-' इति नस्य

३०२६ । **परिस्कन्दः प्राच्यभरतेषु** ।८।३।७५। पूर्वेण मूर्धन्ये प्राप्ते तदभावो निपात्यते । परिस्कन्दः । प्राच्येति किम् । परिष्कन्दः । परिस्कन्दः । 'परेश्च' २३९९ इति षत्वविकल्पः । 'स्तम्भेः' २२७२ इति षत्वे प्राप्ते—

३०२७ । **प्रतिस्तब्धनिस्तब्धौ च** ।८।३।११४। अत्र षत्वं न स्यात् ।

३०२८ । **दिवोऽविजिगीषायाम्** ।८।२।४९। दिवो निष्ठातस्य नः स्यादविजिगीषायाम् । द्यूनः । विजिगीषायां तु—द्यूतम् ।

३०२९ । **निर्वाणोऽवाते** ।८।२।५०। 'अवाते' इति छेदः । निपूर्वाद्वातेर्निष्ठातस्य नत्वं स्याद्वातश्चेत्कर्ता न । निर्वाणोऽग्निर्मुनिर्वा । वाते तु निर्वातो वातः ।

३०३० । **शुषः कः** ।८।२।५१। निष्ठात इत्येव । शुष्कः ।

३०३१ । **पचो वः** ।८।२।५२। पक्वः ।

३०३२ । **क्षायो मः** ।८।२।५३। क्षामः ।

३०३३ । **स्त्यः प्रपूर्वस्य** ।६।१।२३। प्रात् स्त्यः संप्रसारणं स्यान्निष्ठायाम् ।

३०३४ । **प्रस्त्योऽन्यतरस्याम्** ।८।२।५४। निष्ठातस्य मो वा स्यात् । प्रस्तीमः । प्रस्तीतः । प्रात्किम् । स्त्यानः ।

३०३५ । **अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः** ।८।२।५५। ञिफला, फुल्लः । निष्ठातस्य लत्वं निपात्यते । क्तवत्वेकदेशस्यापीदं निपातनमिष्यते, फुल्लवान् । क्षीबादिषु तु क्तप्रत्ययस्यैव तलोपः, तस्यासिद्धत्वात्प्राप्तस्येटोऽभावश्च निपात्यते, क्षीबो मत्तः । कृशः—तनुः । उल्लाघो नीरोगः । अनुपसर्गात्किम्—

३०३६ । **आदितश्च** ।७।२।१६। आकारेतो निष्ठाया इण्न स्यात् ।

३०३७ । **ति च** ।७।४।८९। चरफलोरत उत्स्यात्तादौ किति । प्रफुल्तः । प्रक्षीबितः । प्रकृशितः । प्रोल्लाघितः । कथं तर्हि 'लोध्रद्रुमं सानुमतः प्रफुल्लम्' इति ? 'फुल्ल विकसने' पचाद्यच् । सूत्रं तु क्तवत्वन्निवृत्त्यर्थम् ।

॥ उत्फुल्लसंफुल्लयोरुपसंख्यानम् ॥

३०३८ । **नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्** ।८।२।५६। एभ्यो निष्ठातस्य नो वा । नुन्नः । नुत्तः । 'विद विचारणे' रौधादिक एव गृह्यते, उन्दिना परेण साहचर्यात् । विन्नः । वित्तः । वेत्तेस्तु—विदितः । विन्तेः—विन्नः । उन्दी—

३०३९ । **श्वीदितो निष्ठायाम्** ।७।२।१४। श्वयतेरीदितश्च निष्ठाया इण्न । उन्नः । उत्तः । त्राणः । त्रातः । घ्राणः । घ्रातः । ह्रीणः । ह्रीतः ।

३०४० । **न ध्याख्यापॄमूर्च्छिमदाम्** ।८।२।५७। एभ्यो निष्ठातस्य नत्वं न । ध्यातः । ख्यातः । पूर्तः । 'राल्लोपः २६५५', मूर्तः । मत्तः ।

३०४१ । **वित्तो भोगप्रत्यययोः** ।८।२।५८। विन्दतेर्निष्ठान्तस्य निपातोऽयं भोग्ये प्रतीते चार्थे । वित्तं धनम् । वित्तः पुरुषः । अनयोः किम् । विन्नः, 'विभाषा गमहन—' ३०९९ इति क्वसौ वेदन्वादिह नेट् ।

---

णत्वम् । णत्वस्य 'विनामः' इति प्राचां संज्ञा । 'ऋवर्णान्तस्य णत्वम्' इति वार्तिकेनापि णत्वनिषेधार्थं क्षुभ्नादिषु नृनमनशब्दपाठादकारं निमित्तीकृत्यापि 'अट्कुप्वाङ्—' इति णत्वं भवत्येवेति दिक् ॥ **३०२६ परिस्कन्दः**—। अचि निपातनम् । अथ वा निष्ठातकारस्य लोप इति काशिका ॥ **३०२८ द्यून इति** । 'च्छ्वोः शूड्—' इत्यूठ् । क्षीण इत्यर्थः ॥—**द्यूतमिति** । विजिगीषया हि तत्राक्षाः पात्यन्ते इति गम्यते विजिगीषा ॥ **३०२९ निर्वाणोऽवाते** । वा गतिगन्धनयोः, निर्पूर्वादस्मान्निष्ठातस्य नत्वे णत्वम् ॥—**वातश्चेत्कर्ता नेति** । एवं च वातेन हेतुना निर्वाणो दीप इत्यत्र निषेधो नेत्याहुः ॥—**निर्वात इति** । 'गत्यर्थाकर्मक—' इति कर्तरि क्तः । नितरां वातो गत इत्यर्थः ॥ **३०३० शुष्क इति** । शुष शोषणे ॥ **३०३२ क्षाम इति** । क्षै क्षये । 'आदेचः—' इत्यात्वम् ॥ **३०३४ प्रस्तीमः** । **प्रस्तीत इति** । स्त्यै ष्ट्यै शब्दसंघातयोः । आत्वे कृते 'संयोगादेः—' इत्यस्यासिद्धत्वात्पूर्वं संप्रसारणे पूर्वरूपे च कृते 'हलः' इति दीर्घः पश्चाद्यण्वत्त्वादन्तत्वयोर्विरहान्न नत्वम् । संस्त्यान इत्यत्र तु भवत्येव ॥ **३०३५ क्षीबादिष्विति** । क्षीबृ मदे, कृश तनुत्वे, लाघृ शक्तावुत्पूर्वः, एभ्यः क्तः ॥ **३०३७ ननु फुल्ल विकसन** इत्यस्मादुल्लाघेश्च पचाद्यचि इतरेभ्यः ... कप्रत्यये च फुल्लादयः सिध्यन्ति, तत्किं सूत्रेण ? इत्यत आह—**सूत्रं त्विति** । निवृत्त्यर्थमित्युपलक्षणम् । फुल्लवानिति रूपस्य 'निष्ठा च द्व्यजनात्' इत्याद्युदात्तस्य च सिध्यर्थमिति बोध्यम् ॥ ॥ **उत्फुल्लसंफुल्लयोरिति** । यद्यपि प्रफुल्ल इतिवत् फुल्लेः पचाद्यचा सिद्धं, तथापि उत्फुल्तः, संफुल्तः—इति प्रयोगनिवृत्त्यर्थं वचनम् ॥ **३०३८ नुदविदो**—'रदाभ्यां—' 'संयोगादेरातः—' इति नित्ये प्राप्ते ह्रीत्यस्याप्राप्ते उभयत्र विभाषेयम् ॥—**वेत्तेस्त्विति** । तथा च **भाष्यम्—'वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते । वेत्तेर्विन्नश्च वित्तश्च भोगे वित्तश्च विन्दतेः'** इति ॥—**नुन्नः** । **नुत्त इति** । 'अनिदिताम्—' इति नलोपः ॥ **३०४० न ध्या**—। ध्यै चिन्तायाम् । ख्या प्रकथने । पॄ पालनपूरणयोः । मुर्च्छा मोहसमुच्छ्राययोः । मदी हर्षे ॥—**पूर्त इति** । 'श्र्युकः किति' इति इण्निषेधः । लोपविधिं स्मारयति—**राल्लोप इति** ॥—**मूर्त इति** । 'आदितश्च' इति नेट् ॥—**मत्त इति** । 'श्वीदितः' इति नेट् ॥ **३०४१ वित्तो** । ज्ञानार्थकाद्विदेरिटा भाव्यं, सत्तार्थकविदेर्विचारणार्थकविदेश्च भोगप्रत्यययोर्वृत्तिर्न संभवतीत्याशयेनाह—**विन्दतेरिति** । विद्लृ लाभ इत्यस्येत्यर्थः ॥ भुज्यत इति **भोगः**, प्रतीयत इति

३०४२ । **भित्तं शकलम्** ।८।२।५९। 'भिन्नम्' अन्यत् ।

३०४३ । **ऋणमाधमर्ण्ये** ।८।२।६०। ऋधातोः क्ते तकारस्य नत्वं निपात्यते अधमर्णव्यवहारे । 'ऋतम्' अन्यत् ।

३०४४ । **स्फायः स्फी निष्ठायाम्** ।६।१।२२। स्फीतः ।

३०४५ । **इण्निष्ठायाम्** ।७।२।४७। निरः कुषो निष्ठाया इट् स्यात् । 'यस्य विभाषा' ३०२५ इति निषेधे प्राप्ते पुनर्विधिः । निष्कुषितः ।

३०४६ । **वसतिक्षुधोरिट्** ।७।२।५२। आभ्यां क्त्वानिष्ठयोर्नित्यमिट् स्यात् । उषितः । क्षुधितः ।

३०४७ । **अञ्चेः पूजायाम्** ।७।२।५३। पूजार्थादञ्चेः क्त्वानिष्ठयोरिट् स्यात् । अञ्चितः । गतौ तु—अक्तः ।

३०४८ । **लुभो विमोहने** ।७।२।५४। लुभः क्त्वानिष्ठयोर्नित्यमिट् स्यान्न तु गार्ध्ये । लुभितः । गार्ध्ये तु—लुब्धः ।

३०४९ । **क्लिशः क्त्वानिष्ठयोः** ।७।२।५०। इड्वा स्यात् 'क्लिश उपतापे' नित्यं प्राप्ते, 'क्लिशू विबाधने' अस्य क्त्वायां विकल्पे सिद्धेऽपि निष्ठायां निषेधे प्राप्ते विकल्पः । क्लिशितः । क्लिष्टः ।

३०५० । **पूङश्च** ।७।२।५१। पूङः क्त्वानिष्ठयोरिड्वा स्यात् ।

३०५१ । **पूङः क्त्वा च** ।१।२।२२। पूङः क्त्वा निष्ठा च सेट् किन्न स्यात् । पवितः । पूतः । क्त्वाग्रहणमुत्तरार्थम् । 'नोपधात्–' ३३२४ इत्यत्र हि क्त्वैव संबध्यते ।

३०५२ । **निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः** ।१।२।१९। एभ्यः सेण्निष्ठा किन्न स्यात् । शयितः । शयितवान् । अनुबन्धनिर्देशो यङ्लुङ्निवृत्त्यर्थः । शेशियतः । शेशियतवान् । ❀ **आदिकर्मणि निष्ठा वक्तव्या** ।

३०५३ । **आदिकर्मणि क्तः कर्तरि च** ।३।४।७१। आदिकर्मणि यः क्तः स कर्तरि स्यात् । चाद्भावकर्मणोः ।

३०५४ । **विभाषा भावादिकर्मणोः** ।७।२।१७। भावे आदिकर्मणि च आदितो निष्ठाया इड्वा स्यात् । प्रस्वेदितश्चैत्रः । प्रस्वेदितं तेन । 'ञिष्विदा' इति भ्वादिरत्र गृह्यते, शीङ्ः साहचर्यात् । स्विद्यतेस्तु 'स्विदितः' इत्येव । 'ञिमिदा' 'ञिक्ष्विदा' दिवादी भ्वादी च । प्रमेदितः । प्रमेदितवान् । प्रक्ष्वेदितः । प्रक्ष्वेदितवान् । प्रधर्षितः । प्रधर्षितवान् । प्रधर्षितं तेन ॥ सेट् किम् । प्रस्विन्नः । प्रस्विन्नं तेन–इत्यादि ।

३०५५ । **मृषस्तितिक्षायाम्** ।१।२।२०। सेण्निष्ठा किन्न स्यात् । मर्षितः । मर्षितवान् । तितिक्षायां किम् । अपमृषितं वाक्यम् । अविस्पष्टमित्यर्थः ।

---

**प्रत्यय** इति कर्मसाधनावेताविति व्याचष्टे—**भोग्ये प्रतीते चार्थ इति** ॥ **३०४२ भित्तं शकलम्** । भिदेः क्ते 'रदाभ्याम्–' इति प्राप्तनत्वस्याभावो निपात्यते । 'भित्तं शकलखण्डे वा' इत्यमरः ॥—**भिन्नमन्यदिति** । विदीर्णमित्यर्थः ॥ **३०४३ ऋणमाधमर्ण्ये** । अधमं=दुःखप्रदमृणमस्य सोऽधमर्णः, तस्य भाव आधमर्ण्यं । तेन व्यवहारविशेषो लक्ष्यते । ततश्च उत्तमर्णेऽपि सिध्यतीत्याशयेन व्याचष्टे—**अधमर्णव्यवहार इति** । स व्यवहारो दातृग्रहीत्रोः संबन्धी भवतीत्युत्तमर्णेऽपि प्रयोगो न विरुध्यते । लक्षणायां तु 'धारेरुत्तमर्णः' इति निर्देशो लिङ्गम् ॥ **३०४४ स्फायः स्फी–**। स्फायी वृद्धौ । कथं तर्हि 'स्फीतिकामः' इति ? स्फीतमाचष्टे इति ण्यन्तादच इः, अल्लोपणिलोपौ ॥ **३०४५ यस्येति** । 'निरः कुषः' इति विकल्पितेट्त्वादिति भावः ॥ **३०४६ उषित इति** । यजादित्वात्संप्रसारणम् । 'शासिवसि–' इति षः । वसतीति शपा निर्देशः स्पष्टार्थः । वस्तेः सेट्त्वाद्भवितव्यमेवेटा ॥—**क्षुधित इति** । एवं च 'तस्यालमेषा क्षुधितस्य' इति प्रयोगो निर्बाध एवेति क्षुधेर्धातोर्भावे क्विपि 'तारकादित्वादितच्' इति धातुवृत्तिषु यदुक्तं तन्नादर्तव्यम् । समानन्यायतया क्रुधितादावुपयोक्ष्यत इति वा कथंचिन्नेयम् ॥ **३०४७ अञ्चेः–**। उदित्त्वात् क्त्वायां विकल्पे प्राप्ते निष्ठायां 'यस्य विभाषा' इति निषेधे प्राप्ते वचनम् ॥—**अञ्चित इति** । 'नाञ्चेः पूजायाम्' इति नलोपनिषेधः ॥—**अक्त इति** । 'अनिदिताम्–' इति नलोपः ॥ **३०४८ लुभो–**। 'तीषसह–' इति क्त्वायां विकल्पे निष्ठायां निषेधे च प्राप्ते वचनम् ॥ **३०५० पूङश्च** । 'श्र्युकः किति' इति निषेधे प्राप्ते वचनम् ॥ **३०५१ पूङः क्त्वा च** । 'न क्त्वा सेट्' इत्यनेनैव सिद्धे क्त्वाग्रहणमिह व्यर्थमित्यत आह—**उत्तरार्थमिति** ॥—**क्त्वैवेति** । न तु निष्ठा, चानुकृष्टत्वादिति भावः ॥ **३०५२ शेशियत इति** । 'एरनेकाचः–' इति यण् ॥ **३०५३ आदिकर्मणीति** । आद्येषु क्षणेषु भूतेषु सर्वस्याः क्रियाया भूतत्वाभावान्निष्ठा न प्राप्नोतीति वचनम्, आदिकर्मणि क्तस्य कर्तरि विधानार्थं चेत्याहुः ॥—**चादिति** । अन्यथा तक्रकौण्डिन्यन्यायेन भावकर्मणोर्न स्यादिति भावः ॥ **३०५४ प्रस्वेदित इति** । प्रशब्द आदिकर्मद्योतनार्थः, स्वेदितमित्यादि भावे ॥—**भ्वादिरत्रेति** । 'ञिष्विदा स्नेहनमोचनयोः' इति पठितः ॥—**स्विद्यतेस्त्विति** । 'ष्विदा गात्रप्रक्षरणे' इति दिवादिषु पठितस्य ॥—**स्विदित इत्येवेति** । कित्त्वनिषेधाभावादिति भावः । न च ष्विदेति दैवादिकोऽपि ञीदिति वाच्यम् । हरदत्तग्रन्थविरोधादिति भावः । **अत्र हरदत्तः**—ञिष्विदा स्नेहनमोचनयोरिति दिवादिर्गृह्यते, न तु ञिक्ष्विदा अव्यक्ते शब्दे इति भ्वादिरपि, मिदिना साहचर्यादित्याह । तच्चिन्त्यम् । भ्वादिष्वपि मिदेः पठ्यमानत्वात् । तस्मादविशेषादुभयोर्ग्रहणं न्याय्यं, तदेतदाह—**दिवादी भ्वादी चेति** । स्विदादीनाम् 'आदितश्च' इतीण्निषेधात्सेण्निष्ठा न संभवतीत्यादिकर्मणि निष्ठोदाहृता ॥ **३०५५ अविस्पष्टमिति** । मृषधातोस्तितिक्षायामेव वृत्तिसत्त्वेऽपि सूत्रस्थतितिक्षाग्रहणमेव ज्ञा-

३०५६ । **उदुपधाद्भावादिकर्मणोरन्यतरस्याम्** ।१।२।२१। उदुपधात्परा भावादिकर्मणोः सेण्निष्ठा वा किन्न स्यात् । द्युतितम्, द्योतितम् । मुदितम्, मोदितं साधुना । प्रद्युतितः, प्रद्योतितः । प्रमुदितः, प्रमोदितः साधुः । उदुपधात्किम् । विदितम् । भावेत्यादि किम् । रुचितं कार्षापणम् । सेट् किम् । कुष्टम् । * शब्विकरणेभ्य एवेष्यते । नेह—गुध्यतेः–गुधितम् ।

३०५७ । **निष्ठायां सेटि** ।६।४।५२। णेर्लोपः स्यात् । भावितः । भावितवान् । 'श्वीदितः–' ३०३९ इति नेट्, संप्रसारणम्, शूनः । दीप्तः । गुहू, गूढः । वनु, वतः । तनु, ततः । पतेः सनि वेड्त्वादिडभावे प्राप्ते 'द्वितीयाश्रित–' ६८६ इति सूत्रे निपातनादिट्, पतितः, 'सेऽसिचि–' २५०६ इति वेड्त्वात्सिद्धे कृन्तत्यादीनामीदित्त्वेनानित्यत्वज्ञापनाद्वा । तेन 'धावितमिभराजधिया' इत्यादि । 'यस्य विभाषा' ३०२५ इत्यत्रैकाच इत्येव, दरिद्रितः ।

३०५८ । **क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु** ।७।२।१८। क्षुब्धादीन्यष्टावनिड्कानि निपात्यन्ते समुदायेन मन्थादिषु वाच्येषु । द्रवद्रव्यसंपृक्ताः सक्तवो मन्थः, मन्थनदण्डश्च । क्षुब्धो मन्थश्चेत् । स्वान्तं मनः । ध्वान्तं तमः । लग्नं सक्तम्, निष्ठानत्वमपि निपातनात् । म्लिष्टमविस्पष्टम् । विरिब्धः स्वरः । 'म्लेच्छ' 'रेभृ' अनयोरुपधाया इत्वमपि निपात्यते । फाण्टम् अनायाससाध्यः कषायविशेषः । माधवस्तु नवनीतभावात्प्रागवस्थापन्नं द्रव्यं फाण्टमिति वेदभाष्ये आह । बाढं भृशम् । अन्यत्र तु क्षुभितम् । 'क्षुब्धो राजा' इति त्वागमशास्त्रस्यानित्यत्वात् । स्वनितम् । ध्वनितम् । लगितम् । म्लेच्छितम् । विरेभितम् । फणितम् । बाहितम् ।

३०५९ । **धृषिशसी वैयात्ये** ।७।२।१९। एतौ निष्ठायामविनये एवानिटौ स्तः । धृष्टः । विशस्तः । अन्यत्र धर्षितः । विशसितः । भावादिकर्मणोस्तु वैयात्ये धृषिर्नास्ति । अत एव नियमार्थमिदं सूत्रमिति वृत्तिः । धृषेरादित्त्वे फलं चिन्त्यमिति हरदत्तः । माधवस्तु भावादिकर्मणोरवैयात्ये विकल्पमाह—धृष्टम्, धर्षितम् । प्रधृष्टः, प्रधर्षितः ।

३०६० । **दृढः स्थूलबलयोः** ।७।२।२०। स्थूले बलवति च निपात्यते । 'दृह-दृहि वृद्धौ' क्तस्येडभावः, तस्य ढत्वम्, हस्य लोपः, इदितो नलोपश्च, दृहितः । दृंहितोऽन्यः ।

३०६१ । **प्रभौ परिवृढः** ।७।२।२१। 'वृह-वृहि वृद्धौ' निपातनं प्राग्वत् । परिवृहितः । परिवृंहितोऽन्यः ।

पयति–अनेकार्था धातव इति ॥ ३०५६ **रुचितमिति** । रुच दीप्तौ । 'गत्यर्थाकर्मक–' इति कर्तरि क्तः ॥—**क्रुष्टमिति** । क्रुश आह्वाने रोदने च । 'व्रश्च–' आदिना षत्वे ष्टुत्वम् ॥—**गुधितमिति** । गुध परिवेष्टने–दिवादिः ॥ ३०५७ **संप्रसारणमिति** । 'वचिस्वपि–' इत्यनेन ॥—**शून इति** । टुओश्वि गतिवृद्ध्योः । 'हलः' इति दीर्घः । 'ओदितश्च' इति निष्ठातस्य नः ॥—**गूढ इति** । 'यस्य विभाषा' इति नेट् । ढत्वधत्वष्टुत्वढलोपदीर्घाः ॥—**वतः । ततः इति** । 'अनुदात्तोपदेश–' इति नलोपः ॥—**सनि वेड्त्वादिति** । 'तनिपतिदरिद्रातिभ्यः सनो वा इड्वाच्यः' इति वचनात् ॥—**कृन्तत्यादीनामिति** । 'श्वीदित–' इति निष्ठायामनिडर्थं 'कृती छेदने, चृती हिंसाग्रन्थनयोः, नृती गात्रविक्षेपे' इत्येतेषामीदित्करणेन 'यस्य विभाषा' इत्यस्यानित्यत्वज्ञापनाद्वा 'पतितः' इति सिद्धमित्यर्थः ॥ ३०५८ **क्षुब्ध–**। क्षुभ संचलने । 'झषस्तथोः–' इति धत्वम् । स्वन ध्वन शब्दे । इडभावे 'अनुनासिकस्य क्विझलोः–' इति दीर्घः । लगे सङ्गे । म्लेच्छ अव्यक्ते शब्दे, 'व्रश्च–' इति षत्वे ष्टुत्वम् । रेभृ शब्दे, फण गतौ । दीर्घः, ष्टुत्वम् । बाहृ प्रयत्ने, इडभावे ढत्वधत्वष्टुत्वढलोपाः ॥ अनायासशब्देन तत्साध्यो लक्ष्यत इत्याह—**अनायाससाध्य इति** । 'क्षुण्णमोषधजातमुष्णोदके प्रक्षिप्य सद्योऽभिषुत्य पूत्वा यत्पीयते तत्फाण्टम्' इत्याहुः ॥—**वेदभाष्ये इति** । 'तद्वै नवनीतं भवति, घृतं देवानां फाण्टं मनुष्याणाम्' इति शतपथश्रुतेर्व्याख्यायामित्यर्थः ॥—**अन्यत्र त्विति** । मन्थादेरवाच्यत्वे त्वित्यर्थः ॥ ३०५९ **धृषिशसी—**। ञिधृषा प्रागल्भ्ये । शसु हिंसायाम् । अनयोः 'आदितश्च' 'यस्य विभाषा' इति सामान्येनेट्प्रतिषेधे सिद्धेऽप्यनयोर्वैयात्य एवानिट्त्वं नान्यत्रेति नियमार्थमित्याह—**अविनये एवेति** । विरुद्धं यातो वियातः=अविनीतः, तस्य भावो वैयात्यम् ॥ ननु धृषेः 'विभाषा भावादिकर्मणोः' इति विकल्पे प्राप्ते नित्यार्थं कस्मान्न भवतीत्याशङ्कायामाह—**नास्तीति** । अनभिधानादिति भावः ॥ अत्र प्रमाणमाह—**अत एवेति** ॥—**माधवस्त्विति** । एवं च आदित्त्वस्य फलवत्त्वात् हरदत्तोक्तं **यच्चिन्त्यं** तदेव **चिन्त्यमिति** भावः ॥ ३०६० **दृढः स्थूल–**। बलमस्यास्तीति बलः, 'अर्श आदिभ्योऽच्' । तदाह—**बलवतीति** । स्थूलो मांसलः, स च निर्बलोऽपि, बलवांस्तु कृशोऽपि दृढ इति फलितोऽर्थः ॥—**तस्येति** । तकारस्येत्यर्थः ॥—**हस्येति** । ननु 'हो ढः' इति ढत्वे ढोढे लोपेनैव सिद्धमिति तस्य ढत्वं हस्य लोपश्च न निपात्यतामिति चेन्मैवम् । तथा हि सति ढलोपस्यासिद्धत्वेन द्रढिमेत्यत्र 'र ऋतो हलादेर्लघोः' इति रभावो न स्यात्, परिदृढय्य गत इत्यत्र 'ल्यपि लघुपूर्वात्' इत्ययादेशो न स्यात्, परिदृढस्यापत्यं पारिदृढी कन्येत्यत्र गुरूपोत्तमलक्षणः ष्यङ् स्यात् । अतोऽसिद्धत्वनिवृत्तये हलोपो निपात्यत इति भाष्यादौ स्थितम् । अत एव 'ढ्रलोपे–' इति सूत्रे—'अणः किं ? दृढः' इति प्राचो ग्रन्थस्य प्रामादिकतामभिप्रेत्य तृढो वृढ इति प्रत्युदाहृतम् ॥ ३०६१ **प्रभौ–**॥—**निपातनमिति** । हलोपे प्रयोजनमपि [1]व्रढिमा परि[2]व्रढय्येत्यादिसिद्धिरिति प्राग्वदेव बोध्यम् ॥

१ 'द्रढिमा' इत्यपि पाठः । २ 'परिद्रढय्य' इत्यपि पाठः ।

३०६२ । कृच्छ्रगहनयोः कषः ।७।२।२२। कषो निष्ठाया इण्न स्यादेतयोरर्थयोः । कष्टं दुःखं तत्कारणं च । 'स्यात्कष्टं कृच्छ्रमाभीलम्' । कष्टो मोहः । कष्टं शास्त्रम् । दुरवगाहमित्यर्थः । कषितमन्यत् ।

३०६३ । घुषिरविशब्दने ।७।२।२३। घुषिर्निष्ठायामनिट् स्यात् । घुष्टा रज्जुः । अविशब्दने किम् । घुषितं वाक्यम् । शब्देन प्रकटीकृताभिप्रायमित्यर्थः ।

३०६४ । अर्देः संनिविभ्यः ।७।२।२४। एतत्पूर्वादर्देर्निष्ठाया इण्न स्यात् । समर्णः । न्यर्णः । व्यर्णः । अर्दितोऽन्यः ।

३०६५ । अभेश्चाविदूर्ये ।७।२।२५। अभ्यर्णम्=नातिदूरम्, आसन्नं वा । अभ्यर्दितम् अन्यत् ।

३०६६ । णेरध्ययने वृत्तम् ।७।२।२६। ण्यन्ताद्वृतेः क्तस्येडभावो णिलुक्चाधीयमानेऽर्थे । वृत्तं छन्दः, छात्रेण संपादितम् । अधीतमिति यावत् । अन्यत्र तु वर्तिता रज्जुः ।

३०६७ । शृतं पाके ।६।१।२७। श्रातिश्रपयत्योः क्ते शृभावो निपात्यते क्षीरहविषोः पाके । शृतं क्षीरम् । स्वयमेव विक्लिन्नं पक्वं वेत्यर्थः । क्षीरहविर्भ्यामन्यत्तु—श्राणं, श्रपितं वा ।

३०६८ । वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ।७।२।२७। एते णिचि निष्ठान्ता वा निपात्यन्ते । पक्षे—दमितः । शमितः । पूरितः । दासितः । स्पाशितः । छादितः । ज्ञापितः ।

३०६९ । रुष्यमत्वरसंघुषाऽऽस्वनाम् ।७।२।२८। एभ्यो निष्ठाया इड्वा । रुषितः । रुष्टः । आन्तः । अमितः । तूर्णः । त्वरितः, अस्याऽऽदित्त्वे फलं मन्दम् । संघुष्टः । संघुषितः । आस्वान्तः । आस्वनितः ।

३०७० । हृषेर्लोमसु ।७।२।२९। हृषेर्निष्ठाया इड्वा स्यात् लोमसु विषये । हृष्टं, हृषितं लोम । ॐ विस्मितप्रतिघातयोश्च । हृष्टः, हृषितो मैत्रः । विस्मितः प्रतिहतो वेत्यर्थः । अन्यत्र तु—'हृषु अलीके' उदित्त्वान्निष्ठायां नेट् । 'हृष तुष्टौ' इट् ।

३०७१ । अपचितश्च ।७।२।३०। चायतेर्निपातोऽयं वा । अपचितः । अपचायितः ।

३०७२ । प्यायः पी ।६।१।२८। वा स्यान्निष्ठायाम् । व्यवस्थितविभाषेयम् । तेन स्वाङ्गे नित्यम्, पीनं मुखम् । अन्यत्र—प्यानः, पीनः-स्वेदः । सोपसर्गस्य न, प्रप्यानः । आङ्पूर्वस्यान्धूधसोः स्यादेव—आपीनोऽन्धुः, आपीनमूधः ।

---

३०६२कृच्छ्रगहनयोः–। कृच्छ्रं=दुःखं तत्कारणं च लक्षणया गृह्यते, कषतिर्हिंसार्थः ॥—कष्टो मोह इति। दुःखहेतुरित्यर्थः ॥ ३०६३ घुषिरवि– । घुषिरविशब्दार्थं इति भ्वादिः, घुषिर् विशब्दन इति चुरादिः, उभयोरपि सामान्येन ग्रहणम् ॥ ननु विशब्दनार्थाद्घुषेश्चुरादिणिचा भाव्यं ततश्च णिचा व्यवधानाद् घुषेः परा निष्ठा नास्तीति कथमिण्निषेधप्रसङ्गः, किं च विशब्दने ण्निषेधाभावाण्णिच्युपधागुणे 'निष्ठायां सेटि' इति णिलोपे च 'घोषितं वाक्यम्' इत्यपि स्यादिति चेत् । अत्राहुः—एवं तर्हि विशब्दनप्रतिषेध एव ज्ञापकः—विशब्दनार्थस्य चुरादेर्णिजनित्य इति नास्त्युक्तदोष इति दिक् ॥ ३०६५ अभेः । विशेषेण दूरं विदूरं ततोऽन्यदविदूरं, तस्य भाव आविदूर्यम् । ब्राह्मणादित्वात्ष्यञ् । अस्मादेव निर्देशात् 'न नञ्पूर्वात्तत्पुरुषात्–' इति निषेधो न भवति । सामीप्य इत्येव तु नोक्तं, नातिदूरस्यासंग्रहापत्तेः । तदेतद्ध्वनयन्व्याचष्टे—नातिदूरमासन्नं वेति । एवं च 'सामीप्ये' इति प्राचो व्याख्यानमुपलक्षणतया नेयमित्याहुः ॥ ३०६६ णेः–। अधीयत इति अध्ययनम् । 'कृत्यल्युटः–' इति बहुलवचनात्कर्मणि ल्युट् ॥—णिलुक् चेति । निपात्यत इति शेषः । लोपे हि प्रत्ययलक्षणेन गुणः स्यादिति भावः ॥ ३०६७ शृतम्–॥—श्रातिश्रपयत्योरिति । 'श्रा पाके' इत्यदादौ पठ्यते, चुरादावपि—घटादिष्वपि पठ्यते मित्त्वार्थम् । 'श्रै पाके' इति च भ्वादौ, तस्यापि कृतात्वस्येह ग्रहणम् । निपातनसामर्थ्याल्लक्षणप्रतिपदोक्तपरिभाषा नाश्रीयत इत्याहुः ॥—शृभावो निपात्यत इति । 'ष्यङः संप्रसारणम्–' इति प्रकृतमेव संप्रसारणं न विहितम् । श्रपयतेरपि शृतमेव यथा स्यादिति । अत्र 'विभाषाभ्यवपूर्वस्य' इति विभाषानुवर्तते, सा च व्यवस्थिता । तेन क्षीरहविषोरेव शृभावो नित्यश्च, अन्यत्र तु नैव भवतीत्याशयेनाह—क्षीरहविषोः पाक इति ॥—अन्यत्तु इति । शाकादिः ॥—श्रपितमिति । णौ मितां ह्रस्वः ॥ ३०६८ वा दान्त–। शमु दमु उपशमे, पूरी आप्यायने, दिवादिश्चुरादिश्च । दसु उपक्षये, स्पश बाधने, छद अपवारणे । ज्ञपिर्मित्संज्ञायां मारणतोषणनिशामनेष्वित्युक्तः ॥ ३०६९ रुष्य–। रुष रोषे 'तीषसह–' इति विकल्पितेट्कात् 'यस्य विभाषा' इति नित्ये निषेधे प्राप्ते विकल्पो विधीयते । अम गत्यादिषु । अम रोगे इति चौरादिकस्तु न गृह्यते, 'एकाचः' इत्यधिकारादित्याहुः ॥—आन्त इति । 'अनुनासिकस्य–' इति दीर्घः ॥—तूर्ण इति । ञित्वरा संभ्रमे, 'ज्वरत्वर–' इत्यूठ्, निष्ठानत्वम् । 'आदितश्च' इति निषेधे प्राप्ते विकल्पः । एवं च आदित्त्वस्य फलमात्मनेपदमात्रं, तच्च एधत्यादिवद्धृत्वानुबन्धत्वेऽपि सिध्यत्येवेत्याशयेनाह—फलं मन्दमिति ॥—संघुष्ट इति । संपूर्वाद् घुषेर्विशब्दने इटि प्राप्ते विकल्पोऽयम् । अविशब्दनेऽपि संपूर्वस्य परत्वादयं विकल्प एव ॥—आस्वान्त इति । आङ्पूर्वस्य स्वनेर्मनोऽभिधानेऽप्ययमेव विकल्पः, परत्वात् । आस्वान्तं मनः । आस्वनितं मन इति ॥ ३०७० हृषेः—। हृषु अलीके । उदित्त्वान्निष्ठायामनिट् । 'हृष तुष्टौ' सेट्, उभयोरपि ग्रहणमित्युभयत्र विभाषेयम् ॥ ३०७२ पीनमिति । ओदित्त्वान्निष्ठानत्वम् ॥—प्यान इति । 'श्वीदितो

३०७३ । ह्लादो निष्ठायाम् ।६।४।९५। ह्रस्वः स्यात् । प्रह्लन्नः ।

३०७४ । द्यतिस्यतिमास्थामित्ति किति ।७।४।४०। एषामिकारोऽन्तादेशः स्यात्तादौ किति । ईत्वदद्भावयोरपवादः । दितः । सितः । मा, माङ्, मेङ्—मितः । स्थितः ।

३०७५ । शाच्छोरन्यतरस्याम् ।७।४।४१। शितः । शातः । छितः । छातः । व्यवस्थितविभाषात्वाद्व्रतविषये श्यतेर्नित्यम्–संशितं व्रतम् । सम्यक्संपादितमित्यर्थः । संशितो ब्राह्मणः । व्रतविषयकयत्नवानित्यर्थः ।

३०७६ । दधातेर्हिः ।७।४।४२। तादौ किति । अभिहितम् । निहितम् ।

३०७७ । दो दद्घोः ।७।४।४६। घुसंज्ञकस्य 'दा' इत्यस्य 'दथ्' स्यात्तादौ किति । चर्त्वम्, दत्तः । घोः किम् । दातः । तान्तो वाऽयमादेशः । न चैवं 'विदत्तम्' इत्यादावुपसर्गस्य 'दस्ति' ३०७९ इति दीर्घापत्तिः, तकारादौ तद्विधानात् । दान्तो वा । धान्तो वा । न च दान्तत्वे निष्ठानत्वं, धान्तत्वे 'झषस्तथोः–' २२८० इति धत्वं शङ्क्यम् । सन्निपातपरिभाषाविरोधात् ।

३०७८ । अच उपसर्गात्तः ।७।४।४७। अजन्तादुपसर्गात्परस्य 'दा' इत्यस्य घोरचस्तः स्यात्तादौ किति । चर्त्वम्, प्रत्तः । अवत्तः ।

अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥

चशब्दाद्यथाप्राप्तम् ।

३०७९ । दस्ति ।६।३।१२४। इगन्तोपसर्गस्य दीर्घः स्याद्दादेशो यस्तकारस्तदादावुत्तरपदे । 'खरि च' १२१ इति चर्त्वमाश्रयात्सिद्धम्, नीत्तम् । सूत्तम् । 'घुमास्था–' २४६२ इतीत्वम्, धेट्–धीतम् । गीतम् । पीतम् । 'जनसन–' २५०४ इत्यात्वम्, जातम् । सातम् । खातम् ।

३०८० । अदो जग्धिर्ल्यप्ति किति ।२।४।३६। ल्यविति लुप्तसप्तमीकम् । अदो जग्धिः स्यात् ल्यपि तादौ किति च । इकार उच्चारणार्थः । धत्वम्, 'झरो झरि–'

---

निष्ठायाम्' इतीडभावे यलोपः ॥ नत्वे व्यवस्थान्तरमाह—**सोपसर्गस्य नेत्यादि** । अन्धुः=कूपः ॥ **३०७३ प्रह्लन्न इति** । ह्लादी सुखे, ईदित्त्वादिडभावे 'रदाभ्याम्–' इति नत्वम् ॥ **३०७४ द्यतिस्यति–** । दोऽवखण्डने, षोऽन्तकर्मणि, मा माने, माङ् माने, मेङ् प्रणिदाने, ष्ठा गतिनिवृत्तौ । श्तिपा निर्देशो धातुविशेषणार्थः । न हि श्तिपं विना श्यन् सुलभः । यत्तु **प्रसादकृतोक्तम्**—'श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः' 'दादत्तः सासत्तः' इति । तन्न । यङ्लुकि हि इटा भाव्यं–दादितः सासितः । तत्र 'ति किति' इति वचनान्नास्ति प्रसङ्गः । **किं च** 'दो दद्घोः' इति विधीयमान आदेशः–अनेकाल्त्वात्सर्वस्येति निर्विवादम् । तथा च हन्तेर्यङ्लुगन्तस्य वधादेशवत्साभ्यासस्य प्रवर्तेतेति 'दादत्तः' इति त्वदुदाहृतरूपं कथमुक्तिसंभवं लभेतेत्याहुः ॥ **३०७५ शाच्छो—** । शो तनूकरणे । छो छेदने ॥ **३०७६ दधातेर्हिः** । श्तिपा निर्देशो धेटो निवृत्त्यर्थः । 'ति' इत्यनुवृत्तेर्यङ्लुकि न, दाधितः । अत्रापि प्रसादकृता श्तिपा निर्देशस्य यङ्लुङ्निवृत्त्यर्थत्वाद्दाधीत इति 'घुमास्था–' इतीत्वमुदाहृतं तत्पूर्ववदेव हेयम् ॥ **३०७७ दो दद्घोः** । इहादेशः 'थान्तः' एव, न तु तदधान्तः, जश्त्वे कृते संहितायास्तुल्यत्वेऽपि प्रक्रियायां दोषादिति प्राञ्चः । तथा चाहुः—**'तान्ते दीर्घत्वाख्यो दोषो दान्ते दोषो निष्ठानत्वम् । धान्ते दोषो धत्वाख्यः स्यान्निर्दोषत्वात् थान्तो ग्राह्यः ॥'** इति तदनुसारेणाह—**दथ् स्यादिति** ॥—**दात इति** । दाप् लवने । अदाविति निषेधान्न घुत्वम् । इह सर्वे पक्षाः सूपपादा इत्याह—**तान्तो वेत्यादिना** ॥—**दीर्घापत्तिरिति** । विदत्तमित्यादावुपसर्गस्येत्यर्थः । 'दस्ति' इत्यत्र द्वौ पक्षौ—दा इत्यस्य य आदेशः स तकारान्तस्तकारादिर्वेति, तत्राद्ये पक्षेऽयं दोषो नान्त्ये इत्याशयेनोक्तदोषं परिहरति—**तकारादाविति** ॥—**निष्ठानत्वमिति** । 'रदाभ्याम्–' इत्यनेन ॥—**सन्निपातेति** । तादिं निमित्तीकृत्य विहितो यो दान्ताद्यादेशः स तकारविघातकनत्वादिविधेर्निमित्तं न भवतीति भावः ॥ **३०७८ अच उपसर्गात्तः** । तकारादकार उच्चारणार्थः । 'अचः' इत्यावर्तते, तत्रैकं पञ्चम्यन्तमुपसर्गं विशिनष्टि । अपरं षष्ठ्यन्तं स्थानलाभायेति व्याचष्टे—**अजन्तादित्यादिना** । यद्वा अच इत्यनावृत्तं पञ्चम्यन्तमेवास्तु, किं तु द्वितकारकोऽयमादेशः, तेनानेकाल्त्वात्सर्वस्य घोर्भविष्यति । एकतकारे हि 'अलोऽन्त्यस्य' इति बाधित्वा 'आदेः परस्य' इत्यादेरेव स्यात्, अच इति पञ्चमीनिर्देशात् । यद्येवम् 'अपो भि' इत्युत्तरसूत्रेऽपि द्वितकार एवेति सर्वादेशः स्यादिति चेत् । **अत्राहुः**—पञ्चम्यन्तस्य 'अचः' इत्यनुवृत्तेरचः परस्य पकारस्यैव भविष्यति । तत्रान्त्यस्य संयोगान्तलोपे पूर्वस्य जश्त्वेन सिद्धमिष्टमिति ॥—**अवदत्तमित्यादि** । आदिकर्मणीत्येतत्प्रदत्तमित्यस्यैव विशेषणं नेतरेषाम्, असंभवात् । दातुं प्रक्रान्तम्=आरब्धमिति प्रदत्तमित्यस्यार्थः ॥—**इष्यते इति** । तादेशबाधनार्थं निपातनमिष्यत इत्यर्थः । **अन्ये तु**—अवादीनामुपसर्गप्रतिरूपकत्वाश्रयणे ह्यवदत्तं विदत्तमित्यादि सिध्यति, उपसर्गत्वाश्रयणे तु पूर्वोक्तमवत्तं वीत्तमित्यादीति नापूर्वमिदं वचनमित्याहुः ॥ **३०७९ दस्ति** । 'इकः काशे' इत्यत इक इति, 'उपसर्गस्य घञि–' इत्यत उपसर्गस्येति, 'ढ्रलोपे पूर्वस्य–' इत्यतो दीर्घ इति चानुवर्तते । 'अलुगुत्तरपदे' इत्यतोऽनुवृत्तस्योत्तरपदे इत्यस्य तीति विशेषणं, 'यस्मिन्विधि'रिति तदादिविधिः, तदेतत्सकलमभिप्रेत्य व्याचष्टे—**इगन्तोपसर्गस्येत्यादिना** । ननु चर्त्वस्यासिद्धत्वाद्दादेशे तकारो नास्तीत्यत आह—**आश्रयात्सिद्धमिति** । 'अतो रोः–' इत्युत्वं प्रति रुत्ववदिति भावः ॥—**धीतमिति** । 'दधातेर्हिः' इत्यत्र लुग्विकरणस्य निर्देशात् धेट् पान इति भ्वादेर्हिर्न भवति । नापि दत्, 'दो दद्घोः' इति द-इत्युपादानादिति भावः ॥ **३०८० उच्चारणार्थ इति** । इदित्त्वे तु नुम् स्यादिति भावः ॥—**धत्वमिति** । 'झषस्तथोः–' इत्यनेन ॥—**झरो**

७१, जग्धः । 'आदिकर्मणि क्तः कर्तरि च' ३०५३, प्रकृतः कटं सः । प्रकृतः कटस्तेन । 'निष्ठायामण्यदर्थे' ३०१४ इति दीर्घः, 'क्षियो दीर्घात्' ३०१५ इति नत्वम्, प्रक्षीणः सः ।

३०८१ । वाऽऽक्रोशदैन्ययोः ।६।४।६१। क्षियो निष्ठायां दीर्घो वा स्यादाक्रोशे दैन्ये च । क्षीणायुर्भव, क्षितायुर्वा । क्षीणोऽयं तपस्वी, क्षितो वा ।

३०८२ । निनदीभ्यां स्नातेः कौशले ।८।३।८९। आभ्यां स्नातेः सस्य षः स्यात्कौशले गम्ये । निष्णातः शास्त्रेषु । नद्यां स्नातीति नदीष्णः, 'सुपि-' २९१६ इति कः ।

३०८३ । सूत्रं प्रतिष्णातम् ।८।३।९०। प्रतेः स्नातेः षत्वम् । प्रतिष्णातं सूत्रम् । शुद्धमित्यर्थः । अन्यत्र— प्रतिस्नातम् ।

३०८४ । कपिष्ठलो गोत्रे ।८।३।९१। कपिष्ठलो नाम यस्य कापिष्ठलिः पुत्रः । गोत्रे किम् । कपीनां स्थलं कपिस्थलम् ।

३०८५ । विकुशमिपरिभ्यः स्थलम् ।८।३।९६। एभ्यः स्थलस्य सस्य षः स्यात् । विष्ठलम् । कुष्ठलम् । शमिष्ठलम् । परिष्ठलम् ।

३०८६ । गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ।३।४।७२। एभ्यः कर्तरि क्तः स्यात् भावकर्मणोश्च । गङ्गां गतः । गङ्गां प्राप्तः । ग्लानः सः । लक्ष्मीमाश्लिष्टो हरिः । शेषमधिशयितः । वैकुण्ठमधिष्ठितः । शिवमुपासितः । हरिदिनमुपोषितः । राममनुजातः । गरुडमारूढः । विश्वमनुजीर्णः । पक्षे—'प्राप्ता गङ्गा तेन' इत्यादि ।

३०८७ । क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ।३।४।७६। एभ्योऽधिकरणे क्तः स्यात् । चाद्यथा-प्राप्तम् । ध्रौव्यं स्थैर्यम् ।

मुकुन्दस्यासितमिदमिदं यातं रमापतेः ।
भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः ॥

पक्षे-आसेरकर्मकत्वात्कर्तरि भावे च-आसितो मुकुन्दः, आसितं तेन । गत्यर्थेभ्यः कर्तरि कर्मणि च—रमापतिरिदं यातः, तेनेदं यातम् । भुजेः कर्मणि—अनन्तेनेदं भुक्तम् । कथं 'भुक्ता ब्राह्मणाः' इति ? 'भुक्तमस्ति एषाम्' इति मत्वर्थीयोऽच् ॥ 'वर्तमाने' इत्यधिकृत्य—

३०८८ । ञीतः क्तः ।३।२।१८७। 'ञिक्ष्विदा' क्ष्विण्णः । 'ञिइन्धी' इद्धः ।

३०८९ । मतिबुद्धिपूजार्थेभ्यश्च ।३।२।१८८। मतिरिहेच्छा, बुद्धेः पृथगुपादानात् । राज्ञां मतः=इष्टः । तैरिष्यमाण इत्यर्थः । बुद्धः । विदितः । पूजितः । अर्चितः । चकारोऽनुक्तसमुच्चयार्थः ।

'शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि ।' इत्यादि ।

३०९० । नपुंसके भावे क्तः ।३।३।११४। क्लीबत्वविशिष्टे भावे कालसामान्ये क्तः स्यात् । जल्पितम् । शयितम् । हसितम् ।

३०९१ । सुयजोर्ङ्वनिप् ।३।२।१०३। सुनोतेर्यजेश्च ङ्वनिप्स्यात् भूते । सुत्वा । सुत्वानौ । यज्वा । यज्वानौ ।

३०९२ । जीर्यतेरतृन् ।३।२।१०४। 'भूते' इत्येव । जरन् । जरन्तौ । जरन्तः । वासरूपन्यायेन निष्ठाऽपि, जीर्णः, जीर्णवान् ।

३०९३ । छन्दसि लिट् ।३।२।१०५।

३०९४ । लिटः कानज्वा ।३।२।१०६।

३०९५ । क्वसुश्च ।३।२।१०७। इह भूतसामान्ये

---

झरि इति । अनेन पाक्षिको धलोप इत्यर्थः ॥ इदानीं क्तार्थान्प्रपञ्चयति—आदिकर्मणीति । व्याख्यातम् ॥—प्रकृतः कटमिति । कटं कर्तुमारब्धवानित्यर्थः । प्रशब्द आदिकर्मद्योतनार्थः । क्तेनोक्तत्वात्कर्तरि प्रथमा । कर्मण्यनुक्तत्वाद् द्वितीया । प्रकृतः कटस्तेनेति कर्मणि प्रयोगे तु विपर्ययः ॥ ३०८२ नदीष्ण इति । नद्यां स्नातः, नदीस्नाने कुशल इत्यर्थः ॥ ३०८६ गत इति । 'अनुदात्तोपदेश-' इति मलोपः ॥—प्राप्त इति । प्रपूर्व आप्लृ व्याप्तौ, व्याप्तिरपीह सूत्रे गतिशब्देन विवक्षितेति भावः ॥—ग्लान इति । ग्लै हर्षक्षये । अकर्मकोऽयम् । 'आदेच-' इत्यात्वे 'संयोगादेरातः-' इति नत्वम् ॥—शेषमिति । 'अधिशीङ्स्थासां कर्म' इति कर्मत्वम् ॥—अधिष्ठित इति । 'द्यतिस्यति-' इति इत्वम् ॥—उपोषित इति । 'वसतिक्षुधोः-' इतीट्, 'शासिवसि-' इति षत्वम् ॥—अनुजीर्ण इति । जॄष् वयोहानौ । 'ॠत इद्धातोः', 'हलि च' इति दीर्घः । नत्वणत्वे ॥ ३०८७ मुकुन्दस्येति । आस्यतेऽस्मिन्नित्यासितम् । आसनमित्यर्थः । यायतेऽस्मिन्निति यातं=मार्गः । भुज्यतेऽस्मिन्निति भुक्तं, भोजनमित्यर्थः । त्रिष्वपि 'अधिकरणवाचिनश्च' इति कर्तरि षष्ठी ॥ ३०८८ क्ष्विण्ण इति । 'आदितश्च' इति नेट् ॥—इद्ध इति । 'श्वीदितः-' इति नेट् । नलोपः ॥ ३०८९ राज्ञामिति । 'क्तस्य च वर्तमाने' इति षष्ठी ॥ —इष्ट इति । 'तीषसह-' इति वेट्त्वात् 'यस्य विभाषा' इति नेट् ॥—शीलित इत्यादि । शील समाधौ, रक्ष पालने, क्षमूष् सहने, क्रुश आह्वाने, जुषी प्रीतिसेवनयोः ॥ ३०९१ सुयजोर्ङ्वनिप् । सुनोतेरिति । षुञ् अभिषवे । यद्यपीह सु गतौ, षु प्रसवैश्वर्ययोरिति निरनुबन्धकयोरेव ग्रहणं न्याय्यम् । तथाप्यनभिधानात्, उभयपदिना साहचर्याद्वा तयोर्ग्रहणं न भवतीति भावः । ङकारः सुनोतेर्गुणप्रतिषेधार्थः । पकारस्तु स्वरार्थस्तुगर्थश्च ॥—यज्वेत्यादि । क्वनिपि कृते त्वत्र 'वचिस्वपि-' इति संप्रसारणं स्यादिति ङ्वनिबुक्तः ॥ ३०९२ अतृनिति । नकारः स्वरार्थः, ऋत इत् ॥—जरन्निति । ऋकारस्य गुणे रपरोऽकारः, 'उगिदचाम्-' इति नुम् । संयोगान्तलोपस्यासिद्धत्वान्न दीर्घः ॥ ३०९३-९५ छन्दसि लिडितिसूत्रस्यार्थमाह—भूतसामान्ये

छन्दसि लिट्। तस्य विधीयमानौ क्वसुकानचावपि छान्दसाविति त्रिमुनिमतम्। कवयस्तु बहुलं प्रयुञ्जते—'तं तस्थिवांसं नगरोपकण्ठे' 'श्रेयांसि सर्वाण्यधिजग्मुषस्ते' इत्यादि।

३०९६। वस्वेकाजाद्घसाम् ।७।२।६७। कृतद्विर्वचनानामेकाचामादन्तानां घसेश्च वसोरिट्, नान्येषाम्। एकाचः, आदिवान्। आरिवान्। आत्, ददिवान्। जक्षिवान्। एषां किम्। बभूवान्।

३०९७। भाषायां सदवसश्रुवः ।३।२।१०८। सदादिभ्यो भूतसामान्ये भाषायां लिड्वा स्यात्, तस्य च नित्यं क्वसुः। 'निषेदुषीमासनबन्धधीरः'। 'अध्यूषुषस्तामभवज्जनस्य'। शुश्रुवान्।

३०९८। उपेयिवाननाश्वाननूचानश्च ।३।२।१०९। एते निपात्यन्ते। उपपूर्वादिणो भाषायामपि भूतमात्रे लिड्वा, तस्य नित्यं क्वसुः। इट्, उपेयिवान्। 'उपेयुषः स्वामपि मूर्तिमग्र्याम्'। उपेयुषी। 'उप' इत्यविवक्षितम्—ईयिवान्। समीयिवान्। नञ्पूर्वादश्नातेः क्वसुरिडभावश्च। 'घृतजयधृतेरनाशुषः' इति भारविः। अनुपूर्वाद्वचेः कर्तरि कानच्, वेदस्यानुवचनं कृतवान्—अनूचानः।

३०९९। विभाषा गमहनविदविशाम् ।७।२।६८। एभ्यो वसोरिड्वा। जग्मिवान्, जगन्वान्। जघ्निवान्, जघन्वान्। विविदिवान्। विविद्वान्। विविशिवान्। विविश्वान्। विशिना साहचर्याद्विन्दतेर्ग्रहणम्। वेत्तेस्तु—विविद्वान्, 'नेड्वशि कृति' २९८१ इतीण्निषेधः।

॥ दृशेश्च। ददृशिवान्। ददृश्वान्।

---

इति। न च 'छन्दसि लुङ्लङ्लिटः' इत्यनेन गतार्थता शङ्क्या, धातुसंबन्धाधिकारे हि स विधिः। इदं तु धातुसंबन्धं विनाऽपि भवतीति विशेषात्। **अत्र व्याचख्युः**—कानचः किन्करणं 'तिस्तिराण' इत्यत्र 'ऋच्छत्यृताम्' इति गुणस्य निषेधार्थं प्रतिषेधविषये आरभ्यते। चक्राण इत्यत्र तु 'असंयोगाल्लिट्कित्' इत्येव सिद्धं कित्त्वमिति ॥—**त्रिमुनिमतमिति**। सूत्रकृता छन्दसीति प्रक्रान्तत्वादुत्तरसूत्रे भाषाग्रहणाच्च। भाष्यवार्तिकयोरपि क्वसुकानचोः 'छन्दस्युभयथा' इति वचनात्सार्वधातुकत्वेन 'सार्वधातुकमपित्' इति ङित्त्वादेव आजिवानित्यादौ नलोपादीनां कित्कार्याणामन्यथासिद्धिमाशङ्क्य 'तितीर्वान्–तिस्तिराण' इत्यादौ 'ऋच्छत्यृताम्' इति प्राप्तस्य गुणस्य बाधनार्थं किन्करणमिति सिद्धान्तितत्वात्। अत एव कित्करणसामर्थ्याद्भाषायामपि क्वसुकानचौ स्त इति केषांचिदुत्प्रेक्षा नादर्तव्येति हरदत्तमाधवादिग्रन्थे स्पष्टमिति भावः ॥—**कवयस्त्विति**। गतानुगतिकतयेति भावः ॥ ३०९६ **वस्वे**–। वस्वित्यविभक्तिको निर्देशः। तथा च व्याख्यास्यति—**वसोरिति**। नित्यत्वाद् द्वित्वे कृते एकाच्त्वमेव नेति कथमिट् स्यादित्यत आह—**कृतद्विर्वचनानामेकाचामिति**। कृतेऽपि द्वित्वे एकाच एव ये अवशिष्यन्ते तेषामित्यर्थः। 'नेड्वशि कृति' इति निषेधं बाधित्वा क्रादिनियमात्सर्वत्र प्राप्तस्येटो नियमोऽयमित्याह—**नान्येषामिति** ॥—**आदिवानिति**। अद भक्षणे। द्वित्वहलादिशेषाभ्यासदीर्घसवर्णदीर्घेषु कृतेषु कृतद्वित्वोऽप्ययमेकाजेवेति इड् भवति ॥—**आरिवानिति**। ऋ गतौ। 'ऋच्छत्यृताम्' इति गुणे कृते द्वित्वादिषु पूर्ववत्कृतेष्वयमप्येकाच् ॥—**ददिवानिति**। डुदाञ् दाने। कृते द्वित्वे नायमेकाच्, इण्निमित्तश्चातो लोपो नासति तस्मिन्भवतीत्यनेकाजर्थमाद्ग्रहणम् ॥—**जक्षिवानिति**। 'लिट्यन्यतरस्याम्' इत्यादेर्घस्लादेशः। द्वित्वे कृते नायमेकाजिति घसिग्रहणम्। **अत्र व्याचख्युः**—द्वित्वात्पूर्वं परत्वात् 'घसिभसोर्हलि–' इत्युपधालोपः स्यात्। तस्मिंश्च कृतेऽनच्कत्वात् द्वित्वमेव न स्यात्। न चास्य द्वित्वे कर्तव्ये 'द्विर्वचनेऽचि' इत्यनेन स्थानिवद्भावो निषेधो वा शङ्क्यः, द्वित्वनिमित्तस्याचोऽभावात्। ततश्च नायं कृतद्विर्वचन एकाज् भवतीति घसिग्रहणं, तत्सामर्थ्यात्तु परत्वादुपधालोपमिडागमो बाधते, कृते त्विडागमे 'गमहन–' इत्युपधालोपः, तस्य चाज्निमित्तत्वेन स्थानिवत्त्वाद् द्वित्वम्। **यद्वा** 'द्विर्वचनेऽचि' इति निषेधपक्षे तूपधालोपात्प्रागेव द्वित्वं, पश्चादुपधालोपः, 'शासिवसिघसीनां च' इति षत्वं, चर्त्वं, क्षः, 'अभ्यासे चर्च' इत्यभ्यासघकारस्य जश्त्वमिति ॥ ३०९७ **निषेदुषीमिति**। षद्लृ विशरणादौ। 'लिटि धातोः–' इति द्वित्वे 'अत एकहल्मध्ये–' इत्येत्वाभ्यासलोपौ, 'उगितश्च' इति ङीपि 'वसोः–' इति संप्रसारणे वलादित्वाभावान्नेट्। 'सदिरप्रतेः' इति षत्वम्। पुंसि तु—निषेदिवान् ॥—**अध्यूषुष इति**। वस निवासे, अधिपूर्वः। 'वचिस्वपि–' इति संप्रसारणं, द्वित्वहलादिःशेषसवर्णदीर्घाः, ङसि भत्वात्संप्रसारणम्। प्रथमैकवचने तु—अध्यूषिवान् ॥ ३०९८ **उपेयिवानना–**।—**इडिति**। वलादिलक्षण एवेट् 'नेड्वशि कृति' इति निषिद्धः क्र्यादिनियमात्पुनः प्राप्तः 'वस्वेकाजाद्घसाम्' इति सूत्रेण कृतद्वित्वानामेकाचामादन्तानां घसेश्च वसोरिट् स्यान्नान्येषामिति नियच्छता प्रतिषिद्धः, नित्यत्वात् द्वित्वे कृतेऽनेकाच्त्वात्। न च सवर्णदीर्घेणैकाच्त्वम्। 'दीर्घ इणः किति' इत्यभ्यासस्य दीर्घे कृते तत्सामर्थ्यात्सवर्णदीर्घाभाव इति पक्षाश्रयणात्। स एव वलादिलक्षण इट् इह प्रतिप्रसूयते नापूर्वो विधीयते। तेन संप्रसारणविषये न भवति। अत एवोदाहरति—**उपेयुष इति**। सति लिटि तस्य यणादेशे उपेय्युष इति स्यादिति भावः ॥—**अविवक्षितमिति**। व्याख्यानमेवात्र शरणम् ॥—**ईयिवानिति**। इणो द्वित्वे सवर्णदीर्घं बाधित्वा आन्तरत्वात् 'इणो यण्' इति यण् भवति, वसोरिडागमे हि परत्राजादिप्रत्ययस्य सत्त्वात् ॥—**वचेरिति**। वच परिभाषणे इत्यस्माद् ब्रुवो वचेर्वा कर्तरि, न तु भावकर्मणोः। एतच्च निपातनाल्लभ्यम् ॥ ३०९९ **जग्मि–**

३१०० । **लटः शतृशानचावप्रथमासमानाधिकरणे** ।३।२।१२४। अप्रथमान्तेन सामानाधिकरण्ये सतीत्यर्थः । शबादि, पचन्तं चैत्रं पश्य ।

३१०१ । **आने मुक्** ।७।२।८२ अङ्गस्यातो मुगागमः स्यादाने परे । पचमानं चैत्रं पश्य । 'लट्' इत्यनुवर्तमाने पुनर्लड्ग्रहणमधिकविधानार्थम् । तेन प्रथमासामानाधिकरण्येऽपि क्वचित्, सन् ब्राह्मणः । ❀ माङ्याक्रोशे इति वाच्यम् । 'मा जीवन् यः परावज्ञादुःखदग्धोऽपि जीवति' । 'माङि लुङ्' २२१९ इति प्राप्ते एतद्वचनसामर्थ्याल्लट् ।

३१०२ । **संबोधने च** ।३।२।१२५। हे पचन् । हे पचमान ।

३१०३ । **लक्षणहेत्वोः क्रियायाः** ।३।२।१२६। क्रियायाः परिचायके हेतौ चार्थे वर्तमानाद्धातोर्लटः शतृशानचौ स्तः । शयाना भुञ्जते यवनाः । अर्जयन् वसति । हरिं पश्यन् मुच्यते । हेतुः–फलं कारणं च । 'कृत्यचः' २८३५, प्रयीयमाणः सोमः ।

३१०४ । **ईदासः** ।७।२।८३। आसः परस्यानस्य ईत्स्यात् । 'आदेः परस्य' ४४, आसीनः ।

३१०५ । **विदेः शतुर्वसुः** ।७।१।३६। वेत्तेः परस्य शतुर्वसुरादेशो वा स्यात् । विदन्, विद्वान् । विदुषी ।

३१०६ । **तौ सत्** ।३।२।१२७। तौ शतृशानचौ सत्संज्ञौ स्तः ।

३१०७ । **लृटः सद्वा** ।३।३।१४। व्यवस्थितविभाषेयम् । तेनाप्रथमासामानाधिकरण्ये, प्रत्ययोत्तरपदयोः, संबोधने, लक्षणहेत्वोश्च नित्यम् । करिष्यन्तं करिष्यमाणं पश्य । करिष्यतोऽपत्यं कारिष्यतः । करिष्यद्भक्तिः । हे करिष्यन् । अर्जयिष्यन् वसति । प्रथमासामानाधिकरण्येऽपि क्वचित्, करिष्यतीति करिष्यन् ।

३१०८ । **पूङ्यजोः शानन्** ।३।२।१२८। वर्तमाने । पवमानः । यजमानः ।

३१०९ । **ताच्छील्यवयोवचनशक्तिषु चानश्** ।

---

**चानित्यादि** । इट्पक्षे 'गमहन–' इत्युपधालोपः ॥ **३१०० लटः शतृ–**॥—**सामानाधिकरण्ये सतीति** । यद्यप्यादेशरहितस्य लटः प्रयोगाभावात्सामानाधिकरण्यं दुर्लभं तथापि शतृशानचोस्तद् दृष्ट्वा स्थानिन्यपि सामानाधिकरण्यं कल्प्यते ॥—**शबादीति** । शित्त्वेन सार्वधातुकत्वादिति भावः ॥—**पचन्तमिति** । शतुरुगित्त्वान्नुम्, विक्लित्त्यनुकूलवर्तमानव्यापाराश्रयमित्यर्थः ॥ **३१०१ आने मुक्** । 'अतो येयः' इति पूर्वसूत्रादनुवृत्तं पञ्चम्यन्तमप्यत इति पदं षष्ठ्या विपरिणम्यते, 'आने' इति सप्तमीबलात् । न चात इति पञ्चमीबलादान इति सप्तम्यन्तं पदं षष्ठ्या विपरिणाम्यतामिति शङ्क्यम् । पञ्चम्याः पूर्वसूत्रे चरितार्थत्वात्सप्तम्याश्चाचरितार्थत्वात् । तदेतदाह—**अङ्गस्यात इति** । प्राचा त्वदन्ताङ्गस्येति व्याख्यातम् । तदयुक्तम् । पचमान इत्यादौ 'अदुपदेशाल्लसार्वधातुकमनुदात्तम्' इति शानचः स्वरस्यासिद्धिप्रसङ्गात् । अदन्ताङ्गस्येति पक्षे हि—अङ्गभक्तो मुक्, स चाङ्गमेव न व्यवदध्यात् तदवयवमकारं तु व्यवदध्यादेव । अकारमात्रभक्तत्वे तु तदवयवत्वान्नास्ति व्यवधानमित्यदोषः ॥ ननु 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति परिभाषया मुकोऽविद्यमानत्वेन व्यवधानाभावात्स्यादेवानुदात्तत्वमिति चेत् । **अत्राहुः**—हलः स्वरप्राप्तौ व्यञ्जनमविद्यमानवन्नान्यत्रेत्याकरारूढम् । न चात्र हलः स्वरप्राप्तिरस्तीति प्रकृते परिभाषेयं नोपयुज्यते । अन्यथा मरुत्वानित्यादावपि 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वं स्यादिति दिक् ॥—**लडिति** । यद्यपि प्रथमान्तं प्रकृतं, तथापि धातोरित्यधिकारात्पञ्चम्यन्तात्परं प्रथमान्तं षष्ठ्या विपरिणम्यत इति भावः । न च 'वर्तमाने लट्' इत्यत्रैवोक्तरीत्या विपरिणामोऽस्त्विति शङ्क्यम् । प्रत्ययविधौ पञ्चम्याः प्रकल्पकत्वं नास्तीति 'गुप्तिज्किद्भ्यः सन्' इत्यत्र भाष्यकारैः स्वीकृतत्वात् ॥—**प्रथमासामानाधिकरण्येऽपीति** । उपलक्षणमिदम् । अप्रथमान्तेन सामानाधिकरण्याभावेऽपीत्यर्थः । तेन—कुर्वतोऽपत्यं कौर्वतः, कुर्वतो भक्तिः कुर्वद्भक्तिः, कुर्वाणभक्तिरिति प्रत्ययोत्तरपदयोरपि सिध्यति । अन्यथा कुर्वतोऽपत्यमित्यादौ तद्धितसमासौ न स्याताम् ॥ **३१०३ लक्षणहेत्वोः**–। लक्ष्यतेऽनेनेति लक्षणं=परिचायकम् ॥—**शयाना इति** । शीङ् आत्मनेपदित्वात्परस्य लटः शानच् । अत्र शयनं लक्षणं=चिह्नं, यवनकर्तृकभोजनस्य न तु फलं नापि करणमिति हेत्वपेक्षया लक्षणस्य पृथङ्निर्देशः ॥—**अर्जयन्निति** । अर्ज प्रतियत्ने, चुरादिः । अर्जनार्थो वास इत्यर्थः ॥—**हरिमिति** । हरिदर्शनं मुक्तौ कारणमित्यर्थः ॥ **३१०५ विदेः**—। स्थानिवत्त्वादेव सिद्धे वसोरुगित्करणं 'वसोः संप्रसारणम्' इत्यत्र क्वसोरपि सामान्यग्रहणार्थम् । तत्सामर्थ्याच्च 'एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य' इत्येतदपि न प्रवर्तते ॥ **३१०८ पूङ्यजोः**—। शाननः शकारः सार्वधातुकत्वार्थः । नकारः स्वरार्थः । ण्वुलादिवत्स्वतन्त्रोऽयं न तु शत्रादिवल्लादेशः, तथाहि सति वेति वाच्यं स्यात्, पवते यजते इति तिङोऽपि यथा स्युरिति । न च वासरूपन्यायेन निर्वाहः । लादेशेषु वासरूपविधिर्नास्तीत्याकरे स्थितत्वात् । **किंच** लादेशत्वे 'लः कर्मणि च' इति भावकर्मणोर्विहितस्य लस्यापि स्यादिति भावकर्मणोरपि प्रयुज्येत । इष्यते तु कर्तर्येव । एवं—चानशः, 'इङ्धार्योः–' इति शतुश्च स्वातन्त्र्यं बोध्यम् । अत्र **केचित्**—शाननो लादेशत्वे लसार्वधातुकानुदात्तत्वं स्यादित्याहुः । तच्चिन्त्यम् । परत्वान्नित्स्वरप्रवृत्त्या पवमान इत्यादेराद्युदात्तत्वे शाननोऽनुदात्तत्वस्येष्टत्वात् ॥ नन्वेषां लादेशत्वानङ्गीकारे सोमं पवमान इत्यादौ कर्मणि षष्ठी स्यादिति चेत् । मैवम् । 'न लोका–' इति सूत्रे तृन्निति प्रत्याहारनिर्देश इत्युक्तत्वात् ॥ **३१०९ ताच्छील्य**—। वचनग्रहणं स्पष्टार्थम् । चानशो लादेशत्वाभावेनात्मनेपदत्वाभावात्परस्मै-

।३।२।१२९। एषु द्योत्येषु कर्तरि चानश् । भोगं भुञ्जानः । कवचं बिभ्राणः । शत्रुं निघ्नानः ।

३११० । इङ्धार्योः शत्रकृच्छ्रिणि ।३।२।१३०। आभ्यां शतृ स्यादकृच्छ्रिणि कर्तरि । अधीयन् । धारयन् । अकृच्छ्रिणि किम् । कृच्छ्रेणाधीते, धारयति ।

३१११ । द्विषोऽमित्रे ।३।२।१३१। द्विषन् शत्रुः ।

३११२ । सुञो यज्ञसंयोगे ।३।२।१३२। सर्वे सुन्वन्तः, सर्वे यजमानाः सत्रिणः ।

३११३ । अर्हः प्रशंसायाम् ।३।२।१३३। अर्हन् ।

३११४ । आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ।३।२।१३४। क्विपमभिव्याप्य वक्ष्यमाणाः प्रत्ययास्तच्छीलतद्धर्मतत्साधुकारिषु कर्तृषु बोध्याः ।

३११५ । तृन् ।३।२।१३५। कर्ता कटान् ।

३११६ । अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् ।३।२।१३६। अलंकरिष्णुः । निराकरिष्णुः । प्रजनिष्णुः । उत्पचिष्णुः । उत्पतिष्णुः । उन्मदिष्णुः । रोचिष्णुः । अपत्रपिष्णुः । वर्तिष्णुः । वर्धिष्णुः । सहिष्णुः । चरिष्णुः ।

३११७ । णेश्छन्दसि ।३।२।१३७। 'वीरुधः पारयिष्णवः' ।

३११८ । भुवश्च ।३।२।१३८। 'छन्दसि' इत्येव । भविष्णुः । कथं तर्हि 'जगत्प्रभोरप्रभविष्णु वैष्णवम्' इति ? निरङ्कुशाः कवयः । 'चकारोऽनुक्तसमुच्चयार्थः, भ्राजिष्णुरिति वृत्तिः । एवं–क्षयिष्णुः' । नैतद्भाष्ये दृष्टम् ।

३११९ । ग्लाजिस्थश्च ग्स्नुः ।३।२।१३९। 'छन्दसि' इति निवृत्तम् । गिदयं न तु कित् । तेन स्थ ईत्वं न, ग्लास्नुः । गित्वान्न गुणः, जिष्णुः । स्थास्नुः । चात् भुवः, 'क्ङिति च' २३८१ इत्यत्र गकारप्रश्लेषान्नेट्, भूष्णुः ॥

⁂ दंशेश्छन्दस्युपसंख्यानम् । दङ्क्ष्णवः पशवः ।

३१२० । त्रसिगृधिधृषिक्षिपेः क्नुः ।३।२।१४०। त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्नुः ।

३१२१ । शमित्यष्टाभ्यो घिनुण् ।३।२।१४१। 'उकार उच्चारणार्थः' इति काशिका । 'अनुबन्धः' इति भाष्यम् । तेन 'शमिनितरा–शमिनीतरा' इत्यत्र 'उगितश्च' ९८७ इति ह्रस्वविकल्पः । न चैवं 'शमी–शमिनौ' इत्यादौ नुम्प्रसङ्गः ।

पदिभ्योऽपि विधानमिति ध्वनयन्नुदाहरति—**निघ्नान इति** । 'गमहन–' इत्युपधालोपः ॥ **३११० इङ्धार्योः**—। इङ आत्मनेपदित्वात् शता न सिध्यति, धारयतेरपि कर्तृगामिनि क्रियाफले न सिध्यति, लसार्वधातुकानुदात्तत्वं च प्राप्नोतीत्ययमारम्भः ॥ **३११२ सुञो यज्ञसंयोगे** । सुनोतेः शतृप्रत्ययः स्यात् यज्ञेन संयुज्यमाने वृत्तिश्चेत् ॥ नन्विह 'सुञो यज्ञे' इत्येवास्तु, यज्ञविषयकश्चेत्सुनोत्यर्थ इति व्याख्यायां सुरां सुनोतीत्यादेर्व्यावर्तयितुं शक्यत्वात् । **अत्राहुः**—संयोगग्रहणं प्रधानकर्तृसंप्रत्ययार्थं, तेन यजमानादन्यत्र न भवतीति । एवं चाप्रधाने कर्तरि 'लटः शतृशानचौ' इत्यनेनापि न भवति, संयोगग्रहणसामर्थ्यादिति **हरदत्तः** ॥ 'यः सुन्वन्तमवति' इत्यादीनामेकवचनान्तानां यजमानपरत्वसंभवेऽपि बहुवचनान्तानां तु न संभवति, एकस्मिन्यागे एकस्यैव यजमानत्वात्–इत्याशङ्क्य यागविशेषे तु संभवतीति दर्शयितुमुदाहरति—**सर्वे सुन्वन्त इत्यादि** । सत्रयागे हि बहवो यजमानास्त एव ऋत्विजां कर्म सोमाभिषवनं कुर्वन्तीति 'सुन्वन्तः' इत्यादिबहुवचनान्तस्यापि यजमानपरत्वं संभवतीति भावः ॥ **३११३ अर्हः**—। प्रशंसायां किम् ? अर्हति चौरो वधम् ॥ **३११४ आक्वेः**—। शीलादीनां त्रयाणां विशेषणं समर्थयितुं निर्दिष्टैस्त्रिभिः 'तत्'शब्दैः प्रकृतिभूतधात्वर्थो निर्दिश्यते ॥—**क्विपमभिव्याप्येति** । 'भ्राजभासधुर्विद्युतोर्जि–' इति वक्ष्यमाणमिति शेषः ॥ **३११५ कर्ता कटानिति** । 'न लोकाव्यय–' इति षष्ठीनिषेधः ॥ **३११६ अलंकृञ्**—। कृञिति डुकृञ् करण इत्यस्यैव ग्रहणं न तु कृञ् हिंसायामित्यस्य, 'प्रसिद्धाप्रसिद्धयोः प्रसिद्धस्यैव ग्रहणम्' इति न्यायात् । निराङ्पूर्वोऽपि कृञ् स एव । प्रपूर्वो जनी प्रादुर्भावे । इह डुपचष् पाके, पत्लृ गतौ, मदी हर्षे, त्रयोऽपि उत्पूर्वाः पठ्यन्ते । तत्र 'उदः पचपतमदः' इत्येव वक्तव्ये प्रत्येकमुत्पूर्वस्य पाठ उपसर्गान्तरनिवृत्त्यर्थः, तेन समुत्पतिष्णुरित्यादि न भवतीत्याहुः । रुच दीप्तौ, अपपूर्वः–त्रपूष् लज्जायाम्, वृतु वर्तने, वृधु वृद्धौ, षह मर्षणे, चर गतौ ॥–**इत्यादीति** । आदिशब्दग्राह्यास्तु—निराकरिष्णुः, प्रजनिष्णुः, उत्पचिष्णुः, उत्पतिष्णुः, 'उत्पतिष्णुसहिष्णू च चेरतुः खरदूषणौ' इति भट्टिः । कालिदासोऽप्याह—'एलानामुत्पतिष्णवः' इति । केचित्तु—पत इति स्थाने दान्तं सूत्रे पठित्वा पद गतावित्यस्मात्प्रत्ययमाहुः । उन्मदिष्णुः, रोचिष्णुः, अपत्रपिष्णुः, वर्तिष्णुः, वर्धिष्णुः, सहिष्णुः, चरिष्णुः ॥ **३११७ पारयिष्णव इति** । 'अयामन्ता–' इति णेरय् ॥ **३११८ नैतदिति** । चकारस्यानुक्तसमुच्चयार्थत्वमित्यर्थः ॥ **३११९ ईत्वं नेति** । 'घुमास्था–' इत्यादिना ॥—**गित्वादिति** । 'क्ङिति च' इत्यत्र गकारं प्रश्लिष्य गिति किति ङितीति व्याख्यानादिति भावः ॥—**गकारप्रश्लेषादिति** । नन्वेवं गकारे चर्त्वस्यासिद्धत्वात् 'हशि च' इत्युत्वं स्यादिति चेत् । सत्यम् । सौत्रोऽयं निर्देशः । तथा च **वार्तिकम्—'ग्स्नोर्गित्वान्न स्थ ईकारः क्ङितोरीत्वशासनात् । गुणाभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं कगोरितोः ॥'** इति ॥—**दङ्क्ष्णव इति** । दंश दशने 'व्रश्च–' इत्यादिना षत्वे 'षढोः कः सि' इति कत्वम्, 'आदेशप्रत्यययोः' इति षत्वम् । 'अनिदितां–' इति नलोपो न, ग्स्नोर्गित्त्वेन प्राप्त्यभावात् ॥ **३१२० त्रस्नुरिति** । 'नेड्वशि–' इति नेट् ॥ **३१२१ शमित्यष्टाभ्यो**—। इतिशब्द आद्यर्थः ॥—**शमिनीतरेत्यत्रेति** । अत्र नव्याः—विद्वत्तरेतिवत् 'तसिलादिषु–' इति पुंवद्भावेन शमिनितरेति भाव्यम् । न च उगित्त्वाभ्युपगमस्य फलाभावा-

१ अत्र '**अलङ्करिष्णुरित्यादि**' इत्येव पाठ आसीत् । शिष्यसौकर्यार्थमुदाहरणदानं लेखकानवधानादापन्नमिति प्रतीयते ।

झल्ग्रहणमकृत्वा झलन्तानामेव तद्विधानात् । 'नोदात्तोपदेशस्य–' २७६३ इति वृद्धिनिषेधः, शमी । तमी । दमी । श्रमी । भ्रमी । क्षमी । क्लमी । प्रमादी । उत्पूर्वान्मदेः 'अलंकृञ्–' ३११६ आदिसूत्रेणेष्णुजुक्तः, वासरूपविधिना घिनुणपि, उन्मादी । 'ताच्छीलिकेषु वासरूपविधिर्नास्ति' इति प्रायिकम् ।

३१२२ । संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च ।३।२।१४२। घिनुण् स्यात् । संपर्की । अनुरोधी । आयामी । आयासी । परिसारी । संसर्गी । परिदेवी । संज्वारी । परिक्षेपी । परिराटी । परिवादी । परिदाही । परिमोही । दोषी । द्वेषी । द्रोही । दोही । योगी । आक्रीडी । विवेकी । त्यागी । रागी । भागी । अतिचारी । अपचारी । आमोषी । अभ्याघाती ।

३१२३ । वौ कषलसकत्थस्रम्भः ।३।२।१४३। विकाषी । विलासी । विकत्थी । विस्रम्भी ।

३१२४ । अपे च लषः ।३।२।१४४। चाद्वौ । अपलाषी । विलाषी ।

३१२५ । प्रे लपसृद्रुमथवदवसः ।३।२।१४५। प्रलापी । प्रसारी । प्रद्रावी । प्रमाथी । प्रवादी । प्रवासी ।

३१२६ । निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषाऽसूयो वुञ् ।३।२।१४६। पञ्चम्यर्थे प्रथमा । एभ्यो वुञ् स्यात् । निन्दकः । हिंसकः । इत्यादि । ण्वुला सिद्धे वुञ्वचनं ज्ञापकं—'तच्छीलादिषु वासरूपन्यायेन तृजादयो न' इति ।

३१२७ । देविक्रुशोश्चोपसर्गे ।३।२।१४७। आदेवकः । आक्रोशकः । उपसर्गे किम् । देवयिता । क्रोष्टा ।

३१२८ । चलनशब्दार्थादकर्मकाद्युच् ।३।२।१४८। चलनार्थाच्छब्दार्थाच्च युच् स्यात् । चलनः । चोपनः । कम्पनः । शब्दनः । रवणः । अकर्मकात्किम् । पठिता विद्याम् ।

३१२९ । अनुदात्तेतश्च हलादेः ।३।२।१४९। अकर्मकाद्युच् स्यात् । वर्तनः । वर्धनः । अनुदात्तेतः किम् । भविता । हलादेः किम् । एधिता । अकर्मकात्किम् । वसिता वस्त्रम् ।

३१३० । जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः ।३।२।१५०। 'जु' इति सौत्रो धातुर्गतौ वेगे च । जवनः । चङ्क्रमणः । दन्द्रमणः । सरणः । पूर्वेण सिद्धे पदिग्रहणं 'लषपतपद–' ३१३४ इत्युकञा बाधा माभूदिति । तेन ताच्छीलिकेषु परस्परं वासरूपविधिर्नास्तीति । तेनालंकृञस्तृन्न ।

३१३१ । क्रुधमण्डार्थेभ्यश्च ।३।२।१५१। क्रोधनः । रोषणः । मण्डनः । भूषणः ।

३१३२ । न यः ।३।२।१५२। यकारान्ताद्युच् न स्यात् । क्नूयिता । क्ष्मायिता ।

---

ह्रस्वविकल्प एव भवतीति वाच्यम् । पाक्षिकह्रस्वेन उगित्करणस्य चरितार्थत्वात्, ह्रस्वाभावपक्षे तु पुंवद्भावस्य दुर्वारत्वादित्याहुः ॥ **३१२२ संपृचा–**॥—**संपर्कीति** । पृची संपर्के । 'चजोः–' इति कुत्वं गुणः ॥—**परिदेवीति** । देवृ देवने । भ्वादिः, ण्यन्तस्य दीव्यतेस्तु नेह ग्रहणं, लाक्षणिकत्वात्, अण्यन्तैः साहचर्याच्च ॥—**अभ्याघातीति** । अभ्याङ्पूर्वाद्धन्तेर्हस्य कुत्वेन घः । 'हनस्तोऽचिण्णलोः' इति नस्य तः । 'अत उपधायाः' इति वृद्धिः ॥ **३१२३ वौ कष—**। कष हिंसार्थः । लस श्लेषणक्रीडनयोः, कत्थ श्लाघायाम्, स्रम्भु विश्वासे ॥ **३१२४ अपे च लषः** । लष कान्तौ ॥ **३१२५ प्रे लप—**। रप लप व्यक्तायां वाचि ॥—**प्रमाथीति** । मथे विलोडने ॥ **३१२६ निन्दहिंस—**। इह सूत्रे विनाशेति विपूर्वस्य नशेर्ण्यन्तस्य णाविना णिलोपेन निर्देशः, अकारस्त्वागन्तुकः । केचित्तु विनाशीति ण्यन्तमेव पठन्ति । परिवादीति तु वदेर्ण्यन्तस्य पाठो निर्विवाद एव । असूयतिः कण्ड्वादिर्यगन्तः, निन्दादीनामसूयान्तानां समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । **स्यादेतत्**—असूयतेरेव वुञ् विधेयो नेतरेभ्यः, निन्दादीनां ण्वुलैव सिद्धेः । न हि तत्र लित्स्वरनित्स्वरयोर्विशेषोऽस्ति, [illegible]त्तत्वात् । असूयतेस्तु ण्वुलि 'लिति' इति प्रत्ययात्पूर्वमुदात्तं, वुञि तु 'ञ्नित्यादिर्नित्यम्' इत्यादिरुदात्त इति विशेषः । तत्राह—**ण्वुलेति** ॥—**तृजादयो नेति** । नेदं ण्वुल्विषयकमेव ज्ञापकं, किंतु सामान्यतः प्रत्ययमात्रविषयकमित्यर्थः ॥ **३१२७ देविक्रुशोः–**। दीव्यतेर्हेतुमण्ण्यन्तस्य, दिवु कूजने इति चुरादिण्यन्तस्य च ग्रहणम् ॥ **३१२८ चलनशब्दार्थाद्–**। चल कम्पने, चुप मन्दायां गतौ, कपि चलने, शब्द शब्दने चुरादिः, रु शब्दे ॥—**चलन इत्यादि** । 'युवोः' इत्यनादेशः ॥ **३१२९ अनुदात्तेतश्च हलादेः** । ननु सर्वोऽप्यनुदात्तेत् हलन्त एवेति तदन्तविधिं बाधित्वा सामर्थ्याद्धलादिरेव ग्रहीष्यते तत्किमादिग्रहणेनेति चेत् । **अत्राहुः**—आदिग्रहणाभावे हलन्तादित्यर्थः स्यात् । तथाहि सत्येधितेत्यादावतिप्रसङ्गः स्यात्, 'जुगुप्सनः' इत्यादि च न सिध्येत् । अस्ति चेहानुदात्तेत्त्वं, गुपादिष्ववयवेष्वचरितार्थस्यानुबन्धस्य समुदायविशेषकत्वादिति दिक् ॥ **३१३० जुचङ्क्रम्य–**। क्रमिद्रमी यङन्तौ, क्रमु पादविक्षेपे, द्रम हम्म मीमृ गतौ ॥—**पूर्वेणेति** । 'अनुदात्तेतश्च–' इत्यनेन । इह पदिग्रहणं सकर्मकार्थमिति वृत्तिकृतोक्तम् । भाष्ये तु अनभिधानादेव सकर्मकान्न भविष्यतीत्युक्तत्वात् । ज्ञापनार्थमेव तदित्याशयेनाह—**बाधा मा भूदित्यादि** ॥–**परस्परमिति** । निन्दादिसूत्रे हि 'तच्छीलादिषु वासरूपविधिना तृजादयो न' इति ज्ञापितम्, इह तु 'ताच्छीलिकेषु परस्परं न' इति ज्ञापितमिति विवेक इति भावः ॥ **३१३१ क्रुध–**। क्रुध क्रोधे, रुष रोषे, मडि भूषायाम्, भूष अलंकारे ॥ **३१३२ न यः** ।

३१३३ । **सूददीपदीक्षश्च** ।३।२।१५३। युच् न स्यात् । सूदिता । दीपिता । दीक्षिता । 'नमिकम्पि-' ३१४७ इति रेण युचो बाधे सिद्धे दीपेर्ग्रहणं ज्ञापयति— 'ताच्छीलिकेषु वासरूपविधिर्नास्तीति प्रायिकम्' इति । तेन कम्रा-कमना युवतिः । कम्प्रा-कम्पना शाखा । यदि सूदेर्युज् न, कथं मधुसूदनः ? नन्द्यादिः ।

३१३४ । **लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्** ।३।२।१५४। लाषुकः । पातुकः । इत्यादि ।

३१३५ । **जल्पभिक्षकुट्टलुण्टवृङः षाकन्** ।३।२।१५५। जल्पाकः । भिक्षाकः । कुट्टाकः । लुण्टाकः । वराकः । वराकी ।

३१३६ । **प्रजोरिनिः** ।३।२।१५६। प्रजवी । प्रजविनौ । प्रजविनः ।

३१३७ । **जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च** ।३।२।१५७। जयी । दरी । क्षयी । विश्रयी । अत्ययी । वमी । अव्यथी । अभ्यमी । परिभवी । प्रसवी ।

३१३८ । **स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्** ।३।२।१५८। आद्यास्त्रयश्चुरादावदन्ताः । स्पृहयालुः । गृहयालुः । पतयालुः । दयालुः । निद्रालुः । तत्पूर्वो द्रा, तदो नान्तत्वं निपात्यते, तन्द्रालुः । ॐ शीङो वाच्यः । शयालुः ।

३१३९ । **दाधेट्सिशदसदो रुः** ।३।२।१५९। दारुः । धारुः । सेरुः । शद्रुः । सद्रुः ।

३१४० । **सृघस्यदः क्मरच्** ।३।२।१६०। सृमरः । घस्मरः । अद्मरः ।

३१४१ । **भञ्जभासमिदो घुरच्** ।३।२।१६१। भङ्गुरः । भासुरः । मेदुरः ।

३१४२ । **विदिभिदिच्छिदेः कुरच्** ।३।२।१६२। विदुरः । भिदुरम् । छिदुरम् ।

३१४३ । **इणनशजिसर्तिभ्यः क्वरप्** ।३।२।१६३। इत्वरः । इत्वरी । नश्वरः । जित्वरः । सृत्वरः ।

३१४४ । **गत्वरश्च** ।३।२।१६४। गमेरनुनासिकलोपोऽपि निपात्यते । गत्वरी ।

३१४५ । **जागुरूकः** ।३।२।१६५। जागर्तेरूकः स्यात् । जागरूकः ।

३१४६ । **यजजपदशां यङः** ।३।२।१६६। एभ्यो यङन्तेभ्य ऊकः स्यात् । 'दशाम्' इति भाविना नलोपेन निर्देशः । यायजूकः । जञ्जपूकः । दन्दशूकः ।

---

'अय वय पय नय चय तय गतौ' इति पठितस्य नयतेर्नायं निर्देशः, अनुदात्तेत्त्वादेव युचः सिद्धत्वात्, किन्तु नेति पृथक् पदमिति मत्वाऽऽह—**यकारान्तादिति** ॥—**कूयिता । क्ष्मायितेति** । कूयी शब्दे उन्दे च, क्ष्मायी विधूनने ३१३३ **सूददीप-**। सूद क्षरणे, दीपी दीप्तौ, दीक्ष मौण्ड्येज्यादौ ॥—**ताच्छीलिकेष्विति** । परस्परमिति शेषः ॥—**प्रायिकमिति** । न केवलं यथाश्रुतभाष्यमवलम्ब्य युज्रयोरेव समावेश इति मन्तव्यं किंतु प्रायिकत्व एव भाष्यस्य तात्पर्यम् । तेन गमेः 'लषपतपद-' इत्युकञ्विषये तृन्नपि-गन्ता, गामुकः । तथा 'वौ कषलस-' इति घिनुण्विषये युजपि-विकत्थी, विकत्थन इत्यादि सिध्यतीति भावः ॥ ३१३५ **जल्प-**। जप जल्प व्यक्तायां वाचि, भिक्ष भिक्षायां अलाभे लाभे च । कुट्ट छेदने, लुण्ट स्तेये, चौरादिकाविमौ । **अत्र व्याचख्युः**—जल्पेः 'चलनशब्दार्थात्-' इति, भिक्षेः 'अनुदात्तेतश्च-' इति युचि प्राप्ते, कुट्टलुण्टयोः 'णेश्छन्दसि' इति इष्णुचि प्राप्ते, वृङस्तु 'आदृगमहनजन-' इति किकिनोः प्राप्तयोरयं विधिरिति ॥ षो ङीषर्थ इत्याह—**वराकीति** ॥ ३१३६ **प्रजवीति** । जु इति सौत्रो गत्यर्थः ॥ ३१३७ **जिदृक्षि-**। जि जये, जि अभिभवे, दृङ् आदरे, क्षि क्षये, क्षि निवासगत्योः, श्रिञ् सेवायाम् विपूर्वः, व्यथ भयसंचलनयोर्नञ्पूर्वः । निपातनान्नञो धातुना समासे नलोपे ततः प्रत्ययः । अम गत्यादिषु, अभिपूर्वः ॥—**प्रसवीति** । षू प्रेरणे अस्मादिनिः । षूङ् प्राणिगर्भविमोचने, पूङ् प्राणिप्रसवे, इमौ न गृह्येते, सानुबन्धत्वात् । 'जिदृक्षि-' इत्यत्रैव प्रजुं पठित्वा पूर्वसूत्रं त्यक्तुमुचितम् । एवं हि पृथग्विभक्तिश्चकारश्च मास्त्विति सुवचम् ॥ ३१३८ **स्पृहि-**। स्पृह ईप्सायाम्, गृहू ग्रहणे, पत्ल गतौ ॥—**त्रयश्चुरादाविति** । तेन णेरयादेशेन रूपसिद्धिरिति भावः । यद्येवं णिचि उपधागुणवृद्धी स्यातामत आह—**अदन्ता इति** । ततश्चाल्लोपस्य स्थानिवत्त्वात्तदभाव इति भावः ॥—**तत्पूर्व इति** । तच्छब्दस्य समासोऽपि निपातनादिति बोध्यम् । डुधाञ् श्रत्पूर्वः, श्रद्धालुः । धेटस्तु नेदं रूपम्, श्रत्पूर्वस्य तस्य प्रयोगाभावादिति व्याचख्युः । कथं कृपालुः, स्पर्धालुः इति ? कृपां स्पर्धां च लातीति विग्रहे मृगय्वादित्वात्कुः ॥ ३१३९ **दाधेट्-**। डुदाञ्दोदेङां त्रयाणामेव ग्रहणं न तु दाण्दापोरित्याहुः ॥ ३१४१ **भङ्गुर इति** । 'चजोः-' इति कुत्वम् । अभिधानस्वभावाद्भञ्जेः कर्मकर्तर्येवेत्याहुः ॥ ३१४२ **विदिभिदि-**। विदेर्ज्ञानार्थस्यैव ग्रहणं न तु लाभार्थस्य, व्याख्यानात् ॥—**छिदुरमिति** । कर्मकर्तरि प्रत्यय इति वृत्तिः, नैतद्भाष्ये दृष्टम् । तथा च माघः-मुख्ये कर्तरि प्रायुङ्क्त-'प्रियतमाय वपुर्गुरुमत्सरच्छिदुरयाऽदुरयाचितमङ्गना' इति । इह अदुरिति च्छेदः ॥ ३१४३ **इत्वरः । इत्वरीति** । इण् गतौ, 'ह्रस्वस्य पिति-' इति तुक्, कित्त्वाद्गुणाभावः । 'टिड्ढा-' इत्यादिना स्त्रियां ङीप् ॥ ३१४५ **जागुरूकः** । 'जागुर्' इति पञ्चम्यन्तं, तद्व्याचष्टे—**जागर्तेरिति** । 'जागरूकः' इति सिद्धरूपमेव न तु निपातितम्, उत्तरसूत्रे ऊकस्यानुवृत्तिप्रसङ्गात् ॥ ३१४६ **यजजप-**॥—**यायजूक इति** । यजेर्यङि द्वित्वादि, 'दीर्घोऽकितः' इत्यभ्यासदीर्घः । अतो लोपे 'यस्य हलः' इति यलोपः ॥—**जञ्जपूक इत्यादि** । 'जपजभदहदश-' इत्यादिना नुक् । वावदूकशब्दस्तु 'उलूकादयश्च' (उ. सू.) इत्यत्र

**३१४७ । नमिकम्पिस्म्यजसकमहिंसदीपो रः** ।३।२।१६७ नम्रः । कम्प्रः । स्मेरः । जसिर्नञ्पूर्वः क्रियासातत्ये वर्तते । अजस्रम् । सन्ततमित्यर्थः । कम्रः । हिंस्रः । दीप्रः ।

**३१४८ । सनाशंसभिक्ष उः** ।३।२।१६८। चिकीर्षुः । आशंसुः । भिक्षुः ।

**३१४९ । विन्दुरिच्छुः** ।३।२।१६९। वेत्तेर्नुम् इषेश्छत्वं च निपात्यते । वेत्ति तच्छीलो विन्दुः । इच्छति इच्छुः ।

**३१५० । क्याच्छन्दसि** ।३।२।१७०। 'देवाञ्जिगाति सुम्नयुः' ।

**३१५१ । आदृगमहनजनः किकिनौ लिट् च** ।३।२।१७१। आदन्तादृदन्ताद्गमादिभ्यश्च किकिनौ स्तश्छन्दसि, तौ च लिड्वत् । 'पपिः सोमम्' 'ददिर्गाः' । बभ्रिर्वज्रम् । जग्मिर्युवा । 'जघ्निर्वृत्रममित्रियम्' । जज्ञिः । ॐ **भाषायां धाञ्कृसृगमिजनिनमिभ्यः** । दधिः । चक्रिः । सस्रिः । जग्मिः । जज्ञिः । नेमिः । ॐ **सासहिवावहिचाचलिपापतीनामुपसंख्यानम्** । यङन्तेभ्यः सहत्यादिभ्यः किकिनौ, पतेर्नीगभावश्च निपात्यते ।

**३१५२ । स्वपितृषोर्नजिङ्** ।३।२।१७२। स्वप्नक् । तृष्णक् । तृष्णजौ । तृष्णजः । 'धृषेश्चेति वाच्यम्' इति काशिकादौ । धृष्णक् ।

**३१५३ । शृवन्द्योरारुः** ।३।२।१७३। शरारुः । वन्दारुः ।

**३१५४ । भियः क्रुक्लुकनौ** ।३।२।१७४। भीरुः । भीलुकः । ॐ **क्रुकन्नपि वाच्यः** । भीरुकः ।

**३१५५ । स्थेशभासपिसकसो वरच्** ।३।२।१७५। स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । कस्वरः ।

**३१५६ । यश्च यङः** ।३।२।१७६। यातेर्यङन्ताद्वरच् स्यात् । 'अतो लोपः' २३०८ । तस्य 'अचः परस्मिन्–'५० इति स्थानिवद्भावे प्राप्ते 'न पदान्त–' ५१ इति सूत्रेण यलोपं प्रति स्थानिवद्भावनिषेधात् 'लोपो व्योः–' ८७३ इति यकारलोपः । अल्लोपस्य स्थानिवत्त्वमाश्रित्य आतो लोपे प्राप्ते 'वरे लुप्तं न स्थानिवत्'–यायावरः ।

**३१५७ । भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्** ।३।२।१७७। विभ्राट् । भाः । भासौ । धूः । धुरौ ।

---

वक्ष्यते । माधवस्त्वाह—कुर्वादिगणे वावदूक इति पाठादेव यङन्ताद्वदेरूकप्रत्यय इति **३१४८ सनाशंस—** । सनिति प्रत्ययग्रहणात्तदन्तग्रहणम् । 'षणु दाने, षण संभक्तौ' इति धात्वोस्तु नेह ग्रहणम्, गर्गादिषु विजिगीषुशब्दस्य पाठात् । 'आशंस' इति 'आङः शसि इच्छायाम्' इत्ययं गृह्यते न शंसु स्तुताविति, आङा सह निर्देशात् ॥ **३१४९ विन्दुरिच्छुः** । विद ज्ञाने इत्यस्यैव ग्रहणं नेतरेषाम् । एवमिषेरपि इच्छार्थकस्यैव ग्रहणं न तु—'इष गतौ, इष आभीक्ष्ण्ये' इत्यनयोः, अनभिधानान्निपातनाद्वेति भावः । बिन्दुशब्दस्तु पवर्गीयादिः 'बिदि अवयवे' अस्मान्मृगय्वादित्वात्कुप्रत्यये बोध्यः ॥ **३१५० क्याच्छन्दसि** । क्य इति क्यच्क्यष्क्यङां सामान्यग्रहणम् । क्यन्ताद्धातोश्छन्दसि विषये तच्छीलादिषु उप्रत्ययो भवतीति काशिका, कियः क्य इति व्याख्यानात्कण्ड्वादियगपि गृह्यते । तेन 'तुरण्यवोऽङ्गिरसो नक्षन्त', 'सपर्य्येम सपर्यवः', 'यमस्य योनौ शकुनं भुरण्युम्' इत्यादि सिद्धम् । तुरण त्वरायाम्, सपर पूजायाम्, भुरण धारणपोषणयोरित्येते कण्ड्वादिषु पठिताः । अथ कथं—'सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयवः' इति भट्टपादाः । मृगय्वादिषु असूयशब्दो द्रष्टव्य इति हरदत्तः ॥—**सुम्नयुरिति** । सुम्नशब्दात्क्यचि तदन्तादुः । 'न छन्दस्यपुत्रस्य' इति निषेधात् 'क्यचि च' इति ईत्वम् 'अकृत्सार्व–' इति दीर्घश्च न भवति ॥ **३१५१ आदृ—** । 'ऋदोरप्' इतिवत् 'आदृ' इति दकारो मुखसुखार्थो न त्वयं तकारः; तेन तात्परत्वाभावात् 'ऋ'इत्यनेन दीर्घोऽपि गृह्यते । ततुरिः । जगुरिः । तॄ प्लवनतरणयोरित्यस्य गॄ निगरण इत्यस्य च 'बहुलं छन्दसि–' इत्युत्वे रूपमिति प्राञ्चः । वस्तुतस्तु आदित्यादि प्रकृतिविशेषणम्, उदाहरणं प्रपञ्चमात्रम् । 'किकिनौ लिट् च' इत्येतावन्मात्रमेव विवक्षितम् । तथा च वार्तिकम्—'**किकिनावुत्सर्गश्छन्दसि सदादिभ्यो दर्शनात्**' इति । उदाहृतं च **भाष्ये**—सेहिः, नेमिः—इत्यादि । एवं स्थिते आदिति तपरकरणेऽपि न क्षतिरिति ध्वनयन्नाह—**आदन्तादृदन्तादिति** ॥—**बभ्रिर्वज्रमिति** । 'न लोका–' इति षष्ठीनिषेधाद्द्वितीया । किकिनोः स्थाने तिबादयो न । लिड्वदित्यतिदेशेन स्वरूपाबाधेनैव कार्यातिदेशात् । छान्दससूत्रद्वयोपन्यसनं 'भाषायां धाञ्–' इत्यादिवार्तिकविषयविवेचनार्थम् । इह च वार्तिके गमिर्यद्यपि न दृश्यते तथापि धातुवृत्तौ क्वचिद्वृत्तिपुस्तके च दर्शनादुपन्यस्तः ॥—**जग्मिरिति** । 'गमहनजन–' इत्युपधालोपः ॥—**जघ्निरिति** । 'अभ्यासाच्च' इति कुत्वम् ॥—**दधिरिति** । आतो लोपः ॥—**नेमिरिति** । एत्वाभ्यासलोपौ ॥—**सासहीत्यादि** । यङोऽतोलोपे यलोपः । अभ्यासदीर्घः ॥ —**नीगभावश्चेति** । 'नीग्वञ्चु–' इत्यादिना प्राप्तस्य नीगागमस्याभाव इत्यर्थः ॥ **३१५२ तृष्णगिति** । ङित्त्वान्न गुणः नजिङ इकार उच्चारणार्थः ॥ **३१५४ क्रुकन्नपीति** । अत एव 'भीरुभीरुकभीलुकाः' इत्यमरः ॥ **३१५५ ईश्वर इति** । 'नेड्वशि–' इतीडभावः ॥—**पेस्वर इति** । पिसृ पेसृ गतौ ॥—**कस्वर इति** । कस गतौ ॥ **३१५७ भ्राज** । आ क्वेरित्युक्तत्वात्तच्छीलादिष्वयं क्विप् । भ्राजृ दीप्तौ, भासृ दीप्तौ, धुर्वी हिंसायाम्, द्युत दीप्तौ, ऊर्ज बलप्राणनयोः, पॄ पालनपूरणयोः, जु गतौ सौत्रः । ग्रावपूर्वः ष्टुञ् स्तुतौ ॥—**विभ्राडिति** । 'व्रश्च–' इति षत्वम् । जश्त्वचर्त्वे ॥— **धूरिति** । 'राल्लोपः' इति वलोपः 'र्वोरुपधायाः–'

---

१ 'प्राप्ते पदस्य चरमावयवे द्विर्वचनादौ च कर्तव्ये परनिमित्तोऽजादेशो न स्थानिवत् । तस्य यलोपं' इति प्राचीनः पाठः । क्वचित्तु–'अतो लोपः' तस्य यलोपं प्रति स्थानिवत्त्वनिषेधात्' इत्येवम्पाठः । पाठनिर्णये सुधयः प्रमाणम् ।

विद्युत् । उर्क् । पूः । पुरौ । दृशिग्रहणस्यापकर्षाज्जवतेर्दीर्घः, जूः । जुवौ । जुवः । ग्रावशब्दस्य धातुना समासः सूत्रे निपात्यते, ततः क्विप्, ग्रावस्तुत् ।

३१५८ । **अन्येभ्योऽपि दृश्यते** ।३।२।१७८। क्विप् । छित् । भिद् । दृशिग्रहणं विध्यन्तरोपसंग्रहार्थम् । क्वचिद्दीर्घः, क्वचिदसंप्रसारणं, क्वचिद्द्वे, क्वचिद्ध्रस्वः । तथा च वार्तिकम्—❀ **क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च** । 'क्विब्वचि-' इत्यादिना उणादिसूत्रेण केषांचित्सिद्धे तच्छीलादौ तृना बाधा मा भूदिति वार्तिके ग्रहणम् । वक्तीति वाक् । पृच्छतीति प्राट् । आयतं स्तौति आयतस्तूः । कटं प्रवते कटप्रूः । जूरुक्तः । श्रयति हरिमिति श्रीः । ❀ **द्युतिगमिजुहोतीनां द्वे च** । दृशिग्रहणादभ्याससंज्ञा । दिद्युत् । जगत् । ❀ **जुहोतेर्दीर्घश्च** । जुहूः । ❀ **दॄ भये अस्य ह्रस्वश्च** । दीर्यतिं ददृत् । ❀ **ध्यायतेः संप्रसारणं च** । धीः ।

३१५९ । **भुवः संज्ञाऽन्तरयोः** ।३।२।१७९। मित्रभूर्नाम कश्चित् । धनिकाधमर्णयोरन्तरे यस्तिष्ठति विश्वासार्थं सः—प्रतिभूः ।

३१६० । **विप्रसम्भ्यो ड्वसंज्ञायाम्** ।३।२।१८०। एभ्यो भुवो डुः स्यान्न तु संज्ञायाम् । विभुर्व्यापकः । प्रभुः स्वामी । सम्भुर्जनिता । संज्ञायां तु—विभूर्नाम कश्चित् । ❀ **मितद्र्वादिभ्य उपसंख्यानम्** । मितं द्रवतीति मितद्रुः । शतद्रुः । शंभुः । अन्तर्भावितण्यर्थोऽत्र भवतिः ।

३१६१ । **धः कर्मणि ष्ट्रन्** ।३।२।१८१। धेटो धाञश्च कर्मण्यर्थे ष्ट्रन् स्यात् । 'धात्री जनन्यामलकीवसुमत्युपमातृषु' ।

३१६२ । **दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे** ।३।२।१८२। दाबादेः ष्ट्रन् स्यात्करणेऽर्थे । दान्त्यनेन दात्रम् । नेत्रम् ।

३१६३ । **तितुत्रतथसिसुसरकसेषु च** ।७।२।९। एषां दशानां कृत्प्रत्ययानामिण्न स्यात् । शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्रम् । दंष्ट्रा । नद्ध्री ।

३१६४ । **हलसूकरयोः पुवः** ।३।२।१८३। पूङ्पूञोः करणे ष्ट्रन् स्यात्, तच्चेत्करणं हलसूकरयोरवयवः । हलस्य सूकरस्य वा–पोत्रम् । मुखमित्यर्थः ।

३१६५ । **अर्तिलूधूसूखनसहचर इत्रः** ।३।२।१८४। अरित्रम् । लवित्रम् । धवित्रम् । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् ।

३१६६ । **पुवः संज्ञायाम्** ।३।२।१८५। पवित्रम् । येनाज्यमुत्पूयते, यच्चानामिकावेष्टनम् ।

---

इति दीर्घः ॥—**ऊर्गिति** । 'चोः कुः' । 'रात्सस्य' इति नियमान्न संयोगान्तलोपः ।—**पूरिति** । 'उदोष्ठ्यपूर्वस्य' इत्युत्वम् । 'र्वोः' इति दीर्घः ॥ **३१५८ वाक्** । **प्राडिति** । इह दीर्घः संप्रसारणाभावश्च । [illegible] 'वचिस्वपि–' इति, 'ग्रहिज्यावयि–' इत्यादिना ॥—**श्रयति हरिमिति श्रीरिति** । प्राचा तु श्रयन्त्येतामिति कर्मणि क्विबुदाहृतस्तत्र 'कर्तरि कृत्' इति सूत्रविरोधः स्पष्ट एव । बाहुलकं तु अगतिकगतिः ॥ ❀ **द्वे चेति** । कृतेऽपि द्वित्वे अभ्याससंज्ञेह दुर्लभा, प्रत्यासत्त्या षाष्ठद्वित्व एव प्रवृत्तेः । अत एव आष्टमिके सा नेत्याशङ्कायामाह—**दृशिग्रहणादिति** ॥—**दिद्युदिति** । 'द्युतिस्वाप्योः–' इत्यभ्यासस्य संप्रसारणम् ॥—**जगदिति** । 'गमः क्वौ' इति मलोपे तुक् । अत्र 'द्वे च' इति चकारेण दीर्घः समुच्चीयमानो द्युतिगम्योर्न भवति, दीर्घश्रुत्या 'अचश्च' इति परिभाषोपस्थानात् । अजन्तस्य जुहोतेरेव संभवतीत्याशयेनाह—❀ **जुहोतेर्दीर्घश्चेति** । जुहोतीति जुहूः ॥ ❀ **ह्रस्वश्चेति**—चकारेण द्वित्वं समुच्चीयते ॥—**धीरिति** । ध्यायतीति धीः । 'हलः' इति दीर्घः ॥ ननु ध्यायति पुरुषो न तु धीः, एवं जुहोत्यनया पुरुष इति सर्वसंमतत्वात् कथं हि भवदुक्तार्थः संगच्छत इति चेत् । अत्राह **हरदत्तः**—करणस्य कर्तृत्वविवक्षायां क्विप् भवति ॥ **३१५९ भुवः संज्ञा**–॥–**धनिकेत्यादि** । तेन ग्रामयोरन्तरे यस्तिष्ठति तत्र नेति भावः । एतच्च दृशिग्रहणानुवृत्त्या लभ्यते ॥ नन्वेवं प्रतिभूशब्दः संज्ञेति फलितं, तत्र 'संज्ञायाम्' इत्येव सिद्धं किमन्तरग्रहणेन ? **अत्राहुः**—यावद्द्रव्यभाविन्यः संज्ञाः । प्रतिभूशब्दस्तु सत्येव तस्मिन् ऋणप्रदानेन निवर्तेत इत्युभयोर्भेद इति ॥ **३१६०** शं सुखं भावयतीति शंभुरित्यर्थाभ्युपगमेनाह—**अन्तर्भावितेति** । शं भवति=सुखस्वरूपो भवतीति शंभुरित्यन्ये । शं भवत्यस्मादिति व्युत्पत्तिस्तु अपादाने डुप्रत्ययाभावाच्चिन्त्येति माधवः ॥ **३१६१ धः कर्मणि**—। कर्मणीति नोपपदम्, 'ह्वावामश्च' इत्यनन्तरमेव धः ष्ट्रनिति वक्तव्ये पृथक्कर्मग्रहणाद्व्याख्यानाद्वा–इत्याशयेनाह—**कर्मण्यर्थे इति** । अत एव धीयते=पीयत धात्री, स्तनदायिनीत्यादि व्याचक्षते ॥ **३१६२ दाम्नी**–। **३१६३ मेढ्रमिति** । 'हो ढः', धत्वष्टुत्वढलोपाः ॥—**दंष्ट्रेति** । षित्त्वेऽपि ङीष् इह न भवति, अनित्यः षितां ङीषित्युक्तत्वात् । अन्ये [illegible] ॥—**नद्ध्रीति** । 'नहो धः' इति धत्वम् । 'झषस्तथोर्धोऽधः', जश्त्वम् । सूत्रे दशेति नलोपिनो निर्देशो ज्ञापकः—क्वचिदकित्यपि दंशेर्नलोपो भवतीति । तेन 'दंश दशने' इत्यस्माल्ल्युटि–दशनाः–दन्ता इति सिद्धम् । न च सन्निधानात् ष्ट्रन्येव नलोपः स्यादितिवाच्यम् । 'शुनो दन्तदंष्ट्रा–' इति निर्देशात् ॥ **३१६४ तच्चेत्करणमित्यादि** । एतेन हलसूकरयोरभिधेयत्वमुपपदत्वं च निरस्तम् ॥—**मुखमित्यर्थ इति** । तत्रैव रूढिरिति भावः ॥ **३१६५ अर्तिलूधूसू**–। धू विधूनने इति कुटादिरेव गृह्यते, निरनुबन्धकत्वात् । अत एव 'गाङ्कुटा–' इति ङित्त्वाद्गुणनिषेधे उवङ्, तदाह—**धुवित्रमिति** ॥ **३१६६ पुवः**–।

३१६७ । **कर्तरि चर्षिदेवतयोः** ।३।२।१८६। पुव इत्रः स्यात् ऋषौ करणे देवतायां कर्तरि । ऋषिर्वेदमन्त्रः, 'तदुक्तमृषिणा' इति दर्शनात् । पूयतेऽनेनेति पवित्रम् । देवतायां तु 'अग्निः पवित्रं स मा पुनातु' ॥ इति पूर्वकृदन्तं समाप्तम् ॥

---

## अथोणादिप्रकरणम् ।

### प्रथमः पादः ।

१ । **कृवापाजिमिस्वदिसाध्यशूभ्य उण्** । करोतीति कारुः, शिल्पी कारकश्च । 'आतो युक्–' २७६१, वातीति वायुः । पायुर्गुदम् । जयत्यभिभवति रोगान्—जायुरौषधम् । मिनोति प्रक्षिपति देहे ऊष्माणमिति—मायुः पित्तम् । स्वादुः । साध्नोति परकार्य–साधुः । अश्नुते–आशु शीघ्रम् । 'आशुर्व्रीहिः पाटलः स्यात्' ॥ २ । **छन्दसीणः** । 'मा न आयौ' ॥ ३ । **दृसनिजनिचरिचटिभ्यो ञुण्** । दीर्यत इति दारु । 'स्नुः प्रस्थः सानुरस्त्रियाम्' । जानु । जानुनी । इह 'जनिवध्योश्च' २५१२ इति न निषेधः, अनुबन्धद्वयसामर्थ्यात् । चारु रम्यम् । चाटु प्रियं वाक्यम् । मृगय्वादित्वात्कुप्रत्यये 'चटु' इत्यपि ॥ ४ । **किञ्जरयोः श्रिणः** । किं शृणातीति–किंशारुः सस्यशूकं बाणश्च । जरामेति–जरायुर्गर्भाशयः । 'गर्भाशयो जरायुः स्यात्' ॥ ५ । **त्रो रश्च लः** । तरन्त्यनेन वर्णा इति–तालुः ॥ ६ । **कृके वचः कश्च** ।

---

पूङ्पूञोरुभयोर्ग्रहणमविशेषात् ॥ करण इत्यनुवृत्तेराह—**येनाज्यमिति** ॥ **३१६७ कर्तरि चर्षि-**।—**इत्रः स्यादिति** । करणे कर्तरि चेत्यर्थः । काशिकानुसारेण यथासंख्यं व्याचष्टे—**ऋषौ करणे इति** । 'कर्तरि कृत्' इति सूत्रस्थभाष्यकैयटयोस्तु यथासंख्यं नेति गम्यत इति शब्दकौस्तुभे स्थितम् ॥ ॥ **इति पूर्वकृदन्तम्** ॥

**अथोणादयः** ॥ **१ कृवापा-**। डुकृञ् करणे, वा गतिगन्धनयोः, पा पाने, पा रक्षणे, जि अभिभवे, डुमिञ् प्रक्षेपणे, स्वद आस्वादने, साध संसिद्धौ, अशू व्याप्तौ । 'विश्वकर्मणि ना कारुस्त्रिषु कारकशिल्पिनोः' इति मेदिनीकोशः । 'कारुः शिल्पिनि कारके' इति धरणिकोशस्तदेतदभिप्रेत्याह—**कारुरित्यादि** । आद्ये योगरूढिः, द्वितीये तु योगमात्रमिति विवेकः । अत एव द्वितीये धात्वर्थं प्रति कारकान्वयो भवत्येव । तथा च भट्टिः—'राघवस्य ततः कार्यं कारुर्वानरपुङ्गवाः । सर्ववानरसेनानामाश्वागमनमादिशत् ॥' इति । पिबत्यनेन तैलादिकमिति **पायुर्गुदस्थानम्** । 'गुदं त्वपानं पायुर्ना' इत्यमरः । पाति रक्षतीति विग्रहे रक्षकोऽपि । तथा च मन्त्रः—'भुवस्तस्य स्वतवाँः पायुरग्ने' इति । 'स्वतवान् पायौ' इति नस्य रुत्वम् । 'अगदो जायुरित्यपि' इत्यमरः । पुंलिङ्गसाहचर्याज्जायुः पुंसि । '**मायुः** पित्तं कफः श्लेष्मा' इत्यमरः । गोपूर्वात्–गां=वाचं विकृतां मिनोति प्रक्षिपतीति **गोमायुः** शृगाल इत्युज्ज्वलदत्तः । वस्तुतस्तु मायुशब्दः 'यत्पशुर्मायुमकृत' 'गोमायुरेकः' इत्यादौ वेदभाष्यकारादिभिस्तथैव व्याख्यातत्वात् । स्वदते रोचते इति **स्वादुः** । विशेष्यनिघ्नोऽयम् । एवं **साधुरपि** ॥—**आशु शीघ्रमिति** । विलम्बाभावमात्रे क्लीबं, तद्विशिष्टद्रव्यपरत्वे तु त्रिलिङ्गम् । 'अथ शीघ्रं त्वरितम्' इत्युपक्रम्य 'क्लीबे शीघ्राद्यसत्त्वे स्यात्त्रिष्वेषां मेद्यगामि यत्' इत्यमरः । व्रीहौ पुंस्येव । 'उणादयो बहुलम्' इति बहुलवचनादन्यस्मादप्युण्भवति—रह त्यागे, गृहीत्वा चन्द्रं रहति=त्यजतीति **राहुः** । वस निवासे, वसत्यस्मिन्सर्वमिति सर्वत्रासौ वसतीति वा **वासुः**, वासुश्चासौ देवश्च वासुदेवः । वसुदेवस्यापत्यमित्यस्मिन्नर्थे 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यणि कृते वासुदेव इति व्युत्पत्त्यन्तरमिति दिक् ॥ **२ छन्दसीणः** । उणनुवर्तते । एति गच्छतीत्यायुः ॥—**मा न आयौ इति** । आयुशब्दो मनुष्यपर्यायेषु वैदिकनिघण्टौ पठितः । अत एव 'त्वमग्ने प्रथममायुमायवे' 'मा नस्तोके तनये मा न आयौ' इत्यादिमन्त्रेषु वेदभाष्ये तथैव व्याख्यातम् । अर्वाचीनास्तु 'छन्दसीणः' इति सूत्रं बहुलवचनाद्भाषायामपि प्रवर्तत इति स्वीकृत्य 'आयुर्जीवितकालो ना' इत्यमरग्रन्थे आयुशब्दमुकारान्तं व्याचख्युः ॥ ननु 'एतेर्णिच्च' इत्युस्प्रत्यये सकारान्तो वक्ष्यमाण आयुःशब्दस्तु लोकवेदयोर्निर्विवाद एव । अत एव जटा आयुरस्येति विग्रहे 'गृध्रं हत्वा जटायुषम्' इति रामायणप्रयोगः, 'यदि त्रिलोकी गणनापरा स्यात्तस्याः समाप्तिर्यदि नायुषः स्यात्' इति श्रीहर्षप्रयोगश्च संगच्छते । तथा च 'आयुर्जीवितकालो ना' इत्यत्रायुःशब्दः सकारान्त इत्येव व्याख्यायतां किमुकारान्ताभ्युपगमेनेति चेत् । **अत्राहुः**—सकारान्त आयुःशब्दो नपुंसक इति तस्य पुंलिङ्गता नेत्याशयेन तथोक्तमिति । अन्ये तु—'छन्दसीणः' इति सूत्रस्य भाषायां प्रवृत्त्यभावे 'मा वधीष्ट जटायुं माम्' इति भट्टिप्रयोगः, 'तटीं विन्ध्यस्याद्रेरभजत जटायोः प्रथमजः' इति विन्ध्यवर्णने अभिनन्दोक्तप्रयोगश्च न संगच्छेतेत्याहुः । वस्तुतस्तु जटां याति प्राप्नोतीति जटायुः । मृगय्वादित्वात्कुः । आयातीत्यायुः । एवं च 'जटायुषा जटायुं च विद्यादायुं तथायुषा' इति द्विरूपकोशः, 'वायुना जगदायुना' इति वर्णविवेकश्च सुसाध इति दिक् ॥ **३ दृसनि-**। दॄ विदारणे, षणु दाने, जन जनने, चर गतौ, चट भेदने ॥ —**दार्विति** । 'काष्ठं दार्विन्धनं त्वेधः' इत्यमरः ॥—**चाट्विति** । 'चटु चाटु प्रियं वाक्यम्' इति हट्टचन्द्रः । 'चाटुर्नरि प्रियोक्तिः स्यात्' इति रत्नमालाकोशः । नरि=पुंसि । 'स चकर किल चाटून् प्रौढयोषिद्वदस्य' इति माघः । माघे तु नपुंसकमपि दर्शितम् । 'चाटु चाकृतकसंभ्रममासाम्' इति ॥ **४ किंजरयोः-**। शॄ हिंसायाम्, इण् गतौ, आभ्यां किंजरयोरुपपदयोर्ञुण् स्यात् ॥—**सस्येति** । 'किंशारुर्ना सस्यशूके विशिखे कङ्कपक्षिणि' इति मेदिनीकोशः ॥ **५ त्रो रश्च लः** । तॄ प्लवनतरणयोः । त्रः रश्चेति च्छेदः । केचित्तु तॄ ऋ इति प्रश्लिष्य द्वयोरपि सवर्णदीर्घे-त्रौ, तयोस्त्रोरित्युक्त्वा ऋ गतावित्यस्मादपि ञुण्, रस्य ल

कृकेन=गलेन वक्तीति कृकवाकुः । 'कृकवाकुर्मयूरे च सरटे चरणायुधे' इति विश्वः ॥ ७ । **भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः ।** भरति बिभर्ति वा भरुः स्वामी हरश्च । म्रियन्तेऽस्मिन् भूतानि मरुर्निर्जलदेशः । शेते शयुरजगरः । तरुर्वृक्षः । चरन्ति भक्षयन्ति देवता इममिति चरुः । त्सरुः खड्गादिमुष्टिः । तनु स्वल्पम् । 'स्त्रियां मूर्तिस्तनुस्तनूः' । धनुः शस्त्रविशेषः । 'धनुषा च धनुं विदुः' । 'धनुरिवाजनि वक्रः' इति श्रीहर्षः । मयुः किंनरः । 'मद्गुः पानीयकाकिका' इति रभसः । न्यङ्क्वादित्वात्कुत्वम् । जश्त्वेन सस्य दः ॥ ८ । **अणश्च ।** 'लवलेशकणाणवः' । चात्कटिवटिभ्याम् । कटुः । वटुः ॥ ९ । **धान्ये नित् ।** धान्ये वाच्येऽण उप्रत्ययः स्यात्, स च नित् । नित्त्वादाद्युदात्तः । 'प्रियङ्गवश्च मेऽणवश्च मे' । 'व्रीहिभेदस्त्वणुः पुमान्' । निद्ग्रहणं 'फलिपाटि–' १८ इत्यादि सूत्रमभिव्याप्य संबध्यते ॥ १० **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च ।** शृणातीति शरुः । 'शरुरायुधकोपयोः' । स्वरुर्वज्रम् । स्नेहुर्व्याधिः । चन्द्र इत्यन्ये । त्रपु सीसम् । 'पुंसि भूम्न्यसवः प्राणाः' । 'वसुर्देवेऽग्नौ योक्त्रेऽशौ वसु तोये धने मणौ' । हनुर्वक्त्रैकदेशः । क्लेदुश्चन्द्रः । बन्धुः । मनुः । चात् 'बिदि अवयवे' बिन्दुः ॥ ११ । **स्यन्देः संप्रसारणं धश्च ।** 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः ॥ १२ । **उन्देरिच्चादेः ।** उनत्ति इन्दुः ॥ १३ । **ईषेः किच्च ।** ईषेरुः स्यात्स च कित् आदेरिकारादेशश्च । ईषते=हिनस्ति इषुः शरः । 'इषुर्द्वयोः' ॥ १४ । **स्कन्देः सलोपश्च ।** कन्दुः ॥ १५ । **सृजेरसुम् च ।** चात्सलोप उप्रत्ययश्च । रज्जुः ॥ १६ । **कृतेराद्यन्तविपर्ययश्च ।** ककारतकारयोर्विनिमयः । तर्कुः

---

इति व्याख्याय इयर्ति अर्यते वा—आलुः, शाकविशेषो घटी चेत्याहुः । 'कर्कर्यालुर्गलन्तिका' ॥ ७ **भृमृशी—।** भृञ् भरणे, मृङ् प्राणत्यागे, शीङ् स्वप्ने, तॄप्लवनतरणयोः, चर गतौ–अयं भक्षणेऽपि, त्सर छद्म गतौ, तनु विस्तारे, धन धान्ये, डुमीञ् प्रक्षेपणे, टुमस्जो शुद्धौ ॥**—भरुरिति ।** 'भरुः स्वर्णे हरे पुंसि' इति मेदिनी । 'भरुर्भर्तृकनकयोः' इति हेमचन्द्रः ॥**—शयुरिति ।** 'अजगरे शयुर्वाहस इत्युभौ' इत्यमरः ॥**—तरुरिति ।** तरन्ति नरकमनेन रोपकाः॥**—चरुरिति ।** अनवस्नावितान्तरूष्मपक्व ओदन इति याज्ञिकाः । त्रिवृच्चर्वधिकरणेऽप्येवमुक्तम् । 'उगवादिभ्यो यत्' इति सूत्रे कैयटस्त्वाह—स्थालीवाची चरुशब्दस्तात्स्थ्यादोदने भाक्त इति । 'तनुः काये त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे' इति मेदिनी । 'धनुः पुमान् प्रियालद्रौ राशिभेदे शरासने' इति नान्ते मेदिनी । विश्वप्रकाशमुदाहरति**—धनुषा चेत्यादि ।** धनुषा सार्धं धनुं विदुरित्यर्थः । 'स्यात्तनुस्तनुषा सार्धम्' इत्यतः सार्धमित्यनुषज्यते । 'शुद्धवंशजनितोऽपि गुणस्य स्थानतामनुभवन्नपि शक्तः । क्षिप्नुरेनमृजुमाशु विपक्षं सायकम्' इति श्रीहर्षश्लोकशेषः । 'धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यति' इति धन्वन्तरिः । इह पूर्वत्र च धनुरिति उकारान्तः सकारान्तो वा बोध्यः । न च सकारान्तधनुःशब्दो नपुंसक एवेति शङ्क्यम् । 'अथास्त्रियाम् । धनुश्चापौ' इत्यमरोक्त्या तस्यापि पुंस्त्वात् ॥**—किंनर इति ।** 'तुरंगवदनो मयुः' इत्यमरः । 'मीनातिमिनोति–' इत्यात्वं तु नेह, बाहुलकात् । 'मयुस्तुरंगवदने मृगेऽपि मयुरिष्यते' इति विश्वः । मज्जति पानीये इति मद्गुः ॥ ८ **अणश्च ।** अण शब्दे अस्मादुप्रत्ययः स्यात् ॥**—चादिति ।** कटे वर्षादौ, वट वेष्टने । कटति रसनामिति कटुः । 'कटुः स्त्री कटुरोहिण्यां लताराजिकयोरपि । नपुंसकमकार्ये स्यात्पुंलिङ्गो रसमात्रके । त्रिषु तद्वत्सुगन्ध्योश्च मत्सरेऽपि खरेऽपि च' इति मेदिनी ॥**—वटुरिति ।** वटतीति वटुः । 'वटुर्द्विजसुतः स्मृतः' इति संसारावर्तः । नटवटुरिति तूपचारात् ॥ ९ **अभिव्याप्येति ।** यद्यपि 'फलिपाटि–' इति सूत्रं यावदनुवर्तत इति न्यासग्रन्थेन 'मर्यादीकृत्य' इत्यपि प्रतीयते तथाप्यभिव्याप्येत्येवोचितम्, 'पिबतं सोम्यं मधु' इत्यादौ मधुशब्दस्याद्युदात्ततादर्शनात् । 'वोतो गुणवचनात्' इति सूत्रे हरदत्तेनाप्यभिव्याप्येति स्पष्टमभिधानाच्चेति भावः ॥ १० **शॄस्वृस्निहि–।** शॄ हिंसायाम्, स्वृ शब्दोपतापयोः, ष्णिह उपतापे, त्रपूष् लज्जायाम्, असु क्षेपणे, वस निवासे, हन हिंसागत्योः, क्लिदू आर्द्रीभावे, बन्ध बन्धने, मन ज्ञाने ॥**—शरुरिति ।** 'शरुः कोपे शरे वज्रे' इति हेमचन्द्रः ॥**—स्वरुर्वज्रमिति ।** 'शतकोटिः स्वरुः शम्बः' इत्यमरः ॥**—त्रपु सीसमिति ।** तद्धि अग्निं दृष्ट्वा त्रपते=लज्जत इव । 'त्रपु सीसकरङ्गयोः' इति मेदिनी । अस्यन्ति क्षिपन्ति शरीरमित्यसवः प्राणाः ॥**—हनुरिति ।** 'हनुः पुमान्परो गण्डात्' इति वररुचिकोशः । स्त्रीलिङ्गोऽप्ययम् । 'हनुर्हट्टविलासिन्यां नृत्यारम्भे गदेस्त्रियाम् । द्वयोः कपोलावयवे' इति मेदिनीकोशः । अतिशायने मतुप् । हनुमान् । 'अन्येषामपि दृश्यते' इति दशिग्रहणात्पाक्षिको दीर्घः, हनूमान् । स्नेहेन बध्नातीति **बन्धुः ।** प्रज्ञादित्वाद्बान्धवः । 'बन्धुर्बन्धूकपुष्पे स्याद्बन्धुर्भ्रातरि बान्धवे' इति विश्वः । **मनुरादिराजो** मन्त्रश्च ॥ ११ **स्यन्देः–।** स्यन्दू प्रस्रवणे ॥ १२ **उन्देः–।** उन्दी क्लेदने ॥ १३ **ईषेः ।** ईष गतिहिंसादानेषु ॥ १४ **स्कन्देः–।** स्कन्दिर् गतिशोषणयोः ॥**—कन्दुरिति ।** स्कन्दत्यस्मिञ्जनताप इति व्युत्पत्त्या भोगस्थानमिति केचित् । **अन्ये तु**—स्कन्दति शोषयतीति कन्दुर्लोहादिपात्रमित्याहुः । अत एव 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना कन्दुर्वा स्वेदनी स्त्रियाम्' इत्यमरः । 'कन्दुर्वा ना' इति पूर्वेणान्वयाद्वा पुमानित्यर्थः ॥ १५ **सृजेः–।** सृज विसर्गे । सृजतीति रज्जुः, स्त्रियाम् । आगमसकारस्य श्चुत्वेन शः । जश्त्वेन जः । सृजेरज्जुम् चेति सुवचमिति नव्याः । 'रज्जुर्वेण्यां गुणेऽपि च' इति मेदिनी ॥ १६ **कृतेराद्यन्त—।** कृती छेदने ॥**—तर्कुरिति ।** कृन्त्यतेऽनेनेति तर्कुः सूत्रवेष्टनयन्त्रविशेषः । 'तर्कुटी सूत्रला तर्कुः' इति

सूत्रवेष्टनम् ॥ १७ । **नावञ्चेः** । न्यङ्क्वादित्वात्कुत्वम् । नियतमञ्चति न्यङ्कुर्मृगः ॥ १८ । **फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च** । फलेर्गुक्, फल्गु । पाटेः पटिः, पाटयतीति पटुः । नम्यतेऽनेन नाकुर्वल्मीकम् । मन्यते इति मधु । जायते इति जतु ॥ १९ । **वलेर्गुक्च** । 'वल संवरणे' वल्गुः ॥ २० । **शः कित्सन्वच्च** । श्यतेरुः स्यात्स च कित् सन्वच्च । शिशुर्बालः ॥ २१ । **यो द्वे च** । ययुरश्वोऽश्वमेधीयः । 'सन्वत्' इति प्रकृते द्वेग्रहणमित्वनिवृत्त्यर्थम् ॥ २२ । **कुर्भ्रश्च** । बभ्रुः । 'बभ्रुर्मुन्यन्तरे विष्णौ बभ्रू नकुलपिङ्गलौ' । चादन्यतोऽपि—चक्रुः कर्ता । जघ्नुर्हन्ता । पपुः पालकः ॥ २३ । **पॄभिदिव्यधिगृधिधृषिभ्यः** । कुः स्यात् । पुरुः । भिनत्ति भिदुर्वज्रम् । 'ग्रहिज्या–' २४१२ इति संप्रसारणम्, विरहिणं विध्यति विधुः । 'विधुः शशाङ्के कर्पूरे हृषीकेशे च राक्षसे' । गृधुः कामः । धृषुर्दक्षः ॥ २४ । **कृग्रोरुच्च** । करोतीति कुरुः । गृणातीति गुरुः ॥ २५ । **अपदुःसुषु स्थः** । 'सुषामादिषु च' १०२४ इति षत्वम्, अपष्ठु प्रतिकूलम् । दुष्ठु । सुष्ठु ॥ २६ । **रपेरिच्चोपधायाः** । अनिष्टं रपतीति रिपुः ॥ २७ । **अर्जिदृशिकम्यमिपशिबाधामृजिपशितुक्धुक्दीर्घहकाराश्च** । अर्जयति गुणान् ऋजुः । सर्वानविशेषेण पश्यतीति पशुः । कन्तुः कन्दर्पः । अन्धुः कूपः । 'पांशुर्ना न द्वयो रजः' । 'तालव्या अपि दन्त्याश्च सम्बसूकरपांसवः' । बाधते इति बाहुः । 'बाहुः स्त्रीपुंसयोर्भुजः' ॥ २८ । **प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च** । त्रयाणां कुः संप्रसारणं भ्रस्जेः सलोपश्च । पृथुः । मृदुः । न्यङ्क्वादित्वात्कुत्वम्, भृज्जति तपसा भृगुः ॥ २९ । **लङ्घिबंह्योर्नलोपश्च** । लघुः । ॐ **वालमूललघ्वलमङ्गुलीनां वा लो रत्व-**

---

हारावली ॥ **१७ नावञ्चेः** । अञ्चु गतौ । 'न्यङ्कुर्मुनौ मृगे पुंसि' इति मेदिनी ॥ **१८ फलिपाटि–** । फल निष्पत्तौ, पट गतौ, ण्यन्तः । णम प्रह्वत्वे शब्दे, मन ज्ञाने, जनी प्रादुर्भावे, एभ्य उः स्यादेषां च यथाक्रमं गुगागमः पटि नाकि ध त इत्यादेशाश्च भवन्ति । इह एकापि षष्ठी विषयभेदाद्भिद्यते । गुगागमे हि फलेरवयवषष्ठी, पट्याद्यादेशचतुष्टयविधौ तु पाट्यादिभ्यः स्थानषष्ठी, सापि धतयोर्विधौ अन्ता–इत्युपसंह्रियत इति विवेकः । अनागमकानां सागमका आदेशा इति पक्षे तु स्थानषष्ठ्येवेति बोध्यम् । 'फल्गवसारेऽभिधेयवत् । नदीभेदे मलय्वां स्त्री' इति मेदिनी ॥—**नाकुर्वल्मीकमिति** । 'वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम्' इत्यमरः ॥—**मध्विति** । 'मधुश्चैत्रे च दैत्ये च मद्ये पुष्परसे मधु' इति हट्टचन्द्रः । 'मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः । अर्धर्चादिगणे पाठात्पुंनपुंसकयोर्मधुः' इति शाश्वतः ॥ **१९ वल संवरण इति** । दन्त्योष्ठ्यादिः । 'वल्गुः स्याच्छगले पुंसि सुन्दरे चाभिधेयवत्' इति मेदिनी । यत्तु उज्ज्वलदत्तेन 'बलेर्गुक् च' इति ओष्ठ्यादि पठित्वा बल प्राणने इत्युपन्यस्तं तल्लक्ष्यविरोधादुपेक्ष्यम् । 'अयं नाभा वदति वल्गु वो गृहे' इत्यादौ दन्त्योष्ठ्यपाठस्य निर्विवादत्वात् ॥ **२० शः कित्–** ॥ शो तनूकरणे, अस्मादुप्रत्ययः 'आदेच उपदेशे' इत्यात्वं, द्वित्वं, 'सन्यतः' इत्यभ्यासस्येत्वम्, 'आतो लोप इटि च' इत्याकारलोपः, शिशुः ॥ **२१ यो द्वे च** । या प्रापणे ॥ **२२ कुर्भ्रश्च** । भृञ् भरणे, अस्मात्कुप्रत्ययो धातोर्द्वित्वं च । भरतीति बभ्रुः । धरणिकोशस्थमाह—**बभ्रुरित्यादि** । 'बभ्रुर्वैश्वानरे शूलपाणौ च गरुडध्वजे । विशाले नकुले पुंसि पिङ्गले त्वभिधेयवत्' इति मेदिनीकोशः ॥—**चादन्यतोऽपीति** । भ्रः कुश्चेति वक्तव्ये प्राक् प्रत्ययनिर्देशादित्येके । भ्रश्चेति प्रकृतिसंसृष्टेन चकारेण प्रकृत्यन्तरसमुच्चयादित्यन्ये ॥ **२३ पॄभिदि–** । पॄ पालनपूरणयोः, भिदिर् विदारणे, व्यध ताडने, गृधु अभिकाङ्क्षायाम्, ञिधृषा प्रागल्भ्ये ॥—**पुरुरिति** । कुप्रत्यये परतः 'उदोष्ठ्यपूर्वस्य' इत्युत्वे रपरत्वम् । 'पुरुः प्राज्येऽभिधेयवत् । पुंसि स्याद्देवलोके च नृपभेदपरागयोः' इति मेदिनी । 'विधुः शशाङ्के' इत्यादिस्तु विश्वकोशः । इह सूत्रे धृषिहृषिभ्यश्चेति पठित्वा हृषुर्हर्षः । 'सूर्याग्निशनिराहवोऽपि हृषवः' इति केचित् ॥ **२४ कृग्रोरुच्च** । डुकृञ् करणे, गॄ शब्दे, आभ्यां कुः स्यादुकारोऽन्तादेशश्च । 'उरण् रपरः' । 'कुरुर्नृपान्तरे भक्ते पुमान् पुंभूम्नि नीवृति' इति मेदिनी ॥ **२५ अपदुःसु–** । ष्ठा गतिनिवृत्तौ ॥—**सुषामेत्यादि** । एतच्च न्यासाद्यनुरोधेनोक्तम् । वार्तिककृता तु स्थास्थिन्स्थूनामुपसंख्यानम् । 'अपष्ठुः पुंसि बाले च वामे स्यादन्यलिङ्गकः' इति मेदिनी । वामे=प्रतिकूले । एषां त्रयाणां मृगय्वादिपाठेन सिद्धत्वात्सूत्रमिदं न्यासकारस्य न संमतमिति रक्षितः ॥ **२७ अर्जिदृशि–** । 'अर्ज अर्जने' अस्य ऋजिरादेशः, दृशेः पशिरादेशः, कमेस्तुगागमः । अम रोगे गत्यादौ वा, अस्य धुगागमः । पशि नाशने सौत्रो धातुरस्य दीर्घः । बाधृ लोडने, अस्य हादेशः । षड्भ्योऽपि कुप्रत्ययः स्यादित्यर्थः ॥—**अविशेषेणेति** । चादिगणे पश्विति पठितम् । 'पशु दृश्यर्थमव्ययम्' इति धरणिः । कन्तुः कन्दर्पः । 'कन्तुर्मकराङ्कः' इति त्रिकाण्डशेषः ॥—**पांशुरिति** । पशि पसि नाशने चुरादिर्दन्त्यान्तः ॥—**स्त्रीपुंसयोरिति** । उक्तं ह्यमरेण 'द्वौ परौ द्वयोः । भुजबाहू' इति । परौ द्वौ भुजबाहुशब्दौ द्वयोः स्त्रीपुंसयोरिति तदर्थः । अकारान्तोऽप्ययम् । अत एव 'बाहोऽश्वभुजयोः पुमान्' इति दामोदरः । 'बाहा भुजे पुमान्मानभेदाश्ववृषवायुषु' इति मेदिन्यां टाबन्तोऽप्ययम् ॥ **२८ प्रथिम्रदि—** । प्रथ प्रख्याने, म्रद मर्दने, भ्रस्ज पाके । प्रथते इति पृथुः । 'पृथुः स्यान्महति त्रिषु । त्वक्पत्र्यां कृष्णजीरेऽथ पुमानग्नौ नृपान्तरे' इति मेदिनी । म्रदितुं शक्यतेऽकठिनत्वादिति मृदुः कोमलः । 'भृगुः शुक्रे प्रपाते च जमदग्नौ पिनाकिनि' इति विश्वः ॥ **२९ लङ्घि–** । लघि गतौ, बहि महि वृद्धौ ॥—**लघुरिति** । 'पृक्कायां स्त्री लघुः क्लीबं शीघ्रे कृष्णागुरुण्यपि' इति त्रिकाण्डशेषः । 'लघुरगुरौ च मनोज्ञे निःसारे वाच्यवत्क्लीबम् । शीघ्रे कृष्णागुरुणि च पृक्कानामौ-

मापद्यते । रघुर्नृपभेदः । बहुः ॥ ३० । ऊर्णोतेर्नुलोपश्च । ऊरुः सक्थि ॥ ३१ । महति ह्रस्वश्च । उरु महत् ॥ ३२ । श्लिषेः कश्च । श्लिष्यतीति श्लिकुर्भृत्यः, उद्यतो ज्योतिश्च ॥ ३३ । आङ्परयोः खनिशृभ्यां डिच्च । आ खनतीति आखुः । परं शृणातीति परशुः । पृषोदरादित्वादकारलोपात्पर्शुरपि ॥ ३४ । हरिमितयोर्द्रुवः । 'द्रु गतौ' अस्मात् हरिमितयोरुपपदयोः कुः स च डित् । हरिभिर्द्रूयते हरिद्रुर्वृक्षः । मितं द्रवति मितद्रुः समुद्रः ॥ ३५ । शते च । शतधा द्रवति शतद्रुः । बाहुलकात्केवलादपि, द्रवत्यूर्ध्वमिति द्रुर्वृक्षः शाखा च । तद्वान् द्रुमः ॥ ३६ । खरु शङ्कु पीयु नीलंङ्गु लिगु । पञ्चैते कुप्रत्ययान्ता निपात्यन्ते । खनते रेफश्चान्तादेशः, खरुः कामः क्रूरो मूर्खोऽश्वश्च । 'शङ्कुर्ना कीलशल्ययोः' । पिबतेरीत्वं युगागमश्च, पीयुर्वायसः कालः सुवर्णं च । निपूर्वात् 'लगि गतौ' अस्मात्कुत्वं नेर्दीर्घश्च, नीलङ्गुः क्रिमिविशेषः शृगालश्च । नीलाङ्गुरिति पाठान्तरम् । तत्र धातोरपि दीर्घः । 'लगे सङ्गे' अस्य अत इत्वं च, लगतीति लिगु चित्तम् । लिगुर्मूर्खः । ३७ । मृगय्वादयश्च । एते कुप्रत्ययान्ता निपात्यन्ते । मृगं यातीति मृगयुर्व्याधः । देवयुर्धार्मिकः । मित्रयुर्लोकयात्राऽभिज्ञः । आकृतिगणोऽयम् ॥ ३८ । मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् । मन्दुरा वाजिशाला । वाशुरा रात्रिः । मथुरा । चतुरः । चङ्कुरो रथः । अङ्कुरः । खर्जूरादित्वात् 'अङ्कूरः' अपि ॥ ३९ । व्यथेः संप्रसारणं किच्च । 'विथुरश्चोररक्षसोः' ॥ ४० । मुकुरदर्दुरौ । मुकुरो दर्पणः । बाहुलकान्मकुरोऽपि । 'दॄ विदारणे' । धातोर्द्विवचनमभ्यासस्य रुक् टिलोपश्च ।

'दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः ।
दर्दुरा चण्डिकायां स्याद्ग्रामजाले च दर्दुरम्' ॥ इति विश्वः ।

---

षधौ स्त्रियाम्' इति मेदिनी ॥—**नृपभेद इति** । एतेन 'अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभवम्' इति कालिदासवचनं व्याख्यातम् ॥—**बहुरिति** । 'बहु स्यात्त्र्यादिसंख्यासु विपुले त्वभिधेयवत्' इति मेदिनी ॥ **३० ऊरुरिति** । 'सक्थि क्लीबे पुमानूरुः' इत्यमरः । ऊर्णूयते आच्छाद्यते इत्यूरुः । कर्मणि प्रत्ययः ॥ **३१ उरु महदिति** । कर्तरि प्रत्ययः ॥ **३२ श्लिषेः**—। श्लिष आलिङ्गने अस्मात्कुप्रत्ययः कश्चान्तादेशः ॥—**उद्यत इति** । स हि यावत्कार्यं श्लिष्यति=लगति । व्याप्रियत इति यावत् ॥ **३३ आङ्परयोः**—। खनु अवदारणे, शॄ हिंसायाम् ॥—**पर्शुरपीति** । 'पर्शुः परशुना सह' इति विश्वः ॥ **३४ हरिमितेति** । द्रु गतौ, अस्माद्धरिमितयोरुपपदयोः कुः स्यात्स च डित् ॥—**हरिद्रुर्वृक्ष इति** । दारुहरिद्रा इत्येके । शतद्रुर्नदीभेदः । 'शतद्रुस्तु शुतुद्रिः स्यात्' इत्यमरः ॥—**तद्वानिति** । 'द्युद्रुभ्यां मः' इति मः ॥ **३६ खरुशङ्कु**—। खनु अवदारणे, शकि शङ्कायाम् ॥—**काम इत्यादि** । **खरुः** पतिंवरा कन्येत्यपि बोध्यम् । खरुर्दर्पे हरे दैत्ये हये श्वेते तु वाच्यवत्' इति विश्वत्रिकाण्डशेषौ । शङ्कते अस्मादिति **शङ्कुः** । 'शङ्कुः कीले गरे शस्त्रे संख्यापादपभेदयोः । यादोभेदे च पापे च स्थाणावपि च दृश्यते, इति विश्वः ॥—**पीयुरिति** । 'पीयुः काले रवौ घोरे' इति मेदिनी ॥—**क्रिमिविशेष इति** । **'नीलङ्गुः** क्रिमिजातौ स्याद्भम्भरालीप्रसूनयोः' इति विश्वः । 'नीलङ्गुः स्यात्क्रमौ पुंसि भम्भराल्यां तु योषिति' इति मेदिनीकारः ॥—**पाठान्तरमिति** । 'नीलङ्गुरपि नीलाङ्गुः' इति विश्वः ॥—**धातोरपीति** । केचित्तु नीलशब्दे उपपदे गमेष्टिलोपः, उपपदस्य मुम्, दीर्घश्च पाक्षिको निपात्यते इत्याहुः । **'लिगु** चित्ते नपुंसकम्' इति वररुचिः ॥ **३७ मृगय्वादयश्च** । 'मृगयुः पुंसि गोमायौ व्याधे च परमेष्ठिनि' इति मेदिनी । 'मृगयुर्ब्रह्मणि ख्यातो गोमायुव्याधयोरपि' इति विश्वः । 'देवयुर्वाच्यलिङ्गः स्याद्धार्मिके लोकयात्रिके' इति मेदिनी ॥—**आकृतिगण इति** । तेन पील प्रतिष्टम्भे, अस्मात्कुः । 'पीलुर्गजे द्रुमे काण्डे परमाणुप्रसूनयोः' इति विश्वः । **भाट्टास्तु**—पीलुशब्दस्य वृक्षे आर्यप्रसिद्धिर्गजे तु म्लेच्छप्रसिद्धिरित्याश्रित्य व्यवजह्रुः । पडि गतौ, अस्मात्कुः धातोर्वृद्धिश्च । पाण्डुः । कडि मदे—कण्डुरित्यादि बोध्यम् ॥ **३८ मन्दिवाशि**—। मदि स्तुत्यादौ, वाशृ शब्दे, मथे विलोडने, चते याचने, चङ्क इति सौत्रो धातुः, अकि लक्षणे ॥—**वाशुरा रात्रिरिति** । वाश्यन्ते अस्यामिति विग्रहः । वाशुरो गर्दभ इत्यन्ये । 'वाशुरा वाशितारात्र्योः' इति मेदिनीहेमचन्द्रौ ॥—**चङ्कुर इति** । 'चङ्कुरः स्यन्दने वृक्षे' इति मेदिनी । 'अङ्कुरो रुधिरे लोम्नि पानीयेऽभिनवोद्भिदि' इति ॥—**खर्जूरादित्वादिति** । ऊरप्रत्ययोऽपीति भावः । 'अङ्कुरोऽङ्कूर एव च' इति विश्वप्रकाशः ॥ **३९ व्यथेः**—। व्यथ भयसंचलनयोरस्मादुरच् कित्स्याद्धातोः संप्रसारणं च । दशपाद्यां तु 'व्यथेः संप्रसारणं धः किच्च' इति सूत्रं पठित्वा धकारमन्तादेशं विधाय विधुरोऽनभिक इत्युदाहृतम् । माधवप्रसादकारादिभिरपि तदेवानुसृतं । न त्वेतद्युक्तम् । 'त्वमेषां विथुरा शवांसि' 'अथ विद्धा विथुरेणाचिदस्रा' इत्यादिमन्त्रेषु थकारपाठस्य निर्विवादत्वात् । यदपि माधवेनोक्तं—विदिभिदिच्छिदिरित्यत्र 'व्यथेः संप्रसारणं च' इति वचनात्कुरचि थान्तं रूपमिति, तदति स्थवीयः । कुरज्विधायके सूत्रे व्यथेरुपसंख्यानस्याप्रसिद्धत्वात् । तस्मादिह 'धः किच्च' इति दशपादीपाठ उपेक्ष्य एव । कथं तर्हि विधुर इति प्रयोगस्य निर्वाह इति चेत् । धुरो विगत इति प्रादिसमासेनेत्यवधेहि । 'समासान्ताः' इति सूत्रे वृत्तिपदमञ्जर्योस्तथैवोक्तत्वात् । इह व्यथेः किच्चेत्येवास्तु 'ग्रहिज्या–' इत्यनेन संप्रसारणं स्यादेवेति न भ्रमितव्यम् । ग्रहिज्यादिषु व्यधिर्वर्गचतुर्थो न त्वयमिति निष्कर्षात् ॥ **४० मुकुर इति** । मकि मण्डने, अस्मादुरच् नलोपश्च बाहुलकादिति धातोरुपधायाः पक्षे उकार इति भावः । 'मकुरो मुकुरोऽपि च' इति विश्वः । 'मकुरः स्यान्मुकुरवद्दर्पणे वकुलद्रुमे । कुलालदण्डे' इति मेदिनी ॥—**धातोर्द्विर्वचनमिति** । केचित्तु गुणो दुगागमश्च निपात्यत इत्याहुः ॥—**ग्रामजाले चेति** । यामजालेति पाठ-

४१ । **मद्गुरादयश्च** । उरजन्ता निपात्यन्ते । माद्यतेर्गुक्, मद्गुरो मत्स्यभेदः । 'कब्रृ वर्णे', रुगागमः, 'कर्बुरः श्वेतरक्षसोः' । बध्नातेः खर्जूरादित्वादूरोऽपि, 'बन्धूरबन्धुरौ स्यातां नम्रसुन्दरयोस्त्रिषु' इति रन्तिदेवः । (ग) **कोकतेर्वा कुक् च** । कुक्कुरः । कुकुरः ॥ ४२ । **असेरुरन्** । असुरः । प्रज्ञाद्यण्, आसुरः ॥ ४३ । **मसेश्च** । पञ्चमे पादे 'मसेरूरन्' (उ) ६८१ इति वक्ष्यते ।

मसूरा मसुरा व्रीहिप्रभेदे पण्ययोषिति ।
मसूरा मसुरा वा ना वेश्याव्रीहिप्रभेदयोः ।
मसूरी पादरोगे स्यादुपधाने पुनः पुमान् ।
मसूरमसुरौ च द्वौ, इति विश्वः ॥

४४ । **शावशेराप्तौ** । 'शु' इति आश्वर्थे । श्वशुरः । 'पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः' इत्यमरः ॥ ४५ । **अविमह्योष्टिषच्** । अविषः । महिषः ॥ ४६ । **अमेर्दीर्घश्च** । 'आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि ॥ ४७ । **रुहेर्वृद्धिश्च** । 'रङ्कुशम्बररौहिषाः' । 'रौहिषो मृगभेदे स्याद्रौहिषं च तृणं मतम्' इति संसारावर्तः ॥ ४८ । **तवेर्णिद्वा** । 'तव' इति सौत्रो धातुः । 'तविषताविषावब्धौ स्वर्गे च' । स्त्रियां तविषी ताविषी नदी देवकन्या भूमिश्च । 'तविषी बलम्' इति वेदभाष्यम् ॥ ४९ । **नञि व्यथेः** । 'अव्यथिषोऽब्धिसूर्ययोः' । अव्यथिषी धरारात्र्योः ॥ ५० । **किलेर्बुक् च** । किल्बिषम् ॥ ५१ । **इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुच्चिरुचिरुधिबन्धिशुषिभ्यः किरच्** । इषिरोऽग्निः । मदिरा सुरा । 'मुदिरः कामुकाभ्रयोः' इति विश्वमेदिन्यौ । खिदिरश्चन्द्रः । 'छिदिरोऽसिकुठारयोः' । भिदिरं वज्रम् । मन्दिरं गृहम् । स्त्रियामपि, 'मन्दिरं मदिराऽपि स्यात्' इति विश्वः । 'चन्दिरौ चन्द्रहस्तिनौ' । तिमिरं तमोऽक्षिरोगश्च । मिहिरः सूर्यः । 'मुहिरः काम्यसभ्ययोः' । मुच्चिरो दाता । रुचिरम् । रुधिरम् । बधिरः 'शुष शोषणे' शुषिरं छिद्रम् । शुष्कमित्यन्ये ॥ ५२ । **अशेर्णित्** । आशिरो वह्निरक्षसोः ॥ ५३ । **अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः** । अजेर्वीभावाभावः, अजिरमङ्गणम् । शशेरुपधाया इत्वम्, शिशिरः स्यादृतोर्भेदे तुषारे शीतलेऽन्यवत् । 'श्रथ मोचने' उपधाया इत्वं रेफलोपः, प्रत्ययरेफस्य लत्वम्, शिथिलम् । स्थास्फाय्योष्टिलोपः, स्थिरं निश्चलम् । स्फिरं प्रभूतम् । तिष्ठतेर्वुक् ह्रस्वत्वं च, स्थविरः । खदिरः । बाहुलकात् शीङो वुक् ह्रस्वत्वं च,

---

न्तरम् ॥ ४१ **मद्गुरादयश्च** । मदी हर्षे ॥—**कर्बुर इति** । 'कर्बुरं सलिले हेम्नि कर्बुरः पापरक्षसोः । कर्बुरा कृष्णवृन्तायां शबले पुनरन्यवत्' इति मेदिनी ॥—**बन्धूरबन्धुराविति** । बन्ध बन्धने ॥ (ग) **कुक्कुर इति** । कुक आदाने । 'कुक्कुरः कुकुरो मतः' इति हट्टचन्द्रः । 'कुक्कुरः सारमेये ना ग्रन्थिपर्णे नपुंसकम्' इति मेदिनी । अत सातत्यगमने, आदिदीर्घः । आतुरः । वा गतिगन्धनयोः । गुगागमः । 'वागुरा मृगबन्धिनी' इत्यादिरपि ज्ञेयम् ॥ ४२ **असेः** । असु क्षेपणे ॥ ४३ **मसेश्च** । मसी परिणामे । 'मसूरा मसुरा वा ना वेश्याव्रीहिप्रभेदयोः । मसूरी पापरोगे स्यादुपधाने पुनः पुमान्' इति मेदिनी ॥ ४४ **शावशेः**-। '**शु**' इति कृताकारलोपः—आशुशब्दः, तस्मिन्नुपपदे आप्तौ गम्यमानायाम् अशू व्याप्तावित्यस्माद्धातोरुरन्स्यात्, श्वशुरो दम्पत्योः पिता । 'पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः' इत्यमरः ॥ ४५ **अवि**-। अव रक्षणादौ । मह पूजायाम् ॥—**अविष इति** । राजा समुद्रश्च । महिषो महान् । 'तुरीयं धाम महिषो विवक्ति' । 'उत माता महिषमन्ववेनत्' । टित्त्वान्ङीप् । महिषी राजपत्नी ॥ ४७ **रुहेः** । रुह बीजजन्मनि प्रादुर्भावे च । 'रौहिषो मृगभेदः स्याद्रौहिषं च तृणं मतम्' इति संसारावर्तः ॥ ४८ **वेदभाष्यमिति** । 'इन्द्रो वृत्रस्य तविषीम्' । 'इन्द्रस्यात्र तविषीभ्यो विरप्शिन्' इत्यादिमन्त्रेष्विति भावः । वैदिकनिघण्टौ 'ओजः पाजः' इत्यादिषु बलनामसु तविषीशब्दस्य पाठश्चेह मूलमिति बोध्यम् । 'तविषः शोभनाकारे बलेऽब्धिव्यवसाययोः । तविषी देवकन्यायां पुंसि स्वर्गे महोदधौ । ताविषी चेन्द्रकन्यायां ना स्वर्गाम्बुधिकाञ्चने' इति मेदिनी ॥ ४९ **नञि व्यथेः** । व्यथ भयसंचलनयोः ॥ ५० **किलेः**-। किल श्वैत्यक्रीडनयोः, अस्माट्टिषच् धातोर्बुगागमश्च । 'किल्बिषं पापरोगयोः । अपराधेऽपि' इति मेदिनी ॥ ५१ **इषिमदि**-। इषु इच्छायाम्, मदी हर्षे, मुद हर्षे, खिद दैन्ये, छिदिर् द्वैधीकरणे, भिदिर् विदारणे, मदि स्तुत्यादौ, चदि आह्लादे, तिम आर्द्रीभावे, मिह सेचने, मुह वैचित्त्ये, मुच्लृ मोक्षणे, रुच दीप्तौ, रुधिर् आवरणे, बन्ध बन्धने, शुष शोषणे ॥—**इषिरोऽग्निरिति** । आहार इत्यन्ये । 'छिदिरः पावके रज्जौ करवाले परश्वधे' इति मेदिनी । 'मन्दिरं नगरेऽगारे क्लीबं ना मकरालये' इति मेदिनी । 'चन्दिरोऽनेकपे चन्द्रे' इति च । 'तिमिरं ध्वान्ते नेत्रामयान्तरे' इति । 'मिहिरः सूर्यबुद्धयोः' इति मेदिनी । मिहिरः कामिमूर्खयोः' इति च । 'सुन्दरं रुचिरं चारु' इत्यमरः । 'रुधिरोऽङ्गारके पुंसि क्लीबं तु कुङ्कुमासृजोः' इति मेदिनी । बधिरः श्रोत्रेन्द्रियरहितः । 'शुषिरं विवरं बिलम्' इत्यमरः ॥ ५२ **अशेः**-। अश भोजने ॥ ५३ **अजिर**—। अज गतौ, शश प्लुतगतौ, ष्ठा गतिनिवृत्तौ, स्फायी वृद्धौ, खद हिंसायाम् ॥—**अजिरमिति** । दशपादीवृत्तौ तु नञ्पूर्वस्य जीर्यतेर्ऋवर्णलोपो निपात्यते इत्युक्तं तदपि ग्राह्यम् । 'आशु द्रुतमजिरं प्रत्नमीड्यम्' इत्यादौ न जीर्यतीत्यजिर इत्यस्यानुगुणत्वात् ॥—**अङ्गणमिति** । अङ्गेर्ल्युटि अनादेशः । नकारस्य बाहुलकात् णत्वमित्येके । अन्ये तु दन्त्यमेवेच्छन्ति । 'अजिरं प्राङ्गणे काये विषये दर्दुरेऽनिले' इति मेदिनी । 'शिशिरो ना हिमे न स्त्री ऋतुभेदे जडे त्रिषु' इति च । विश्वकोशस्थमाह—**शिशिरं स्यादिति** । खदिरो वृक्षभेदः । 'खदिरी शाकभेदे स्त्री ना चन्द्रे दन्त-

शिबिरम् ॥ ५४ । **सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच्** । सलति गच्छति निम्नमिति सलिलम् । कलिलम् । अनिलः । महिला । पृषोदरादित्वात् महेला अपि । भड इति सौत्रो धातुः, भडिलौ शूरसेवकौ । भण्डिलो दूतः कल्याणं च । शण्डिलो मुनिः । पिण्डिलो गणकः । तुण्डिलो मुखरः । कोकिलः । भविलो भव्यः । बाहुलकात्कुटिलः ॥ ५५ । **कमेः पश्च** । कपिलः ॥ ५६ । **गुपादिभ्यः कित्** । गुपिलो राजा । तिजिलो निशाकरः । गुहिलं वनम् ॥ ५७ । **मिथिलादयश्च** । मथ्यन्तेऽत्र रिपवो मिथिला नगरी । पथिलः पथिकः ॥ ५८ । **पतिकठिकुठिगडिगुडिदंशिभ्य एरक्** । पतेरः पक्षी गन्ता च । कठेरः कृच्छ्रजीवी । कुठेरः पर्णाशः । बाहुलकान्नुम्न । गडेरो मेघः । गुडेरो गुडकः । दंशेरो हिंस्रः ॥ ५९ । **कुम्बेर्नलोपश्च** । कुबेरः ॥ ६० । **शदेस्त च** । शतेरः शत्रुः ॥ ६१ । **मूलेरादयः** । एरगन्ता निपात्यन्ते । मूलेरो जटा । गुधेरो गोप्ता । गुहेरो लोहघातकः । मुहेरो मूर्खः ॥ ६२ । **कबेरोतः पश्च** । कपोतः पक्षी ॥ ६३ । **भातेर्डवतुः** । भातीति भवान् । ६४ । **कठिचकिभ्यामोरन्** । कठोरः । चकोरः ॥ ६५ । **किशोरादयश्च** ॥ किंपूर्वस्य शृणातेष्टिलोपः किशोऽन्त्यलोपः, किशोरोऽश्वशावः । सहोरः साधुः ॥ ६६ । **कपिगडिगण्डिकटिपटिभ्य ओलच्** । कपीति निर्देशान्नलोपः, कपोलः । गडोलगण्डोलौ गुडकपर्यायौ । कटोलः कटुः । पटोलः ॥ ६७ । **मीनातेरूरन्** । मयूरः ॥ ६८ । **स्यन्देः संप्रसारणं च** । सिन्दूरम् ॥ ६९ । **सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्** । सिनोतीति सेतुः । 'तितुत्र–' ३१६२ इति नेट् । तन्तुः । गन्तुः । मस्तु दधिमण्डम् । सच्यत इति सक्तुः, अर्धर्चादिः । 'ज्वरत्वर–' २६५४ इत्यूठ्, तत्र क्वितीत्यनुवर्तते इति मते तु बाहुलकात्, ओतुर्बिडालः । धातुः । क्रोष्टा ॥ ७० । **पः किच्च** । पिबतीति पितुः । 'पितुर्वह्नौ दिवाकरे' ॥ ७१ । **अर्तेश्च तुः** । अर्तेस्तुः स्यात्स च कित् । 'ऋतुः स्त्रीपुष्पधावने' इति मेदिनी ॥

---

**—शिबिरमिति** । शेरतेऽस्मिन् राजबलानि । 'निवेशः शिबिरं षण्डे' इत्यमरः ॥ ५४ **सलिकलि—**। षल गतौ, कल संख्याने, अन प्राणने, मह पूजायाम्, भडि परिभाषणे, भदि कल्याणे सुखे च, शडि रुजायाम्, पिडि संघाते, तुडि तोडने, कुक आदाने, भू सत्तायाम्, कुट कौटिल्ये ॥**—कलिल इति** । मिश्रो गहनश्च । 'कलिलं गहनं समे' इत्यमरः ॥**—महिलेति** । 'महिला फलिनीस्त्रियोः' इति मेदिनी । 'प्रियङ्गुः फलिनी फली' इत्यमरः । **—पृषोदरेति** । तथा च दमयन्तीकाव्ये प्रयोगः—'परमहेलारतोऽप्यपरदारिकः' इति । परस्य महेला स्त्री, अथ च परमा उत्कृष्टा हेला क्रीडा तत्र रत इत्यर्थः ॥ ५५ **कमेः—**। कमु कान्तौ । अस्मादिलच् पश्चान्तादेशः । 'कपिलो रेणुकायां च शिंशपागोविशेषयोः । पुण्डरीके करिण्यां स्त्री वर्णभेदे त्रिलिङ्गकम् । नाऽनले वासुदेवे च मुनिभेदे च कुकुरे' इति मेदिनी । रेणुकेह लताविशेषः । 'हरेणू रेणुका कुन्ती कपिला भस्मगन्धिनी' इत्यमरात् ॥ ५६ **गुपादिभ्यः—**। गुपू रक्षणे, तिज निशाने, गुहू संवरणे ॥ ५७ **मिथिलादयश्च** । मथे विलोडने । अकारस्येत्वं निपातनात् । पथे गतौ ॥ ५८ **पतिकठि—**। पत्लृ गतौ, कठ कृच्छ्रजीवने, कुठि च, गड सेचने, गुड रक्षायाम्, दंश दशने । कुठिधातोरिदित्त्वात् नुमि प्राप्ते आह—**बाहुलकादिति** ॥ ५९ **कुम्बेः—**। कुबि आच्छादने । अन्येषामैश्वर्यं कुम्बतीति कुबेरः । 'कुबेरस्त्र्यम्बकसखः' ॥ ६० **शदेः—**। शद्लृ शातने ॥ ६१ **मूलेरा—**। मूल प्रतिष्ठायाम्, गुध परिवेष्टने, गुहू संवरणे, मुह वैचित्ये ॥ ६२ **कबेः—**। कबृ वर्णे । 'कपोतः स्याच्चित्रकण्ठे पारावतविहङ्गयोः' इति मेदिनी । 'कपोतः पक्षिमात्रेऽपि' इति त्रिकाण्डशेषः । अत्र ओतश्चित्त्वं प्रामादिकम् । 'यत्कपोतः पदमग्नौ कृणोति,' 'देवाः कपोत इषितो यदिच्छन्–' इत्यादौ सर्वत्र प्रत्ययस्वरेण मध्योदात्तस्यैवोपलभ्यमानत्वादित्याहुः ॥ ६३ **भातेः** । भा दीप्तौ ॥**—भवानिति** । सर्वनामशब्दोऽयम् ॥ ६४ **कठि** । कठ कृच्छ्रजीवने, चक तृप्तौ । कठोरः कठिनः पूर्णश्च । 'कठोरताराधिपलाञ्छनच्छविः' इति माघः । चकोरः पक्षिभेदः ॥ ६५ **किशोरा** । शॄ हिंसायाम् । षह मर्षणे । 'किशोरोऽश्वस्य शावके । तैलपर्ण्यौषधौ च स्यात्तरुणावस्थसूर्ययोः' इति मेदिनी ॥ ६६ **कपिगडि—**। कपि चलने, गड सेचने, गडि वदनैकदेशे, कटे वर्षावरणयोः, पट गतौ ॥**—कपोल इति** । केचित्तु सूत्रे कडिं पठन्ति । कडि मदे । कण्डोलश्चण्डालः । 'चाण्डालिका तु कण्डोलवीणा चण्डालवल्लकी' इत्यमरः ॥**—पटोल इति** । 'पटोलं वस्त्रभेदे नौषधौ ज्योत्स्नयां तु योषिति' इति मेदिनी । कल्ल शब्दे । बाहुलकादतोऽप्योलच् । 'कल्लोलः पुंसि हर्षे स्यान्महत्सूर्मिषु वारिणः' इति मेदिनी ॥ ६८ **स्यन्देः—**। स्यन्दू प्रस्रवणे । 'सिन्दूरस्तरुभेदे स्यात्सिन्दूरं रक्तवर्णके' इति मेदिनीविश्वप्रकाशौ ॥ ६९ **सितनि—**। षिञ् बन्धने, तनु विस्तारे, गम्लृ गतौ, मसी परिणामे, षच सेचने, अव रक्षणादौ, डुधाञ् धारणपोषणयोः, क्रुश आक्रोशे । 'सेतुर्नालौ कुमारके' इति मेदिनी । 'सेतुरालौ स्त्रियां पुमान्' इत्यमरः । 'सूत्राणि नरि तन्तवः' इत्यमरः । 'मण्डं दधिभवं मस्तु' इति च । 'धातुर्ना इन्द्रियेषु च । शब्दयोनिमहाभूततद्गुणेषु रसादिषु । मनःशिलादौ श्लेष्मादौ विशेषाद्गैरिकेऽस्थि च' इति मेदिनी । 'श्लेष्मादिरसरक्तादिमहाभूतानि तद्गुणाः । इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः' इत्यमरः ॥ ७० **पः किच्च** । पा पाने । अस्मात्तुन् स च कित् । कित्त्वात् 'घुमास्था–' इतीत्त्वम् ॥ ७१ **अर्तेश्च तु** । ऋ गतौ । तुनि प्रकृते अन्तोदात्तार्थं तुः क्रियते । 'ऋतुना यज्ञं य ऋतुर्जनीनाम्' इत्यादि । 'ऋतुर्वर्षादिषट्सु च । आर्तवे

कालयोः' ॥ ७२ । **कमिमनिजनिगाभायाहिभ्यश्च** । एभ्यस्तुः स्यात् । 'कन्तुः कन्दर्पचित्तयोः' । मन्तुरपराधः । जन्तुः प्राणी । 'गातुः पुंस्कोकिले भृङ्गे गन्धर्वे गायनेऽपि च' । भातुरादित्यः । 'यातुरध्वगकालयोः' । रक्षसि क्लीबम् । हेतुः कारणम् ॥ ७३ । **चायः किः** । 'केतुर्ग्रहपताकयोः' ॥ ७४ । **आप्नोतेर्ह्रस्वश्च** । अप्तुः शरीरम् ॥ ७५ । **वसेस्तुन्** । वस्तु ॥ ७६ । **अगारे णिच्च** । 'वेश्मभूर्वास्तुरस्त्रियाम्' ॥ ७७ । **कृञः क्तुः** । क्रतुर्यज्ञः ॥ ७८ । **एधिवह्योश्च तुः** । एधतुः पुरुषः । वहतुरनड्वान् ॥ ७९ । **जीवेरातुः** । 'जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे' ॥ ८० । **आतृकन् वृद्धिश्च** । जीवेरित्येव । 'जैवातृकस्त्विन्दुभिषगायुष्मत्सु कृषीवले' ॥ ८१ । **कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः** । 'कर्षूः पुंसि करीषाग्नौ कर्षूर्नद्यां स्त्रियां मता' । चमूः । तनूः । धनूः शस्त्रम् । 'सर्ज सर्जने' सर्जूर्वणिक् । 'खर्ज व्यथने' खर्जूः पामा ॥ ८२ । **मृजेर्गुणश्च** । मर्जूः शुद्धिकृत् ॥ ८३ । **वहो धश्च** । 'वधूर्जायास्नुषास्त्रीषु' ॥ ८४ । **कषेश्छश्च** । कच्छूः पामा ॥ ८५ । **णित्कसिपद्यर्तेः** । कासूः शक्तिः । पादूश्चरणधारिणी । आरूः पिङ्गलः ॥ ८६ । **अणो डश्च** । अड्डूर्जलप्लवद्रव्यम् ॥ ८७ । **नञि लम्बेर्नलोपश्च** । 'तुम्ब्यलाबूरुभे समे इत्यमरः' ॥ ८८ । **के श्र एरङ् चास्य** । कशब्दे उपपदे श्रृणातेरूः स्यादेरङ् आदेशः । 'कशेरूस्तृणकन्दे स्त्री' । बाहुलकादुप्रत्यये—कशेरुः, क्लीबे पुंसि च ॥ ८९ । **त्रो दुट् च** । तरतेरूः स्यात्तस्य दुट् । 'तर्दूः स्याद्दारुहस्तकः' ॥ ९० । **दरिद्रातेर्यालोपश्च** । इश्च आश्च यौ तयोर्लोपः । दर्दूः कुष्ठप्रभेदः ॥ ९१ । **नृतिशृध्योः कूः** । नृतूर्नर्तकः । शृधूरपानम् ॥ ९२ । **ऋतेरम् च** । ऋतिः सौत्रो धातुः, ततः कूरमागमश्च, रन्तूर्देवनदी सत्यवाक् च ॥ ९३ । **अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः** । एते कूप्रत्ययान्ता निपात्यन्ते । अन्दूर्बन्धनम् । 'दृभी ग्रन्थे'

---

मासि च पुमान्' इति मेदिनी । 'ऋतुः स्त्रीकुसुमेऽपि च' इत्यमरः ॥ **७२ कमिमनि** । कमु कान्तौ, मन ज्ञाने, जनी प्रादुर्भावे, गै शब्दे, भा दीप्तौ, या प्रापणे, हि गतौ वृद्धौ च । कमिग्रहणं प्रपञ्चार्थम्, 'अर्जिदृशि–' इत्यादिना कुप्रत्यये तुकि सिद्धत्वात् ॥—**मन्तुरिति** । 'मन्तुः पुंस्यपराधेऽपि मनुष्येऽपि प्रजापतौ' इति मेदिनी । 'गातुर्ना कोकिले भृङ्गे गन्धर्वे त्रिषु रोषणे' इति मेदिनी । 'भातुर्ना किरणे सूर्ये' इति च ॥ **७३ चायः किः** । चायृ पूजानिशामनयोः । अस्मात्तुः, धातोः किरादेशश्च । 'केतुर्ना रुक्पताकारिग्रहोत्पातेषु लक्ष्मणि' इति मेदिनी ॥ **७४ आप्नोतेः**–। आप्लृ व्याप्तौ ॥—**अप्तुः शरीरमिति** । अभिलषितार्थश्च, आप्तव्यत्वात् । अत एव यागविशेषवाचकस्याप्तोर्यामशब्दस्याभिलषितार्थप्रापक इत्यवयवार्थमाहुः ॥ **७५ वसेः**–। वस निवासे ॥ **७७ कृञः**–। डुकृञ् करणे । क्तोः कित्त्वाद्गुणाभावे यणादेशः । 'क्रतुर्यज्ञे मुनौ पुंसि' इति मेदिनी ॥ **७८ एधिवह्योश्च तुः** । एध वृद्धौ, वह प्रापणे, चित्त्वादन्तोदात्तः । 'स्योनं पत्ये वहतुं कृणुष्व' । 'वहतुः पथिके वृषभे पुमान्' इति मेदिनी ॥ **७९ जीवेः** । जीव प्राणधारणे ॥ **८० आतृकन्**–। 'जैवातृकः पुमान् सोमे कृषकायुष्मतोस्त्रिषु' इति मेदिनी ॥ **८१ कृषिचमि**–। कृष विलेखने, चमु अदने, तनु विस्तारे, धन धान्ये । रभसकोशस्थमाह—**कर्षूः पुंसीत्यादि** । 'कर्षूः पुमान् करीषाग्नौ स्त्रियां कुल्याल्पखातयोः' इति मेदिनी । 'चमूः सेनाविशेषे च सेनामात्रे च योषिति' इति मेदिनी । 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः । 'सर्जूर्वणिजि विद्युति । स्त्रियां स्वर्गे विधौ रुद्रे' इति मेदिनी । 'खर्जूः कीटान्तरे स्मृता', 'खर्जूरीपादपे कण्ड्वाम्' इति च ॥ **८२ मृजेः**–। मृजू शुद्धौ । अस्मादूः स्याद्वृद्ध्यपवादो गुणश्च । 'मर्जूः स्त्रीशुद्धौ धावकेऽपि च' इति मेदिनी ॥ **८३ वहो धश्च** । वह प्रापणे । 'वधूः स्नुषा नवोढा स्त्री भार्यापृक्काङ्गनासु च' इति विश्वः । 'पृक्का महिला च वधूः' इति त्रिकाण्डशेषः ॥ **८४ कषेश्छश्च** । कषशिषेति दण्डके हिंसार्थः । अस्मादूः स्याच्छश्चान्तादेशः । 'कच्छ्वां तु पाम पामा विचर्चिका' इत्यमरः ॥ **८५ णित्कसि**–। कस गतौ, पद गतौ, ऋ गतौ । 'कासूर्विकलवाचि स्यात्तथा शक्त्यायुधे स्त्रियाम्' इति मेदिनी । 'कासूः शक्त्यायुधे रुजि । बुद्धौ विकलवाचि स्यात्' इति हेमचन्द्रः ॥ **८६ अणो डश्च** । अण दण्डके शब्दार्थः । अस्मादू स्यात्स च णित् डश्चान्तादेशः ॥ **८७ नञि लम्बेः** । लबि अवस्रंसने । न लम्बते इत्यलाबूः ॥ **८८ के श्रः** । शॄ हिंसायाम् ॥ **८९ त्रो दुट् च** । तॄ प्लवनतरणयोः ॥—**तर्दूरिति** । 'नेड्वशि–' इति नेट् । 'वरमनादौ' इति परिगणनं तु बाहुलकान्नाश्रीयते इत्याहुः । केचित्तु इडभावे 'त्रो दुक् च' इति पठित्वा धातोर्दुगागममाहुः तेषां तु धातोर्गुणो दुर्लभः । दुगागमात्पूर्वं यत्प्राप्तं तदपि भवतीत्येवं चकारबलेन व्याख्याय वा गुणः साधनीयः ॥ **९० दरिद्रातेः**–। दरिद्रा दुर्गतौ ॥—**इश्च आश्चेति** । भोजदेवस्तु र्यालोप इति रेफादिकं पदं छित्त्वा द्वेधा व्याख्यत् रिश्च आश्चेति व्याख्याने–दद्रूः । रश्च इश्च आश्चेति व्याख्याने तु 'अन्त्यबाधेऽन्त्यसदेशस्य' इति द्वितीयस्यैव रेफस्य लोपाद्दर्दूरिति । मृगय्वादित्वात्कुप्रत्यये दर्द्रुरित्यन्ये । 'दर्द्रुणो दर्द्रुरोगी स्यात्' इत्यमरः । इत्थं चत्वारि रूपाणि ॥ **९१ नृति**–। नृती गात्रविक्षेपे, शृधु शब्दकुत्सायाम् ॥ **९३ अन्दूदृम्भू**–। अदि बन्धने । 'नृतिशृध्योः कूः' इत्यत्र 'अंदि' ग्रहणं न कृतं वैचित्र्यार्थमित्याहुः । ला आदाने, कफपूर्वः । डुधाञ् धारणादौ, कर्कपूर्वः । षोऽन्तकर्मणि, दिधिपूर्वः षत्वं च ॥—**अन्दूर्बन्धनमिति** । 'अन्दूः स्त्रियां स्यान्निगडे प्रभेदे भूषणस्य च' इति मेदिनी । 'अन्दुको हस्तिनि गदे' इत्यमरः । संज्ञायां कन् । 'केऽणः' इति ह्रस्वः । केचित्तु 'अम गतौ' अस्य दुक् । अन्दूर्बुद्धिरिति व्याचख्युः ॥—**दृभी ग्रन्थ इति** ।

निपातनान्नुम्, दन्भूः । अनुस्वाराभावोऽपि निपातनादित्येके, दन्भूः । जनेर्बुक्, जम्बूः । 'जमु अदने' इत्यस्येत्येके । बाहुलकाद्ध्रस्वोऽपि, जम्बुः । कफं लाति कफेलूः श्लेष्मातकः, निपातनादेत्वम् । कर्कं दधाति कर्कन्धूर्बदरी, निपातनान्नुम् । दिधिं=धैर्यं स्यति=त्यजतीति दिधिषूः पुनर्भूः । केचित्तु 'अन्दूदृम्फूजम्बूकम्बू' इति पठन्ति । 'दृम्फ उत्क्लेशे' दृम्फूः सर्पजातिः । कमेर्बुक्, कम्बूः परद्रव्यापहारी ॥ ९४ । **मृग्रोरुतिः** । मरुत् । गरुत् पक्षः ॥ ९५ । **ग्रो मुट् च** । गिरतेरुतिस्तस्य च मुट् । गर्मुत् सुवर्णं तृणविशेषश्च ॥ ९६ । **हृषेरुलच्** । 'हर्षुलो मृगकामिनोः' । बाहुलकाच्चटतेः, चटुलं शोभनम् ॥ ९७ । **हृसृरुहियुषिभ्य इतिः** । 'हरित्ककुभि वर्णे च तृणवाचिविशेषयोः' । सरित् नदी । रोहित् मृगविशेषस्त्री । 'युष' इति सौत्रो धातुः । 'ऋश्यस्य रोहित् पुरुषस्य योषित्' इति भाष्यम् ॥ ९८ । **ताडेर्णिलुक् च** । ताडयतीति तडित् ॥ ९९ । **शमेर्ढः** । बाहुलकादिन्संज्ञा ण्यादेश इट् च न । 'शण्ढः स्यात्पुंसि गोपतौ' । शण्ढः क्लीबः ॥ १०० । **कमेरठः** । कमठः । 'कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकम्' इति मेदिनी । बाहुलकाज्जरठः ॥ १०१ । **रमेर्वृद्धिश्च** । रामठं हिङ्गु ॥ १०२ । **शमेः खः** । शङ्खः ॥ १०३ । **कणेष्ठः** । कण्ठः ॥ १०४ । **कलस्तृपश्च** । तृपतेः कलप्रत्ययः । चात्तृफतेः । तृपला लता । 'त्रिफला तु फलत्रिके' ॥ १०५ । **शपेर्वश्च** । शबलः ॥ १०६ । **वृषादिभ्यश्चित्** । वृषलः । पललम् । बाहुलकाद्गुणः, सरलः । तरलः ॥ (१) **कमेर्बुक्** । कम्बलः । 'मुस खण्डने' तुदादिरयम् । दम्भतीति दम्भूः । संदर्भकर्तेत्यर्थः । कथक इत्यन्ये । कैयटमतानुरोधेनास्य रूपाणि हूहूवदित्युक्तम् । माधवादयस्तु दृढशब्दे उपपदे भुवः क्विप्प्रत्ययः । उपपदस्य दन्नादेशो निपात्यते । यद्वा दृढार्थकं दन्निति नान्तमव्ययमुपपदम् । दन्भूः-तरुः सर्पः कपिर्वेति व्याख्याय 'दन्कर-' इति यणि वर्षाभूवद्रूपमस्येत्याहुः ॥—**ह्रस्वोऽपीति** । अत एव विक्रमादित्येनोक्तम्—'तस्या जम्बोः फलरसो नदीभूय प्रवर्तते' इति । केचित्तु 'परिणतजम्बुफलोपभोगहृष्टा' इति भारविप्रयोगं ह्रस्वान्तत्वे साधकत्वेनोदाजह्रुः । तन्न । 'इको ह्रस्वो ङ्य-' इत्युत्तरपदाधिकारस्थह्रस्वविधायकसूत्रेण गतार्थत्वात् ॥—**दिधिमिति** । केचित्तु दधातेरित्वं द्वित्वं षुक् च निपात्यते । दधात्यसौ दिधिषूरित्याहुः ॥—**पुनर्भूरिति** । 'पुनर्भूर्दिधिषूरूढा द्विः' इत्यमरः । द्विरूढा, द्विवारं विवाहितेत्यर्थः । उज्ज्वलदत्तोक्तं पाठमाह—**केचित्त्विति** । एतच्च कैयटमाधवादिग्रन्थविरुद्धम् । अत एव 'दम्भूः स्त्री सर्पचक्रयोः' इति भान्ते मेदिनी ॥ ९४ **मृग्रोः**—। मृङ् प्राणत्यागे, गॄ निगरणे, आभ्यामुतिः । इकारस्तकारस्येत्संज्ञापरित्राणार्थः ॥—**मरुदिति** । प्रज्ञादित्वादणि मारुतोऽपि । मरुतशब्दोऽप्यव्युत्पन्नोऽस्ति । तथा च विक्रमादित्यकोशः—'मरुतः स्पर्शनः प्राणः समीरो मारुतो मरुत्' इति । 'कोऽयं वाति स दाक्षिणात्यमरुतः' इति कविराजश्लोकेऽनुपपत्तिं मत्वा 'दाक्षिणात्यपवनः' इति पाठं केचित्कल्पयन्त्यल्पदृश्वान इति वर्णविवेकः ॥—**गरुदिति** । यवादिरयम् । तेनास्मात्परस्य मतुपो मस्य 'झयः' इत्यनेन वत्वं न । गरुत्मान् ॥ ९५ **गर्मुदिति** । 'गर्मुत्स्त्री स्वर्णलतयोः' इति मेदिनी ॥ ९६ **हृषेः**—। हृष तुष्टौ ॥—**चटतेरिति** । चटे वर्षावरणयोः ॥ ९७ **हृसृ**—। हृञ् हरणे, सृ गतौ, रुह बीजजन्मनि ॥ विश्वकोशस्थमाह—**हरिदिति** । 'हरिद्दिशि स्त्रियां पुंसि हर्षवर्णविशेषयोः । अस्त्रियां स्यात्तृणे च' मेदिनी ॥—**ऋश्यस्येति** । एतेन 'गतं रोहिद्भूतां रिरमयिषुमृश्यस्य वपुषा-' इति पुष्पदन्तप्रयोगो व्याख्यातः । 'रोहिन्मृग्यां लताभेदे स्त्री नार्के' इति मेदिनी ॥ ९८ **ताडेः**—। तड आघाते, ण्यन्तः । 'तडित्सौदामिनी विद्युत्' इत्यमरः ॥ ९९ **शमेः** । शम उपशमे ॥—**बाहुलकादिति** । यद्यपि 'नेड्वशि कृति' इत्यनेनैव इडभावस्य सिद्धत्वात् 'इट् च न' इत्येतदयुक्तं, तथापि 'नेड्वरमनादौ' इति परिगणनाद्बहुलग्रहणमाश्रित्यैव इडभावोऽपि साधितः । 'शण्ढः स्यात्पुंसि गोपतौ । आकृष्टाण्डे वर्षवरे तृतीयप्रकृतावपि' इति मेदिनी ॥ १०० **कमेः**—। कमु कान्तौ । 'कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकम्' इति मेदिनी ॥—**जरठ इति** । जॄ वयोहानौ । 'जरठः कठिने पाण्डौ कर्कशेऽप्यभिधेयवत्' इति विश्वमेदिन्यौ । 'जरठः कठिने जीर्णे' इति वैजयन्ती ॥ १०१ **रमेः**—। रम क्रीडायाम् ॥ १०२ **शमेः**—। शम उपशमे । 'शङ्खो निधौ ललाटास्थ्नि कम्बौ न स्त्री' इत्यमरः । 'शङ्खः कम्बौ न योषिन्ना भालास्थिनिधिभिन्नखे' इति मेदिनी ॥ १०३ **कणेः**—। 'कण्ठो गले सन्निधाने ध्वनौ मदनपादपे' इति विश्वमेदिन्यौ ॥ १०४ **कल**—। तृप प्रीणने ॥—**फलत्रिके इति** । 'त्रिफला तृफला च सा' इति विश्वः । त्रिफलाशब्दसमानार्थस्तृफलाशब्द इति 'द्विगोः' इति सूत्रे रक्षितः ॥ १०५ **शपेः**—। शप आक्रोशे ॥ १०६ **वृषादिभ्यः**—। वृषु सेचने, पल गतौ, सृ गतौ, तॄ प्लवनतरणयोः । 'शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः' इत्यमरः । 'वृषलस्तुरगे शूद्रे' इति हेमचन्द्रः । 'पललं तिलचूर्णे च पिङ्के मांसे नपुंसकम् । ना राक्षसे' इति मेदिनी ॥ कलप्रत्ययस्य कित्त्वादाह—**बाहुलकादिति** । 'सरलः पूतिकाष्ठे नाऽथोदारावक्रयोस्त्रिषु' इति मेदिनी । 'सरला विरलायन्ते घनायन्ते किल द्रुमाः । न शमी न च पुन्नागा अस्मिन्संसारकानने' इत्यभियुक्तप्रयोगः ॥ (१) **कमेः**—। कमु कान्तौ । अस्माद् वृषादित्वेन कलप्रत्यये बाहुलकादित्यनुपज्यत इति बुक् । 'कम्बलो नागराजे स्यात्सास्नाप्रावारयोरपि । कृमावप्युत्तरासङ्गे सलिले तु नपुंसकम्' इति मेदिनी । 'मुसलं स्यादयोऽग्रे च पुंनपुंसकयोः स्त्रियाम् । तालमूल्यामाखुपर्णीगृहगोधिकयोरपि' इति मेदिनी । मूर्धन्यमध्योऽप्ययमिति वर्णदेशना । मुस खण्डन

१ 'कमेर्बुक्' 'लङ्केर्वृद्धिश्च' 'कुटिकशिकौतिभ्यः प्रत्ययस्य मुट्' एतत्त्रयमपि बाहुलकाछब्धम् । न त्वेतानि सूत्राणि ।

मुसलम् । (२) लङ्गेर्वृद्धिश्च । लाङ्गलम् । (३) कुटिकशिकौतिभ्यः प्रत्ययस्य मुट् । कुट्मलः । कुडेरपि, कुड्मलः । कश्मलम् । बाहुलकाद्गुणः, कोमलम् ॥ १०७ । मृजेष्टिलोपश्च । मलम् ॥ १०८ । चुपेरच्चोपधायाः । चपलम् ॥ १०९ । शकिशम्योर्नित् । शकलम् । शमलम् ॥ ११० । छो गुक् ह्रस्वश्च । छगलः । प्रज्ञादित्वाच्छागलः ॥ १११ । अमन्ताड्डः । दण्डः । रण्डा । खण्डः । मण्डः । वण्डश्छिन्नहस्तः । अण्डः । बाहुलकात्सत्वाभावः, षण्डः सङ्घातः । तालव्यादिरित्यपरे, शण्डः । गण्डः । चण्डः । पण्डः, क्लीबः । पण्डा बुद्धिः । फण्डः[1] ॥ ११२ । क्वादिभ्यः कित् । कवर्गादिभ्यो डः कित्स्यात् । कुण्डम् । काण्डम् । गुङ्, गुडः । 'घुण भ्रमणे' घुण्डो भ्रमरः ॥ ११३ । स्थाचतिमृजेरालज्वालञालीयचः । तिष्ठतेरालच्, स्थालम् । स्थाली । चतेर्वालञ्, चात्वालः । मृजेरालीयच्, मार्जालीयो बिडालः ॥ ११४ ।

इति धातोर्दन्त्यान्तेषु मूर्धन्यान्तेषु च बोपदेवादिभिः पठितत्वात् । उज्ज्वलदत्तादयस्तु तालव्यमध्यमप्याहुः । अत एव 'मुसलो मुषलोऽपि च' इति विश्वकोशे मुशलोऽपि चेति पाठान्तरम् ॥ (२) **लङ्गेः**–। लगि गतौ अस्मात्कलप्रत्यये बाहुलकादित्वनुषङ्गावृद्धिरिति भावः । एवमग्रेऽपि । मुडागमो बाहुलकादेव ॥ (३) **कुटिकशि**–। कुट कौटिल्ये, कश गतिशासनयोः, कु शब्दे, अस्मात्कलप्रत्यये गुणो नेत्याशङ्क्याह—**बाहुलकादिति** । 'कोमलं मृदुलं मृदु' । बाहुलकादन्यत्रापि बोध्यः । तद्यथा—कुस श्लेषणे । दन्त्यान्तोऽयम् । बोपदेवमते तु तालव्यान्तोऽपि । गुणः, **कोशलः कोसलो** वा देशविशेषः । 'वृद्धेत्कोसला–' इति सूत्रे तु दन्त्यान्त एव सांप्रदायिकः पाठः । संब संबन्धे, शंब च । **संवलं शंबलम्** । 'शंबलोऽस्त्री संवलवत् कुलपाथेय मत्सरे' इति मेदिनी । कदि आह्वाने नलोपः । गौरादित्वान्ङीषि—**कदली** । 'मन्दान्दोलितकर्पूरकदलीदलसंज्ञया । विश्रमाय श्रमापन्नानाह्वयन्तीमिवाध्वगान्' इति काशीखण्डे । अजादेराकृतिगणत्वाट्टाबपि । 'कदलाकदलौ पृश्न्यां कदलीकदलौ पुनः । रम्भावृक्षेऽथ कदली पताकामृगभेदयोः । कदली बिम्बिकायां च' इति मेदिनी । कुश इति सौत्रो धातुः । '**कुशलः** शिक्षिते त्रिषु । क्षेमे च सुकृते चापि पर्याप्तौ च नपुंसके' इति मेदिनी । कमु कान्तौ । '**कमलं** सलिले ताम्रे जलजे व्योम्नि भेषजे । मृगभेदे तु कमलः कमला श्रीवरस्त्रियोः' इति विश्वमेदिन्यौ । मडि भूषायाम् । '**मण्डलं** परिधौ कोठे देशे द्वादशराजके' इति मेदिनी । 'कोठो मण्डलकं कुष्ठ' इत्यमरः । 'बिम्बोऽस्त्री मण्डलं त्रिपु' इति च ॥ **१०७ मृजेः**–। मृजू शुद्धौ । '**मलो**ऽस्त्री पापविट्किट्टे कृपणे त्वभिधेयवत्' इति मेदिनी ॥ **१०८ चुपेः**–। चुप मन्दायां गतौ । '**चपलः** पारदे मीने चोरके प्रस्तरान्तरे । चपलाकमलाविद्युत्पुंश्चलीपिप्पलीषु च । नपुंसके तु शीघ्रे स्याद्वाच्यवत्तरले चले' इति मेदिनी ॥ **१०९ शकिशम्योः** । शक्लृ शक्तौ, शम उपशमे । **शकलं** खण्डे रोहितादीनां त्वचि च । तद्योगात् शकली मत्स्यः । मत्स्यान् शकलानिति भाष्यम् । 'शकलं त्वचि खण्डे स्याद्रागवस्तुनि वल्कले' इति मेदिनी ॥ **११० छो गुक्**–। छो छेदने । 'छगलं नीलवस्त्रे ना छागे स्त्री वृद्धदारके' इति मेदिनी ॥ **१११ अमन्ताड्डः** । अमिति प्रत्याहारः । दमु उपशमे, रमु क्रीडायाम्, खनु अवदारणे, मन ज्ञाने, वन संभक्तौ, अम गत्यादिषु, षणु दाने, गम्लृ गतौ, चण दाने, पण व्यवहारे स्तुतौ च । काशिकायां तु त्रिभ्य एव कणमाः स्युरित्युक्तम् । जम् प्रत्याहारस्तु न स्वीकृतः । अष्टाध्याय्यां तस्य विषयाभावात् ॥—**दण्ड इति** । बाहुलकात् 'चुट्टू' इति नेत्संज्ञा । 'दण्डोऽस्त्री लगुडेऽपि स्यात्' इत्यमरः । 'रण्डा मूषकपर्ण्यां च विधवायां च योषिति । खण्डोऽस्त्री शकले नेक्षुविकारमणिभेदयोः । मण्डः पञ्चाङ्गुले शाकभेदे क्लीबं तु मस्तुनि । वण्डा तु पांसुलायां स्त्री त्रिषु हस्तादिवर्जिते' । अमन्ति संप्रयोगं यान्ति अनेनेति अण्डं प्राण्यवयवः । 'षण्डः पद्मादिसंघाते न स्त्री स्यात् गोपतौ पुमान्' । शडि रुजायाम्, अस्मात् घञि शण्डशब्दस्तालव्यादिरपि संघाते वर्तते इत्याशयेन मतान्तरमाह—**तालव्यादिरित्यपरे इति** । 'गण्डः स्यात्पुंसि खङ्गिनि । चिह्नवीरकपोलेषु हयभूषणबुद्बुदे । चण्डो ना तिन्तिणीवृक्षे यमकिंकरदैत्ययोः । चण्डी कात्यायनी देव्यां हिंसा कोपनयोषितोः । पण्डः शठे धियि स्त्री स्यात्' इति मेदिनी ॥ फण गतौ, फण्डः । प्रज्ञादित्वादण् । फाण्डं उदरम् ॥ **११२ क्वादिभ्यः कित्** । कुण शब्दोपकरणयोः ॥—**कुण्डमिति** । इह कुण्डमित्यत्र प्रायेणानुस्वारमेव लिखन्ति तत्तु प्रमादकृतम् । एवमन्यत्रापि बोध्यम् । डस्य कित्त्वान्न गुणः । 'अनुनासिकस्य क्विझलोः–' इति दीर्घस्तु न भवति, बाहुलकात्संज्ञापूर्वकविधेरनित्यत्वाद्वेत्याहुः । 'कुण्डमग्न्यालये मानभेदे देवजलाशये । कुण्डी कमण्डलौ जारात्पतिवत्नीसुते पुमान् । पिठरे तु न ना' इति मेदिनी । 'अमृते जारजः कुण्डो मृते भर्तरि गोलकः' इत्यमरः ॥—**काण्डमिति** । कमु कान्तौ । 'अनुनासिकस्य–' इति दीर्घः । 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु' इत्यमरः । अर्वा=कुत्सितः । अत एव 'काण्डं स्तम्बे तरुस्कन्धे बाणेऽवसरनीरयोः । कुत्सिते वृक्षभिन्नाडीवृन्दे रहसि न स्त्रियाम्' इति मेदिनी । गुङ् अव्यक्ते शब्दे । 'गुडो गोलेक्षुपाकयोः' इत्यमरः । गुडा स्नुही, तद्वत्केशा यस्य स गुडाकेशः शिवः, जटाधारित्वात् । 'गुडः स्याद्गोलके हस्तिसन्नाहेक्षुविकारयोः । गुडा स्नुह्यां च कथिता गुडिकायां च योषिति' इति मेदिनी । गुडाका निद्रा तस्या ईशः इति वा, जितेन्द्रियत्वादिति माधवः ॥ **११३ स्थाचति**—। ष्ठा गतिनिवृत्तौ, चते याचने, मृजू शुद्धौ । लचा सिद्धे आलच आकारश्चिन्त्यप्रयोजनः । चित्स्वरं बाधित्वा पक्षे आद्युदात्तार्थमित्येके । 'स्थालं भाजनभेदेऽपि स्थाली स्यात् पादलेखयोः' इति मेदिनी । 'चात्वालो यज्ञकुण्डे स्याद्दर्भे च' इति विश्वः । 'मार्जालीयः स्मृतः

[1] 'फण्डः' इत्यस्य मूले पाठः क्वचिद्दृश्यते, तथैवात्राप्युल्लेखः । तत्त्वबोधिनीकारेणास्योल्लेखान्नायं मूलस्थ इति प्रतीयते ।

**पतिचण्डिभ्यामालञ्** । पातालम् । चण्डालः । प्रज्ञादित्वादणि 'चाण्डालः' अपि—इत्येके ॥ ११५ । **तमिविशिबिडिमृणिकुलिकपिपलिपञ्चिभ्यः कालन्** । तमालः । विशालः । बिडालः । मृणालम् । कुलालः । कपालम् । पलालम् । पञ्चालाः ॥ ११६ । **पतेरङ्गच् पक्षिणि** । पतङ्गः ॥ ११७ । **तरत्यादिभ्यश्च** । तरङ्गः । लवङ्गम् ॥ ११८ । **बिडादिभ्यः कित्** । बिडङ्गः । मृदङ्गः । कुरङ्गः, बाहुलकादुत्वं च ॥ ११९ । **सृवृञोर्वृद्धिश्च** । सारङ्गः । वारङ्गः, खड्गादिमुष्टिः ॥ १२० । **गन् गम्यद्योः** । गङ्गा । अद्गः पुरोडाशः ॥ १२१ । **छापूखडिभ्यः कित्** । छागः । पूगः । खड्गः । बाहुलकात् 'पिट अनादरे' गन्कित्वाभावश्च । पिङ्गस्तरलः । 'पिङ्गरगच्छत ससंभ्रममेवमेका' इति माघः ॥ १२२ । **भृञः किन्नुट् च** । भृञो गन् कित्स्यात्तस्य नुट् च । 'भृङ्गाः पिङ्गालिधूम्याटाः' ॥ १२३ । **शृणातेर्ह्रस्वश्च** । शृङ्गम् ॥ १२४ । **गण् शकुनौ** । नुट् चेत्यनुवर्तते । शार्ङ्गः ॥ १२५ । **मुदिग्रोर्गग्गौ** । मुद्गः । गर्गः ॥ १२६ । **अण्डन् कृसृभृवृञः** । करण्डः । सरण्डः पक्षी । भरण्डः स्वामी । वरण्डो मुखरोगः ॥ १२७ । **शॄदृभसोऽदिः** । शरत् ।

शूद्रे बिडाले कायशोधने' इति मेदिनी ॥ ११४ **पतिचण्डि**—। पत्लृ गतौ, चडि कोपे । पतन्त्यस्मिन्नधर्मेणेति पातालम् । उपधावृद्धिः । 'अधोभुवनपातालं बलिसद्म रसातलम्' इत्यमरः । 'पातालं नागलोके स्याद्विवरे वडवानले' इति मेदिनी ॥—**चण्डाल इति** । इदित्वान्नुमि अदुपधत्वाभावान्न वृद्धिः । माधवेन तु 'पतिचण्डिभ्यामालन्' इति नितं पठित्वा पातालशब्दे बाहुलकाद्वृद्धिमुक्त्वा, वृद्ध्यर्थमालञिति केषांचित्पाठे तु चण्डालशब्देऽपि वृद्धिः स्यादित्युक्तं । तदतिरभसात् ॥—**एके इति** । उज्ज्वलदत्तादयः । एतच्च 'कुलालवरुडकर्मारनिषादचण्डालमित्रामित्रेभ्यश्छन्दसि' इति चण्डालात्स्वार्थेऽणं विदधता वार्तिकेन तद्भाष्येण च सह विरुद्धमिति बोध्यम् ॥ ११५ **तमिविशि**—। तमु काङ्क्षायाम्, विश प्रवेशने, बिड आक्रोशे, मृण हिंसायाम्, कुल संस्त्याने, कपि चलने । निर्देशान्नलोपः । पल गतौ, पचि विस्तारे । 'तमालस्तिलके खड्गे तापिच्छे वरुणद्रुमे' इति मेदिनी । 'विशाला त्विन्द्रवारुण्यामुज्जयिन्यां तु योषिति । नृपवृक्षभिदोः पुंसि पृथुलेऽप्यभिधेयवत्' इति मेदिनी । '**बिडालो** नेत्रपिण्डे स्याद्वृषदंशकके पुमान्' इति च मेदिनी । 'ओतुर्बिडालो मार्जारो वृषदंशक आखुभुक्' इत्यमरः । '**मृणालं** नलदे क्लीबं पुंनपुंसकयोर्बिसे' इति मेदिनी । 'कुलालः कुकुभे कुम्भकारे स्त्री त्वञ्जनान्तरे' इति च मेदिनी । 'कुलालो घूकपक्षिणि । कुकुभे कुम्भकारे च' इति हेमचन्द्रः । 'कपालोऽस्त्री शिरोऽस्थि स्याद्घटादेः शकले व्रजे' इति मेदिनीविश्वप्रकाशौ । 'पाञ्चाली पुत्रिकागत्योः स्त्रियां पुंभूम्नि नीवृति' इति मेदिनी । बाहुलकात् श्यतेरपि कालन् । 'आदेच उपदेशे–' इत्यात्वम् । शाला । शल चलने । अस्मात् घञि शाला । 'सेनासुराच्छायाशालानिशानाम्' इति निपातनात्क्लीबमिति न्यासः । 'शाला द्रुस्कन्धशाखायां गृहगेहैकदेशयोः । ना झषे' इति मेदिनी ॥ ११६ **पतेरङ्गच्**—। पत्लृ गतौ । पक्षिणीत्युपलक्षणम् । 'पतङ्गः शलभे शालिप्रभेदे पक्षिसूर्ययोः । क्लीबं सूते' इति मेदिनी । सूते–पारद इत्यर्थः ॥ ११७ **तरत्या**—। तॄ प्लवनतरणयोः । लूञ् छेदने । तरङ्ग ऊर्मिः । 'तरङ्गस्तुरगादीनामुत्काले वस्त्रभङ्गयोः' इति विश्वः । 'लवङ्गं देवकुसुमे' । आकृतिगणोऽयम् ॥ ११८ **बिडादिभ्यः**—। बिड आक्रोशे, मृद क्षोदे, कॄ विक्षेपे, एभ्योऽङ्गच् कित्स्यात् । बिडङ्ग ओषधिविशेष इति उज्ज्वलदत्तः । 'बिडङ्गः कृमिसंघघ्ने बिडङ्गो नागरेऽन्यवत्' इति विश्वः । 'बिडङ्गस्त्रिष्वभिज्ञे स्यात् कृमिघ्ने पुंनपुंसकम्' इति मेदिनी । '**मृदङ्गः** पटहे घोषे' इति च । **कुरङ्गो** मृगविशेषः ॥—**बाहुलकादुत्वं चेति** । कुर शब्दे-इत्यस्मादङ्गच् । तस्य कित्वेन गुणाभाव इत्यन्ये ॥ ११९ **सृवृञोः**—। सृ गतौ, वृञ् वरणे । 'सारङ्गः पुंसि हरिणे चातके च मतङ्गजे । शबले त्रिषु' इति मेदिनी । बाहुलकात् नॄ नये । 'अथ नारङ्गः पिप्पलीरसे । यमजप्राणिनि विटे नागरङ्गद्रुमेऽपि च' इति मेदिनी ॥ १२० **गन् गम्य**—। गम्लृ गतौ, अद भक्षणे । **बाहुलकात्**—अम गत्यादिषु, अस्मादपि गन् । 'अङ्गं गात्रे उपाये च प्रतीके चाप्रधानके । अङ्गो देशविशेषे स्यादङ्ग संबोधनेऽव्ययम्' इति विश्वः । 'अङ्गं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृति । क्लीबैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिके' इति मेदिनी ॥ १२१ **छापू**—। छो छेदने, पूङ् पवने, खड भेदने । छायते छिद्यते वा यज्ञार्थमिति छागः । पूयते मुखमनेनेति पूगः । 'पूगस्तु क्रमुके वृन्दे' इति मेदिनी । 'खड्गो गण्डकशृङ्गे स्यान्निस्त्रिंशे गण्डकेऽपि च' इति शब्दतरङ्गिण्याम् । 'खड्गो गण्डकशृङ्गासिबुद्धभेदेषु गण्डके' इति मेदिनी ॥ १२२ **भृञः**—। डुभृञ् धारणपोषणयोः । किदित्यनुवर्तमाने किद्ग्रहणमिह स्पष्टार्थम् । 'भृङ्गो धूम्याटभिङ्गयोः । मधुव्रते भृङ्गराजे पुंसि भृङ्गं गुडत्वचि' इति मेदिनी ॥ १२३ **शृणातेः**—। शॄ हिंसायामस्माद्गन् धातोर्ह्रस्वत्वं प्रत्ययस्य तु कित्त्वं नुट् च । 'शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके । विषाणोत्कर्षयोश्चाथ शृङ्गः स्यात्कूर्चशीर्षके । स्त्रीविषायां स्वर्णमीनभेदयोर्ऋषभौषधौ' इति मेदिनी । 'शृङ्गं विषाणमाख्यातं शैलाग्रे जलयन्त्रके । मीनौषधिसुवर्णानां भेदे शृङ्गी प्रयुज्यते' इत्युत्पलिनीकोषः ॥ १२४ **गण् शकुनौ** । शृणातेः शकुनौ वाच्ये गण् स्यात्तस्य नुट् । 'अचोऽञ्णिति' इति धातोर्वृद्धिः । शार्ङ्गः पक्षी । शार्ङ्गं धनुरिति तु शृङ्गस्य विकार इति बोध्यम् ॥ १२५ **मुदिग्रोः**—। मुद हर्षे, गॄ निगरणे, आभ्यां यथासंख्य गक् ग इत्येतौ स्तः । मुद्गः सस्यभेदः । गर्गो मुनिविशेषः ॥ १२६ **अण्डन्**—। डुकृञ् करणे, सृ गतौ, भृञ् भरणे, वृञ वरणे । 'करण्डो मधुकोशासिकारण्डेषु ललाटके' इति मेदिनी । वरण्डोऽप्यन्तरावेदौ समूहमुखरोगयोः' इति विश्वमेदिन्यौ । बाहुलकात् तॄ प्लवनतरणयोरित्यतोऽपि । 'तरण्डो बडिशीसूत्रबद्धकाष्ठादिके प्लवे' इति मेदिनी ॥ १२७ **शॄदृ**—। शॄ हिंसायाम्,

'दरवृदयकूलयोः' । भसत् जघनम् ॥ १२८ । दृणातेः गुक् ह्रस्वश्च । दृषत् ॥ १२९ । त्यजितनियजिभ्यो डित् । त्यद् । तद् । यद् । सर्वादयः ॥ १३० । एतेस्तुट् च । एतद् ॥ १३१ । सर्तेरटिः । 'सरड् स्याद्वातमेघयोः' । वेदभाष्ये तु 'याभिः कृशानुम्' इति मन्त्रे 'सरड्भ्यो मधुमक्षिकाभ्यः' इति व्याख्यातम् ॥ १३२ । लङ्घेर्नलोपश्च । लघट् वायुः ॥ १३३ । पारयतेरजिः । पारक् सुवर्णम् ॥ १३४ । प्रथः कित्संप्रसारणं च । पृथक् । स्वरादिपाठादव्ययत्वम् ॥ १३५ । भियः षुक् ह्रस्वश्च । भिषक् ॥ १३६ । युष्यसिभ्यां मदिक् । 'युष' सौत्रो धातुः । युष्मद् । अस्मद् । त्वम् । अहम् ॥ १३७ । अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् । एभ्यश्चतुर्दशभ्यो मन् । अर्मश्चक्षूरोगः । स्तोमः सङ्घातः । सोमः । होमः । सर्मो गमनम् । धर्मः । क्षेमं कुशलम् । क्षोमम् । प्रज्ञाद्यणि—क्षौमं च । भाम आदित्यः । यामः । 'वामः शोभनदुष्टयोः' । पद्मम् । 'यक्ष पूजायाम्' यक्ष्मो रोगराजः । नेमः ॥ १३८ । जहातेः सन्वदालोपश्च । 'जिह्मः कुटिलमन्दयोः' ॥ १३९ । अवतेष्टिलोपश्च । मन्प्रत्ययस्यायं टिलोपो न प्रकृतेः । अन्यथा 'डित्' इत्येव ब्रूयात् । 'ज्वरत्वर–' २६५४ इति ऊठौ । तयोर्दीर्घे कृते गुणः । चादिपाठादव्ययत्वमित्युज्ज्वलदत्तः । तन्न, तेषामसत्त्वार्थत्वात् । वस्तुतस्तु स्वरादिपाठादव्ययत्वम् । अवतीति ओम् ॥ १४० । ग्रसेरा च । ग्रामः ॥ १४१ । अविसिविसिशुषिभ्यः कित् । ऊमं नगरम् । स्यूमो रश्मिः । सिमः सर्वः । 'शुष्ममग्निसमीरयोः' ॥ १४२ । इषियुधीन्धिदसिश्याधूसूभ्यो मक् । 'इष्मः कामवसन्तयोः' । 'ईषि' इति पाठे दीर्घादिः । युध्मः शरो योद्धा च । इध्मः समित् । दस्मो यजमानः । श्यामः । धूमः ।

दृ विदारणे, भस भर्त्सनदीप्त्योः । 'शरत् स्त्री वत्सरेऽप्यृतौ । दरत्स्त्रियां प्रपाते च भयपर्वतयोरपि । भसत् स्त्री भास्वरे योनौ' इति मेदिनी । 'उवे अम्बसुलाभिके' इति मन्त्रव्याख्यायां भसद्भग इति वेदभाष्यम्, 'जाघन्यां पत्नीः संयाजयन्ति भसद्वीर्या हि स्त्रियः' इत्यत्र भसज्जघनमिति व्याख्यातारः ॥ **१२८ दृणातेः**–। दृ विदारणे । 'दृषन्निष्पेषणशिलापट्टप्रस्तरयोः स्त्रियाम्' इति मेदिनी ॥ **१२९ त्यजि**—। त्यज हानौ, तनु विस्तारे, यज देवपूजादौ ॥—**त्यदित्यादि** । डित्त्वाट्टिलोपः ॥ **१३० एतेः**–। इण् गतौ अस्मादिस्तस्य तुटि गुणः । एतद् ॥ **१३१ सर्तेः**–। सृ गतौ ॥ **१३२ लङ्घेः**–। लघि शोषणे ॥ **१३३ पारयतेः**–। पार तीर कर्मसमाप्तौ, चुरादिः ॥—**पारगिति** । णिलोपः कुत्वम् ॥ **१३४ प्रथः**—। प्रथ प्रख्याने ॥ **१३५ भियः**–। ञिभी भये ॥ **१३६ युष्यसि**—। असु क्षेपणे ॥ **१३७ अर्तिस्तु**–। ऋ गतौ, ष्टुञ् स्तुतौ, षुञ् अभिषवे, हु दानादनयोः, सृ गतौ, धृञ् धारणे, क्षि क्षये, टुक्षु शब्दे, भा दीप्तौ, या प्रापणे, वा गतिगन्धनयोः, पद गतौ, णीञ् प्रापणे, 'सोमस्तुहिनदीधितौ । वानरे च कुबेरे च पितृदेवे समीरणे । वसुप्रभेदे कर्पूरे नीरे सोमलतौषधौ' इति मेदिनी ॥—**होम इति** । देवतोद्देशेन हविःप्रक्षेपः । 'धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ । अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे' इति च । 'धर्मः पुण्ये यमे न्याये स्वभावाचारयोः क्रतौ' इति विश्वः । 'क्षौमं पट्टे दुकूलेऽस्त्री क्षौमं वल्कलजांशुके । शणजेऽतसिजे' इति मेदिनी । 'भामः क्रोधे रवौ दीप्तौ' इति च । 'यामस्तु पुंसि प्रहरे संयमेऽपि प्रकीर्तितः' इति च । 'वामं धने पुंसि हरे कामदेवे पयोधरे । वल्गुप्रतीपसव्येषु त्रिषु नार्या स्त्रियामथ । वामीशृगालीवडवारासभीकरभीषु च' इति । 'पद्मोऽस्त्री पद्मके व्यूहनिधिसंख्यान्तरेऽम्बुजे । ना नागे' इति च मेदिनी ॥—**यक्ष पूजायामिति** । अयमन्तस्थादिः । मनिन्प्रत्यये तु नकारान्तः शब्दः । 'क्षयः शोषश्च यक्ष्मा च' इत्यमरः । 'राजयक्ष्मेव रोगाणाम्' इति माघः । 'यक्ष्मणाऽपि परिहाणिराययौ' इति रघुः । अत्र जकारयकारयोर्भेदाग्रहेण 'यक्षभक्षहसनयोः' इत्युज्ज्वलदत्तेनोपन्यस्तम् । तन्न । तस्य चवर्गतृतीयादित्वात् । अत एव 'अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां चुबुकादधि । यक्ष्मं सर्वस्मात्' इति मन्त्रे यक्ष्मशब्दस्यान्तःस्थादित्वम् । 'जक्षन् क्रीडन् रममाण' इत्यादिमन्त्रे तु जक्षच्छब्दस्य चवर्गतृतीयादित्वं वेदभाष्यकृतो व्याचख्युः । 'नेमः कालेऽवधौ गर्ते प्राकारे कैतवेऽपि च' इति मेदिनी । 'नेमस्त्वर्धे प्राकारगर्तयोः । अवधौ कैतवे च' इति हेमचन्द्रः ॥ **१३८ जहातेः**-। ओहाक् त्यागे ॥—**जिह्म इति** । मन्प्रत्ययस्य सन्वत्त्वाद् द्वित्वे 'सन्यतः' इतीत्वम् । 'जिह्मस्तु कुटिले मन्दे क्लीबं तगरपादपे' इति मेदिनी ॥ **१३९ अवतेः**-। अव रक्षणादौ । 'ओं प्रश्ने स्वीकृतौ रोषे' इति विश्वः ॥ **१४० ग्रसेरा च** । ग्रसु अदने । अतो मन्धातोराकारश्च । 'ग्रामः स्वरे संवसथे वृन्दे शब्दादिपूर्वके' इति विश्वः । शब्दादिपूर्वको ग्रामशब्दो वृन्दे, शब्दग्रामो गुणग्राम इति यथा । 'शब्दादिपूर्वो वृन्देऽपि ग्रामः' इत्यमरः । संपूर्वोऽयं युद्धे । तदुक्तं—'संपूर्वः संयुगे स्मृतः' इति ॥ **१४१ अविसिवि**–। अव रक्षणादौ, षिवु तन्तुसन्ताने, षिञ् बन्धने, शुष शोषणे' एभ्यो रन्स्यात्स च कित् । ऊठादिकं पूर्ववत् ॥—**ऊमं नगरमिति** । 'त्वे क्रतुम्' इति मन्त्रे ऊमास्तर्पका यजमाना इति वेदभाष्यम् । टापि बाहुलकाद्ध्रस्वत्वे 'उमाऽतसीहैमवतीहरिद्राकान्तिकीर्तिषु' इति मेदिनी ॥—**स्यूमो रश्मिरिति** । सूत्रतन्तुरित्यन्ये । सिमः सर्वनामगणे पठितः । 'शुष्मं तेजसि सूर्ये ना' इति मेदिनी । शुष्मं बलमिति वेदभाष्यम् ॥ **१४२ इषियुधि**-। इष गतिहिंसादानेषु । ईष गताविति केचित् । ईष्मः । युध संप्रहारे, ञिइन्धी दीप्तौ, दसु उपक्षये, श्यैङ् गतौ, धूञ् कम्पने, षूञ् प्राणिगर्भविमोचने ॥—**युध्म इति** । 'युध्मो धनुषि संयुगे' इति मेदिनी । 'दस्मस्तु यजमाने स्यादपि चौरे हुताशने' इति च । 'त्रिषु श्यामौ हरित्कृष्णौ श्यामा स्याच्छारिवा निशा' इत्यमरः । 'श्यामो वटे प्रयागस्य वारिदे वृद्धदारके । पिके च कृष्णहरितोः पुंसि स्यात्तद्वति त्रिषु । मरीचे सिन्धु-

सूमोऽन्तरिक्षम् । बाहुलकात्–ईर्मं व्रणः ॥ १४३ । युजिरुचितिजां कुश्च । युग्मम् । रुक्मम् । तिग्मम् ॥ १४४ । हन्तेर्हि च । हिमम् ॥ १४५ । भियः षुग्वा । भीमः । भीष्मः ॥ १४६ घर्मः । घृधातोर्मग्गुणश्च निपात्यते ॥ १४७ । ग्रीष्मः । ग्रसतेर्निपातोऽयम् । १४८ । प्रथेः षिवन् संप्रसारणं च । पृथिवी । 'पवन्' इत्येके, पृथवी । 'पृथवी पृथिवी पृथ्वी' इति शब्दार्णवः ॥ १४९ । अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन् ॥ अश्वः । 'प्रुष स्नेहनादौ' 'प्रुष्वः स्यादृतुसूर्ययोः' । प्रुष्वा जलकणिका । लट्वा पक्षिभेदः फलं च । कण्वं पापम् । बाहुलकादित्वे—किण्वमपि । खट्वा । विश्वम् ॥ १५० । इण्शीभ्यां वन् । एवो गन्ता । 'ये च एवा मरुतः' । असत्वे निपातोऽयम् । 'शेवं मित्राय वरुणाय' ॥ १५१ । सर्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा[1] अतन्त्रे । अकर्तर्येते निपात्यन्ते । सृतमनेन विश्वमिति सर्वम् । निपूर्वात् घृषेर्गुणाभावोऽपि, निघृष्यतेऽनेन निघृष्वः खुरः । रिष्वो हिंस्रः । लष्वो नर्तकः । 'लिष्वः' इत्यन्ये, तत्रोपधाया इत्वमपि । शेतेऽस्मिन् सर्वमिति शिवः शम्भुः, शीङो ह्रस्वत्वम् । पद्वो रथो भूलोकश्च । प्रह्वयते इति प्रह्वः, ह्वेञ आकारवकारलोपः, जहातेरालोपो वा । ईषेर्वन्, ईष्व आचार्यः । 'इष्वः' इत्यन्ये । अतन्त्रे किम् । सर्त्ता सारकः । बाहुलकात्—हसतेः-ह्रस्वः ॥ १५२ । शेवयह्वजिह्वाग्रीवाप्वमीवाः । 'शेव' इत्यन्तोदात्तार्थम् । यान्त्यनेन यह्वः, ह्रस्वो हुगागमश्च । लिहन्त्यनया जिह्वा, लकारस्य जः, गुणाभावश्च । गिरन्त्यनया ग्रीवा, ईडागमश्च । आप्नोतीति—आप्वा वायुः । मीवा उदरकृमिः । वायुरित्यन्ये ॥ १५३ । कॄगॄशॄदॄभ्यो वः । कर्वः काम आखुश्च । गर्वः । शर्वः । दर्वो राक्षसः ॥ १५४ । कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः । यौतीति युवा । वृषा इन्द्रः । तक्षा । राजा । धन्वा मरुः । धन्व शरासनम् । द्युवा सूर्यः । प्रतिदीव्यन्त्यस्मिन् प्रतिदिवा दिवसः ॥ १५५ । सप्यशूभ्यां तुट् च । सप्त । अष्ट ॥ १५६ । नञि जहातेः ।

लवणे क्लीबं स्त्री शारिवौषधौ । अप्रसूताङ्गनायां च प्रियङ्गावपि गुग्गुलौ । यमुनायां त्रियामायां कृष्णत्रिवृतिकौषधे । नीलिकायाम्' इति मेदिनी ॥—**ईर्ममिति** । ईर गतौ । 'व्रणोऽस्त्रियामीर्ममरुः क्लीबे' इत्यमरः । बाहुलकात्–जन जनन इत्यस्मादपि । जन्मम् । रुह बीजजन्मनीति निर्देशान्मनिनन्तोऽप्यस्ति स तु नान्तः । 'जनुर्जननजन्मानि' इत्यमरस्तु अकारान्तनकारान्तोभयसाधारणः ॥ **१४३ युजि–**। युजिर् योगे, रुच दीप्तौ, तिज निशाने, एभ्यो मक् कवर्गश्चान्तादेशः । 'रुक्मं तु काञ्चने लोहे' इति विश्वमेदिन्यौ । तिग्मं तीक्ष्णम् ॥ **१४४ हन्तेः–**। हन हिंसागत्योरस्मान्मक् धातोर्हिरादेशश्च । 'हिमं तुषारमलयोद्भवयोः स्यान्नपुंसकम् । शीतले वाच्यलिङ्गं' इति मेदिनी ॥ **१४५ भियः–**। ञिभी भये । बिभेत्यस्मादिति विग्रहः । 'भीष्मो गाङ्गेयघोरयोः । भीमोऽम्लवेतसे घोरे शम्भौ मध्यमपाण्डवे' इति मेदिनी ॥ **१४६ घर्मः** । घृ क्षरणदीप्त्योः ॥ **१४७ ग्रीष्मः** । ग्रसु अदने । 'घर्मः स्यादातपे ग्रीष्मेऽप्युष्णस्वेदाम्भसोरपि' । 'ग्रीष्म ऊष्मर्तुभेदयोः' इति च मेदिनी ॥ **१४८ प्रथेः–**। प्रथ प्रख्याने । षित्त्वान्ङीप् । 'पृथवी पृथिवी पृथ्वी धरा सर्वसहा रसा' इति शब्दार्णवः ॥ **१४९ अशूप्रुषि–**। अशू व्याप्तौ, लट बाल्ये, कण निमीलने, खट काङ्क्षायाम्, विश प्रवेशने । 'अश्वः पुंजातिभेदे च तुरगे च पुमानयम्' इति मेदिनी । 'अश्वः पुंभेदवाजिनोः' इति विश्वः । 'लट्वा करञ्जभेदे स्यात्फले वाद्ये खगान्तरे' इति विश्वमेदिन्यौ । 'कण्वं पापे मुनौ पुंसि' इति मेदिनी । 'किण्वं बीजाघसीधुपु' इति च पठ्यते । खट्यते=शयनार्थिभिः काङ्क्ष्यते इति खट्वा । 'विश्वा ह्यतिविषायां स्त्री जगति स्यान्नपुंसकम् । न ना शुण्ठ्यां पुंसि देवप्रभेदेष्वखिले त्रिपु' इति मेदिनी ॥ **१५० इण्–**। इण् गतौ । शीङ् स्वप्ने । शेवं सुखमिति वेदभाष्यम् । शेवं मेढ्रमित्युज्ज्वलदत्तः ॥ **१५१ सर्वनिघृष्व—**। सृ गतौ, घृषु संघर्षे, रिष हिंसायाम्, लष कान्तौ, शीङ् स्वप्ने, पद गतौ, ह्वेञ् स्पर्धायां शब्दे च, ओहाक् त्यागे इति वा, ईष शब्दे । तन्त्रशब्दोऽत्र कर्तृवाचीत्याह—**अकर्तरीति** ॥–**निपात्यन्त इति** । वन्प्रत्ययान्ततयेति शेषः ॥—**ह्रस्व इति** । हस शब्दे । 'ह्रस्वो न्यक्खर्वयोस्त्रिपु' इति मेदिनी ॥ **१५२ शेवयह्व—**। एते वन्प्रत्ययान्ता निपात्यन्ते ॥—**अन्तोदात्तार्थमिति** । 'इण्शीभ्याम्' इत्यनेन आद्युदात्तत्वसिद्धेरितिभावः । शीङ् स्वप्ने । शेवा लिङ्गाकृतिः ॥ दशपादीवृत्तिरीत्याऽऽह—**यान्त्यनेनेति** । उज्ज्वलदत्तस्तु—यज देवपूजादौ । जकारस्य हकारो यह्वो यजमान इत्याह । वैदिकनिघण्टौ महन्नामसु यह्वशब्दः पठितः । 'प्रवो यह्वं पुरूणां' । यह्वं महान्तमिति वेदभाष्यम् । लिह आस्वादने । लिहन्त्यनयेति जिह्वा । जि जये । हुगागमः । जिह्वा रसनेत्युज्ज्वलदत्तः ॥—**ग्रीवेति** । गॄ निगरणे, आप्लृ व्याप्तौ, मीङ् हिंसायाम् ॥—**मीवेति** । वेदे तु अमीवेति छित्त्वा अम रोग इत्यस्माद्वः, इट् चेत्युक्तम् । 'अमीवहा वास्तोष्पते' इत्यादिमन्त्रास्तत्रानुकूलाः ॥ **१५३ कॄगॄ–**। कॄ विक्षेपे, गॄ निगरणे, शॄ हिंसायाम्, दॄ विदारणे । गर्वोऽहंकारः । शर्वो रुद्रः ॥ **१५४ कनिन्यु—**। यु मिश्रणे, वृषु सेचने, तक्षू त्वक्षू तनूकरणे, राजृ दीप्तौ, धवि गत्यर्थः, द्यु अभिगमने, दिवु क्रीडादौ । 'युवा स्यात्तरुणे श्रेष्ठे निसर्गबलशालिनि' इति, 'वृषा कर्णे महेन्द्रे ना' इति च मेदिनी । 'तक्षा तु वर्धकिस्त्वष्टा रथकारश्च काष्ठतट्' इत्यमरः । 'राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः' इति च । 'समानौ मरुधन्वानौ' इति च 'अथास्त्रियाम् । धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इति चामरः । 'धन्वा तु मरुदेशे ना क्लीबे चापे स्थलेऽपि च' इति मेदिनी ॥ **१५५ सप्यशूभ्याम्—**। षप समवाये, अशू व्याप्तौ ॥ १५६

1 'शिवपद्वप्र' इत्यपि पाठः क्वचिद्दृश्यते ।

अहः ॥ १५७ । **श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति** । एते त्रयोदश कनिप्रत्ययान्ता निपात्यन्ते । श्वयतीति श्वा । उक्षा । पूषा । 'प्लिह गतौ' इकारस्य दीर्घत्वम्, प्लेहतीति प्लीहा कुक्षिव्याधिः । 'क्लिदू आर्द्रीभावे' क्लिद्यति क्लेदा चन्द्रः । स्निह्यतेर्गुणः, स्निह्यतीति स्नेहा सुहृच्चन्द्रश्च । मुह्यन्त्यस्मिन्नाहते मूर्धा, मुहेरुपधाया दीर्घो धोऽन्तादेशो रमागमश्च । मज्जत्यस्थिषु मज्जा अस्थिसारः । अर्यपूर्वो माङ्, अर्यमा । विश्वं प्साति विश्वप्सा अग्निः । परिजायते परिज्मा चन्द्रोऽग्निश्च, जनेरुपधालोपो मश्चान्तादेशः । मातरि=अन्तरिक्षे श्वयतीति मातरिश्वा, धातोरिकारलोपः । 'मह पूजायाम्' हस्य घो वुगागमश्च, मघवा इन्द्रः ॥ इत्युणादिषु प्रथमः पादः ॥

——>o<——

## अथ द्वितीयः पादः ।

१५८ । **कृहृभ्यामेणुः** । करेणुः । हरेणुर्गन्धद्रव्यम् ॥ १५९ । **हनिकुषिनीरमिकाशिभ्यः क्थन्** । हथो विषण्णः । कुष्ठः । नीथो नेता । रथः । काष्ठम् ॥ १६० । **अवे भृञः** । अवभृथः ॥ १६१ । **उषिकुषिगार्तिभ्यः स्थन्** । ओष्ठः । कोष्ठम् । गाथा । अर्थः । बाहुलकात्–शोथः ॥ १६२ । **सर्तेर्णित्** । सार्थः समूहः ॥ १६३ । **जॄवृञ्भ्यामूथन्** । जरूथं मांसम् । 'वरूथो रथगुप्तौ ना' ॥ १६४ । **पातॄतुदिवचिरिचिसिचिभ्यस्थक्** । 'पीथो रविर्घृतं पीथम्' । 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु । अवतारर्षिजुष्टाम्भःस्त्रीरजःसु च विश्रुतम्' ॥ इति विश्वः । तुत्थोऽग्निः । उक्थं सामभेदः । रिक्थम् । बाहुलकाद्दचेरपि—'रिक्थमृक्थं धनं वसु' । सिक्थम् ॥ १६५ । **अर्तेर्निरि** । निर्ऋथं साम ॥ १६६ । **निशीथ-**

---

**नञि—**। ओहाक् त्यागे, कनिनि आतो लोपः ॥ १५७ **श्वन्नुक्षन्-**। टुओश्वि गतिवृद्ध्योः, उक्ष सेचने, पुष वृद्धौ, ष्णिह प्रीतौ, मुह वैचित्ये, मुर्वी बन्धने । उकारस्य दीर्घत्वे वकारस्य धकार इत्युज्ज्वलदत्तः । टुमस्जो शुद्धौ । मस्जेः सकारस्य शकारस्तस्य जश्त्वेन जः । माङ् माने शब्दे च, प्सा भक्षणे, जनी प्रादुर्भावे, टुओश्वि गतिवृद्ध्योः ॥—**कनिप्रत्ययान्ता इति** । नायं निदिति भावः । केचित्तु नित्त्वं स्वीकृत्य उक्षन्नादीनां सूत्रेऽन्तोदात्तनिपातनमाहुः । तच्च गौरवग्रस्तमित्युपेक्ष्यम् ॥—**श्वेति** । इकारलोपो निपात्यते ॥—**पूषेति** । 'सौ च' इत्युपधादीर्घः । 'इन्हन्–' इति नियमात्पूषणौ पूषण इत्यादौ न दीर्घः । 'क्लेदौषधिशशाङ्कयोः' इति यादवः ॥—**मूर्धेति** । 'मूर्धा ना मस्तकोऽस्त्रियाम्' इत्यमरः ॥—**मज्जेति** । नकारान्तोऽयम् । टाबन्तोऽप्यभ्युपगम्यते । 'ऊष्मया सार्धमूष्मापि मज्जोक्तो मज्जया सह' इति द्विरूपकोशात् । 'अर्यमा तु पुमान्सूर्ये पितृदेवान्तरेऽपि च' इति मेदिनी ॥—**परिजायत इत्यादि** । एतच्च दशपादीवृत्त्यनुरोधेनोक्तम् । 'परिज्मानं सुखं रथम्' इति मन्त्रस्य वेदभाष्ये तु परिज्मा परितो गन्ता । अज्रेः परिपूर्वस्य 'श्वन्नुक्षन्–' इत्यादिना मन्प्रत्ययः, अकारलोपः, आद्युदात्तत्वं च निपात्यत इत्युक्तम् । उज्ज्वलदत्तस्तु—परिज्वेति पठित्वा ज्रु इति सौत्रो धातुः परिपूर्वः, यणादेशः परिज्वा चन्द्रः–इत्याह, तल्लक्ष्यविरोधादुपेक्ष्यम् ॥—**मातरिश्वेति** । सप्तम्या अलुक् । इह भत्वविषये संप्रसारणं न भवति । 'श्वयुव–' इति सूत्रे अभिव्यक्ततरत्वेन कुक्कुरवाचकस्यैव श्वशब्दस्य तदन्तस्य च ग्रहणात् । तेन मातरिश्वनः मातरिश्वनेत्येव । इह सूत्रे इतिशब्द आद्यर्थस्तेनान्येभ्योऽपि यथादर्शनं कनिः प्रयोक्तव्यः । दशपाद्यां तु इति शब्दोऽत्र न पठ्यते ॥

**इत्युणादिषु प्रथमः पादः ॥**

१५८ **कृहृभ्याम्-**॥ डुकृञ् करणे, हृञ् हरणे । 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः । 'करेणुर्गजयोषायां स्त्रियां पुंसि मतङ्गजे' इति मेदिनी ॥—**गन्धद्रव्यमिति** । कलायश्चेति बोध्यम् । 'कलायस्तु सतीनकः' इत्यमरः । 'हरेणुखण्डिके चास्मिन्' इत्यमरः । 'हरेणुर्ना सतीने स्त्री रेणुका[illegible]' इति मेदिनीविश्वप्रकाशौ ॥ १५९ **हनिकुषि-**। हन हिंसागत्योः, कुष निष्कर्षे, णीञ् प्रापणे, रमु क्रीडायाम्, काशृ दीप्तौ । 'कुष्ठं रोगे पुष्करे स्त्री' इति मेदिनी । 'कुष्ठं रोगे सुगन्धे च' इति विश्वः । 'नीथे नीथे मघवानं सुतासः' इति मन्त्रे नीथशब्दस्यान्तोदात्तत्वं बाहुलकात् । नीथे नीथे=स्तोत्रे स्तोत्रे इति वेदभाष्यम् । 'रथः पुमानवयवे स्यन्दने वेतसेऽपि च' इति मेदिनी । 'रथः स्यात्स्यन्दने काये वीरणे वेतसेऽपि च' इति विश्वः । 'काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः । स्थानमात्रे दिशि च स्त्री दारुणि स्यान्नपुंसकम्' इति मेदिनी ॥ १६० **अवे-**। डुभृञ् धारणपोषणयोः । अवभृथो यज्ञावसानम् ॥ १६१ **उषिकुषि-**। उष दाहे, कुष निष्कर्षे, गै शब्दे, ऋ गतौ, एभ्यः स्थन् । 'कोष्ठं कुक्षिकुसूलयोः । **गाथा** श्लोके संस्कृतान्यभाषायां शेषवृक्षयोः' इति मेदिनी । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः । **शोथः** श्वयथुः । शु गतौ ॥ १६२ **सर्तेः-**। सृ गतौ । 'सार्थो वणिक्समूहे स्यादपि संघातमात्रके' इति मेदिनीविश्वप्रकाशौ ॥ १६३ **जॄवृञ्-**। ज्या वयोहानौ क्र्यादिः, जॄष् दिवादौ । वृञ् वरणे । जरूथोऽसुरविशेष इति वेदभाष्यम् । 'जरूथं स्यात्तनुत्राणे रथगोपनवेश्मनोः' इति हेमचन्द्रः ॥ १६४ **पातॄ-**। पा पाने, तॄ प्लवनतरणयोः, तुद व्यथने, वच परिभाषणे, रिचिर् विरेचने, षिच क्षरणे, ऋच स्तुतौ । 'तुत्थोऽग्नावञ्जने तुत्था नीलीसूक्ष्मैलयोरपि' इति विश्वः । 'तुत्थमञ्जनभेदे स्यान्नीलीसूक्ष्मैलयोः स्त्रियाम् । 'सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसकम्' इति मेदिनी ॥ १६५ **अर्तेः-**। ऋ गतौ । 'द्रोघवाचस्ते निर्ऋथं सचन्ताम्' इति मन्त्रे निर्ऋथो हिंसेति वेदभाष्यम् ॥ १६६ **निशीथ-**। शीङ् स्वप्ने निपूर्वः, पा पाने गोपूर्वः,

गोपीथावगथाः । निशीथोऽर्धरात्रः, रात्रिमात्रं च । गोपीथं तीर्थम् । अवगथः प्रातःस्नातः ॥ १६७ । गश्चोदि । उद्गीथः साम्नो भागविशेषः ॥ १६८ । समीणः । समिथो वह्निः संग्रामश्च ॥ १६९ । तिथपृष्ठगूथयूथप्रोथाः । तिजेर्जलोपः, तिथोऽनलः कामश्च । पृष्ठम् । गूथं विष्ठा । यूथं समूहः । 'प्रोथमस्त्री तुरङ्गास्ये प्रोथः प्रस्थित उच्यते' ॥ १७० । **स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्** । द्वात्रिंशतो रक् स्यात् । वलि यलोपः, स्फारम् । न्यङ्क्वादित्वात्कुत्वम्—तक्रम् । वक्रम् । शक्रः । क्षिप्रम् । क्षुद्रः । सृप्रश्चन्द्रः । तृप्रः पुरोडाशः । दृप्रो बलवान् । वन्द्रः पूजकः । उन्द्री, उन्द्रो जलचरः । श्वित्रं कुष्ठम् । 'वृत्रो रिपौ ध्वनौ ध्वान्ते शैले चक्रे च दानवे' । अजेर्वी, वीरः । नीरम् । पद्रो ग्रामः । मद्रो हर्षो देशभेदश्च । 'मुद्रा प्रत्ययकारिणी' । 'खिद्रो रोगो दरिद्रश्च' । छिद्रम् । भिद्रं वज्रम् । मन्द्रः । चन्द्रः । पचाद्यचि 'चन्दः' अपि । 'हिमांशुश्चन्द्रमाश्चन्द्रः शशी चन्दो हिमद्युतिः' । दह्रोऽग्निः । दस्रः स्वर्वैद्यः । 'दभ्रः समुद्रः स्वल्पं च' । वसेः संप्रसारणे—

३१६८ । न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् ।८।३।११०। रेफपरस्य सकारस्य सृप्यादीनां सवनादीनां च मूर्धन्यो न स्यात् । 'पूर्वपदात्–' २६४१ इति प्राप्तः प्रतिषिध्यत इति वृत्तिर्भूयोऽभिप्राया । तेन 'शासिवसि–' २४१० इति प्राप्तमपि न । उस्रो रश्मिः । उस्रा गौः । वाश्रो दिवसः । वाश्रं मन्दिरम् । शीरोऽजगरः । हस्रो मूर्खः । सिध्रः साधुः । शुभ्रम् । बाहुलकात्—मुसे[1] रक्, मुस्रम् । उदश्रु ॥ १७१ । **चकिरम्योरुच्चोपधायाः** । चुक्रमम्लद्रव्यम् । रुम्रोऽरुणः ॥ १७२ । **वौ कसेः** । विकुस्रश्चन्द्रः ॥ १७३ । **अमितम्योर्दीर्घश्च** । आम्रम् । ताम्रम् ॥ १७४ । **निन्देर्नलोपश्च** । निद्रा ॥ १७५ । **अर्देर्दीर्घश्च** । आर्द्रम् ॥

---

'घुमास्था–' इतीत्वम् । गाङ् गतौ । अवपूर्वस्य धातोः ह्रस्वत्वम् । 'निशीथस्तु पुमानर्धरात्रे स्याद्रात्रिमात्रके' इति मेदिनी । 'प्रति त्यं चारुमध्वरम्' इति मन्त्रे 'गोपीथः सोमपानम्' इति वेदभाष्यम् । तीर्थमिति तु वृत्तिकारः ॥ **१६७ गश्चोदि** । उदि उपपदे गै शब्दे इत्यस्मात् थक् ॥ **१६८ समीणः** । इण् गतावस्मात्समि उपपदे थक् । समिथशब्दः संग्रामपर्यायेषु वैदिकनिघण्टौ पठितः । 'श्रिये जातः' इति मन्त्रे समिथाः=युद्धानीति वेदभाष्यम् । तच्च युक्तमेव, सम्यगेति जयार्थमत्रेति व्युत्पत्तेः । संपूर्वकेणः क्विन्नाद्यन्तस्य लोकेऽपि युद्धार्थत्वदर्शनाच्च । उक्तं ह्यमरेण—'समित्याजिसमिद्युधः' इति ॥ **१६९ तिथपृष्ठ–** । तिज निशाने, पृषु सेचने, गु पुरीषोत्सर्गे, यु मिश्रणे, प्रुङ् गतौ–एते थक्प्रत्ययान्ता निपात्यन्ते । 'पृष्ठं तु चरमं तनोः' इत्यमरः । 'पृष्ठ चरममात्रेऽपि देहस्यावयवान्तरे' इति मेदिनी । स्तोत्रविशेषोऽपि पृष्ठम्, 'पृष्ठैः स्तुवते' इत्यादौ तथा निर्णयात् ॥ **—गूथमिति** । निपातनाद्दीर्घः । एवं यूथेऽपि । 'यूथं तिर्यक्समूहेऽस्त्री पुष्पभेदेऽपि योषिति' इति मेदिनी । 'यूथी पुष्पप्रभेदे स्यान्मागध्यां च कुरण्टके । यूथं तिर्यक्समूहेऽपि वृन्दमात्रेऽपि भाषितम्' इति विश्वः । 'यूथं तदग्रसरगर्वितकृष्णसारम्' इति रघुः ॥ **—प्रोथमिति** । निपातनाद्गुणः । 'प्रोथोऽस्त्री हयघोणायां ना कट्यामध्वगे त्रिषु' इति मेदिनी ॥ **१७० स्फायितञ्चि—** । स्फायी वृद्धौ, तञ्चु संकोचने, वञ्चु प्रलम्भने, शक्लृ शक्तौ, क्षिप प्रेरणे, क्षुदिर् संपेषणे, सृप्लृ गतौ, तृप प्रीणने, दृप हर्षमोचनयोः, वदि अभिवादनस्तुत्योः, उन्दी क्लेदने, श्विता वर्णे, वृतु वर्तने, अज गतिक्षेपणयोः, णीञ् प्रापणे, पद गतौ, मदी हर्षे, मुद हर्षे, खिद दैन्ये, छिदिर् द्वैधीकरणे, भिदिर् विदारणे, मदि स्तुतौ, चदि आह्लादने, दह भस्मीकरणे, दसु उपक्षेपे, दम्भु दम्भने, वस निवासे, वाशृ शब्दे, शीङ् स्वप्ने, हसे हसने, षिध गत्याम्, शुभ दीप्तौ ॥ **—द्वात्रिंशत इति** । दशपाद्यां तु त्रयस्त्रिंशदुक्ताः । दम्भिवहिवसीति पठित्वा 'वह प्रापणे' ऊह्रोऽनड्वानित्युदाहरणात् । माधवोऽप्येवम् ॥ **—स्फारमिति** । 'नेड्वशि कृति' इति नेट् । वलि यलोपः । 'स्फारः स्यात्पुंसि विकटे करकादेश्च बुद्बुदे' इति मेदिनी ॥ **—तक्रमिति** । 'तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम्' इत्यमरः । 'वक्रः स्याज्जटिले क्रूरे पुटभेदे शनैश्चरे' इति विश्वः । 'शक्रः पुमान् देवराजे कुटजार्जुनभूरुहोः' इति मेदिनी । 'क्षुद्रः [illegible] वाच्यवत्' इति मेदिनी ॥ **—तृप्रः पुरोडाश इति** । 'न तृप्रा उरुव्यचसम्' इति मन्त्रे वेदभाष्यकारैरित्थं व्याख्यातं, प्रकृतसूत्रे उज्ज्वलदत्तादिभिश्च । दशपादीवृत्तौ तु तृप्रमाज्यं काष्ठं चेत्युक्तम् । तृप्रं दुःखमिति सुब्धातुवृत्तौ माधवः । **हिमांशुरित्यादि–हिमद्युतिरित्यन्तं** शब्दार्णवः । दस्यति—रोगान् क्षिपतीति दस्रः । 'दस्रः खरेऽश्विनीसुते' इति मेदिनी । 'दस्रः खरे चाश्विनयोः' इति विश्वः ॥ **३१६८ शासिवसीति प्राप्तमपि नेति** । एवं च 'अविन्द उस्रियाः' इति मन्त्रे षत्वाभावः सिद्धः । माधवस्तु वृत्तिग्रन्थानुरोधेन बाहुलकादिह षत्वं नेति व्याचष्ट । 'उस्रो वृषे च किरणे उस्रार्जुन्युपचित्रयोः' इति मेदिनी । 'माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी' इत्यमरः । 'वाश्रो ना दिवसे क्लीबं मन्दिरे च चतुष्पथे' इति मेदिनी । 'वाश्रो रासभपक्षिणोः' इत्येके । माधवेन तु 'वाश्रेव विद्युन्मिमाति' इति मन्त्रे शब्दयुक्ता प्रस्तुतस्तना धेनुर्वाश्रेति व्याख्यातम् । 'शुभ्रं स्यादभ्रके क्लीबमुद्दीप्तशुक्लयोस्त्रिषु' इति मेदिनी ॥ **—मुस्रमिति** । मुस खण्डने ॥ **१७१ चकि—** । चक तृप्तौ, रमु क्रीडायाम्, 'चुक्रस्त्वम्लेऽम्लवेतसे । चुक्री चाङ्गेरिकायां स्याद्वृक्षाम्ले चुक्रमिष्यते' इति विश्वः ॥ **१७२ वौ कसेः** । कस गतौ । विपूर्वादस्माद्रक् स्यादुत्वं चोपधायाः ॥ **१७३ अमि—** । अम गत्यादिषु, तमु काङ्क्षायाम् । आभ्यां रक् स्यादुपधाया दीर्घश्च ॥ **१७४ निन्देः—** । णिदि कुत्सायाम् ॥

---

[1] केचित् 'मुसे रक्' इति सूत्रमेवेत्याहुः ।

१७६ । **शुचेर्दश्च** । शूद्रः ॥ १७७ । **दुरीणो लोपश्च** । दुःखेनेयते प्राप्यत इति दूरम् ॥ १७८ । **कृतेश्छः क्रू च** । कृच्छ्रम् । क्रूरः ॥ १७९ । **रोदेर्णिलुक् च** । रोदयतीति रुद्रः ॥ १८० । **बहुलमन्यत्रापि संज्ञाछन्दसोः** । णिलुगित्येव ।

'वान्ति पर्णशुषो वातास्ततः पर्णमुचोऽपरे ।
ततः पर्णरुहो वान्ति ततो देवः प्रवर्षति ॥'

१८१ । **जोरी च** । जीरोऽणुः । 'ज्यश्च' इत्येके ॥ १८२ । **सुसूधागृधिभ्यः क्रन्** । सुरः । सूरः । धीरः । गृध्रः ॥ १८३ । **शुसिचिमीनां दीर्घश्च** । शुः सौत्रः, शूरः । सीरम् । चीरम् । मीरः समुद्रः ॥ १८४ । **वाविन्धेः** । वीध्रं विमलम् ॥ १८५ । **वृधिवपिभ्यां रन्** । वर्ध्रं चर्म । वप्रः प्राकारः ॥ १८६ । **ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्ल-**

१७५ **अर्देः** । अर्द गतौ । 'आर्द्रा नक्षत्रभेदे स्यात्स्त्रियां क्लिन्नेऽभिधेयवत्' इति मेदिनी ॥ १७६ **शुचेः—** । शुच शोके, अस्माद्रक् दश्चान्तादेशः, धातोर्दीर्घश्च । शूद्रो वृषलः । 'अहहा रे त्वा शूद्र' इति श्रुतौ तु रूढेर्बाधाद् योग एव पुरस्कृतः । तथा चोत्तरतन्त्रे भगवता व्यासेन सूत्रितं—'शुगस्य तदनादरश्रवणात्' इति ॥ १७७ **दुरीणो—** । इण् गतावित्यस्माद्दुर्युपपदे रक् स्याद्धातोर्लोपश्च । 'रो रि' इति रेफस्य लोपे 'ढ्रलोपे–' इति दीर्घः ॥ १७८ **कृतेः—** । कृती च्छेदने इत्यस्माद्रक् स्यात्-छ-क्रू इत्येतावादेशौ च स्तः । छस्त्वन्त्यस्यादेशः । क्रू त्वनेकाल्त्वात्सर्वस्यादेशः । 'कृच्छ्रमाख्यातमाभीले पापसांतपनादिनोः' इति विश्वमेदिन्यौ । 'स्यात्कष्टं कृच्छ्रमाभीलम्' इत्यमरः । 'क्रूरस्तु कठिने घोरे नृशंसे चाभिधेयवत्' इति विश्वः । 'नृशंसो घातुकः क्रूरः पापो धूर्तस्तु वञ्चकः' इत्यमरः ॥ १७९ **रोदेः—** । रुदिर् अश्रुविमोचने । ण्यन्तादस्माद्रक् णेश्च लुक् । 'णेरनिटि' इति लोपे तु 'पुगन्त–' इति गुणः स्यादिति णिलुक् चेत्युक्तम् ॥—**रोदयतीति रुद्र इति** । नन्वेवं 'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' इति श्रुत्या सह विरोधोऽत्र स्यादिति चेत् । अत्राहुः—'कर्तरि कृत्' इति सूत्रानुरोधेन शम्भुरित्यत्र शं भावयतीत्यन्तर्भावितण्यर्थता यथा स्वीक्रियते तथा अरोदीदित्यत्राप्यन्तर्भावितण्यर्थतायां स्वीकृतायां रोदनं कारितवानित्यर्थलाभान्नास्ति श्रुतिविरोधः । **न च** देवैरग्नौ वामं वसु स्थापितं, तच्च धनं देवैर्याचितं चेदग्निस्तु रोदनं कृतवानिति सोऽरोदीदित्यादिश्रुत्यर्थादिहान्तर्भावितण्यर्थकल्पनं न संभवतीति श्रुतिविरोधस्त्वपरिहार्य एवेति **वाच्यम्** । देवैः स्थापितं वामं वसु देवेभ्योऽग्निना न दत्तं ते देवा एव रोदनं कृतवन्तः । अग्निस्तु तदीयमदत्वा रोदनं कारितवानित्यर्थकल्पनायाः संभवात् । अथवाऽग्नौ प्रयुज्यमानरुद्रशब्दस्य 'रोदितीति रुद्रः' इत्येवार्थोऽस्तु । परन्तु ब्रह्मविष्णुरुद्रा इति व्यवह्रियमाणो यो रुद्रस्तद्वाचकरुद्रशब्दस्य 'रोदेः–' इत्युणादिसूत्रानुरोधेन 'रोदयतीति रुद्रः' इत्येवार्थकल्पनायां बाधकाभावात् श्रुतिविरोधोऽत्र नास्त्येवेति ॥ १८० **अन्यत्रापीति** । धात्वन्तरात्प्रत्ययान्तरेऽपि णेर्लुगित्यर्थः । संज्ञायामुदाहरणम्—बृंहयति=वर्धयति प्रजा इति ब्रह्मा । शं सुखं भावयतीति शम्भुरित्यादि । छन्दसि तु—वृधु वृद्धौ । 'वर्धन्तु त्वा सुष्टुतयः' वर्धयन्त्वित्यर्थः । 'य इमा जजान', जनी प्रादुर्भावे, लिटि रूपम् । जनयामासेत्यर्थः । इह णलि परतः 'अत उपधायाः' इति वृद्धिर्भवत्येव, 'जनिवध्योश्च' इति निषेधस्य चिणि ञिति णिति किति च स्वीकारात् । **न च** णिलोपे सति प्रत्ययान्तत्वात् 'कास्प्रत्ययात्' इत्याम्स्यादिति **वाच्यम्** । 'अमन्त्रे' इति पर्युदासादामोऽप्रसक्तेः । 'कास्यनेकाचः' इति वार्तिकेन तु आम्शङ्का दूरापास्तैव, लिटि णिलोपे सत्यनेकाच्त्वाभावात् ॥ ननु णलि 'णेरनिटि' इत्यनिडादावार्धधातुके णिलोपे जजानेति रूपं सिद्धमिति किमनेन लुक्युदाहरणेन? इति चेन्मैवम् । णिलोपे सति 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति णौ मित्त्वे 'मितां ह्रस्वः' स्यात्, प्रत्ययलक्षणन्यायेन णिपरत्वसंभवात् । ततश्च 'जजेन' इति स्यात् । लुकि सति तु प्रत्ययलक्षणन्यायो न प्रवर्तेत इति मित्त्वाभावादिष्टं सिध्यति ॥ बाहुलकादसंज्ञाछन्दसोरपि क्वचिद्भवतीत्याशयेनोदाहरति—**वान्तीत्यादि** । पर्णानि शोषयन्तीति पर्णशुषः । पर्णानि मोचयन्तीति पर्णमुचः ॥ १८१ **जोरी च** । जु गतौ, सौत्रः । अस्माद्रक् ईकारश्चान्तादेशः । 'जीरः खड्गे वणिग्द्रव्ये' इति विश्वः । 'जीरस्तु जरणे खड्गे' इति मेदिनी ॥—**ज्यश्चेति** । ज्या वयोहानौ । अस्माद्रक्, 'ग्रहिज्या–' इति संप्रसारणं पूर्वरूपम् 'हलः' इति दीर्घः ॥—**एके इति** । मुख्या इत्यर्थः । तथा च 'न धातुलोप–' इति सूत्रे 'जीवेरदानुः' इत्यस्य प्रत्याख्यानार्थं 'नैतज्जीवे रूपं' किं तु 'रकि ज्यः संप्रसारणम्' इति भाष्ये उक्तम् ॥ ८८२ **सुसूधा–** । षुञ् अभिषवे, षूङ् प्राणिगर्भविमोचने, डुधाञ् धारणादौ, गृधु अभिकाङ्क्षायाम् । 'सुरा चषकमद्ययोः । पुंलिङ्गस्त्रिदिवेशे स्यात्' इति मेदिनी । 'सुरो देवे सुरा मद्ये चषकेऽपि सुरा क्वचित्' इति विश्वः । सुवति प्रेरयति कर्मणि लोकमिति सूरः=सूर्यः । 'सूरसूर्यार्यमादित्य' इत्यमरः । 'धीरो धैर्यान्विते स्वैरे बुधे क्लीबं तु कुङ्कुमे । स्त्रियां श्रवणतुल्यायाम्' इति मेदिनी । 'गृध्रः खगान्तरे पुंसि वाच्यलिङ्गोऽथ लुब्धके' इति च ॥ १८३ **शुसिचि–** । शु गतौ, षिञ् बन्धने, चिञ् चयने, डुमिञ् प्रक्षेपणे, एभ्यः क्रन् एषां दीर्घत्वं च । 'शूरः स्याद्यादवे भटे' इति मेदिनी । 'शूरश्चारुभटे सूर्ये' इति विश्वहेमचन्द्रौ । 'सीरोऽर्कहलयोः पुंसि चीरी झिल्ल्या नपुंसकम् । गोस्तने वस्त्रभेदे च रेखालेखनभेदयोः इति मेदिनी । 'चीरं तु गोस्तने वस्त्रे चूडायां सीसकेऽपि च । चीरी कृच्छ्राटिकाझिल्ल्योः' इति विश्वः ॥ १८४ **वाविन्धेः** । ञिइन्धी दीप्तौ । विपूर्वादस्मात् क्रन्, 'अनिदिताम्–' इति नलोपः । 'वीध्रं तु विमलार्थकम्' इति विशेष्यनिघ्नेऽमरः ॥ १८५ **वृधि–** । वृधु वृद्धौ, डुवप् बीजसन्ताने । 'वप्रः पितरि केदारे वप्रः प्राकाररोधसोः' इति धरणिरन्तिदेवौ । 'वप्रस्ताते पुमानस्त्री वेणुक्षेत्रचये तटे' इति मेदिनी ॥ १८६ **ऋज्रेन्द्राग्र–** ।

गौरवञ्चेरामालाः । रन्नन्ता एकोनविंशतिः । निपातनाद्गुणाभावः, ऋञ्जो नायकः । इदि, इन्द्रः । अङ्गेर्नलोपः, अग्रम् । 'वज्रोऽस्त्री हीरके पवौ' । डुवप्, उपधाया इत्वम्, विप्रः । कुम्बिचुम्ब्योर्नलोपः—कुब्रमरण्यम्, चुब्रं मुखम् । 'क्षुर विलेखने' रेफलोपः, अगुणः, क्षुरः । 'खुर छेदने' रलोपो गुणाभावश्च, खुरः । भन्देर्नलोपः, भद्रम् । 'उच समवाये' चस्य गः, उग्रः । ञिभी, भेरी । पक्षे लः, भेलो जलतरणद्रव्यम् । शुचेश्चस्य कः, शुक्रः । पक्षे लः, शुक्लः । गुङ्, वृद्धिः, 'गौरोऽरुणे सिते पीते' । 'वन संभक्तौ' वव्रो विभागी । इणो गुणाभावः, 'इरा मद्ये च वारिणि' । 'मा माने' माला ॥ १८७ । **समिकस उकन्** । 'कस गतौ' सम्यक्कसन्ति पलायन्ते जना अस्मादिति सङ्कसुको दुर्जनः, अस्थिरश्च ॥ १८८ । **पचिनशोर्णुकन् कनुमौ च** । पचेः कः, पाकुकः सूपकारः । नशेर्नम्, नंशुकः ॥ १८९ । **भियः क्रुकन्** । भीरुकः ॥ १९० । **कुन् शिल्पिसंज्ञयोरपूर्वस्यापि** । रजकः । इक्षुकुट्टकः । चरकः । 'चप भक्षणे' चपकः । शुनकः । भषकः ॥ १९१ । **रमे रश्च लो वा** । रमको विलासी, लमकः ॥ १९२ । **जहातेर्द्वे च** ॥ जहकस्त्यागी कालश्च ॥ १९३ । **ध्मो धम च** । धमकः कर्मकारः ॥ १९४ । **हनो वध च** । वधकः ॥ १९५ । **बहुलमन्यत्रापि** । 'कुह विस्मापने' । कुहकः । कृतकम् ॥ १९६ । **कृषेर्वृद्धिश्चोदीचाम्** । कार्षकः, कृषकः ॥ १९७ । **उदकं च** । प्रपञ्चार्थम् ॥ १९८ । **वृश्चिकृषोः किकन्** । वृश्चिकः । कृषिकः ॥ १९९ । **प्राङि पणिकषः** । प्रापणिकः पण्यविक्रयी । प्राकषिकः परदारोपजीवी ॥ २०० । **मुषेर्दीर्घश्च** । मूषिक आखुः ॥ २०१ । **स्यमेः संप्रसारणं च** । चाद्दीर्घः । सीमिको वृक्षभेदः ॥ २०२ । **क्रिय इकन्** ।

---

ऋज गतिस्थानादिषु, इदि परमैश्वर्ये, अगि गतौ, वज गतौ, डुवप् बीजसन्ताने, कुबि आच्छादने, चुबि वक्त्रसंयोगे, भदि कल्याणे, शुच शोके, गुङ् अव्यक्ते शब्दे, इण् गतौ ॥—**नायक इति** । '**ऋज्राश्वः** पृष्टिभिरम्बरीषः' इति मन्त्रे 'ऋज्रा गतिमन्तोऽश्वा यस्य स ऋज्राश्वः' इति वेदभाष्यम् । '**इन्द्रः** शचीपतावन्तरात्मन्यादित्ययोगयोः' इति विश्वः । '**अग्रं** पुरस्तादुपरि परिमाणे पलस्य च । आलम्बने समूहे च प्रान्ते स्यात्पुंनपुंसकम् । अधिके च प्रधाने च प्रथमे चाभिधेयवत्' इति मेदिनी । **क्षुरो** लोमच्छेदकः । 'क्षुरः स्याच्छेदनद्रव्ये कोकिलाक्षे च गोक्षुरे' इति विश्वमेदिन्यौ । '**खुरः** कोलदले शफे' इति मेदिनी । '**भद्रः** शिवे खञ्जरीटे वृषभे तु कदम्बके । करिजातिविशेषे ना क्लीबं मङ्गलमुस्तयोः' इति च । '**उग्रः** शूद्रासुते क्षत्राद्रुद्रे पुंसि त्रिपूत्कटे । क्लीबवत्साक्षुद्रयोः' इति मेदिनी ॥—**भेरीति** । गौरादित्वान्ङीष् । 'भेरी स्त्री दुन्दुभिः पुमान्' इत्यमरः । '**भेलः** प्लवे भीलुके च निर्बुद्धिमुनिभेदयोः' इति विश्वः । 'भेलः प्लवे मणौ पुंसि भीरावज्ञे च वाच्यवत्' इति । '**शुक्रः** स्याद्भार्गवे ज्येष्ठमासे वैश्वानरे पुमान् । रेतोऽक्षिरुग्भिदोः क्लीबं **शुक्लो** योगान्तरे सिते । नपुंसकं तु रजते' इति च । '**गौरः** पीतेऽरुणे श्वेते विशुद्धेऽप्यभिधेयवत् । ना श्वेतसर्षपे चन्द्रे न द्वयोः पद्मकेसरे । गौरी त्वसंजातरजःकन्याशंकरभार्ययोः । रोचने रजनीपिङ्गाप्रियङ्गुवसुधासु च । आपगाया विशेषेऽपि यादसांपतियोषिति' इति च मेदिनी । 'नदीभेदे च गौरी स्याद्वरुणस्य च योषिति' इति विश्वः । 'अष्टवर्षा तु या दत्ता [illegible] । सा गौरी तत्सुतो यस्तु स गौरः परिकीर्तितः' इति ब्रह्माण्डवचनं श्राद्धकाण्डे हेमाद्रिणोदाहृतं । एतेन 'गौरः शुच्याचारः' इत्यादि भाष्यं व्याख्यातम् । 'इराभूवाक्सुराप्सु च' इति मेदिनी ॥—**मालेति** । प्रत्ययरेफस्य लत्वम् । 'मालं क्षेत्रे स्त्रियां पृक्कास्रजोर्जाल्यन्तरे पुमान्' इति मेदिनी । 'मालं क्षेत्रे जने मालो माला पुष्पादिदामनि' इति विश्वः । 'मालमुन्नतभूतलम्' इत्युत्पलः । 'क्षेत्रमारुह्य मालम्' इति मेघदूतः । मणिपूर्वोऽयमर्थान्तरेऽपि रूढः—'मणिमाला स्मृता हारे स्त्रीणां दन्तक्षतान्तरे' इति विश्वः । **बाहुलकात्**—तिज निशाने । रन् दीर्घत्वं जस्य वः । 'तीव्रा तु कटुरोहिण्यां राजिकागण्डदूर्वयोः । त्रिष्वत्युष्णे नितान्ते च कटौ' इति मेदिनी ॥ **१८७ समि कस**–। 'संकसुकोऽस्थिरे' इति विशेष्यनिघ्नेऽमरः ॥ **१८८ पचिनशोः**–। डुपचष् पाके, णश अदर्शने । आभ्यां णुकन् प्रत्ययः स्यात् । णकारो वृद्ध्यर्थः । अनयोर्यथाक्रमं कादेशनुमागमौ च भवतः ॥ **१८९ भियः**–। ञिभी भये । 'अधीरे कातरस्त्रस्तौ भीरुभीरुकभीलुकाः' इत्यमरः ॥ **१९० कुन्**–। शिल्पिन्यभिधेये संज्ञायां गम्यमानायां च कुन् स्यादपूर्वस्य निरुपपदस्य च । अपिशब्दात्सोपपदस्य । पञ्चम्यर्थे षष्ठी । यद्वा अर्थद्वारकसंबन्धे षष्ठी, प्रकृतिप्रत्ययार्थयोः क्रियाकारकभावात् । एवं च निरुपपदप्रकृत्यर्थनिरूपितकर्तृकारके कुन्नित्याद्यर्थः फलितः । शिल्पिनि तावत्—रञ्ज रागे । 'रजको धावके शुके इति विश्वः । 'रजकौ धावकशुकौ' इति हेमचन्द्रः । 'कुट्ट च्छेदने' इक्षून् कुट्टयति गौडिकः । चर गतिभक्षणयोः । संज्ञायां तु 'चषकोऽस्त्री पानपात्रम्' । शुन गतौ, भष भर्त्सने—शुनकः, भषकः श्वा ॥ **१९१ लमक इति** । ऋषिविशेषः ॥ **१९२ जहातेः**–। ओहाक् त्यागे ॥ **१९३ ध्मो धम च** । ध्मा शब्दाग्निसंयोगयोः । कुहको दाम्भिकः ॥ **१९५ कृतकमिति** । कृती छेदने ॥ **१९६ कृषेः**–। कृष विलेखने । अस्मात्कुन् वृद्धिश्च । कार्षकः=कृषीवलः । कृषकः स एव । 'कृषकः पुंसि फाले स्यात्कर्षके त्वभिधेयवत्' इति मेदिनी ॥ **१९७ उदकं च** । उन्दी क्लेदने । अस्मात्कुन् ॥ ननु 'कुन् शिल्पि–' इत्यादिना गतार्थमित्याशङ्कायामाह—**प्रपञ्चार्थमिति** ॥ **१९८ वृश्चिकृषोः** । ओव्रश्चू छेदने, कृष विलेखने ॥ **१९९ प्राङि**–। पण व्यवहारे । कषशिषेति दण्डके—हिंसार्थकः ॥ **२०० मुषेः**–। मुष स्तेये अस्मात्किकन् धातोर्दीर्घश्च ॥ **२०१ स्यमेः**–। स्यमु शब्दे ॥ **२०२ —क्रियः** ।

क्रयिकः क्रेता ॥ २०३ । **आङि पणिपनिपतिखनिभ्यः** । आपणिकः । आपनिकः-इन्द्रनीलः किरातश्च । आपतिकः श्येनो दैवायत्तश्च । आखनिको मूषिको वराहश्च ॥ २०४ । **श्यास्त्याहृञविभ्य इनच्** । श्येनः । स्त्येनः । हरिणः । अविनोऽध्वर्युः ॥ २०५ । **वृजेः किच्च** । वृजिनम् ॥ २०६ **अजेरज च** । वीभावबाधनार्थम् । अजिनम् ॥ २०७ । **बहुलमन्यत्रापि** । कठिनम् । नलिनम् । मलिनम् । कुण्डिनम् । द्यतेः—'यत्परुषि दिनम्' । दिवसोऽपि दिनम् ॥ २०८ । **द्रुदक्षिभ्यामिनन्** । द्रविणम् । दक्षिणः । दक्षिणा ॥ २०९ । **अर्तेः किदिच्च** । इरिणं शून्यम् ॥ २१० । **वेपितुह्योर्ह्रस्वश्च** । विपिनम् । तुहिनम् ॥ २११ । **तलिपुलिभ्यां च** । 'तलिनं विरले स्तोके स्वच्छेऽपि तलिनं त्रिपु' । पुलिनम् ॥ २१२ । **गर्वेरत उच्च** । गौरादित्वात् ङीष् । गुर्विणी गर्भिणी ॥ २१३ । **रुहेश्च** । रोहिणः ॥ २१४ । **महेरिनण् च** । चादिनन् । माहिनम्-महिनं राज्यम् ॥ २१५ । **क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं च** । वाक् । प्राट् । श्रीः । स्रवत्यतो घृतादिकमिति स्रूः-यज्ञोपकरणम् । द्रूर्हिरण्यम् । कटप्रूः कामरूपी कीटश्च । 'जूराकाशे सरस्वत्यां पिशाच्यां जवने स्त्रियाम्' ॥ २१६ । **आप्नोतेर्ह्रस्वश्च** । आपः । अपः । अद्भिः । अद्भ्यः ॥ २१७ । **परौ व्रजेः षश्च पदान्ते** । व्रजेः क्विप्दीर्घौ स्तः, पदान्ते तु षश्च । परिव्राट् । परिव्राजौ ॥ २१८ । **हुवः श्लुवच्च** । जुहूः ॥ २१९ । **स्रुवः कः** । स्रुवः ॥ २२० । **च्चिक् च** । इकार उच्चारणार्थः । क इत् । कुत्वम्, स्रुक् । 'स्रुवं च स्रुचश्च संमृड्ढि' ॥ २२१ । **तनोतेरनश्च वः** ।

---

डुक्रीञ् द्रव्यविनिमये ॥ **२०३ आङि पणि-**। पण व्यवहारे स्तुतौ च, पन च, पत्ऌ गतौ, खनु अवदारणे, एभ्य आङि उपपदे इकन् स्यात् ॥—**आपणिक इति** । नन्वत्रैव प्रपूर्वे आङि प्रापणिक इति सिद्धौ 'प्राङि पणि' इत्यत्र पणिग्रहणं प्रपञ्चार्थमित्युज्वलदत्तः । उपसर्गान्तरनिवृत्त्यर्थमिति तु मनोरमायाम् । आपणिकशब्दोऽयं ञित्स्वरेणाद्युदात्तः । आपणेन व्यवहरतीत्यर्थे ठकि तु 'कितः' इत्यन्तोदात्तः ॥ **२०४ श्यास्त्या-**। श्यैङ् गतौ, स्त्यै ष्ट्यै शब्दसंघातयोः, हृञ् हरणे, अव रक्षणादौ । 'श्येनः पत्रिणि पाण्डुरे' इति मेदिनी । स्त्येनश्चौरः । 'स्तेन चौर्ये' इति चौरादिकात्पचाद्यचि तु 'स्तेनः' इति निर्यकारोऽपि । **केचित्तु** 'स्तायूनां पतये नमः' इत्यादिप्रयोगोपष्टम्भेन निर्यकारस्यापि ष्टैधातोर्माधवादिभिर्भ्वादिषु स्वीकृतत्वात्प्रकृतसूत्रेऽपि ष्टैधातुमेव पठन्तः स्तेनशब्दो निर्यकार एवेत्याहुः । 'हरिणः पुंसि सारङ्गे विशदे त्वभिधेयवत् । हरिणी हरितायां च नारीभिद्वृत्तभेदयोः । सुवर्णप्रतिमायां च' इति मेदिनी ॥ **२०५ वृजेः-**। वृजी वर्जने । वृजिनं पापम् । 'वृजिनं कल्मषे क्लीबं केशे ना कुटिलेऽन्यवत्' इति मेदिनी ॥ **२०६ अजेः-**। अज गतिक्षेपणयोः । अस्मादिनच् । अजेरजादेशविधानं व्यर्थमित्यत आह **—वीभावबाधनार्थमिति** । 'अजिनं चर्म कृत्तिः स्त्री' इत्यमरः ॥ **२०७ बहुलमन्यत्रापि** । अन्यस्मादपीत्यर्थः । कठ कृच्छ्रजीवने, णल गहने, मल मल्ल धारणे, कुडि दाहे, दो अवखण्डने । 'कठिनमपि निष्ठुरे स्यात् स्तब्धे तु त्रिषु नपुंसकं स्थाल्याम् । कठिनी खटिकायामपि कठिना गुडशर्करायां च' इति मेदिनी । 'मलिनं दूषिते कृष्णे ऋतुमत्यां तु योषिति' इति मेदिनी ॥—**कुण्डिनमिति** । 'नगरं कुण्डिनमण्डजो ययौ' इति श्रीहर्षः । कुण्डिन ऋषिः । तस्यापत्यं कौण्डिन्यः ॥—**यत्परुषीति** । 'यत् परुषि=पर्वणि दिनं खण्डितं तद्देवानाम्' इति तैत्तिरीयश्रुत्यर्थः ॥ **२०८ द्रुदक्षि-**। द्रु गतौ, दक्ष वृद्धौ । 'द्रविणं न द्वयोर्वित्ते काञ्चने च पराक्रमे' इति मेदिनी । 'दक्षिणो दक्षिणोद्भूतसरलच्छन्दवर्तिषु । अवामे त्रिषु यज्ञादिविधिदाने दिशि स्त्रियाम्' इति च । 'दक्षिणः सरलोदारपरच्छन्दानुवर्त्तिषु । वाच्यवद्दक्षिणा वाचि यज्ञदानप्रतिष्ठयोः' इति विश्वः ॥ **२०९ अर्तेः-**। ऋ गतौ, अस्मादिनन् कित्स्याद् इकारश्च धातोः । रपरत्वम् । 'इरिणं शून्यमूषरम्' इत्यमरः । 'इरिणं तूषरे शून्येऽपि' इति मेदिनी ॥ **२१० वेपि-**। टुवेपृ कम्पने, तुहिर् अर्दने, आभ्यामिनन् ह्रस्वश्च धातोः । 'अटव्यरण्यं विपिनम्' इत्यमरः ॥—**तुहिनमिति** । लघूपधगुणे कृते ह्रस्वः ॥ **२११ तलि-**। तल प्रतिष्ठायाम्, पुल महत्त्वे । 'तलिनं तरले स्तोके स्वच्छेऽपि वाच्यलिङ्गकम्' इति मेदिनी ॥ **२१२ गर्वे-**। गर्व मोचने, अस्मादिनन् अकारस्य उत् ॥ **२१३ रुहेश्च** । रुह बीजजन्मनि प्रादुर्भावे ॥—**रोहिण इति** । प्रज्ञादित्वादणि-रौहिणश्चन्दनतरुः ॥ **२१४ महेः-**। मह पूजायाम् । 'कुतस्त्वमिन्द्रमाहिनः सन्' इति मन्त्रे 'माहिनो महनीयः पूजनीयः' इति वेदभाष्यम् ॥ **२१५ क्विब्वचि-**। वच परिभाषणे, प्रच्छ ज्ञीप्सायाम्, श्रिञ् सेवायाम्, स्रु गतौ, द्रु गतौ, प्रुङ गतौ, जु गतौ-सौत्रः ॥—**वागिति** । 'वचिस्वपि-' इति संप्रसारणाभावः, पृच्छतीति प्राट् । 'ग्रहिज्या-' इति संप्रसारणाभावः, 'च्छ्वोः शूड्-' इति शः, 'व्रश्च-' इति षत्वं, जश्त्वचर्त्वे, प्राशौ प्राशः ॥—**श्रीरिति** । 'कृदिकारात्-' इति ङीष् तु न भवति, कृत्प्रत्ययो य इकार इति व्याख्यानात् । कृदन्तं यदिकारान्तमिति पक्षे तु यद्यपि ङीषः प्राप्तिरस्ति तथापि कारग्रहणे तत्सामर्थ्यादेव केवलस्येकारस्य ग्रहणादिकारान्तपक्षो दुर्बल इत्याहुः । **दुर्घटस्तु** ङीषि श्रीमित्यपि रक्षित इच्छतीत्याह । 'श्री वेषरचना शोभा भारती सरलद्रुमे । लक्ष्म्यां त्रिवर्गसंपत्तिविद्योपकरणेषु च । विभूतौ च मतौ च स्त्री' इति मेदिनी । **जूराकाशे** इत्यादिमूलोदाहृतमपि मेदिनी ॥ **२१६ आप्नोतेः-**। आप्ऌ व्याप्तौ, अस्मात्क्विप् धातोर्ह्रस्वश्च । 'आपः स्त्री भूम्नि वार्वारि' इत्यमरः ॥ **२१७ परौ-**। व्रज गतौ ॥ **२१८ हुवः-**। हु दानादनयोः । अस्मात्क्विप् धातोश्च दीर्घः श्लुवद्भावाद्द्विर्वचनम् ॥ **२१९ स्रुवः कः** । स्रु गतौ । स्रुवो यज्ञपात्रविशेषः । 'अयं स्रुवो अभिजिघर्ति' 'स्रुवेण पार्वणं जुहोति' इत्यादौ प्रसिद्धः ॥ **२२० च्चिक् च** । स्रुव इत्येव । योगविभाग उत्तरार्थः ॥—**क इदिति** । तेन स्रुक् स्रुचौ स्रुच इत्यादौ गुणो न ॥ **२२१ तनोते-**। तनु विस्तारे ॥ व इति संघातग्रहणं तदाह—**वशब्दादेश इति** ।

तनोतेश्विक् प्रत्यय , अनो वशब्दादेशश्च । त्वक् ॥ २२२ । **ग्लानुदिभ्यां डौः** । ग्लौः । नौ ॥ २२३ । **च्विरव्ययम्** । डौरित्येव । ग्लौ करोति । 'कृन्मेजन्त' ४५० इति सिद्धे नियमार्थमिदम्—उणादिप्रत्ययान्तश्च्व्यन्त एवेति ॥ २२४ । **रातेर्डैः** । रा । रायौ । राय ॥ २२५ । **गमेर्डोः** ।

'गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयो ।
स्त्री तु स्यादिशि भारत्यां भूमौ च सुरभावपि ।
नृस्त्रियो स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु ।'

बाहुलकाद् द्युतेरपि डो, 'द्यौ स्त्री स्वर्गान्तरिक्षयो.' ॥ २२६ । **भ्रमेश्च डूः** । भ्रू । चाद्गमे, अग्रेगू ॥ २२७ । **दमेर्डोसिः** । दो । दोषौ ॥ २२८ । **पणेरिज्यादेश्च वः** । वणिक् । स्वार्थेऽण्, 'नैगमो वाणिजो वणिक्' ॥ २२९ । **वशेः कित्** । 'उशिगग्नौ घृतेऽपि च' ॥ २३० । **भृज ऊच्च** । भूरिक् भूमि ॥ २३१ । **जसिसहोरुरिन्** । जसुरिर्वज्रम् । सहुरिरादित्य पृथिवी च ॥ २३२ । **सुयुरुवृञो युच्** । सवनश्चन्द्रमा. । यवन । रवण कोकिल । वरण ॥ २३३ । **अशे रश च** । अश्नोतेर्युच् स्याद् रशादेशश्च । रशना काञ्ची । जिह्वावाची तु दन्त्यसकारवान् ॥ २३४ । **उन्देर्नलोपश्च** । ओदन ॥ २३५ । **गमेर्गश्च** । गमेर्युच् स्याद्गश्चादेश । गगनम् ॥ २३६ । **बहुलमन्यत्रापि** । युच् स्यात् । स्यन्दन । रोचना ॥ २३७ । **रञ्जेः क्युन्** । रजनम् ॥ २३८ । **भूसूधूभ्रस्जिभ्यश्छन्दसि** । भुवनम् । सुवन

---

'स्त्रिया तु लगस्रग्धरा' इत्यमर ॥ **२२२ ग्लानुदि-**। ग्लै हर्षक्षये, णुद प्रेरणे । 'ग्लौर्मृगाङ्क कलानिधि' इत्यमर । 'स्त्रिया नौस्तरणिस्तरि' इति च ॥ **२२३ ग्लौ करोतीति** । अग्लौ ग्लौ सपद्यते तथा करोतीत्यर्थ । अव्ययत्वात्सुपो लुक् ॥—**च्व्यन्त एवेति** । तेन ग्लौनौगौरित्यादीना नाव्ययत्वमिति भाव ॥ **२२४ रातेः**-। रा दाने ॥—**रा इति** । 'रायो हलि' इत्यात्वम् । 'रा स्मृत पावके तीक्ष्णे रा पुसि स्वर्णवित्तयो' इति मेदिनी । 'रास्तीक्ष्णे दहने रास्तु सुवर्णे जलदे धने' इति हेमचन्द्र ॥ **२२५ गमेः** । गम्लृ गतौ । 'गोतो णित्' गौ ॥ केशवोक्तमाह—**गौर्नादित्य इत्यादि** । 'गौ स्वर्गे वृषभे रश्मौ वज्रे चन्द्रे पुमान् भवेत् । अर्जुनी नेत्रदिग्बाणभूवाग्वारिषु गौर्मता' इत्यमर ॥—**द्युतेरपीति** । द्युत दीप्तौ, द्योतन्ते देवा अस्यामिति द्यौ ॥ **२२६ भ्रमेश्च**-। भ्रमु अनवस्थाने, गम्लृ गतौ । अग्रेगू सेवक ॥ **२२७ दमेः**-। दमु उपशमे । डित्त्वाट्टिलोपे—**दोरिति** । 'दोष तस्य' इति श्रीहर्षप्रयोगात्पुस्त्वम् । 'ककुद्दोषणी' इति भाष्यप्रयोगान्नपुसकत्वम् । 'दोर्दोषा च भुजो बाहु' इति धनजयकोशात्स्त्रीलिङ्गोऽप्ययमित्यादि प्रागेव प्रपञ्चितम् ॥ **२२८ पणेः**-। पण व्यवहारे स्तुतौ च । अमरकोशस्थमाह—**नैगम इत्यादि** ॥ **२२९ वशेः** । वश कान्तौ, अस्मादिनि कित्त्वात् । 'ग्रहिज्या-' इति सम्प्रसारणम् ॥ **२३० भृजः**-। भृञ् भरणे, अस्मादिनि कित्त्वात् धातोरूकारान्तादेशश्च ॥ **२३१ जसि**—। जसु मोक्षणे । षह मर्षणे । 'जसुरये स्तर्यं पिप्यथुर्गाम्' इति मन्त्रे जसुरये=श्रान्तायेति, 'नीचायमान जसुरिं न श्येनम्' इत्यत्र जसुरि क्षुधित श्येन न=श्येनपक्षिणमिवेति । 'उतस्य वाजी सहुरिर्ऋतावा' इति मन्त्रे सहुरि सहनशील इति च वेदभाष्यम् ॥ **२३२ सुयु-**। षुञ् अभिषवे, यु मिश्रणे, रु शब्दे, वृञ् वरणे । 'सवन त्वध्वरे स्नाने सोमनिर्दलनेऽपि च' इति मेदिनी । यवनो म्लेच्छविशेष । 'रवण शब्दने स्वरे' इति च मेदिनी । रवण कोकिल इत्येके । वरणो वृक्षभेद । टापि तु वरणा नदी । 'वरणस्तिक्तशाकेऽपि प्राकारे वरण वृतौ' इति विश्व । 'वरणे वरुण सेतुस्तिक्तशाक कुमारक' इत्यमर ॥ **२३३ अशेः**-। अशू व्याप्तौ ॥—**जिह्वावाची त्विति** । रस आस्वादने चौरादिक । ततो नन्द्यादित्वात् ल्यु । 'ण्यासश्रन्थ-' इति युज्वा । रस स्वादयतीति रसना । 'रसन स्वदने ध्वनौ । जिह्वाया तु न पुसि स्याद्रास्नाया रसना स्त्रियाम्' इति मेदिनी । काञ्चीवाची तालव्यशकारवान्, जिह्वावाची तु दन्त्यसकारवानित्येषा व्यवस्था भूरिप्रयोगाभिप्रायेणोक्ता । **वस्तुतस्तु** तालव्यशकारवान् रशनाशब्दोऽपि काञ्च्या जिह्वाया च, तथा दन्त्यसकारवान् रसनाशब्दोऽप्यर्थद्वये बोध्य । तथा हि—'तालव्या अपि दन्त्याश्च शम्बशूकरपाशव । रशनाऽपि च जिह्वायाम्' इति विश्वकोशाज्जिह्वायामुभय साधु । 'रसनं नि स्वने स्वादे रसना काञ्चिजिह्वयो' इत्यजयधरणिकोशाभ्या काञ्च्यामप्युभयं साधु । एव च 'अशेरश च' इति सूत्रे अशू व्याप्तौ, अश भोजने, इति धातुद्वयमपि ग्राह्यम् । रस आस्वादने, रस शब्दे, इति धातुभ्या तु 'बहुलमन्यत्रापि' इत्यनुपदमेव वक्ष्यमाणेन युच् । तेन सर्वत्रावयवार्थानुगमोऽपि सूपपाद **इत्याहु** ॥ **२३४ उन्देः**-। उन्दी क्लेदने अस्माद्युच् । '**ओदनं** न स्त्रिया भक्ते बलायामो**दनी** स्त्रियाम्' इति मेदिनी ॥ **२३५ गमेः**-। गम्लृ गतौ । 'नभोऽन्तरिक्षं गगनम्' इत्यमर ॥ **२३६ बहुलमिति-**। स्यन्दू प्रस्रवणे, रुच दीप्तौ । 'स्यन्दन तु श्रुतौ नीरे तिनिशे ना रथे स्त्रियाम्' इति मेदिनी । 'रोचना रक्तकह्लारे गोपित्तवरयोषितो । रोचन कूटशाल्मल्या पुंसि स्याद्रोचके त्रिषु' इति च । चदि आह्लादे । 'चन्दनं मलयोद्भवे । चन्दन कपिभेदे स्यान्नदीभेदे तु चन्दनी' इति विश्व । 'चन्दनी तु नदीभिदि । चन्दनोऽस्त्री मलयजे भद्रकाल्या नपुसकम्' इति मेदिनी । भद्रकाली=ओषधिविशेष । 'भद्रकाली तु गन्धोल्या कात्यायन्यामपि स्त्रियाम्' इति मेदिनी । असु क्षेपणे । 'असन क्षेपणे क्लीबं पुंसि स्याज्जीवकद्रुमे' इति मेदिनी । अत सातत्यगमने । राजपूर्व । 'राजादनः क्षीरिकाया पियाले किंशुकेऽपि च' इति विश्वमेदिन्यौ । एवमन्येऽपि द्रष्टव्या ॥ **२३७ रञ्जेः**-। रञ्ज रागे, ल्युटि तु रञ्जनम् । 'रजनो रागजनने रञ्जन रक्तचन्दने' इति मेदिनी । **बाहुलकात्कृपेरपि** क्युन् । 'कृपो रो ल.' इति प्राप्तलत्वाभावश्च । कृपण ॥ **२३८ भूसू—**। भू सत्ताया,

आदित्यः । धवनो वह्निः । निधुवनं सुरतम् । भृज्जनमम्बरीषम् ॥ २३९ । **कृपॄवृजिमन्दिनिधाञः क्युः ।** किरणः । पुरणः समुद्रः । वृजनमन्तरिक्षम् । मन्दनं स्तोत्रम् । निधनम् ॥ २४० । **धृषेर्धिष् च संज्ञायाम् ।** धिषणो गुरुः । धिषणा धीः ॥ २४१ । **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च ।** अतिप्रत्ययान्ता निपात्यन्ते । 'पृषु सेचने' गुणाभावः, पृषन्ति । बृहत् । महान् । गमेर्जगादेशः, जगत् ॥ २४२ । **संश्चत्तृपद्वेहत् ।** एते निपात्यन्ते । पृथक्करणं शतृवद्भावनिवृत्त्यर्थम् । संचिनोतेः सुट्, इकारलोपः, संश्चत् कुहकः । तृपत् छत्रम् । विपूर्वाद्धन्तेष्टिलोपः, इत ए च, 'वेहद्गर्भोपघातिनी' ॥ २४३ । **छन्दस्यसानच् शुजॄभ्याम् ।** शवसानः पन्थाः । जरसानः पुरुषः ॥ २४४ । **ऋञ्जिवृधिमन्दिसहिभ्यः कित् ।** ऋञ्जसानो मेघः । वृधसानः पुरुषः । मन्दसानोऽग्निर्जीवश्च । सहसानो यज्ञो मयूरश्च ॥ २४५ । **अर्तेर्गुणः शुट् च ।** अर्शसानोऽग्निः । २४६ । **सम्यानच् स्तुवः ।** संस्तवानो वाग्मी ॥ २४७ । **युधिबुधिदृशिभ्यः किच्च ।** युधानः । बुधानः । 'दृशानो लोकपालकः' ॥ २४८ । **हुर्छेः सनो लुक् छलोपश्च ।** जुहुराणश्चन्द्रमाः ॥ २४९ । **श्वितेर्दश्च ।**

---

षूङ् प्राणिप्रसवे, धूञ् कम्पने, भ्रस्ज पाके । बहुलवचनाद्भाषायामपि क्वचित् । 'भुवनं विष्टपेऽपि स्यात्सलिले गगने जने' इति मेदिनी । 'विष्टपं भुवनं जगत्' इत्यमरः ॥—**भृज्जनमिति** । 'ग्रहिज्या–' इति संप्रसारणम् । सस्य जश्त्वेन दः, दस्य श्चुत्वेन जः । 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना' इत्यमरः ॥ **२३९ कृपॄ–**। कॄ विक्षेपे, पॄ पालनादौ, वृजी वर्जने, मदि स्तुत्यादौ, डुधाञ् धारणपोषणयोः । 'निधनं स्यात्कुले नाशे' इति मेदिनी । 'निधनं कुलनाशयोः' इति हेमचन्द्रः ॥ **२४० धृषेः–**। ञिधृषा प्रागल्भ्ये, अस्मात्क्युः, धिषादेशश्च धातोः । 'धिषणस्त्रिदशाचार्ये धिषणा धियि योषिति' इति मेदिनी । 'गीष्पतिर्धिषणो गुरुः' इत्यमरः ॥ **२४१ वर्तमाने–**॥—**शतृवच्चेति** । तथा च 'उगिदचाम्–' इति नुमि—महान्, स्त्रियां तु 'उगितश्च' इति ङीपि—महतीत्यादि सिध्यतीति भावः ॥ ननु पृषन्महदादयः 'लटः शतृशानचौ–' इति शतृप्रत्ययान्ता एव भवन्तु । ततश्च 'वर्तमाने' इति 'शतृवच्च' इति च न कर्तव्यमिति महदेव लाघवमिति चेत् । **अत्राहुः**—शतृप्रत्ययान्तत्वे तु 'कर्तरि शप्' इति शप्प्रत्यये महतीत्यादौ 'आच्छीनद्योः' इति नुम् स्यात्, महानित्यादौ तु 'तास्यनुदात्तेन्ङिददुपदेशात्' इति लसार्वधातुकस्वरः स्यात्, अतिप्रत्ययान्तत्वे तु तस्यातिप्रत्ययस्यार्धधातुकत्वाभ्युपगमेन शबभावान्नोक्तदोष इत्याशयेनातिप्रत्ययान्तत्वेन निपातनं स्वीकृतमिति ॥ बृह वृद्धौ, मह पूजायाम्, गम्लृ गतौ ॥—**पृषन्तीति** । बिन्दुवाची पृषच्छब्दो नपुंसकमिति ध्वननाय बहुवचनमुदाहृतम् । 'पृषन्मृगे पुमान् बिन्दौ न द्वयोः पृषतोऽपि ना । अनयोश्च त्रिषु श्वेतबिन्दुयुक्तेऽप्युभाविमौ' इति मेदिनी । 'बृहती क्षुद्रवार्ताक्यां कण्टकार्यां च वाचि च । वारिधान्यां महत्यां च छन्दोवसनभेदयोः' इति विश्वः । शतृवद्भावात् 'उगिदचाम्–' इति नुम्, बृहन् विपुलः । 'महती वल्लकीभेदे राज्ये तु स्यान्नपुंसकम् । तत्त्वभेदे पुमान् श्रेष्ठे वाच्यवत्' इति मेदिनी । **महती**=नारदवीणा । 'विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती । महती नारदस्य स्यात्सरस्वत्यास्तु कच्छपी' इति वैजयन्ती । 'अवेक्ष्यमाणं महतीं मुहुर्मुहुः' इति माघः । 'जगत्स्याद्विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु । जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि च' इति मेदिनी । तत्र वायुवाचिनः पुंलिङ्गस्य शतृवद्भावादुगित्त्वेन नुमि–जगन्, जगन्तौ, जगन्तः–इत्यादि भवति । 'द्युतिगमिजुहोतीनां द्वे च' इति व्युत्पादितस्य तु नुमभावात् 'जगत् जगतौः जगतः' इत्यादीति बोध्यम् ॥ **२४२ संश्चत्तृ–**। चिञ् चयने, तृप प्रीणने, हन हिंसागत्योः ॥—**निपात्यन्त इति** । अतिप्रत्ययान्ता इति शेषः ॥—**निवृत्त्यर्थमिति** । एवं च संश्चदित्यत्र 'उगिदचाम्–' इति नुमः शङ्कैव नास्ति । वेहदित्यत्र तु 'उगितश्च' इति ङीप् नेति भावः ॥—**संचिनोतेरिति** । सुभूतिचन्द्रस्तु संपूर्वाच्छ्च्युतेः–संश्चदित्याह ॥—**तृपच्छत्रमिति** । चन्द्रमा इत्यन्ये । विहन्ति गर्भमिति वेहत् ॥—**इत ए चेति** । विशब्दसंबन्धिन इकारस्य एकार इत्यर्थः । गौरित्यनुवृत्तौ 'वेहद्गर्भोपघातिनी' इत्यमरः ॥ **२४३ छन्दस्य–**। शु गतौ, जॄष् वयोहानौ ॥—**पन्था इति** । 'प्रमन्महे' इत्यादिमन्त्रद्वये शवसानशब्दो गन्तृपरतया व्याख्यातः ॥ **२४४ ऋञ्जि–**। ऋजि भर्जने, वृधु वृद्धौ, मदि स्तुत्यादौ, षह मर्षणे । एभ्यः–असानच् कित्स्यात् ॥—**ऋञ्जसानो मेघ इति** । ऋजेरिदित्त्वान्नुम् । इदित्त्वादेव नलोपाभावः । एवं च–अयं मन्दिसही च त्रयोऽपि पूर्वसूत्र एव पठितुं शक्याः । कित्त्वं तु वृधुधातावेवोपयुज्यते । उत्तरसूत्रेऽपि गुणग्रहणं सुत्यजम् । 'अर्तेः शुट् च वृधेः कित्' इत्युक्तौ सर्वसामञ्जस्यादित्याहुः । 'ऋञ्जसानः पुरुवार उक्थैः' 'अस्मिन् यज्ञे मन्दसाना वृषण्वसू–' इत्यादिमन्त्राणां भाष्ये तु यौगिकार्थ एव पुरस्कृतः ॥ **२४५ अर्तेः–**। ऋ गतौ । धातोर्गुणः प्रत्ययस्य सुडागमः । 'आसाविषदर्शसानाय–' इति मन्त्रस्य भाष्ये तु अर्शसानाय शत्रूणां हिंसित्रे इति व्याख्यातम् ॥ **२४६ सम्या–**। ष्टुञ् स्तुतौ अस्मात्सम्युपपदे आनच् ॥ **२४७ युधि–**। युध संप्रहारे । युधानो रिपुः । बुधिर् बोधने । बुधान आचार्यः । दृशिर् प्रेक्षणे । **बाहुलकात्कृपेरपि**—कृपाणः खड्गः । 'कृपाणेन कथंकारं कृपणः सह गण्यते । परेषां दानसमये यः स्वकोशं विमुञ्चति' ॥ **२४८ हुर्छेः–**। हुर्छा कौटिल्ये, अस्मात्सन्नन्तादानच्स्यात्सनो लुक् छलोपश्च । 'युयोध्यस्मज्जुहुराणमेनः' इति मन्त्रे जुहुराणं=कौटिल्यकारि एनः=पापं युयोधि=पृथक् कुरु इति भाष्यम् ॥ **२४९ श्वितेः–**। श्विता वर्णे अस्मात्सन्नन्तादानच्, 'सन्यङोः' इति द्वित्वम् । सनो लुक् तकारस्य च दकारः । किदित्यनुवृत्तेर्न गुणः ॥—**पुण्यकर्मेति** । 'शिश्विदानोऽकृष्णकर्मा' इति विशेष्यनिघ्ने अमरः । अकृष्णं=शुक्लं निष्पापत्वात्

'शिश्विदानः पुण्यकर्मा' ॥ २५० । **तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ** । शंसेः क्षदादिभ्यश्च क्रमात्तृन्तृचौ स्तः, तौ चानिटौ । शंस्ता स्तोता । शंस्तारौ । शंस्तरः । क्षदिः सौत्रो धातुः शकलीकरणे भक्षणे च । अनुदात्तेत्, 'वृक्ष्ये चक्षदानस्' इति मन्त्रात्, 'उक्षाणं वा वेहतं वा क्षदन्ते' इति ब्राह्मणाच्च । 'क्षत्ता स्यात्सारथौ द्वाःस्थे वैश्यायामपि शूद्रजे' ॥ २५१ **बहुलमन्यत्रापि** । मन्, मन्ता । हन्, हन्ता । इत्यादि ॥ २५२ । **नप्तृ नेष्टृ त्वष्टृ होतृ पोतृ भ्रातृ जामातृ मातृ पितृ दुहितृ** । न पतन्त्यनेन पितरो नरके इति नप्ता पौत्रो दौहित्रश्च । नयतेः षुग्गुणश्च, नेष्टा । त्विषेरितोऽत्वम्, त्वष्टा । होता, पोता, ऋत्विग्भेदः । भ्राजतेर्जलोपः, भ्राता । जायां माति जामाता । 'मान पूजायां' नलोपः, माता । पातेराकारस्य इत्वम् । पिता । दुहेस्तृच्, इट्, गुणाभावश्च, दुहिता ॥ २५३ । **सुञ्यसेर्ऋन्** । स्वसा ॥ २५४ । **यतेर्वृद्धिश्च** । याता । 'भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्'॥ २५५ । **नञि च नन्देः** । न नन्दति ननान्दा । 'इह वृद्धिर्नानुवर्तते' इत्येके । 'ननान्दा तु स्वसा पत्युर्ननन्दा नन्दिनी च सा' इति शब्दार्णवः ॥ २५६ । **दिवेर्ऋः** । देवा देवरः । 'स्वामिनो देवृदेवरौ' ॥ २५७ । **नयतेर्डिच्च** । ना । नरौ । नरः ॥ २५८ । **सव्ये स्थश्छन्दसि** । 'अम्बाम्ब-' २९१८ इत्यत्र—ॐ **स्थास्थिन्स्थॄणामुपसंख्यानम्** । सव्येष्ठा सारथिः । सव्येष्ठारौ । सव्येष्ठरः ॥ २५९ । **अर्तिसृधृधम्यम्यश्यवितॄभ्योऽनिः** । अष्टभ्योऽनिप्रत्ययः स्यात् । अरणिरग्नेर्योनिः । सरणिः । धरणिः । धमनिः । अमनिर्गतिः । अशनिः । अवनिः । तरणिः । बाहुलकात्–रजनिः ॥ २६० । **आङि शुषेः सनश्छन्दसि** । आशुशुक्षणिरग्निर्वातश्च ॥ २६१ । **कृषेरादेश्च चः** । चर्षणिर्जनः ॥

---

शुद्धं कर्म यस्येत्यर्थः । क्षीरस्वामिना तु प्रकृतसूत्रं विस्मृत्य 'श्विदि श्वैत्ये' अस्माल्लिटः कानजिति व्याख्यातं । तदसंगतं, कानचश्छान्दसत्वात्, इदित्त्वेन नलोपानुपपत्तेश्चेति दिक् ॥ २५० **तृन्तृचौ—**॥—**शंस्तेति** । शंसु स्तुतौ, अस्मात्तृन् । 'अप्तृन्–' इति सूत्रे नप्त्रादिग्रहणं नियमार्थम्—औणादिकतृजन्तानां चेदुपधादीर्घस्तर्हि नप्त्रादीनामेवेत्युक्तम् । तेनात्र दीर्घो नेत्युदाहरति—**शंस्तरौ शंस्तर इति** । नित्त्वादाद्युदात्तः । तथा च मन्त्रः—'ग्रावग्राभ उत शंस्ता सुविप्रः' । आदिशब्दाच्छासु अनुशिष्टौ । शास्ति विनयति सत्वान् शास्ता=बुद्धः । शास्तारौ । शास्तरः । 'शास्ता समन्तभद्रे ना शासके पुनरन्यवत्' इति । प्रपूर्वस्य तु नप्त्रादिषु पाठात् 'अप्तृन्—' इति दीर्घः—प्रशास्तारौ, प्रशास्तारः । 'क्षत्ता शूद्राच्च वैश्याजे प्रतीहारे च सारथौ । भुजिष्यातनयेऽपि स्याच्चियुक्तवेधसोः पुमान्' इति मेदिनीकोशानुसारेणाह—**वैश्यायामिति** । अमरस्तु 'क्षत्रियायां च शूद्रजे' इत्याह । णीञ् प्रापणे, उत्पूर्वः । उन्नेता ऋत्विग्भेदः ॥ २५१ **बहुलमन्यत्रापि** । अन्यत्रापि धातोर्बहुलं तृन्तृचौ भवतः । पूर्वसूत्रस्यादिशब्देनैव मन्ताहन्तेत्यादेः सिद्धत्वात्प्रपञ्चार्थमिदं सूत्रम् ॥ २५२ **नप्तृनेष्टृ—**। नप्त्रादयो दश तृन्तृजन्ता निपात्यन्ते ॥—**नप्तेति** । नञः प्रकृतिभावः, पत्लृ गतावित्यस्मात् 'अत्'शब्दलोपः । णीञ् प्रापणे, त्विष दीप्तौ, हु दानादनयोः, पूञ् पवने, भ्राजृ दीप्तौ, मा माने, पा रक्षणे, दुह प्रपूरणे । 'त्वष्टा पुमान् देवशिल्पितक्ष्णोरादित्यभिद्यपि' इति मेदिनी । जायां मातीत्यन्तर्भावितण्यर्थः ॥ २५३ **सुञ्यसेः—**। सुञि उपपदे असु क्षेपणे इत्यस्मात् ऋन्, यणादेशः, स्वसा भगिनी । 'सावसेः' इति तु क्वाचित्कः पाठः ॥ २५४ **यतेः—**। यती प्रयत्ने ॥ २५५ **नञि च—**। टुनदि समृद्धौ, अस्मान्नञ्युपपदे ऋन् ॥—**न नन्दतीति** । कृतायामपि सेवायां न तुष्यतीत्यर्थः । 'उपाप्यूपा ननान्दा च ननन्दा च प्रकीर्तिता' इति द्विरूपकोशः ॥ २५६ **दिवेः—**। दिवु क्रीडाविजिगीषादौ ॥—**देवेति** । भ्रातर इत्यनुवृत्तौ 'स्वामिनो देवृदेवरौ' इत्यमरः । 'देवे धवे देवरि माधवे च' इति श्रीहर्षः ॥ २५७ **नयतेः—**। णीञ् प्रापणे । अस्माद् ऋप्रत्ययः स च डित्, डित्वाट्टिलोपः । 'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नराः' इत्यमरः ॥ २५८ **सव्ये—**। ष्ठा गतिनिवृत्तौ । अस्मात्सव्यशब्दे उपपदे ऋः स्यात्स च डित् । 'तत्पुरुषे कृति–' इति सप्तम्या अलुक् ॥—**उपसंख्यानमिति** । षत्वस्येति शेषः ॥ २५९ **अर्ति—**। ऋ गतौ, सृ गतौ, धृञ् धारणे, धमिः सौत्रः, अम गतौ, अश भोजने, अव रक्षणादौ, तॄ प्लवनतरणयोः । 'अरणिर्वह्निमन्थे ना द्वयोर्निर्मन्थ्यदारुणि' इति मेदिनी । 'सरणिः श्रेणिवर्त्मनोः' इति दन्त्यादौ रभसः । 'सरणिः पङ्क्तौ मार्गे स्त्री' इति मेदिनी । शॄ हिंसायां ततोऽनिप्रत्ययः । **शरणिरित्येके** । 'शरणिः पथि चावलौ' इति तालव्यादावजयः । 'इमामग्ने शरणिम्' इति मन्त्रे शरणि=हिंसां व्रतलोपरूपां मीमृषः=क्षमस्वेति वेदभाष्यम् । धरणिर्भूमिः । 'धमनी तु शिराहट्टविलासिन्यां तु योषिति' इति मेदिनी । अमनिर्गतिः । अश्यते भुज्यते राज्यमिन्द्रेणानयेति अशनिर्वज्रम् । 'अशनिः स्त्रीपुंसयोः स्याच्चञ्चलायां स्वावपि' इति मेदिनी । अवनिः पृथिवी । 'तरणिर्द्युमणौ पुंसि कुमारीनौकयोः स्त्रियाम्' इति मेदिनी । कुमारी लताविशेषः । 'तरणी रामतरणी कर्णिका चारुकेसरा । सहा कुमारी गन्धोल्योः' इति धन्वन्तरिनिघण्टुः ॥—**रजनिरिति** । रञ्ज रागे, अस्मादप्यनिः, नलोपोऽपि बाहुलकात्, 'कृदिकारात्–' इति ङीष्, रजनी । 'रजनी नीलिनी रात्रिर्हरिद्राजतुकासु च' इति मेदिनी ॥ २६० **आङि—**। शुष शोषणे अस्मात्सन्नन्तादाङि उपपदे अनिः स्यात् ॥ २६१ **कृषेरादेः—**। 'कृष विलेखने' ॥—**चर्षणिर्जन इति** । वैदिकनिघण्टौ चर्षणिशब्दस्य मनुष्यनामसु पाठात् । 'ओमासश्चर्षणीधृतः' इत्यादिमन्त्रेषु वेदभाष्यकारैस्तथैव व्याख्यातत्वाच्च । उज्ज्वलदत्तेन तु आदेश्च ध इति पठित्वा धर्षणिर्बन्धकीति व्याख्यातम् । तदयुक्तम् । तथा सति धृषेरित्येव सूत्रयेत् । आगन्तुकरूपावयवार्थानुगमात् । आदेश्च ध

२६२ । अदेर्मुट् च । अद्मनिरग्निः ॥ २६३ । वृतेश्च । वर्तनिः । गोवर्धनस्तु—'चकारान्मुट्, वर्त्मनिः' इत्याह ॥ २६४ । क्षिपेः किच्च । क्षिपणिरायुधम् ॥ २६५ । अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः । अर्चिर्ज्वाला । इदन्तोऽप्ययम्, 'अग्नेर्भ्राजन्ते अर्चयः' । शोचिर्दीप्तिः । हविः सर्पिः । 'इस्मन्–' २९८५ इति ह्रस्वः, छदिः पटलम् । छर्दिर्वमनव्याधिः । इदन्तोऽपि, 'छर्द्यतीसारशूलवान्' ॥ २६६ । बृंहेर्नलोपश्च । 'बर्हिर्ना कुशशुष्मणोः' ॥ २६७ । द्युतेरिसिन्नादेश्च जः । ज्योतिः ॥ २६८ । वसौ रुचेः संज्ञायाम् । वसुरोचिर्यज्ञः ॥ २६९ । भुवः कित् । भुविः समुद्रः ॥ २७० । सहो धश्च । सधिरनड्वान् ॥ २७१ । पिबतेस्थुक् । 'पाथिश्चक्षुःसमुद्रयोः' ॥ २७२ । जनेरुसिः । जनुर्जननम् ॥ २७३ । मनेर्धश्छन्दसि । मधुः ॥ २७४ । अर्तिपॄवपियजितनिधनितपिभ्यो नित् । अरुः । परुर्ग्रन्थिः । वपुः । यजुः । तनुः, तनुषी, तनूंषि । धनुरस्त्रियाम् । 'धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यति' । सान्तस्य उदन्तस्य वा रूपम् । 'तपुः सूर्याग्निशत्रुषु' ॥ २७५ एतेर्णिच्च । आयुः, आयुषी ॥ २७६ । चक्षेः शिच्च । चक्षुः ॥ २७७ । मुहेः किच्च । मुहुरव्ययम् ॥ २७८ । बहुलमन्यत्रापि । आचक्षुः । परिचक्षुः ॥ २७९ । कॄगॄशॄवृञ्चतिभ्यः ष्वरच् । 'कर्वरो व्याघ्ररक्षसोः' । गर्वरोऽहंकारी । शर्वरी रात्रिः । 'बर्बरः प्राकृतो जनः' । चत्वरम् ॥ २८० । नौ सदेः । 'निषद्वरस्तु जम्बालः' । निषद्वरी रात्रिः ॥ इत्युणादिषु द्वितीयः पादः ॥

——०ॐ०——

## अथ तृतीयः पादः ।

२८१ । छित्वरछत्वरधीवरपीवरमीवरचीवर-

---

इत्यंशस्य त्यागेन लाघवाच्च । तस्मादादेश्च चः इति [illegible] एव युक्त इत्याहुः ॥ २६२ अदेः–। अद भक्षणे । अस्मादनिस्तस्य मुडागमश्च ॥ २६३ वृतेश्च । वृतु वर्तने अस्मादप्यनिः ॥—वर्तनिरिति । 'कृदिकारात्–' इति ङीषि तु वर्तनी । 'सरणिः पद्धतिः पद्या वर्तन्येकपदीति च' इत्यमरः ॥ २६४ क्षिपेः–। क्षिप प्रेरणे ॥—क्षिपणिरायुधमिति । 'उतस्य वाजी क्षिपणिं तुरण्यति' इति मन्त्रस्य वेदभाष्ये तु क्षिपणिं=क्षेपणमनु तुरण्यति=त्वरयति गन्तुमिति व्याख्यातम् ॥ २६५ अर्चि–। अर्च पूजायाम्, शुच शोके, हु दानादनयोः, सृप्लृ गतौ, छद अपवारणे, ण्यन्तः । छर्द वमने, अर्चिरिति सान्तम् । 'तमार्चिषा स्फूर्जयन्' इति मन्त्रः । 'नयनमिव सनिद्रं घूर्णते दैवमर्चिः' इति माघः । 'ज्वालाभासोर्नपुंस्यर्चिः' इति नानार्थे सान्तेष्वमरः ॥—इदन्तोऽपीति । णिजन्तादर्चेरत इरिति भावः । 'अर्चिर्हेतिः शिखा स्त्रियाम्' इत्यमरः । 'रोचिः शोचिरुभे क्लीबे' इति च । सर्पिर्घृतम् । छाद्यतेऽनया छदिः । छदिः स्त्रियामेवेति लिङ्गानुशासनसूत्रम् । एवं च 'पटलं छदिः' इत्यमरग्रन्थे पटलसाहचर्याच्छदिषः क्लीबतां वदन्त उपेक्ष्याः ॥—[illegible] । छर्दिश्चातिसारश्च शूलश्च तानि यस्य सन्तीति विग्रहः ॥ २६६ बृंहेः–। बृहि वृद्धौ । अस्मादिसिः ॥—कुश[illegible]णोरिति । शुष्मा नाम अग्निः । 'अग्निर्वैश्वानरो वह्निः' इत्युपक्रम्य 'बर्हिः शुष्मा' इत्यमरेणोक्तत्वात् । 'बर्हिः पुंसि हुताशने । न स्त्री कुशे' इति मेदिनी ॥ २६७ द्युतेः–। द्युत दीप्तौ । 'ज्योतिरग्नौ दिवाकरे । पुमान्नपुंसकं दृष्टौ स्यान्नक्षत्रप्रकाशयोः' इति मेदिनी ॥ २६८ वसौ–। रुच दीप्तावस्माद्वसुशब्दे उपपद इसिन्स्यात्संज्ञायाम् । बाहुलकात्केवलादपि । 'रोचिः शोचिरुभे क्लीबे' इत्यमरः ॥ २६९ भुवः–। भवतेरिसिन् स्यात्स च कित् ॥ २७० सहो–। षह मर्षणे । अस्मादिसिन् धश्चान्तादेशः ॥ २७१ पिबतेः–। पा पाने । अस्मादिसिन्, धातोश्च थुगागमः ॥ २७२ जनेः । जनी प्रादुर्भावे ॥ २७३ मनेः–। मनु अवबोधने । अस्मादुसिः स्याच्छन्दसि धकारश्चान्तादेशः । मधुः पवित्रद्रव्यम् ॥ २७४ अर्तिपॄ–। ऋ गतौ, पॄ पालनपूरणयोः, डुवप् बीजसन्ताने, यज देवपूजादौ, तनु विस्तारे, धन धान्ये, तप सन्तापे, एभ्य उसिर्नित्स्यात् । 'व्रणोऽस्त्रियामीर्ममरुः क्लीबे' इत्यमरः । 'ग्रन्थिर्ना पर्वपरुषी' इति च । 'वपुः क्लीबं तनौ शस्ताकृतावपि' इति मेदिनी । शस्ताकृतिः प्रशस्ताकृतिरित्यर्थः । यजुरिति यजुर्वेदः । तनुः शरीरम् । तनुषीति । 'तनुषे तनुषेऽनङ्गम्' इति सुबन्धुः । 'स्यात्तनुस्तनुषा सार्धं धनुषा च धनुं विदुः' इति द्विरूपेषु विश्वः । 'अथास्त्रियाम् । धनुश्चापौ' इत्यमरः । 'धनुः प्रियाले ना न स्त्री राशिभेदे शरासने । धनुर्धरे त्रिषु' इति सान्ते मेदिनी ॥ २७५ एतेः–। इण् [illegible], णित्त्वाद् वृद्धौ कृतायामायादेशः ॥ २७६ चक्षेः–। चक्षिङ् व्यक्तायां वाचि, अस्मादुसिः शिद्भवति । शित्त्वात्ख्याञादेशाभावः । चक्षते=रूपमनुभवन्त्यनेनेति चक्षुः ॥ २७७ मुहेः–। मुह वैचित्ये । 'मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः' इत्यव्ययेष्वमरः ॥ अस्मात्परं २७८ 'बहुलमन्यत्रापि' इति सूत्रं स्पष्टत्वात्त्यक्तम् ॥ २७९ कॄ गॄ–। कॄ विक्षेपे, गॄ निगरणे, शॄ हिंसायाम्, वृञ् वरणे, चते याचने । 'नैरृतः कर्वरः क्रव्यात्कर्वुरो यातुरक्षसोः' इति शब्दार्णवः । 'शर्वरी यामिनीस्त्रियोः' इति मेदिनी । 'वर्वरः पामरे केशविन्यासे नीवृदन्तरे । वर्वरः फञ्जिकायां तु वर्वरा शाकपुष्पयोः' इति विश्वः । वर्वरः पामरे केशवक्रले नीवृदन्तरे । फञ्जिकायां पुमान् शाकपुष्पभेदभिदोः स्त्रियाम्' इति मेदिनी । 'चत्वरं स्थण्डिले गणे' इति च ॥ २८० नौ सदेः–। षद्लृ विशरणादौ । निपूर्वादस्मात्ष्वरच् स्यात् । 'सदिरप्रतेः' इति षत्वम् । 'निषद्वरः स्मरे पङ्के निशायां तु निषद्वरी' इति मेदिनी ॥ इत्युणादिषु द्वितीयः पादः ॥

२८१ छित्वर–॥—अनयोरिति । छिदिर् द्वैधीकरणे, छद अपवारणे, 'छित्वरश्छेदने द्रव्ये धूर्ते वैरिणि च त्रिषु' इति

**तीवरनीवरगह्वरकद्वरसंयद्वराः** । एकादश ष्वरच्प्रत्ययान्ता निपात्यन्ते । 'छिदिर्' 'छद्' अनयोस्तकारोऽन्तादेशः, छिदेर्गुणाभावश्च—छित्वरो धूर्तः, 'छत्वरो गृहकुञ्जयोः' । धीवरः कैवर्तः । पीवरः स्थूलः । मीवरो हिंसकः । त्निनोतेर्दीर्घश्च, चीवरं भिक्षुकप्रावरणम् । तीवरो जातिविशेषः । नीवरः परिव्राट् । गाहतेर्ह्रस्वत्वम्, गह्वरम् । कटे वर्षादौ, कद्वरं व्यञ्जनम् । यमेर्दकारः, संयद्वरो नृपः । 'पदेः-संपद्वरः' इत्येके ॥ २८२ । **इण्षिञ्जिदीङुष्यविभ्यो नक्** । 'इनः सूर्ये नृपे पत्यौ' । सिनः काणः । जिनोऽर्हन् । दीनः । उष्णः । ऊनः ॥ २८३ । **फेनमीनौ** । एतौ निपात्येते । स्फायतेः फेनः । मीनः ॥ २८४ । **कृपेर्वर्णे** । कृष्णः ॥ २८५ । **बन्धेर्ब्रधिबुधी च** । ब्रध्नः, बुध्नः ॥ २८६ । **धापॄवस्यज्यतिभ्यो नः** । 'धाना भ्रष्टयवे स्त्रियः' । पर्णं पत्रम्, पर्णः किंशुकः । 'वस्नो मूल्ये वेतने च' । अजेर्वी, वेनः । अत्नः-आदित्यः । बाहुलकात्—श्रृणोतेः-श्रोणः पङ्गुः ॥ २८७ । **लक्षेरट् च** । लक्षेश्चुरादिण्यन्तान्नः स्यात्तस्याडागमश्च । चान्मुडित्येके । 'लक्षणं लक्ष्मणं नाम्नि चिह्ने च' । लक्षणो लक्ष्मणश्च रामभ्राता । 'लक्षणा हंसयोषायां सारसस्य च लक्ष्मणा' ॥ २८८ । **वनेरिच्चोपधायाः** । वेन्ना नदी ॥ २८९ । **सिवेष्टेर्यू च** । दीर्घोच्चारणसामर्थ्यान्न गुणः । स्यून आदित्यः । बाहुलकात् केवलो नः, ऊठ्, अन्तरङ्गत्वाद्यण्, गुणः, स्योनः ॥ २९० । **कॄवृजॄसिद्रुपन्यनिस्वपिभ्यो नित्** । कर्णः । वर्णः । 'जर्णश्चन्द्रे च वृक्षे च' । सेना । द्रोणः । पन्नो नीचैर्गतिः । अन्नमोदनः । स्वप्नो निद्रा ॥ २९१ । **धेट**

---

मेदिनी । डुधाञ् धारणपोषणयोः, पा पाने, मा माने, एषां त्रयाणामीत्वमन्त्यस्य निपात्यत इत्येके । अन्ये तु पीव मीव तीव नीव स्थौल्ये । एभ्यः ष्वरचि 'लोपो व्योः-' इति लोपमाहुः । '**पीवरः** कच्छपे स्थूले' इति मेदिनी ॥**-मीवर इति** । हिंसक इत्यर्थानुगुण्येन 'मीञ् हिंसायाम्' इत्यस्मात्ष्वरजिति केचिदाहुः । 'तीवरो नाम्बुधौ व्याधे' इति मेदिनी । 'स्यात्तीवरो वाणिजके वास्तवेऽपि च दृश्यते' इति मेदिनीविश्वप्रकाशौ ॥**—गाहतेरिति** । गाहू विलोडने । 'कद्वरं कुत्सिते वाच्यलिङ्गं तक्रे नपुंसकम्' इति मेदिनी । बाहुलकादुपपूर्वकात् 'हु दानादनयोः' इत्यस्मात्ष्वरच्युकारलोपः । 'उपह्वरं समीपे स्यादेकान्तेऽपि नपुंसकम्' इति मेदिनी । उपह्वरो रथ इति केचित् । 'तदु प्रयक्षतं' इति मन्त्रे तु उपह्वरे=उपगन्तव्ये समीपदेशे ॥ **२८२ इण्-।** इण् गतौ, षिञ् बन्धने, जि जये, दीङ् क्षये, उष दाहे, अव रक्षणे । 'इनः पत्यौ नृपार्कयोः' इति मेदिनी । 'जिनोऽर्हति च बुद्धे च पुंसि स्यात्त्रिषु जित्वरे' इति च । '**दीना** मूषिकयोषायां दुर्गते कातरेऽन्यवत्' इति विश्वः । '**उष्णो** ग्रीष्मे पुमान् दक्षाशीतयोरन्यलिङ्गकः' इति मेदिनी । 'ज्वरत्वर-' इत्यूठ्, **ऊन**मसंपूर्णम् ॥ **२८३ फेन-।** स्फायी वृद्धौ, अस्य फे इत्यादेशः । मीञ् हिंसायाम् । 'डिण्डीरोऽब्धिकफः **फेनः**' इत्यमरः । '**मीनो** राश्यन्तरे मत्स्ये' इति विश्वः ॥ **२८४ कृपेः-।** कृप विलेखने अस्माद्वर्णे वाच्ये नक् स्यात् । '**कृष्णः** सत्यवतीपुत्रे केशवे वायसेऽर्जुने । कृष्णा स्याद्द्रौपदीनीलीकणाद्राक्षासु योषिति । मेचके वाच्यलिङ्गः स्यात्क्लीबे मरिचलोहयोः' इति मेदिनी ॥ **२८५ बन्धेः-।** बन्ध बन्धने, अस्मान्नक् । 'भास्करोऽहस्करो **ब्रध्नः** प्रभाकरदिवाकरौ' इत्यमरः । '**बुध्नो** ना मूलरुद्रयोः' इति मेदिनी ॥ **२८६ धापॄ-।** डुधाञ् धारणादौ, पॄ पालनादौ, वस निवासे, अज गतौ, अत सातत्यगमने, एभ्यो नः स्यात् । नक् प्रत्यये सति तु वस्न इत्यत्र संप्रसारणं स्यात् । वेन इत्यत्र तु गुणो न स्यादिति भावः । '**धाना** भ्रष्टयवे प्रोक्ता धान्याकेऽभिनवोद्भिदि' इति विश्वः । '**पर्णं** पत्रं किंशुके ना' इति मेदिनी । '**वस्न**स्त्ववक्रये पुंसि चेतने स्यान्नपुंसकम्' इति च । **वेनः**-लुण्टाकः प्रजापतिश्च ॥ **२८७ लक्षेः-।** लक्ष दर्शनाङ्कनयोः ॥**—लक्षणमित्यादि** । लक्षणलक्ष्मणशब्दौ द्वावपि नामचिह्नयोः क्लीबौ । रामभ्रातरि पुंलिङ्गौ । हंसयोषायां लक्षणा । सारसस्य योषायां 'लक्ष्मणा' इति व्यवस्थेत्यर्थः । 'लक्षणं नाम्नि चिह्ने च सौमित्रिरपि लक्षणः । लक्ष्मणं लाञ्छने नाम्नि रामभ्रातरि लक्ष्मणः' इति विश्वः । 'लक्षणं नामचिह्नयोः । लक्ष्मणं च लक्ष्मणस्तु सौमित्रौ लक्षणो यथा' इति हेमचन्द्रः । 'लक्ष्मणो लक्षणोऽपि च' इति द्विरूपकोशः । 'लक्षणं नाम्नि चिह्ने च सारस्यां लक्षणा क्वचित् । लक्ष्मणा त्वौषधीभेदे सारस्यामपि योषिति । रामभ्रातरि पुंसि स्यात्सश्रीके चाभिधेयवत्' इति मेदिनी । कोशे तु 'सारस्यामपि लक्षणा' इति निर्मकारः स्वीकृतः ॥ **२८८ वनेः-।** वन संभक्तौ, अस्मान्नः, उपधाया इत्वं च ॥**—वेन्नेति**-लघूपधगुणः ॥ **२८९ सिवेः-।** षिवु तन्तुसन्ताने ॥**—बाहुलकादिति** । एतच्च 'च्छ्वोः शूड्-' इति सूत्रे वृत्तौ 'येन विधिः-' इति सूत्रे कैयटग्रन्थे च स्पष्टम् ॥**—यणिति** । लघूपधगुणे कृते लेकारस्यायादेशे ऊठोऽपि 'सार्वधातुक-' इत्यादिना गुणे कृते सयोन इति स्यादिति भावः । '**स्योनः** किरणसूर्ययोः' इति मेदिनी ॥ **२९० कॄवृ-।** कॄ विक्षेपे, वृञ् वरणे, दीर्घपाठे तु-वॄ वरणे, जॄष् वयोहानौ, दिवादिः । जॄ इति क्र्यादौ चुरादौ च । षिञ् बन्धने, द्रु गतौ, पन स्तुतौ, अन प्राणने, ञिष्वप् शये, एभ्यो नप्रत्ययो नित्स्यात् । '**कर्णः** पृथाज्येष्ठसुते सुवर्णालौ श्रुतावपि' इति विश्वमेदिन्यौ । **वर्णो** द्विजादिशुक्लादियशोगुणकथासु च । स्तुतौ ना न स्त्रियां भेदे रूपाक्षरविलेखने' इति मेदिनी । विश्वमेदिनीस्थमाह—**जर्णश्चन्द्र इति** । 'जर्णो जीर्णद्रुमेन्दुषु' इति हेमचन्द्रः । 'ध्वजिनी वाहिनी सेना' इत्यमरः । 'द्रोणोऽस्त्रियामाढके स्यादाढकादिचतुष्टये । पुमान्कृपीपतौ कृष्णकाकेऽस्त्री नीवृदन्तरे । स्त्रियां काष्ठाम्बुवाहिन्यां गवादन्यामपीष्यते । अन्नं भक्ते च भुक्ते स्यात्' इति मेदिनी । 'स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमान्' इति मेदिनी ॥ **२९१ धेटः-**

इञ्च। 'धेनः सिन्धुर्नदी धेना' ॥ २९२ । **तृषिशुषिरसिभ्यः कित्** । तृष्णा । शुष्णः सूर्यो वह्निश्च । रस्नं द्रव्यम् ॥ २९३ । **सुञो दीर्घश्च** । सूना वधस्थानम् ॥ २९४ । **रमेस्त च** । रमयतीति रत्नम् ॥ २९५ । **रास्नासास्नास्थूणावीणाः** । रास्ना गन्धद्रव्यम् । सास्ना गोगलकम्बलः । स्थूणा गृहस्तम्भः । वीणा वल्लकी ॥ २९६ । **गादाभ्यामिष्णुच्** । गेष्णुर्गायनः । देष्णुर्दाता ॥ २९७ । **कृत्यशूभ्यां क्स्नः** । कृत्स्नम् । अक्ष्णमखण्डम् ॥ २९८ । **तिजेर्दीर्घश्च** । तीक्ष्णम् ॥ २९९ । **श्लिषेरच्चोपधायाः** । श्लक्ष्णम् ॥ ३०० । **यजिमनिशुन्धिदसिजनिभ्यो युच्** । यज्युरध्वर्युः । 'मन्युर्दैन्ये क्रतौ क्रुधि' । शुन्ध्युरग्निः । दस्युस्तस्करः । जन्युः शरीरी ॥ ३०१ । **भुजिमृङ्भ्यां युक्त्युकौ** । भुज्युर्भाजनम् । मृत्युः ॥ ३०२ । **सर्तेरयुः** । सरयुर्नदी । 'अयूः' इति पाठान्तरम्, सरयूः ॥ ३०३ । **पानीविषिभ्यः पः** । पाति रक्षत्यस्मादात्मानमिति पापम् । तद्योगात्पापः । नेपः पुरोहितः । बाहुलकाद्गुणाभावे नीपो वृक्षविशेषः । वेष्पः पानीयम् ॥ ३०४ । **च्युवः किच्च** । च्युपो वक्त्रम् ॥ ३०५ । **स्तुवो दीर्घश्च** । स्तूपः समुच्छ्रायः ॥ ३०६ । **सुशृभ्यां निच्च** । चात्कित् । सूपः । बाहुलकादूत्त्वम्, शूर्पम् ॥ ३०७ । **कुयुभ्यां च** । कुवन्ति मण्डूका अस्मिन् कूपः । युवन्ति बध्नन्त्यस्मिन्पशुमिति यूपो यज्ञस्तम्भः ॥ ३०८ । **खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः** । सप्तैते पप्रत्ययान्ता निपात्यन्ते । खनतेर्नकारस्य षत्वम्, 'खष्पौ क्रोधबलात्कारौ' । शीलतेर्ह्रस्वः, शिल्पं कौशलम् । 'शसु हिंसायाम्' निपातनात्षत्वम्, शष्पं बालतृणं प्रतिभाक्षयश्च । बाधतेः षः, 'बाष्पो नेत्रजलोष्मणोः' । बाष्पं च । रौतेर्दीर्घः, 'रूपं स्वभावे सौन्दर्ये' । पॄ, 'पर्पं गृहं बालतृणं पङ्गुपीठं च' । 'तल प्रतिष्ठाकरणे' चुरादिणिचो लुक्, 'तल्पं शय्याट्टदारेषु' ॥ ३०९ । **स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच्** । 'अयामन्त-' २३११ इति णेरयादेशः—स्तनयित्नुः, हर्षयित्नुः, पोषयित्नुः, गदयित्नुर्वावदूकः, मदयित्नुर्मदिरा ॥

धेट् पाने, अस्मान्नः स्यादिचान्तादेशः । '**धेना** नद्यां नदे पुमान्' इति मेदिनी । 'धेनः समुद्रे नद्यां च धेना' इति विश्वः । 'श्लोको धारा' इत्यादिषु सप्तपञ्चाशत्सङ्ख्याके वाङ्नामसु धेनेति वैदिकनिघण्टौ पठितम् । अत एव 'धेना जिगाति दाशुषे' 'इन्द्र धेनाभिरिह मादयस्व' इत्यादिमन्त्रेषु धेना=वागिति व्याख्यातं भाष्ये ॥ **२९२ तृषि-**। ञितृषा पिपासायाम्, शुष शोषणे, रस शब्दे । '**तृष्णा** लिप्सापिपासयोः' इति विश्वः ॥ **२९३ सुञः-**। षुञ् अभिषवे, अस्मान्नः स्याद्धातोर्दीर्घश्च । '**सूना**ऽधोजिह्विकाऽपि च' इति नान्तेऽमरः । 'सूनं प्रसवपुष्पयोः । सूना पुत्र्यां वधस्थानगलकण्ठिकयोः स्त्रियाम्' इति मेदिनी ॥ **२९४ रमेः-**। रमेर्ण्यन्तान्नः स्यात्तकारश्चान्तादेशः । 'रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम्' इति मेदिनी ॥ **२९५ रास्ना-**। रस आस्वादने, उपधादीर्घः । '**रास्ना** तु स्यान्नुजङ्गाख्यामेलापर्ण्योमपि स्त्रियाम्' इति मेदिनी । षस स्वप्ने, उपधादीर्घः । 'सास्ना तु गलकम्बलः' इत्यमरः । '**सास्ना** गोगलकम्बलः' इति पाठान्तरम् । 'ष्ठा गतिनिवृत्तौ' इत्यस्य ऊत्वं प्रत्ययस्य णत्वं च । 'अथ स्थूणा स्यात्सूर्म्यां स्तम्भे गृहस्य च' इति मेदिनी । **सूर्मी** लोहप्रतिमा । वी गत्यादिषु । गुणाभावो णत्वं च । 'वीणा विद्युति वल्लक्याम्' इति मेदिनी ॥ **२९६ गादाभ्याम्-**। गै शब्दे, डुदाञ् दाने । 'गेष्णुर्नटे गायके च देष्णुर्दातरि दुर्दमे' इति विश्वः ॥ **२९७ कृत्यशू-**। कृती वेष्टने, अशू व्याप्तौ । 'कृत्स्नं सर्वाम्बुकुक्षिषु' इति मेदिनी ॥ **२९८ तिजेः-**। तिज निशाने, अस्मात्क्स्नः, धातोर्दीर्घश्च । 'तीक्ष्णं सामुद्रलवणे विषलोहाजिमुष्कके । क्लीबं यवाग्रके पुंसि तिग्मात्मत्यागिनोस्त्रिषु' इति मेदिनी ॥ **३०० यजि-**। यज देवपूजादौ, मन ज्ञाने, शुन्ध शुद्धौ, दसु उपक्षये, जनी प्रादुर्भावे । 'दस्युश्चौरे रिपौ पुंसि' इति मेदिनी । 'अथ जन्युः स्यात्पुंसि प्राण्यग्निधातृषु' इति च ॥ **३०१ भुजि-**। भुज पालनादौ, मृङ् प्राणत्यागे, आभ्यां यथासंख्यं युक्त्युकौ स्तः । 'मृत्युर्ना मरणे यमे' इति मेदिनी ॥ **३०२ सर्तेः-**। सृ गतौ ॥ **३०३ पानी-**। पा रक्षणे, णीञ् प्रापणे, विष्लृ व्याप्तौ । 'नीपः कदम्बबन्धूकनीलाशोकद्रुमेऽपि च' इति मेदिनी ॥ **३०४ च्युवः-**। च्युङ् गतौ । धातूनामनेकार्थत्वादिह भाषणे । च्यवन्ते=भाषन्तेऽनेनेति विग्रहः । दशपाद्यां तु 'चुपः किच्च' इति पठ्यते । चुप मन्दायां गतौ । चोपतीति च्युपः मन्दगमनकर्ता ॥ **३०५ स्तुवः-**। ष्टुञ् स्तुतौ । अस्मात्पः स्याद्धातोर्दीर्घश्च ॥ **३०६ सुशृ-**। षुञ् अभिषवे, शॄ हिंसायाम् । आभ्यां पः स्यात्स च निद्वत्ति । नित्त्वं तु स्वरार्थम् । 'सूपो व्यञ्जनसूदयोः' इति मेदिनी ॥ **३०७ शूर्पमिति-**। बाहुलकादुत्वं रपरत्वं 'हलि च' इति दीर्घः । 'प्रस्फोटनं शूर्पमस्त्री' इत्यमरः ॥—**कुयु-**। कु शब्दे, यु मिश्रणे । आभ्यां पः स च मिद्धातोर्दीर्घत्वं च ॥ **३०८ खष्पशिल्प-**। खनु अवदारणे, शील समाधौ, बाधृ लोडने, रु शब्दे, पॄ पालनादौ । 'खष्पः क्रोधे बलात्कृतौ' इति विश्वः । 'शष्पं बालतृणेऽपि च । पुंसि स्यात्प्रतिभाहानौ' इति मेदिनी ॥ विश्वोक्तिमाह—**वाष्प इति-**॥ 'बाष्पमूष्मणि चाश्रुणि' इति कोशान्तरमभिप्रेत्याह—**बाष्पं चेति-**। 'रूपं स्वभावे सौन्दर्ये नालके पशुशब्दयोः । ग्रन्थावृत्तौ नाटकादावाकारश्लोकयोरपि' इति विश्वमेदिन्यौ । 'तल्पमट्टे कलत्रे च शयनीये च न द्वयोः' इति मेदिनी । अमरोक्तिमाह—**तल्पं शय्येति** ॥ **३०९ स्तनिहृषि-**। स्तनगदी देवशब्दे—चुरादिण्यन्तौ, हृष तुष्टौ, पुष पुष्टौ, मदी हर्षग्लेपनयोः, घटादिः । एभ्यो ण्यन्तेभ्यः इत्नुच् स्यात् । '**स्तनयित्नुः** पुमान्वारिधरेऽपि स्तनितेऽपि च' इति मेदिनी । 'स्तनयित्नुः पयोवाहे तद्ध्वनौ मृगरागयोः' इति विश्वः । '**हर्षयित्नुः** सुते हेम्नि पोषयित्नुः पिके द्विजे' इति च । '**गदयित्नुः** पुमान्कामे जल्पाके कार्मुकेऽपि च' इति विश्वमेदिन्यौ । '**मदयित्नुः** कामदेवे

३१० । **कृहनिभ्यां क्तुः** । कृतुः शिल्पी । हतुर्व्याधिः शस्त्रं च ॥ ३११ । **गमेः सन्वच्च** । जिगतुः ॥ ३१२ । **दाभाभ्यां नुः** । दानुर्दाता । भानुः ॥ ३१३ । **वचेर्गश्च** । वग्नुः ॥ ३१४ । **धेट इच्च** । धयति सुतानिति धेनुः ॥ ३१५ । **सुवः कित्** । 'सूनुः पुत्रेऽनुजे रवौ' ॥ ३१६ । **जहातेर्द्वेऽन्तलोपश्च** । जह्नुः ॥ ३१७ । **स्थो णुः** । 'स्थाणुः कीले स्थिरे हरे' ॥ ३१८ । **अजिवृरीभ्यो निच्च** । अजेर्वी, वेणुः । वर्णुर्नदद्देशभेदयोः । 'रेणुर्द्वयोः स्त्रियां धूलिः' ॥ ३१९ । **विषेः किच्च** । विष्णुः ॥ ३२० । **कृदाधाराचिंकलिभ्यः कः** । बाहुलकान्न कस्येत्संज्ञा । 'कर्को धवलघोटकः' । दाको दाता । धाकोऽनड्वानाधारश्च । राका पौर्णमासी । अर्कः । 'कल्कः पापाशये पापे दम्भे विट्किट्टयोरपि' ॥ ३२१ । **सृवृभूशुषिमुषिभ्यः कक्** । 'सृक उत्पलवातयोः' । 'वृकः श्वापदकाकयोः' । भूकं छिद्रम् । शुष्कः । मुष्कोऽण्डम् ॥ ३२२ । **शुकवल्कोल्काः** । शुषेरन्त्यलोपः, शुकः । 'वल्कं वल्कलमस्त्रियाम्' । 'उष दाहे' षस्य लः, उल्का ॥ ३२३ । **इणभीकापाशल्यतिमर्चिभ्यः कन्** । 'एके मुख्यान्यकेवलाः' । 'भेको मण्डूकमेघयोः' इति विश्वमेदिन्यौ । काकः । पाकः शिशुः । शल्कं शकलम् । अत्कः पथिकः शरीरावयवश्च । मर्कः शरीरवायुः ॥ ३२४ । **नौ हः** । जहातेः कन् स्यान्नौ । निहाका गोधिका ॥

---

पुमान्मद्ये नपुंसकम्' इति मेदिनी ॥ **३१० कृहनि-**। डुकृञ् करणे, हन हिंसागत्योः ॥—**कृतुरिति**। कर्तेत्यर्थः । कित्त्वान्न गुणः ॥—**हतुरिति** । 'अनुदात्तोपदेश-' इत्यादिनानुनासिकलोपः । एवमुत्तरत्र—गमेरपि क्तुप्रत्यये जिगतुरित्यत्रापि बोध्यः ॥—**शस्त्रं चेति** । चाद्धन्ता । दशपादीवृत्तौ तु क्रुरिति तकाररहितं पठित्वा 'कृणुः कर्ता' । हनुर्वेकैकदेशः । बाहुलकान्नलोपः । गमेस्तु जिगत्नुरित्युदाहृतं । तत्सर्वं प्रामादिकम्, लक्ष्यविसंवादात् । तथा च श्रूयते—'सुरूपकृत्नुमूतये' 'ज्येष्ठराजं भरे कृत्नुं' 'अयं कृत्नुरगृभीतः' 'मा नो वधाय हत्नवे' 'मृगं न भीममुपहत्नुमुग्रम्' 'यो नः सनुत्य उत वा जिगत्नु' इत्यादि । अत एव हन्तिधातुं विवृण्वता माधवेन उपहत्नुरित्युदाहृत्य क्नोः कित्त्वादनुनासिकलोप इत्युक्तम् । यत्तु तेनैव 'सुरूपकृत्नुम्' इति मन्त्रं विवृण्वता तकारोपजनश्छान्दस इत्युक्तं तद्दशपादीवृत्तिमनुसृत्य, न तु क्तुक्नोरित्युज्ज्वलदत्तवृत्तिं ऽवेति सहृदयैराकलनीयमित्याहुः ॥ **३१२ दाभाभ्याम्-**। डुदाञ् दाने, भा दीप्तौ । **दानुर्**दातरि विक्रान्ते' इति मेदिनी । **'भानू** रश्मिदिवाकरौ' इत्यमरः ॥ **३१३ वचेः-**। वच परिभाषणे । **वग्नु**र्वाचालः ॥ **३१४ धेटः-**। धेट् पाने अस्मान्नुः स्यादिकारश्चान्तादेशः । 'धेनुः स्यान्नवसूतिका' इत्यमरः ॥ **३१५ सुवः-**। षूङ् प्राणिप्रसवे । अस्मान्नुः स्यात्स च कित् । विश्वोक्तिमाह—**सूनुः पुत्रे इति**—॥ **३१६ जहातेः-**। ओहाक् त्यागे । 'जह्नुः स्यात्पुंसि राजर्षिभेदे च मधुसूदने' इति मेदिनी ॥ **३१७ स्थो णुः-**। ष्ठा गतिनिवृत्तौ । अस्माण्णुः स्यात् ॥ विश्वोक्तिमाह—**स्थाणुरिति** । 'स्थाणुः कीले हरे पुमान् । अस्त्री ध्रुवे' इति मेदिनी ॥ **३१८ अजिवृ-**। अज गतौ, वृङ् संभक्तौ, रीङ् गतिरेषणयोः, एभ्यो णुर्नित्स्यात् । 'वेणुर्नृपान्तरे वंशे' इति विश्वः । 'रेणुः स्त्रीपुंसयोर्धूलौ पुंलिङ्गः पर्पटे पुनः' इति मेदिनी ॥ **३१९ विषेः-**। विष्लृ व्याप्तौ । अस्माण्णुः स्यात्स च किच्चान्नित् । नित्त्वादाद्युदात्तत्वम् । विष्णुरिच्छा । 'विष्णुर्नारायणः कृष्णः' इत्यमरः ॥ **३२० कृदा-**। डुकृञ् करणे, डुदाञ् दाने, डुधाञ् धारणपोषणयोः, रा दाने, अर्च पूजायाम्, कल गतौ । 'कर्कः कर्के तले वह्नौ शुक्लाश्वे दर्पणे घटे' इति विश्वमेदिन्यौ । 'राका नद्यन्तरे कच्छ्वां नवजातरजः स्त्रियाम् । संपूर्णेन्दुतिथौ' इति मेदिनी । 'राका तु सरिदन्तरे । राका नवरजःकन्या पूर्णेन्दुः पूर्णिमापि च' इति विश्वः ॥ इह दा धा रा एषां 'केणः' इति ह्रस्वोऽपि बाहुलकात् संज्ञापूर्वकविधेरनित्यत्वाद्वा नेति बोध्यम् । 'अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ' इति विश्वमेदिन्यौ । 'कल्कोऽस्त्री घृततैलादिशेषे दम्भे विभीतके । विट्किट्टयोश्च पापे च त्रिषु पापाशये पुनः' इति मेदिनी । **बाहुलकाद्र**मेरपि कः । 'रङ्कः कृपणमन्दयोः' इति मेदिनी । कपिलकादित्वाल्लत्वं, टाप् । 'लङ्का रक्षःपुरीशाखाशाकिनीकुलटासु च' इति विश्वमेदिन्यौ ॥ **३२१ सृवृ-**। सृ गतौ, वृञ् वरणे, भू सत्तायाम्, शुष शोषणे, मुष स्तेये ॥—**सृक इति** । 'सृकं संशाय पविमिन्द्र तिग्मम्' इति मन्त्रस्य वेदभाष्ये तु सृकं=सरणशीलं पविं=वज्रं संशाय=सम्यक् तीक्ष्णीकृत्येति व्याख्यातम् । 'भूकं छिद्रे च काले च' इति मेदिनी । 'मुष्को मोक्षकवृक्षे स्यात्संघाते वृषणेऽपि च' इति स एव ॥ **३२२ 'शुको** व्याससुते कीरे रावणस्य च मन्त्रिणि । शिरीषपादपे पुंसि ग्रन्थिपर्णे नपुंसकम् । **वल्कं** वल्कलशल्कयोः' इति च । **'उल्का** ज्वाला विभावसोः' इति सुभूतिचन्द्रः ॥ **३२३ इणभी-**। इण् गतौ, ञिभी भये, कै शब्दे, पा पाने, शल गतौ, अत सातत्यगमने । 'एकं संख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु' इति मेदिनी । 'काकः स्याद्वायसे वृक्षप्रभेदे पीठसर्पिणि । शिरोऽवक्षालने मानप्रभेदद्वीपभेदयोः । काका स्यात्काकनासायां काकोली काकजङ्घयोः । रक्तिकायां मलय्वां च काकमाच्यां च योषिति । काकं सुरतबन्धे स्यात्काकानामपि संहतौ' इति मेदिनीविश्वप्रकाशौ । 'पाकः परिणतौ शिशौ । केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च' इति मेदिनी । 'शल्कं तु शकले वल्के' इति च । 'मर्च' इति सौत्रो धातुरिति बहवः । 'मर्च शब्दे चौरादिकः' इति 'मिदचोऽन्त्यात्परः' इति सूत्रे कैयटः । 'मर्तो मर्तं मर्चयति द्वयेन' इति मन्त्रे मर्चयति=विधेयीकरोति भर्त्सयति वेति वेदभाष्यम् । न चैवं णिलोपस्य स्थानिवद्भावेन कुत्वाभावान्मर्क इति न सिध्येदिति वाच्यम् । पूर्वत्रासिद्धे तदभावात् । शो तनूकरणे, अस्मादपि बाहुलकात्कन् । 'शाको द्वीपान्तरेऽपि च । शक्तौ द्रुमविशेषे च पुमान् हरितके स्त्रियाम्' इति मेदिनी ॥ **३२४ नौ हः** । ओहाक् त्यागे । अस्मान्निशब्दे उपपदे कन्स्यात् ।

३२५ । **नौ सदेर्डिच्च** । 'निष्कोऽस्त्री हेम्नि तत्पले' ॥ ३२६ । **स्यमेरीट् च** । स्यमीको वल्मीकः वृक्षभेदश्च । 'इट्-ह्रस्वः' इति केचित्, स्यमिकः ॥ ३२७ । **अजियुधूनीभ्यो दीर्घश्च** । 'वीकः स्याद्वातपक्षिणोः' । यूका । धूको वायुः । नीको वृक्षविशेषः ॥ ३२८ । **ह्रियो रश्च लो वा** । 'ह्रीका ह्लीका त्रपा मता' ॥ ३२९ । **शकेरुनोन्तोन्त्युनयः** । उन-उन्त-उन्ति-उनि-एते चत्वारः स्युः । शकुनः, शकुन्तः, शकुन्तिः, शकुनिः ॥ ३३० । **भुवो झिच्** । भवन्तिः-वर्तमानकालः । बाहुलकादवेश्च, अवन्तिः । वदेः-वदन्तिः । 'किंवदन्ती जनश्रुतिः' । ३३१ । **कन्युच् क्षिपेश्च** । चाद्भुवः । 'क्षिपण्युर्वसन्तः' इत्युज्ज्वलदत्तः । 'भुवन्युः स्वामिसूर्ययोः' ॥ ३३२ । **अनुङ् नदेश्च** । चात्क्षिपेः । नदनुर्मेघः । क्षिपणुर्वातः ॥ ३३३ । **कॄवृदारिभ्य उनन्** । 'करुणो वृक्षभेदः स्यात्करुणा च कृपा मता' । वरुणः । दारुणम् ॥ ३३४ । **त्रो रश्च लो वा** । 'तरुणस्तलुनो युवा' ॥ ३३५ । **क्षुधिपिशिमिथिभ्यः कित्** । क्षुधुनो म्लेच्छजातिः । पिशुनः । मिथुनम् ॥ ३३६ । **फलेर्गुक् च** । फल्गुनः पार्थः । प्रज्ञाद्यण्, फाल्गुनः ॥ ३३७ । **अशेर्लशश्च** । लशुनम् ॥ ३३८ । **अर्जेर्णिलुक् च** । अर्जुनः ॥ ३३९ । **तृणाख्यायां चित्** । चित्त्वादन्तोदात्तः । अर्जुनं तृणम् ॥ ३४० । **अर्तेश्च** । अरुणः ॥ ३४१ । **अजियमिशीङ्भ्यश्च** । 'वयुनं देवमन्दिरम्' । यमुना । शयुनोऽजगरः ॥ ३४२ । **वृतॄवदिहनिकमिकषिभ्यः**

---

'निहाका गोधिका समे' इत्यमरः ॥ **३२५ नौ सदेः**–। षद्लृ विशरणे, अस्मान्निशब्दे उपपदे कन् स्यात् स च डित् । डित्त्वाट्टिलोपः । 'सदिरप्रतेः' इति पत्वम् । 'निष्कमस्त्री साष्टहेमशते दीनारकर्षयोः । वक्षोलंकरणे हेममात्रे हेमपलेऽपि च' इति मेदिनी ॥ **३२६ स्यमेः**–। स्यमु शब्दे अस्मात्कन्स्यात्तस्य च ईडागमः । 'स्यमीका नीलिकायां स्त्री स्यमीको नाकुवृक्षयोः' इति मेदिनी ॥ **३२७ अजि**–। अज गतिक्षेपणयोः, यु मिश्रणे, धूञ् कम्पने, णीञ् प्रापणे, एभ्यः कन् स्यादेषां दीर्घश्च । तत्सामर्थ्याद्गुणाभावः । अजेर्वीभावः ॥ **३२८ ह्रियः**–। ह्री लज्जायाम्, अस्मात्कन्धातोर्दीर्घत्वं च, तत्सामर्थ्याद्गुणाभावः ॥ **३२९ शकेः**–। शक्लृ शक्तौ । 'शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः' इत्यमरः । 'शकुनस्तु पुमान्पक्षिमात्रप्रश्नविशेषयोः । शुभशंसिनिमित्ते च शकुनं स्यान्नपुंसकम्' इति मेदिनी । 'शकुन्तः कीटभेदे स्याद्भासपक्षिविहङ्गयोः' इति । 'शकुनिः पुंसि विहगे सौबले करणान्तरे' इति च ॥ **३३० भुवः**–। भू सत्तायाम् । अस्मात् झिच् स्यात् । 'झोऽन्तः', 'कृदिकारात्–' इति ङीष्, भवन्ती=लटः संज्ञा । तथा च 'अस्तिर्भवन्तीपरः प्रयोक्तव्यः' इति भाष्यम् । **बाहुलकात्कमेरपि** प्रत्ययादिलोपे धातोः कुशब्दादेशः । कुन्तिः । 'इतो मनुष्यजातेः' इति ङीष्, 'कुन्ती पाण्डुप्रियायां च शल्लक्यां गुग्गुलद्रुमे' इति मेदिनी ॥ **—अवन्तिरित्यादि** । अव रक्षणे, वद व्यक्तायां वाचि, आभ्यामपि झिच् ॥ **—वदन्तीति** । 'कृदिकारात्–' इति ङीष् ॥ **३३१ कन्युच्**–। क्षिप प्रेरणे, भू सत्तायाम् । 'क्षिपण्युस्तु पुमान् देहे सुरभौ वाच्यलिङ्गके' इति मेदिनी । 'भुवन्युः स्यात्पुमान्भानौ ज्वलने शशलाञ्छने' इति विश्वमेदिन्यौ ॥ **३३२ अनुङ्**–। णद अव्यक्ते शब्दे । अस्मादनुङ्प्रत्ययः स्यात् ॥ **—क्षिपणुरिति** । ङित्त्वाद्गुणाभावः ॥ **३३३ कॄवृ**–। कॄ विक्षेपे, वृञ् वरणे, दॄ विदारणे, ण्यन्तः । 'करुणस्तु रसे वृक्षे कृपायां करुणा मता' इति विश्वमेदिन्यौ । वरुणस्तरुभेदेऽप्सु प्रतीचीपतिसूर्ययोः' इति विश्वः । 'दारुणं भीषणं भीष्मम्' इत्यमरः । 'दारुणो रसभेदे ना त्रिषु तु स्याद्भयावहे' इति मेदिनी ॥ **३३४ त्रो रश्च**–। तॄ प्लवनतरणयोः, अस्मादुनन्स्यात् । 'तरुणं कुब्जपुष्पे ना रुचके यूनि तु त्रिषु' इति मेदिनी ॥ गौरादित्वात् ङीषी–'तरुणी तलुनीति च' इति द्विरूपेषु विश्वः ॥ **३३५ क्षुधि**–। क्षुध बुभुक्षायाम्, पिश अवयवे, अयं दीपनायामपि । मिथिः सौत्रो धातुः । 'पिशुनो दुर्जनः खलः' इत्यमरः । 'पिशुनं कुङ्कुमे स्मृतम् । कपिवक्त्रे च काके ना सूचकक्रूरयोस्त्रिषु । पृक्कायां पिशुना स्त्री स्यात्' इति मेदिनी । 'मिथुनं न द्वयो राशिभेदे स्त्रीपुंसयुग्मके' इति च ॥ **३३६ फलेः**–। फल निष्पत्तौ, अस्मादनन् गुगागमश्च धातोः । 'फल्गुनस्तु गुडाकेशे नदीजार्जुनभूरुहे । तपस्यसंज्ञमासे तत्पूर्णिमायां च फाल्गुनी' इति मेदिनी ॥ **—फाल्गुन इति** । 'फल्गुनः फाल्गुनोऽर्जुने' इति द्विरूपकोशः ॥ **३३७ अशेः**–। अश भोजने अस्मादुनन् धातोर्लशादेशश्च । लशुनं महाकन्दः । 'लशुना लशुनं वेश्म कश्मलं विश्वमश्ववत्' इति मध्यतालव्येषु विश्वः । 'लसश्च' इति दन्त्यमध्यपाठस्तु प्रामादिकः ॥ **३३८ अर्जेः**–। ऋज गतिस्थानार्जनोपार्जनेषु, अस्माण्ण्यन्तादुनन् स्यात् णेश्च लुक् । इह 'णेरनिटि' इति णिलोपेनैव सिद्धे 'णिलुक् च' इत्युक्तेः फलं चिन्त्यम् ॥ **३२९ 'अर्जुनः** ककुभे पार्थे कार्तवीर्यमयूरयोः । मातुरेकसुतेऽपि स्याद्धवले पुनरन्यवत् । नपुंसकं तृणे नेत्ररोगे वाप्यर्जुनी गवि । उषायां बाहुदानद्यां कुट्टन्यामपि च क्वचित्' इति विश्वमेदिन्यौ ॥ **३४० अर्तेश्च** । ऋ गतौ, अस्मादुनन्स्यात्स च चित् । 'अरुणोऽव्यक्तरागेऽर्के सन्ध्यारागेऽर्कसारथौ । निःशब्दे कपिले कुष्ठभेदे ना गुणिनि त्रिपु । अरुणातिविषाश्यामामञ्जिष्ठात्रिवृतासु च' इति मेदिनी ॥ **३४१ अजि**–। अज गतिक्षेपणयोः, यम उपरमे, शीङ् स्वप्ने, एभ्य उनन् स्यात्स च चित् । अजेर्वीभावः, वीयते गम्यतेऽत्रेति **वयुनम्** । 'विश्वानि देव वयुनानि विद्वान्' इति मन्त्रे वयुनानि प्रज्ञानानिति वेदभाष्यम् । वैदिकनिघण्टौ प्रज्ञापर्याये प्रशस्यपर्याये च वयुनशब्दः पठितः । **'यमुना** शमनस्वसा' इत्यमरः ॥ **३४२ वृ तॄ**–। वृ वरणे, तॄ प्लवनतरणयोः, वद व्यक्तायां वाचि, हन हिंसागत्योः, कमु कान्तौ, कष हिंसायाम् ॥**—वर्सः** ।

सः। वर्सः। तर्सम्। 'तर्सः प्लवसमुद्रयोः'। वत्सः। वत्सम्-वक्षः। हंसः। 'कंसोऽस्त्री पानभाजनम्'। कक्षं नक्षत्रम्॥ ३४३। प्लुषेरच्चोपधायाः। प्लक्षः॥ ३४४। मनेर्दीर्घश्च। मांसम्॥ ३४५। अशेर्देवने। अक्षः॥ ३४६। स्नुव्रश्चिकृत्यृषिभ्यः कित्। स्नुषा। वृक्षः। कृत्समुदकम्। ऋक्षं नक्षत्रम्॥ ३४७। ऋषेर्जातौ। 'ऋक्षोऽद्रिभेदे भल्लूके शोणके कृतवेधने। ऋक्षमुक्तं च नक्षत्रे'-इति विश्वः॥ ३४८। उन्दिगुधिकुषिभ्यश्च। उत्सः प्रस्रवणम्। गुत्सः स्तबकः। कुक्षो जठरम्॥ ३४९। गृधिपण्योर्दकौ च। गृत्सः कामदेवः। पक्षः॥ ३५०। अशेः सरः। अक्षरम्॥ ३५१। वसेश्च। वत्सरः॥ ३५२। सपूर्वाच्चित्। संवत्सरः॥ ३५३। कृधूमदिभ्यः कित्। बाहुलकान्न षत्वम्, 'कृसरः स्यात्तिलौदनम्'। धूसरः। मत्सरः। 'मत्सरा मक्षिका ज्ञेया भम्भराली च सा मता'॥ ३५४। पतेरश्च लः। पत्सलः पन्थाः॥ ३५५। तन्यृषिभ्यां क्सरन्। 'तसरः सूत्रवेष्टने'। ऋक्षरः-ऋत्विक्॥

**तर्स इति**। 'तितुत्र-' इति नेट्। षत्वे तु न भवति, बाहुलकेन षत्वे कर्तव्ये प्रत्ययसंज्ञाया अप्रवृत्तेः। कक्षशब्दे तु षत्वं भवत्येव। एतच्च भाष्यकैयटादिपर्यालोचनयोक्तम्। कथं तर्हि सर्वैरप्युणादिवृत्तिकारैरिह षत्वमुदाहृतमिति चेत्। **अत्राहुः—**अस्तु भाष्यप्रामाण्यात् वर्स तर्समिति दन्त्यपाठोऽपि साधुः। पक्षे तु षत्वमस्तु। बाहुलकलभ्यषत्वाभावस्य पाक्षिकत्वेऽपि बाधकाभावात्। वृषितृषिभ्यां घञि कृते, ण्यन्तादेरचि 'घञर्थे कविधानम्' इति ण्यन्तात्कप्रत्यये वा कृते वर्षतर्षशब्दयोर्दुर्वारत्वात्, 'अज्विधौ भयादीनामुपसंख्यानं नपुंसके क्तादिनिवृत्त्यर्थम्' इत्यत्र 'वर्षम्' इत्याकरे उदाहृतत्वाच्च। तस्मादिह द्विरूपता फलितेति। 'वर्षोऽस्त्री भारतादौ स्याज्जम्बूद्वीपाब्दवृष्टिषु। प्रावृट्काले स्त्रियां भूम्नि' इति मेदिनी। 'तर्षो लिप्सोदन्ययोः' इति च। 'पुत्रादौ तर्णके वर्षे वत्सः क्लीबं तु वक्षसि' इति त्रिकाण्डशेषः। 'सद्योजातस्तु तर्णकः'। 'हंसः स्यान्मानसौकसि। निर्लोभनृपविष्ण्वर्कपरमात्मसु मत्सरे। योगभेदे मन्त्रभेदे शारीरमरुदन्तरे। तुरङ्गमप्रभेदे च' इति मेदिनी। 'कंसोऽस्त्री तैजसद्रव्ये कांस्ये मानेऽसुरे तु ना' इति च। 'कंसो दैत्यान्तरे स्मृतः। कांस्ये च कांस्यपात्रे च मानभेदे च कीर्तितः' इति विश्वः। 'कक्षा स्यादन्तरीयस्य पश्चादञ्चलपल्लवे। स्पर्धायां ना तु दोर्मूलकच्छवीरुत्तृणेषु च' इति मेदिनी॥ **३४३ प्लुषेः-।** प्लुष दाहे, अस्मात्सः स्यादुपधाया अकारश्च। 'प्लक्षो जटी गर्दभाण्डद्वीपभित्कुञ्जराशने' इति मेदिनी। 'प्लक्षो द्वीपविशेषे स्यात्पर्कटीगर्दभाण्डयोः। पिप्पले द्वारपार्श्वे च गृहस्य परिकीर्तितः' इति विश्वः॥ **३४४ मनेः।** मन ज्ञाने। 'मांसं स्यादामिषे क्लीबं कक्कोलीजटयोः स्त्रियाम्' इति मेदिनी॥ **३४५ अशेः।** अशू व्याप्तौ, अस्माद्देवने वाच्ये सः स्यात्। 'व्रश्चभ्रस्ज-' इत्यादिना षत्वादिकार्यम्। 'अथाक्षमिन्द्रिये। ना द्यूताङ्गे कर्षचक्रे व्यवहारे कलिद्रुमे' इत्यमरः। 'अक्षो ज्ञानात्मशकटव्यवहारेषु पाशके। रुद्राक्षेन्द्राक्षयोः सर्पे बिभीतकतरावपि। चक्रे कर्षे पुमान् क्लीबं तुत्थसौवर्चलेन्द्रिये' इति मेदिनी॥ **३४६ स्नुव्रश्चि-।** ष्णु प्रस्रवणे, ओव्रश्चू छेदने, कृती छेदने, ऋषी गतौ, एभ्यः सः कित्स्यात्। **स्नुषा** पुत्रवधूः॥—**वृक्ष इति।** सस्य कित्वाद् 'ग्रहिज्या-' इति संप्रसारणम्। 'ऋक्षः पर्वतभेदे स्याद्भल्लुके शोणके पुमान्। कृतवेधेऽप्यन्यलिङ्गं नक्षत्रे पुंनपुंसकम्' इति मेदिनी॥ **३४७ ऋषेर्जातौ।** पूर्वसूत्रेणैव सिद्धे ऋषेर्जातावेवेति नियमार्थं सूत्रम्। तेनान्येभ्यस्त्रिभ्यः केवलयौगिकत्वेऽपि सप्रत्ययो भवति॥ **३४८ उन्दिगुधि-।** उन्दी क्लेदने, गुध रोषे, कुष निष्कर्षे, एभ्यः सः कित्स्यात्। 'अनिदिताम्-' इति नलोपः। 'उत्सः प्रस्रवणं वारि' इत्यमरः। 'गुत्सः स्यात्स्तबके स्तम्बे हारभिद्ग्रन्थिपर्णयोः' इति मेदिनी। **गुच्छश्च**-'गुत्सो गुच्छो गुलुच्छवत्' इति द्विरूपकोशात्। 'स्याद् गुच्छः स्तबके स्तम्बे हारभेदकलापयोः' इति च वर्गद्वितीयान्ते मेदिनीकोशाच्च॥ **३४९ गृधि-।** गृधु अभिकाङ्क्षायाम्, पण व्यवहारे स्तुतौ च॥ ननु गृधेश्चर्त्वेन गृत्स इति सिद्धे दकारविधानं व्यर्थमिति चेत्। मैवम्। चर्त्वस्यासिद्धत्वेन 'एकाचो बशः-' इति भष्भावप्रसङ्गात्। न चैवमपि प्रक्रियालाघवाय तकार एव विधीयतामिति शङ्क्यम्। 'चयो द्वितीयाः' इति पक्षे तकारस्य थकारापत्तेः। 'पक्षो मासार्धके पार्श्वे ग्रहे साध्यविरोधयोः। केशादेः परतो वृन्दे बले सखिसहाययोः। चुल्लीरन्ध्रे पतत्रे च राजकुञ्जरपार्श्वयोः' इति विश्वमेदिन्यौ॥ **३५० अशेः।** अशू व्याप्तौ,-'व्रश्च-' इत्यादिना षत्वादिकार्यम्। 'अक्षरं स्यादपवर्गे परमब्रह्मवर्णयोः' इति हेमचन्द्रः। 'अशेः सरन्' इत्युज्ज्वलदत्तादिपाठस्तु प्रामादिकः, नित्स्वरापत्तेः। इष्यते तु प्रत्ययस्वरेणाक्षरशब्दस्य मध्योदात्तत्वम्। 'ऋचो अक्षरे परमे व्योमन्' इत्यादिऋङ्मन्त्रेषु, 'त्रीणि च शतानि षष्टिश्चाक्षराणि' इति यजुषि च तथैव पाठात्। अत एव 'अश्नोतेर्वा सरोऽक्षरम्' इति द्वितीयाह्निकान्ते भाष्यकृतोक्तम्॥ **३५१ वसेश्च-।** वस निवासे, अस्मादपि सरः स्यात्। 'सः स्यार्धधातुके' इति तत्त्वम्॥ **३५२ सपूर्वाच्चित्।** पूर्वसहिताद्वसतेः परः सः स्यात्स च चित्। चित्त्वादन्तोदात्तः। 'इदुवत्सराय परिवत्सराय'। संपूर्वादिति पाठान्तरम्। तच्च लक्ष्यविरोधादुपेक्ष्यम्॥ **३५३ कृधू-।** डुकृञ् करणे, धूञ् कम्पने, मदी हर्षे, एभ्यः सरः कित्स्यात्। 'कृसरः स्यात्-' इत्यादि हारावलीस्थम्। 'धूसरी किन्नरीभेदे ना खरे त्रिषु पाण्डुरे' इति मेदिनी। 'मत्सरा मक्षिकायां स्यान्मात्सर्यक्रोधयोः पुमान्। असह्यपरसंपत्तौ कृपणे चाभिधेयवत्' इति च। 'मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु' इत्यमरः। 'अथ मत्सरः। असह्यपरसंपत्तौ मात्सर्ये कृपणे क्रुधि' इति विश्वः। वेदे तु 'मदी हर्षे' इति योगार्थं पुरस्कृत्य प्रयुज्यते—'इन्दुमिन्द्राय मत्सरम्'। 'तं सिन्धवो मत्सरमिन्द्रयानम्' इत्यादि। समत्सरं हर्षहेतुमिति तद्भाष्यम्॥ **३५४ पतेः-।** पत्लृ गतौ, अस्मात्सरः स्याद्रेफस्य लश्च॥ **३५५ तन्यृषि।** तनु विस्तारे, ऋषी गतौ। अमरोक्तिमाह—**तसर इति।** कित्वात् 'अनुदात्तोपदेश-' इत्यादिनानुनासिकलोपः॥—**ऋक्षरः—ऋत्वि-**

३५६ । **पीयुकणिभ्यां कालन् ह्रस्वः संप्रसारणं च** । पीयुः सौत्रः । पियालो वृक्षभेदः । कुणालो देशभेदः ॥ ३५७ । **केठिकुषिभ्यां काकुः** । कठाकुः पक्षी । कुषाकुरग्निः सूर्यश्च ॥ ३५८ । **सर्तेर्दुक् च** । 'सृदाकुर्वातसरितोः' ॥ ३५९ । **वृतेर्वृद्धिश्च** । वार्ताकुः । बाहुलकादुकारस्य अत्वम्, वार्ताकम् ॥ ३६० । **पर्देर्नित्संप्रसारणमल्लोपश्च** । 'पृदाकुर्वृश्चिके व्याघ्रे चित्रके च सरीसृपे' ॥ ३६१ । **सृयुवचिभ्योऽन्युजागूजक्नुचः** । अन्युच्, आगूच्, अक्नुच्-एते क्रमात्स्युः । 'सरण्युर्मेघवातयोः' । यवागूः । 'वचक्नुर्विप्रवाग्मिनोः' ॥ ३६२ । **आनकः शीङ्भियः** । शयानकोऽजगरः । भयानकः ॥ ३६३ । **आणको लुधूशिङ्घिधाञ्भ्यः** । लवाणकं दात्रम् । धवाणको वातः । शिङ्घाणकः श्लेष्मा । पृषोदरादित्वात्पक्षे कलोपः, 'शिङ्घाणं नासिकामले' । 'धाणको दीनारभागः' ॥ ३६४ । **उल्मुकदर्विहोमिनः** । 'उष दाहे' षस्य लः, मुकप्रत्ययश्च, 'उल्मुकं ज्वलदङ्गारम्' । दृणातेर्विः, दर्विः । जुहोतेर्मिनिः, होमी ॥ ३६५ । **ह्रियः कुक् रश्च लो वा** । ह्रीकुः-ह्लीकुः-लज्जावान् ॥-३६६ । **हसिमृग्रिण्वाऽमिदमिलूपूधुर्विभ्यस्तन्** । दशभ्यस्तन् स्यात् । 'तितुत्र-' ३१६३ इति नेट्, हस्तः । मर्तः । गर्तः । एतः कुर्बरः । वातः । अन्तः । दन्तः । 'लोतः स्यादश्रुचिह्नयोः' । 'पोतो बालवहित्रयोः' । धूर्तः । बाहुलकात्-तुसेर्दीर्घश्च, तूस्तं पापम्, धूलिर्जटा च ॥ ३६७ । **नञ्याप इट् च** । नापितः ॥ ३६८ । **तनिमृङ्भ्यां किच्च** । ततम् । मृतम् ॥ ३६९ । **अञ्जिघृसिभ्यः**

**गिति** । 'ऋक्षरं वारिधारायामृक्षरस्त्वृत्विजि स्मृतः' इति मेदिनी । 'अनृक्षरा ऋजवः सन्तु पन्थाः' इति मन्त्रस्य वेदभाष्ये तु ऋक्षरः=कण्टक इति व्याख्यातम् ॥ ३५६ **पीयुक्कणिभ्याम्-**। 'अण रण' इति दण्डके क्वणिः पठ्यते । स च शब्दार्थकः । आभ्यां कालन् स्यात्, यथाक्रमं ह्रस्वः संप्रसारणं च । 'राजादनं पियालः स्यात्' इत्यमरः । 'प्रियालः स्यात्पियालवत्' इति द्विरूपकोशः । **बाहुलकाद्भ**ञ्जेरपि कालन् । कित्त्वान्नलोपः । न्यङ्क्वादित्वात्कुत्वम् । **भगालं** नरमस्तकम् । मत्वर्थे इनिः । 'चण्डिकान्तो भगाली च लेलिहानो वृषध्वज' इति राजशेखरः ॥ ३५७ **कटिकुषि-**। कठ कृच्छ्रजीवने, कुष निष्कर्षे । 'कुषाकुः कपिवह्न्यर्के ना परोत्तापिनि त्रिषु' इति मेदिनी । उज्ज्वलदत्तस्तु 'कठिकषिभ्याम्-' इति पठित्वा कष शिषेति दण्डकधातुमुपन्यस्य कषाकुरित्युदाजहार । तत्कोशविरुद्धम्, मेदिनीकोशे ह्युकारप्रक्रमे पाठात् ॥ ३५८ **सर्तेः-**। सृ गतौ, अस्मात्काकुः स्याद्धातोर्दुगागमश्च । '**सृदाकु**र्नाऽनिले चक्रे ज्वलने प्रतिसूर्यके' इति मेदिनी ॥ ३५९ **वृतेः-**। वृतु वर्तने, '**वार्ताकु**रपि वार्ताकी वृन्ताकोऽपि च दृश्यते' इति द्विरूपे विश्वः । 'वार्ताकी हिङ्गुली सिंही भण्टाकी दुष्प्रधर्षणी' इत्यमरः । 'वार्ताकं पित्तलं किंचिदङ्गारपरिपाचितम्' इति वैद्यशास्त्रम् ॥ ३६० **पर्देः-**। पर्द कुत्सिते शब्दे । अस्मात्काकुः स्यात्स च नित् । धातो रेफस्य संप्रसारणमकारलोपश्च । विश्वकोशस्थमाह—**पृदाकुरिति** । 'पृदाकुर्वृश्चिके व्याघ्रे सर्पचित्रकयोः पुमान्' इति मेदिनी ॥ ३६१ **सृयु-**। सृ गतौ, यु मिश्रणे, वच परिभाषणे । '**सरण्यु**स्तु पुमान् वारिवाहे स्यान्मातरिश्वनि' इति मेदिनी । 'सरण्युरस्य सूनुरश्वः' इति मन्त्रस्य भाष्ये सरण्युः=शीघ्रगामीति व्याख्यातम् । '**यवागू**रुष्णिका श्राणा विलेपी तरला च सा' इत्यमरः । '**वचक्नु**स्तु पुमान् विप्रे वावदूकेऽभिधेयवत्' इति मेदिनी ॥ ३६२ **आनकः-**। शीङ् स्वप्ने, ञिभी भये, बिभेत्यस्मादिति **भयानको** भयंकरः । 'भयानकः स्मृतो व्याघ्रे रसे राहौ भयंकरे' इति मेदिनी ॥ ३६३ **आणको-**। लूञ् छेदने, धूञ् कम्पने, शिघि आघ्राणे, डुधाञ् धारणपोषणयोः । हारावलीस्थमाह—**शिङ्घाणमिति** । 'शिङ्घाणं काचपात्रे स्याल्लोहनासिकयोर्मले' इति विश्वः । 'शिङ्घाणः फेनडिण्डीरो नक्ररेतश्च पिच्छिलः' इति विक्रमादित्यकोशः ॥ ३६४ **उल्मुक-**। एते निपात्यन्ते । निपातनप्रकारमेवाह—**उष दाहे इत्यादि** । हारावलीस्थमाह—**उल्मुकमिति** । 'दर्विः कम्बिः खजाका च' इत्यमरः ॥ ३६५ **ह्रियः-**। 'ह्री लज्जायाम्' अस्मात्कुक्प्रत्ययः स्यात् । ककारो गुणनिषेधार्थः ॥ ३६६ **हसि-**। हसने, मृङ् प्राणत्यागे, गॄ निगरणे, इण् गतौ, वा गतिगन्धनयोः, अम गत्यादिषु, दमु उपशमे, लूञ् छेदने, पूञ् हसे पवने, धुर्वी हिंसायाम् । '**हस्तः** करे करिकरे सप्रकोष्ठकरेऽपि च । ऋक्षे केशात्परो व्राते' इति मेदिनी ॥ अत्रायमर्थः—केशवाचकात्परो यो हस्तशब्दः स समूहवाची । तथा च केशहस्तशब्दः केशसमूहशब्दपर्याय इति । **मर्तो** भूलोकस्तत्र भवो मर्त्यः, दिगादेराकृतिगणत्वाद्यत् । **गर्त**स्त्रिगर्तभेदे स्यादवटे च कुकुन्दरे' इति मेदिनी ॥—**एत इति** । 'एतः कर्बुर आगते । अन्तःस्वरूपे नाशे वा न स्त्री शेषेऽन्तिके त्रिषु' इति च । '**दन्तो**ऽद्रिकटके कुञ्जे दशने चौषधौ स्त्रियाम्' इति च मेदिनी । 'लोतमश्रुणि चोरिते' इति विश्वः । 'क्तक्तवतू निष्ठा' इति सूत्रे लोतो मेष इति कैयटः । '**पोतः** शिशौ वहित्रे च' इति विश्वमेदिन्यौ ॥—**धूर्त इति** । 'लोपो व्योर्वलि' इति वलोपः, 'राल्लोपः' इत्यनेन लोपस्तु क्ङितीत्यनुवृत्तिपक्षे बोध्यः । 'हलि च' इति दीर्घः । '**धूर्तं** तु खण्डलवणे धत्तूरे ना शठे त्रिषु' इति मेदिनी ॥—**तूस्तमिति-**। तुस खण्डन इत्यस्मात्तन् ॥ ३६७ **नञ्या-**। आपॢ व्याप्तौ, अस्मान्नञ्युपपदे तन्स्यादिडागमश्च । बाहुलकान्नञो नलोपाभावः ॥ ३६८ **तनि** । तनु विस्तारे, मृङ् प्राणत्यागे, आभ्यां तन्प्रत्ययः स्यात्स च कित् । कित्त्वादनुनासिकलोपः । '**ततं** वीणादिकं वाद्यम्' इत्यमरः । 'अथ ततं व्याप्ते विस्तृते च त्रिलिङ्गकम् । क्लीबं वीणादिवाद्ये स्यात्पुंलिङ्गस्तु समीरणे' इति मेदिनी । '**मृतं** तु याचिते मृत्यौ क्लीबं मृत्युमति त्रिषु' इति च ॥ ३६९ **अञ्जि-**। अञ्जू व्यक्तिम्रक्षणादौ, घृ क्षरणदीप्त्योः,

१ बालमनोरमायां 'कटिकुषिभ्यां काकुः' इति सूत्रम् । कटे वर्षावरणयोरिति तस्य व्याख्यानञ्च ।

क्तः । अक्तम् । घृतम् । सितम् ॥ ३७० । **दुतनिभ्यां दीर्घश्च** । दूतः । तातः ॥ ३७१ । **जेर्मुट् चोदात्तः** । जीमूतः ॥ ३७२ । **लोष्टपलितौ** । लुनातेः क्तः, तस्य सुट् धातोर्गुणः, लोष्टम् । पलितम् ॥ ३७३ । **हृश्याभ्यामितन्** । हरितश्येतौ वर्णभेदौ ॥ ३७४ । **रुहे रश्च लो वा** । 'रोहितो मृगमत्स्ययोः' । लोहितं रक्तम् ॥ ३७५ । **पिशेः किच्च** । पिशितं मांसम् ॥ ३७६ । **श्रुदक्षिस्पृहिगृहिभ्यः आय्यः** । श्रवाय्यो यज्ञपशुः । दक्षाय्यो गरुडो गृध्रश्च । स्पृहयाय्यः । गृहयाय्यो गृहस्वामी ॥ ३७७ । **दिधिषाय्यः** । दधातेर्द्वित्वमित्वं षुक् च, 'मित्र इव यो दिधिषाय्योऽभूत्' ॥ ३७८ । **वृञ एण्यः** । वरेण्यः ॥ ३७९ । **स्तुवः क्सेय्यश्छन्दसि** । 'स्तुषेय्यं पुरुवर्चसम्' ॥ ३८० । **राजेरन्यः** । राजन्यो वह्निः ॥ ३८१ । **शृरम्योश्च** । शरण्यम् । रमण्यम् ॥ ३८२ । **अर्तेर्निच्च** । अरण्यम् ॥ ३८३ । **पर्जन्यः** । 'पृषु सेचने' षस्य जः, 'पर्जन्यः शक्रमेघयोः' ॥ ३८४ । **वदेरान्यः** । 'वदान्यस्त्यागिवाग्मिनोः' ॥

---

षिञ् बन्धने, एभ्यः क्तः स्यात् । निष्ठासंज्ञा तु एतस्य न भवति, [illegible] । अन्यथा 'निष्ठा च द्व्यजनात्' इत्याद्युदात्तत्वं स्यादिति 'क्तक्तवतू निष्ठा' इति सूत्रे कैयटः । **अक्तं** परिच्छिन्नम् । 'अक्तः परिमाणवाचकः' इति भाष्यस्य कैयटेन तथा व्याख्यातत्वात् । 'अक्तं व्याप्ते च संकुले' इति विश्वः, इत्युज्ज्वलदत्तेनोक्तम्, तच्च लिपिभ्रमप्रयुक्तम् । विश्वकोशे हि 'व्यस्तं व्याप्ते च संकुले' इति स्थितत्वात् । तथा च मेदिन्यां वकारादिप्रक्रमे—'व्यस्तं तु व्याकुले व्याप्ते' इत्युक्तम् । '**घृत**माज्ये जले क्लीबं प्रदीप्ते त्वभिधेयवत्' । '**सितम**वसिते च बद्धे धवले त्रिषु शर्करायां स्त्री' इति मेदिनी । बाहुलकात् 'ऋ गतौ' इत्यस्मात् क्तः । '**ऋत**मुञ्छशिले जले । सत्ये दीप्ते पूजिते स्यात्' इति मेदिनी ॥ **३७० दुतनि-**। दु गतौ, तनु विस्तारे, आभ्यां क्तः स्याद्धातोर्दीर्घश्च । दूतः प्रेष्यः । गौरादित्वान्ङीष्, दूती । कथं तर्हि 'तेन दूति विदितं निषेदुषा' इति रघुरिति चेत् । **अत्राहुः**—दूङ् परितापे इत्यस्मात् क्तिनि दूतिरिति । 'दूत्यां दूतिरपि स्मृता' इति द्विरूपकोशः । 'तातोऽनुकम्प्ये जनके' इति विश्वमेदिन्यौ । बाहुलकात् 'शीङ् स्वप्ने' इत्यस्मादपि क्तः । **शीता** लाङ्गलपद्धतिः, रामपत्नी च । 'शीता नभःसरिति लाङ्गलपद्धतौ च शीता दशाननरिपोः सहधर्मिणी च । शीतं स्मृतं हिमगुणे च तदन्विते च शीतोऽलसे च बहुवारतरौ च दृष्टः' इति तालव्यादौ धरणिः । सीता दन्त्यादिरप्यस्ति । 'सीता लाङ्गलपद्धतिः । वैदेहीस्वर्गगङ्गासु' इति दन्त्यादौ मेदिनीकोशात् । 'सीता लाङ्गलरेखा स्याद्व्योमगङ्गा च जानकी' इति दन्त्यादौ रभसकोशाच्च ॥ **३७१ जेः-**। जि जये, अस्मात् क्तप्रत्ययस्तस्योदात्तमुडागमः स्यात् । दीर्घ इत्यनुवृत्त्या धातोर्दीर्घश्च स्यात् । इदं सूत्रमनार्षमिति केचित् । अत एव वृत्त्यादिग्रन्थे पृषोदरादिषु जीमूतशब्द उदाहृतः । 'जीमूतोऽद्रौ भृतिकरे देवताडे पयोधरे' इति मेदिनी । 'वेणी खरागरी देवताडो जीमूत इत्यपि' इत्यमरः । 'जीमूतः स्याद्भृतिकरे शक्रेऽद्रौ घोषके घने' इति विश्वः ॥ **३७२ लोष्ट-**। लूञ् छेदने, पल गतौ, एतौ क्तान्तौ निपात्येते । 'लोष्टानि लेष्टवः पुंसि' इत्यमरः । अत्र पुंसीत्युभयान्वयि । तेन पुंनपुंसकलिङ्गो लोष्टशब्दः । तथा च 'स्थानेऽन्तरतमे'-भाष्यम्—'लोष्टः क्षिप्तो बाहुवेगं गत्वा' इत्यादि । अत एव 'लेष्टः शण्डेऽपि लोष्टः स्यात्' इति पुंलिङ्गकाण्डे गोपालितः । 'पलितं शैलजे तापे केशपाके च कर्दमे' इति मेदिनी ॥ **३७३ हृश्या**। हृञ् हरणे, श्यैङ् गतौ । 'हरिता स्त्री च दूर्वायां हरिद्वर्णयुतेऽन्यवत्' इति मेदिनी । 'शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः' इत्यमरः ॥ **३७४ रुहेः-**। रुह बीजजन्मनि प्रादुर्भावे च । अस्मादितन् । 'रोहितं कुङ्कुमे रक्ते ऋजुशक्रशरासने । पुंसि स्यान्मीनमृगयोर्भेदे रोहितकद्रुमे' । 'लोहितं रक्तगोशीर्षकुङ्कुमाजिकुचन्दने । पुमान् नदान्तरे भौमे वर्णे च त्रिषु तद्वति' इति मेदिनी ॥ **३७५ पिशेः-**। पिश अवयवे । अयं दीपनायामपि । अस्मादितन्स्यात्स च कित् । पिशितं मांसम् । 'मांस्यां स्त्री' इति मेदिनी । मांस्यां=जटामांस्याम् । तथा च 'जटा च पिशिता पेशी' इति धन्वन्तरिः ॥ **३७६ श्रुदक्षि-**। श्रु श्रवणे, दक्ष वृद्धौ, स्पृह ईप्सायाम्—गृह ग्रहणे—चुरादावदन्तौ । 'उद्यतस्रुचे भवसि **श्रवाय्यः**' इति मन्त्रे श्रवाय्यो मन्त्रैः श्रवणीय इति वेदभाष्यम् । '**दक्षाय्यो** यो दम आस नित्यः' इत्यादिष्वपि यौगिकार्थ एव भाष्ये पुरस्कृतः ॥—**स्पृहयाय्यः** ॥ 'अयामन्ता-' इति णेरयादेशः । एवं—**गृहयाय्य इति** । **३७७ दिधिषाय्य इति** । डुधाञ् धारणपोषणयोः । उज्ज्वलदत्तस्तु 'दधिषाय्यः' इति सूत्रं पठित्वा दधिपूर्वात्स्यतेराय्यः षत्वं च । दधिषाय्यो घृतम्—इति व्याख्यत् । दशपादीवृत्तिकारस्तु 'धिष शब्दे' अस्य द्वित्वं गुणाभावः, अत्वं चाभ्यासस्य निपात्यत इत्याह । प्रसादकारादयोऽप्येवमेवाहुः । तदेतत्सर्वं प्रामादिकम् । 'मित्र इव यो दिधिषाय्योऽभूत्' इति वैदिकप्रयोगा**द्दिधिषाय्य** इत्येव सूत्रं युक्तमिति प्रामाणिकाः । **३७८ वृञः-**। वृञ् वरणे । वरेण्यः श्रेष्ठः ॥ **३७९ स्तुवः-**। ष्टुञ् स्तुतौ । स्तुषेय्यं=स्तोतव्यं पुरुवर्पसं=बहुरूपमिति वेदभाष्यम् । 'स्तुवः केय्यः' इति पठित्वा कित्वाद्गुणाभावे उवङि सति 'स्तुवेय्यः पुरन्दरः' इत्युदाहरन् उज्ज्वलदत्तस्तु उदाहृतश्रुतितद्भाष्यादिविरोधादुपेक्ष्यः । तस्मादिह क्सेय्यप्रत्ययं पठन् दशपादीवृत्तिकृदेव ज्यायानित्याहुः ॥ **३८० राजेः-**। राजृ दीप्तौ । क्षत्रियजातौ तु 'राजश्वशुराद्यत्-' इति यत्प्रत्यये राजन्य इत्यन्तस्वरितः ॥ **३८१ शृरम्योः-**। शॄ हिंसायाम्, रम क्रीडायाम् । आभ्यामन्यः स्यात् ॥ **३८२ अर्तेः-**। ऋ गतौ । अस्मादन्यः, स च नित् । 'अटव्यरण्यं विपिनम्' इत्यमरः ॥ **३८३ पर्जन्यः** । पृषु सेचने, षस्य जः । 'पर्जन्यो मेघशब्देऽपि ध्वनदम्बुदशक्रयोः' इति मेदिनी ॥ **३८४ वदेः-**। वद व्यक्तायां वाचि ।

३८५ । **अमिनक्षियजिवधिपतिभ्योऽत्रन्** । अमत्रं भाजनम् । नक्षत्रम् । यजत्रः । वधत्रमायुधम् । 'पतत्रं च तनूरुहम्' ॥ ३८६ । **गडेरादेश्च कः** । कडत्रम् । डलयोरेकत्वस्मरणात्—कलत्रम् ॥ ३८७ । **वृञश्चित्** । वरत्रा चर्ममयी रज्जुः ॥ ३८८ । **सुविदेः कत्रः** । 'सुविदत्रं कुटुम्बकम्' ॥ ३८९ । **कृतेर्नुम् च** । कृन्तत्रं लाङ्गलम् ॥ ३९० । **भृमृदृशियजिपर्विपच्यमितमिनमिहर्यैभ्योऽतच्** । दशभ्योऽतच् स्यात् । भरतः । मरतो मृत्युः । 'दर्शतः सोमसूर्ययोः' । यजतः-ऋत्विक् । पर्वतः । पचतोऽग्निः । अमतो रोगः । तमतस्तृष्णापरः । नमतः प्रह्वः । हर्यतोऽश्वः ॥ ३९१ । **पृषिरञ्जिभ्यां कित्** । पृषतो मृगो बिन्दुश्च । रजतम् ॥ ३९२ । **खलतिः** । स्खलतेः सलोपः, अतच्प्रत्ययान्तस्य इत्वं च, खलतिर्निष्केशशिराः ॥ ३९३ । **शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः** । सप्तभ्योऽथः स्यात् । शयथोऽजगरः । शपथः । रवथः कोकिलः । गमथः पथिकः पन्थाश्च । वञ्चथो धूर्तः । 'वन्दि' इति पाठे वन्द्यते वन्दते वा-वन्दथः स्तोता स्तुत्यश्च । जीवथ आयुष्मान् । प्राणथो बलवान् । बाहुलकात्—शमिदमिभ्याम् । 'शमथस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः' ॥ ३९४ । **भृञश्चित्** । भरथो लोकपालः ॥ ३९५ । **रुदिविदिभ्यां ङित्** । रोदितीति रुदथः शिशुः । वेत्तीति विदथः ॥ ३९६ । **उपसर्गे वसेः** । आवसथो गृहम् । संवसथो ग्रामः ॥ ३९७ । **अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच्** । त्रयोदशभ्योऽसच् स्यात् । अततीति अतसो वायुरात्मा च । अवतीति अवसो राजा भानुश्च । चमत्यस्मिन् चमसः सोमपानपात्रम् । ताम्यत्यस्मिन् तमसोऽन्धकारः । नमसः-अनुकूलः । 'रभसो वेगहर्षयोः' । लभसो धनं याचकश्च । नभते नभ्यति वा नभस आकाशः । तपसः पक्षी चन्द्रश्च । पतसः पक्षी । 'पनसः कण्टकिफलः' ।

---

अजयकोशस्थमाह—**वदान्य इति** ॥ **३८५ अमिनक्षि-**। अम गत्यादिषु, नक्ष गतौ, यज देवपूजादौ, वध हिंसायाम्, पत्ऌ गतौ ॥—**नक्षत्रमिति** । 'नभ्राण्नपात्–' इति सूत्रे नञः प्रकृतिभावे-नक्षत्रमिति साधितं, तत्तु व्युत्पत्त्यन्तरमिति बोध्यम् । **यजत्र**मग्निहोत्रमिति प्राञ्चः । वस्तुतस्तु यजत्रो यष्टव्यदेवता । 'संते वायुर्वातेन गच्छतां संयजत्रैरङ्गानि' इति मन्त्रे तथैव व्याख्यातत्वात् । अमरकोशस्थमाह—**पतत्रं चेति** ॥ **३८६ गडेः-**। गड सेचने, अस्मादत्रन् स्याद्गकारस्य ककारादेशश्च । '**कलत्रं** श्रोणिभार्ययोः' इत्यमरः ॥ **३८७ वृञः-**। वृञ् वरणे अस्मादत्रन् चित्स्यात् । चित्त्वादन्तोदात्तः । 'नध्री वध्री **वरत्रा** स्यात्' इत्यमरः । 'वरत्रायां दार्वानह्यमानः' इत्यादौ चित्स्वरः स्पष्टः ॥ **३८८ सुविदेः कत्रः** । विद ज्ञाने । इह कत्रन्निति नितं केचित्पठन्ति । तत्प्रामादिकम्, 'बृहस्पतेः सुविदत्राणि राध्या' इत्यादौ नित्स्वरादर्शनात्, कृदुत्तरपदप्रकृतिस्वरेण प्रत्ययस्वरस्यैव दर्शनाच्चेत्याहुः ॥ **३८९ कृतेः-**। कृती छेदने, अस्मात्कत्रः स्याद्धातोर्नुमागमश्च । 'धन्व च यत्कृन्तत्रं च' इति मन्त्रे कृन्तत्रं=कर्तनीयमरण्यमिति वेदभाष्यम् ॥ **३९० भृमृ-**। भृञ् भरणे, मृङ् प्राणत्यागे, दृशिर् प्रेक्षणे, यज देवपूजादौ, पर्व पूरणे, डुपचष् पाके, अम गतौ, तमु काङ्क्षायाम्, णम प्रह्वत्वे शब्दे च, हर्य गतिकान्त्योः । दशपाद्यां तु—भृदृशीङिति पठित्वा 'दृङ् आदरे' द्रियते-दरतः, शेते-शयतः, इत्युदाहृतम् । तन्न । 'रुशन्तमग्निं दर्शतं बृहन्तम्', 'तरणिर्विश्वदर्शतः' 'दैव्यो दर्शतो रथः' इत्यादिमन्त्रैस्तद्भाष्येण च विरोधात् । 'भरतो नाट्यशास्त्रे मुनौ नटे । रामानुजे च दौष्यन्तौ' इति मेदिनी ॥—**यजतः ऋग्विगिति** । उज्ज्वलदत्ताद्यनुरोधेनैवमुक्तम् । वेदभाष्ये तु 'हिरण्यशृङ्गं यजतो बृहन्तम्' इत्यादिषु यजतशब्दो यष्टव्यपरतया व्याख्यातः । '**पर्वतः** पादपे पुंसि शाकमत्स्यप्रभेदयोः । देवमुन्यन्तरे शैले' इति मेदिनी ॥—**हर्यतोऽश्व इति** । 'परि त्वं हर्यतं हरिम्' 'आहर्यताय धृष्णवे' इत्यादिमन्त्रेषु हर्यतः=सर्वैः स्पृहणीय इति वेदभाष्यम् ॥ **३९१ पृषि-**। पृषु सेचने, रञ्ज रागे, आभ्यामतच् कित्स्यात् । 'पृषन् मृगे पुमान् बिन्दौ न द्वयोः पृषतोऽपि ना । अनयोश्च त्रिषु श्वेतबिन्दुयुक्तेऽप्युभाविमौ' इति मेदिनी । 'रजतं त्रिषु शुक्ले स्यात् क्लीबं हारे च दुर्वर्णे' इति च ॥ **३९२ खलतिः** । स्खल संचलने ॥ **३९३ शीङ्शपि-**। शीङ् स्वप्ने, शप आक्रोशे, रु शब्दे, गम्ऌ गतौ, वञ्चु गतौ भ्वादिः, वञ्चु प्रलम्भने चुरादिः, जीव प्राणधारणे, अन प्राणने प्रपूर्वः । उज्ज्वलदत्तेनात्र वञ्चिजीवीति पठ्यते । अन्यैस्तु वञ्चिस्थाने वन्दिः पठ्यते । वञ्चथवन्दथयोरन्यतरं वेदादावुपलभ्यते, बहुश्रुतैः पाठो निर्णेयः ॥—**वन्दथ इति** । कर्मणि कर्तरि वा प्रत्ययः ॥—**प्राणथ इति** । 'अनितेः' इति णत्वम् ॥—**शमिदमिभ्यामिति** । शम उपशमे, दमु उपशमे । 'शमथः शान्तिमन्त्रिणोः' इति मेदिनी । 'दमथस्तु पुमान् दण्डे दमे च परिकीर्तितः' इति च ॥ **३९४ भृञः-**। डुभृञ् धारणपोषणयोः । अस्मादथः स्यात्स च चित् ॥ **३९५ रुदि-**। रुदिर् अश्रुविमोचने, विद ज्ञाने, आभ्यामथः स्यात्स च ङित् । '**विदथो** योगिकृत्तिनोः' इति मेदिनी । अत्रोज्ज्वलदत्तः-'रुविदिभ्यां कित्' इति पठित्वा रौतीति रुवथश्चेत्युदाजहार । दशपादीवृत्तिकारस्तु—'रुदिविदिभ्यां कित्' इति पपाठ । इह तु भाष्यानुरोधेन ङिदिति पठितम् । **तथाहि**—'गाङ् कुटादि–' सूत्रे के पुनश्चङादयः ? चङ्अङ्नजिङ्अथङ्नङ् इति भाष्यम् । किदिति पठतां तु 'अथङ्' इति भाष्यं न सङ्गच्छेतेति दिक् ॥ **३९६ उप-**। वस निवासे, अस्मादुपसर्गे उपपदे अथः स्यात् । उज्ज्वलदत्तेन तु सोपसर्गाद्वसेरिति पठितम् । अन्यैस्तु आङि वसेरिति पठितम् ॥ **३९७ अत्यवि-**। अत सातत्यगमने, अव रक्षणादौ, चमु अदने, तमु काङ्क्षायाम्, णमु प्रह्वत्वे शब्दे च, रभ राभस्ये, डुलभष् प्राप्तौ, णभ तुभ हिंसायाम्, भ्वादौ क्र्यादौ चायम् । तप सन्तापे, पत्ऌ

पणसः पण्यद्रव्यम् । महसं ज्ञानम् ॥ ३९८ । **वेञस्तुट् च** । बाहुलकादात्वाभावः । वेतसः ॥ ३९९ । **वहियुभ्यां णित्** । वाहसोऽजगरः । यावसस्तृणसङ्घातः । ४०० । **वयश्च** । 'वय गतौ' वायसः काकः ॥ ४०१ । **दिवः कित्** । दिवसम्, दिवसः ॥ ४०२ । **कृशृशलिकलिगर्दिभ्योऽभच्** । करभः । शरभः । शलभः । कलभः । गर्दभः ॥ ४०३ । **ऋषिवृषिभ्यां कित्** । ऋषभः । वृषभः ॥ ४०४ । **रुषेर्नित्लुप् च** । 'रुष हिंसायाम्' अस्मादभच् नित्कित्स्यात्, लुषादेशश्च । 'लुषभो मत्तदन्तिनि' ॥ ४०५ । **रासिवल्लिभ्यां च** । रासभः । वल्लभः ॥ ४०६ । **जृविशिभ्यां झच्** । जरन्तो महिषः । वेशन्तः पल्वलम् ॥ ४०७ । **रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि** । रोहन्तो वृक्षभेदः । नन्दन्तः पुत्रः । जीवन्त औषधम् । प्राणन्तो वायुः । षित्त्वान्ङीष्, रोहन्ती ॥ ४०८ । **तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च** । दशभ्यो झच् स्यात्, स च षित् । तरन्तः समुद्रः । तरन्ती नौका । भवन्तः कालः । वहन्तो वायुः । वसन्तः-ऋतुः । भासन्तः सूर्यः । साधन्तो भिक्षुः । गडेर्घटादित्वान्मित्त्वं ह्रस्वः, 'अयामन्त-' २३११ इति णेरयः, गण्डयन्तो जलदः । मण्डयन्तो भूषणम् । जयन्तः शक्रपुत्रः । नन्दयन्तो नन्दकः ॥ ४०९ । **हन्तेर्मुट् हि च** । हेमन्तः ॥ ४१० । **भन्देर्नलोपश्च** । भदन्तः प्रव्रजितः ॥ ४११ । **ऋच्छेररः** । ऋच्छरा वेश्या । बाहुलकात्-जर्जरझर्झरादयः ॥ ४१२ । **अर्तिकमिभ्रमिचमिदेविवासिभ्यश्चित्** । षड्भ्योऽरश्चित् स्यात् । अररं कपाटम् । कमरः कामुकः । भ्रमरः । चमरः । देवरः । वासरः ॥ ४१३ । **कुवः क्ररन्** । कुररः पक्षिभेदः ॥ ४१४ । **अङ्गिमदिमन्दिभ्य आरन्** । अङ्गारः । मदारो वराहः । 'मन्दारः पारिजातकः' ॥ ४१५ । **गडेः कड**

---

गतौ, पण व्यवहारे स्तुतौ च, पन च, मह पूजायाम् । गौरादित्वात् ङीप्, । '**अतसी** स्यादुमा क्षुमा' इत्यमरः । '**चमसो** यज्ञपात्रस्य भेदेऽस्त्री पिष्टके स्त्रियाम्' इति मेदिनी । 'पनसः कण्टकिफले कन्दके वानरान्तरे । स्त्रियां रोगप्रभेदे स्यात्' इति च ॥ **३९८ वेञः** । वेञ् तन्तुसन्ताने, अस्मादसच् स्यात्तस्य तुट् । दशपादीवृत्तौ तु 'वियस्तुट् च' इति पठित्वा 'वी गतिप्रजनकान्त्यादिषु' इति धातुरुदाहृतः ॥ **३९९ वहि-** । वह प्रापणे, यु मिश्रणादौ, 'अजगरे शयुर्वाहस इत्युभौ' इत्यमरः । 'वा तु क्लीबे दिवसवासरौ' इति च ॥ **४०० यावस इति** । असचो णित्त्वाद्वृद्धिः ॥ **४०१ दिवः-** । दिवु क्रीडादौ ॥ **४०२ कृशृ-** । कॄ विक्षेपे, शॄ हिंसायाम्, शल गतौ, कल विलेखने, गर्द शब्दे । '**करभो** मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते' इति मेदिनी । 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः । '**शरभस्तु** पशोर्भिदि' । 'करभो वानरभिदि' इति मेदिनी । 'समौ पतङ्गशलभौ' इत्यमरः । 'कलभः करिपोतकः' इति च । 'गर्दभं श्वेतकुमुदे गर्दभो गन्धभिद्यपि । रासभे गर्दभी क्षुद्रजन्तुरोगप्रभेदयोः' इति मेदिनी ॥ **४०३ ऋषि-** । ऋषी गतौ, वृषु सेचने, आभ्यां अभच् स्यात्स च कित् । 'ऋषभस्त्वौषधान्तरे । स्वरभिद्वृषयोः कर्णरन्ध्रगर्दभपुच्छयोः । उत्तरस्थः स्मृतः श्रेष्ठे स्त्रीनराकारयोषिति । शूकशिम्ब्यां शिरालायां विधवायां क्वचिन्मता' इति मेदिनी । 'वृषभः श्रेष्ठवृषयोः' इति च ॥ **४०५ रासिवल्लि-** । रासृ शब्दे, वल्ल संवरणे । 'वल्लभो दयितेऽध्यक्षे सुलक्षणतुरङ्गमे' इति मेदिनी ॥ **४०६ जृविशि-** । जॄ वयोहानौ, विश प्रवेशने । 'वेशन्तः पल्वलं चाल्पसरः' इत्यमरः । बाहुलकादर्हतेरपि झच् । '**अर्हन्तः** क्षपणको जिनः' इति विक्रमादित्यकोशः ॥ **४०७ रुहि-** । रुह बीजजन्मनि प्रादुर्भावे च, टुनदि समृद्धौ, जीव प्राणधारणे, अन प्राणने प्रपूर्वः । एभ्य आशिषि झच्, स च षिद्वति ॥—**प्राणन्त इति** । 'अनितेः' इति णत्वम् ॥ **४०८ तॄभू-** । तॄ प्लवनतरणयोः, भू सत्तायाम्, वह प्रापणे, वस निवासे, भासृ दीप्तौ, साध संसिद्धौ, गड सेचने-मडि भूषायाम्-उभौ ण्यन्तौ, जि जये, टुनदि समृद्धौ, ण्यन्तः ॥—**नन्दयन्त इति** । उज्ज्वलदत्तस्तु—नन्दन्त इत्युदाहृत्य पूर्वसूत्रेण गतार्थतामाशङ्क्य अनाशीरर्थं नन्दिग्रहणमित्याह । तच्चिन्त्यम्, इहाप्याशिषीत्यस्य स्वयमेवानुवर्तितत्वात् ॥ **४०९ हन्तेः-** । हन हिंसागत्योरस्मात् झच् प्रत्ययः स्यात्तस्य मुडागमः, धातोर्हिरादेशश्च ॥ **४१० भन्देः-** । भदि कल्याणे सुखे च, अस्मात् झच् स्याद्धातोर्नकारलोपश्च ॥ **४११ ऋच्छेः-** । ऋच्छ गतौ ॥—**बाहुलकादिति** । जर्ज चर्च झर्झ परिभाषणहिंसातर्जनेषु । परिभाषणभर्त्सनयोरिति तुदादौ । 'जर्जरं शैवले शक्रध्वजे त्रिषु जरत्तरे । झर्झरः स्यात्कलियुगे वाद्यभेदे नदान्तरे' इति मेदिनी । बाहुलकादेव झस्य जादेशो जर्झर इत्युज्ज्वलदत्तः ॥ **४१२ अर्तिकमि-** । ऋ गतौ, कमु कान्तौ, भ्रमु अनवस्थाने, चमु अदने, दिवु क्रीडादौ—वस निवासे—उभावपि ण्यन्तौ । '**अररं** छदकपाटयोः' इति मेदिनी । 'कपाटमररं तुल्ये' इत्यमरः । '**भ्रमरः** कामुके भृङ्गे' इति मेदिनी । '**चमरं** चामरे स्त्री तु मञ्जरीमृगभेदयोः' इति च । चमरो मृगभेदः । **देवरः** पत्युः कनिष्ठभ्राता ॥—**वासर इति** । केचित्तु—सूत्रे 'वाशिभ्यः' इति तालव्यं पठित्वा 'वाशृ शब्दे' इत्यस्मादरप्रत्यये वाश्यत इति—वाशरः कोकिल इत्याहुः ॥ **४१३ कुवः-** । कु शब्दे ॥ **४१४ अङ्गि-** । अगिर्गत्यर्थः, मदी हर्षे, मदी स्तुत्यादौ । '**अङ्गार** उल्मुके न स्त्री पुंलिङ्गस्तु महीसुते' इति मेदिनी । '**मन्दारः** स्यात्सुरद्रुमे । पारिभद्रेऽर्कपर्णे च मन्दारो हस्तिधूर्तयोः' इति च । मदि स्तुत्यादावित्यस्माद्बाहुलकादारुरपि, 'पारिभद्रे तु **मन्दारु**र्मन्दारः पारिजातकः' इति शब्दार्णवः ॥ **४१५ गडेः-** । गडि वदनैकदेशे, गड सेचने, अस्मादारन्प्रत्ययः स्यात्कडादेशश्च । 'कडारः कपिले दासे' इति मेदिनी । 'कडारः कपिलः पिङ्गः'

च । कडारः ॥ ४१६ । **शृङ्गारभृङ्गारौ** । शृभृञ्भ्यामारन्नुम् गुक् ह्रस्वश्च । शृङ्गारो रसः । 'भृङ्गारः कनकालुका' ॥ ४१७ । **कञ्जिमृजिभ्यां चित्** । कञ्जिः सौत्रो धातुः । कञ्जारो मयूरः । मार्जारः ॥ ४१८ । **कमेः किदुच्चोपधायाः** । चिदित्यनुवृत्तेरन्तोदात्तः । कुमारः ॥ ४१९ । **तुषारादयश्च** । तुषारः । कासारः । सहार आम्रभेदः ॥ ४२० । **दीङो नुट् च** । दीनारः सुवर्णाभरणम् ॥ ४२१ । **सर्तेरपः षुक् च** । सर्षपः ॥ ४२२ । **उषिकुटिदलिकचिखजिभ्यः कपन्** । 'उषपो वह्निसूर्ययोः' । कुटपो मानभाण्डम् । दलपः प्रहरणम् । कचपं शाकपत्रम् । खजपं घृतम् ॥ ४२३ । **क्वणेः संप्रसारणं च** । कुणपम् ॥ ४२४ । **कपश्चाक्रवर्मणस्य** । स्वरे भेदः ॥ ४२५ । **विटपपिष्टपविशिपोलपाः** । चत्वारोऽमी कपन् प्रत्ययान्ताः । 'विट शब्दे' विटपः । विशतेरादेः पः, प्रत्ययस्य तुट्, षत्वम्, पिष्टपं भुवनम् । विशतेः प्रत्ययादेरित्वम्, विशिपं मन्दिरम् । वलतेः संप्रसारणम्, 'उलपं कोमलं तृणम्' ॥ ४२६ । **वृतेस्तिकन्** । वर्त्तिका ॥ ४२७ । **कृतिभिदिलतिभ्यः कित्** । कृत्तिका । भित्तिका भित्तिः । लत्तिका गोधा ॥ ४२८ । **इष्यशिभ्यां तकन्** । इष्टका । अष्टका ॥ ४२९ । **इणस्तशन्तशसुनौ** । एतशो ब्राह्मणः, स एव एतशाः ॥ ४३० । **वीपतिभ्यां तनन्** । 'वी गत्यादौ' वेतनम् । पत्तनम् ॥ ४३१ । **दृदलिभ्यां भः** । दर्भः । 'दल्भः स्याहषिचक्रयोः' ॥ ४३२ । **अर्तिगृभ्यां भन्** । अर्भः । गर्भः ॥ ४३३ । **इणः कित्** । इभः ॥ ४३४ । **असिसञ्जिभ्यां क्थिन्** । अस्थि । सक्थि ॥ ४३५ । **प्लुषिकुषिशुषिभ्यः क्सिः** । प्लुक्षिर्वह्निः । कुक्षिः । शुक्षिर्वातः ॥ ४३६ । **अशेर्नित्** । अक्षि । ४३७ । **इषेः क्सुः** । इक्षुः ॥ ४३८ । **अवितृस्तृतन्त्रिभ्यः ईः** । 'अवीर्नारी रजस्वला' । तरीर्नौः । स्तरीर्धूमः । तन्त्रीर्वीणादेर्गुणः ॥ ४३९ । **यापोः किद्द्वे च** ।

---

इत्यमरः ॥ ४१६ **शृङ्गारः**–। एतौ निपात्येते । शॄ हिंसायाम्, डुभृञ् धारणपोषणयोः, आभ्यामारन्नुम् गुग् ह्रस्वश्च । '**शृङ्गारः** सुरते नाट्ये रसे च गजमण्डने । नपुंसकं च वङ्गेऽपि नागसंभवचूर्णयोः' इति मेदिनी । '**भृङ्गारी** झिल्लिकायां स्यात्कनकालौ पुनः पुमान्' इति च ॥ ४१७ **कञ्जि**–। मृजू शुद्धौ, चित्वादारन्प्रत्यय अन्तोदात्तः । '**कञ्जारो** जरठे सूर्ये विरञ्चौ वारणे मुनौ' इति विश्वमेदिन्यौ । '**मार्जार** ओतौ खट्वाङ्गे' इति च । 'ओतुर्बिडालो मार्जारः' इत्यमरः ॥ ४१८ **कमेः**–। कमु कान्तौ, अस्मादारन्कित्स्यात् । '**कुमारः** स्याच्छुके स्कन्दे युवराजेऽश्ववारके । बालके वरुणद्रौ ना न द्वयोर्जात्यकाञ्चने । कुमारी शैलतनयानवम्याल्योर्नदीभिदि । सहापराजिताकन्याजम्बुद्वीपेषु च स्त्रियाम्' इति मेदिनी । विश्वप्रकाशे तु 'कुमारी रामतरणी' इति पाठः । रामतरणी लताविशेषः । सहेति प्रसिद्धः । 'तरणी रामतरणी कर्णिका चारुकेसरा । सहा कुमारी गन्धाढ्या' इति धन्वन्तरिनिघण्टुः । 'जम्बूद्वीपसहाकन्याः कुमार्योऽथाश्ववारके । बालके कार्तिकेये च कुमारो भर्तृदारके' इति त्रिकाण्डशेषः ॥ ४१९ **तुषारा**–। एते निपात्यन्ते । तुष तुष्टौ आरन् । '**तुषारस्तुहिनं हिमम्**' इत्यमरः । कासृ शब्दकुत्सायाम् । 'कासारः सरसी सरः' इत्यमरः ॥—**सहार इति** । षह मर्षणे ॥ ४२० **दीङो**–। दीङ् क्षये, अस्मादारन् तस्य नुडागमश्च ॥ ४२१ **सर्तेः**–। सृ गतौ अस्मादपः स्याद्धातोः पुगागमश्च ॥ ४२२ **उषि**–। उष दाहे, कुट कौटिल्ये, दल विदारणे, कच बन्धने, खज मन्थे ॥ ४२३ **क्वणेः**–। क्वण शब्दे । अस्मात्कपन् धातोर्वकारस्य संप्रसारणं च । '**कुणपः** पूतिगन्धे शवेऽपि च' इति मेदिनी । 'कुणपः शवमस्त्रियाम्' इत्यमरः ॥ ४२५ **विटप**–। 'विटपो न स्त्रियां स्तम्बशाखाविस्तारपल्लवे । विटाधिपे ना' इति मेदिनी ॥—**विशतेरिति** । विश प्रवेशने ॥—**आदेः प इति** । एतच्च उज्ज्वलदत्तरीत्योक्तम् । अन्ये तु सूत्रे 'विष्टप' इति दन्त्योष्ठ्यादिमेव पठन्ति । युक्तं चैतत् । 'यत्र ब्रध्नस्य विष्टपम्' इत्यादौ तथा दर्शनात् । अमरकोशेऽपि 'विष्टपं भुवनं जगत्' इति प्रचुरपाठाच्च ॥—**वलतेः**–। वल वल्ल संवरणे संचरणे च । '**उलपो** न स्त्री गुल्मिन्यां ना तृणान्तरे' इति मेदिनी ॥ ४२६ **वृतेः**–। वृतु वर्तने ॥ ४२७ **कृतिभिदि**–। कृती छेदने, भिदिर् विदारणे, लतिः सौत्रो धातुः ॥ ४२८ **इष्यशि**–। इष इच्छायाम्, अशू व्याप्तौ, आभ्यां तकन् कित्स्यात् ॥—**इष्टकेति** । 'इष्टकेषीकामालानाम्–' इति निर्देशात् 'प्रत्ययस्थात्–' इति नेत्वम् । केचित्तु प्रत्ययस्थादितीत्वमिह न भवति, नित्यत्वात् । तज्ज्ञापकं तु 'मृदस्तिकन्' इति इकारोच्चारणमित्याहुः ॥ ४२९ **इणस्त**–॥—**एतशा इति** । 'अत्वसन्तस्य–' इति दीर्घः । एतशसौ । एतशसः ॥ ४३० **वीपति**–। पत्लृ गतौ । 'पत्तनं पुटभेदनम्' इति पुरीपर्यायेष्वमरः ॥ ४३१ **दृदलि**–। दॄ विदारणे, दल विकसने ॥ ४३२ **अर्तिगृ**–। ऋ गतौ, इयर्तीति—**अर्भः** शिशुः । संज्ञायां कनि–अर्भकः । 'गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके' इति मेदिनी ॥ ४३३ **इणः**–। इण् गतौ, अस्माद्भन् कित्स्यात् । '**इभः** स्तम्बेरमः पद्मी' इत्यमरः ॥ ४३४ **असि**–। असु क्षेपणे, षञ्ज सङ्गे । 'कीकसं कुल्यम**स्थि** च' इत्यमरः । 'सक्थि क्लीबे पुमानूरुः' इति च ॥ ४३५ **प्लुषि**–। प्लुष दाहे, कुष निष्कर्षे, शुष शोषणे ॥ ४३६ **अशेः**–। अशू व्याप्तौ, अस्मात् क्सिन्नित्स्यात् । **अक्षि** नयनम् ॥ ४३७ **इषेः**–। इष इच्छायाम् । **इक्षुः** 'रसाल इक्षुः' इत्यमरः ॥ ४३८ **अवि**–। अव रक्षणादौ, तॄ प्लवनतरणयोः, स्तृञ् आच्छादने, तन्त्रि कुटुम्बधारणे, चुरादिर्ण्यन्तः ॥—**तरीरिति** । 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः ॥ ४३९ **यापोः**–। या प्रापणे, पा पाने, आभ्या-

यथीरश्वः । 'पपीः स्यात्सोमसूर्ययोः' ॥ ४४० । लक्षेर्मुट् च । लक्ष्मीः ॥ इत्युणादिषु तृतीयः पादः ॥

—∘∘ꕥ∘∘—

## अथ चतुर्थः पादः ।

४४१ । **वातप्रमीः** । वातशब्दे उपपदे माधातोरीप्रत्ययः स च कित् । वातप्रमीः । अयं स्त्रीपुंसयोः ॥ ४४२ । **ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निज्यतुजलिजिष्ठुजिष्ठजिसन्स्यनिथिनुल्यसासानुकः** । द्वादशभ्यः क्रमात्स्युः । अर्तेः कत्निच्, यण्, 'बद्धमुष्टिः करो रत्निः सोऽरत्निः प्रसृताङ्गुलिः' । तनोतेर्यतुच्, तन्यतुर्वायू रात्रिश्च । अञ्जेरलिच्, अञ्जलिः । वनेरिष्टुच्, वनिष्टुः स्थविरान्त्रम् । अञ्जेरिष्ठच्, अञ्जिष्ठो भानुः । अर्पयतेरिसन्, आर्पिसोऽग्रमांसम् । मदेः स्यन्, मत्स्यः । अतेरिथिन्, अतिथिः । अङ्गेरुलिः, अङ्गुलिः । कौतेरसः, कवसः । अच इत्येके, कवचम् । यौतेरासः, यवासो दुरालभा । कृशेरानुक्, कृशानुः ॥ ४४३ । **श्रः करन्** । उत्तरसूत्रे किद्ग्रहणादिह ककारस्य नेत्त्वम्, शर्करा ॥ ४४४ । **पुषः कित्** । पुष्करम् ॥ ४४५ । **कलश्च** । पुष्कलम् ॥ ४४६ । **गमेरिनिः** । गमिष्यतीति गमी ॥ ४४७ । **आङि णित्** । आगामी ॥ ४४८ । **भुवश्च** । भावी ॥ ४४९ । **प्रे स्थः** । प्रस्थायी ॥ ४५० । **परमे कित्** । परमेष्ठी ॥ ४५१ । **मन्थः** । मन्थतेरिनिः कित्स्यात् । कित्त्वान्नकारलोपः—मन्थाः, मन्थानौ, मन्थानः ॥ ४५२ । **पतः स्थ च** । पन्थाः,

---

मीः कित्स्यात् द्वित्वं च धातोः ॥ **४४० लक्षेः**—। लक्ष दर्शनाङ्कनयोः । चुरादिर्ण्यन्तः । अस्मादीप्रत्ययः स्यात्तस्य मुडागमो णिलो पश्च । '**लक्ष्मीः** पद्मा विभूतिश्च' । 'कृदिकारात्—' इति ङीषि 'लक्ष्मी' इत्यपि भवतीति रक्षितः । 'लक्ष्मी संपत्तिशोभयोः । ऋद्ध्योषधौ च पद्मायाम्' इति मेदिनी ॥ **इत्युणादिषु तृतीयः पादः** ॥

**४४१ माधातोरिति** । मा माने, कित्त्वात् 'आतो धातोः' इत्यालोपः । 'वातप्रमीर्वातमृगः' इत्यमरः ॥—**अयमिति**—। 'द्विचतुःषट्पदोरगाः' इत्यमरेण चतुष्पाद्वाचिनामुभयलिङ्गतोक्तेः, सुभूतिचन्द्रादिभिरपि वातप्रमीशब्दस्य द्विलिङ्गतोक्तेश्चेति भावः । तत्र 'कृदिकारात्—' इति पाक्षिको ङीष् कैश्चिदिष्यते । न च ह्रस्वादेव 'कृदिकारात्—' इति ङीष् भवति न तु दीर्घादिति शङ्क्यम् । वर्णनिर्देशे कारप्रत्ययस्य विधानेन दीर्घादपि 'कृदिकारात्—' इति ङीषः संभवात् । अत एव वातप्रमीश्रीलक्ष्मीति पक्षे ङ्यन्ताः सुसाधव इति रक्षितः । एतच्च दुर्घटग्रन्थे स्पष्टम् । 'आशीराश्यहिदंष्ट्रायां लक्ष्मीर्लक्ष्मी हरिप्रियायाम्' इति द्विरूपकोशः । अत एव 'आशीविषो विषधरः' इत्यमरकोशः संगच्छते । 'अश भोजने' इत्यस्मात् 'इणजादिभ्यः' इति इण्प्रत्यये उपधावृद्धौ 'कृदिकारात्—' इति ङीषः स्वीकारात् । 'आशीमिव कलामिन्दोः' इति राजशेखरः । 'आशीर्हिताशंसाऽहिदंष्ट्रयोः' इति सान्तेऽमरात् सान्तोऽप्याशीःशब्दोऽस्तीत्यन्यदेतत् ॥ **४४२ ऋतनि**—। ऋ गतौ, तनु विस्तारे, अञ्जू व्यक्त्यादौ, वनु याचने, अञ्जूः स एव, ऋ गतौ ण्यन्तः, मदी हर्षे, अत सातत्यगमने, अगिर्गत्यर्थः, कु शब्दे, यु मिश्रणे, कृश तनूकरणे । प्रसङ्गादाह—**अरत्निरिति** । न रत्निः—अरत्निरिति नञ्समासः । प्रसृताङ्गुलिः सहस्तः=अरत्निरित्यर्थः । दशपादीवृत्तौ तु कत्निजित्यत्र ककारमपठित्वा अर्तेरत्निचमकितं विधाय अरत्निः साधितः । उज्ज्वलदत्तस्तु न[illegible]ह—[illegible] **रात्रिश्चेति** । तन्यतुः=शब्दो मेघः अशनिश्चेत्यपि बोध्यम् । 'आविष्कृणोमि तन्यतुर्न वृष्टिम्' इति मन्त्रे तन्यतुर्गर्जितमिति, 'सृजा वृष्टिं न तन्यतुः' इति मन्त्रे तन्यतुर्मेघ इति, 'उतस्मास्य तन्यतोरिव द्यौः' इति मन्त्रे 'दिवश्चित्रं न तन्यतुम्' इति मन्त्रे च तन्यतुरशनिरिति वेदभाष्ये व्याख्यातत्वात् । 'अञ्जलिस्तु पुमान् हस्तसंपुटे कुडवेऽपि च' इति मेदिनी ॥—**स्थविरान्त्रमिति** । 'वनिष्ठोर्हृदयादधि' इति मन्त्रस्य भाष्ये तथोक्तत्वात् ॥—**अञ्जिष्ठ इति** । केचिदञ्जेरिष्णुचमिच्छन्ति, तेषामञ्जिष्णुरुदाहरणम् ॥—**आर्पिस इति** । 'अर्तिह्री—' इत्यादिना पुक् । 'णेरनिटि' इति णिलोपः ॥—**मदेरिति** । 'मत्स्यो मीनेऽथ पुंभूम्नि देशे' इति **मेदिनी** । '**अतिथिः** कुशपुत्रे स्यात्पुमानागन्तुके त्रिषु' इति च । '**अङ्गुलिः** करशाखायां कर्णिकायां गजस्य च' इति च । कवसः सन्नाहः कंकटजातिश्च ॥—**अच इति** । 'कवचो गर्दभाण्डे च संनाहे पर्पटेऽपि च' इति मेदिनी ॥—**यौतेरिति** । 'दुरालभा कटुस्पर्शा यासो धन्वयवासकः' इति धन्वन्तरिनिघण्टुः । 'कृशानुः पावकोऽनलः' इत्यमरः ॥ **४४३ श्रः**—। शॄ हिंसायाम् । 'शर्करा खण्डविकृतौ उपलाकर्परांशयोः । शर्करान्वितदेशे च रुग्भेदे शकलेऽपि च' इति मेदिनी ॥ **४४४ पुषः**—। पुष पुष्टौ, अस्मात्करन्स्यात्स च कित् । 'पुष्करं खेऽम्बुपद्मयोः । तूर्यवक्त्रे खड्गफले हस्तिहस्ताग्रकाण्डयोः । कुष्ठौषधिद्वीपतीर्थभेदयोश्च नपुंसकम् । ना रोगनागविहगनृपभेदेषु वारुणौ' इति मेदिनी ॥ **४४५ कलश्च** । पुष्यतेः कलन् स्यात्, स च कित् । 'पुष्कलस्तु पूर्णे श्रेष्ठे' इति हेमचन्द्रः ॥ **४४६ गमेः**—। गम्लृ गतौ । 'भविष्यति गम्यादयः' इत्याशयेनाह—**गमिष्यतीति** ॥ **४५७ आगामीति** । इनिप्रत्ययस्य णित्वादुपधावृद्धिः । आगमिष्यतीत्यर्थः ॥ **४४८ भुवश्च** । भू सत्तायाम् । अस्मादिनिः स च णित्स्यात् । भविष्यतीति भावी ॥ **४४९ प्रे स्थः** । ष्ठा गतिनिवृत्तौ, प्रपूर्वादस्मादिनिः स च णित् । णित्वात् 'आतो युक्—' इति युक् । प्रस्थायी गन्तुकामः ॥ **४५० परमे** । परमशब्दे उपपदे तिष्ठतेरिनिः कित्स्यात् । कित्त्वादातो लोपः, 'हलदन्तात्—' इत्यलुक् । 'परमेष्ठी पितामहः' इत्यमरः ॥ **४५१ मन्थः** । मन्थ विलोडने ॥—**मन्था इति** । 'पथिमथि—' इत्यात्वम् । 'इतोऽत्सर्वनामस्थाने' । 'मन्था मन्थनदण्डे च वज्रे चापेऽपि च स्मृतः' ॥ **४५२ पतः**—। 'पत्लृ गतौ' इत्यस्मादिनिः स्थश्चान्तादेशः । 'पथे गतौ' इत्यस्मात्पचाद्यचि अकारान्तोऽप्यस्ति । 'वाटः पथश्च मार्गश्च' इति सुभूति-

पन्थानौ॥ ४५३ । **खजेराकः** । खजाकः पक्षी ॥ ४५४ । **बलाकादयश्च** । बलाका । शलाका । पताका ॥ ४५५ । **पिनाकादयश्च** । पातेरीत्त्वं नुम् च । 'क्लीबपुंसोः पिनाकः स्याच्छूलशङ्करधन्वनोः' । 'तड आघाते' तडाकः ॥ ४५६ । **कषिदूषिभ्यामीकन्** । कषीका पक्षिजातिः । 'दूषीका नेत्रयोर्मलम्' ॥ ४५७ । **अनिहृषिभ्यां किच्च** । अनीकम् । हृषीकम् ॥ ४५८ । **चङ्कणः कङ्कणश्च** । 'कण शब्दे' अस्माद्यङ्लुगन्तादीकन्, धातोः कङ्कणादेशश्च । 'घण्टिकायां कङ्कणीका सैवा प्रतिसरापि च' । ४५९ । **शॄपॄवॄञां द्वेरुक् चाभ्यासस्य** । शर्शरीको हिंस्रः । पर्परीको दिवाकरः । वर्वरीकः कुटिलकेशः ॥ ४६० । **पर्फरीकादयश्च** । 'स्फुर स्फुरणे' अस्मादीकन् धातोः पर्फरादेशः । पर्फरीकं किसलयम् । दर्दरीकं वादित्रम् । झर्झरीकं शरीरम् । तिन्तिडीको वृक्षभेदः । (ग) **चरेर्नुं च**। चञ्चरीको भ्रमरः । मर्मरीको हीनजनः । कर्करीका गलन्तिका । पुणतेः, पुण्डरीकं वादित्रम् । पुण्डरीको व्याघ्रोऽग्निर्दिग्गजश्च ॥ ४६१ । **ईषेः**

चन्द्रः । 'त्वचि त्वचः किरोऽपि स्यात्किरौ प्रोक्तः पथः पथि' इति द्विरूपेषु विश्वः । इह ऋभवो देवाः क्षिपन्त्यस्मिन्निति विग्रहे 'अन्येभ्योऽपि दृश्यते' इति डः । '**ऋभुक्षः** स्वर्गवज्रयोः' इति विश्वः । ततो मत्वर्थीयेनिः । ऋभुक्षिन्निति नान्तं प्रातिपदिकम् । 'पथिमथि-' इत्यात्वे 'इतोऽत्-' इत्यत्वे च ऋभुक्षा इन्द्रः, ऋभुक्षाणौ ऋभुक्षाण इत्युज्ज्वलदत्तः । दशपाद्यां तु 'अर्तेः भुक्षिनक्' इति सूत्रमुपन्यस्य ऋभुक्षिन्नित्युदाहृतम् । 'ऋभुक्षिणमिन्द्रमाहुव ऊतये' इति मन्त्रस्य वेदभाष्ये तत्सूत्रमुदाहृतम् । अत्रायं विवेकः—इनिप्रत्ययान्ता इति मते अन्तोदात्तत्वं न्याय्यं, प्रत्ययस्वरेण इनेरिकारस्योदात्तत्वात् । अवग्रहाभावो बाहुलकात् । द्वितीयमते त्ववग्रहाभावो न्याय्यः । परे तु प्रत्ययस्वरेणोकारस्योदात्ततया भुक्षिनक्प्रत्ययान्तस्य मध्योदात्तत्वे प्रसक्ते बाहुलकादन्तोदात्तः स्वीकर्तव्य इति ॥ **४५३ खजेः**–। खज मन्थे ॥ **४५४ बलाका**–। बल प्राणने, शल गतौ, पत्ल गतौ, एते आकप्रत्ययान्ता निपात्यन्ते । 'बलाका बकपङ्क्तिः स्याद्बलाका बिसकण्ठिका । बलाका कामुकी प्रोक्ता बलाकश्च बको मतः' इति विश्वशाश्वतौ । 'शलाकाऽञ्जनयष्टिका । पताका वैजयन्त्यां च सौभाग्येऽङ्के ध्वजेऽपि च' इति विश्वः । 'पताका वैजयन्त्यां च सौभाग्ये नाटकाङ्कयोः' इति मेदिनी ॥ **४५५ पिनाका**–। एते आकप्रत्ययान्ता निपात्यन्ते । पा रक्षणे, 'पिनाकोऽस्त्री रुद्रचापे पांशुवर्षत्रिशूलयोः' इति मेदिनी । अमरोक्तिमाह—**क्लीबपुंसोरिति** । किंच पिष्लृ संचूर्णने, षकारस्य णत्वं धातोर्यगागमः । '**पिण्याको**ऽस्त्री तिलकल्के हिङ्गुबाह्लीकसिह्लके' इति मेदिनी ॥ **४५६ कषि**–। कष खषेति दण्डके हिंसार्थकः । दुष वैकृत्ये, ण्यन्तः । 'दोषो णौ' इत्युपधाया ऊकारः । अमरोक्तिमाह—**दूषिकेति** । किंच अकृतेऽपि ईकनि दूषयतेः 'अच इः' इति इप्रत्यये दूषिः । 'कृदिकारात्–' इति ङीषि दूषी । उभाभ्यामपि स्वार्थे कनि दूषिका ह्रस्वमध्यैव । 'केऽणः' इति ङीषोऽपि ह्रस्वादेशात् । 'पिचण्डी दूषिका दूषी पिचाटं च दृशोर्मलम्' इति विक्रमादित्यकोशः । 'दूषिका तूलिकायां च मले स्याल्लोचनस्य च' इति मेदिनी ॥ **४५७ अनिहृषि**–। अन प्राणने, हृष तुष्टौ, आभ्यामीकन्स्यात् स च कित् । 'अनीकोऽस्त्री रणे सैन्ये' इति मेदिनी । 'हृषीकं विषयेन्द्रियम्' इत्यमरः ॥ **४५८ चङ्कणः** । कणधातोर्यङ्लुकि प्रत्ययलक्षणन्यायेन 'सन्यङोः' इति द्वित्वे 'कुहोश्चुः' इत्यभ्यासस्य चुत्वे 'नुगतोऽनुनासिकान्तस्य' इति नुकि चङ्कण् । ङसिङसोस्तु चङ्कणः ॥—**धातोरिति** । चङ्कणित्यस्य ॥ **४५९ शॄ पॄ**–। शॄ हिंसायाम्, पॄ पालनादौ, वृञ् वरणे, एभ्य ईकन्, एषां द्विर्वचनमभ्यासस्य रुगागमश्च ॥—**शर्शरीक इत्यादि** । उरदत्वे रपरत्वम् ॥ **४६० पर्फरीका**–। ईकन्नन्ता एते निपात्यन्ते ॥—**पर्फरादेश इति** । एतच्चोज्ज्वलदत्तरीत्योक्तं, वस्तुतस्तु धातोर्द्वित्वमुकारस्याकारः, सलोपः, रुक् चाभ्यासस्येति दशपाद्यां यदुक्तं तदेव न्याय्यम् । 'चरेर्नुम् च' त्युत्तरग्रन्थानुरोधेन द्वे रुक् चेत्याद्यनुवृत्तेर्न्याय्यत्वात् ॥—**किसलयमिति** । 'नैतोशेव तुर्फरी पर्फरीका' इति मन्त्रस्य वेदभाष्ये तु ञिफला विशरणे, पॄ पालनपूरणयोः, पर्व पुर्व पूरणे, एषामन्यतमस्य निपातनमिदमित्याश्रित्य शत्रूणां विदारयितारौ, स्तोतॄणां पालकौ, इष्टार्थस्य पूरयितारौ चेति व्याख्यातम् ॥—**दर्दरीकमिति** । दॄ विदारणे, अस्मादीकन्धातोर्दर्दरादेशः ॥—**झर्झरीकमिति** । झॄष् वयोहानौ । अस्मादीकन्धातोर्झर्झरादेशः । वस्तुतस्तु दर्दरीकझर्झरीकावपि पर्फरीकवद्धातोर्द्वित्वं रुक् चाभ्यासस्येति व्याख्येयौ । उत्तरखण्डे ऋकारस्य गुणे रपरत्वम् ॥—**तित्तिडीक इति** । तिमष्टिमष्टीम आर्द्रीभावे । मकारस्योकारः, अभ्यासस्य तुक् च । 'तिन्तिणी चाम्लिका' इत्यमरे तु शब्दान्तरं बोध्यम् । तथा च 'तित्तिडी त्वम्लिका चिञ्चा तित्तिडीका कपिप्रिया' इति वाचस्पतिः । 'अम्लीका चाम्लिका चिञ्चा तित्तिडीका च तित्तिडा' इति चन्द्रः । 'अम्लीका चुक्रिका चुक्रासाम्ला शुक्राथ शुक्लिका । अम्लिका चिञ्चिका चिञ्चा तिन्तिडीका सुतित्तिडा' इति धन्वन्तरिनिघण्टुः ॥ (ग) **चरेरिति** । 'चर गतिभक्षणयोः' अस्मादीकन् द्विर्वचनमभ्यासस्य नुमागमश्च । 'भ्रमरश्चञ्चरीकः स्याद्रोलम्बो मधुसूदनः । इन्दिन्दिरः पुष्पकीटो मधुद्रो मधुकेशयः' इति त्रिकाण्डशेषः ॥—**मर्मरीक इत्यादि** । मृङ् प्राणत्यागे, डुकृञ् करणे, आभ्यामीकन् धातोर्द्वित्वम् अभ्यासस्य रुक् । 'कर्कर्यालुर्गलन्तिका' इत्यमरः । पुण कर्मणि शुभे, णस्य डः प्रत्ययस्य रुडागमश्च । 'पुण्डरीकं सिताम्भोजे सितच्छत्रे च भेषजे । पुंसि व्याघ्रेऽपि दिङ्नागे कोशकारान्तरेऽपि च' इति मेदिनी ॥ **४६१ ईषेः**–। ईष गतावस्मादीकन् ह्रस्वश्च । कित्वाद्गुणाभावः । ह्रस्वविधानसामर्थ्यादेव गुणाभावे सिद्धेऽप्युत्तरार्थं कित्वमित्याहुः । 'इषीका

किङ्खस्वश्च । इषीका शलाका ॥ ४६२ । **ऋजेश्च ।** ऋजीकः–उपहतः ॥ ४६३ । **सर्तेर्नुम् च ।** सृणीका लाला ॥ ४६४ । **मृडः कीकच्कङ्कणौ ।** मृडीको मृगः । मृडङ्कणः शिशुः ॥ ४६५ । **अलीकादयश्च ।** कीकजन्ता निपात्यन्ते । 'अल भूषणादौ' अलीकं मिथ्या । विपूर्वात्–व्यलीकं=विप्रियं खेदश्च । 'वलीकं पटलप्रान्ते' इत्यादि ॥ ४६६ । **कॄतॄभ्यामीषन् ।** 'करीषोऽस्त्री शुष्कगोमये' तरीषः-तरीता ॥ ४६७ । **शॄपॄभ्यां किच्च ।** शिरीषः । पुरीषम् ॥ ४६८ । **अर्जेर्ऋज च ।** 'ऋजीषं पिष्टपचनम्' ॥ ४६९ । **अम्बरीषः ।** अयं निपात्यते । 'अबि शब्दे' 'अम्बरीषः पुमान् भ्राष्ट्रम्' । अमरस्तु–'क्लीबेऽम्बरीषं भ्राष्ट्रो ना' ॥ ४७० । **कॄशॄपॄकटिपटिशौटिभ्य ईरन् ।** करीरो वंशाङ्कुरः । शरीरम् । परीरम् फलम् । कटीरः कन्दरो जघनप्रदेशश्च । पटीरश्चन्दनः कण्टकः कामश्च । 'शौटीरस्त्यागिवीरयोः' । ब्राह्मणादित्वात् ष्यञ्, शौटीर्यम् ॥ ४७१ । **वशेः कित् ।** उशीरम् ॥ ४७२ । **कशेर्मुट् च ।** कश्मीरो देशः ॥ ४७३ । **कृञ उच्च ।** कुरीरं मैथुनम् ॥ ४७४ । **घसेः किच्च ।** क्षीरम् ॥ ४७५ । **गभीरगम्भीरौ ।** गमेर्भः । पक्षे नुम् च ॥ ४७६ । **विषा विहा ।** स्यतेर्जहातेश्च विपूर्वाभ्यां 'आ'प्रत्ययः । विषा बुद्धिः । विहा स्वर्गः । अव्यये इमे ॥ ४७७ । **पच एलिमच् ।** 'पचेलिमो वह्निरव्योः' ॥ ४७८ । **शीङो धुक्लक्वलञ्वालनः ।** चत्वारः प्रत्ययाः स्युः । शीधु मद्यम् । शीलं स्वभावः । शेवलः । शेवालम् । वाहुलकात्–वस्य पोऽपि । 'शेवालं शैवलो

स्यादीषिकापि वानायुजवनायुजौ' इति द्विरूपकोशः ॥ **४६२ ऋजेः–।** ऋज गतौ ॥ **४६३ सर्तेः–।** 'सृ गतौ' अस्मादीकन्कित्स्याद्धातोर्नुमागमश्च । 'सृणिका स्यन्दिनी लाला' इत्यमरः ॥ **४६४ मृडः कीकच्–।** मृड सुखने । 'मृडः कीकन्' इत्युज्ज्वलदत्तादिपाठः प्रामादिकः । मृडीकशब्दस्य चित्स्वरेणान्तोदात्तत्वात् । 'मृळीके अस्य सुमतौ स्याम' इत्यादौ चित्स्वरस्यैव दर्शनात् ॥ **४६५ अलीकादा–।** 'अलीकमप्रियेऽपि स्याद्व्यसत्ये नपुंसकम्' इति मेदिनी । 'अलीकमप्रिये प्रोक्तमलीकमनृते दिवि' इति विश्वः । 'अलीकमप्रिये भाले वितथे' इति हेमचन्द्रः । तथा चाभियुक्तैः प्रयुज्यते—'ते दृष्टिमात्रपतिता अपि कस्य नात्र क्षोभाय पक्ष्मलदृशामलकाः खलाश्च । नीचाः सदैव सविलासमलीकलग्ना ये कालतां कुटिलतां च न संत्यजन्ति' इति । इहालीकलग्नाः भाललग्नाः अप्रिये लग्ना इत्याद्यर्थौ यथायोग्यं बोध्यः । 'व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि पीडने । ना नागरे' इति मेदिनी । वल संवरणे, 'वलीकनीध्रे पटलप्रान्ते' इत्यमरः । वलतेर्मुगागमे वल्मीकम् । 'वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम्' इत्यमरः । वहतेर्वृद्धिश्च । वाहीको गौरश्वश्च । सुप्रपूर्वादिणस्तुट् च, सुप्रतीकः । शाम्यतेः–शमीक ऋषिः । एवमग्रेप्यूह्या इत्याशयेनाह—**इत्यादीति** ॥ **४६६ कॄतॄ–।** कॄ विक्षेपे, तॄ प्लवनतरणयोः ॥ **४६७ शॄपॄ–।** शॄ हिंसायाम्, पॄ पालनादौ, आभ्यामीषन् कित्स्यात् । 'ॠत इद्धातोः' इति इत्वे रपरत्वम् । शिरीषो वृक्षभेदः । 'उदोष्ठ्यपूर्वस्य' इत्युत्वम्, 'गूथं **पुरीषं** वर्चस्कमस्त्री विष्ठाविशौ स्त्रियाम्' इत्यमरः ॥ **४६८ अर्जेः–।** अर्ज षर्ज अर्जने, अस्मादीषन् कित्स्यात् धातोर्ऋजादेशश्च । अमरोक्तिमाह—**ऋजीषमिति** । किंच उद्धृतरसः सोमलतायाः शेषोऽपि ऋजीषम् । एतच्च 'ऋजीषिणं वृषणसश्चत श्रिये' 'आसत्यो यातु मघवाँ ऋजीषी' इत्यादिमन्त्रे भाष्ये स्पष्टम् ॥ **४६९ अयमिति** । ईषन् प्रत्ययस्तस्य अरुडागमश्चेत्यर्थः । बोपालितोक्तिमाह—**अम्बरीषमित्यादि** । 'क्लीबेऽम्बरीषं भ्राष्ट्रे ना' इत्यमरः । 'अम्बरीषो रणे भ्राष्ट्रे क्लीबं पुंसि नृपान्तरे । नरकस्य प्रभेदे च किशोरे भास्करेऽपि च । आम्रातकेऽनुपाते च' इति मेदिनी ॥ **४७० कॄशॄपॄ ।** कॄ विक्षेपे, शॄ हिंसायाम्, पॄ पालनपूरणयोः, कटे वर्षावरणयोः, इट किट कटी गतौ, चुरादौ पट पुटेति दण्डके भाषार्थः, शौटृ गर्वे । 'वंशाङ्कुरे करीरोऽस्त्री वृक्षभिद्घटयोः पुमान् । करीरा चीरिकायां च दन्तमूले च दन्तिनाम्' इति मेदिनी । शीर्यत इति शरीरम् । 'शरीरं वर्ष्म विग्रहः' इत्यमरः । अर्धर्चादित्वात्–'शरीरः' इति पुंलिङ्गोऽपि ॥—**परीरमिति** । पूर्यतेऽनेनेति विग्रहः । वाहुलकात्–हिडि गत्यनादरयोः, हिण्डते=इतस्ततो गच्छतीति हिण्डीरः । 'हिण्डीरोऽब्धिकफः फेनः' इत्यमरः । 'डिण्डीरोऽपि च हिण्डीरः' इति द्विरूपकोशः । किर्मीरजम्बीरतूणीरादयोऽपि वाहुलकादेव बोध्याः । 'किर्मीरो नागरङ्गे च कर्बुरे राक्षसान्तरे' इति मेदिनी । 'जम्बीरः प्रस्थपुष्पे स्यात्तथा दन्तशठद्रुमे' इति च ॥ **४७१ वशेः–।** वश कान्तौ, अस्मादीरन्कित्स्यात् । कित्त्वात्संप्रसारणादि । उशीरं वीरणमूलम् । उशीरोऽपि । 'मूलेऽस्योशीरमस्त्रियाम् । अभयं नलदं सेव्यम्' इत्यमरः ॥ **४७२ कशेः–।** कश इति सौत्रो धातुः । अस्मादीरन् तस्य मुडागमश्च । पृषोदरादित्वात्काश्मीरः ॥ **४७३ कृञः–।** डुकृञ् करणे, अस्मादीरन् धातोरन्त्यस्य उदादेशो रपरः ॥ **४७४ घसेः–।** घस्लृ अदने । अस्मादीरन् कित्स्यात् । 'गमहन–' इत्युपधालोपे कत्वं षत्वं च । 'क्षीरं दुग्धे च नीरे च' इति विश्वः ॥ **४७५ गभीर–।** गम्लृ गतौ । अस्मादीरन् भकारोऽन्तादेशः पक्षे नुमागमश्च निपात्यते । 'निम्नं गभीरं गम्भीरम्' इत्यमरः ॥ **४७६ विषः–।** षोऽन्तकर्मणि, ओहाक् त्यागे, आभ्यां विपूर्वाभ्यामाप्रत्ययो निपात्यते ॥ **४७७ पचः–।** डुपचष् पाके, अस्मादेलिमच् स्यात् । कर्तरि अयम् । कृत्यप्रत्ययेषु तु केलिमर उपसंख्यातः ॥ **४७८ शीङः–।** शीङ् स्वप्ने, शेरतेऽनेनेति शीधुर्मद्यविशेषः । 'मैरेयमासवः शीधुः' इत्यमरः । अर्धर्चादिपाठात् क्लीबं च—'पुंनपुंसकयोर्दारुजीवातुस्थाणुशीधवः' इति त्रिकाण्डशेषः । 'शीलं स्वभावे सद्वृत्ते' इति मेदिनी । 'जलनीली तु शैवालम्' इत्यमरः । 'शैवलं पद्मकाष्ठे स्यात् शैवाले तु पुमानयम्' इति मेदिनी । शब्दार्णवोक्ति-

न स्त्री शेपालो जलनीलिका' ॥ ४७९ । मृकणिभ्यामूकोकणौ । मरूको मृगः । काणूकः काकः ॥ ४८० । वलेरूकः । वलूकः पक्षी उत्पलमूलं च ॥ ४८१ । उलूकादयश्च । वलेः संप्रसारणमूकश्च । उलूकाविन्द्रपेचकौ । वावदूको वक्ता । भल्लूकः ॥ (ग) शमेर्बुक्च । शम्बूको जलशुक्तिः ॥ ४८२ । शलिमण्डिभ्यामूकण् । शालूकं कन्दविशेषः । मण्डूकः ॥ ४८३ । नियो मिः । नेमिः ॥ ४८४ । अर्तेरूच्च । ऊर्मिः ॥ ४८५ । भुवः कित् । भूमिः ॥ ४८६ । अश्नोते रश् च । रश्मिः किरणो रज्जुश्च ॥ ४८७ । दल्मिः । 'दल विशरणे' दल्मिरिन्द्रायुधम् ॥ ४८८ । वीज्याज्वरिभ्यो निः । बाहुलकाण्णत्वम् । 'वेणिः स्यात्केशविन्यासः प्रवेणी च स्त्रियामुभे' । ज्यानिः । जूर्णिः ॥ ४८९ । सृवृषिभ्यां कित् । सृणिरङ्कुशः । 'वृष्णिः क्षत्रियमेषयोः' । ४९० । अङ्गेर्नलोपश्च । अग्निः ॥ ४९१ । वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् । वह्निः । श्रेणिः । श्रोणिः । योनिः । द्रोणिः । ग्लानिः । हानिः । तूर्णिः । बाहुलकात्–म्लानिः ॥ ४९२ । घृणिपृश्निपार्ष्णिचूर्णिभूर्णि । एते पञ्च निपात्यन्ते । घृणिः किरणः । स्पृशतेः सलोपः, पृश्निरल्पशरीरः । पृषेर्वृद्धिश्च, पार्ष्णिः पादतलम् । चरेरुपधाया उत्वम्, चूर्णिः कपर्दकशतम् । बिभर्तेरुत्वम्, भूर्णिर्धरणी ॥ ४९३ । वृदृभ्यां विन् । वर्विर्घस्मरः । दर्विः ॥ ४९४ । जॄशॄस्तॄजागृभ्यः क्विन् । जीर्विः पशुः । शीर्विर्हिंस्रः । स्तीर्विरध्वर्युः ।

माह—शेवालं शैवल इति ॥ ४७९ मृकणि-। मृङ् प्राणत्यागे, कण शब्दार्थः, ऊकश्च उकण् च–ऊकोकणौ, एतौ प्रत्ययौ यथाक्रमं भवतः ॥ ४८० वलेः-। वल संवरणे । 'उलूकः पुंसि काकारािवन्द्रे भारतयोधिनि' इति मेदिनी । वदेर्यङ्लुगन्तादूकः । 'वाचोयुक्तिपटुर्वाग्मी वावदूकोऽतिवक्तरि' इत्यमरः ॥ ४८१ भल्लूक इति-। 'भल्ल परिभाषणे' इत्यस्मादूकः ॥ (ग) शमेः-। 'शम उपशमे' अस्मादूकः, धातोर्बुगागमश्च । शम्बूको गजकुम्भान्ते घोण्टे च शूद्रतापसे' इति मेदिनी । बाहुलकादूकप्रत्यये ह्रस्वमध्योऽपि । 'जम्बूकं जम्बुकं प्राहुः शम्बूकमपि शम्बुकम्' इति द्विरूपकोशः । जम्बूकबन्धूकादयोऽप्यत्रैव द्रष्टव्याः । 'जम्बूकः फेरवे नीचे पश्चिमाशापतावपि' इति मेदिनीविश्वप्रकाशौ । 'बन्धूकं बन्धुजीवे स्याद्बन्धूकः पीतसारके' इति च ॥ ४८२ शलिमण्डि-। शल गतौ, मडि भूषायां हर्षे च । 'सौगन्धिकं तु कह्लारम्' इत्याद्युपक्रम्य 'शालूकमेषां कन्दः स्यात्' इत्यमरः । एवं च सौगन्धिकादीनां कुमुदकैरवान्तानां कन्दो मूलं शालूकमित्यर्थः । मण्डते वर्षासमयमिति मण्डूको भेकः ॥ ४८३ नियो मिः । णीञ् प्रापणे । नयति चक्रमिति नेमिश्चक्रावयवः । 'नेमिर्ना तिनिशे कूपत्रिकाचक्रान्तयोः स्त्रियाम्' इति मेदिनी । बाहुलकादन्यतोऽपि—या प्रापणे, 'यामिः स्वसृकुलस्त्रियोः' इत्यन्तस्थादौ रभसः । 'जामिः स्वसृकुलस्त्रियोः' इति चवर्गतृतीयादावजयकोशः । 'चवर्गादिरपि प्रोक्तो जामिः स्वसृकुलस्त्रियोः' इति द्विरूपेषु विश्वः ॥ ४८४ अर्तेरूच्च । ऋ गताविस्मान्मिः, धातोरूकारादेशश्च । उच्चेति वक्तुमुचितम्, रपरत्वे 'हलि च' इति दीर्घसंभवात् ॥ 'ऊर्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः । वस्त्रसंकोचरेखायां वेदनापीडयोरपि' इति मेदिनी ॥ ४८५ भुवः-। भवतेर्मिः कित्स्यात् । भवन्ति भूतान्यस्यामिति भूमिः । 'भूमिर्वसुन्धरायां स्यात्स्थानमात्रेऽपि च स्त्रियाम्' इति मेदिनी । 'भूर्भूमिरचलानन्ता' इत्यादिरमरः ॥ ४८६ अश्नोतेः । अशू व्याप्तौ, अस्मान्मिः, धातो रशादेशश्च । 'रश्मिः पुमान् दीधितौ स्यात्पक्ष्मप्रग्रहयोरपि' इति मेदिनी ॥ ४८८ वीज्या-। वी गतौ, ज्या वयोहानौ, ज्वर रोगे । अमरोक्तमाह—वेणिः स्यादित्यादि । 'कृदिकारात्–' इति ङीष् । 'वेणी केशस्य बन्धने । नद्यादेरन्तरे देवताडे' इति मेदिनी । 'वेणी खरागरी देवताडो जीमूत इत्यपि' इत्यमरः । 'ज्यानिर्हानौ स्रवन्त्यां च' इति विश्वः । 'ज्वरत्वर–' इत्युपधाया वकारस्य च ऊठ् । जूर्णिः स्त्रीरोगः ॥ ४८९ सृवृषि-। सृ गतौ, वृषु सेचने, आभ्यां निः कित्स्यात् । 'अङ्कुशोऽस्त्री सृणिः स्त्रियाम्' इत्यमरः । 'सृणिः स्यादङ्कुशे पुमान्' इति कोशान्तरम् । अत एव 'आरक्षमग्नमवमत्य सृणिं शिताग्रम्' इति माघे पुंलिङ्गप्रयोगः । वृष्णिस्तु यादवे मेषे वृष्णिः पाखण्डचण्डयोः' इति विश्वः । 'ऐन्द्रे वृष्णिं षोडशिनि तृतीयम्' इति श्रुतौ वृष्णिं मेषमित्यर्थः ॥—अङ्गेः । अगिर्गत्यर्थः । 'अग्निर्वैश्वानरेऽपि स्याच्चित्रकाख्यौषधौ पुमान्' इति मेदिनी ॥ ४९१ वहि-। वह प्रापणे, श्रिञ् सेवायाम्, श्रु श्रवणे, यु मिश्रणे, द्रु गतौ, ग्लै म्लै हर्षक्षये, ओहाक् त्यागे, ञित्वरा संभ्रमे, एभ्यो निः प्रत्ययः स्यात्स च नित् । 'वह्निर्वैश्वानरेऽपि स्याच्चित्रकाख्यौषधौ पुमान्' इति मेदिनी । श्रेणिः पङ्क्तिः । 'निःश्रेणिस्त्वधिरोहिणी । श्रेणिः स्त्रीपुंसयोः पङ्क्तौ समाने शिल्पिसंहतौ' इति मेदिनी । श्रोणिः कटिप्रदेशः । 'कटिः श्रोणिः ककुद्मती' इत्यमरः । योनिर्भगम् । 'योनिः स्त्रीपुंसयोश्च स्यादाकरे स्मरमन्दिरे' इति मेदिनी । द्रोणिः सेचनी । 'कृदिकारात्–' इति ङीषि—द्रोणी । 'द्रोणोऽस्त्रियामाढके स्यादाढकादिचतुष्टये । पुमान् कृपीपतौ कृष्णकाके स्त्री नीवृदन्तरे' इति मेदिनी । ग्लानिर्दौर्बल्यम् । हानिरपचयः क्षयश्च । तूर्णिर्मानः ॥ ४९२ घृणि-। घृ सेचने, स्पृश संस्पर्शने, पृषु सेचने, चर गतौ, डुभृञ् धारणपोषणयोः । निप्रत्ययो गुणाभावश्च निपात्यते । 'घृणिः पुनः । अंशुज्वालातरङ्गेषु' इति हेमचन्द्रः । 'पृश्निरल्पतनौ' इत्यमरः । 'पार्ष्णिः स्यादुन्मदस्त्रियाम् । स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च' इति मेदिनी ॥—भूर्णिरिति । 'तक्मा न भूर्णिः' इति मन्त्रस्य भाष्ये तु भूर्णिर्धारकः पोषको वेति व्याख्यातम् ॥ ४९३ वृदृ-। वृञ् वरणे, दृङ् आदरे, स्त्रियां 'कृदिकारात्–' इति ङीष् । दर्वी ॥ ४९४ जॄशॄ । जॄ वयोहानौ, शॄ हिंसायाम्, स्तॄञ् आच्छादने, जागृ निद्राक्षये, क्विनः

१ अस्य गणसूत्रत्वं प्रायः सम्मतम् । 'उलूकादयश्च' इत्यस्य व्याख्यावसरे मनोरमायां शमेरित्येतद्व्याख्याय 'जम्बूकादयोऽप्यत्रैव द्रष्टव्याः' इत्युक्तम् ।

जागृविर्नृपः ॥ ४९५ । **दिवो द्वे दीर्घश्चाभ्यासस्य ।** 'दीदिविः स्वर्गमोक्षयोः' ॥ ४९६ । **कृविघृष्विछविस्थिविकिकीदिवि ।** कृविस्तन्तुवायद्रव्यम् । घृष्विर्वराहः । छास्थोर्ह्रस्वत्वं च-छविर्दीप्तिः, स्थविस्तन्तुवायः । दीव्यतेः किकीपूर्वात्-किकीदिविश्चाषः । बाहुलकाद्ध्रस्वदीर्घयोर्विनिमयः-'चाषेण किकिदीविना' ॥ ४९७ । **पातेर्डतिः ।** पतिः ॥ ४९८ । **शकेर्ऋतिन् ।** शकृत् ॥ ४९९ । **अमेरतिः ।** अमतिः कालः ॥ ५०० । **वहिवस्यर्तिभ्यश्चित् ।** वहतिः पवनः । 'वसतिर्गृहयामिन्योः' । अरतिः क्रोधः ॥ ५०१ । **अञ्चेः को वा ।** अङ्कतिः-अञ्चतिर्वातः ॥ ५०२ । **हन्तेरंह च ।** हन्तेरतिः स्यादंहादेशश्च धातोः । हन्ति दुरितमनया अंहतिर्दानम् । 'प्रादेशनं निर्वपणमपवर्जनमंहतिः' ॥ ५०३ । **रमेर्नित् ।** 'रमतिः कालकामयोः' ॥ ५०४ । **सूङः क्रिः ।** सूरिः ॥ ५०५ । **अदिशदिभूशुभिभ्यः क्रिन् ।** अद्रिः । शद्रिः शर्करा । भूरि प्रचुरम् । शुभ्रिर्ब्रह्मा ॥ ५०६ । **वङ्क्र्यादयश्च ।** क्रिन्नन्ता निपात्यन्ते । वङ्क्रिर्वाद्यभेदो गृहदारु पार्श्वास्थि च । वप्रिः क्षेत्रम् । 'अंह्रिरङ्घ्रिश्च चरणः' । तदिः सौत्रो धातुः, तन्द्रिर्मोहः । बाहुलकाद्गुणः, मेरिः ॥ ५०७ । **राशदिभ्यां त्रिप् ।** रात्रिः । शत्रिः कुञ्जरः ॥ ५०८ । **अदेस्त्रिनिश्च ।** चात्त्रिप् । अत्री, अत्रिणौ, अत्रिणः । अत्रिः, अत्री, अत्रयः ॥ ५०९ । **पतेरत्रिन् ।** पतत्रिः पक्षी ॥ ५१० । **मृकणिभ्यामीचिः ।** मरीचिः । कणीचिः पल्लवो निनादश्च ॥ ५११ ।

---

कित्वात् 'ऋत इद्धातोः' इति इत्वे रपरत्वे **जीविरि**त्यादि ॥ ४९५ **दिवो-।** 'दिवु क्रीडादौ' अस्मात् क्विन्, शित्वाद्गुणाभावः **'दीदिवि**र्धिषणान्नयोः' इति विश्वः । 'दीदिविर्ना धिषणेऽन्न तदस्त्रियाम्' इति मेदिनी । धिषणो बृहस्पतिः । 'दीदिविर्द्वादशकरश्चक्षुः सुरगुरुर्गुरुः' इति त्रिकाण्डशेषः । 'दीदिविर्द्वादशार्चिः स्याज्जीवः प्राक्फल्गुनीसुतः' इति हारावली । 'ओदनोऽस्त्री सदीदिविः' इत्यमरः । अत्र सदीदिविः=दीदिविसहित इति व्याख्यानं न्याय्यम् । अत्र स इति विशेषणाद्दीदिविः पुंलिङ्ग इति केषांचिद्व्याख्यानं नादर्तव्यम् । स इति छेदने तु अस्त्रियामिति न लभ्येत । ततश्च 'अन्ने तदस्त्रियाम्' इति पूर्वोक्तमेदिनीग्रन्थो विरुध्येतेति ध्येयम् । 'गोपामृतस्य दीदिविम्' इति मन्त्रे तु द्योतमानमित्यर्थः ॥ **४९६ कृवि-।** डुकृञ् करणे, घृषु सेचने, छो छेदने, ष्ठा गतिनिवृत्तौ, दिवु क्रीडादौ, एते क्विन्नन्ता निपात्यन्ते ॥**—घृष्विर्वराह इति ।** 'उग्रस्य यूनः स्थविरस्य घृष्वेः' इति मन्त्रे तु घृष्वेः कामानां वर्षकस्येत्यर्थ इति व्याख्यातम्, घृषु सेचने इति धात्वर्थानुगमात् । 'छविः शोभारुचोर्योषित्' इति मेदिनी । 'अथ चाषः किकीदिविः' इत्यमरः ॥**—विनिमय इति ।** 'किकीदिविः किकिदिविः' इति द्विरूपकोशः ॥ **४९७ पातेः-।** पा रक्षणे डित्त्वाट्टिलोपः । 'पतिर्धवे ना त्रिष्वीशे' इति मेदिनी ॥ **४९८ शकेः-।** शक्लृ शक्तौ । 'उच्चारावस्करौ शमलं शकृत् । गूथं पुरीषं वर्चस्कमस्त्री विष्ठाविशौ स्त्रियाम्' इत्यमरः ॥ **४९९ अमेः-।** अम गतौ । 'अथामतिः पुंसि हिमदीधितिकालयोः' इति मेदिनी ॥ **५०० वहि-।** वह प्रापणे, वस निवासे, ऋ गतौ । **'वहतिः** सचिवे गवि' इति विश्वः । **'वसतिः** स्यात् स्त्रियां वासे यामिन्यां च निकेतने' इति मेदिनी ॥ **५०१ अञ्चेः-।** अञ्चु गतौ, अस्मादतिः स्यात्ककारश्चान्तादेशो विकल्पेन ॥ **५०२ हन्तेः-।** हन हिंसागत्योः, अमरोक्तिमाह**—प्रादेशनमित्यादि** ॥ **५०३ रमेः-।** रमतेरतिः स्यात्स च नित् । 'रमतिर्नायके नाके पुंसि स्यात्' इति मेदिनी । नित्त्वमाद्युदात्तार्थम् । 'रन्तिरसि रमतिरसि' ॥ **५०४ सूङः-।** षूङ् प्राणिप्रसवे । कित्वाद्गुणाभावः । 'धीमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः' इत्यमरः । दशपाद्यां तु 'सुवोरिन् दीर्घश्च' इति पाठः । तत्र रिनो नकारो नानुबन्धः, उत्तरसूत्रे क्रिन्प्रत्ययारम्भात् । अनुबन्धत्वे हि लाघवादिहैव क्रिन्नुच्येत । तथा च-सूरी, सूरिणौ, सूरिण इत्यादि रूपम् । अत एवाभिधानमालायां-सूरीति नान्तमुदाहृतमित्यवधेयम् । दशपादीवृत्तिकारैस्तु नित्त्वं स्वीकृत्य सूरिरित्युदाहृतं, तदेतेन प्रत्युक्तम् । स्वरविरुद्धमपि, 'सदा पश्यन्ति सूरयः' 'विसूरयो दधतो विश्वमायुः' इत्यादौ सूरिशब्दस्यान्तोदात्तत्वदर्शनात् ॥ **५०५ अदि-।** अद भक्षणे, शद्लृ शातने, भू सत्तायाम्, शुभ शुम्भ शोभार्थे । 'अद्रयो द्रुमशैलार्काः' इत्यमरः । 'भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि । नपुंसकं सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गकः' इति मेदिनी ॥ **५०६ वङ्क्र्यादयश्च ।** वकि कौटिल्ये, टुवप् बीजसन्ताने । निपातनात्संप्रसारणाभावः । अंहिर्भाषार्थश्चुरादिण्यन्तः । अघि गतौ गत्यारम्भे च । त्रिभी भये ॥**—तन्द्रिरिति ।** 'कृदिकारात्-' इति पक्षे ङीप् । 'तन्द्री निद्राप्रमीलयोः' इति मेदिनी । 'तन्द्री तन्द्रिश्च तन्द्रायाम्' इति द्विरूपकोशः । 'विभज्य नक्तंदिवमस्ततन्द्रिणा' इति भारविः ॥ प्रत्ययस्य कित्त्वाद्गुणाभावमाशङ्क्याह**—बाहुलकादिति** ॥ **५०७ राशदि-।** रा दाने, शद्लृ शातने । **'शत्रि**र्नाम्भोधरे विष्णौ' इति मेदिनी । 'शत्रिमग्न उपमां केतुमर्यः' इति मन्त्रस्य वेदभाष्ये तु उपमां=उपमानभूतं केतुं=प्रख्यातं शत्रिम्=एतन्नामकं राजर्षिमिति व्याख्यातम् ॥ **५०८ अदेः-।** अद भक्षणे, अत्री भक्षकः । अत्रिः=ऋषिविशेषः । उज्ज्वलदत्तादयस्तु-अदेस्त्रिनिति पठित्वा अत्रिरित्युदाजहार । तन्न । त्रिपैवेष्टसिद्धौ प्रत्ययान्तरवैयर्थ्यात् । गोवर्धनस्तु-अदेस्त्रिन्निचेति पठित्वा निदिति वचनान्नकारस्य नेत्संज्ञा, अत्री अत्रिणौ अत्रिण इत्याह । तदपि न । नित्त्वे सत्याद्युदात्तत्वापत्तेः । न चेष्टापत्तिः । जहीन्या अत्रिणं पर्णि' । 'अग्ने हंसिन्या अत्रिणम्' इत्यादावन्तोदात्तस्य निर्विवादत्वात् । अत एव 'न लुमताङ्गस्य' इति सूत्रे 'अदेस्त्रिनिश्च' इत्येव कैयटोऽप्याहेति दिक् ॥ **५०९ पतेः-।** पत्लृ गतौ ॥**—पतत्रिरिति ।** पक्षवाचकात्पतत्रशब्दान्मत्वर्थे इनि तु नान्तः । पतत्री पतत्रिणौ पतत्रिण इत्यादि ॥ **५१० मृकणि-।** मृङ् प्राणत्यागे, कण शब्दार्थः-कण गतौ ।

**श्वयतेश्चित्** । श्वयीच्चिर्व्याधिः ॥ ५१२ । **वेञो डिच्च** । वीच्चिस्तरङ्गः । नञ्समासे–अवीच्चिर्नरकभेदः ॥ ५१३ । **ऋहनिभ्यामूषन्** । अरूषः सूर्यः । हनूषो राक्षसः ॥ ५१४ । **पुरः कुषन्** । 'पुर अग्रगमने' । पुरुषः । 'अन्येषामपि–' ३५३९ इति दीर्घः, पूरुषः ॥ ५१५ । **पॄनहिकलिभ्य उषच्** । परुषम् । नहुषः । कलुषम् ॥ ५१६ । **पीयेरूषन्** । पीय इति सौत्रो धातुः, पीयूषम् । बाहुलकाद्गुणे–'पेयूषोऽभिनवं पयः' ॥ ५१७ । **मस्जेर्नुम् च** । मञ्जूषा ॥ ५१८ । **गडेश्च** । गण्डूषः । गण्डूषा ॥ ५१९ । **अर्तेररुः** । अररुः शत्रुः, अररू, अररवः ॥ ५२० । **कुटः किच्च** । कुटरुर्वस्त्रगृहम् । कित्वप्रयोजनं चिन्त्यम् ॥ ५२१ । **शकादिभ्योऽटन्** । 'शकटोऽस्त्रियाम्', शकिर्गत्यर्थः । कङ्कटः सन्नाहः । देवटः शिल्पी । करटः । इत्यादि ॥ ५२२ । **कॄकदिकडिकटिभ्योऽम्बच्** । करम्बं व्यामिश्रम् । कदि-कडी सौत्रौ । कदम्बो वृक्षभेदः । कडम्बोऽग्रभागः । कटम्बो वादित्रम् ॥ ५२३ । **कदेर्णित्पक्षिणि** । कादम्बः कलहंसः ॥ ५२४ । **कलिकर्द्योरमः** । कलमः । कर्दमः ॥ ५२५ । **कुणिपुल्योः किन्दच्** । 'कुण शब्दोपकरणयोः' कुणिन्दः शब्दः । पुलिन्दो जातिविशेषः ॥ ५२६ । **कुपेर्वा वश्च** । कुपिन्दकुविन्दौ तन्तुवाये ॥ ५२७ । **नौ षञ्जेर्घथिन्** । निषङ्गथिरालिङ्गकः ॥ ५२८ । **उद्यतेश्चित्** । उदरथिः समुद्रः ॥ ५२९ । **सर्तेर्णिच्च** । सारथिः ॥ ५३० । **खर्जिपिञ्जादिभ्य ऊरोलचौ** । खर्जूरः । कर्पूरः । वल्लूरं शुष्कमांसम् । पिञ्जूलं कुशवर्तिः ।

---

'मरिच्चिः कृपणे दीप्तौ ऋषिभेदे च दृश्यते' इति विश्वः । '**मरीच्चि**र्मुनिभेदे ना गभस्तावनपुंसकम्' इति मेदिनी । '**कणीच्चिः** पुष्पितलतागुञ्जयोः शकटे स्त्रियाम्' इति च ॥ ५११ **श्वयतेः**–। टुओश्वि गतिवृद्ध्योः, अस्मादीच्चिप्रत्ययश्चित्स्यात् ॥ ५१२ **वेञः**–। वेञ् तन्तुसन्ताने । अस्मादीच्चिर्डित्स्यात् । '**वीच्चिः** स्वल्पे तरङ्गे स्यादवकाशे सुखे द्वयोः' इति विश्वमेदिन्यौ ॥ ५१३ **ऋहनि**–। ऋ गतौ, हन हिंसागत्योः ॥ ५१४ **पुरः** । कुष निष्कर्षे । कित्वाद्गुणाभावः । '**पुरुषः** पुरुषे सांख्यज्ञे च पुंनागपादपे' इति विश्वमेदिन्यौ ॥ ५१५ **पॄनहि**–। पॄ पालनपूरणयोः, णह बन्धने, कल शब्दसंख्यानयोः । '**परुषं** कर्वुरे रुक्षे निष्ठुरोक्तौ च वाच्यवत्' इति मेदिनी । '**नहुषो** राजविशेषे नागभिद्यपि' इति हेमचन्द्रः । उषचश्चित्त्वान्नहुषशब्दस्यान्तोदात्तत्वे प्राप्ते ग्रामादित्वाद्वृषादित्वाद्वा आद्युदात्तत्वमित्याहुः । एतच्च 'देवा अकृण्वन्नहुषस्य विश्वम्' इति मन्त्रस्य भाष्ये स्पष्टम् । '**कलुषं** त्वाविलैनसोः' इति विश्वः ॥ ५१६ **पीयेः**–। 'पीयूषममृतं सुधा' इत्यमरः । '**पीयूषं** सप्तदिवसावधि क्षीरे तथाऽमृते' इति मेदिनी ॥ अमरोक्तिमाह—**पेयूष इत्यादि** ॥ ५१७ **मस्जेः**–। टुमस्जौ शुद्धौ, अस्मादूषन्स्यान्नुमागमश्च धातोः । 'मिदचोऽन्त्यात्परः', सस्य श्चुत्वेन शः, तस्य जश्त्वेन जः, तस्य 'झरो झरि–' इति वालोपः । लोपाभावपक्षे जकारद्वयम् । मञ्जूषा काष्ठमयं द्रव्यम् । पेटक इति यावत् । 'पिटकः पेटकः पेटा मञ्जूषा' इत्यमरः ॥ ५१८ **गडेः**–। गडि वदनैकदेशे । 'गण्डूषो मुखपूर्तीभपुष्करप्रसृतोन्मिते' इति मेदिनी ॥ ५१९ **अर्तेः**–। ऋ गतौ, उकारान्तोऽयं प्रत्ययो न तु सकारान्त इति स्फोरयति–अररू, अररवः इत्यनेन । न चोकारान्तत्वे विवदितव्यम् । 'कंचिद्यावीररुं शूरमर्त्यम्' 'अपाररुमदेवयजनो जहि' इत्यादिमन्त्रेषु तथा दर्शनात् । अत्र **व्याचक्षते**—'मा नः शंसो अररुषः' इति मन्त्रस्य भाष्ये सान्तोऽयमिति माधवेनोक्तं यत्तत्प्रौढिवादमात्रं न तु वास्तवम्, अररुष इति पदस्य आद्युदात्तत्वानुपपत्तिप्रसङ्गात् । तस्माद्रातेः 'लिटः क्वसुश्च' इति क्वसौ ररिवानित्यनेन नञ्समासे 'ङस्यररुष' इति व्याख्येयम् । ततश्च 'तत्पुरुषे तुल्यार्थ–' इत्यादिना पूर्वपदप्रकृतिस्वरे सत्याद्युदात्तत्वं सिध्यति । 'गुरुद्वेषो अररुषे दधन्ति' इत्यत्र स्वयमेव रातेः क्वसन्तस्य नञ्समास इत्यादि व्याख्यानात् । 'यो नो अग्ने अररिवां अघायुः' इत्यादिमन्त्रान्तरसंभवाच्चेति ॥ ५२० **कुटः**–। कुट कौटिल्ये, अस्मादरुः स्यात्स च कित् ॥—**चिन्त्यमिति** । 'गाङ् कुटादिभ्यः–' इति ङित्त्वेनैव गुणाभावासिद्धेरिति भावः ॥ ५२१ **शका । शकिर्गत्यर्थ इति** । शकॢ शक्तावित्यस्मादटन्नित्येके । 'क्लीबेऽनः **शकटो**ऽस्त्री स्यात्' इत्यमरः ॥—**देवट इति** । देवृ देवने ॥—**करट इति** । डुकृञ् करणे, कॄ विक्षेपे इत्यस्माद्वा अटन् । 'काकेभगण्डौ **करटौ**' इत्यमरः । 'करटो गजगण्डे स्यात्कुसुम्भे निन्द्यजीविनि । एकादशाहादिश्राद्धे दुर्दुरूढेऽपि वायसे' इति मेदिनी ॥ ५२२ **कॄकदि**–। डुकृञ् करणे, कटे वर्षावरणयोः । '**करम्बो** मिश्रिते बान्तो भान्तस्तु दधिसक्तुषु' इति विश्वः । '**कदम्बं** निकुरम्बे स्यान्नीपसर्षपयोः पुमान्' इति च ॥ ५२३ **कदेः**–। '**कादम्बः** स्यात्पुमान्पक्षिविशेषे सायकेऽपि च' इति मेदिनी ॥ ५२४ **कलि**–। कल संख्याने, कर्द कुत्सिते शब्दे । '**कलमः** पुंसि लेखन्यां शालौ पाटच्चरेपि च' इति मेदिनी ॥ ५२५ **कुणिपुल्योः**–। पुल महत्त्वे ॥ ५२६ **कुपेः**–। कुप क्रोधे । अस्मात्किदच् स्यात्, वकारश्चान्तादेशो विकल्पेन । 'तन्तुवायः **कुविन्दः** स्यात्' इत्यमरः । **बाहुलकात्**—अल भूषणादौ । अलिन्दम् । 'यस्यामलिन्देषु न चक्रुरेव मुग्धाङ्गनागोमयगोमुखानि' इति माघः ॥ ५२७ **नौ षञ्जेः** । षञ्ज सङ्गे । निपूर्वादस्मात् घथिन्स्यात् । 'उपसर्गात्सुनोति–' इत्यादिना षत्वम् । 'चजोः–' इति कुत्वम् । 'आभुरस्य निषङ्गथिः' । रथकूबर इत्यर्थः ॥ ५२८ **उद्य**–। ऋ गतौ उत्पूर्वादस्मात् घथिन् स्यात् स च चित् ॥ ५२९ **सर्तेः**–। सृ गतौ अस्मात् घथिन् णित्स्यात् । 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' इत्यमरः ॥ ५३० **खर्जि**–। खर्ज मार्जने, पिञ्ज हिंसायाम् । खर्जादिभ्यः पिञ्जादिभ्यश्च यथाक्रमं ऊरऊलचौ स्तः । '**खर्जूरं** रूप्यफलयोः खर्जूरः कीटवृक्षयोः' इति मेदिनीहेमचन्द्रौ । कृपू सामर्थ्ये ।

(ग) लङ्गेर्वृद्धिश्च । लाङ्गूलम् । कुसूलः । (ग) तमेर्वुग्वृद्धिश्च । ताम्बूलम् । (ग) शृणातेर्दुग्वृद्धिश्च । शार्दूलः । (ग) दुकोः कुक्च दुकूलम् । कुकूलम् ॥ ५३१ । कुवश्चट् दीर्घश्च । कूची चित्रलेखनिका ॥ ५३२ । समीणः । समीचः समुद्रः । समीची हरिणी ॥ ५३३ । सिवेष्टेरू च । सूचो दर्भाङ्कुरः । सूची ॥ ५३४ । शमेर्वन् । शम्बो मुसलम् । ५३५ । उल्बादयश्च । वन्नन्ता निपात्यन्ते । 'उच समवाये' चस्य लत्वं गुणाभावश्च, उल्बो गर्भाशयः । शुल्बं ताम्रम् । बिम्बम् ॥ ५३६ । स्थः स्तोऽम्बजवकौ । तिष्ठतेरम्बच् अबक एतौ स्तस्तादेशश्च । 'स्तम्बो गुच्छस्तृणादिनः' । स्तबकः पुष्पगुच्छः ॥ ५३७ । शाशपिभ्यां ददनौ । 'शादो जम्बालशष्पयोः' । शब्दः ॥

५३८ । अब्दादयश्च । अवतीत्यब्दः ॥ (ग) कौतेर्नुम् । कुन्दः ॥ ५३९ । वलिमलितनिभ्यः कयन् । वलयम् । मलयः । तनयः ॥ ५४० । वृह्वोः षुग्दुकौ च । वृषय आश्रयः । हृदयम् ॥ ५४१ । मिपीभ्यां रुः । मेरुः । पेरुः सूर्यः । बाहुलकात्–पिबतेरपि । 'संवत्सरवपुः पारुः पेरुर्वासीर्दिनप्रणीः' ॥ ५४२ । जन्वादयश्च । जत्रु, जत्रुणी । अश्रु, अश्रुणी ॥ ५४३ । रुशातिभ्यां क्रुन् । रुरुर्मृगभेदः । शातयतीति शत्रुः, प्रज्ञादौ पाठात्स्वार्थे ह्रस्वत्वम् ॥ ५४४ । जनिदाच्युसृवृमदिपमिनमिभृञ्भ्य इत्वन्त्वन्त्वन्क्तिन्वक्सकक्ककस्यस्ससटचः । जनित्वौ मातापितरौ । दात्वो दाता । च्यौत्नो गन्ता

बाहुलकात् 'कृपो रो लः' इति लत्वाभावः । 'अथ कर्पूरमस्त्रियाम् । घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका' इत्यमरः । वल्ल संवरणे, वल्लूरम् । 'उत्तप्तं शुष्कमांसं स्याद्वल्लूरं त्रिलिङ्गकम्' इत्यमरः । एवं शाल्लूरादयो द्रष्टव्याः । 'भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः' इत्यमरः ॥ (ग) लङ्गेः–। लगिर्गत्यर्थः । 'लाङ्गूलं पुच्छशेफसोः' इति मेदिनी ॥—कुसूल इति । कुस श्लेषणे, दन्त्यसकारवान् । 'कुसूलं च कुसीदं च मध्यदन्त्यमुदाहृतम्' इति विश्वः । ताम्बूलादयोऽप्यत्र द्रष्टव्याः । तमु ग्लानौ, वुग् दीर्घत्वं च । 'ताम्बूली नागवल्ल्यां स्त्री क्रमुके तु नपुंसकम्' इति मेदिनी । शॄ हिंसायाम्, [illegible] मश्च । 'शार्दूलो राक्षसान्तरे । व्याघ्रे च पशुभेदे च सत्तमे तूत्तरस्थिते' इति मेदिनीविश्वप्रकाशौ । उत्तरस्थितः–उत्तरपदभूतः । शार्दूलशब्दस्तु श्रेष्ठवाची राजशार्दूल इति यथा । दु गतौ, कुङ् शब्दे, अनयोः कुक् च । 'दुकूलं श्लक्ष्णवस्त्रे स्यात् क्षौमे च' इति मेदिनी । 'कुकूलं शङ्कुसङ्कीर्णे श्वभ्रे ना तु तुषानले' इति विश्वमेदिन्यौ । 'शिरीषादपि मृद्वङ्गी केयमायतलोचना । अयं क्व च कुकूलाग्निकर्कशो मदनानलः' इति प्रयोगश्च ॥ ५३१ कुवः–। कु शब्दे, कुचः स्तनः । 'कुचकूचौ स्तनौ मतौ' इति विश्वः ॥—कूचीति । टित्त्वान्ङीप् ॥ ५३२ समीणः–। इण् गतौ अस्मात्सम्युपपदे चट् स्याद्दीर्घश्च धातोः ॥ ५३३ सिवेः–। षिवु तन्तुसन्ताने, अस्माच्चट् प्रत्ययः स्यात्टेरूत्वं च, टित्त्वान्ङीप् । 'सूची तु सीवनद्रव्येऽप्याङ्गिकाभिनयान्तरे' इति मेदिनी ॥ ५३४ शमेः–। शम उपशमे । 'शम्बः स्यान्मुसलाग्रस्थलोहमण्डलके पवौ । शुभान्विते त्रिषु' इति विश्वमेदिन्यौ ॥ ५३५ उल्बा । उल्बमिति । 'गर्भाशयो जरायुः स्यादुल्बं च कललोऽस्त्रियाम्' इत्यमरः । शुच शोके, चस्य लत्वं गुणाभावश्च प्राग्वत्, 'शुल्बं ताम्रे यज्ञकर्मण्याचारे जलसंनिधौ' इति मेदिनीहेमचन्द्रौ । वी गतिप्रजनकान्त्यसनखादनेषु, अस्य नुमागमो ह्रस्वत्वं च । बवयोरभेदात्–बिम्बम् । 'बिम्बस्तु प्रतिबिम्बे स्यान्मण्डले पुंनपुंसकम् । बिम्बिकायाः फले क्लीबं कृकलासे पुनः पुमान्' इति मेदिनी ॥ ५३६ स्थः स्तः–। ष्ठा गतिनिवृत्तौ, 'स्तम्बो गुल्मे तृणादीनामप्रकाण्डद्रुमेऽपि च' इति विश्वः । 'स्तम्बोऽप्रकाण्डद्रुमगुच्छयोः' इति मेदिनी । 'स्याद्गुच्छकस्तु स्तबकः' इत्यमरः ॥ ५३७ शाशपि–। शो तनूकरणे, शप आक्रोशे, 'शादो जम्बालशष्पयोः' इत्यमरः । 'शष्पं बालतृणं घासः' इति च । 'शादः स्यात्कर्दमे शष्पे' इति मेदिनी । शब्दो निनादः ॥ ५३८ अब्दादयः । एते ददनन्ता निपात्यन्ते । अव रक्षणे, वस्य बः । 'अब्दः संवत्सरे वारिवाहमुस्तकयोः पुमान्' इति मेदिनी ॥ (ग.) कौतेः–। कु शब्दे, 'कुन्दो माघ्येऽस्त्री मुकुन्दभ्रमिनिध्यन्तरेषु ना' इति च मेदिनी ॥ ५३९ वलिमलि–। वल संवरणे संचरणे च, मल मल्ल धारणे, तनु विस्तारे । वलयः कण्ठरोगे ना कङ्कणे पुंनपुंसकम्' इति मेदिनी । 'मलयः पर्वतान्तरे । शैलांशे देश आरामे त्रिवृतायां तु योषिति' इति च । 'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियाम्' इत्यमरः ॥ ५४० वृह्वोः–। वृञ् वरणे, हृञ् हरणे, आभ्यां कयन् स्यात्, यथाक्रमं षुग्दुकावागमौ च भवतः । कयनः कित्त्वं लिह गुणाभावार्थम् । ह्रियते विषयैरिति हृदयं मनः ॥ ५४१ मिपीभ्याम्–। डुमिञ् प्रक्षेपणे, पीङ् पाने । 'मेरुः सुमेरुर्हेमाद्रिः' इत्यमरः । पीयते रसानिति पेरुः ॥—पिबतेरिति–। पा पाने । हट्टचन्द्रोक्तिमाह—संवत्सरवपुरित्यादि ॥ ५४२ जन्वादयः । रुप्रत्ययान्ता निपात्यन्ते । जनी प्रादुर्भावे, नकारस्य तकारः । जत्रुः स्कन्धसन्धिः । 'सन्धी तस्यैव जत्रुणी' इत्यमरः । तस्य पूर्वोक्तस्य स्कन्धस्य सन्धिरित्यर्थः । असु क्षेपणे, अशू व्याप्तौ संघाते च । अस्रु–अश्रु च नयनजलम् । शीङो ह्रस्वत्वं गुगागमश्च, 'शिग्रुर्ना शाकमात्रेऽपि शोभाञ्जनमहीरुहे' इति मेदिनी ॥ ५४३ रुशाति–। रु शब्दे, शद्लृ शातने–ण्यन्तः । 'कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः' इत्यमरः । 'रुरुर्दैत्ये मृगेऽपि च' इति मेदिनी ॥ ५४४ जनिदा–। जनी प्रादुर्भावे, डुदाञ् दाने, च्युङ् गतौ, सृ गतौ, वृञ् वरणे, मदी हर्षे, पम ष्टम अवैकल्ये, णम प्रह्वत्वे शब्दे च, डुभृञ् धारणपोषणयोः । एभ्यो नवभ्यो यथासंख्यं नव स्युः । जनेरित्वन् । जनेरिडागमेनापि जनित्वेति रूपसिद्धाविकारोच्चारणमुत्तरार्थम् ॥—च्यौत्न इति । त्नणो णित्त्वा-

अण्डजः क्षीणपुण्यश्च । सृणिरङ्कुशश्चन्द्रः सूर्यो वायुश्च । वृशः—आर्द्रकं मूलकं च । मत्स्यः । षण्ढः । डित्वाट्टिलोपः, नमतीति नटः शैलूषः । बिभर्ति भरटः कुलालो भृतकश्च ॥ ५४५ । अन्येभ्योऽपि दृश्यन्ते । पेत्वममृतम् । भृशम् ॥ ५४६ । कुसेरुम्भोमेदेताः । कुसुम्भम्, कुसुमम्, कुसीदम्, कुसितो जनपदः ॥ ५४७ । सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः । सनोतेरसिप्रत्यय उपधावृद्धिः, सानसिर्हिरण्यम् । वृञो नुक् च, वर्णसिर्जलम् । पॄ, पर्णसिर्जलगृहम् । 'तड आघाते' तण्डुलाः । 'अकि लक्षणे' उशच्, अङ्कुशः । चषेरालः, 'चषालो यूपकटकः' । इल्वलो दैत्यभेदः । पल्वलम् । जिघृषा, ऋकारस्य इकारः, धिष्ण्यम् । शलेर्यः, शल्यम् । 'वा पुंसि शल्यं शङ्कुर्ना' ॥ ५४८ । मूशक्यविभ्यः क्लः । मूलम् । शक्लः प्रियंवदे । अम्लो रसः । बाहुलकादमेः—अम्लः ॥ ५४९ । माछाससिभ्यो यः । माया । छाया । सस्यम् । बाहुलकात्सुनोतेः, 'सव्यं दक्षिणवामयोः' ॥ ५५० । जनेर्यक् । 'ये विभाषा' २३१९ । जन्यं युद्धम् । जाया भार्या । ५५१ । अघ्न्यादयश्च । यगन्ता निपात्यन्ते । हन्तेर्यक् अडागम उपधालोपश्च, अघ्न्या माहेयी । अघ्न्यः प्रजापतिः । 'कनी दीप्तौ' कन्या । बवयोरैक्यम्, वन्ध्या ।

---

द्धिः ॥—सृणिरिति—। क्तिनः कित्वान्न गुणः । नित्वं तु आद्युदात्तार्थम् । 'सृवृषिभ्यां कित्' इति निप्रत्यये त्वन्तोदात्तः साधितः ॥—वृश इति । शकः कित्वान्न गुणः ॥—मत्स्य इति । स्यप्रत्यये चर्त्वेन दस्य तः । अन्तोदात्तोऽयम् । 'ऋतन्यञ्जि–' इति सूत्रे तु आद्युदात्तः साधितः ॥—षण्ढ इति । बाहुलकात् 'धात्वादेः षः सः' इति षस्य सकारो न । प्रत्ययादेर्डस्य तु प्रयोजनाभावान्नेत्संज्ञा । 'शमेर्ढः' इति सूत्रे तु तालव्यादिः साधितः । 'सायं सायो भवेत्कोशः कोषः षण्ढश्च शण्ढवत्' इति द्विरूपकोशः । 'षण्ढो वर्षवरः' इत्यमरः । 'नटी नल्यौषधी स्त्री स्याच्छैलूषाशोकयोः पुमान्' इति मेदिनी ॥—नट इति । नमतेर्डट् ॥—भरट इति । बिभर्तेरटच् ॥ ५४५ अन्येभ्योऽपि—। इत्वन्नादयोऽनुवर्तन्ते ॥—पेत्वमिति । पा पाने, अस्मादित्वन् ॥—भृशमिति—। भृञः शक् ॥ ५४६ कुसेः—। कुस संश्लेषणे, अस्मादुम्भ उम ईद इत एते प्रत्ययाः स्युः । 'कुसुम्भं हेमनि महारजने ना कमण्डलौ' इति मेदिनी । 'कुसुमं स्त्रीरजोनेत्ररोगयोः फलपुष्पयोः' इति च । 'कुसीदं जीवने वृद्ध्या क्लीबं त्रिषु कुसीदके' इति च । इह सूत्रे तृतीयो ह्रस्वादिर्दीर्घादिश्च तन्त्रेणोपात्तः । 'वृषाकप्यग्नि-' इति सूत्रे ह्रस्वादिरेवेति वृत्तिकारहरदत्तादिग्रन्थोपष्टम्भेन निर्णीतम् । 'पारलौकिककुसीदमसीदत्' इति श्रीहर्षप्रयोगात्तु दीर्घादिरित्यपि ॥ ५४७ सानसि ॥—सनोतेरिति । षणु दाने ॥—वृञो नुक् चेति । वृञ् वरणे, अस्मादसिः । दशपाद्यां तु 'सानसिधर्णसि–' इति पठित्वा 'धृञो नुक् च' धर्णसिर्लोकपाल इति व्याख्यातम् । युक्तं चैतत्, 'धर्णसिं भूरिधायसम्' इत्यादिमन्त्रानुगुणत्वात् ॥—पर्णसिरिति । पॄ पालनपूरणयोः, अस्मादसिप्रत्ययो नुक् च ॥—तण्डुला इति । उलच्प्रत्ययो नुमागमश्च धातोः । 'त्रेधा तण्डुलान्विभजेत्' इह चित्स्वरः । 'तण्डुलः स्याद्विडङ्गे च धान्यादिनिकरे पुमान्' इति मेदिनी ॥ अङ्कुश इति । अयमपि चित्स्वरेणान्तोदात्तः । तथा च मन्त्रः—'दीर्घं ह्यङ्कुशं यथा' इति 'अङ्कुशोऽस्त्री सृणिः स्त्रियाम्' इत्यमरः ॥—चषेराल इति । चष भक्षणे, प्रत्ययस्वरेणाद्युदात्तः । उज्ज्वलदत्तस्त्वालजिति चितमाह । तन्न । 'चषालं ये अश्वयूपाय तक्षति', 'चषालवन्तः स्वरवः पृथिव्याम्' इत्यादौ चित्स्वरादर्शनात् । अमरोक्तिमाह—चषाल इति ॥—इल्वल इति । इल स्वप्नप्रेरणयोः, वलच् गुणाभावः । 'इल्वलस्तारका राजभेदे ना दैत्यमत्स्ययोः' इति मेदिनी । 'इल्वलास्तच्छिरोदेशे तारका निवसन्ति याः' इत्यमरः । पा पाने, अस्माद्वलच् लुगागमः ह्रस्वत्वं च । पिबन्त्यस्मिन्निति पल्वलमल्पसरः । 'वेशन्तः पल्वलं चाल्पसरः' इत्यमरः ॥—इकार इति । रपरत्वाभावो ण्यप्रत्ययश्चेति बोध्यम् । 'धिष्ण्यं स्थाने गृहे भेऽग्नौ' इत्यमरः । 'धिष्ण्यं स्थानाग्निसद्मसु । ऋक्षे शक्तौ च' इति मेदिनी ॥—शलेः—। शल गतौ । 'शल्यं तु न स्त्रियां शङ्कौ क्लीबं क्ष्वेडेषु तोमरे । मदनद्रुश्वाविधोर्ना' इति मेदिनी । 'धिष्ण्यं स्थाने च ऋक्षे च धिष्ण्योऽग्नौ धिष्ण्यमालये' इति धरणिः ॥—शलेः—। शल गतौ । 'शल्यं तु न स्त्रियां शङ्कौ क्लीबं क्ष्वेडेषु तोमरे । मदनद्रुश्वाविधोर्ना' इति मेदिनी ॥ ५४८ मूशकि—। मूङ् बन्धने, शक्लृ शक्तौ, अबि शब्दे । 'मूलं शिफाऽऽद्ययोः । मूलं वित्तेऽन्तिके' इति मेदिनी । 'शक्लः प्रियंवदे' इति विशेष्यनिघ्नेऽमरः ॥—अमेरिति । अम रोगे चुरादिण्यन्तः । बाहुलकाद्वेवोपधाह्रस्वः । 'अम्लो रसविशेषे स्यादम्ला चाङ्गेरिकौषधौ' इति मेदिनी ॥ ५४९ माछा—। मा माने, छो छेदने, षस स्वप्ने । 'माया स्याच्छाम्बरीबुद्ध्योर्मायः पीताम्बरेऽसुरे' इति मेदिनी । 'छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः । पालनोत्कोचयोः कान्तिसच्छोभापङ्क्तिषु स्त्रियाम्' इति विश्वमेदिन्यौ । 'वृक्षादीनां फलं सस्यम्' इत्यमरः ॥—सुनोतेरिति । षुञ् अभिषवे, 'सव्यं वामे प्रतीपे च' इति मेदिनी ॥ ५५० जनेः । जन जनने । यकः कित्वमुत्तरार्थम् । जन्यं हट्टे परीवादे सङ्ग्रामे च नपुंसकम् । जन्या मातृवयस्यायां जन्यः स्याज्जनके पुमान् । त्रिषूत्पाद्यजनित्रोश्च नवोढाज्ञातिभृत्ययोः । स्निग्धे' इति मेदिनी । आत्वपक्षे रूपमाह—जायेति ॥ ५५१ अघ्न्या—। अघ्न्य इति । यकः कित्वात् 'गमहन' इत्युपधालोपे 'हो हन्तेः–' इति कुत्वेन हस्य घः । अडागममनुक्त्वा नञ्पूर्वाद्धन्तेर्यगित्यन्ये ॥—अघ्न्येति । स्त्रियां टाप् । 'माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी । अर्जुन्यघ्न्या रोहिणी स्यात्' इत्यमरः । संपूर्वाद्ध्याञो यक्, आतो लोपश्च । 'संध्या पितृप्रसूनद्यन्तरयोर्युगसन्धिषु' इति मेदिनी । 'कन्या कुमारिकानार्योरोषधीराशिभेदयोः' इति विश्वमेदिन्यौ ॥—वन्ध्येति । बन्ध बन्धने । 'वन्ध्यस्त्वफलवृक्षादौ स्त्रियां

५५२ । स्नामदिपद्यर्तिपृशकिभ्यो वनिप् । स्नावा रसिकः । मद्वा शिवः । पद्वा पन्थाः । 'अर्वा तुरङ्गगर्ह्ययोः' । पर्वा ग्रन्थिः प्रस्तावश्च । शक्वा हस्ती । ङीब्रौ, शक्वरी अङ्गुलिः ॥ ५५३ । शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप् । शीवा अजगरः । क्रुश्वा सृगालः । रुह्वा वृक्षः । जित्वा जेता । क्षित्वा वायुः । सृत्वा प्रजापतिः । धृत्वा विष्णुः ॥ ५५४ ध्याप्योः संप्रसारणं च । धीवा कर्मकरः । पीवा स्थूलः ॥ ५५५ । अदेर्ध च । अध्वा ॥ ५५६ । प्र ईरशदोस्तुट् च । प्रेत्वा प्रशत्त्वा च सागरः । प्रेत्वरी प्रशत्त्वरी च नदी ॥ ५५७ । सर्वधातुभ्य इन् । पचिरग्निः । तुडिः । तुण्डिः । वलिः । वटिः । यजिः । देवयजिः । काशत इति काशिः । यतिः । मल्लिः । मल्ली । केलिः । 'मसी परिणामे' मसिः । बाहुलकाद्गुणः, कोटिः । हेलिः । बोधिः । नन्दिः । कलिः ॥ ५५८ । हृपिषिरुहिवृतिविदिछिदिकीर्तिभ्यश्च । 'हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ । चन्द्रे कीले प्लवङ्गे च यमे वाते च कीर्तितः' । पेपिर्वज्रम् । रोहिर्व्रती । वर्तिः । वेदिः । छदिश्छेत्ता । कीर्तिः ॥ ५५९ । इगुपधात्कित् । कृषिः । ऋषिः । शुचिः । लिपिः । बाहुलकाद्वत्वे—लिबिः । 'तूल निष्कर्षे' तूलिः । तूली कूर्चिका ॥ ५६० । भ्रमेः संप्रसारणं च । भृमिर्वातः । बाहुलकात्—भ्रमिः ॥ ५६१ । क्रमितमिशतिस्तम्भ्य इच्च । क्रिमिः ।

स्यादप्रजस्त्रियाम्' इति मेदिनी । कौतेर्यति डुक् । कुड्यमित्युज्वलदत्तः । 'यतो नावः' इत्याद्युदात्तः । ऊन्प्रत्ययान्तोऽन्तोदात्त इत्यन्ये इति 'निवाते वातत्राणे' इति सूत्रे वृत्तिः । ङित्त्वाट्टिलोपे सति कित्करणं व्यर्थं स्यादिति गुणप्रतिषेधार्थात्ककाराद्धकारस्येत्त्वं नेति तत्रैव हरदत्तः । एवं स्थितेऽघ्न्यादयो यगन्ता इति प्रायोवादः ॥ **५५२ स्नामदि-** । ष्णा शौचे, मदी हर्षे, पद गतौ, ऋ गतौ, पॄ पालनपूरणयोः, शक्लृ शक्तौ । '**अर्वा** तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकः' इति मेदिनी । '**पर्व** क्लीबं महे ग्रन्थौ प्रस्तावे लक्षणान्तरे । दर्शप्रतिपदोः संधौ विषुवत्प्रभृतिष्वपि' इति च ॥—**ङीब्राविति** । 'वनो र च' इत्यनेन ॥—**अङ्गुलिरिति** । एतच्च 'आरोहतं दर्शतं शक्वरीर्मम' इत्यादिमन्त्रव्याख्यायां स्पष्टम् । '**शक्वरी** छन्दसो भेदे नदीमेखलयोरपि' इति मेदिनी ॥ **५५३ शीङ्-** । शीङ् स्वप्ने, क्रुश आह्वाने रोदने च, रुह बीजजन्मनि प्रादुर्भावे च, जि जये, क्षि निवासगत्योः, सृ गतौ, धृञ् धारणे ॥ **५५४ ध्याप्योः-** । ध्यै चिन्तायाम्, प्यैङ् वृद्धौ, आभ्यां क्वनिप्स्यात्संप्रसारणं च धातोः । हल इति दीर्घः ॥ **५५५ अदेः-** । अद भक्षणे, अस्मात्क्वनिप् धकारश्चान्तादेशः, अध्वा मार्गः ॥ **५५६ प्र ईर-** । ईर गतौ, शद्लृ शातने, आभ्यां प्रपूर्वाभ्यां क्वनिप्स्यात्तस्य तुडागमश्च ॥—**प्रेत्वरीति** । स्त्रियाम् 'वनो र च' इति ङीब्रौ ॥ **५५७ सर्वधातुभ्य इन्** । डुपचष् पाके, तुडि तोडने—तोडनं=दारणं हिंसनं च, वल संवरणे, वट वेष्टने, यज देवपूजादौ, काशृ दीप्तौ, यती प्रयत्ने । '**यतिः** स्त्री पाठविच्छेदे निकारयतिनोः पुमान्' इति मेदिनी । मल मल्ल धारणे, केलृ चलने भ्वादिः, केला विलासे-कण्ड्वादिः, किल श्वैत्यक्रीडनयोः-तुदादिः, कुट कौटिल्ये, हिल भावकरणे, बुध अवगमने, टुनदि समृद्धौ, कल शब्दसंख्यानयोः । 'गाङ्कुटादिभ्यः-' इति ङित्त्वाद्गुणाभावः—बाहुलकादिति । '**कोटिः** स्त्री धनुषोऽग्रेऽश्रौ संख्याभेदप्रकर्षयोः' इति मेदिनी । '**बोधिः** पुंसि समाधेश्च भेदे पिप्पलपादपे' इति च । '**नन्दिर्द्यूताङ्ग** आनन्दे स्त्री नन्दिकेश्वरे पुमान्' इति च । 'कलिः स्त्री कलिकायां ना शूराजिकलहे युगे' इति च । इह इन्नित्येव सूत्रम् । **सर्वधातुभ्य** इति तु प्रक्षिप्तं व्यर्थं च । एवं 'सर्वधातुभ्यष्ट्रन्' इत्यादावपि बोध्यमित्याहुः । अत एव दशपाद्यां ष्ट्रन्नित्येव पठितमिति दिक् ॥ **५५८ हृपिषि-** । हृञ् हरणे, पिष्लृ संचूर्णने, रुह बीजजन्मनि प्रादुर्भावे च, वृतु वर्तने । **वर्तिर्दीपोपकरणम्** । विद सत्तायाम्, विद्यते पुण्यमस्यामिति **वेदिः**, 'वेदिः परिष्कृता भूमिः' । छिदिर् द्वैधीकरणे, कृत संशब्दने, हरतेः कीर्तयतेश्च 'अच इः' इति प्राप्ते, इतरेषां तु 'इगुपधात्-' इति कप्रत्यये प्राप्ते वचनमिदम् । 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु' इत्यमरः । 'हरिश्चन्द्रार्कवाताश्वशुकभेकयमाहिषु । कपौ सिंहे हरेऽजेंऽशौ शक्रे लोकान्तरे पुमान् । वाच्यवत्पिङ्गहरितोः' इति मेदिनी । 'वर्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः । गात्रानुलेपनी दीपदशादीपेषु योषिति' इति मेदिनी । '**वेदिः** स्यान्मण्डले पुमान् । स्त्रियामङ्गुलिमुद्रायां स्यात्परिष्कृतभूतले' इति च । '**कीर्तिः** प्रसादयशसोर्विकारे कर्दमेऽपि च' इति विश्वः ॥ **५५९ इगुपधात्-** । कृष विलेखने, ऋषी गतौ, शुच शोके, लिप उपदेहे, इजादेरिगुपधाद्धातोरिन्स्यात्स च कित् । केचित्तु इगुपधात्किरिति पठित्वा इणोऽपवादः किप्रत्यय इति व्याचख्युः । तन्न । प्रत्ययस्वरेण ऋष्यादीनामन्तोदात्ततापत्तेः । न चेष्टापत्तिः, 'अग्निः पूर्वेभिर्ऋषिभिः' 'ऋषिर्विप्रः काव्येन' 'शुचिर्विप्रः शुचिः कविः' इत्यादौ ऋषिशुचिप्रभृतीनामाद्युदात्तत्वदर्शनात् । न चैवम् 'अक्षैर्मा दीव्यः कृषिमित्कृषस्व' इत्यादौ कृषिशब्दस्यान्तोदात्तता न सिध्येदिति वाच्यम् । 'इकृष्यादिभ्यः' इतीक्प्रत्यये सत्यन्तोदात्तत्वसिद्धेः । 'ऋषिर्वेदे वसिष्ठादौ दीधितौ च पुमानयम्' इति मेदिनी । 'शुचिर्ग्रीष्माग्निशृङ्गारेष्वाषाढे शुद्धमन्त्रिणि' इति च ॥ **५६० भ्रमेः** । भ्रमु अनवस्थाने, अस्मादिन्स्यात् स च कित् संप्रसारणं च । 'भृमिं चिद्यथा वसवः पुषन्ति' इति मन्त्रे भृमिं=भरणशीलं दरिद्रं जनमिति वेदभाष्यम् ॥ **५६१ क्रमि-** । क्रमु पादविक्षेपे, तमु काङ्क्षायाम्, शतिस्तम्भौ सौत्रौ, एभ्य इन्स्यात्स च कित् । एषामत इकारादेशश्च । **क्रिमिः** क्षुद्रजन्तुः । 'कृमिर्ना क्रिमिवत्कीटे लाक्षायां क्रिमिले खरे' इति विश्वमेदिन्यौ । 'पारतं पारदं वास्तो वासरः क्रिमिवत्कृमिः' इति द्विरूपकोशः ॥—**तिमिरिति** । 'अस्ति मत्स्यस्तिमिर्नाम तथा चास्ति तिमिंगिलः । तिमिंगिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति **लक्ष्मण**' इति

संप्रसारणानुवृत्तेः 'कृमिः' अपि । तिमिर्मत्स्यभेदः । 'शितिर्मेचकशुक्लयोः' । क्षिम्भिः समुद्रः ॥ ५६२ । **मनेरुच्च** । मुनिः ॥ ५६३ । **वर्णेर्वलिश्चाहिरण्ये** । 'वर्णिः' सौत्रः । अस्य वलिरादेशः । 'करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम्' । हिरण्ये तु वर्णिः सुवर्णम् ॥ ५६४ । **वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ्** । वासिश्छेदनवस्तुनि । वापिः, वापी । याजिर्यष्टा । राजिः, राजी । व्राजिर्वातालिः । सादिः सारथिः । 'निवातिलोंहघातिनी' । वाशिरग्निः । वादिर्विद्वान् । वारिर्गजबन्धनी । जले तु क्लीबम् । **बाहुलकात्**—वारिः पथिकसंहतौ ॥ ५६५ । **नहो भश्च** । 'नाभिः स्यात्क्षत्रिये पुंसि' । प्राण्यङ्गे तु स्त्रियाम् । पुंस्यपीति केचित् ॥ ५७६ । **कृषेर्वृद्धिश्छन्दसि** । कार्षिः ॥ ५६७ । **शः शकुनौ** । शारिः शारिका ॥ ५६८ । **कृञ उदीचां कारुषु** । कारिः शिल्पी ॥ ५६९ । **जनिघसिभ्यामिण्** । जनिर्जननम् । घासिर्भक्ष्यमग्निश्च ॥ ५७० । **अज्यतिभ्यां च** । आजिः संग्रामः । आतिः पक्षी ॥ ५७१ । **पादे च** । पदाजिः । पदातिः ॥ ५७२ । **अशिपणाय्यो रुडायलुकौ च** । अशे रुट्, राशिः पुञ्जः । पणायतेरायलुक्, पाणिः करः ॥ ५७३ । **वातेर्डिच्च** । विः पक्षी । स्त्रियां 'वी' इत्यपि ॥ ५७४ । **प्रे हरतेः कूपे** । प्रहिः कूपः ॥ ५७५ । **नौ व्यो यलोपः पूर्वस्य च दीर्घः** । व्येञ इण् स्याद् यलोपश्च नेर्दीर्घः । नीविः, नीवी वस्त्रग्रन्थौ मूलधने च ॥ ५७६ । **समाने ख्यः स चोदात्तः** । समानशब्दे उपपदे ख्या इत्यस्मादिण् स्यात्स च डित् यलोपश्च, समानस्य सूदात्तः स इत्यादेशश्च ।

---

रामायणे सप्तमाङ्के रामवाक्यम् । केचित्तु 'तद्भिलोऽप्यस्ति राघव' इति पठित्वा राघवं प्रति लक्ष्मणवाक्यमित्याहुः । '**शितिः** कृष्णे सिते भूर्जे' इति विश्वः । 'शितिर्भूर्जे ना सितासितयोस्त्रिषु' इति मेदिनी ॥ **५६२ मनेः**-। मन ज्ञाने अस्मादिन्स्यात्स च कित्, अकारस्योकारादेशश्च स्यात् । मन्यते=जानातीति **मुनिः** । 'मुनिः पुमान्वसिष्ठादौ वङ्गसेनतरौ जिने' इति मेदिनी ॥ **५६३ वर्णेः**-। अस्मादिन्स्यात्स च कित् । '**बलि**र्दैत्यप्रभेदे च करचामरदण्डयोः । उपहारे पुमान्स्त्री तु जरया श्लक्ष्णचर्मणि । गृहदारुप्रभेदे च जठरावयवेऽपि च' इति मेदिनी ॥ **५६४ वसि**-। वस निवासे, डुवप् बीजसन्ताने, यज देवपूजादौ, राजृ दीप्तौ, व्रज गतौ, षद्लृ विशरणादौ, हन हिंसागत्योः, वाशृ शब्दे, वद व्यक्तायां वाचि ण्यन्तः, वृञ् वरणे ण्यन्तः । **वासि**रिति दन्त्यसकारवान् । सूत्रेऽष्टमस्तु तालव्यशकारवान् । द्वयमपि छेदनसाधने प्रयुज्यते । 'वास्यादीनामिव करणानां कर्तृव्यापार्यत्वनियमात्' इति वैशेषिकाः । वास्यर्थमित्यत्र 'स्कोः-' इति सलोपः प्राप्नोतीति भाष्यम् । **वापि**रुदकाधारः । **वापी** प्रसिद्धा । '**राजिः** स्त्री पङ्क्तिरेखयोः' इति मेदिनी । इह वादीति ण्यन्तनिर्देशेऽपि बाहुलकादण्यन्तादपि इञ् । तथा च भूवादिसूत्रे—वदन्तीति वादयः=वाचका इति न्यासकारादयः । '**वारिः** स्मृता सरस्वत्यां वारि ह्रीबेरनीरयोः । वारी घटीभबन्धन्योः' इति विश्वः । हृञ् हरणे, अस्मादिञ । '**हारिः** पथिकसन्तानद्यूतादिभङ्गयोः स्त्रियाम्' इति मेदिनी ॥ **५६५ नहः**-। णह बन्धने, अस्मादिञ् स्यात् भश्चान्तादेशः ॥—**स्त्रियामिति** । लिङ्गानुशासने स्त्रियामित्यधिकारे 'नाभिरक्षत्रिये' इति सूत्रितत्वादिति भावः ॥—**पुंस्यपीति** । तथा च मेदिनी—'नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् । द्वयोः प्राणिप्रतीके स्यात्स्त्रियां कस्तूरिकामदे' इति । भारविश्च पुंसि प्रायुङ्क्त—'समुच्छ्वसत्पङ्कजकोशकोमलैरुपाहितश्रीण्युपनीविनाभिभिः' इति ॥ **५६६ कृषेः**-। कृष विलेखने, अस्मादिञ् वृद्धिश्च । 'इको गुणवृद्धी' इतीकः स्थाने एव वृद्धिरित्युदाहरति—**कार्षिरिति** । भाषायां तु कृषिरित्येव ॥ **५६७ शः**-। शॄ हिंसायाम्, अस्माच्छकुनौ वाच्ये इञ्स्यात् । '**शारि**र्नाक्षोपकरणे स्त्रियां शकुनिकान्तरे । युद्धार्थगजपर्याणे व्यवहारान्तरेऽपि च' इति मेदिनी । कपिलकादित्वाल्लत्वम् । '**शालिस्तु** कलमादौ च गन्धमार्जारके पुमान्' इति मेदिनी ॥ **५६८ कृञ**-। करोतेरिञ्स्यादुदीचां मते कारुषु वाच्येषु । '**कारिः** स्त्रियां क्रियायां स्याद्वाच्यलिङ्गस्तु शिल्पिनि' इति मेदिनी । **५६९ जनि**-। जनी प्रादुर्भावे, घस्लृ अदने, आभ्यामिण् । 'जनिवध्योश्च' इति वृद्धिप्रतिषेधः । **जनि**रिति स्त्रीलिङ्गम् । 'कृदिकारात्-' इति पक्षे ङीष् । '**जनी** सीमन्तिनीवध्वोरुत्पत्तावौषधीभिदि' इति मेदिनी ॥ **५७० अज्य**-। अज गतिक्षेपणयोः, अत सातत्यगमने । बाहुलकादजेर्वीभावो न ॥ **५७१ पादे च**-। पादे चोपपदे 'अज्यतिभ्यामिण्' । 'पादस्य पदाज्यातिगोपहतेषु' इति पदादेशः । पदाजिः=पादचारी । 'पदातिपत्तिपदगपादातिकपदाजयः । पद्गश्च पदिकश्च' इत्यमरः ॥ **५७२ अशिपणाय्योः**-। अशिश्च पणायिश्चाशिपणाय्यौ, तयोरिति विग्रहः । अशू व्याप्तौ, पण व्यवहारे स्तुतौ च-आयप्रत्ययान्तः, आभ्यामिण् स्यादनयोर्यथाक्रमं रुडायप्रत्ययलुकौ च भवतः । 'राशिर्मेषादिपुञ्जयोः' इति मेदिनी ॥ **५७३ वातेः**-। वा गतिगन्धनयोः, अस्मादिण स्यात् । डित्वाट्टिलोपः ॥ **५७४ प्रे हर**-। प्रपूर्वाद्धरतेः कूपे वाच्ये इण् । 'पुंस्येवान्धुः **प्रहिः** कूप उदपानं तु पुंसि वा' इत्यमरः ॥ **५७५ नौ व्यो**-। व्येञ् संवरणे । 'स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च' इत्यमरः । परिपणो मूलधनम् ॥ **५७६ समाने**-। ख्या प्रकथने ॥—**इण् स्यादिति** । यत्तूज्ज्वलदत्तेनोक्तम्—इञ् स्यात्स चोदात्त इति । तन्न । संनिहितेन 'जनिघसिभ्यामिण्' इत्यनेन 'वसिवपियजि-' इत्यादिना विहितस्येञो विच्छिन्नत्वात् । यद्यपि तेनैव 'नौ व्यः' इति पूर्वसूत्रे उक्तम्—इञत्रानुवर्तेत न त्विण्, उत्तरसूत्रे उदात्तवचनाज्ज्ञापकादिति । तदपि न । 'स चोदात्तः' इति हि नायं धातोः परत्र विहितं प्रत्ययं निर्देष्टुं

समानं ख्यायते जनैरिति सखा ॥ ५७७ । **आङि श्रिहनिभ्यां ह्रस्वश्च** । इण् स्यात्स च डित् आङो ह्रस्वश्च । 'स्त्रियः पाल्यश्रिकोटयः' । 'सर्पे वृत्रासुरेऽप्यहिः' ॥ ५७८ । **अच इः** । रविः । पविः । तरिः । कविः । अरिः । अलिः ॥ ५७९ । **खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचलिभ्यश्च** । खनिः । कषिर्हिंस्रः । अजिः । असिः । वसिर्वस्त्रम् । वनिरग्निः । सनिर्भक्तिर्दानं च । ध्वनिः । ग्रन्थिः । चलिः पशुः ॥ ५८० । **वृतेश्छन्दसि** । वर्तिः ॥ ५८१ । **भुजेः किच्च** । भुजिः ॥ ५८२ । **कॄगॄशॄपॄकुटिभिदिछिदिभ्यश्च** । इः कित्स्यात् । किरिर्वराहः । गिरिर्गोत्राक्षिरोगयोः । गिरिणा काणः–गिरिकाणः । शिरिः शलभो हन्ता च । पुरिर्नगरं राजा नदी च । कुटिः शाला शरीरं च । भिदिर्वज्रम् । छिदिः परशुः ॥ ५८३ । **कुडिकम्प्योर्नलोपश्च** । 'कुडि दाहे' कुडिर्देहः । कपिः ॥ ५८४ । **सर्वधातुभ्यो मनिन्** । क्रियत इति कर्म । चर्म । भस्म । जन्म । शर्म । स्थाम बलम् 'इस्मन्–' २९८५ इति ह्रस्वः, छद्म । सुत्रामा ॥ ५८५ । **बृंहेर्नोऽच्च** । नकारस्याकारः । 'ब्रह्म तत्त्वं तपो वेदो ब्रह्मा विप्रः प्रजापतिः' ॥ ५८६ । **अशिशकिभ्यां छन्दसि** । अश्मा । शक्मा ॥ ५८७ । **हृभृधृसृस्तृशॄभ्य इमनिच्** । हरिमा कालः । भरिमा कुटुम्बम् । धरिमा रूपम् । सरिमा वायुः । स्तरिमा तल्पम् । शरिमा प्रसवः ॥

---

तच्छब्दः किंतु समानशब्दस्य स्थाने विधीयमानमादेशं निर्देष्टुं शब्दस्वरूपपरः । तथा च कथं ज्ञापकता स्यात् ? **यदपि** स इञ् उदात्त इति व्याख्याय समानस्य सभाव इति प्रक्रियास्मरणमात्रं कृतं । तदपि न, सभावविधायकस्याभावात् । **यदपि** स्वरमञ्जरीकारादिभिरुक्तं—'समानस्य च्छन्दसि' इति सूत्रेण सभाव इति । तदपि न, लोके सखिशब्दस्यासाधुत्वापत्तेः । अपि च 'सखा सखायमब्रवीत्' 'सखा सख्ये अपचन्' 'सखायस्त्वा ववृमहे' । 'सखा सखिभ्य ईड्यः' इत्यादिमन्त्रेषु सर्वत्र सखिशब्द आद्युदात्त एवेति निर्विवादम् । एवं च इञुदात्त इत्युज्ज्वलदत्तादिव्याख्यानं वेदवार्तानभिज्ञत्वप्रयुक्तमेवेति दिक् ॥ ५७७ **आङि–**। श्रिञ् सेवायाम्, हन हिंसागत्योः । अमरोक्तिमाह—**स्त्रिय इति** । एवं च 'सुप्रातसुश्व–' इति सूत्रे चतुरश्रेति तालव्यपाठः संगच्छते । तत्सूत्रे केषांचिद्दन्त्यपाठस्तु एतत्सूत्रापर्यालोचनामूलक एवेत्यवधेयम् ॥ नन्वेवं चतुरस्रमिति दन्त्यप्रयोगस्य कथं निर्वाहः ? इति चेत्, **अत्राहुः**—अकारान्तेन दन्त्यगर्भिणास्रशब्देन विग्रहे तत्प्रयोगः साधीयान् । न च तादृशे शब्देऽपि विप्रतिपत्तव्यम् । 'अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते' इति मेदिनीकोशादिति । 'अहिर्वृत्रासुरे सर्पे' इति मेदिनी ॥ ५७८ **अच इः** । अजन्ताद्धातोरिः स्यात् । रु शब्दे, पूञ् पवने, **पविर्वज्रम्** । तॄ प्लवनतरणयोः । **तरिर्वस्त्रादिस्थापनभाण्डम्** । 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः । कु शब्दे । '**कविर्वाल्मीकिशुक्रयोः** । सूरौ काव्यकरे पुंसि स्यात्खलीने तु योषिति' इति मेदिनी । ऋ गतौ, **अरिः** शत्रुः । कपिलकादित्वाद्वैकल्पिकं लत्वम् । **अलिर्भ्रमरः** ॥ ५७९ **खनि–**। खनु अवदारणे । कष खषेति दण्डके हिंसार्थकः । अज गतिक्षेपणयोः, असु क्षेपणे, वस आच्छादने, वन षण संभक्तौ, वनु याचने, षणु दाने, ध्वन शब्दे–ग्रन्थ बन्धने–उभौ चुरादौ, चल कम्पने, एभ्य इः स्यात् । '**खनिः** स्त्रियामाकरः स्यात्' इत्यमरः । ण्यन्तात् 'अच इः' इति इप्रत्यये **खानिरपि** । '**खनिः** खे मता खानिः' इति द्विरूपकोशः । 'ग्रन्थिस्तु ग्रन्थिपर्णे ना बन्धे रुग्भेदपर्वणोः' इति मेदिनी । 'ग्रन्थिर्ना पर्वपरुषी' इत्यमरः ॥—**वनिरग्निरिति** । 'वनु याचने' इत्यस्मादिप्रत्यये 'वनिर्याञ्चा' इत्याहुः ॥—**चलिः पशुरिति** । 'चरिभ्यश्च' इति पाठान्तरम् । चर गतौ, चरतिर्भक्षणेऽपि । चरिः पशुः ॥ ५८० **वृतेः** । वृतु वर्तने, अस्मादिः स्यात् । बाहुलकाल्लोकेऽपि 'साज्यं च वर्तिसंयुक्तम्' इति प्रयोगः । '**वर्त्तिर्भेषजनिर्माणे** नयनाञ्जनलेखयोः । स्त्रीदशायां दीपदशादीपेषु योषिति' इति मेदिनी ॥ ५८१ **भुजेः–**। भुज पालनाभ्यवहारयोः, अस्मादिः स्यात्स च कित् । भुजिरग्निः ॥ ५८२ **कॄगॄशॄ–**। कॄ विक्षेपे, गॄ निगरणे, शॄ हिंसायाम्, पॄ पालनपूरणयोः, कुट कौटिल्ये, भिदिर् विदारणे, छिदिर् द्वैधीकरणे । 'वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः' इत्यमरः । 'इगुपधज्ञाप्रीकिरः–' इति कप्रत्यये **किर** इत्यकारान्तोऽपि । 'त्वचि त्वचः किरोऽपि स्यात् किरौ प्रोक्तः पथः पथि' इति द्विरूपकोशः । 'गिरिर्ना नेत्ररुग्भिदि । अद्रौ गिरिजके योषिद्गीर्णौ पूज्ये पुनस्त्रिषु' इति मेदिनी ॥—**कुटिरिति** । ङीपि तु **कुटी** । 'कुटीशमीशुण्डाभ्यो रः' कुटीरः । '**कुटिः** कोटे पुमानस्त्री घटे स्त्रीपुंसयोर्देहे । कुटी स्यात्कुम्भदास्यां च सुरायां चित्रगुच्छके' इति मेदिनी ॥ ५८३ **कुडि–**। कुडि दाहे, कपि चलने, आभ्यामिः कित्स्याद्धातोर्नलोपश्च । '**कपिर्ना** सिंहके शाखामृगे च मधुसूदने' इति च ॥ ५८४ **सर्वधातुभ्यः–**। डुकृञ् करणे, चर गतौ, चरतिर्भक्षणेऽपि, जन जनने, भस भर्त्सनदीप्त्योः । शॄ हिंसायाम्, **शर्म**=सुखं । ष्ठा गतिनिवृत्तौ, छद अपवारणे चुरादिः, त्रैङ् पालने । सुष्ठु त्रायते इति **सुत्रामा** इन्द्रः । 'कर्मव्याप्ये क्रियायां च पुंनपुंसकयोर्मतम्' इति रुद्रः । 'चर्म वृत्तौ च फलके' इति मेदिनी ॥ ५८५ **बृंहेः–**। बृहि वृद्धौ, अस्मान्मनिन्नुमो नकारस्याकारे ऋकारस्य यणादेशः । '**ब्रह्म** तत्त्वं तपो वेदे न द्वयोः पुंसि वेधसि । ऋत्विग्योगभिदोर्विप्रे' इति मेदिनी ॥ ५८६ **अशि–**। अश व्याप्तौ संघाते च, शक्लृ शक्तौ, **शक्मा**=इन्द्रः । छन्दसीत्यस्य शकिना संबन्धो न त्वशिना । अत एव 'अश्मानमारोपयतः स्मरारेः' । इति प्रयोगः ॥ ५८७ **हृभृ** । 'हृञ् हरणे, डुभृञ् धारणपोषणयोः, धृ धारणे, सृ गतौ, स्तृञ् आच्छादने, शॄ हिंसायाम् ॥—**शरिमेति–**। एतच्चोज्ज्वलदत्तरीत्योक्तम् । दशपाद्यां तु शृणातिर्न पठ्यते तत्स्थाने सृधातुं प्रक्षिप्य प्रत्ययं च दीर्घादिं नितं च कृत्वा 'स्तृसृभ्यामीमन्' इति पठ्यते, छन्दोग्रहणं चानुवर्तितम् । युक्तं चैतत् । 'पिपृतां नो भरीमभिः' । 'वातस्य

५८८ । **जनिमृङ्भ्यामिमनिन्** । जनिमा जन्म । मरिमा मृत्युः ॥ ५८९ । **वेञः सर्वत्र** । छन्दसि भाषायां चेत्यर्थः । वेमा तन्तुवायदण्डः, अर्धर्चादिः । 'सामनी वेमनी' इति वृत्तिः ॥ ५९० । **नामन् सीमन् व्योमन् रोमन् लोमन् पाप्मन् ध्यामन्** । सप्त अमी निपात्यन्ते । म्नायतेऽनेनेति नाम । सिनोतेर्दीर्घः–सीमा, सीमानौ, सीमानः । पक्षे डाप्–सीमे, सीमाः । व्येञो-ऽन्त्यस्योत्वं गुणः, व्योम । रौतेः–रोम । लोम । पाप्मा पापम् । ध्याम परिमाणं तेजश्च ॥ ५९१ । **मिथुने मनिः** । उपसर्गक्रियासंबन्धो मिथुनम् । स्वरार्थमिदम् । सुशर्मा । ५९२ । **साऽतिभ्यां मनिन्मनिणौ** । स्यतीति साम, सामनी । आत्मा ॥ ५९३ । **हनिमशिभ्यां सिकन्** । 'हंसिका हंसयोषिति' । मक्षिका ॥ ५९४ । **कोररन्** । कवरः ॥ ५९५ । **गिर उडच्** । गरुडः ॥ ५९६ । **इन्देः कमिर्नलोपश्च** । इदम् ॥ ५९७ । **कायतेर्डिमिः** । किम् ॥ ५९८ । **सर्वधातुभ्यः ष्ट्रन्** । वस्त्रम् । अस्त्रम् । शस्त्रम् । 'इस्मन्–' २९८५ इति ह्रस्वत्वम्, छादनाच्छत्रम् ॥ ५९९ । **भ्रस्जिगमिनमिहनिविश्यशां वृद्धिश्च** । भ्राष्ट्रः । गात्रं शकटम् । नात्रं स्तोत्रम् । हात्रं मरणम् । वैष्ट्रं विष्टपम् । आष्ट्रमाकाशम् ॥ ६०० । **दिवेर्द्युच्च** । द्यौत्रं ज्योतिः ॥ ६०१ । **उषिखनिभ्यां कित्** । उष्ट्रः । खात्रं खनित्रं जलाधारश्च ॥ ६०२ । **सिविमुच्योष्टेरू च** । सूत्रम् । मूत्रम् ॥ ६०३ । **अमिचिमिदिशसिभ्यः क्त्रः** । आन्त्रम् । चित्रम् । मित्रम् । शस्त्रम् ॥ ६०४ ।

---

सर्गे अभवत्स्वरीमणि' । 'स्तीर्णं बर्हिः सुष्टरीमा जुषाणा' । 'यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिः' इत्यादिमन्त्राणां तद्भाष्यस्य चानुगुणत्वात्, उक्तप्रयोगाणां भाषायामदर्शनेन च्छन्दोऽनुवृत्तेर्न्याय्यत्वाच्च । अत एव 'वेञः सर्वत्र' इति सूत्रे सर्वत्रग्रहणं करिष्यति ॥ ५८८ **जनि–**। जन जनने, मृङ् प्राणत्यागे ॥ ५८९ **वेञः–**। वेञ् तन्तुसन्ताने ॥ ५९० **निपात्यन्त इति** । मनिनन्ता इति शेषः । म्ना अभ्यासे । मलोपो नाभावो वा । **नाम** संज्ञा । षिञ् बन्धने । **'सीमसीमे** स्त्रियामुभे' इत्यमरः । व्येञ् संवरणे, रु शब्दे, **रोम** गात्रकेशः । लूञ् छेदने । **लोम** स एव । पा पाने पुगागमः । ध्यै चिन्तायाम् । बाहुलकादन्येभ्योऽपि । यक्ष पूजायाम् । 'क्षयः शोषश्च **यक्ष्मा** च' इत्यमरः । षू प्रेरणे, **सोमा** चन्द्रः । डुधाञ् धारणपोषणयोः । **'धाम** देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः' इति मेदिनी ॥ ५९१ **मिथुने–**। शॄ हिंसायाम्, सुष्ठु शृणाति इति **सुशर्मा** राजविशेषः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तं पदम् । मनिनि तु मध्योदात्तं स्यात् ॥ ५९२ **साति–**। षोऽन्तकर्मणि, अत सातत्यगमने, आभ्यां यथासंख्यमेतौ स्तः । स्यति=दुःखयति दुरध्येयत्वात्साम । 'साम क्लीबमुपायस्य भेदे वेदान्तरेऽपि च' इति मेदिनी । **'आत्मा** पुंसि स्वभावे स्यात्प्रयत्नमनसोरपि । धृतावपि मनीषायां शरीरब्रह्मणोरपि' इति च ॥ ५९३ **हनि–**। हन हिंसागत्योः, मश शब्दे रोषकृते च । **'मक्षिका** भम्भराली स्यात्' इति हारावली ॥ ५९४ **कोररन्** । कु शब्दे । **कवरः** पाठकः । बवयोरैक्यात्**कबरी** केशविन्यासः । 'जानपद–' इति ङीष् । अन्यत्र कबरा ॥ ५९५ **गिरः–**। गॄ निगरणे । केचित्तु सूत्रमिदं परित्यज्य गरुता डयत इति विगृह्य डीङो डप्रत्यये पृषोदरादित्वाद्गरुतस्तकारलोपे **गरुड**शब्दं क्लेशेन व्युत्पादयन्ति ॥ ५९६ **इन्देः–**। इदि परमैश्वर्ये । उज्ज्वलदत्तस्तु कमिन्निति नितं पपाठ । तच्चिन्त्यम्, 'इदं त्यत्पात्रमिन्द्रपानम्', 'इदं ते सोम्यं मधु' इत्यादौ नित्स्वराभावात् । दशपाद्यां तु 'इणो दमक्' इति सूत्रितम् ॥ **इदमिति** । सर्वनामशब्दोऽयं संनिहितपरामर्शी ॥ ५९७ **कायतेः–**। कै गै शब्दे । प्रयोजनाभावादेव मकारस्येत्संज्ञाविरहे सिद्धे डिमेरिकार उच्चारणार्थः । डकारस्तु टिलोपार्थः । दशपाद्यां तु मान्तमेव डिमिति सूत्रितम् । **किमिति** सर्वनाम ॥ ५९८ **सर्वधातुभ्यः–**। दशपाद्यां तु अर्थात्सर्वधातुभ्यो भविष्यतीत्याशयेन 'ष्ट्रन्' इत्येव सूत्रितम् । अत एवाधिकं प्रक्षिप्तमित्याहुः । वस निवासे, असु क्षेपणे, शसु हिंसायाम्, छद अपवारणे ण्यन्तः । **'अस्त्रं** प्रहरणे चापे करवाले नपुंसकम्' इति मेदिनी । पत्लृ गतौ । **'पत्रं** तु वाहने पर्णे स्यात् पक्षे शरपक्षिणोः' इति मेदिनी । पा पाने । **पात्रम्** । षित्त्वान् ङीष्, **'पात्र्य**मत्रे त्रिषु क्लीबं स्रुवादौ राजमन्त्रिणि । तीरद्वयान्तरे योग्ये' इति मेदिनी । दंश दशने, 'व्रश्च–' आदिना षत्वे ष्टुत्वं, षितां ङीषोऽनित्यत्वाट्टाप् । **दंष्ट्रा** ॥ ५९९ **भ्रस्जि–**। भ्रस्ज पाके, गम्लृ गतौ, णम प्रह्वत्वे शब्दे च, हन हिंसागत्योः, विश प्रवेशने, अशू व्याप्तौ, एभ्यः ष्ट्रन् स्यादेषां वृद्धिश्च ॥—**भ्राष्ट्र इति** । संयोगादिलोपः । 'व्रश्च–' इति षत्वे ष्टुत्वम् । 'क्लीबेऽम्बरीषं **भ्राष्ट्रो** ना' इत्यमरः । **वैष्ट्रं** विष्टपम् ॥ ६०० **दिवेः–**। दिवु क्रीडादौ, अस्मात् ष्ट्रन् स्यात् द्युदादेशो वृद्धिश्च धातोः ॥ ६०१ **उषि–**। उष दाहे, खनु अवदारणे, आभ्यां ष्ट्रन् कित्स्यात् । **उष्ट्रः** क्रमेलकः । 'उष्ट्रे क्रमेलकमयमहाङ्गाः' इत्यमरः ॥ ६०२ **सिवि–**। षिवु तन्तुसन्ताने, मुच्लृ मोक्षणे, आभ्यां ष्ट्रन्कित्स्यात् टेरूकारादेशश्च । सूत्रिमूत्रिभ्यां चुरादिण्यन्ताभ्यामेरचा रूपसिद्धेराद्युदात्तार्थमिदं सूत्रम् । न च घञा तत्सिद्धिः, 'एरच्' इत्यस्य घञो बाधकत्वात् । **'सूत्रं** तु सूचनाग्रन्थे सूत्रतन्तुव्यवस्थयोः' इति विश्वः ॥ ६०३ **अमि–**। अम गतिशब्दसंभक्तिषु, चिञ् चयने, ञिमिदा स्नेहने, शसु हिंसायाम् ॥ **आन्त्रमिति** । 'अनुनासिकस्य–' इति दीर्घः । 'श्रोणिलम्बिपुरुषान्त्रमेखलाम्' इति कालिदासः । 'आलेख्याश्चर्ययोश्चि**त्रम्'** इत्यमरः । **'मित्रं** सुहृदि न द्वयोः । सूर्ये पुंसि' इति मेदिनी । **'शस्त्रं** लोहास्त्रयोः क्लीबं क्षुरिकायां तु योषिति' इति च । प्रत्ययस्वरेणैतेऽन्तोदात्ताः—**'शुन आन्त्राणि पेचे', 'चित्रं देवानाम्', 'मित्रं नयम्', 'शस्त्रस्य शस्त्रमसि'**

पुवो ह्रस्वश्च । पुत्रः ॥ ६०५ । स्त्यायतेर्ड्रट् । स्त्री ॥ ६०६ । गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः । 'गोत्रं स्याद्नामवंशयोः' । गोत्रा पृथिवि । धत्रं गृहम् । वेत्रम् । पक्त्रं । वक्त्रम् । यन्त्रम् । सत्रम् । क्षत्रम् ॥ ६०७ । हुयामाश्रुभसिभ्यस्त्रन् । होत्रम् । यात्रा । मात्रा । श्रोत्रम् । भस्त्रा ॥ ६०८ । गमेरा च । गात्रम् ॥ ६०९ । दादिभ्यश्छन्दसि । दात्रम् । पात्रम् ॥ ६१० । भूवादिगृभ्यो णित्रन् । भावित्रम् । वादित्रम् । गारित्रमोदनम् ॥ ६११ । चरेर्वृत्ते । चारित्रम् ॥ ६१२ । अशित्रादिभ्य इत्रोत्रौ । अशित्रम् । वहित्रम् । धरित्री मही । त्रैङ्, एवमादिभ्य उत्रः, त्रोत्रं प्रहरणम् । वृञ्, वरुत्रं प्रावरणम् ॥ ६१३ । अमेर्द्विषति चित् । अमित्रः शत्रुः ॥ ६१४ आः समिण्निकषिभ्याम् । संपूर्वादिणो निपूर्वात्कषेश्च आ स्यात् । स्वरादित्वादव्ययत्वम् । समया । निकषा । ६१५ । चितेः कणः कश्च । [illegible] 'चिक्कणं मसृणं स्निग्धम्' ॥ ६१६ । सूचेः स्मन् । सूक्ष्मम् । ६१७ । पातेर्डुम्सुन् । पुमान् ॥ ६१८ । रुचिभुजिभ्यां किष्यन् । रुचिष्यमिष्टम् । भुजिष्यो दासः ॥ ६१९ । वसेस्तिः । 'वस्तिर्नाभेरधो द्वयोः' । 'वस्तयः स्युर्दशासूत्रे' । बाहुलकात्-शासः-'शास्तिः' राजदण्डः । विन्ध्याख्यमगमस्यतीत्यगस्तिः । शकन्ध्वादिः ॥ ६२० । सावसेः । स्वस्ति । स्वरादिपाठादव्ययत्वम् ॥ ६२१ वौ तसेः । वितस्तिः ॥ ६२२ । पदिप्रथिभ्यां नित् । पत्तिः । प्रथितिः,

---

इत्यादौ ॥ ६०४ पुवः । पूञ् पवने, अस्मात् क्तः स्यात् धातोर्ह्रस्वत्वं च । पुनाति स्ववंश्यानिति पुत्रः । पुंनाम्नो नरकस्त्रस्मात् त्रायते इत्यर्थे 'आतोऽनुपसर्गे कः' इति कप्रत्यये पुत्र इति व्युत्पत्त्यन्तरम् ॥ ६०५ स्त्यायतेः-। स्त्यै ष्ट्यै शब्दसंघातयोः ॥ —स्त्रीति । डित्त्वाट्टिलोपः । 'लोपो व्योः-' इति यलोपः । टित्वान्ङीप् । 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इत्यमरः ॥ ६०६ गुधृ-। गुङ् अव्यक्ते शब्दे, धृञ् धारणे, वी गतिप्रजनादौ, डुपचष् पाके, वच परिभाषणे, यम उपरमे, षद्लृ विशरणगत्यादौ, क्षदिः सौत्रः । 'गोत्रा भूगव्ययोर्गोत्रः शैले गोत्रं कुलाख्ययोः । संभावनीयबोधे च काननक्षेत्रवर्त्मसु' इति मेदिनी । 'सत्रमाच्छादने यज्ञे सदादाने धनेऽपि च' इत्यमरः । 'सत्रं यज्ञसदादानच्छादनारण्यकैतवे' इति मेदिनी । क्षत्त्रं ब्राह्मणानन्तरजातिः ॥ ६०७ हुयामा-। हु दानादनयोः, या प्रापणे, मा माने, श्रु श्रवणे, भस भर्त्सनदीप्त्योः । होत्रमाहुतिः । होत्राशब्द ऋत्विक्ष्वपि स्त्रीलिङ्ग इति 'होत्राभ्यश्छः' इति सूत्रे हरदत्तादयः । 'यात्रा तु यातनेऽपि स्याद्गमनोत्सवयोः स्त्रियाम्' इति मेदिनी । 'मात्रा कर्णविभूषायां वित्ते माने परिच्छदे । अक्षरावयवे स्वल्पे क्लीबं कार्त्स्न्येऽवधारणे' इति च । 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इत्यमरः । 'भस्त्रा चर्मप्रसेविका' इति च ॥ ६०८ गमेः—। गम्लृ गतौ, अस्मात् त्रन्स्याद्धातोराकारान्तादेशश्च । 'गात्रमङ्गे कलेवरे । [illegible]ऽपि समीरितम्' इति विश्वः ॥ ६०९ दादिभ्यः-। दाप् लवने-एवमादिभ्यस्त्रन् । दात्रं धान्यादिच्छेदनसाधनम् । पा पाने, 'योग्यभाजनयोः पात्रम्' इत्यमरः । क्षि निवासगत्योः, क्षेत्रमित्यादि योज्यम् ॥ ६१० भूवादि-। भू सत्तायाम् । भावित्रं त्रैलोक्यम् । वद व्यक्तायां वाचि ण्यन्तः । वादित्रं तूर्यादि । गॄ निगरणे ॥ ६११ चरेः-। चर गतौ, अस्माण्णित्रन्स्यात् वृत्ते वाच्ये । 'वृत्तं पद्ये चारित्रे' इत्यमरः ॥ ननु इत्रन्प्रत्यये चरित्रमित्युक्तं ततश्च प्रज्ञादण्णि चारित्रमिति सिद्धौ किमनेनेति चेत् । मैवम् । स्वरे विशेषात् ॥ ६१२ अशि-। अशू व्याप्तौ एवमादिभ्य इत्रः, त्रैङ् पालने-एवमादिभ्य उत्रश्च स्यात् ॥—वहित्रमिति । वह प्रापणे ॥—धरित्रीति । धृञ् धारणे गौरादित्वात् ङीप् ॥ ६१३ अमेः-। अम गतौ, अस्मादित्रः स्यात्स च चित् । उत्रस्तु नानुवर्तते, अस्वरितत्वात् । मित्रं नेति विग्रहे त्वमित्रमिति नपुंसकम् ॥ ६१४ आः समिण्-। इण् गतौ । अस्मादाप्रत्यये गुणे सत्ययादेशः ॥—कषेरिति । कषखषेति दण्डकः । समयानिकषाशब्दौ समीपवाचकौ । बाहुलकात्-दुषेः । दोषा । दिवेराप्रत्यये बाहुलकादेवास्य गुणाभावे-दिवा । स्वदेराप्रत्यये बाहुलकादेव धातोर्धान्तादेशश्च । स्वधेत्यादि ॥ ६१५ चितेः-। चिती संज्ञाने, अस्मात्कण प्रत्ययः स्यात्कश्चान्तादेशः । अमरोक्तमाह—चिक्कणमिति ॥ ६१६ सूचेः-। सूच पैशुन्ये चुरादिरसात्स्मन् णिलोपः । कुत्वम्ले । 'सूक्ष्मं स्यात्कण्टकेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके' इति मेदिनी ॥ ६१७ पातेः-। पा रक्षणे, अस्मात् डुम्सुन्स्यात् । डित्त्वाट्टिलोपः, उकार उच्चारणार्थ इत्युज्ज्वलदत्तः । वस्तुतस्तूगित्कार्यार्थः । सुपुंसीति 'उगितश्च' इति ङीप् । नकारः स्वरार्थः । 'पुंसोऽसुङ्' इति सूत्रे न्यासरक्षिताभ्यां पुनातेर्मक्सुन् ह्रस्वश्चेति पठितम् । पूञो डुम्सुनित्यन्ये । भाष्ये तु—सूतेः सप्रत्यये पुमानित्युक्तम् । 'उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः' इति तत्त्वम् ॥ ६१८ रुचि-। रुच दीप्तावभिप्रीतौ च, भुज पालनादौ । 'भुजिष्यस्तु स्वतन्त्रे च हस्तसूत्रकदासयोः । स्त्रियां दासीगणिकयोः' इति मेदिनी ॥ ६१९ वसेः-। वस निवासे, वस आच्छादने । वस्तिर्द्वयोर्निरुहे नाभ्यधोभूमिदशासु च' इति मेदिनी ॥—शास इति । शासु अनुशिष्टौ ॥—अस्यतीति । असु क्षेपणे । 'अगस्तिः कुम्भयोनौ च वङ्गसेनतरौ पुमान्' इति मेदिनी ॥ ६२० सावसेः । अस् भुवि, अस्मात्सावुपपदे तिः स्यात् । बहुलवचनान्न भूभावः ॥ ६२१ वौ-। तसु उपक्षये, अस्माद्विपूर्वात्तिः स्यात् । 'अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः' इत्यमरः । 'स्त्रीपुंसयोर्वितस्तिः स्यात्' इत्यमरमाला ॥ ६२२ पदि-। पद गतौ, प्रथ प्रख्याने, आभ्यां तिः स्यात्स च नित् ॥—पत्तिरिति । पदातिः ॥—प्रथितिरिति । प्रख्यातिः ॥—

(वा) तितुत्रेष्वग्रहादीनाम् इतीट् ॥ ६२३ । दृणातेर्ह्रस्वश्च । दृतिः ॥ ६२४ । **कृतॄकृपिभ्यः कीटन्** । किरीटं शिरोवेष्टनम् । तिरीटं सुवर्णम् । कृपीटं कुक्षिवारिणोः ॥ ६२५ । **रुचिवचिकुचिकुटिभ्यः कितच्** । रुचितमिष्टम् । उचितम् । कुचितं परिमितम् । कुटितं कुटिलम् ॥ ६२६ । **कुटिकुषिभ्यां क्मलन्** । कुड्मलम् । कुष्मलम् ॥ ६२७ । **कुषेर्लश्च** । कुल्मलं पापम् । ६२८ । **सर्वधातुभ्योऽसुन्** । चेतः । सरः । पयः । सदः ॥ ६२९ । **रपेरत एच्च** । रेपोऽवद्यम् ॥ ६३० । **अशेर्देवने युट् च** । देवने=स्तुतौ । यशः ॥ ६३१ । **उब्जेर्बले बलोपश्च** । ओजः ॥ ६३२ । **श्वेः संप्रसारणं च** । शवः, शवसी । बलपर्यायोऽयम् ॥ ६३३ । **श्रयतेः स्वाङ्गे शिरः किच्च** । श्रयतेः शिर आदेशोऽसुन् किच्च । शिरः, शिरसी ॥ ६३४ । **अर्तेरुच्च** । उरः ॥ ६३५ । **व्याधौ शुट् च** । अर्शो गुदव्याधिः । ६३६ । **उदके नुट् च** । अर्तेसुरन् स्यात्तस्य च नुट् । अर्णः, अर्णसी ॥ ६३७ । **इण आगसि** । एनः ॥ ६३८ । **रिचेर्धने घिच्च** । चात्प्रत्ययस्य नुट् । घित्त्वा-

---

**तितुत्रेष्विति** । गहादित्त्वादिडागमनिषेधो नेति भावः ॥ ६२३ **दृणातेः**–। दॄ विदारणे, अस्मात्तिः स्याद्धातोर्ह्रस्वत्वं च । 'दृतिश्चर्मपुटे मत्स्ये ना' इति मेदिनी ॥ ६२४ **कृतॄ**–। कॄ विक्षेपे, तॄ प्लवनतरणयोः, कृपू सामर्थ्ये । '**किरीटं** मुकुटे न स्त्री' इति हेमचन्द्रः । 'गोमी कृपीटमुदरे नीरे' इति विश्वः । दशपाद्यां तु 'कॄतॄकृपिकपिभ्यः' इति पठित्वा कम्पीट इति चतुर्थमुदाहृतम् । 'कृपो रो लः' इत्यत्र न्यासे तु कॄकृपिभ्यामिति पठ्यते । अतस्तरतिरत्र प्रक्षिप्त इति कश्चित् । 'तरतेश्चेति पृथक्पठित्वा **तिरीटः** कूलवृक्ष' इति कश्चिद्व्याख्यत् ॥ ६२५ **रुचिवचि**–। रुच दीप्तावभिप्रीतौ च, वच परिभाषणे, कुच शब्दे तारे । अथवा कुञ्च कौटिल्याल्पीभावयोः, इकः कित्त्वात्सूत्रे नलोपेन निर्देशः । कुट कौटिल्ये ॥—**उचितमिति** । 'वचिस्वपि–' इत्यादिना संप्रसारणम् ॥ ६२६ **कुटिकुषि**–। '**कुड्मलो** मुकुले पुंसि न द्वयोर्नरकान्तरे' इति मेदिनी ॥ ६२७ कुष निष्कर्षे । **कुष्मलं** छर्दनम् । विकसितमित्यन्ये ॥ ६२८ **सर्वधातुभ्योऽसुन्**–। दशपाद्यां तु 'असुन्' इत्येव सूत्रम् । चिती संज्ञाने, चित संचेदने चुरादिः, सृ गतौ । गौरादित्वान्ङीष् । '**सरसी** तु महासरः' इति शब्दार्णवः । 'महान्ति सरांसि सरस्यः' इति भाष्यम् । पय गतौ, पीङ् पाने । 'पयः स्यात् क्षीरनीरयोः' इति मेदिनी । षद्लृ विशरणादौ । **सदः** सभा । वर्च दीप्तौ । '**वर्चो** नपुंसकं रूपे विष्ठायामपि तेजसि । पुंसि चन्द्रस्य तनये' इति मेदिनी । रुदिर् अश्रुविमोचने । '**रोदश्च** रोदसी चापि दिवि भूमौ पृथक् पृथक् । सहप्रयोगेऽप्यनयो रोदस्यावपि रोदसी' इति विश्वः । वी गत्यादिषु । '**वयः** पक्षिणि बाल्यादौ यौवने च नपुंसकम्' इति मेदिनी । अन प्राणने । **अनो** भक्तम् । 'अनोऽश्मायःसरसां जातिसंज्ञयोः' इति टचि तु **अनसम्** । 'पाकस्थानं महानसम्' इत्यमरः । तमु ग्लानौ । '**तमः** क्लीबं गुणे शोके सैंहिकेयान्धकारयोः' इति रभसः । 'तमो ध्वान्ते गुणे शोके क्लीबं वा ना विधुंतुदे' इति मेदिनी । षह मर्षणे, '**सहो** बले ज्योतिषि च पुंसि हेमन्तमार्गयोः' इति मेदिनी । तप संतापे । '**तपो** लोकान्तरेऽपि च । चान्द्रायणादौ धर्मे च पुमान् शिशिरमाघयोः' इति च । मह पूजायाम् । **मह** उत्सवतेजसोः' इति मेदिनी । नभ हिंसायां भौवादिकः क्रैयादिकश्च । '**नभो**ऽन्तरिक्षं गगनम्' इत्यमरः । 'नभं तु नभसा सार्धं तपं तु तपसा सह । सहं च सहसा सार्धं महं च महसा सह । तमेन च तमः प्रोक्तं रजेनापि रजः समम्' इति द्विरूपकोशः ॥ नन्वसुन्प्रत्यये नभःसहस्तम इत्यादिसान्तशब्दाः सिध्यन्ति, पचाद्यचि तु नभं सहं तमं इत्याद्यजन्ता अपि सिध्यन्ति, परन्तु रज इति अकारान्तसकारान्तौ नलोपवच्छब्दौ न सिध्यत इति 'रजेनापि रजः समम्' इति कोशश्चिन्त्य एवेति चेत्, **अत्राहुः**—'रञ्ज रागे' इत्यस्मादसुनि 'भूरञ्जिभ्यां कित्' इति वक्ष्यमाणेनासुनः कित्त्वान्नलोपे रज इति सिध्यति । 'घञर्थे कविधानम्' इति कप्रत्यये तु रज इत्यदन्तोऽपि सिध्यतीति ॥ ६२९ **रपेः** । रप व्यक्तायां वाचि, अस्मादसुन् स्यादत एकारश्च ॥—**रेपोऽवद्यमिति** । 'अरेपसा तन्वा' इति मन्त्रे निरवद्ययेति भाष्ये उक्तं, नञ्पूर्वकरेपःशब्दस्यानवद्यवाचकत्वात् ॥ ६३० **अशेः**–। अशू व्याप्तौ संघाते च, अस्मादसुन्स्याद्धातोर्युडागमश्च । **यशः** कीर्तिः ॥ ६३२ **उब्जेः** । उब्ज आर्जवे, अस्मादसुन् स्याद्बले वाच्ये बकारस्य लोपश्च । '**ओजो** दीप्ताववष्टम्भे प्रकाशबलयोरपि' इति मेदिनी ॥ ६३२ **श्वेः**–। टुओश्वि गतिवृद्ध्योः, अस्मादसुन्स्यात्संप्रसारणं च ॥ ६३३ **श्रयतेः**–। श्रिञ् सेवायाम्, अस्मात्स्वाङ्गे वाच्येऽसुन्स्यात्स च किद्धातोः शिरादेशश्च । 'उत्तमाङ्गं **शिरः** शीर्षम्' इत्यमरः । घञर्थे कप्रत्यये तु **शिर** इत्यदन्तोऽपि । 'शिरोवाची शिरोऽदन्तो रजोवाची रजस्तथा' इति कोशान्तरम् । 'पिण्डं दद्याच्छिरे' इति वायुपुराणे । 'कुण्डलोद्धृष्टगण्डानां कुमाराणां तरस्विनाम् । निचकर्त शिरान्द्रौणिर्नालेभ्य इव पङ्कजान्' इति महाभारतम् ॥ ६३४ **अर्तेः**–। ऋ गतौ, अस्मादसुन् कित्स्याद्धातोरुत्वं च । रपरत्वम् । '**उरो** वत्सं च वक्षश्च' इत्यमरः ॥ ६३५ **व्याधौ**–। अर्तेरेव व्याधौ वाच्येऽसुन् तस्य शुडागमश्च स्यात् ॥ ६३६ **अर्ण इति** । पानीयमित्यर्थः ॥ ६३७ **इणः** । इण् गतौ, अस्मात्पापे वाच्येऽसुन् स्यात्तस्य नुडागमश्च । एनः पापम् ॥ ६३८ **रिचेः**–। रिचिर् विरेचने, रिच वियोजनसंपर्चनयोरित्यस्माद्वा धने वाच्येऽसुन् ॥—**रेक्ण इति** । 'चजोः–' इति कुत्वे 'अट्कुप्वाङ्–' इति णत्वम् । इह दशपादीवृत्तौ नुटं नानुवर्त्य रेकः रेकसी इत्युदाहृतम् । तन्न । उत्तरसूत्रे नुडनुवृत्तेर्निर्विवादत्वात्, मण्डूकप्लुतौ मानाभावात्, लक्ष्यविसंवादाच्च । उज्ज्वलदत्तेन तु 'रिचेर्धने चित्किच्च' इति पठि-

स्कुत्वम्, रेक्णः सुवर्णम् ॥ ६३९ । **चायतेरन्ने ह्रस्वश्च ।** चनो भक्तम् ॥ ६४० । **वृङ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् च ।** वर्पो रूपम् । शेपो गुह्यम् ॥ ६४१ । **स्रुरीभ्यां तुट् च ।** स्रोतः । रेतः ॥ ६४२ । **पातेर्बले जुट् च ।** पाजः, पाजसी ॥ ६४३ । **उदके थुट् च ।** पाथः ॥ ६४४ । **अन्ने च ।** पाथो भक्तम् ॥ ६४५ । **अदेर्नुम् धौ च ।** अदेर्भक्ते वाच्येऽसुन् नुमागमो धादेशश्च । अन्धोऽन्नम् ॥ ६४६ । **स्कन्देश्च स्वाङ्गे ।** स्कन्दः, स्कन्दसी ॥ ६४७ । **आपः कर्माख्यायाम् ।** कर्माख्यायां ह्रस्वो नुट् च वा । अप्नः—अपः । बाहुलकात्—आपः, आपसी ॥ ६४८ । **रूपे जुट् च ।** अब्जो रूपम् ॥ ६४९ । **उदके नुम्भौ च ।** अम्भः ॥ ६५० । **नहेर्दिवि भश्च ।** नभः ॥ ६५१ । **इण आग अपराधे च ।** 'आगः पापापराधयोः' ॥ ६५२ । **अमेर्हुक्च ।** अंहः ॥ ६५३ । **रमेश्च ।** रंहः ॥ ६५४ । **देशे ह च ।** रमन्तेऽस्मिन् रहः ॥ ६५५ । **अञ्च्यञ्जियुजिभृजिभ्यः कुश्च ।** एभ्योऽसुन् कवर्गश्चान्तादेशः । 'अङ्कश्चिह्नशरीरयोः' । अङ्गः पक्षी । योगः समाधिः । भर्गस्तेजः ॥ ६५६ । **भूरञ्जिभ्यां कित् ।** भुवः । रजः ॥ ६५७ । **वसेर्णित् ।**

त्वा नुटं चानुवर्त्य कित्त्वाद्गुणाभावे नुटश्चुत्वेन ञकारे **रिञ्च** मिति साधितं तल्लोकवेदयोरप्रसिद्धत्वादुपेक्ष्यम् । 'नित्यं रेक्णो अमर्त्यः' 'परिषद्यं ह्यरणस्य रेक्णः' 'रेक्णः स्वत्यभि या वाममे' इत्यादिमन्त्रेषु रेक्ण इति शब्दस्य प्रसिद्धत्वात् । वैदिकनिघण्टौ च सुवर्णपर्यायेषु तथा पाठात् । वेदभाष्ये तु प्रकृतसूत्रेणैव तस्य साधितत्वाच्चापि **रेक्ण** इति प्रयोग एव साधीयानिति दिक् ॥ ६३९ **चायतेः**—। चायृ पूजानिशामनयोः । अस्मादन्ने वाच्येऽसुन्स्यात्तस्य नुट् च धातोर्ह्रस्वत्वं च । यलोपः । '**चनो** दधिष्व पचता' 'सुते दधिष्व **नश्चनः**' इत्यादिमन्त्रेषु प्रसिद्धोऽयं चनशब्दः । एतेन चणोऽन्नमित्युदाहृत्य बाहुलकाण्णत्वमिति वदन्तो दशपादीवृत्तिकारास्तदनुसारिणः प्रसादकारादयश्च परास्ताः ॥ ६४० **वृङ्**—। वृङ् संभक्तौ, शीङ् स्वप्ने, आभ्यां यथाक्रमं रूपे स्वाङ्गे च वाच्येऽसुन्स्यात्तस्य पुडागमश्च ॥—**वर्पो रूपमिति**—। 'व्रन् छिन्नदेवाँ अभिवर्पसाऽभूत्' इत्यादिमन्त्रेषु प्रसिद्धमिदम् । 'शेपः स्याद्वृषणं पेलम्' इति सुभूतिचन्द्रः । अकारान्तोऽप्ययम्, 'शेपपुच्छलाङ्गूलेषु शुनः' इति वार्तिके शेप इति निर्देशात्, 'यस्यामुशन्तः प्रहराम शेपम्' इति वैदिकप्रयोगाच्च । 'शेपः शेपौ च शेफश्च शेफं प्रोक्तं च शेफसि' इति द्विरूपकोशः ॥ ६४१ **स्रुरीभ्याम्**—। स्रु गतौ, रीङ् श्रवणे, आभ्यामसुन् स्यात् तस्य तुट् च । '**स्रोतो**ऽम्बुवेगेन्द्रिययोः' इति विश्वः । '**रेतः** शुक्रे पारदे च' इति मेदिनी ॥ ६४२ **पातेः**—। पा रक्षणे, अस्माद्बले वाच्येऽसुन् जुडागमश्च वर्गतृतीयादिः । 'युट् च' इत्यन्तस्थादिपाठस्तूज्ज्वलदत्तस्य प्रामादिकः । 'पृथुपाजा अमर्त्यः' इत्यादिमन्त्रेषु [illegible] ॥ ६४३ **उदके**—। पातेरुदके वाच्येऽसुन्स्यात्तस्य थुडागमश्च । 'कबन्धमुदकं **पाथः**' इत्यमरः ॥ ६४५ **अदेः**—। अद भक्षणे । 'भिस्सा स्त्री भक्तम**न्धोऽ**न्नम्' इत्यमरः । '[illegible] यदेत**दन्धसा**' इति भारविः ॥ ६४६ **स्कन्देः**—। स्कन्दिर् गतिशोषणयोः । अस्मात्स्वाङ्गे वाच्येऽसुन् धश्चान्तादेशः ॥ ६४७ **आपः**—। आप्लृ व्याप्तौ । अस्मात्कर्माख्यायामसुन् ह्रस्वश्च धातोः । प्रत्ययस्य नुडागमस्तु वा स्यात् । 'अप्नस्वतीमश्विना' '**अपांसि** यस्मिन्नधि संदधुः' ॥—**बाहुलकात्**—[illegible], ह्रस्वनुटौ वा स्त इत्यपि व्याख्यानात्—इत्यपि बोध्यम् । तथा च 'ब्रुवते कतमेऽपि नपुंसकमापः' इति कोशमुदाहृत्य 'सर्वमापोमयं जगत्' इति प्रयोगो दुर्घटवृत्तौ समर्थितः ॥ ६४८ **रूपे**—। रूपे वाच्ये आप्नोतेरसुन् ह्रस्वत्वं च धातोः, प्रत्ययस्य जुडागमश्च स्यात् ॥—**अब्ज इति** । 'झलां जश् झशि' इति पकारस्य बकारः ॥ ६४९ **उदके**—। उदके वाच्ये आप्नोतेरसुन् ह्रस्वत्वं च नुमागमो भश्चान्तादेशः ॥ ६५० **नहेः**—। णह बन्धने, अस्माद्गमने वाच्येऽसुन् भश्चान्तादेशः स्यात् । '**नभो** व्योम्नि नभा मेघे श्रावणे च पतद्ग्रहे । घ्राणे मृणालसूत्रे च वर्षासु च नभाः स्मृतः' इति विश्वः । 'नभः क्लीबं व्योम्नि पुमान्घने । घ्राणश्रावणवर्षासु बिसतन्तौ पतद्ग्रहे' इति मेदिनी । 'नभः खं श्रावणो नभाः' इत्यमरः । 'नभं तु नभसा सार्धम्' इति द्विरूपकोशादकारान्तोऽपि ॥ ६५१ **इणः**—। इणोऽसुन् स्यादपराधे वाच्ये धातोरागादेशश्च । विश्वोक्तिमाह—**आग इति** ॥ ६५२ **अमेः**—। अम गत्यादौ । अस्मादसुन् हुगागमश्च धातोः स्यात् । अमन्ति गच्छन्त्यनेनाधस्तादित्य**ंहो** दुरितम् ॥ ६५३ **रमेश्च** । रमेरसुन् स्यात् हुगागमश्च धातोः । रंहो वेगः । अहिरहिभ्यामसुना सिद्धे अघिरघिभ्यामसुनि अङ्घो रङ्घ इति मा भूदिति सूत्रद्वयमिति गोवर्धनः । तथा च 'स्यान्मध्योष्मचतुर्थत्वमंहसो रंहसस्तथा' इति द्विरूपकोशः । **एवं च** 'दत्तार्घाः सिद्धसङ्घैर्विदधतु घृणयः शीघ्रमङ्घोविघातम्' इति, 'रङ्घःसङ्घः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः' इत्यत्र अङ्घो रङ्घ इति घकारपाठोऽनुप्रासरसिकानां प्रामादिक इति **वदन्ति** ॥ ६५४ **देशे**—। देशे वाच्ये रमेरसुन् हकारश्चान्तादेशः स्यात् । 'रहस्तत्त्वे रते गुह्ये' इति मेदिनी ॥ ६५५ **अञ्चि**—। अञ्चु गतिपूजनयोः, अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, युजिर् योगे, युज समाधौ, भृजी भर्जने । अङ्कः, अङ्कसी, अङ्कांसि । अङ्गः, अङ्गसी, अङ्गांसि । योगः, योगसी, योगांसि ॥—**भर्गस्तेज इति** । 'हरः स्मरहरो भर्गः' इत्यत्र तु भर्गशब्दो घञन्तः पुंलिङ्ग इति बोध्यः । उच समवाये, अस्मादसुनि बाहुलकात्कुत्वम् । न्यङ्क्वादित्वाद्वा । '**ओक** आश्रयमात्रेऽपि मन्दिरेऽपि नपुंसकम्' इति मेदिनी ॥ ६५६ **भूरञ्जि**—। भू सत्तायाम्, रञ्ज रागे, आभ्यामसुन्कित्स्यात् । **भुवः**=अन्तरिक्षम् । षष्ठ्यन्तप्रतिरूपकमव्ययमिदम् । **रजो** रेणुः । 'रजः क्लीबं गुणान्तरे । आर्तवे च परागे च रेणुमात्रेऽपि दृश्यते' इति मेदिनी । घञर्थे कप्रत्यये तु अका-

वासो वस्त्रम् ॥ ६५८। **चन्देरादेश्च छः**। छन्दः ॥ ६५९। **पचिवचिभ्यां सुट् च**। 'पक्षसी तु स्मृतौ पक्षौ'। वक्षो हृदयम् ॥ ६६०। **वहिहाधाञ्भ्यश्छन्दसि**। वक्षा अनड्वान्, हासाश्चन्द्रः, धासाः पर्वत इति प्राञ्चः। वस्तुतस्तु णिदित्यनुवर्तते न तु सुट्। तेन वहेरुपधावृद्धिः। इतरयोः 'आतो युक्-' २७६१ इति युक्। 'शोणा धृष्णू नृवाहसा'। 'श्रोता हवं गृणतः स्तोमवाहाः'। 'विश्वो विहायाः'। 'वाजम्भरो विहायाः'। 'देवो न यः पृथिवीं विश्वधायाः'। 'अधारयत् पृथिवीं विश्वधायसम्'। 'धर्णसिं भूरिधायसम्'। इत्यादि ॥ ६६१। **इण आसिः**। अयाः वह्निः। स्वरादिपाठादव्ययत्वम् ॥ ६६२। **मिथुनेऽसिः पूर्ववच्च सर्वम्**। उपसर्गविशिष्टो धातुर्मिथुनं, तत्रासुनोऽपवादोऽसिः स्वरार्थः। यस्य धातोर्यत्कार्यं असुन्प्रत्यये उक्तं, तदत्रापि भवतीत्यर्थः-अशोर्देवने युट् चेत्यादि। सुयशाः ॥ ६६३। **नञि हन एह च**। अनेहाः, अनेहसौ॥६६४। **विधाञो वेध च**। विदधातीति वेधाः॥ ६६५। **नुवो धुट् च**। नोधाः=ऋषिः॥ ६६६। **गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वं च**। असिः स्यात्। सुतपाः। जातवेदाः। 'गतिकारकोपपदात् कृत्' ३८७० इत्युत्तरपदप्रकृतिस्वरत्वे सति शेषस्यानुदात्तत्वे प्राप्ते तदपवादार्थमिदम् ॥ ६६७। **चन्द्रे मो डित्**। चन्द्रोपपदान्माङोऽसिः स्यात्स च डित्। चन्द्रमाः ॥ ६६८। **वयसि धाञः**। वयोधास्तरुणः ॥ ६६९। **पयसि च**। पयोधाः समुद्रो मेघश्च ॥ ६७०। **पुरसि च**। पुरोधाः॥ ६७१। **पुरूरवाः**। पुरुशब्दस्य दीर्घो रौतेरसिश्च निपात्यते ॥ ६७२। **चक्षेर्बहुलं शिच्च**। नृचक्षाः ॥ ६७३। **उषः कित्**। उषः ॥ ६७४। **दमेरुनसिः**। 'सप्तार्चिर्दमुनाः' ॥ ६७५ **अङ्गतेरसिरिरुडागमश्च**। अङ्गिराः ॥ ६७६। **सर्तेरप्पूर्वादसिः**। अप्सराः। प्रायेणायं भूम्नि, अप्सरसः ॥ ६७७। **विदिभुजिभ्यां**

---

रान्तोऽप्ययम्। 'रजोऽयं रजसा सार्धं स्त्रीपुष्पगुणधूलिषु' इत्यजयकोशः॥ ६५७ **वसेः-**। वस निवासे, अस्मादसुन् स्यात्स च णित्। णित्वाद्वृद्धिः॥ ६५८ **चन्देः-**। चदि आह्लादने, अस्मादसुन् आदेः-छकारश्च। **'छन्दः** पद्यप्रभेदेऽपि स्वैराचाराभिलाषयोः' इति मेदिनी। अकारान्तोऽप्ययम्। 'अभिप्रायवशौ **छन्दौ**' इत्यमरद्विरूपकोशौ॥ ६५९ **पचि-**। डुपचष् पाके, वच परिभाषणे, आभ्यामसुन् स्यात्तस्य सुडागमश्च। चस्य कुत्वे सस्य षत्वम्। **पक्षः**, पक्षसी, पक्षांसि। 'यथा शालायै पक्षसी' इति श्रुतिः। 'पूर्वोत्तरे द्वे पक्षसी' इति च श्रुतिः। 'पूर्वोत्तरे द्वे पक्षसी' इति अनीकाधिकरणे **शावरभाष्यम्। माधवस्तु—** 'पक्ष परिग्रहे' इत्यस्मादसुन् इत्याह ॥ ६६० **वहि-**। वह प्रापणे, ओहाक् त्यागे, डुधाञ् धारणादौ, एभ्योऽसुन् स्यात्। अत्र पूर्वसूत्रात्सुटमनुवर्तयतामुज्ज्वलदत्तादीनां मतेनोदाहरणमाह—वक्षाः, हासाः, धासाः—इति ॥—**प्राञ्च इति**। सकलवृत्तिकृतः प्रसादकारादयश्चेत्यर्थः। एतच्चायुक्तम्। उक्तोदाहरणानि हि न तावल्लोके दृश्यन्ते न वा संभवन्ति, सूत्रेऽस्मिन् छन्दसीत्युक्तत्वात्। वेदे तु विपरीतान्येवोदाहरणानि दृश्यन्त इत्याह—**वस्तुतस्त्विति**। वेदभाष्यकारादयश्चेहानुकूला इत्यवधेयम्॥ ६६१ **इणः-**। इण् गतौ, अस्मादासिः स्यात्॥ ६६२ **मिथुने-**॥—**सुयशा इति**। 'अशोर्देवने युट् च' इत्यादि पूर्ववत्। सुयशाः, सुस्रोता इत्याद्युदाहार्यम्॥ ६६३ **नञि-**। हन्तेर्नञ्युपपदेऽसिः स्यात् धातोरेहादेशश्च। 'ऋदुशनस्पुरुदंस-' इत्यादिना सावनङ्॥ ६६४ **विधाञः-**। डुधाञ् धारणादौ, विपूर्वादस्मादसिः स्याद्वेधादेशश्च सोपसर्गधातोः। **'वेधाः** पुंसि हृषीकेशे बुधे च परमेष्ठिनि' इति मेदिनी॥ ६६५ **नुवः-**। णु स्तुतौ, अस्मादसिः स्यात्तस्य धुडागमश्च॥—**नोधा इति**। 'सद्यो भुवद्वीर्याय **नोधाः**' इति मन्त्रे 'नोधा ऋषिर्भवति' इति निरुक्तम्। नवं दधातीति तु नैरुक्तं व्युत्पत्त्यन्तरं बोध्यम्॥ ६६६ **गति-**। गतौ कारके चोपपदेऽसिः स्यात्। तप संतापे, विद ज्ञाने, विद्लृ लाभे॥ ६६७ **चन्द्रे-**। चन्द्रं रजतममृतं च। तदिव मीयतेऽसौ चन्द्रमा इति हरदत्तः। 'स च डित्' इति डित्त्वाट्टिलोपे चन्द्रमसौ चन्द्रमस इत्यादि सिध्यति॥ ६६८ **वयसि-**। डुधाञ् धारणे, अस्माद्वयस्युपपदेऽसिः स्यात्स च डित्॥ ६६९ **पयोधा इति**। पयःशब्द उपपदे डुधाञः पूर्ववत्॥ ६७० **पुरसि च**। पुरःशब्द उपपदे पूर्ववत्। **'पुरोधास्तु** पुरोहितः' इत्यमरः॥ ६७१ **रौतेरिति-**। रु शब्दे। **'पुरूरवा** बुधसुतो राजर्षिश्च पुरूरवाः' इत्यमरः॥ ६७२ **चक्षेः-**। चक्षिङ् व्यक्तायां वाचि, अस्मादसिः स्यात्स च बहुलं शित्। शित्त्वात्सार्वधातुकसंज्ञायां ख्याञ् न। **नृचक्षाः**=राक्षसः। शित्त्वाभावपक्षे तु ख्याञादेशः। **प्रख्याः** प्रजापतिः॥ ६७३ **उषः-**। उष दाहे, अस्मादसिः स्यात्स च कित्। **उषः** प्रभातम्। दशपाद्यां तु वसः किदिति पाठः। वसति सूर्येण सहेति **उषाः**=देवताविशेषः। 'अपो भि' इति सूत्रे 'उषसश्चेष्यते' इति वार्तिकस्य समुषद्भिरित्युदाहरणं विवृण्वद्भिर्हरदत्तादिभिरयं पाठः पुरस्कृतः॥ ६७४ **दमेः-**। दमु उपशमे। 'सप्तार्चिर्**दमुनाः** शुक्रः' इत्यमरः। पक्षे 'अन्येषामपि दृश्यते' इति दीर्घः। 'जुष्टो **दमूनाः**' 'दमूनसं गृहपतिं वरेण्यम्'। दशपाद्यां तु 'दमेरूनसिः' इति सूत्र एव दीर्घः पठ्यते, तन्मते बाहुलकाद्ध्रस्वो बोध्यः॥ ६७५ **अङ्गिराः—** अगिर्गत्यर्थः। **अङ्गिरा** ऋषिभेदः॥ ६७६ **सर्तेः-**। सृ गतौ॥—**प्रायेणेति**। 'स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सरा अपि' इति शब्दार्णवः॥ 'अप्सरस्त्वप्सराः प्रोक्ताः सुमनाः सुमनस्सु च' इति द्विरूपकोशः। 'एकाप्सरःप्रार्थितयोर्विवादः' इति रघुः॥ ६७७ **विदि-**। विद ज्ञाने, भुज पालनाभ्यवहारयोः, आभ्यां विश्वशब्दे उपपदेऽसिः स्यात्॥ शब्दस्वरूपपरत्वात् 'विश्वे' इत्यत्र स्विन्नादेशो न कृतः। उदाहरणे 'विश्वं वेत्ति भुङ्क्ते' इति विग्रहः। यत्तु 'तत्पुरुषे कृति-' इति सप्तम्या अलुक्,

विश्वे । विश्ववेदाः । विश्वभोजाः ॥ ६७८ । वशेः कनसिः । संप्रसारणम् । उशना ॥

॥ इत्युणादिषु चतुर्थः पादः ॥

## अथ पञ्चमः पादः ।

६७९ । अदि भुवो डुतच् । अद्भुतम् ॥ ६८० । गुधेरूमः । गोधूमः ॥ ६८१ । मसेरूरन् । मसूरः । प्रथमे पादे 'असेरुरन्' 'मसेश्च' (४२) इत्यत्र व्याख्यातः ॥ ६८२ । स्थः किच्च । स्थूरो मनुष्यः ॥ ६८३ । पातेरतिः । पातिः स्वामी । संपातिः पक्षिराजः ॥ ६८४ । वातेर्नित् । 'वातिरादित्यसोमयोः' ॥ ६८५ । अर्तेश्च । अरतिरुद्वेगः ॥ ६८६ । तृहेः क्नो हलोपश्च । तृणम् ॥ ६८७ । वृञ्लुटितनिताडिभ्य उलच् तण्डश्च । व्रियन्ते लुट्यन्ते तन्यन्ते ताड्यन्त इति वा तण्डुलाः ॥ ६८८ । दंसेष्टटनौ न आ च । 'दासः सेवकशूद्रयोः' ॥ ६८९ । दंशेश्च । दाशो धीवरः ॥ ६९० । उदि चेर्डसिः । स्वरादिपाठादव्ययत्वम् । उच्चैः ॥ ६९१ । नौ दीर्घश्च । नीचैः । ६९२ । सौ रमेः क्तो दमे पूर्वपदस्य च दीर्घः । रमेः सुपूर्वाद्दमे वाच्ये क्तः स्यात् । कित्वादनुनासिकलोपः । सूरत उपशान्तो दयालुश्च ॥ ६९३ । पूञो यण् णुक् ह्रस्वश्च । यत्प्रत्ययः । पुण्यम् ॥ ६९४ । स्रंसेः शिः कुट् किच्च । स्रंसतेः शिरादेशो यत्प्रत्ययः कित्, तस्य कुडागमश्च । शिक्यम् ॥ ६९५ । अर्तेः क्युरुच्च । उरणो मेषः ॥ ६९६ । हिंसेरीरन्नीरचौ । 'हिंसीरो व्याघ्रदुष्टयोः' ॥ ६९७ । उदि दृणातेरजलौ पूर्वपदान्त्यलोपश्च । उदरम् ॥ ६९८ । डित् खनेर्मुट् स चोदात्तः । अच् अल् च डित्स्याद्धातोर्मुट्, स चोदात्तः । मुखम् ॥ ६९९ । अमेः सन् । अंसः ॥ ७०० । मुहेः खो मूर्च । मूर्खः । ७०१ । नहेर्हलोपश्च । नखः ॥ ७०२ । शीङो ह्रस्वश्च । शिखा ॥ ७०३ । माङ ऊखो मय् च । मयूखः ॥ ७०४ । कलिगलिभ्यां फगस्योच्च । कुल्फः शरीरावयवो रोगश्च । गुल्फः पादग्रन्थिः ॥ ७०५ । स्पृशेः श्वण्शुनौ पृ च । श्वण्शुनौ प्रत्ययौ 'पृ' इत्यादेशः । पार्श्वम् । 'पार्श्वोऽस्त्री कक्षयोरधः' । पर्शुरायुधम् ॥ ७०६ । श्मनि श्रयतेर्डुन् । श्मन्शब्दो मुखवाची ।

---

'विश्ववेदाः=अग्निः, विश्वभोजाः=इन्द्रः' इत्युज्ज्वलदत्तेनोक्तं । तन्न । तथा सति स्विन्नादेशस्य दुर्वारत्वापत्तेः । 'सुमृळीको भवतु विश्ववेदाः' 'पूषाभगः प्रभृथे विश्वभोजाः' इत्यादिमन्त्रेषु सुपो लुक एव दर्शनात्, वृत्त्यन्तरे तथैवोदाहरणाच्च ॥ **६७८ वशेः–।** वश कान्तौ । **'उशना** भार्गवः कविः' इत्यमरः ॥ **॥ इत्युणादिषु चतुर्थः पादः ॥**

**६७९ अदि भुवो–।** 'अत्' इत्यव्ययं आकस्मिकार्थे, तस्मिन्नुपपदे भूधातोर्डुतच्स्यात् । डित्वाट्टिलोपः । **अद्भुत**माश्चर्यम् ॥ **६८० गुधेः–।** गुध परिवेष्टने, गुध्यते परिवेष्ट्यते प्राणिभिरिति । **'गोधूमो** नागरङ्गे स्यादोपधीव्रीहिभेदयोः' इति मेदिनी ॥ **६८१ मसेः–।** मसी परिणामे ॥ **६८२ स्थः–।** ष्ठा गतिनिवृत्तौ अस्मादूरन् । कित्त्वादालोपः ॥ **स्थूरो मनुष्य इति । स्थूर**स्य रायो बृहतो य ईशे' इति मन्त्रे तु योगपुरस्कारात् 'स्थिरस्येत्यर्थः' इति व्याख्यातम् ॥ **६८३ पातेः–।** पा रक्षणे ॥ **६८४ वातेः–।** वा गतिगन्धनयोः ॥ रत्नकोशस्थनात्—**वातिरिति** ॥ **६८५ अर्तेः ।** ऋ गतौ, अस्मादतिः स्यात्स च नित् ॥ **६८६ तृहेः–।** तृह हिंसायाम्, क्नस्य कित्त्वाद्गुणाभावः ॥ **६८७ वृञ्–।** वृञ् वरणे, लुट विलोडने, तनु विस्तारे, तड आघाते चुरादिः, एभ्य उलच् स्यात् तण्डादेशश्च धातोः । यद्यपि 'सानसिवर्णसि–' इति सूत्रे तण्डुलशब्दो निपातितस्तथापि प्रत्ययस्वरेण मध्योदात्तः सः, अयं तु चित्स्वरेणान्तोदात्त इति विवेकः ॥ **६८८ दंसेः–।** दसि दंशनदर्शनयोः, अस्माट्टटनौ स्यातां नकारस्याकारादेशः । टनो नकार आद्युदात्तार्थः । **'दासः** शूद्रे दानपात्रे भृत्यधीवरयोरपि' इति विश्वः ॥ **६८९ दंशेः–।** दंश दशने, अस्मादपि टटनौ स्तो नकारस्य चात्वं स्यात् । 'कैवर्ते **दाश**धीवरौ' इत्यमरः ॥ **६९० उदि–।** चिञ् चयने । डैसो डित्त्वाट्टिलोपः ॥ **६९२ सौरमेः–।** रमु क्रीडायाम् । **६९३ पूञः–।** पूञ् पवने । **'पुण्यं** मनोज्ञेऽभिहितं तथा सुकृतधर्मयोः' इति विश्वः ॥ **६९४ स्रंसेः–।** स्रंसु अधःपतने, कित्त्वं तु गुणाभावार्थम् ॥ **६९५ अर्तेः–।** ऋ गतौ अस्मात्क्युप्रत्ययः स्याद्धातोरुत्वं च । रपरत्वम् । 'युवोरनाकौ' । 'मेढ्रोरभ्रोरणोर्णायुमेषवृष्ण्य एडके' इत्यमरः ॥ **६९६ हिंसेः–।** हिसि हिंसायाम् ॥ **६९७ उदि–।** दॄ विदारणे ॥ **६९८ डित्खनेः–।** खनु अवदारणे, अस्मादजलौ स्तः । **'मुखं** निःसरणे वक्त्रे प्रारम्भोपाययोरपि । सन्ध्यन्तरे नाटकादेः शब्देऽपि च नपुंसकम्' इति मेदिनी ॥ **६९९ अमेः–।** अम गतौ, 'स्कन्धो भुजशिरोंसोऽस्त्री' इत्यमरः । **'अंसः** स्कन्धे विभागे च' इति दन्त्यान्ते विश्वः ॥ **७०० मुहेः–।** मुह वैचित्त्ये, अस्मात्खप्रत्ययो धातोर्मुरादेशश्च । मुह्यतीति **मूर्खः** । 'अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः' इत्यमरः ॥ **७०१ नहेः–।** णह बन्धने । अस्मात्खः । **'नखः** कररुहे षण्ढे गन्धद्रव्ये नखं नखी' इति विश्वः । 'नखी स्त्रीक्लीबयोः शुक्तौ नखरे पुंनपुंसकम्' इति मेदिनी ॥ **७०२ शीङः–।** शीङ् स्वप्ने, अस्मात्खः स्याद्धातोर्ह्रस्वश्च । ह्रस्वविधानसामर्थ्याद्गुणाभावः । **'शिखा** शाखा बर्हिचूडालाङ्गलिक्यग्रमात्रके । चूडामात्रे शिफायां च ज्वालायां प्रपदेऽपि च' इति मेदिनी ॥ **७०३ माङः–।** माङ् माने । 'मयूखस्त्विट्करज्वालासु' इत्यमरः ॥ **७०४ कलि–।** कल शब्दसंख्यानयोः, गल अदने, आभ्यां फक् स्यात् धातोरकारस्योत्वं च ॥—**गुल्फ इति** । 'तद्ग्रन्थी घुटिके गुल्फौ' इत्यमरः । तयोः पादयोर्ग्रन्थी इत्यर्थः ॥ **७०५ स्पृशेः–।** स्पृश संस्पर्शे, **'पार्श्वं** कक्षाधरे चक्रोपान्ते पर्शुगणेऽपि च' इति विश्वमेदिन्यौ ॥ **७०६ श्मनि–।** श्रिञ् सेवायाम्, अस्मात् श्मन्युपपदे डुन्स्यात् डित्वाट्टिलोपः । 'तद्वृद्धौ श्मश्रु पुंमुखे' इत्यमरः । पुरुषस्य मुखे तेषां=

मुखमाश्रयत इति श्मश्रु ॥ ७०७ । **अश्वादयश्च** । अश्रु नयनजलम् ॥ ७०८ । **जनेष्टन् लोपश्च** । जटा ॥ ७०९ । **अच् तस्य जङ्ग च** । तस्य जनेर्जङ्गादेशः स्यादच्च । जङ्गा ॥ ७१० । **हन्तेः शरीरावयवे द्वे च** । जघनम् । 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' ॥ ७११ । **क्लिशेरन् लो लोपश्च** । लकारस्य लोपः । केशः ॥ ७१२ । **फलेरितजादेश्च पः** । पलितम् ॥ ७१३ । **कृञादिभ्यः संज्ञायां वुन्** । करकः, करका । कटकः । नरकम्, नरकः । 'नरको नारकोऽपि च' इति द्विरूपकोशः । सरकं गगनम् । कोरकः, कोरकं च ॥ ७१४ । **चीकयतेराद्यन्तविपर्ययश्च** । कीचको वंशभेदः ॥ ७१५ । **पचिमच्योरिच्चोपधायाः** । पेचकः । मेचकः ॥ ७१६ । **जनेररष्ठ च** । जठरम् ॥ ७१७ । **वचिमनिभ्यां चिच्च** । वठरो मूर्खः । 'मठरो मुनिशौण्डयोः' । बिदादित्वान्माठरः । गर्गादित्वान्माठर्यः ॥ ७१८ । **ऊर्जि दृणातेरलचौ पूर्वपदान्तलोपश्च** । 'ऊर्दरः शूररक्षसोः' ॥ ७१९ । **कुदरादयश्च** । कुदरः कुसूलः । मृदरं बिलसत् । सृदरः सर्पः ॥ ७२० । **हन्तेर्युत्राद्यन्तयोर्घत्वतत्वे** । घातनो मारकः ॥ ७२१ । **क्रमिगमिक्षमिभ्यस्तुन् वृद्धिश्च** । क्रान्तुः पक्षी । गान्तुः पथिकः । क्षान्तुर्मशकः ॥ ७२२ । **हर्यतेः कन्यन् हिरच्** । कन्यन् प्रत्ययः । हिरण्यम् ॥ ७२३ । **कृञः पासः** । कर्पासः । बिल्वादित्वात्कार्पासं वस्त्रम् ॥ ७२४ । **जनेस्तु रश्च** । जर्तुर्हस्ती योनिश्च ॥ ७२५ । **ऊर्णोतेर्डः** । ऊर्णा ॥ ७२६ । **दधातेर्यत् नुट् च** । धान्यम् ॥ ७२७ । **जीर्यतेः क्रिन् रश्च वः** । 'जिव्रिः स्यात्कलपक्षिणोः' । बाहुलकात् 'हलि च' ३५४ इति दीर्घो न ॥ ७२८ । **मव्यतेर्यलोपो मश्चापतुट् चालः** । मव्यतेरालप्रत्ययः स्यात्तस्यापतुडागमो धातोर्यलोपो मकारश्चान्त्यस्य । ममापतालो विषये ॥ ७२९ । **ऋजेः कीकन्** । ऋजीक इन्द्रो धूमश्च ॥ ७३० । **तनोतेर्डउः**

रोम्णां वृद्धौ श्मश्रुशब्दो वर्तत इत्यर्थः ॥ ७०७ **अश्वादयः**–। अशू व्याप्तौ, अस्मात् रुन् प्रत्ययो नञ्पूर्वात् श्रयतेर्डुन् वा । **यत्तूज्ज्वलदत्तेनोक्तम्**—अश्नोतेर्डुन् रुट् चेति । तदयुक्तम्, डित्त्वाट्टिलोपे सति धातोरश्रवणप्रसङ्गात् । न च टिलोपाभावो निपात्यत इति वाच्यम् । तथा सति डित्त्वोत्प्रेक्षणस्य निष्फलत्वापत्तेरिति दिक् ॥ ७०८ **जनेः**–। जनी प्रादुर्भावे, अस्माट्टन्प्रत्ययः स्याद्धातोरन्त्यलोपश्च । '**जटा** लग्नकचे मूले मांस्यां लक्षे पुनर्जटी' इति मेदिनी ॥ ७०९ **जङ्गेति** । जनेरच्प्रत्यये सति 'अजाद्यतः–' इति टाप् ॥ ७१० **हन्तेः**–। देहावयवे वाच्ये हन्तेरच्प्रत्ययः स्यात्, द्वित्वं च धातोः । अभ्यासकार्यम्, 'अभ्यासाच्च' इति कुत्वम् । अमरोक्तिमाह—**पश्चान्नितम्ब इति** । 'जघनं च स्त्रियाः श्रोणिपुरोभागे कटावपि' इति मेदिनी ॥ ७११ **क्लिशेः**–। क्लिशू विबाधने, अस्मादन्स्यात् । '**केशः** स्यात्पुंसि वरुणे ह्रीबेरे कुण्डलेऽपि च' इति मेदिनी ॥ ७१२ **फलेः**–। फल निष्पत्तौ । '**पलितं** जरसा शौक्ल्यम्' इत्यमरः । 'पलितं शैलजे तापे केशपाशे च कर्दमे' इति मेदिनी ॥ ७१३ **कृञादिभ्यः**–। डुकृञ् करणे । **करकः** कमण्डलुः । 'करकस्तु पुमान्पक्षिविशेषे दाडिमेऽपि च । द्वयोर्मेघोपले न स्त्री करके च कमण्डलौ' इति मेदिनी । **करका** वृष्टिपाषाणः । कटे वर्षावरणयोः, '**कटको** वलये सानौ' । 'कुन् शिल्पिसंज्ञयोः' इति कुनाऽप्ययं सिद्धस्तथा च गुणभाज इहैव वुनि उदाहार्याः, गुणनिषेधभाजस्तु कुनि । उदासीनास्तु यत्र कुत्रचिदिति भावः । नॄ नये । 'स्यान्नारकस्तु **नरको** निरयो दुर्गतिः स्त्रियाम्' इत्यमरः । 'नरकः पुंसि निरये देवारातिप्रभेदयोः' इति मेदिनी । **उदयनाचार्यास्तु** 'न च नरकाण्येव सन्ति' इति क्लीबं प्रयुञ्जते तन्निर्मूलमि**त्याहुः** । सृ गतौ । '**सरको**ऽस्त्री शीधुपात्रे शीधुपानेक्षुशीधुनोः' इति मेदिनी । कुर शब्दे । '**कोरको**ऽस्त्री कुड्मले स्यात्कक्कोलकमृणालयोः' इति मेदिनी । 'विचकार कोरकाणि' इति माघः । 'कोरकः पुमान्' इत्यमरोक्तिस्तु नादर्तव्ये**त्याहुः** । अपवरकादयोऽपि इहैव बोध्याः ॥ ७१४ **चीकयतेः**–। चीक आमन्त्रणे चुरादिः । अस्याद्यन्तविपर्ययः । पचिमच्योरित्वं चानुपदं वक्ष्यमाणं बाहुलकबललभ्यं बोध्यम् । '**कीचको** दैत्यभिद्वाताहतसस्वनवंशयोः' इति मेदिनी । डुपचष् पाके । 'उलूके करिणः पुच्छमूलोपान्ते च **पेचकः**' इत्यमरः । 'पेचको गजलाङ्गूलमूलोपान्ते च कौशिके' इति मेदिनी ॥ ७१५ मचि मुचि कल्कने । '**मेचकस्तु** मयूरस्य चन्द्रके श्यामले पुमान् । तद्युक्ते वाच्यवत्क्लीबं स्रोतोऽञ्जनान्धकारयोः' इति मेदिनी ॥ ७१६ **जनेः**–। जन जनने, जनी प्रादुर्भावे वा । '**जठरः** कठिनेऽपि स्यात्' इत्यमरः । 'जठरो न स्त्रियां कुक्षौ वृद्धकर्कटयोस्त्रिषु' इति मेदिनी ॥ ७१७ **वचि**–। वच परिभाषणे, मन ज्ञाने, आभ्यामरप्रत्ययः स्यात्स च चित् रश्चान्तादेशः । '**वठरः** कुक्कुटे वण्टे सरठे च' इति मेदिनी ॥ ७१८ **ऊर्जि**–। दॄ विदारणे, अस्मादूर्ज्युपपदे अलचौ प्रत्ययौ स्तः ॥ ७१९ **कुदरादयश्च**–। कु मृ सृ एतदव्ययपूर्व कद्दणातिप्रकृतिका लजन्ता निपात्यन्ते ॥ ७२० **हन्तेः**–। हन हिंसागत्योः ॥ ७२१ **क्रमि**–। क्रमु पादविक्षेपे, गम्लृ गतौ, क्षमूष् सहने, एभ्यस्तुन्स्यादेषां वृद्धिश्च ॥ ७२२ **हर्यतेः**–। हर्य गतिकान्त्योः । 'हिरण्यं रेतसि द्रव्ये शातकुम्भवराटयोः । अक्षये मानभेदे स्यादकुप्ये च नपुंसकम्' इति मेदिनी ॥ ७२३ **कृञः**–। डुकृञ् करणे ॥ ७२४ **जनेः**–। तु इत्यविभक्तम् । जनेस्तुप्रत्ययो रेफश्चान्तादेशः स्यात् ॥ ७२५ **ऊर्णोतेः**–। ऊर्णुञ् आच्छादने, अस्मात् डः स्यात् । डित्त्वाट्टिलोपः, टाप्, '**ऊर्णा** मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवौ' इत्यमरः । भ्रुवोर्मध्ये य आवर्तस्तत्रेत्यर्थः । 'अन्तरान्तरेण–' इति द्वितीया ॥ ७२६ **दधातेः**–। डुधाञ् धारणादौ, अस्माद्यत् प्रत्ययः स्यात्तस्य नुडागमश्च । '**धान्यं** व्रीहिषु धान्याके' इति मेदिनी ॥ ७२७ **जीर्यतेः**–। जॄ वयोहानौ अस्मात् क्रिन्स्यात् । 'ऋत इद्धातोः' । रपरत्वम् । रेफस्य वकारादेशः ॥ ७२८ **मव्यतेः**–। मव्य बन्धने ॥—**अन्त्यस्येति** । वकारस्येत्यर्थः ॥ ७२९ **ऋजेः**–। ऋजी गतौ ॥ ७३० **तनोतेः**–। तनु विस्तारे, अस्मात् डउः प्रत्ययस्तस्य सन्वद्भावात् द्वित्वम्-

सन्वच्च । 'तितउः पुंसि क्लीबे च' ॥ ७३१ । **अर्भकपृथुकपाका वयसि** । 'ऋधु वृधौ' अतो वुन्, भकारश्चान्तादेशः । प्रथेः कुकन्संप्रसारणं च । पिबतेः कन् ॥ ७३२ । **अवद्यावमाधमार्वरेफाः कुत्सिते** । वदेर्नञि यत्, अवद्यम् । अवतेरमः, वस्य पक्षे धः, अवमः—अधमः । अर्तेर्वन्, अर्वा । रिफतेस्तौदादिकात् अः, रेफः ॥ ७३३ । **लीरीङोर्ह्रस्वः पुट् च तरौ श्लेषणकुत्सनयोः** । तरौ प्रत्ययौ क्रमात् स्तो धातोर्ह्रस्वः प्रत्ययस्य पुट् । लिप्तं श्लिष्टम् । रिप्तं कुत्सितम् ॥ ७३४ । **क्लिशेरीच्चोपधायाः कन् लोपश्च लो नाम् च** । क्लिशेः कन् स्यात् उपधाया ईत्वं लस्य लोपो नामागमश्च । कीनाशो यमः । कित्वफलं चिन्त्यम् ॥ ७३५ । **अश्नोतेराशुकर्मणि वरट् च** । चकारादुपधाया ईत्वम् । ईश्वरः ॥ ७३६ । **चतेरुरन्** । चत्वारः ॥ ७३७ । **प्राततेररन्** । प्रातः ॥ ७३८ । **अमेस्तुट् च** । अन्तर्मध्यम् ॥ ७३९ । **दहेर्गो लोपो दश्च नः** । गप्रत्ययो धातोरन्तस्य लोपो दकारस्य नकारः । नगः ॥ ७४० । **सिचेः संज्ञायां हनुमौ कश्च** । सिञ्चतेः कप्रत्ययो हकारादेशो नुम् च स्यात् । सिंहः ॥ ७४१ । **व्याङि घ्रातेश्च जातौ** । कप्रत्ययः स्यात् । व्याघ्रः ॥ ७४२ । **हन्तेरच् घुर च** । घोरम् ॥ ७४३ । **क्षमेरुपधालोपश्च** । चादच् । क्षमा ॥ ७४४ । **तरतेर्ड्रिः** । त्रयः, त्रीन् ॥ ७४५ । **ग्रहेरनिः** । ग्रहणिः । ङीष्, ग्रहणी व्याधिभेदः ॥ ७४६ । **प्रथेरमच्** । प्रथमः ॥ ७४७ । **चरेश्च** । चरमः ॥ ७४८ । **मङ्गेरलच्** । मङ्गलम् ॥

इत्युणादिषु पञ्चमः पादः ॥

---

भ्यासस्येत्वं च । डित्वाट्टिलोपः । पृथगुच्चारणसामर्थ्याद्गुणो न । तितउः=चालनी । 'सक्तुमिव **तितउना** पुनन्तो यत्र धीरा मनसा वाचमक्रत' । '**तितउः** परिपवनं भवति' इति पस्पशायां भाष्यम् । 'चालनी तितउः पुमान्' इत्यमरः । 'चालनं तितउन्युक्तम्' इति कोशान्तरम् ॥ 'स्याद्वास्तु हिङ्गु तितउ' इति पुंनपुंसकवर्गे त्रिकाण्डशेषः ॥ **७३१ अर्भक-**। एते निपात्यन्ते । निपातनप्रकारमेवाह—**ऋधु वृद्धावित्यादि** ॥—**प्रथेरिति** । प्रथ प्रख्याने, पा पाने-पिबति स्तनादिकमिति पाकः । 'पोतः **पाको**ऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः । '**अर्भकः** कथितो बाले मूर्खेऽपि च कृशेऽपि च । **पृथुकः** पुंसि चिपिटे शिशौ स्यादभिधेयवत्' । 'पाकः परिणतौ शिशौ । केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च' इति मेदिनी ॥ **७३२ अवद्या-**। एते कुत्सिते निपात्यन्ते । वद व्यक्तायां वाचि, अव रक्षणादौ, ऋ गतौ, रिफ कत्थनयुद्धनिन्दाहिंसादानेषु । 'निकृष्टप्रतिकृष्ट**ार्वरेफ**याप्या**वमाधमाः**' इत्यमरः । 'कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः' इति च । '**अधमः** स्याद्गर्ह्ये ऊनेऽपि' इति मेदिनी । '**अर्वा** तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकः । **रेफो** रवर्णे पुंसि स्यात्कुत्सिते पुनरन्यवत्' इति च मेदिनी ॥ **७३३ लीरीङोः-**। लीङ् श्लेषणे, रीङ् श्रवणे ॥—**क्रमादिति** । श्लेषणे वाच्ये तप्रत्ययः कुत्सिते वाच्ये रप्रत्यय इत्यर्थः । '**लिप्तं** विपाक्ते भुक्ते च वाच्यवत्स्याद्विलेपिते' इति विश्वः ॥ **७३४ क्लिशेः-**। क्लिश् विबाधने । नामागमश्च प्रत्ययस्येति शेषः ॥—**चिन्त्यमिति** । ईत्वविधानसामर्थ्यादेव गुणाभावसिद्धेरिति भावः । '**कीनाशः** कर्षकः क्षुद्रोपांशुधूलिषु वाच्यवत् । यमे ना' इति मेदिनी ॥ **७३५ अश्नोतेः-**। अशू व्याप्तौ, अस्माद्वरट् स्यात् । आशुकर्म=वरदानादिक्रिया यस्य तस्मिन्वाच्ये, शीघ्रदातरीत्यर्थः ॥—**ईश्वर इति** । स्त्रियां तु टित्वान्ङीप्, ईश्वरी । प्रत्ययस्वरेण मध्योदात्ता । ईशेर्वनिपि 'वनो र च' इति ङीन्रयोस्तु धातुस्वरेणाद्युदात्ता । पुंयोगलक्षणे ङीपि-अन्तोदात्ता । 'स्थेशभासपिसकसः—' इति वरचि तदन्तादापि ईश्वरेति विवेकः । '**ईश्वरो** मन्मथे शम्भौ नाढ्ये स्वामिनि वाच्यवत् । ईश्वरी चेश्वरोमायाम्' इति मेदिनी । ईश्वरा उमायामिति छेदः । '**ईश्वरः** शङ्करेऽधीशे तत्पत्न्यामीश्वरीश्वरा' इति बोपालितः । 'विन्यस्तमङ्गलमहौषधिरीश्वरायाः' इति भारविः । दशपाद्यां तु सूत्रान्तरमपि 'हन्ते रन् घश्च' इति । हन हिंसागत्योः, अस्माद्रन्प्रत्ययः स्यात् घश्चान्तादेशः । हन्यते गन्धतेऽतिथिभिरिति **घरः** गृहम् ॥ **७३६ चतेः** । चते याचने, अस्मादुरन्स्यात् । अकार उच्चारणार्थः । 'चतुरनडुहोरामुदात्तः' इत्याम् । **चत्वारः** ॥—**प्राततेः-**। अत सातत्यगमने, प्रपूर्वादस्मादरन्स्यात् । रेफादकार उच्चारणार्थः । स्वरादिपाठादव्ययत्वम् । **प्रातर्** ॥ ७३८ **अमेः-**। अम गतिशब्दसंभक्तिषु, अस्मादरन्स्यात्तस्य तुडागमश्च । अन्तःशब्दोऽपि प्रातःशब्दवत् अव्ययम् ॥ **७३९ दहेः-**। दह भस्मीकरणे । '**नगो** महीरुहे शैले भास्करे पवनाशने' इति मेदिनी ॥ **७४० सिचेः-**। षिच क्षरणे ॥—**हकारादेश इति** । धातोरन्त्यस्येत्यर्थः । '**सिंहः** कण्ठीरवे राशौ सत्तमे चोत्तरस्थितः । सिंही क्षुद्रबृहत्योः स्याद्वासके राहुमातरि' इति विश्वः ॥ **७४१ व्याङि-**। घ्रा गन्धोपादाने, अस्माज्जातौ वाच्यायां कः स्यात् । कित्त्वादातो लोपः । '**व्याघ्रः** स्यात्पुंसि शार्दूले रक्तैरण्डकरञ्जयोः । श्रेष्ठे नरादुत्तरस्थः कण्टकायां च योषिति' इति मेदिनी ॥ **७४२ हन्तेः-**। हन्तेरच् स्याद्धातोर्घुरादेशश्च । '**घोरं** भीमे हरे' इति विश्वः ॥ **७४३ क्षमेः-**। क्षमूष् सहने । '**क्षमा**वनिर्मेदिनी मही' इत्यमरः ॥ **७४४ तरतेः-**। तॄ प्लवनतरणयोः, अस्मात् ड्रिः स्यात् । डित्वाट्टिलोपः ॥ **७४५ ग्रहेः-**। ग्रह उपादाने ॥—**ङीषिति** । 'कृदिकारात्' इत्यनेन । '**ग्रहणी** रुक् प्रवाहिका' इत्यमरः ॥ **७४६ प्रथेः-**। प्रथ प्रख्याने । '**प्रथमस्तु** भवेदादौ प्रधानेऽपि च वाच्यवत्' इति मेदिनी । 'प्रथमचरम-' इति वैकल्पिकसर्वनामत्वात्पक्षे जसः शीभावः । प्रथमे, प्रथमाः ॥ **७४७ चरेश्च** । चर गतिभक्षणयोः, अस्मादमच्स्यात् । **चरमे,** चरमाः । योगविभागश्चिन्त्यप्रयोजनः । प्रथिचरिभ्यामित्येव सुवचम् ॥ **७४८ मङ्गेः** ।

उखउखीत्यादिदण्डके गत्यर्थको मगिः पठ्यते । 'कल्याणं **मङ्गलं** शुभम्' । मङ्गलो ग्रहभेदः । 'मङ्गला सितदूर्वायामुमायां पुंसि भूमिजे । नपुंसकं तु कल्याणे सर्वार्थे रक्षणेऽपि च' इति मेदिनी । भावे ष्यञि माङ्गल्यम्, 'तत्र साधुः' इति यत् । '**मङ्गल्यः** स्यात्त्रायमाणाश्वत्थबिल्वमसूरके । स्त्रियां शम्यामधःपुष्प्यां मिसि शुक्लवचासु च । रोचनायामथो दध्नि क्लीबं शिवकरे त्रिषु' इति मेदिनी ॥ ॥ **इत्युणादिषु पञ्चमः पादः** ॥

**उणादिप्रत्ययाः सन्ति पादोत्तरशतत्रयम् ( ३२५ ) । तेषां विवेचनं त्वत्र ज्ञानेन्द्रस्वामिभिः कृतम् ॥**

प्राचा तु कतिपयानामेवोणादीनामुपन्यासः कृतो न तु सर्वेषां, सोऽप्युपन्यासो नैकप्रघट्टकतया कृतः किंतु विच्छिद्येति स्पष्टम् । तत्रापि केचित्प्रमादा मनोरमायां प्रदर्शितास्तेष्वेव कांश्चित्प्रमादान्दर्शयामः ॥ **द्वितीयपादे**—'भजो ण्विः' इति ण्विप्रकरणे 'छन्दसि सहः' 'वहश्च' इत्युपन्यस्य 'परौ व्रजेः षः पदान्ते' इति ण्विस्तेनैव षः, परिव्राट्–इत्ययं हि प्राचो ग्रन्थः, तद्व्याख्यायां तत्पौत्रेण पञ्चपाद्युणादिसूत्रे इदं पठ्यते इत्युक्तं । तदुभयमपि **प्रामादिकम्** । 'क्विब्वचि–' इति क्विब्दीर्घौ प्रक्रम्य 'परौ व्रजेः–' इति सूत्रस्य पाठात् । अस्मिन्नंशे पञ्चपादीदशपाद्योरेकवाक्यत्वात् । **यदपि** प्राचो ग्रन्थे क्वचित्पठ्यते **च्चिणिति** । तदप्यपाणिनीयत्वादुपेक्ष्यम् । एतेन प्रघट्टकान्तरे 'स्तुद्रुपरिव्रजां दीर्घश्च' इति केचित्—इति प्राचोग्रन्थोऽपि प्रत्युक्तः । सूत्रारूढे सर्वसंमते चार्थे केचिदित्युक्तेरप्रामाणिकत्वात् । **यदपि** 'धनर्त्तिचक्षिङ्वपितपिजनियजेरुस' इति पठितं । **तदप्यनाकरम्** । तथा हि—'जनेरुसिः' 'अर्तिपॄवपियजितनिधनितपिभ्यो नित्' 'एतेर्णिच्च' 'चक्षेः शिच्च' इति सर्वसंमतः पाठः । 'वपूंषि तस्मै वपुषो वपुष्टरम्' इत्यादिमन्त्रेषु आद्युदात्ततयाऽनुकूलश्च । वेदभाष्ये एवमेव स्थितम् । इत्यादयो **द्वितीयपादे प्रमादाः** ॥

**तृतीयपादेऽपि**—स्तनिदूषिपुषिगदिमदिहृदिभ्यो णेरिन्नुजिति प्राचा पठितं । तत्र दूषिहृदी केषामपि वृत्तिकृतां ग्रन्थे न पठितौ । **दूषयित्नुः हृदयित्नु**रिति प्रयोगोऽप्याकरे न दृष्टः । 'स्तनिहृषिपुषिमुदिगदिमदिभ्यः' इति हि पञ्चपादीपाठः । 'घुषिगन्धिमण्डिजनिनमिभ्यः' इति दशपाद्यामधिकं पठितमित्य**न्यदेतत्** । **यदपि** 'श्रुदक्षिस्पृहिगृहिदृजिभ्य आय्यः' इति पठित्वा **दराय्य जराय्य** इति प्राचोक्तं । तदपि न, दृजिग्रहणस्याकरानारूढत्वात् । **यदपि** 'जॄविशिभ्यां झच्' 'गण्डिमण्डिजनिनन्दिभ्यश्च' इत्युक्त्वा '**गण्डयतो जनयन्तः**' इत्युदाहृतं प्राचा, **यच्च** गण्डयन्त इति प्रतीकमुपादाय मेघनामेदमिति व्याख्याय गडि वदनैकदेशे इति व्याख्यातृभिर्विवृतं । तत्सर्व **प्रामादिकम्** । **तथाहि**—उणादिषु गडीति निरनुषङ्गं पठित्वा गड सेचने इति विवृतं, 'अयामन्ता' इति सूत्रे वृत्तिन्यासहरदत्तादिसकलग्रन्थेष्वेवं, माधवग्रन्थेऽप्येवमेव । **युक्तं चैतत्** । मेघ इति व्याख्यानं प्रति सेचनार्थस्यैवानुगुणत्वात् । जनेः पाठोऽप्यप्रामाणिकः । जिधातुं पठित्वा 'जयन्तः पाकशासनिः' इति सर्वैर्विवृतत्वात्, जनयन्त इति लक्ष्यस्य कैरपि अप्रदर्शितत्वात्, अप्रसिद्धत्वाच्च–इत्यादय**स्तृतीयपादे प्रमादाः** ॥

**अथ चतुर्थे–यदपि** कॄगॄस्तृजागृभ्यः क्विन् । कीर्विः गीर्विः स्तृर्विरिति प्राचोक्तं । तदपि लिपिभ्रमप्रयुक्तमेव । कॄ विक्षेपे, गॄ निगरणे, स्तृञ् आच्छादने, इति प्राचो ग्रन्थं विवृण्वतामुक्तिरपि मूलाशुद्ध्यैव हेया । 'जॄशॄस्तृजागृभ्यः क्विन्' इति हि पाठ उणादिवृत्तिकृतां माधवादीनां च संमतः । जीर्विः पशुः । शीर्विर्हिंस्रः । स्तीर्विरध्वर्युरिति च तत्तद्ग्रन्थेषूपपादितम् । स्तॄ इत्यस्य दीर्घान्तत्व एवहि 'ॠत इद्धातोः' इतीत्वं लभ्यते न तु ह्रस्वान्तत्वेऽपि, तस्माद्यथाकरमेव हि ग्रहीतुमुचितमिति दिक् ॥ **यदपि प्राचोक्तं**—'ग्लाज्याहात्वरिभ्यो निः' इति **तदप्यनाकरम्** । आकरे हि 'वीज्याज्वरिभ्यो निः' इति पठित्वा सूत्रद्वयानन्तरं 'वहिश्री–' इति सूत्रे 'ग्लाहात्वरिभ्यो नित्' इति सूत्रितत्वात् । 'तूर्णी रथः सदानवः' इत्यादावाद्युदात्तदर्शनाच्च ॥ नच 'स्त्रियां क्तिन्' इत्यधिकारस्थं वार्तिकमेवेदं प्राचोदाहृतं न तूणादिसूत्रस्थमिति वाच्यम् । एवमपि त्वरतेः पाठस्यानुचितत्वात् ॥ न ह्यसौ वार्तिकेऽस्तीति दिक् ॥ एवं संस्त्याने स्त्यायतेड्रट् इत्यपि प्राचोदाहृतमप्यनाकरम् । स्त्यायतेर्ड्रडित्येव सूत्रस्याकरे पञ्चपाद्यां दशपाद्यां चोपलम्भात् । 'संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूतेः प्रसवे पुमान्' इति भाष्ये श्लोकपाठः, स एव माधवेनोपन्यस्तः । न तु सूत्रपाठस्य तथात्वं दृश्यते, एवं तद्ग्रन्थव्याख्यातॄणामपि प्रमादा ऊह्याः । तद्यथा—पाणिन्यादिमुनीनिति व्याचक्षाणैरुक्तम्—'मनेरुच्चोपधायाः' इति, न ह्येवंविधं सूत्रं पञ्चपाद्यां दशपाद्यां वाऽस्ति, अत इत्यनुवर्तमाने 'मनेरुच्च' इत्येव सूत्रितत्वादिति दिक् ॥ इति **चतुर्थपादे प्राचः प्रमादाः** ॥

॥ **इत्युणादयः समाप्ताः** ॥

# अथ उत्तरकृदन्तम् ।

३१६९ । **उणादयो बहुलम्** ।३।३।१। एते वर्तमाने संज्ञायां च बहुलं स्युः । केचिदविहिता अप्यूह्याः ॥

संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥

३१७० । **भूतेऽपि दृश्यन्ते** ।३।३।२।

३१७१ । **भविष्यति गम्यादयः** ।३।३।३।

३१७२ । **दाशगोघ्नौ संप्रदाने** ।३।४।७३ एतौ संप्रदाने कारके निपात्येते । दाशन्ति तस्मै दाशः । गां हन्ति तस्मै गोघ्नोऽतिथिः ।

३१७३ । **भीमादयोऽपादाने** ।३।४।७४। भीमः । भीष्मः । प्रस्कन्दनः । प्ररक्षः । मूर्खः । खलतिः ।

३१७४ । **ताभ्यामन्यत्रोणादयः** ।३।४।७५। संप्रदानपरामर्शार्थं 'ताभ्याम्' इति । ततोऽसौ भवति तन्तुः । वृत्तं तदिति वर्त्म । चरितं तदिति चर्म ।

३१७५ । **तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्** ।३।३।१०। क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः । मान्तत्वादव्ययत्वम् । कृष्णं द्रष्टुं याति । कृष्णं दर्शको याति । अत्र वासरूपेण तृजादयो न, पुनर्ण्वुलुक्तेः ।

३१७६ । **समानकर्तृकेषु तुमुन्** ।३।३।१५८। अक्रियार्थोपपदार्थमेतत् । इच्छार्थेष्वेककर्तृकेषूपपदेषु धातो-

---

**३१६९ उणादयो बहुलम्** । 'वर्तमाने लट्' इत्यतो वर्तमानग्रहणं 'पुवः संज्ञायाम्' इत्यतः संज्ञाग्रहणं चानुवर्तते तदाह—**एते इति** । अत्र हि सूत्रे 'धातोः' 'प्रत्ययः' 'कृदतिङ्' इति चानुवर्तते, तेन 'कृवापाजिमि–' इत्यादिना विहितानामष्टाध्यायीबहिर्भूतानामप्युणादीनां प्रत्ययसंज्ञा कृत्संज्ञा च सिध्यति । तथा चोणादिप्रत्ययाः सर्वे धातोः परत्र 'कर्तरि कृत्' इति कर्त्रर्थे भवन्ति । उणादिप्रत्ययान्तस्य 'कृत्तद्धित–' इति प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिरित्यादिसर्वमपीष्टं सिध्यति । अपरिपूर्णानामुणादीनां परिपूरणार्थं बहुलग्रहणम् । तस्य फलमाह—**केचिदविहिता अपीति** । हृषेरुलज्विहितः स तु शङ्केरपि भवति, शङ्कुलेति प्रयोगदर्शनात् । किंच फिडफिड्डप्रत्ययौ कुत्रापि न विहितौ । अर्तेरूह्येते ऋफिडः ऋफिड्डः इति, तयोः कित्त्वं च कल्प्यते । तथा 'षण्डः' इत्यत्र सत्वाभावश्चेत्यादि ॥—**संज्ञास्विति** । अनादिसंज्ञास्वेव, न तु सर्वास्वित्याहुः । 'हृषेरुलच्' इति प्रत्ययं दृष्ट्वा शङ्किः प्रकृतिरूह्यते । तेन शङ्कुलेति सिद्धम् । 'ऋ गतौ' इत्यादिभ्यः फिडादिप्रत्यया ऊह्यन्ते ॥—**कार्याद्विद्यादिति** । ऋफिड इत्यादौ गुणप्रतिषेधादिकार्यानुरोधादनुबन्धं ककारादिकं विद्यात् ॥—**अनूबन्धमिति**—अत्र 'उपसर्गस्य घञि–' इति दीर्घः । एतदुणादिषु शास्त्रं शासितव्यमित्यर्थः ॥ **३१७० भूतेऽपि दृश्यन्ते** । नन्वेवं वर्तमानग्रहणं च 'उणादयो बहुलम्' इत्यत्र नानुवर्त्यताम् । एतच्चोत्तरं च सूत्रं त्यज्यताम् । अविशेषेण कालत्रयेऽपि प्रत्ययलाभात्–इति चेत् **अत्राहुः**—बाहुल्येन वर्तमाने भवन्ति, भूतभविष्यतोस्तु क्वचिदेवेति विवेकप्रदर्शनार्थमिति ॥ **३१७१ भविष्यतिगम्यादयः** । गमिष्यतीति गमी ग्रामम् । आगमिष्यतीति आगामी, गमेरिनिः । 'आङि णित्' इत्याङ्पूर्वस्य तु णित्त्वादुपधावृद्धिः ॥ **३१७३ भीमः । भीष्म इति** । 'भियो हेतुभये षुक्' इति मप्रत्ययसंनियोगेन वैकल्पिकः षुक् । प्रस्कन्दत्यस्मादिति **प्रस्कन्दनः** । अपादाने ल्युट् । प्ररक्षत्यस्मादिति **प्ररक्षः** पचाद्यच् । मुह्यत्यस्मादिति **मूर्खः** । 'मुहेः खो मूर् च' । स्खलत्यस्मादिति **खलतिर्**निष्केशशिरा इति प्रागुक्तम् ॥ **३१७४ ताभ्यामिति** । ताभ्यामित्यनुक्तौ तु संनिहितापादानस्यैव परामर्शादपादानादन्यत्रेत्यर्थः स्यादिति भावः ॥—**ततोऽसाविति** । तनोतेः कर्तरि क्तः । 'अनुदात्तोपदेश–' इत्यनुनासिकलोपः । असौ ततो भवति=विस्तृतो भवतीत्यर्थे तनोतेस्तुन् ॥—**वृत्तमिति** । गमनादिना निष्पन्नं यत्**तद्वर्त्म**, वृतेः कर्मणि मनिन् । 'अयनं वर्त्ममार्गाध्व–' इत्यमरः ॥ **३१७५ तुमुन्ण्वुलौ–** । क्रिया अर्थः प्रयोजनं यस्याः सा क्रियार्था, तस्याम् । **अत्रेदं बोध्यम्**—तुमुन्ण्वुलोः कृत्त्वाविशेषेऽपि 'अव्ययकृतो भावे' इति वचनाद्भावे तुमुन् । ण्वुल् तु कर्तरि ॥—**क्रियायामिति**—सप्तमी–निर्देशात्तद्वाचकस्य यातीत्यादेः 'तत्रोपपदं सप्तमीस्थम्' इत्युपपदत्वमिति ॥—**कृष्णं द्रष्टुमिति** । कृष्णकर्मकं यद्भविष्यद्दर्शनं तत्प्रयोजकं यानमित्यर्थः ॥—**कृष्णं दर्शक इति** । कृष्णकर्मकभविष्यद्दर्शनकर्तृकर्तृकं दर्शनप्रयोजनकं च यानमित्यर्थः । क्रियायां किम्? भिक्षिष्ये इत्यस्य जटाः । इह भिक्षार्था जटाः, ताश्च द्रव्यं न तु क्रिया । भिक्षितुं जटा इति प्रयोगस्तु धारयतीत्यध्याहारेण समर्थनीयः ॥ क्रियार्थायां किम्? धावतस्ते पतिष्यति दण्डः । अस्त्यत्र धावत इति क्रिया न त्वसौ दण्डपतनार्था । धावनं तु दण्डपतने हेतुर्भवति न तूद्देश्यमिति दिक् ॥ **३१७६ समानकर्तृकेषु–** ॥—**अक्रियार्थेति** । भोक्तुमिच्छतीत्यत्र भोजनविषयिणीच्छेति प्रतीयते न तु भोजनार्थेच्छेति । अतः पूर्वेण न प्राप्तिरिति भावः । सूत्रस्थसमानशब्द एकतावचन इत्याह—**एककर्तृकेष्विति** । एकेति किम्? पुत्रस्य पठनमिच्छति । पुत्रस्येति कर्तरि षष्ठी । पुत्रकर्तृकं पठनमित्यर्थः । इह सूत्रे समानकर्तृकेति पदाभावे पुत्रस्य पठितुमिच्छतीति प्रयोगः स्यात् । देवदत्तं भुञ्जानमिच्छतीति काशिका । अत्र काशिकायामुक्तम्—इच्छन् करोतीत्यत्रानभिधानान्नेति । अत्र **निष्कर्षमाहुः**—उक्तविषये इच्छन्कर्तुमिति

स्तुमुन् स्यात् । इच्छति भोक्तुम् । वष्टि वाञ्छति वा ।

३१७७ । **शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्** ।३।४।६५। एषूपपदेषु धातोस्तुमुन् स्यात् । शक्नोति भोक्तुम् । एवं 'धृष्णोति' इत्यादौ । अर्थग्रहणमस्तिनैव संबध्यते, अनन्तरत्वात् । अस्ति भवति विद्यते वा भोक्तुम् ।

३१७८ । **पर्याप्तिवचनेष्वलमर्थेषु** ।३।४।६६। पर्याप्तिः पूर्णता, तद्वाचिषु सामर्थ्यवचनेषूपपदेषु तुमुन् स्यात् । पर्याप्तो भोक्तुं प्रवीणः कुशलः पटुरित्यादि । पर्याप्तिवचनेषु किम् । अलं भुक्त्वा । अलमर्थेषु किम् । पर्याप्तं भुङ्क्ते । प्रभूततेह गम्यते, न तु भोक्तुः सामर्थ्यम् ।

३१७९ । **कालसमयवेलासु तुमुन्** ।३।४।१६७। पर्यायोपादानमर्थोपलक्षणार्थम् । कालार्थेषूपपदेषु तुमुन् स्यात् । कालः समयो वेला अनेहा वा भोक्तुम् । प्रैषादिग्रहणमिहानुवर्तते । तेनेह न-'भूतानि कालः पचतीति वार्ता' ।

३१८० । **भाववचनाश्च** ।३।३।११। 'भावे' इत्यधिकृत्य वक्ष्यमाणा घञादयः क्रियार्थायां क्रियायां भविष्यति स्युः । यागाय याति । 'तुमर्थात्-' इति चतुर्थी ।

३१८१ । **अण् कर्मणि च** ।३।३।१२। कर्मण्युपपदे क्रियार्थायां क्रियायां चाण् स्यात् । ण्वुलोऽपवादः । काण्डलावो व्रजति । परत्वादयं कादीन् बाधते, कम्बलदायो व्रजति ।

३१८२ । **पदरुजविशस्पृशो घञ्** ।३।३।१६। 'भविष्यति' इति निवृत्तम् । पद्यतेऽसौ पादः । रुजतीति रोगः । विशतीति वेशः । स्पृशतीति स्पर्शः ।

३१८३ । **सृ स्थिरे** ।३।३।१७। 'सृ' इति लुप्तविभक्तिकम् । सर्तेः स्थिरे कर्तरि घञ् स्यात् । सरति कालान्तरमिति सारः । ॐ **व्याधिमत्स्यबलेषु चेति वाच्यम्** । अतीसारो व्याधिः । अन्तर्भावितण्यर्थोऽत्र सरतिः । रुधिरादिकमतिशयेन सारयतीत्यर्थः । विसारो मत्स्यः । 'सारो बले स्थिरांशे च' ।

३१८४ । **भावे** ।३।३।१८। सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् स्यात् । पाकः, पाकौ ।

३१८५ । **स्फुरतिस्फुलत्योर्घञि** ।६।१।४७। अनयोरेच आत्वं स्याद्घञि । स्फारः । स्फालः । 'उपसर्गस्य घञि-' १०४४ इति दीर्घः, परीहारः ।

'इकः काशे' १०४५ काशे उत्तरपदे इगन्तस्यैव प्रादेर्दीर्घः स्यात् । नीकाशः । अनूकाशः । इकः किम् । प्रकाशः । 'नोदात्तोपदेश' २७६३ इति न वृद्धिः, शमः । आचमादेस्तु-आचामः, कामः, वामः । 'विश्रामः' इति त्वपाणिनीयम् ।

३१८६ । **स्यदो जवे** ।७।४।२८। स्यन्देर्घञि नलोपो वृद्ध्यभावश्च निपात्यते । स्यदो वेगः । अन्यत्र स्यन्दः ।

---

प्रयोगाभावेऽपि इच्छन् कर्तुं गच्छतीत्यादौ तु 'तुमन्ण्वुलौ-' इति सूत्रेण स्यादिति । तच्चिन्त्यम् । करोतीत्यर्थे तुमुनः प्राप्तेरेवाभावात् । तस्य भावार्थकत्वात् । इह च लटा कर्तृप्रतीतेः । किंचेच्छन्कर्तुमिति प्रयोगो नेष्यते इति रिक्तं वचः, कर्तुमिच्छन्निति प्रयोगस्य सकलसंमतत्वात् । पदानुपूर्व्याश्चाहर पात्रं पात्रमाहरेत्यादाविव स्वेच्छायत्तत्वात् । विस्तरस्त्विह मनोरमादावनुसन्धेयः ॥—**वष्टीति** । 'वश कान्तौ कान्तिरिच्छा' इति वशधातुरपीच्छार्थकः ॥ **३१७७ शकधृष-** । अयमप्यक्रियार्थोपपदार्थः आरम्भः । भोक्तुं शक्नोति धृष्णोति जानाति इत्यत्र हि भुज्यर्थो विषयतया संबध्यते, नैपुण्यं च गम्यते । ग्लायति भोक्तुमित्यत्र भोजनविषयिण्यशक्तिर्गम्यते । भोक्तुं घटते इत्यत्र तु भोक्तुमर्हतीति योग्यता । आरभते भोक्तुमित्यत्र भोक्तुं प्रक्रमते=उत्सहते इति भुजेराद्यावस्था । **लभते** इत्यत्राप्रत्याख्याना । अस्ति भोक्तुमित्यादौ तु संभवमात्रम् ॥ **३१७८ पर्याप्तो भोक्तुमिति** । भोक्तुं समर्थ इत्यर्थः ॥—**उपलक्षणार्थमिति** । तस्य फलमाह—**अनेहेति** । 'कालो दिष्टोऽप्यनेहापि' इत्यमरः ॥—**तेनेह नेति** । अनुवादे न भवतीत्यर्थः ॥—**यागायेति** । यष्टुमित्यर्थः । 'तुमर्थाच्च भाववचनात्' इति चतुर्थी ॥—**ण्वुलोऽपवाद इति** । 'अव्ययकृतो भावे' इति भावे विहितत्वात्तुमुनः प्राप्तिरेव नास्तीति भावः ॥ **३१८२ पदरुज-॥ पद्यतेऽसाविति** । करणस्य कर्तृविवक्षाऽत्र बोध्या । पद्यते गच्छति येनेति फलितोऽर्थः ॥ **३१८३ सृ स्थिरे ॥—सर्तेरिति—**॥ भ्वादेर्जुहोत्यादेश्च ग्रहणं, स्थिरग्रहणं प्रत्ययार्थस्य कर्तुर्विशेषणं न तूपपदमिति ध्वनयन्नाह—**स्थिरे कर्तरीति** । अर्धर्चादिषु सारशब्दपाठोऽत्र मानम् ॥—**व्याधीत्यादि** । अस्थिरार्थमिदं वचनम् । तेन विसारो मत्स्य इत्यत्र विविधं सरतीत्यर्थः संगच्छते ॥—**अतीसार इति** । 'उपसर्गस्य घञि' इति दीर्घः ॥—**सारो बलमिति** । अत्रापि सृधातुरन्तर्भावितण्यर्थः । सारयति चेष्टयतीत्यर्थानुरोधात् । बलवानेव हि चेष्टते ॥ **३१८४ सिद्धावस्थापन्न इति** । पचतीत्यादौ तु साध्यावस्थापन्नो धात्वर्थ इति भावः ॥ **३१८५ आचमेति** । 'नोदात्त-' इति सूत्रे अनाचमेरित्युक्तत्वादिति भावः । तत्रैव सूत्रे 'अनाचमिकमिवमीनाम्-' इति वार्तिकाद्वृद्धिनिषेधो नेत्याह—**कामः, वाम इति** ॥—**अपाणिनीयमिति** । श्रमेरुदात्तोपदेशत्वात् । घञि वृद्धेर्दुर्लभत्वात् । यदि तु 'धुर्यान्विश्रामयन्' इत्यदाविव णिचि वृद्धिमाश्रित्य णिजन्तादेरच् क्रियते तदा रूपं सिध्यति । न च णिच्यपि वृद्धिनिषेधः शङ्क्यः । 'नोदात्त-' इत्यत्र कृतीत्यनुवृत्त्या णिचि निषेधाभावात् । न चैवमपि 'मितां ह्रस्वः' इति ह्रस्वः स्यादिति शङ्क्यम् । वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणेन ह्रस्वाभावसिद्धेः । परन्तु णिजन्तकल्पनायामर्थो भिद्यत इति भावः । वस्तुतस्तु निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिति विवक्षायां तु न दोष इत्यवधेयम् । एवं च '**रोगी चिरप्रवासी परान्नभोजी परावसथशायी । यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः**' इत्यादिकविप्रयोगाः

**३१८७ । अवोदैधौद्मप्रश्रथहिमश्रथाः** ।६।४।२९। अवोदः अवक्लेदनम् । एध इन्धनम् । ओद्म उन्दनम् । श्रन्थेर्नलोपो वृद्ध्यभावश्च ।

**३१८८ । अकर्तरि च कारके संज्ञायाम्** ।३।३।१९। कर्तृभिन्ने कारके घञ् स्यात् ।

**३१८९ । घञि च भावकरणयोः** ।६।४।२७। रञ्जेर्नलोपः स्यात् । रागः । अनयोः किम् । रज्यत्यस्मिन् रङ्गः । प्रास्यते इति प्रासः । 'संज्ञायाम्' इति प्रायिकम् । को भवता लाभो लब्धः । इत उत्तरं 'भावे' (३१८४) 'अकर्तरि च कारके–' ३१८८ इति द्वयमपि 'कृत्यल्युटो बहुलं' २८४१ इति यावत् द्वयमप्यनुवर्तते ।

**३१९० । परिमाणाख्यायां सर्वेभ्यः** ।३।३।२०। घञ् । अजपोर्बाधनार्थमिदम् । एकस्तण्डुलनिचायः । द्वौ शूर्पनिष्पावौ । द्वौ कारौ ॥ ॐ **दारजारौ कर्तरि णिलुक्च** । दारयन्तीति दाराः । जरयन्तीति जाराः ।

**३१९१ । इङश्च** ।३।३।२१। घञ् । अचोऽपवादः । उपेत्य अस्मादधीयते उपाध्यायः ॥ ॐ **अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष्** । उपाध्याया, उपाध्यायी ॥ ॐ **शॄ वायुवर्णनिवृतेषु** । 'शॄ' इत्यविभक्तिको निर्देशः । शारो वायुः । करणे घञ्, शारो वर्णः । चित्रीकरणमिह धात्वर्थः । निव्रियते आव्रियतेऽनेनेति निवृतमावरणम्, बाहुलकात्करणे क्तः ।

'गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः' ।

अकृतप्रावरण इत्यर्थः ।

**३१९२ । उपसर्गे रुवः** ।३।३।२२। घञ् । संरावः । उपसर्गे किम् । रवः ।

**३१९३ । अभिनिसः स्तनः शब्दसंज्ञायाम्** । ८।३।८६। अस्मात् स्तनेः सस्य मूर्धन्यः । अभिनिष्टानो वर्णः । शब्दसंज्ञायां किम् । अभिनिःस्तनति मृदङ्गः ।

**३१९४ । समि युद्रुदुवः** ।३।३।२३। संयूयते मिश्रीक्रियते गुडादिभिरिति संयावः पिष्टविकारोऽपूपविशेषः । संद्रावः । संदावः ।

**३१९५ । श्रिणीभुवोऽनुपसर्गे** ।३।३।२४। श्रायः । नायः । भावः । अनुपसर्गे किम् । प्रश्रयः, प्रणयः, प्रभवः । कथं 'प्रभावो राज्ञः' इति ? प्रकृष्टो भाव इति

---

साधव एवेति बोध्यम् ॥ **३१८७ अवोदै-**॥—**अवोद इति** । उन्दी क्लेदने, अवपूर्वः । घञि नलोपो निपात्यते ॥—**एध इति** इन्धेर्घञि नलोपो गुणश्च निपात्यते । 'न धातुलोप–' इति निषेधादप्राप्ते गुणस्य निपातनमिति ज्ञेयम् ॥—**ओद्म इति** । उन्देरौणादिके मन्प्रत्यये नलोपो गुणश्चात्रापि निपात्यते ॥—**श्रन्थेरिति** । प्रपूर्वस्य हिमपूर्वस्य च घञि निपात्यते इति बोध्यम् ॥ **३१८९ प्रायिकमिति** । सर्वात्मना संज्ञाग्रहणत्यागे 'कृतः कटः' इत्यत्र 'कारः कटः' इति स्यादिति भावः । भाष्ये त्वनभिधानमाश्रित्य प्रत्याख्यातम् ॥ **३१९० परिमाणाख्यायाम्–**। सर्वेभ्यो धातुभ्यः । परिमाणं=परिच्छित्तिः । आख्यानमाख्या=उक्तिः । परिच्छित्तेरुक्तौ सत्यामित्यर्थः । कस्य पुनः परिच्छित्तिरिति चेत् प्रकृत्यर्थस्यैवेत्युच्यते । आख्याग्रहणं रूढिनिरासार्थं, तेन परिमाणग्रहणेन संख्याऽत्र गृह्यते । सर्वेभ्यः किम् ? अन्यथा पुरस्तादपवादन्यायेनाचमेव घञ् बाधेत, न त्वपम् ॥—**तण्डुलनिचाय इति** । नीचीयते राशीक्रियते इति निचायः । अत्र राश्येकत्वेन तण्डुलगतपरिच्छित्तिरर्थाद्गम्यते । 'एरच्' इत्यचि प्राप्ते घञ् । निष्पूयते शोध्यते तुषाद्यपनयनेन यस्तण्डुलादिः स निष्पावः । 'ऋदोरप्' इत्यपि प्राप्ते घञ् । शूर्पेणेति करणतृतीयान्तस्य 'कर्तृकरणे कृता बहुलम्' इति समासः । अत्र शूर्पसंख्यया तण्डुलादेरपि परिच्छित्तिः । शूर्पद्वित्वं तु आर्थिकं न तु शाब्दं, निष्पावगतं शाब्दम् । यद्यप्यत्र 'निरभ्योः पूल्वोः' इति घञ् लभ्यते, तथापि सर्वग्रहणबलादनेनापि भवितुमर्हतीति भावः ॥ अप्प्रत्ययस्य मुख्योदाहरणमाह—**द्वौ काराविति** । कॄ विक्षेपे । कर्मणि घञ् । शूर्पादिना विक्षिप्तो धान्यादिराशिः **कारः** । इह प्रकृत्याश्रय एवापवादो न त्वर्थाश्रयः, 'सर्वेभ्यः' इति पञ्चमीनिर्देशेन तथैवावगमात् । तेनायं प्रकृत्याश्रयो घञ् क्तिनोऽपवादो न भवति—एका तिलोच्छ्रितिः । उत्पूर्वकश्रयतेः कर्मणि भावे वा क्तिन् । ऊर्ध्वीकृतो राशीकृत इत्यर्थः । तदेतत्सूचयितुमुक्तम्—**अजपोर्बाधनार्थमिति** । तयोरपि प्रकृत्याश्रयत्वादपवादापवादयोः समानविषयौचित्यात् । स्त्रियां क्तिन् त्वर्थाश्रय इति दिक् ॥—**दारजाराविति** । 'अकर्तरि कारके' इत्यधिकारात् 'ऋदोरप्' इत्यस्य घञपवादत्वाच्च कर्तरि घञर्थमिदं वचनम् ॥—**णिलुक्चेति** । चात् घञ् । लोपे हि सति घञाश्रया वृद्धिर्न स्यात्, णिलोपस्य स्थानिवद्भावेन व्यवधानात् । न च णिज्निमित्तैव वृद्धिरस्त्विति वाच्यम् । जारशब्दे 'मितां ह्रस्वः' इति ह्रस्वापत्तेः । 'जनीजॄष्–' इति जॄधातोर्णौ मित्त्वात् । लुकि तु सति तस्य परनिमित्तत्वाभावेन 'क्ङिति च–' इति क्वौ लुप्तस्य निषेधेन वा स्थानिवत्त्वाभावाज्जार इति रूपं सिध्यतीति भावः । **एतेन** 'दीर्यन्ते यैस्ते दाराः, जीर्यतेऽनेनेति जारः—इत्यण्यन्ताभ्यामेव करणे घञस्तु किमनेन वचनेन ?' इति केषांचिदुक्तिः परास्ता । 'ऋदोरप्' इत्यपवादविषये उत्सर्गस्य घञो दुर्लभत्वात् । स्त्र्यधिकारादूर्ध्वं वासरूपविधेरनङ्गीकारादपवादोऽप्यप 'करणाधिकरणयोः' इति ल्युटा बाधादिह दुर्लभ इत्यन्यदेतत् ॥ **३१९१ उपेत्येति** । गुरुसमीपमेत्येत्यर्थः ॥—**अपादान इति** । पुरस्तादपवादन्यायेन 'इङश्च' इत्यस्याच एवापवादत्वात्स्त्रियां तु क्तिन् स्यादिति तद्बाधनायायमारम्भः । '[illegible]' इति वचनात्स्त्रियां घञ् न स्यादिति 'स्त्रियां' ग्रहणम् ॥—**उपाध्यायेति** । या स्वयमध्यापयति तस्यामिदं रूपद्वयम् । पुंयोगे तु ङीषेव । आनुगागमश्च पाक्षिक इत्युक्तम् ॥—**करणे क्त इति** । 'वृञ् वरणे' इत्यस्मादित्यर्थः ॥—**नीशार इति** । 'उपसर्गस्य घञि–' इति दीर्घः । ननु 'प्रदक्षिणप्रसव्यगामिनां शाराणाम्' इति कथं प्रयोगः ? 'वायुवर्ण–' इत्यर्थपरिगणनादिति चेत् । **अत्राहुः—**अत एव

प्रादिसमासः । कथं 'राज्ञो नयः' इति ? बाहुलकात् ।

३१९६ । वौ क्षुश्रुवः ।३।३।२५। विक्षावः । विश्रावः । वौ किम् । क्षवः, श्रवः ।

३१९७ । अवोदोर्नियः ।३।३।२६। अवनायः अधो नयनम् । उन्नायः ऊर्ध्वनयनम् । कथम् 'उन्नयः' 'उत्प्रेक्षा' इति ? बाहुलकात् ।

३१९८ । प्रे द्रुस्तुस्रुवः ।३।३।२७। प्रद्रावः । प्रस्तावः । प्रस्रावः । प्रे इति किम् । द्रवः, स्तवः, स्रवः ।

३१९९ । निरभ्योः पूल्वोः ।३।३।२८। निष्पूयते शूर्पादिभिरिति निष्पावो धान्यविशेषः । अभिलावः । निरभ्योः किम् । पवः, लवः ।

३२०० । उन्न्योर्ग्रः ।३।३।२९। उद्गारः । निगारः । उन्न्योः किम् । गरः ।

३२०१ । कॄ धान्ये ।३।३।३०। 'कॄ' इत्यस्माद्धान्यविषयकादुन्न्योर्घञ् स्यात् । उत्कारो निकारो धान्यस्य । विक्षेप इत्यर्थः । धान्ये किम् । भिक्षोत्करः, पुष्पनिकरः ।

३२०२ । यज्ञे समि स्तुवः ।३।३।३१। समेत्य स्तुवन्ति यस्मिन् देशे छन्दोगाः स देशः संस्तावः । यज्ञे किम् । संस्तवः परिचयः ।

३२०३ । प्रे स्त्रोऽयज्ञे ।३।३।३२। 'अयज्ञे' इति छेदः, 'यज्ञे' इति प्रकृतत्वात् । प्रस्तारः । अयज्ञे किम् । बर्हिषः प्रस्तरो मुष्टिविशेषः ।

३२०४ । प्रथने वावशब्दे ।३।३।३३। विपूर्वात् स्तृणातेर्घञ् स्यादशब्दविषये प्रथने । पटस्य विस्तारः । प्रथने किम् । तृणविस्तरः । अशब्दे किम् । ग्रन्थविस्तरः ।

३२०५ । छन्दोनाम्नि च ।३।३।३४। 'स्त्रः' इत्यनुवर्तते । विष्टारपङ्क्तिश्छन्दः । विस्तीर्यन्तेऽस्मिन्नक्षराणीत्यधिकरणे घञ् । ततः कर्मधारयः ।

३२०६ । छन्दोनाम्नि च ।८।३।९४। विपूर्वस्य स्तृणातेर्घञन्तस्य सस्य षत्वं स्याच्छन्दोनाम्नि । इति षत्वम् ।

३२०७ । उदि ग्रहः ।३।३।३५। उद्ग्राहः ।

३२०८ । समि मुष्टौ ।३।३।३६। मल्लस्य संग्राहः । मुष्टौ किम् । द्रव्यस्य संग्रहः ।

३२०९ । परिन्योर्नीणोर्द्यूताभ्रेषयोः ।३।३।३७। परिपूर्वान्नयतेर्निपूर्वादिणश्च घञ् स्यात् क्रमेण द्यूते-अभ्रेषे च विषये । परिणायेन शारान् हन्ति । समन्तान्नयनेनेत्यर्थः । एषोऽत्र न्यायः । उचितमित्यर्थः । द्यूताभ्रेषयोः किम् । परिणयो विवाहः । न्ययो नाशः ।

३२१० । परावनुपात्यय इणः ।३।३।३८। क्रमप्राप्तस्य अनतिपातोऽनुपात्ययः । तव पर्यायः । अनुपात्यये किम् । कालस्य पर्ययः । अतिपात इत्यर्थः ।

३२११ । व्युपयोः शेतेः पर्याये ।३।३।३९। तव विशायः । तव राजोपशायः । पर्याये किम् । विशयः संशयः । उपशयः समीपशयनम् ।

३२१२ । हस्तादाने चेरस्तेये ।३।३।४०। 'हस्तादाने' इत्यनेन प्रत्यासत्तिरादेयस्य लक्ष्यते । पुष्पप्रचायः । हस्तादाने किम् । वृक्षाग्रस्थानां फलानां यष्ट्या प्रचयं करोति । अस्तेये किम् । पुष्पप्रचयश्चौर्येण ।

३२१३ । निवासचितिशरीरोपसमाधानेष्वादेश्च कः ।३।३।४१। एषु चिनोतेर्घञ्, आदेश्च ककारः । उपसमाधानं=राशीकरणं, तच्च धात्वर्थः । अन्ये प्रत्ययार्थस्य कारकस्योपाधिभूताः । निवासे-काशीनिकायः । चितौ-आकायमग्निं चिन्वीत । शरीरे—चीयतेऽस्मिन्नस्थ्यादिकमिति कायः । समूहे-गोमयनिकायः । एषु किम् । चयः । 'चः कः' इति वक्तव्ये 'आदेः' इत्युक्तिर्यङ्लुक्यादेरेव यथा स्यादिति । गोमयानां निकेचायः । पुनःपुना राशीकरणमित्यर्थः ।

३२१४ । सङ्घे चानौत्तराधर्ये ।३।३।४२। चेर्घञ् आदेश्च कः । भिक्षुनिकायः । प्राणिनां समूहः सङ्घः । अनौत्तराधर्ये किम् । सूकरनिचयः । सङ्घे किम् । ज्ञानकर्मसमुच्चयः ।

३२१५ । कर्मव्यतिहारे णच् स्त्रियाम् ।३।३।४३। स्त्रीलिङ्गे भावे णच् ।

---

वार्तिकप्रयोगादक्षेष्वपि श्रृणातेर्घञ्-**इति** ॥ **३१९२ रव इति** । 'ऋदोरप्' इत्यप् ॥ **३१९५ राज्ञो नय इति** । 'णीञ् प्रापणे' इत्यस्मादचो यत् ॥ **३२०२ यज्ञे समि-**। अधिकरणे ल्युटोऽपवादोऽयं घञ् ॥ **३२०६ छन्दो-**। शब्दविषयत्वात्पूर्वेणाप्राप्ते वचनम् । **केचित्तु** प्रस्तारपङ्क्तिरित्यादिप्रयोगानुरोधेनात्र 'वौ' इति नानुवर्तयन्ति ॥ **३२०७ उदि ग्रहः** । भावादौ घञ् स्यात् । 'ग्रहवृदृ-' इति प्राप्तस्यापोऽपवादः ॥ **३२०९ परिन्योः-**। अक्षादिभिः क्रीडनं **द्यूतम्** । यथाप्राप्तकरण**मभ्रेषः** ॥ **३२१० परावनु-**। **अत्र व्याचख्युः**—द्विः परिग्रहणमिह व्यर्थम् । सकृदेव कर्तुं शक्यम् । तथा हि—परौ नियो द्यूते, इणोऽनुपात्यये, नावभ्रेषे । इह इण इत्यनुवर्तनात् 'इणोऽनुपात्यये' इत्यत्र तु पराविल्यनुवर्तनाच्चेष्टं सिध्यतीति ॥ ननु पूर्वसूत्रेऽनुपात्ययः पर्यायार्थकत्वेन व्याख्यातः । तथा च तदनुवृत्त्यैव सिद्धे पर्यायग्रहणमिह व्यर्थमिति चेत्, **अत्राहुः**—पर्यायग्रहणं पुनर्विधानार्थं । तेनात्राभिविधिविवक्षायां परमपि 'अभिविधौ भाव इनुण्' इति इनुणं बाधित्वाऽयमेव घञ् भवतीति ॥ **३२१३ आकायमिति** । आचीयन्तेऽस्मिन्निष्टका इत्याकायम् । अधिकरणे घञ् । अग्निस्थानविशेषं चिन्वीत-चयनेन निष्पादयेदिति श्रुत्यर्थः ॥ **३२१४ सङ्घे चानौत्तराधर्ये** । उत्तरे चाधरे च—उत्तराधरास्तेषां भाव औत्तराधर्यम् ॥—**सूकरेति** । स्तनपानार्थमुत्तराधरभावेन सूकराः शेरते तदेदम्प्रत्युदाहरणम् । यदा तु भिक्षुवत्पृथक्पृथगेवावतिष्ठन्ते तदेहापि भवत्येव घञ् ॥ **३२१५ कर्मव्यतिहारे णच्-**। कर्मव्यतिहारः क्रियाव्यतिहाररूपः । परस्परकरणमिति यावत् । तत्र वर्तमानाद्धातोरित्यर्थः ॥ **—भावे**

३२१६ । णचः स्त्रियामञ् ।५।४।१४।

३२१७ । न कर्मव्यतिहारे ।७।३।६। अत्र ऐच् न स्यात् । व्यावक्रोशी । व्यावहासी ।

३२१८ । अभिविधौ भाव इनुण् ।३।३।४४।

३२१९ । अणिनुणः ।५।४।१५। 'इनण्यनपत्ये' १२४५, सांराविणं वर्तते ।

३२२० । आक्रोशेऽवन्योर्ग्रहः ।३।३।४५। 'अव' 'नि' एतयोर्ग्रहेर्घञ् स्यात् शापे । अवग्राहस्ते भूयात् । अभिभव इत्यर्थः । निग्राहस्ते भूयात् । बाध इत्यर्थः । आक्रोशे किम् । अवग्रहः पदस्य । निग्रहश्चोरस्य ।

३२२१ । प्रे लिप्सायाम् ।३।३।४६। पात्रप्रग्राहेण चरति भिक्षुः ।

३२२२ । परौ यज्ञे ।३।३।४७। उत्तरः परिग्राहः । स्फ्येन वेदेः स्वीकरणम् ।

३२२३ । नौ वृ धान्ये ।३।३।४८। 'वृ' इति लुप्तपञ्चमीकम् । नीवाराः । धान्ये किम् । निवरा कन्या । क्तिन्विषयेऽपि बाहुलकादप् । प्रवरा सेना, प्रवरा सेतिवत् ।

३२२४ । उदि श्रयतियौतिपूद्रुवः ।३।३।४९। उच्छ्रायः । उद्यावः । उत्पावः । उद्द्रावः । कथं 'पतनान्ताः समुच्छ्रयाः' इति ? बाहुलकात् ।

३२२५ । विभाषाऽऽङि रुप्लुवोः ।३।३।५०। आरावः, आरवः । आप्लावः, आप्लवः ।

३२२६ । अवे ग्रहो वर्षप्रतिबन्धे ।३।३।५१। 'विभाषा' इति वर्तते । अवग्रहः, अवग्राहः । वर्षप्रतिबन्धे किम् । अवग्रहः पदस्य ।

३२२७ । प्रे वणिजाम् ।३।३।५२। प्रे ग्रहेर्घञ् वा वणिजां संबन्धी चेत्प्रत्ययार्थः । तुलासूत्रमिति यावत् । तुलाप्रग्राहेण चरति, तुलाप्रग्रहेण ।

३२२८ । रश्मौ च ।३।३।५३। प्रग्रहः, प्रग्राहः ।

३२२९ । वृणोतेराच्छादने ।३।३।५४। 'विभाषा प्रे' इत्येव । प्रावारः, प्रवरः ।

३२३० । परौ भुवोऽवज्ञाने ।३।३।५५। परिभावः, परिभवः । अवज्ञाने किम् । सर्वतो भवनं परिभवः ।

३२३१ । एरच् ।३।३।५६। चयः । जयः । * भयादीनामुपसंख्यानं नपुंसके क्तादिनिवृत्त्यर्थम् । भयम् । वर्षम् ।

णजिति । कर्तृवर्जिते कारके न भवति, अनभिधानादित्याहुः । 'भावादौ' इति प्राचोक्तं यत्तदुपेक्ष्यम्, आकरविरोधात् ॥ ३२१६ णचः स्त्रि– । अनेन 'णच्' इति चकारोऽत्राविशेषणार्थ इति ध्वनितम् । स्त्रियां किम् ? व्यतिपाको वर्तते ॥ ३२१७ ऐच् नेति । 'न य्वाभ्याम्–' इति प्राप्तस्य निषेधेनादिवृद्धिरेव, णचस्तद्धितत्वाभावेऽप्यञस्तद्धितत्वादिति भावः । कृद्ग्रहणपरिभाषया सोपसर्गधातोर्णजन्तत्वात्ततोऽञि तत्प्रयुक्तादिवृद्धिरुपसर्गस्येत्याशयेनोदाहरति—व्यावक्रोशीति । क्रुश आह्वाने, हसे हसने । स्यादेतत्—'स्त्रियां क्तिन्' इति प्रकरण एवायं णज्विधेयः । एवं च स्त्रियामिति न कर्तव्यमिति लाघवमिति चेत्, मैवम् । स्त्रियामित्यधिकारे वासरूपविधिनिषेधापत्तेः । इष्यते तु व्यवक्रुष्टिः–इति 'स्त्रियां क्तिन्' अपि अपवादविषये क्वचिदिष्यते । व्यावचोरी, इह 'ण्यासश्रन्थ–' इति युच्प्राप्तः । व्यात्युक्षी, अत्र 'गुरोश्च हलः' इत्यकारप्रत्ययः प्राप्तः । क्वचिदकार एवेष्यते न तु णच्–व्यतीक्षा, व्यतीहा । सैषा व्यवस्था न्यायतो दुर्लभाऽपि बाहुलकात्स्वीकार्या ॥ ३२१८ अभिविधौ– । अभिविधौ किम् ? संरावः । वासरूपेण घञ् क्तश्च न भवति, पुनर्भावग्रहणात् । न च कर्तृभिन्नकारकनिवृत्तये भावग्रहणमिति वाच्यम् । पूर्वसूत्र इव शक्तिस्वाभाव्यादेव कारके इनुणोऽप्रवृत्तेः । ल्युटा तु समावेश इष्यते–संवरणमिति । तच्च बाहुलकाल्लभ्यत इत्याकरः ॥ ३२१९ अणिनुणः । अनेनेनुणो णानुबन्धो विशेषणार्थ इति ध्वनितम् ॥—सांराविणमिति । समन्ताच्छब्द इत्यर्थः । संशब्दोऽभिविधिद्योतकः । पूर्ववत्सगतिकादण् । अणस्तद्धितत्वादादिवृद्धिः । 'इनण्यनपत्ये' इत्यनपत्याणि इनः प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपेन न निवृत्तिः । स्वभावतश्चेदमणिनुणन्तं नपुंसकम् ॥ ३२२० आक्रोशे– । 'ग्रहवृद–' इत्यपि प्राप्तेऽयमारम्भः ॥—अवग्रहः पदस्येति । छेदविशेष इत्यर्थः । निग्रहो निरोधः ॥ ३२२१ प्रे लिप्सायाम् । लिप्सायां किम् ? देवदत्तस्य प्रग्रहः । प्रकृष्टोऽभिनिवेश इत्यर्थः ॥—पात्रप्रग्राहेणेति । भिक्षापात्रोपादानेन, पात्रं गृहीत्वेति यावत् ॥ ३२२३ नौ वृ– । 'नौ' उपपदे वृञो भावादौ घञ् स्यात् ॥—निवरा कन्येति । 'ग्रहवृद–' इत्यादिना कर्मण्यप् ॥ ननु स्त्रीत्वविशिष्टे कर्मणि परत्वात् क्तिना भाव्यम्, 'अजब्भ्यां स्त्रीखलनाः' इत्युक्तेः, अत आह—क्तिन्विषयेऽपीति । एवं च प्रायेण भवार्थ एव घञजबन्ताः पुंसीति द्रष्टव्यम् ॥ ३२२८ रश्मौ च । रथादियुक्तानामश्वानां संयमनार्था रज्जुः=रश्मिः । तस्यामभिधेयायां प्रे उपपदे ग्रहेर्घञ्वा स्याद्भावादौ । इह द्विःकृत्वो ग्रहिरुपात्तः, सकृदेव तु वक्तुं शक्यः । तथाहि—उदि ग्रहः, समि मुष्टौ, आक्रोशे वन्योः, प्रे लिप्सायाम्, परौ यज्ञे, अवे वर्षप्रतिबन्धे विभाषा, प्रे वणिजाम्, इत्यादि, 'परौ भुवोऽवज्ञाने' इत्यस्यानन्तरम् 'आङि रुप्लुवोः' इत्यस्तु । तथा तु न कृतमित्येव ॥ ३२२९ वृणोतेः– ॥ प्रावार इति । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इत्युपसर्गस्य दीर्घः । आच्छादने किम् ? प्रवरो गौः । प्रशस्त इत्यर्थः ॥ ३२३० परिभाव इति । 'अनादरः परिभवः परीभावस्तिरस्क्रिया' इत्यमरः ॥ परत्वाद्धि क्तल्युटौ प्राप्तौ । तथा च पूर्वविप्रतिषेधोऽयं फलितः । एवं च वासरूपन्यायोऽत्र न प्रवर्तते, अनपवादत्वादिति भावः ॥ ३२३१ वर्षमिति । 'वृषभो वर्षणात्' इति

३२३२ । **ॠदोरप्** ।३।३।५७। ऋवर्णान्तादुवर्णान्तादप् । करः । गरः । शरः । यवः । लवः । स्तवः । पवः ।

३२३३ । **वृक्षासनयोर्विष्टरः** ।८।३।९३। अनयोर्विपूर्वस्य स्तॄः षत्वं निपात्यते । विष्टरो वृक्ष आसनं च । वृक्षे किम् । वाक्यस्य विस्तरः ।

३२३४ । **ग्रहवृदृनिश्चिगमश्च** ।३।३।५८। अप् स्यात् । घञचोरपवादः । ग्रहः । वरः । दरः । निश्चयः । गमः ॥ ❀ **वशिरण्योरुपसंख्यानम्** । वशः । रणः ॥ ❀ **घञर्थे कविधानम्** । प्रस्थः । विघ्नः ॥ ❀ **द्वित्वप्रकरणे के कृञादीनामिति वक्तव्यम्** । चक्रम् । चिक्लिदम् । चक्नसः ।

३२३५ । **उपसर्गेऽदः** ।३।३।५९। अप् स्यात् ।

३२३६ । **घञपोश्च** ।२।४।३८। अदेर्घस्लृ स्यात् घञि अपि च । प्रघसः । विघसः । उपसर्गे किम् । घासः ।

३२३७ । **नौ ण च** ।३।३।६०। नौ उपपदे अदेर्णः स्यादप् च । न्यादः । निघसः ।

३२३८ । **व्यधजपोरनुपसर्गे** ।३।३।६१। अप् स्यात् । व्यधः । जपः । उपसर्गे तु—आव्याधः, उपजापः ।

३२३९ । **स्वनहसोर्वा** ।३।३।६२। अप् । पक्षे घञ् । स्वनः, स्वानः । हसः, हासः । 'अनुपसर्गे' इत्येव । प्रस्वानः । प्रहासः ।

३२४० । **यमः समुपनिविषु च** ।३।३।६३। एषु अनुपसर्गे च यमेरप् वा । संयमः, संयामः । उपयमः, उपयामः । नियमः, नियामः । वियमः, वियामः । यमः, यामः ।

३२४१ । **नौ गदनदपठस्वनः** ।३।३।६४। अप् वा स्यात् । निगदः, निगादः । निनदः, निनादः । निपठः, निपाठः । निस्वनः, निस्वानः ।

३२४२ । **क्वणो वीणायां च** ।३।३।६५। नावनुपसर्गे च वीणाविषयाच्च क्वणतेरप् वा स्यात् । वीणाग्रहणं प्राद्यर्थम् । निक्वणः, निक्वाणः । क्वणः, क्वाणः । वीणायां तु—प्रक्वणः, प्रक्वाणः ।

३२४३ । **नित्यं पणः परिमाणे** ।३।३।६६। अप् स्यात् । मूलकपणः । शाकपणः । व्यवहारार्थं मूलकादीनां परिमितो मुष्टिर्बध्यते सोऽस्य विषयः । परिमाणे किम् । पाणः ।

३२४४ । **मदोऽनुपसर्गे** ।३।३।६७। धनमदः । उपसर्गे तु—उन्मादः ।

३२४५ । **प्रमदसंमदौ हर्षे** ।३।३।६८। हर्षे किम् । प्रमादः । संमादः ।

३२४६ । **समुदोरजः पशुषु** ।३।३।६९। संपूर्वोऽजिः समुदाये उत्पूर्वश्च प्रेरणे तस्मात्पशुविषयकादप् स्यात् । 'अघञपोः' इत्युक्तेर्वीभावो न । समजः पशूनां सङ्घः । उदजः पशूनां प्रेरणम् । पशुषु किम् । समाजो ब्राह्मणानाम्, उदाजः क्षत्रियाणाम् ।

३२४७ । **अक्षेषु ग्लहः** ।३।३।७०। अक्षशब्देन देवनं लक्ष्यते, तत्र यत्पणरूपेण ग्राह्यं तत्र 'ग्लहः' इति निपात्यते । अक्षस्य ग्लहः । 'व्यात्युक्षीमभिसरणग्लहामदीव्यन्' । अक्षेषु किम् । पादस्य ग्रहः ।

३२४८ । **प्रजने सर्तेः** ।३।३।७१। प्रजनं प्रथमगर्भग्रहणम् । गवामुपसरः । कथम् 'अवसरः' 'प्रसरः' इति ? अधिकरणे 'पुंसि संज्ञायाम्–' ३२९६ इति घः ।

३२४९ । **ह्वः संप्रसारणं च न्यभ्युपविषु** ।३।३।७२। निहवः । अभिहवः । उपहवः । विहवः । एषु किम् । प्रह्वायः ।

३२५० । **आङि युद्धे** ।३।३।७३। आहूयन्तेऽस्मिन्निति आहवः । युद्धे किम् । आह्वायः ।

३२५१ । **निपानमाहावः** ।३।३।७४। आङ्पूर्वस्य ह्वयतेः संप्रसारणं–अप्–वृद्धिश्चोदकाधारश्चेद्वाच्यः ।

'आहावस्तु निपानं स्यादुपकूपजलाशये' ।

३२५२ । **भावेऽनुपसर्गस्य** ।३।३।७५। अनुपसर्गस्य ह्वयतेः संप्रसारणमप् च स्यात् भावे । हवः ।

३२५३ । **हनश्च वधः** ।३।३।७६। अनुपसर्गाद्धन्तेर्भावे अप् स्यात्, वधादेशश्चान्तोदात्तः । 'वधेन दस्युम्' । चाद्घञ्, घातः ।

---

भाष्यप्रयोगात् ल्युडपि—वर्षणम् ॥ ३२३२ **ॠदोरप्** । ऋच्च उच्च तयोः समाहारे सौत्रं पुंस्त्वम् । ऋदोरित्ययं न तकारः, किं तर्हि? दकारः, 'निरभ्योः पूल्वोः' इत्यपवादतया घञ्विधानाज्ज्ञापकात् । दीर्घान्तादप्युदाहरति—**लवः । पव इति** ॥ ३२३४ **घञचोरपवाद इति** । निश्चय इत्यत्राचः प्राप्तिः, अन्यत्र घञ इति विवेकः । हस्तादाने तु प्रपूर्वकाच्चिनोतेर्घञुदाहृतः ॥ ❀ **वशिरण्योरिति** । घञि प्राप्ते वचनम् । वशनं **वशः** । रणन्ति शब्दं कुर्वन्त्यस्मिन्निति **रणः** संग्रामः ॥ ३२३६ व्यद्यते विशेषेण भक्ष्यते इति **विघसः**—वैश्वदेवशिष्टमन्नम् । **घास**श्चतुष्पदां भक्ष्यम् । 'शष्पं बालतृणं घासः' इत्यमरः ॥ ३२३८ **उपजापो** मन्त्रभेदः ॥ ३२३९ 'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः । **स्वानः**' इत्यमरः ॥ ३२४२ **क्वण—**। 'निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि । वीणायाः क्वणिते प्रादेः प्रक्वाणप्रक्वणादयः' इत्यमरः ॥ ३२४४ **मदो-**। अनुपसर्गे सुप्युपपदे नित्यमप् स्याद्भावादौ ॥ ३२४५ **प्रमद—**। 'प्रसंभ्यां हर्षे' इति तु नोक्तम् । 'प्रसंमदः—संप्रमदः' इति हर्षे मा भूदिति ॥ ३२४८ **प्रजने सर्तेः** । प्रजननं प्रजनः । भावे घञ्, 'जनिवध्योः–' इति वृद्धिनिषेधः । प्रशब्दबलादत्र जनेरर्थान्तरत्वम् । प्रतिष्ठते इत्यत्राप्रादुर्भावो यथा । तदेतदाह—**प्रथमगर्भग्रहणमिति** । काशिकानुरोधेनेदमुक्तम् । प्रथमं द्वितीयं वेत्यनाग्रहः, किंतु गर्भग्रहणमित्यन्ये ॥ ३२५३ **हनश्च वधः** ॥—**अन्तोदात्त इति** । सूत्रे वधशब्दोऽन्तोदात्ततयोच्चारित इति भावः ॥

३२५४ । **मूर्तौ घनः** ।३।३।७७। मूर्तिः काठिन्यम्, तस्मिन्नभिधेये हन्तेरप् स्यात्, घनश्चादेशः । अभ्रघनः । कथं 'सैन्धवघनमानय' इति ? धर्मशब्देन धर्मी लक्ष्यते ।

३२५५ । **अन्तर्घनो देशे** ।३।३।७८। वाहीकग्रामविशेषस्य संज्ञेयम् । 'अन्तर्घणः' इति पाठान्तरम् ।

३२५६ । **अगारैकदेशे प्रघणः प्रघाणश्च** ।३।३।७९। द्वारदेशे द्वौ प्रकोष्ठावलिन्दौ आभ्यन्तरो बाह्यश्च । तत्र बाह्ये प्रकोष्ठे निपातनमिदम् । प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यते इति प्रघणः, प्रघाणः । कर्मण्यप् । पक्षे वृद्धिः ।

२२५७ । **उद्घनोऽत्याधानम्** ।३।३।८० अत्याधानमुपरि स्थापनम् । यस्मिन् काष्ठे अन्यानि काष्ठानि स्थापयित्वा तक्ष्यन्ते तत् उद्घनः, अधिकरणेऽप् ।

३२५८ । **अपघनोऽङ्गम्** ।३।३।८१। अङ्गं शरीरावयवः, स चेह न सर्वः किंतु पाणिः पादश्चेत्याहुः । करणेऽप् । अपघातोऽन्यः ।

३२५९ । **करणेऽयोविद्रुषु** ।३।३।८२। एषु हन्तेः करणेऽप् स्याद्घनादेशश्च । अयो हन्यतेऽनेनेत्ययोघनः । विघनः । द्रुघनः । 'द्रुघणः' इत्येके । 'पूर्वपदात्संज्ञायां–' ८५७ इति णत्वम् । संज्ञैष कुठारस्य । द्रुर्वृक्षः ।

३२६० । **स्तम्बे क च** ।३।३।८३। स्तम्बे उपपदे हन्तेः करणे कः स्यादप् च पक्षे घनादेशश्च । स्तम्बघ्नः, स्तम्बघनः । करण इत्येव । स्तम्बघातः ।

३२६१ । **परौ घः** ।३।३।८४। परौ हन्तेरप् स्यात्करणे घशब्दश्चादेशः । परिहन्यतेऽनेनेति परिघः ।

३२६२ । **परेश्च घाङ्कयोः** ।८।२।२२। परे रेफस्य लो वा स्याद्घशब्दे अङ्कशब्दे च । पलिघः, परिघः । पर्यङ्कः, पल्यङ्कः । इह 'तरप्तमपौ घः' २००३ इति कृत्रिमस्य न ग्रहणम्, व्याख्यानात् ।

३२६३ । **उपघ्न आश्रये** ।३।३।८५। उपपूर्वाद्धन्तेरप् स्यादुपधालोपश्च । आश्रयशब्देन सामीप्यं लक्ष्यते । पर्वतेनोपहन्यते सामीप्येन गम्यते इति पर्वतोपघ्नः ।

३२६४ । **सङ्घोद्घौ गणप्रशंसयोः** ।३।३।८६। संहननं सङ्घः । भावेऽप् । उद्धन्यते उत्कृष्टो ज्ञायते इत्युद्घः । कर्मण्यप् । गत्यर्थानां बुद्ध्यर्थत्वाद्धन्तिर्ज्ञाने ।

३२६५ । **निघो निमितम्** ।३।३।८७। समन्तान्मितं निमितम् । निर्विशेषं हन्यन्ते=ज्ञायन्ते इति निघा वृक्षाः । समारोहपरिणाहा इत्यर्थः ।

३२६६ । **ड्वितः क्त्रिः** ।३।३।८८। अयं भाव एव, स्वभावात् ।

**'क्त्रेर्मम्नित्यम्'** १५७० क्त्रिप्रत्ययान्तान्मप् निर्वृत्तेऽर्थे । नित्यग्रहणात् क्त्रेर्मब्विषयः । अत एव त्र्यन्तेन न विग्रहः । डुपचष्, पाकेन निर्वृत्तं पक्त्रिमम् । डुवप्, उप्त्रिमम् ।

३२६७ । **ट्वितोऽथुच्** ।३।३।८९। अयमपि स्वभावाद् भाव एव । टुवेपृ, वेपथुः । श्वयथुः ।

३२६८ । **यजयाचयतविच्छप्रच्छरक्षो नङ्** ।३।३।९०। यज्ञः । याच्ञा । यत्नः । विश्नः । प्रश्नः । 'प्रश्ने चासन्न–' २७७७ इति ज्ञापकान्न संप्रसारणम् । ङित्वं तु 'विश्नः' इत्यत्र । गुणनिषेधाय । रक्ष्णः ।

३२६९ । **स्वपो नन्** ।३।३।९१। स्वप्नः ।

३२७० । **उपसर्गे घोः किः** ।३।३।९२। प्रधिः । अन्तर्धिः । उपाधीयतेऽनेनेति उपाधिः ।

३२७१ । **कर्मण्यधिकरणे च** ।३।३।९३। कर्मण्युपपदे घोः किः स्यादधिकरणेऽर्थे । जलानि धीयन्तेऽस्मिन्निति जलधिः ।

३२७२ । **स्त्रियां क्तिन्** ।३।३।९४। स्त्रीलिङ्गे भावादौ क्तिन् स्यात् घञोऽपवादः । अजपौ तु परत्वाद्बाधेते । कृतिः । चितिः । स्तुतिः । स्फायी, स्फातिः । 'स्फीतिकामः' इति तु प्रामादिकम् । क्तान्ताद्धात्वर्थे णिचि 'अच इः' ( उ. सू.

---

**३२५६ अगारैक–**। 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके' इत्यमरः ॥ **३२६४ सङ्घोद्घौ–**। 'मतल्लिकामचर्चिका प्रकाण्डमुद्घतल्लजौ । प्रशस्तवाचकान्यमूनि' इत्यमरः ॥ **३२६६ ड्वितः–**। **अयमिति** । अत एव पाकेन निर्वृत्तमिति विगृह्यते, न तु पक्त्रेनेति । **यत्तु प्राचोक्तं**—भावादाविति, तन्नेति भावः ॥—**क्त्रेर्मप्–**। तद्धितेषु व्याख्यातमिदम् ॥—**नित्यग्रहणादिति** । तत्र हि नित्यमिति योगो विभज्यते तत्सामर्थ्यादर्थविशेषानादरेणैव मब्विषयत्वं निर्णीयते । एकयोगत्वे तु 'निर्वृत्ते' इत्यधिकारान्निर्वृत्तार्थस्याविवक्षायां स्वातन्त्र्यं प्रसज्येत, ततश्च मपं विनापि पक्त्रिरिति प्रयोगः स्यादिति भावः ॥—**उप्त्रिममिति** । वपेर्यजादित्वात्किति संप्रसारणम् । वापेन निर्वृत्तमित्यर्थः ॥ **३२६८ यजयाच–**। भावेऽकर्तरि कारके चेति वर्तते । अत एव 'यज्ञेन यज्ञमयजन्त देवाः' इत्यत्र 'इज्यते इति यज्ञः' इति व्याचक्षते ॥—**विश्न इति** । 'च्छ्वोः शूडनुनासिके च' इति शः ॥ **३२७० उपसर्गे घोः किः** । बाहुलकात्कर्तर्यपीति माधवः । अत एव उप समीपे स्वधर्ममादधातीत्युपाधिरिति व्याचक्षते, कित्त्वादातो लोपः ॥—**अन्तर्धिरिति** । 'अन्तःशब्दस्याङ्किविधि–' इति वार्तिकादुपसर्गत्वम् ॥ **उपाधीयतेऽनेनेति** । एतेन 'उप समीपे स्वधर्ममादधातीत्युपाधिः, बाहुलकात्कर्तरि किः' इति माधवादिग्रन्थो नादर्तव्य इति ध्वनितम् । 'विधाता विश्वसृड्विधिः' इत्यत्रापि कर्तरि माभूत् किः, किंतु 'विध विधाने' इत्यस्मात् 'इगुपधात्कित्' ( उ. सू. ५५९ ) इतीनि रूपसिद्धेः ॥ **३२७२ स्त्रियां क्तिन्** ॥—**घञोऽपवाद इति** । यत्तु प्रक्रियाग्रन्थं व्याचक्षाणा आहुः—भाष्ये त्वधिकः कारोऽधिकार इति घञप्युदाहृत इति । तद्भ्रमसात् । न हि तत्र स्त्रीत्वविशिष्टो भावोऽर्थः, किंतु पुंस्त्वविशिष्ट इति ध्येयम् ॥—**अजपौ त्विति** । तयोरवकाशः–चयः, लवः । क्तिनोऽवकाशः–कृतिः, हृतिः । चिनोतिलुनातिभ्यां तु स्त्रियामुभयप्रसङ्गे परत्वात् क्तिन्नित्यर्थः ॥—**प्रामादिकमिति** । 'स्फायः स्फी निष्ठायाम्' इति निष्ठायामेव स्फीभावविधानादिति भावः ॥

---

१ 'द्वारैकदेशे' इति पाठान्तरम् ।

५७८ ) इति वा समाधेयम् ॥ ❀ **श्रुयजीषिस्तुभ्यः करणे** । श्रूयतेऽनया श्रुतिः । यजेरिषेश्च–इष्टिः । स्तुतिः ॥ ❀ **ॠल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः** । तेन नत्वम्, कीर्णिः । गीर्णिः । लूनिः । धूनिः । पूनिः । 'ह्लादः' ३०७३ इति योगविभागात् क्तिनि ह्रस्वः, प्रह्लत्तिः । 'ति च' ३०३७, चूर्तिः । फुल्तिः ॥ ❀ **चायतेः क्तिनि चिभावो वाच्यः** । अपचितिः ॥ ❀ **सम्पदादिभ्यः क्विप्** । सम्पत् । विपत् ॥ ❀ **क्तिन्नपीष्यते** । संपत्तिः । विपत्तिः ।

३२७३ । **स्थागापापचो भावे** ।३।३।९५। क्तिन् स्यात् । अङोऽपवादः । प्रस्थितिः । उपस्थितिः । सङ्गीतिः । संपीतिः । पक्तिः । कथम् 'अवस्था' 'संस्था' इति ? 'व्यवस्थायाम्' इति ज्ञापकात् ।

३२७४ । **ऊतियूतिजूतिसातिहेतिकीर्तयश्च** ।३।३।९७। अवतेः 'ज्वरत्वर–' २६५४ इत्यूठ्, ऊतिः । स्वरार्थं वचनम् । उदात्त इति हि वर्तते । यूतिः, जूतिः–अनयोर्दीर्घत्वं च निपात्यते । स्यतेः–सातिः, 'द्यतिस्यति–' ३०७४ इतीत्वे प्राप्ते इत्वाभावो निपात्यते । सनोतेर्वा 'जनसन–' ३५०४ इत्यात्वे कृते स्वरार्थं निपातनम् । हन्तेर्हिनोतेर्वा–हेतिः । कीर्तिः ।

३२७५ । **व्रजयजोर्भावे क्यप्** ।३।३।९८। व्रज्या । इज्या ।

३२७६ । **संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः** ।३।३।९९। समजादिभ्यः स्त्रियां भावादौ क्यप्स्यात्स चोदात्तः संज्ञायाम् ॥ ❀ **अजेः क्यपि वीभावो नेति वाच्यम्** । समजन्त्यस्यामिति समज्या सभा । निषीदन्त्यस्यामिति निषद्या आपणः ॥ निपतन्त्यस्यामिति निपत्या पिच्छिला भूमिः । मन्यतेऽनयेति मन्या गलपार्श्वशिरा । विदन्त्यनया विद्या । सुत्या अभिषवः । शय्या । भृत्या । ईयतेऽनया इत्या शिबिका ।

३२७७ । **कृञः श च** ।३।३।१००। 'कृञः' इति योगविभागः । कृञः क्यप्स्यात् । कृत्या ॥

**श च** । चात् क्तिन् । क्रिया । कृतिः ।

३२७८ । **इच्छा** ।३।३।१०१। ईषेर्भावे शो यगभावश्च निपात्यते । इच्छा ॥ ❀ **परिचर्यापरिसर्यामृगयाऽटाट्यानामुपसंख्यानम्** । शो यक् च निपात्यते । परिचर्या पूजा । परिसर्या परिसरणम् । अत्र गुणोऽपि । 'मृग अन्वेषणे' चुरादावदन्तः, अतो लोपाभावोऽपि, शे यकि णिलोपः, मृगया । अटतेः शे यकि द्यशब्दस्य द्वित्वं, पूर्वभागे यकारनिवृत्तिर्दीर्घश्च, अटाट्या ॥ ❀ **जागर्तेरकारो वा** । पक्षे शः । जागरा, जागर्या ।

३२७९ । **अ प्रत्ययात्** ।३।३।१०२। प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारप्रत्ययः स्यात् । चिकीर्षा । पुत्रकाम्या ।

---

**—श्रुयजीति** । परत्वात् 'करणाधिकरणयोश्च' इति ल्युटि प्राप्ते वचनम् । **श्रुतिः**–श्रोत्रम् । **यजेः** क्तिनि 'वचिस्वपि–' इति संप्रसारणे 'व्रश्चभ्रस्ज–' इति षत्वे **इष्टिरिति** रूपम् । इज्यतेऽनयेति विग्रहः । एवमिष्यतेऽनया **इष्टिः** । स्तूयतेऽनया **स्तुतिः** ॥**—तेन नत्वमिति** । **कीर्णि**रित्यादौ 'रदाभ्याम्–' इत्यनेन नत्वम् । **लूनि**रित्यादौ तु 'ल्वादिभ्यः' इत्यनेनेति विवेकः ॥**—ह्लाद इति** । 'ह्लादो निष्ठायाम्' इत्यत्रेत्यर्थः ॥**—चूर्तिरिति** । 'ति च' इति चरफलोरुत्वे 'र्वोरुपधाया दीर्घ–' इति दीर्घः ॥**—चायतेः–**। चायृ पूजानिशामनयोः ॥**—क्तिन्नपीति** । अस्त्रियामिति प्रतिषेधेन स्त्रियां वासरूपविधेरबाधादिदमुक्तम् ॥ **३२७३ अङोऽपवाद इति** । पुरस्तादपवादन्यायेन स्थादिभ्यः 'आतश्चोपसर्गे' इति, पचेस्तु 'षिद्भिदादिभ्यः–' इति प्राप्तस्याङोऽपवादः, नतु ण्वुलिञोरिति भावः । ण्वुलिञौ तु परत्वाद्भवत एव । का त्वं स्थायिकां त्वं स्थायिमिति भाष्यकारप्रयोगात् ॥**—प्रस्थितिरिति** । 'द्यतिस्यतिमास्थाम्–' इत्यात इत्वम् ॥**—सङ्गीतिरिति** । 'घुमास्था–' इत्यादिना ईत्वम् ॥ **३२७४ उदात्त इतीति** । 'मन्त्रे वृषेष–' इति सूत्रादनुवर्तत इत्यर्थः । एवं च क्तिन्नन्तस्याद्युदात्तत्वे प्राप्ते 'ऊतियूति–' इत्यादयोऽन्तोदात्ता इति पर्यवसन्नोऽर्थः ॥**—इत्वाभाव इति** । 'द्यतिस्यति–' इति प्राप्तस्याभाव इत्यर्थः ॥**—हन्तेरिति** । नकारस्येत्वं, हिनोतेस्तु गुण इति बोध्यम् ॥**—कीर्तिरिति** । कीर्तयतेः 'ण्यासश्रन्थ–' इति युचि प्राप्ते क्तिन्निपात्यते उदात्तत्वं च । 'तां सुतें कीर्तिम्' ॥ **३२७५ व्रजयजोः–**। उदात्त इत्येव । पित्करणं तूत्तरत्र तुगर्थम् ॥ **३२७६ गलपार्श्वेति** । तया हि क्रुद्धो ज्ञायत इति भावः । शेरतेऽस्यामिति **शय्या** । भरणं **भृत्या**=जीविका । 'कुमारभृत्याकुशलैरधिष्ठितः' इति रघुः । 'कुमारभृत्या गर्भिण्याः परिचर्याऽभिधीयते' इति हारावली । संज्ञायां किम् ? मतिः, भृतिः, आसुतिः । तथा च व्यवहृतम्—'मतिबुद्धिपूजार्थेभ्यश्च' 'कर्मणि भृतौ' 'रजःकृष्यासुति–' इत्यादि । एतेन 'मतिबुद्धि–' इत्यादिसूत्रप्रयोगादेव मतिभृतीत्यादीनां साधुत्वमिति दुर्घटाद्युक्तिः प्रयुक्ता ॥ **३२७७ क्रियेति** । यदा भावकर्मणोः शः, तदा 'सार्वधातुके यक्' । 'रिङ् शयग्लिङ्क्षु' इति रिङादेशः । अन्यत्र तु यगभावेऽपि शे परतो रिङादेशे कृते इयङि सति रूपं तुल्यम् ॥ **३२७८ इच्छा** ॥**—इषेर्भाव इति** । न त्वकर्तरि कारकेऽपीत्यर्थः । अत एव करणेऽर्थे इष्यतेऽनया इष्टिरिति प्रागुक्तम् ॥**—यकारनिवृत्तिरिति** । हलादिःशेषस्तु नास्ति । षाष्ठद्वित्वे धातुद्वित्वे वाऽभ्याससंज्ञास्वीकारात् । इह च तदुभयाभावादिति भावः ॥**—अटाट्येति** । यदा तु अटतेर्यङन्तात् 'अप्रत्ययात्' इत्यकारस्तदाऽतो लोपे 'यस्य हलः' इति यलोपेऽटाटेति रूपं बोध्यम्, द्वित्वे हलादिःशेषे सति 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घप्रवृत्तेः ॥**—जागर्येति** । शे परतः

३२८० । **गुरोश्च हलः** ।३।३।१०३। गुरुमतो हलन्तात् स्त्रियामकारः स्यात् । ईहा । ऊहा । गुरोः किम् । भक्तिः । हलः किम् । नीतिः ॥ ❀ **निष्ठायां सेट इति वक्तव्यम्** । नेह–आप्तिः । 'तितुत्र–' ३१६२ इति नेट्, दीप्तिः ॥ ❀ **तितुत्रेष्वग्रहादीनामिति वाच्यम्** । निगृहीतिः । निपठितिः ।

३२८१ । **षिद्भिदादिभ्योऽङ्** ।३।३।१०४। षिद्भ्यो भिदादिभ्यश्च स्त्रियामङ् । जॄष्, 'ऋदृशोऽङि गुणः' २४०६, जरा । त्रपूष्, त्रपा । भिदा । विदारण एवायम् । भित्तिरन्या । छिदा । मृजा । (ग) **कृपेः संप्रसारणं च** । कृपा ।

३२८२ । **चिन्तिपूजिकथिकुम्बिचर्चश्च** ।३।३।१०५। अङ् स्यात् । युचोऽपवादः । चिन्ता । पूजा । कथा । कुम्बा । चर्चा ।

३२८३ । **आतश्चोपसर्गे** ।३।३।१०६। अङ् स्यात् । क्तिनोऽपवादः । प्रदा । उपदा । श्रदन्तरोरुपसर्गवत् वृत्तिः । श्रद्धा । अन्तर्धा । 'उपसर्गे घोः किः' ३२७० इत्यनेन किः, अन्तर्धिः ।

३२८४ । **ण्यासश्रन्थो युच्** ।३।३।१०७। अकारस्यापवादः । कारणा । हारणा । आसना । श्रन्थना ॥ ❀ **घट्टिवन्दिविदिभ्यश्चेति वाच्यम्** । घट्टना । वन्दना । वेदना ॥ ❀ **इषेरनिच्छार्थस्य** । अन्वेषणा ॥ ❀ **परेर्वा** । पर्येषणा, परीष्टिः ।

३२८५ । **रोगाख्यायां ण्वुल्बहुलम्** ।३।३।१०८। प्रच्छर्दिका । प्रवाहिका । विचर्चिका । क्वचिन्न, शिरोर्तिः ॥ ❀ **धात्वर्थनिर्देशे ण्वुल्वक्तव्यः** । आसिका । शायिका ॥ ❀ **इक्श्तिपौ धातुनिर्देशे** । पचिः, पचतिः ॥ ❀ **वर्णात्कारः** । निर्देशे इत्येव । अकारः । ककारः ॥ ❀ **रादिफः** । रेफः । ❀ **मत्वर्थाच्छः** । बहुल-

---

सार्वधातुके यक् । 'जाग्रोऽविचिण्णल्–' इति गुणः ॥ **३२८० गुरोश्च–**। धातोरित्यनुवृत्त्या हल इति धातोर्विशेषणात्तदन्तविधौ हलन्तो धातुर्लभ्यते । न चायं गुरुरिति संभवति । अज्विशेषो हि गुरुः, अतो मत्वर्थो लक्ष्यते, तदाह—**गुरुमत इति** । ननु विपरीतमस्तु–'गुर्वन्ताद्धलः' इति तादृशस्यापि धातोर्डुक्रीञित्यादेः सत्त्वादिति चेन्मैवम् । 'चेष्टायामनध्वनि' 'आशंसायां भूतवच्च' इति निर्देशेन विपरीतशङ्काया अप्रवृत्तेः ॥ **३२८१ षिद्भिदा–**। कथं तर्हि 'मधुसुरभि मुखाब्जगन्धलब्धेः' इति माघः, 'प्रेक्षोपलब्धिः' इत्यमरश्च । षित्त्वादङि 'लभ' इत्येव ह्युचितम् । सत्यम् । 'अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेः' इति भाष्यप्रयोगाद्बाहुलकाद्वा क्तिन्नपि बोध्यः । विस्तरस्त्विह मनोरमायां बोध्यः ॥—**भिदेति** । एवमादयोऽजन्ताः समुदाया एव गणे पठ्यन्ते । तत्र ये प्रकृतिभागा भिदछिद इत्यादयस्ते आदिशब्देन सूत्रे निर्दिष्टाः । गणे विशिष्टपाठस्तु लोकप्रसिद्धार्थविशेषस्य क्वचिदलाक्षणिककार्यस्य संग्रहार्थः ॥—**भित्तिरन्येति** । भिद्यत इति भित्तिः=कुड्यम् ॥—**छिदेति** । द्वैधीकरण एवायम् । अन्यत्र तु छित्तिश्छिद्रम् ॥—**मृजेति** । मृजू शुद्धौ, अस्यापित्त्वाद्भिदादौ पाठः ॥ **३२८२–। चिन्तिपूजि** । चकारोऽनुक्तसमुच्चयार्थः । तेन तोलयतेस्तुलेति हरदत्तः । अत एव 'तुलां यदारोहति दन्तवाससा' इति नैषधकृदाह ॥—**युचोऽपवाद इति** । 'ण्यासश्रन्थ–' इति वक्ष्यमाणस्येत्यर्थः ॥ **३२८४ आसनेति** । आस्यतेऽस्यामिति विग्रहः । 'ऋहलोर्ण्यत्' इति ण्यत्प्रत्यये **त्वास्या** । न च स्त्रीप्रत्यये वासरूपविधिर्नेति शङ्क्यम् । अपवादस्य युचः स्त्रीप्रकरणस्थत्वेऽपि उत्सर्गस्य ण्यतस्तदभावात् ॥—**घट्टिवन्दि** । विदिर्लाभार्थो गृह्यते । ज्ञानार्थस्य तु–संवित्तिः ॥—**इषेरिति** । अनिच्छार्थस्य युच् । इच्छार्थस्य त्विषेरिच्छेत्येव ॥ **३२८५ रोगाख्या–**। धातोर्बहुलं ण्वुल् स्यात्प्रत्ययान्तं चेद्रोगस्य संज्ञा । क्तिन्नादीनामपवादः ॥—**प्रच्छर्दिकेति** । छर्द वमने ॥—**प्रवाहिकेति** । प्रवाहयति मुहुर्मुहुः प्रवर्तयतीति प्रवाहिका=ग्रहणी ॥—**विचर्चिकेति** । चर्च अध्ययने । प्रत्ययोपसर्गाभ्यां रोगप्रतीतिः । 'पाम पामा विचर्चिका' इत्यमरः ॥—**शिरोर्तिरिति** । शिरःपीडा । अर्द हिंसायाम् । 'तितुत्र–' इति नेट् ॥—**धात्वर्थनिर्देश इति** । क्रियानिर्देश इत्यर्थः ॥—**आसिका । शायिकेति** । आसनं, शयनमित्यर्थः–॥ ❀ **इक्श्तिपौ–**। धातोर्निर्देशोऽनुकरणम् । बहुलमित्यनुवृत्तेः क्वचिन्न—'गुप्तिज्किद्भ्यः सन्' 'भुवो वुग्लुङ्लिटोः' ॥—**पचतिरिति** । 'उपसर्गात्सुनोतिसुवतिस्यति–' 'ध्यायतेः संप्रसारणं च' इत्यादिनिर्देशादकर्तृवाचिन्यपि सार्वधातुके परे शबादयः । एवं भावकर्मवाचिन्यपि सार्वधातुके क्वचिद्यक्, 'विभाषा लीयतेः' इति यथा । तत्र हि लीलीङोर्यका निर्देशो न तु श्यनेत्युक्तम् । **यत्तु प्राचा**—श्तिपः शित्करणसामर्थ्याच्छबादय इत्युक्तम् । तन्न । पिबतिर्लोपयतिरित्यादौ पिबाद्यादेशप्रवृत्त्या आत्वनिवृत्त्या च शित्त्वस्य चरितार्थत्वात् ॥ ❀ **वर्णादिति** । वर्णानुकरणादित्यर्थः । न तु वर्णादुच्चार्यमाणादिति । तथा हि सति अकार इत्यादावेव स्यान्न तु ककार इत्यादौ, अत्र हि संघातस्योच्चारणात् । अनुकार्यं त्विह वर्णमात्रम्, अकारस्योच्चारणार्थत्वात् । कथं तर्हि—'समुच्चयार्थश्चकारः–एवकारोऽन्यनिवृत्त्यर्थः' इत्यादिप्रयोगा इति चेत्, **अत्राहुः**—क्वचित्मत्वर्थादपि भवति, 'उच्चैस्तरां वा वषट्कारः' इति सूत्रनिर्देशात् । 'सर्वे चकाराः प्रत्याख्यायन्ते' इति भाष्यप्रयोगाद्बहुलवचनाच्चेति । इह कारप्रत्ययस्य धातोरविहितत्वेऽपि धात्वधिकारस्थत्वात्कृत्संज्ञा । तेन कृदन्तत्वात्प्रातिपदिकत्वम् । प्रयोजनाभावान्न ककारस्येत्संज्ञा । आर्धधातुकत्वाभावादिडागमो न । 'अस्य च्वौ' इत्यादौ तु कारप्रत्ययाभावो बाहुलकादेव ॥ ❀ **रादिफ इति** । वासरूपविधिना कारोऽपि । तेन 'रकारादीनि नामानि शृण्वतो मम पार्वति' इत्यादिप्रयोगः साधुरेव ॥—**अकारलोप इति** । अतद्धितपरत्वादभत्वाच्च 'यस्य–' इति लोपस्याप्राप्तेरिति भावः । कृदन्तत्वात्प्रातिपदिकत्वमिह

वचनादकारलोपः । मत्वर्थीयः ॥ ❀ इणजादिभ्यः । आजिः । आतिः ॥ ❀ इञ्वपादिभ्यः । वापिः । वासिः । स्वरे भेदः ॥ ❀ इक् कृष्यादिभ्यः । कृषिः । गिरिः ।

३२८६ । **संज्ञायाम्** ।३।३।१०९। अत्र धातोर्ण्वुल् । उद्दालकपुष्पभञ्जिका ।

३२८७ । **विभाषाऽऽख्यानपरिप्रश्नयोरिञ्च** ।३।३।११०। परिप्रश्ने आख्याने च गम्ये इञ् स्यात् । चात् ण्वुल् । विभाषोक्तेर्यथाप्राप्तमन्येऽपि । कां त्वं कारिं–कारिकां क्रियां–कृत्यां–कृतिं वाऽकार्षीः । सर्वां कारिं–कारिकां–क्रियां कृत्यां–कृतिं–वाऽकार्षम् । एवं गणिं–गणिकां–गणनाम् । पाचिं–पाचिकां–पचां–पक्तिम् ।

३२८८ । **पर्यायार्हणोत्पत्तिषु ण्वुच्** ।३।३।१११। पर्यायः परिपाटी क्रमः । अर्हणमर्हः योग्यता । पर्यायादिषु द्योत्येषु ण्वुच् वा स्यात् । भवत आसिका । शायिका । अग्रगामिका । भवानिक्षुभक्षिकामर्हति । ऋणे–इक्षुभक्षिकां मे धारयसि । उत्पत्तौ–इक्षुभक्षिका उपपादि ।

३२८९ । **आक्रोशे नञ्यनिः** ।३।३।११२। 'विभाषा' इति निवृत्तम् । नञि उपपदेऽनिः स्यादाक्रोशे । अजीवनिस्ते शठ भूयात् । अप्रयाणिः ।

'**कृत्यल्युटो बहुलम्**' २४४१ 'भावे–अकर्तरि च कारके संज्ञायाम्' ३१८४।८६ इति च निवृत्तम् । राज्ञा भुज्यन्ते राजभोजनाः शालयः ।

'**नपुंसके भावे क्तः**' ३०९०—

३२९० । **ल्युट् च** ।३।३।११५। हसितम्, हसनम् । योगविभाग उत्तरार्थः ।

३२९१ । **कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम्** ।३।३।११६। येन स्पृश्यमानस्य, कर्तुः शरीरसुखमुत्पद्यते तस्मिन्कर्मण्युपपदे ल्युट् स्यात् । पूर्वेण सिद्धे नित्यसमासार्थं वचनम् । पयःपानं सुखम् । कर्तुरिति किम् । गुरोः स्नापनं सुखम् । नेह गुरुः कर्ता, किंतु कर्म ।

३२९२ । **वा यौ** ।२।४।५७। अजेर्वी वा स्याद् यौ । प्रवयणम्, प्राजनम् ।

३२९३ । **करणाधिकरणयोश्च** ।३।३।११७। ल्युट् स्यात् । इध्मप्रव्रश्चनः कुठारः । गोदोहनी स्थाली । खलः प्राक् 'करणाधिकरणयोः' इत्यधिकारः ।

३२९४ । **अन्तरदेशे** ।८।४।२४। अन्तःशब्दाद्धन्तेर्नस्य णः स्यात् । अन्तर्हणनम् । देशे तु अन्तर्हननो देशः । 'अत्पूर्वस्य' इत्येव, अन्तर्घ्नन्ति । तपरः किम् । अन्तरघानि ।

३२९५ । **अयनं च** ।८।४।२५। अयनस्य णोऽन्तःशब्दात्परस्य । अन्तरयणम् । 'अदेशे' इत्येव । अन्तरयनो देशः ।

---

पूर्ववद्बोध्यम् । 'तसौ मत्वर्थे' इत्यत्र बाहुलकाच्छो न । 'शैषिकान्मतुबर्थीयात्–' इत्यत्र तु बाहुलकादेव मतुबर्थशब्दाच्छः । **अन्ये तु** नैतत्कृदन्तं, मत्वर्थे भव इति विगृह्य गहादित्वाच्छप्रत्यये तद्धितान्तमेवेत्याहुः ॥ ❀ **इणजा–**। धात्वर्थनिर्देशे प्राप्तस्य ण्वुलोऽपवादोऽयम् । एवमग्रेऽपि ॥—**आजिरिति** । बाहुलकादजेर्वीभावो न ॥ **३२८६ संज्ञायाम्** । अधिकरणे ण्वुलर्थोऽयमारम्भः । उद्दालकः=श्लेष्मातकः, तस्य पुष्पाणि भज्यन्ते यस्यां क्रियायां सा तथा । भञ्जनं **भञ्जिका** । भावे ण्वुल् । उद्दालकपुष्पाणां भञ्जिकेत्यन्ये ॥ ३२८७ सूत्रे आख्यानशब्दस्याल्पाच्तरत्वेन पूर्वनिपाते कृते आख्यानस्य प्रश्नपूर्वकतयार्थप्राप्तक्रममनुसृत्य व्याचष्टे—**परिप्रश्ने आख्याने चेति** ॥ **३२८८ परिपाटीति** । पट गतौ, परिपूर्वः । 'इणजादिभ्यः' इतीण् । 'कृदिकारात्–' इति ङीष् ॥ **३२८९ आक्रोशे** । आक्रोशः शापः ॥ **३२९० नपुंसके भावे क्तः** । ननु 'तयोरेव कृत्यक्तखलर्थाः' इति लिङ्गत्रयसाधारण्येन भावकर्मणोः कृत्यादिविधानात्तेनैव नपुंसके भावे क्तः सिध्यति, किमनेन पुनर्विधानेन? इति चेत् । **अत्राहुः**—भूते इत्यधिकृत्य 'निष्ठा' इति सूत्रेण विहितस्य क्तस्य भावोऽर्थः 'तयोरेव–' इति सूत्रेण विहितः, अनेन तु कालसामान्ये नपुंसके भावे क्तो विधीयते । एवं च स्वविषये परत्वात् घञजपां बाधक इति परिशेषात्तेषां पुंविषयत्वं सिध्यति । **किंच** इह भावे चाकर्मकेभ्य इत्यस्यासन्निधानात्सकर्मकेभ्योऽप्ययं भवति घञादिवत् । 'गतं तिरश्चीनमनूरुसारथेः' इत्यादिदर्शनात् । तथा च नास्त्यत्र शङ्केति ॥ नन्वेवं तद्योगे कर्मणि द्वितीया स्यात्, कृद्योगलक्षणषष्ठ्या 'न लोका–' इति निषेधात् । एवं च 'घटं कृतं' 'वृक्षं भिन्नम्' इत्यादि प्रसज्येत । अनूरुसारथेरित्यत्र तु कर्तरि तृतीया नापद्यते, कारकषष्ठ्या निषेधेऽपि शेषत्वविवक्षया षष्ठीति समाधानसंभवात्, इति चेन्मैवम् । नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यातत्वात्कर्मणि द्वितीयाया अभावात् । शेषत्वविवक्षामाश्रित्य वार्तिकमिदं प्रत्याख्यातमाकरे इति चेत्; तर्हि तत्प्रामाण्यात्प्रायेण शेषत्वविवक्षैवेत्यस्तु । तथा च घटं कृतमित्यादि तु न प्रयोज्य एव । क्वचित्तु द्वितीयाऽपि दृश्यते–'भ्रान्तं देशमनेकदुर्गविषमम्' इति दिक् ॥ **३२९१ कर्मणि च** । कर्तुरिति कर्मणि षष्ठी, 'उभयप्राप्तौ कर्मणि' इति नियमात् । येनेति तृतीया, तदाह—**येन स्पृश्यमानस्य कर्तुरिति** ॥—**ल्युट् स्यादिति** । नपुंसके भावे इति बोध्यम् । अत एवाह—**पूर्वेणेति** । 'ल्युट् च' इत्यनेनेत्यर्थः ॥—**नेहेति** । स्नानकर्तृत्वेऽपि स्नापने न गुरुः कर्ता, किंतु शिष्य इत्यर्थः । शरीरग्रहणं किम्? पुत्रस्य परिष्वजने सुखम् । मानसी प्रीतिरत्र ॥ **३२९३ करणाधिकरणयोः** । येन नाप्राप्तिन्यायेन घञोऽपवादोऽयमजपौ स्त्रीप्रत्ययांश्च परत्वाद् बाधते । उक्तं हि—'अजब्भ्यां स्त्रीखलनाः, स्त्रियाः खलनौ विप्रतिषेधेन' इति ॥—**इध्मेति** । इध्मानि प्रवृश्च्यन्ते

३२९६ । **पुंसि संज्ञायां घः प्रायेण** ।३।३।११८।

३२९७ । **छादेर्घेऽद्व्युपसर्गस्य** ।६।४।९६। द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वः स्याद्घे परे । दन्ताश्छाद्यन्तेऽनेन दन्तच्छदः । प्रच्छदः । 'अद्वि' इति किम् । समुपच्छादः ॥ आकुर्वन्त्यस्मिन् आकरः ।

३२९८ । **गोचरसंचरवहव्रजव्यजापणनिगमाश्च** ।३।३।११९। घान्ता निपात्यन्ते । 'हलश्च' ३३०० इति वक्ष्यमाणस्य घञोऽपवादः । गावश्चरन्त्यस्मिन्निति गोचरो देशः । संचरन्त्यनेन संचरो मार्गः । वहन्त्यनेन वहः स्कन्धः । व्रजः । व्यजस्तालवृन्तम्, निपातनाद्वीभावो न । आपणः पण्यस्थानम् । निगच्छन्त्यनेन निगमश्छन्दः । चात्कषः, निकषः ।

३२९९ । **अवे तॄस्त्रोर्घञ्** ।३।३।१२०। अवतारः कूपादेः । अवस्तारो जवनिका ।

३३०० । **हलश्च** ।३।३।१२१। हलन्ताद्घञ् स्यात् । घापवादः । रमन्ते योगिनोऽस्मिन्निति रामः । अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गः । विमार्गः समूहनी ।

३३०१ । **अध्यायन्यायोद्यावसंहाराश्च** ।३।३।१२२। अधीयतेऽस्मिन् अध्यायः । नियन्ति उद्यवन्ति संहरन्त्यनेनेति विग्रहः । ॐ **अवहाराधारावायानामुपसंख्यानम्** ।

३३०२ । **उदङ्कोऽनुदके** ।३।३।१२३। उत्पूर्वादञ्चतेर्घञ् स्यात् न तूदके । घृतमुदच्यते उद्ध्रियतेऽस्मिन्निति घृतोदङ्कश्चर्ममयं भाण्डम् । अनुदके किम् । उदकोदञ्चनः ।

३३०३ । **जालमानायः** ।३।३।१२४। आनीयन्ते मत्स्यादयोऽनेनेत्यानायः । जालमिति किम् । आनयनः ।

३३०४ । **खनो घ च** ।३।३।१२५। चाद्घञ् । आखनः, आखानः । घित्करणमन्यतोऽप्ययमिति ज्ञापनार्थम् । तेन 'भगः, पदम्' इत्यादि । ॐ **खनेर्डडरेकेकवकाः वाच्याः** । आखः, आखरः, आखनिकः, आखनिकवकः । एते खनित्रवचनाः ।

३३०५ । **ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्** ।३।३।१२६। 'करणाधिकरणयोः–' ३२९३ इति निवृत्तम् । एषु दुःखसुखार्थेषूपपदेषु खल् स्यात् । 'तयोरेव–' २८६३ इति भावे कर्मणि च । कृच्छ्रे–दुष्करः कटो भवता । अकृच्छ्रे–ईषत्करः । सुकरः । ॐ **निमिमीलियां खलचोरात्वं नेति वाच्यम्** । ईषन्निमयः । दुष्प्रमयः । सुविलयः । निमयः । मयः । लयः ।

३३०६ । **उपसर्गात्खल्घञोः** ।७।१।६७। उपसर्गादेव लभेर्नुम् स्यात् । ईषत्प्रलम्भः । दुष्प्रलम्भः । सुप्रलम्भः । उपालम्भः । उपसर्गात्किम् । ईषल्लभः । लाभः ।

३३०७ । **न सुदुर्भ्यां केवलाभ्याम्** ।७।१।६८। उपसर्गान्तररहिताभ्यां सुदुर्भ्यां लभेर्नुम्न स्यात् खल्घञोः । सुलभम् । दुर्लभम् । केवलाभ्यां किम् । सुप्रलम्भः, अतिदुर्लम्भः । कथं तर्हि 'अतिसुलभम्' 'अतिदुर्लभम्' इति ? यदा स्वती कर्मप्रवचनीयौ, तदा भविष्यति ।

३३०८ । **कर्तृकर्मणोश्च भूकृञोः** ।३।३।१२७। कर्तृकर्मणोरीषदादिषु चोपपदेषु भूकृञोः खल् स्यात् ।

---

येन, गौर्दुह्यते यस्यामिति विग्रहः ॥ **३२९७ आकुर्वन्तीति** । एत्य कुर्वन्ति व्यवहारमस्मिन्सः । **आकर**=उत्पत्तिस्थानम् ॥ **३२९९ अवे–।** अवे उपपदे तॄस्तॄभ्यां करणाधिकरणयोः पुंसि संज्ञायां घञ् स्यात् । घस्यापवादः ॥ **३३०१ अवहारेत्यादि** । वृत्तिकारस्त्वाधारावायशब्दौ सूत्रे प्रक्षिप्य चकारेणावहारशब्दं संजग्राह, तदसंबद्धमिति स्पष्टमेव ॥ **३३०२ उदङ्को–।** 'हलश्च' इत्येव सिद्धे उदकप्रतिषेधार्थमिदम् ॥**—उदकोदञ्चन इति** । 'पुंसि संज्ञायाम्' इति घे प्राप्ते घञ्विहितः । उदके तु घञि प्रतिसिद्धे घ एव स्यान्न तु ल्युडिति चेन्नैवम् । प्रतिषेधसामर्थ्यात् घस्याप्यप्रवृत्तेः । न हि इह घे घञि वा रूपे विशेषोऽस्ति । न च स्वरे विशेषः । घे सति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तता, घञ्यपि थाथादिस्वरेण तथैवेति ॥ **३३०३ जालमा–।** जल धान्ये । 'ज्वलितिकसन्तेभ्यो णः' इति णप्रत्यये जालशब्दः सिद्धः । तेन जालशब्दोऽत्र निपात्यत इति न भ्रमितव्यम् ॥ **३३०४ खनो–॥—घित्करणमिति** । आखन इत्यादौ 'चजोः–' इति कुत्वस्य प्रसक्त्यभावादिति भावः ॥**—भगः । पदमिति** । ननु पदमित्यत्र घस्य किं प्रयोजनम्? इति चेत्, **अत्राहुः**—करणाधिकरणयोः 'पुंसि संज्ञायाम्–' इति यदि घः स्यात्तदा पदमिति नपुंसकं न स्यात्, अनेन चेत् घो भवति तदा लिङ्गसिद्धिरिति ॥**—एते इति** । आखनादयः षडित्यर्थः ॥ **३३०५ ईषद्दुःसुषु** । इह सामान्योक्तावपि योग्यताबलाद्विशेषणस्य विषयविभागो लभ्यते । **दुरिति** कृच्छ्रार्थे । इतरौ त्वकृच्छ्रार्थे । तदेतद्दर्शयति—**कृच्छ्रे–दुष्कर इत्यादिना** ॥ **भवतेति** । 'न लोका–' इति षष्ठीनिषेधात्कर्तरि तृतीया । कृच्छ्रेत्यादि किम् ? ईषत्कार्यम्, स्वल्पं कार्यमित्यर्थः ॥**—खलिति–।** लकारः स्वरार्थः । खित्करणं तूत्तरत्र मुमर्थम् ॥**—निमिमीति** । 'मीनातिमिनोतिदीङां ल्यपि च' 'विभाषा लीयतेः' इति प्राप्तं निषिध्यते ॥ **—निमय इत्यादि** । एरच् ॥ **३३०६ उपसर्गात्खल्घञोः** । 'लभेश्च' इत्यनेनैव सिद्धे नियमार्थमिदमित्याह—**उपसर्गादेवेति** ॥ **३३०७ यदा स्वतीति** । 'सुः पूजायाम्', 'अतिरतिक्रमणे च' इति तयोः कर्मप्रवचनीयत्वम् ॥ **३३०८ कर्तृकर्मणोः–।** चकारः संनियोगार्थः । यदा कर्तृकर्मणोरीषदादीनां च युगपत्प्रयोगस्तदैव प्रत्ययो यथा स्यात् । न च कर्तृकर्मणोः प्रत्ययार्थत्वमेवास्तु न तूपपदत्वमिति वाच्यम् । ईषदादीनामेवोपपदत्वे तु खलः खित्त्वस्य वैयर्थ्यापत्तेः । मुमर्थं हि तत् । मुम् चानव्ययस्य विधीयते, तस्मात्कर्तृकर्मणोरिति उपपदत्वमेव । तदेतदाह—**ईषदादिषु चेति** । कर्तृक-

**यथासंख्यं नेष्यते** । कर्तृकर्मणी च धातोरव्यवधानेन प्रयोज्ये । ईषदादयस्तु ततः प्राक् । ॐ **कर्तृकर्मणोश्च्व्यर्थयोरिति वाच्यम्** । खित्वान्मुम् । अनाढ्येनाढ्येन दुःखेन भूयते दुराढ्यम्भवम् । ईषदाढ्यम्भवम् । स्वाढ्यम्भवम् । ईषदाढ्यङ्करः । दुराढ्यङ्करः । स्वाढ्यङ्करः । च्व्यर्थयोः किम् । आढ्येन सुभूयते ।

३३०९ । **आतो युच्** ।३।३।१२८। खलोऽपवादः । ईषत्पानः सोमो भवता । दुष्पानः । सुपानः । ॐ **भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वाच्यः** । दुःशासनः । दुर्योधनः । इत्यादि ।

३३१० । **षात्पदान्तात्** ।८।४।३५। नस्य णो न । निष्पानम् । सर्पिष्पानम् । षात्किम् । निर्णयः । पदान्तात्किम् । पुष्णाति । 'पदे अन्तः पदान्तः' इति सप्तमीसमासोऽयम् । तेनेह न-सुसर्पिष्केण ।

३३११ । **आवश्यकाधमर्ण्ययोर्णिनिः** ।३।३।१७०। अवश्यङ्कारी । शतं दायी ।

३३१२ । **कृत्याश्च** ।३।३।१७१। आवश्यकाधमर्ण्ययोरित्येव । अवश्यं हरिः सेव्यः । शतं देयम् ।

३३१३ । **क्तिच्क्तौ च संज्ञायाम्** ।३।३।१७४। धातोः क्तिच् क्तश्च स्यादाशिषि संज्ञायाम् । 'तितुत्र-' ३१६३ इति नेट् । भवतात्-भूतिः ।

३३१४ । **न क्तिचि दीर्घश्च** ।६।४।३९। अनिटां वनतितनोत्यादीनां च दीर्घानुनासिकलोपौ न स्तः क्तिचि परे । यन्तिः । रन्तिः । वन्तिः । तन्तिः ।

३३१५ । **सनः क्तिचि लोपश्चास्यान्यतरस्याम्** ।६।४।४५। सनोतेः क्तिचि आत्वं वा स्याल्लोपश्च वा । सनुतात्-सातिः, सतिः, सन्तिः । देवा एनं देयासुर्देवदत्तः ।

३३१६ । **अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा** ।३।४।१८। प्रतिषेधार्थयोरलंखल्वोरुपपदयोः क्त्वा स्यात् । प्राचांग्रहणं पूजार्थम् । 'अमैवाव्ययेन' ७८३ इति नियमान्नोपपदसमासः । 'दो दद्घोः' ३०७७, अलं दत्त्वा । 'घुमास्था-' २४६२, पीत्वा खलु । अलंखल्वोः किम् । मा कार्षीत् । प्रतिषेधयोः किम् । अलंकारः ।

३३१७ । **उदीचां माङो व्यतीहारे** ।३।४।१९। व्यतीहारेऽर्थे माङः क्त्वा स्यात् । अपूर्वकालार्थमिदम् ।

३३१८ । **मयतेरिदन्यतरस्याम्** । ।६।४।७०। मेङ इकारोऽन्तादेशः स्याद्वा ल्यपि । अपमित्य याचते, अपमाय । उदीचांग्रहणाद्यथाप्राप्तमपि, याचित्वा अपमयते ।

३३१९ । **परावरयोगे च** ।३।४।२०। परेण पूर्वस्यावरेण परस्य योगे गम्ये धातोः क्त्वा स्यात् । अप्राप्य

---

र्मणी द्वे, भूकृञौ च द्वौ, तयोर्यथासंख्यं प्राप्तम्, स्वीकृतं च काशिकाकृता न्यासकारहरदत्तादिभिश्च, प्राचापि तथैवोक्तं, तद्व्याख्यातृभिश्चानुमोदितं, तत्सर्वं नादर्तव्यम् । यथासंख्यसूत्रस्थभाष्यविरोधात्-इति ध्वनयन्नाह—**यथासंख्यं नेष्यत इति** । ननूपपदयोर्मध्ये पूर्वापरीभावव्यवस्था न सिध्यति, भूकृञोरव्यवहितत्वं कर्तृकर्मणोरेवेष्यते न त्वीषदादीनाम् । एवं च कथमत्रेष्टव्यवस्था सिध्यतीति चेत्, **अत्राहुः**—बहुलग्रहणानुवृत्त्या दुराढ्यंभवमिति भाष्योदाहरणाच्चेष्टव्यवस्था सिध्यतीति । तदेतदभिप्रेत्याह—**कर्तृकर्मणी चेति** ॥ भवतेः कर्तर्युदाहरति—**अनाढ्येनाढ्येनेति** । कर्मणि त्वनाढ्य आढ्योभूयते इति विग्रहः । भाव्यते-इति तदर्थः । एवमग्रेऽपि विग्रहद्वयमुन्नेयम् । अनाढ्येनाढ्येन स्वयमेव भूयते, अनाढ्य आढ्यः क्रियत इति ॥ **३३०९ इत्यादीति** । आदिशब्देन-दुर्दर्शनः, दुर्धर्षणः, दुर्मर्षणः ॥ **३३१३ क्तिच्क्तौ-**। क्तिचश्चकारो 'न क्तिचि' इति विशेषणार्थः । न क्तावित्युक्ते हि क्तिनोऽपि ग्रहणं स्यादिति **प्राञ्चः** । तत्र एकानुबन्धपरिभाषयैव क्तिनो व्यावृत्तिसिद्धेरिति **हरदत्तः** । **यत्तु वदन्ति**—'तितुत्र-' इत्यत्र सामान्यग्रहणार्थश्चकारः । अन्यथा एकानुबन्धत्वादस्यैव ग्रहणं स्यान्न तु क्तिन इति । तद्भ्रमसात्, 'तितुत्र-' इति सूत्रेऽनुबन्धविशिष्टरूपानुच्चारणेनैकानुबन्धपरिभाषाया उक्तिसंभवस्यैवाभावात् । एतेन 'तितुत्र-' इति सूत्रे एकानुबन्धत्वात्क्तिवेव गृह्यते न त्वयं क्तिच् । ततश्च रोदितीति रूपं न स्यादिति शङ्काऽप्यपास्ता ॥ **—भूतिरिति** । यद्यपीह परत्वात् 'श्र्युकः किति' इत्येवेण्निषेधो न्याय्यस्तथापि वन्तितन्त्योरिण्निषेधार्थमावश्यकत्वात्फले विशेषाभावाच्च 'तितुत्र-' इत्युपन्यस्तम् ॥ **३३१४ दीर्घानुनासिकेति** । 'अनुनासिकस्य क्विझलोः-' इति दीर्घस्य 'अनुदात्तोपदेश-' इत्यादिनाऽनुनासिकलोपस्य च प्राप्तिरिति बोध्यम् ॥**—यन्तिरित्यादि** । यम उपरमे, रम क्रीडायाम्, वनु याचने, तनु विस्तारे ॥ **३३१६ अलंखल्वोः-**॥**—पूजार्थमिति** । ननु विकल्पार्थमेवास्तु-अलं रुदित्वा अलं रोदनेनेति रूपद्वयसिध्यर्थमिति चेन्मैवम् । वासरूपन्यायेनैतत्सिद्धेः । न च 'क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्न' इति सिद्धान्तात् ल्युटि वासरूपन्यायो नास्तीति वाच्यम् । 'क्तल्युडादयोऽपवादभूताः स्वबाध्यं नित्यं बाधन्ते' इति हि तस्य निष्कृष्टोऽर्थः । इह तु ल्युटोऽपवादः क्त्वा चेति वैषम्यात् ॥ ननु 'प्रैषादिषु कृत्याश्च' इति वचनेन स्त्र्यधिकारादूर्ध्वं वासरूपविधिर्नावश्यमस्तीति ज्ञापितमिति चेत्, किं ततः ? 'ज्ञापकसिद्धं न सर्वत्र' इतीष्टानुरोधेन तदभ्युपगमे बाधकाभावात् ॥**—अलं दत्त्वेति** । अपात्रे न देयमिति फलितोऽर्थः ॥ **३३१७ उदीचाम्-**। व्यतीहारो व्यतिक्रमः । मेङः कृतात्वस्यायं माङ इति निर्देशो 'नानुबन्धकृतमनेजन्तत्वम्' इति परिभाषां ज्ञापयति, तेन घुसंज्ञायां दैपोऽप्यदाबिति पर्युदासः सिध्यति ॥ **३३१८ अपमित्येति** । 'समासेऽनञ्पूर्वे-' इति वक्ष्यमाणेन क्त्वो ल्यपि तुक् । याचित्वा प्रणिददातीत्यर्थः ॥ **३३१९ परावर-**॥**—अप्राप्येति** । दक्षिण-

नदी पर्वतः । परनदीयोगोऽत्र पर्वतस्य । अतिक्रम्य पर्वतं स्थिता नदी । अवरपर्वतयोगोऽत्र नद्याः ।

**३३२० । समानकर्तृकयोः पूर्वकाले** ।३।४।२१। समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात् । क्त्वा तु अव्ययकृतो भावे । भुक्त्वा व्रजति । द्वित्वमतन्त्रम्, स्नात्वा भुक्त्वा पीत्वा व्रजति । 'अनुदात्त-' २४२८ इत्यनुनासिकलोपः, विष्णुं नत्वा स्तौति । स्वरत्यादेः 'श्र्युकः किति' २३८१ इति नित्य मिड्भावः पूर्वविप्रतिषेधेन, स्वृत्वा । सूत्वा । धूत्वा ।

**३३२१ । क्त्वि स्कन्दिस्यन्दोः** ।६।४।३१। एतयोर्नलोपो न स्यात् क्त्वि परे । स्कन्त्वा । ऊदित्वादिड्वा, स्यन्त्वा । स्यन्दित्वा ।

**३३२२ । न क्त्वा सेट्** ।१।२।१८। सेट् क्त्वा किन्न स्यात् । शयित्वा । सेट् किम् । कृत्वा ।

**३३२३ । मृडमृदगुधकुषक्लिशवदवसः क्त्वा** ।१।२।७। एभ्यः सेट् क्त्वा कित् । मृडित्वा । 'क्लिशः क्त्वा' ३०४९ इति वेट्, क्लिशित्वा । क्लिष्ट्वा । उदित्वा । उषित्वा । 'रुदविद-' २६०९ इति कित्त्वम्, रुदित्वा । विदित्वा । मुषित्वा । गृहीत्वा ।

**३३२४ । नोपधात्थफान्ताद्वा** ।१।२।२३। सेट् क्त्वा किद्वा । श्रथित्वा, श्रन्थित्वा । गुफित्वा, गुम्फित्वा । नोपधात्किम् । कोथित्वा, रेफित्वा ।

**३३२५ । वञ्चिलुञ्च्यृतश्च** ।१।२।२४। सेट् क्त्वा किद्वा । वचित्वा, वञ्चित्वा । लुचित्वा, लुञ्चित्वा । ऋतित्वा, अर्तित्वा ।

**३३२६ । तृषिमृषिकृशेः काश्यपस्य** ।१।२।२५। एभ्यः सेट् क्त्वा किद्वा । तृषित्वा, तर्षित्वा । मृषित्वा, मर्षित्वा । कृशित्वा, कर्शित्वा । 'रलो व्युपधात्-' १६१६ इति वा कित्त्वम् । द्युतित्वा, द्योतित्वा । लिखित्वा, लेखित्वा । रलः किम् । सेवित्वा । व्युपधात्किम् । वर्तित्वा । हलादेः किम् । एषित्वा । सेट् किम् । भुक्त्वा । 'वसतिक्षुधोरिट्-' ३०४६, उषित्वा । क्षुधित्वा, क्षोधित्वा । 'अञ्चेः पूजायाम्' ३०४७ इति नित्यमिट्, अञ्चित्वा । गतौ

---

देशस्थाना गङ्गामप्राप्य विन्ध्यः । गङ्गाप्राप्तिविरहविशिष्टदेशस्थो विन्ध्य इत्यर्थः । अत्र विन्ध्यात्परा गङ्गेति गम्यते ॥—**अतिक्रम्येति** । दक्षिणदेशस्थानामेवायमपि प्रयोगः । अत्र हि गङ्गाया पूर्वो विन्ध्य इति गम्यते । इह त्रिसूत्र्या क्त्वाप्रत्ययस्य भावमात्रार्थत्वेऽपि विशेषणविशेष्यसंसर्गा भिद्यन्त इति नास्ति वैयर्थ्यमिति दिक् ॥ **३३२० समानकर्तृक** ।- इह धात्वधिकारेऽपि समानकर्तृकत्वं क्रिययोरेव सम्भवतीत्याशयेनाह—**धात्वर्थयोरिति** । निर्धारणे षष्ठी सप्तमी वा । धात्वर्थयोर्मध्ये पूर्वे कालो यस्य धात्वर्थस्य तस्मिन्विद्यमानादित्यर्थः । एवं च निर्धारणविभक्तिरेव पूर्वकाल इत्यस्य बहुव्रीहित्वद्योतिकेति फलितम् ॥—**क्त्वा स्यादिति** । स च भावे, अव्ययकृत इति वचनात् । भावोऽपि घञादाविव नेह सिद्धावस्थः किंतु साध्यावस्थः । स च धातुनैव लब्धः । क्त्वाप्रकृत्यर्थभूता क्रिया च क्रियान्तरं प्रति विशेषणम्, धातुसम्बन्धाधिकारात् । संसर्गश्चेह सामानाधिकरण्यमुत्तरकालत्वं च । तत्र संसर्गविशेषतात्पर्यग्राहकाः क्त्वाणमुलादयः । अत्र च 'समानकर्तृकयोः-' इति सूत्रांशेन सामानाधिकरण्यमुपनिबद्धम् । धातूपात्तव्यापाराश्रयस्य कर्तृतया तथा पर्यवसानादिति दिक् ॥—**द्वित्वमिति** । नन्वमीषां ब्राह्मणानां पूर्वमानयेत्युक्ते मध्यमो नानीयते, तथेहापि बहुक्रियासमभिव्याहारे मध्यमक्रियावाचकात् क्त्वाप्रत्ययो न स्यादिति चेत्, **अत्राहुः**—इहाप्याख्यातवाच्या क्रिया प्रधानं, तां प्रति क्त्वान्तोपस्थिताः क्रियाः सर्वा एव विशेषणं, न तु तासां परस्परसम्बन्धः, 'गुणानां च परार्थत्वात्' इति न्यायात् । अत एव स्नात्वा पीत्वा भुक्त्वा व्रजतीत्याद्यनियमेन प्रयुज्यत इति ॥ 'स्वरतिसूति-' इत्यादिना विकल्पे प्राप्ते नित्यार्थमाह—**स्वरत्यादेरिति** ॥ **३३२१ क्त्वि स्कन्दि-**। स्कन्दिर्गतिशोषणयोः । इह 'इर इत्संज्ञा-' इति वार्तिकादिकारमात्रस्येत्संज्ञा नेति 'अनिदिताम्-' इति पर्युदासोऽत्र न प्रवर्तत इति स्कन्दिग्रहणम् ॥—**स्कन्त्वेति** । 'एकाचः-' इति नेट् ॥ **३३२३ मृडमृद-**। मृड सुखने, मृद क्षोदे, गुध परिवेष्टने, गुध रोषे च, कुष निष्कर्षे, क्लिश हिंसायां दिवादिः, क्लिशू विबाधने क्र्यादिः, वद व्यक्तायां वाचि, वस निवासे ॥—**किदिति** । 'असंयोगाल्लिट् कित्' इत्यतः किदित्यनुवर्तत इति भावः ॥—**उदित्वेति** । यजादित्वात्संप्रसारणम् ॥—**उषित्वेति** । 'वसतिक्षुधोः-' इतीट् । यजादित्वात्संप्रसारणम् । 'शासिवसि-' इति षः ॥—**गृहीत्वेति** । 'ग्रहिज्या-' इति संप्रसारणम्, 'ग्रहोऽलिटि' इति इटो दीर्घः ॥ **३३२४ नोपधात्थ-**। अन्तग्रहणं स्पष्टार्थम् । थफादित्युक्तेऽपि धातोरेव क्त्वाप्रत्ययविधानाद्विशेष्यसंनिधानेन तदन्तविधिना थफान्तादिति लाभात् । —**कोथित्वा । रेफित्वेति** । कुथ पूतीभावे, रिफ कत्थनयुद्धनिन्दाहिंसादानेषु । इह 'रलो व्युपधात्-' इति विकल्पोऽपि न भवति, नोपधग्रहणसामर्थ्यात् ॥ **३३२५ वचित्वेति** । वञ्चु प्रलम्भने ॥—**लुचित्वेति** । लुञ्च अपनयने । —**ऋतित्वेति** । ऋति सौत्रो धातुर्घृणार्थकः, तस्यार्धधातुकविषये 'ऋतेरीयङ्' इत्यस्य वैकल्पिकत्वात्तदभावे कित्त्वमनेन विकल्प्यते ॥ **३३२६ तृषिमृषि-**। ञितृषा पिपासायाम्, मृष तितिक्षायाम्, कृश तनूकरणे । 'नोपधा-' इत्यतो वेत्यनुवर्तनात्काश्यपग्रहणं पूजार्थम् ॥—**अञ्चेरिति** । 'उदितो वा' इति विकल्पप्राप्तावयमारम्भः ॥

तु 'अक्त्वा' इत्यपि लुभित्वा, लोभित्वा । 'लुभोऽविमोहने' ३०४८ इतीट् । विमोहने तु—लुब्ध्वा ।

३३२७ । **जॄव्रश्च्योः क्त्वि** ।७।२।५५। आभ्यां परस्य क्त्व इट् स्यात् । जरीत्वा, जरित्वा । व्रश्चित्वा ।

३३२८ । **उदितो वा** ।७।२।५६। उदितः परस्य क्त्व इड्वा । शमित्वा । 'अनुनासिकस्य क्वि–' २६६६ इति दीर्घः, शान्त्वा । द्यूत्वा, देवित्वा ।

३३२९ । **क्रमश्च क्त्वि** ।६।४।१८। क्रम उपधाया वा दीर्घः स्यात् झलादौ क्त्वि परे । क्रान्त्वा, क्रन्त्वा । झलि किम् । क्रमित्वा । 'पूङश्च' ३०५० इति वेट्, पवित्वा । पूत्वा ।

३३३० । **जान्तनशां विभाषा** ।३।४।३२। जान्तानां नशेश्च नलोपो वा स्यात् क्त्वि परे । भक्त्वा, भङ्क्त्वा । रक्त्वा, रङ्क्त्वा । 'मस्जिनशोः–' २५१७ इति नुम्, तस्य पक्षे लोपः, नष्ट्वा । नंष्ट्वा । 'रधादिभ्यश्च' २५१४ इतीट्–पक्षे नशित्वा । ❀ **झलादाविति वाच्यम्** ॥ नेह–अञ्जित्वा, ऊदित्वाद्वेट् । पक्षे–अक्त्वा, अङ्क्त्वा । 'जनसन–' २५०४ इत्यात्वम्, खात्वा । खनित्वा । 'द्यतिस्यति–' ३०७४ इतीत्वम्–दित्वा, सित्वा, मित्वा, स्थित्वा । 'दधातेर्हिः' ३०७६, हित्वा ।

३३३१ । **जहातेश्च क्त्वि** ।७।४।४३। हित्वा । हाङस्तु–हात्वा । 'अदो जग्धिः–' ३०८०, जग्ध्वा ।

३३३२ । **समासेऽनञ्पूर्वे क्त्वो ल्यप्** ।७।१।३७। अव्ययपूर्वपदेऽनञ्समासे क्त्वो ल्यबादेशः स्यात् । तुक्, प्रकृत्य । अनञ् किम् । अकृत्वा । पर्युदासाश्रयणान्नेह—परमकृत्वा ।

३३३३ । **षत्वतुकोरसिद्धः** ।६।१।८६। षत्वे तुकि च कर्तव्ये एकादेशशास्त्रमसिद्धं स्यात् । कोऽसिचत्, इह षत्वं न । अधीत्य, प्रेत्य, 'ह्रस्वस्य–' २८५८ इति तुक् ।

३३३४ । **वा ल्यपि** ।६।४।३८। अनुदात्तोपदेशानां वनतितनोत्यादीनामनुनासिकलोपो वा स्याल्ल्यपि । व्यवस्थितविभाषेयम् । तेन मान्तानिटां वा, नान्तानिटां वनादीनां च नित्यम् । आगत्य, आगम्य । प्रणत्य, प्रणम्य । प्रहत्य । प्रमत्य । प्रवत्य । वितत्य । 'अदो जग्धिः–' ३०८० । (प.) **अन्तरङ्गानपि विधीन्बहिरङ्गो ल्यब्बाधते** । जग्धिविधौ ल्यब्ग्रहणात् । तेन हित्वदत्वात्वेत्वदीर्घत्वशूठिटो ल्यपि न । विधाय । प्रदाय । प्रखन्य । प्रस्थाय । प्रक्रम्य । आपृच्छ्य । प्रदीव्य ।

३३३५ । **न ल्यपि** ।६।४।६९। ल्यपि परे घुमास्थादेरीत्वं न । धेट्, प्रधाय । प्रमाय । प्रगाय । प्रपाय । प्रहाय । प्रसाय । 'मीनातिमिनोति–' २५०८ इत्यात्वम्, प्रमाय । निमाय । उपदाय । 'विभाषा लीयतेः' २५०९, विलाय । विलीय । णिलोपः–उत्तार्य, विचार्य ।

३३३६ । **ल्यपि लघुपूर्वात्** ।६।४।५६। लघुपूर्वात्परस्य णेरयादेशः स्यात् ल्यपि । विगणय्य । प्रण-

---

**—अञ्चित्वेति** । 'न क्त्वा सेट्–' इति कित्त्वाभावान्नलोपो न । एवं चेह 'नाञ्चेः पूजायाम्' इति नलोपो नेति प्रसादकारोक्तिर्व्यर्थेत्याहुः ॥ **३३२७ जॄव्रश्च्योः–**। जॄ इत्यस्मात् 'श्र्युकः किति' इति निषेधे प्राप्ते व्रश्चेरूदित्वाद्विकल्पे प्राप्ते वचनमिदम् ॥**—जरीत्वेति** । 'वॄतो वा' इति इटो वा दीर्घः ॥**—व्रश्चित्वेति** । इह 'न क्त्वा सेट्' इति कित्त्वनिषेधात् 'ग्रहिज्या–' इति संप्रसारणं न ॥ **३३२८ द्यूत्वेति** । इडभावपक्षे 'च्छ्वोः–' इत्यूठ् ॥ **३३२९ झलादावितीति** । 'जान्तनशाम्–' इति सूत्रे वक्तव्यमित्यर्थः ॥ **३३३० खात्वा । खनित्वेति** । 'उदितो वा' इति वेट् ॥ **जग्ध्वेति** । 'झरो झरि–' इति पाक्षिको धलोपः ॥ **३३३२ समासेऽनञ्** । नञ्भिन्नं नञ्सदृशमव्ययमिति यावत् । तत्पूर्वं पूर्वपदं यस्य समासस्येति व्याचष्टे**—अव्ययपूर्वपदेति** ॥**—प्रकृत्येति** । प्रशब्दः क्त्वाप्रत्ययार्थगतप्रकर्षस्य द्योतकः, स तु 'कुगतिप्रादयः' इति क्त्वान्तेन नित्यं समस्यते ॥**—पर्युदासेति** । प्रसज्यप्रतिषेधाश्रयणे तु स्यादेवात्र ल्यबिति भावः ॥ **३३३३ षत्वतुकोः–**। प्रासङ्गिकषत्वविषयमुदाहरति**—कोऽसिचदिति** । को असिचदिति स्थिते 'एङः पदान्तादति' इति पूर्वरूपमेकादेशः । तस्य 'अन्तादिवच्च' इति परादिवत्त्वेन 'सात्पदाद्योः' इति निषेधाभावादिणः परत्वेन षत्वं प्राप्तं एकादेशस्यासिद्धत्वे सति अकारेण व्यवधानादिणः परत्वाभावान्न भवति ॥ प्रकृतं ल्यपि कार्यमुदाहरति**—अधीत्येति** ॥ **३३३४ विधायेति** । दधातेर्हिर्न ॥ **—प्रदायेति** । 'दो दद्घोः' इति न ॥**—प्रखन्येति** । 'जनसनखन–' इत्यात्वं न ॥**—प्रस्थायेति** । 'द्यतिस्यति–' इतीत्वं न ॥**—प्रक्रम्येति** । 'क्रमश्च क्त्वा–' इति दीर्घो न ॥**—आपृच्छ्य । प्रदीव्येति** । छकारवकारयोः 'च्छ्वोः–' इति शूठौ न । इडभावस्योदाहरणं तु प्रखन्य प्रदीव्येत्यादावेव बोध्यः ॥ **३३३५ न ल्यपि** । कथं तर्हि 'निपीय यस्य' इति श्रीहर्षप्रयोग इति चेत्, **अत्राहुः**—'पीङ् पाने' इति दिवादिगणस्थात् ल्यपि न दोष इति । इह प्रशाय प्रच्छायेत्यत्र 'शाच्छोरन्यतरस्याम्' इति प्राप्तस्येत्वस्याप्यभावो बोध्यः ॥ **३३३६ लघुपूर्वादिति** । लघुः पूर्वो यस्माद्वर्णात् । लघुपूर्ववर्णात्परस्येत्यर्थः ॥**—विगणय्येति** । नन्विह णौ कृतस्याल्लोपस्य पूर्वस्माद्विधौ स्थानिवद्भावाल्लघुपूर्वकवर्णात्परत्वं नास्ति । न चारम्भसामर्थ्यम् । अनुगमय्येत्यादौ मित्सु चरितार्थत्वात् । **अत्रोच्यते**—पूर्वस्माद्विधौ स्थानिवत्त्वमनित्यम्, 'निष्ठायां सेटि' इति लिङ्गात् । तथा चात्र स्थानिवत्त्वाभावाण्णेरयादेशो भवत्येव । 'निष्ठायां सेटि' इत्यस्यानित्यत्वज्ञापकत्वं तु 'अचः परस्मिन्–' इति सूत्र एवास्माभिरुपपादित-

मय्य । प्रबेभिदय्य । लघुपूर्वात्किम् । संप्रधार्य ।

३३३७ । **विभाषाऽऽपः** ।६।४।५७। आप्नोतेर्णेरया-देशो वा स्यात् ल्यपि । प्रापय्य, प्राप्य ।

३३३८ । **क्षियः** ।६।४।५९। क्षियो ल्यपि दीर्घः स्यात् । प्रक्षीय ।

३३३९ । **ल्यपि च** ।६।१।४१। वेञो ल्यपि संप्रसा-रणं न स्यात् । प्रवाय ।

३३४० । **ज्यश्च** ।६।१।४२। प्रज्याय ।

३३४१ । **व्यश्च** ।६।१।४३। उपव्याय ।

३३४२ । **विभाषा परेः** ।६।१।४४। परेर्व्येञो वा संप्रसारणं स्यात् ल्यपि । तुकं बाधित्वा परत्वात् 'हलः' २५५९ इति दीर्घः । परिवीय, परिव्याय । कथं 'मुखं व्यादाय स्वपिति' 'नेत्रे निमील्य हसति' इति ? व्यादान-निमीलनोत्तरकालेऽपि स्वापहासयोरनुवृत्तेस्तदंशविवक्षया भविष्यति ।

३३४३ । **आभीक्ष्ण्ये णमुल् च** ।३।४।२२। पौनः पुन्ये द्योत्ये पूर्वविषये णमुल् स्यात् क्त्वा च । द्वित्वम्, स्मारं स्मारं नमति शिवम्, स्मृत्वा स्मृत्वा । पायं पायम् । भोजं भोजम् । श्रावं श्रावम् । 'चिण्णमुलोः–' २७६२ इति णमुल्परे णौ वा दीर्घः, गमं गमम्, गामं गामम् । 'विभाषा चिण्णमुलोः' २७६५ इति नुम् वा, लम्भं लम्भम् । लाभं लाभम् । व्यवस्थितविभाषया उपसृष्टस्य नित्यं नुम्, प्रलम्भं प्रलम्भम् । 'जाग्रोऽवि-चिण्णल्ङित्सु' २४८० इति गुणः, जागरं जागरम् । ण्यन्तस्या-प्येवम् ।

३३४४ । **न यद्यनाकाङ्क्षे** ।३।४।२३। यच्छब्दे उप-पदे पूर्वकाले यत्प्राप्तं तन्न, यत्र पूर्वोत्तरे क्रिये तद्वाक्यम-परं नाकाङ्क्षते चेत् । यदयं भुङ्क्ते ततः पठति । इह क्त्वाणमुलौ न । अनाकाङ्क्षे किम् । यदयं भुक्त्वा व्रजति ततोऽधीते ।

३३४५ । **विभाषाऽग्रेप्रथमपूर्वेषु** ।३।४।२४। 'आ-भीक्ष्ण्ये' इति नानुवर्तते । एषूपपदेषु समानकर्तृकयोः पूर्व-

---

मिति नात्रोपपाद्यते ॥—**प्रणमय्येति** । अमन्तत्वान्मित्त्वे मितां ह्रस्वः ॥—**प्रबेभिदय्येति** । [illegible] ल्लोपे 'यस्य हलः' इति यलोपः ॥ ननु ह्रस्वयलोपाल्लोपानामाभीयत्वेनासिद्धत्वाल्लघुपूर्वकवर्णात्परो णिर्नास्तीति कथमिह णेरयादेशः स्यादिति गणयतीत्यादौ वा कथं स्यादिति चेत्, **मैवम्** । 'असिद्धवदत्राभात्' इत्यत्र 'समानाश्रये तस्मिन्कर्तव्ये तदसिद्धं स्यात्' इति हि व्याख्यातम् । तेनात्राशङ्कैव नास्ति, ह्रस्वादयो हि णौ, णेरयादेशस्तु ल्यपि परत इति व्याश्रयत्वात् ॥ **३३३७ विभाषाऽऽपः** । अप्राप्तविभाषेयम् ॥—**आप्नोतेरिति** । यद्यपीङो णिचि परतः 'क्रीङ्जीनां णौ' इत्यात्वे 'अर्तिह्री–' इत्यादिना पुकि आपिति शब्दोऽस्ति, तथापि तस्य नेह ग्रहणं, लाक्षणिकत्वादिति भावः ॥—**प्राप्येति** । एतेन 'अयमयोगिवधूवधपातकैर्भ्रमिमवाप्य दिवः खलु पात्यते' इति श्रीहर्षप्रयोगो व्याख्यातः । अवाप्येत्यस्यावापय्येत्यर्थसंभवात् । एतेन तत्रान्तर्भावितण्यर्थतेति क्लेशमनुभवन्तः परास्ताः ॥ **३३३९** ल्यपः स्थानिनः कित्त्वात् 'वचिस्वपि–' इति प्राप्तसंप्रसारणं निषिध्यत इत्याह—**ल्यपि चेति** ॥ **३३४० ज्यश्च** । संप्रसारणं न स्यात् । एवं व्यश्चेत्यत्रापि व्याख्येयम् ॥ **३३४२ कथमिति** । ल्यबादेशस्य स्थानिभूतः क्त्वाप्रत्ययो दुर्लभः, तद्विधौ पूर्वकाल इत्युक्तेः । न चेह तदस्ति । पूर्वं ह्यसौ स्वपिति पश्चान्मुखं व्यादत्ते । यदैव हसति तदैव नेत्रे संमीलयति । तथा च क्त्वाप्रत्ययस्य दुर्लभत्वाल्ल्यपः प्रसक्तिरेव नास्तीति प्रश्नः ॥ समाधत्ते—**व्यादानेत्यादिना** । एतेनेश्वरः सर्वं व्याप्य वर्तते, ज्ञात्वा तिष्ठति–इत्यादि व्याख्यातम् । 'श्रीशैलशिखरं दृष्ट्वा पुनर्जन्म न विद्यते' इत्यादौ तु समानकर्तृकतानिर्वाहार्थं स्थितस्येत्यादि यथासंभवमध्याहार्यम् ॥ **३३४३ आभीक्ष्ण्ये णमुल् च** । ननु वासरूपन्यायेन क्त्वाप्रत्ययो भविष्यतीति चग्रहणमिति व्यर्थमिति चेन्मैवम् । उक्तन्यायस्वीकारे तु लडादिरपीह प्रवर्तेत । न चेष्टापत्तिः, 'विभाषाग्रे–' इति वक्ष्यमाणसूत्रस्थविभाषाग्रहणस्य वैयर्थ्यप्रसङ्गात् । तत्र हि क्त्वाणमुलौ विभाषाग्रहणेन लडादिसमावेशार्थं विकल्प्येते । यद्यपि वासरूपन्यायेनैव लडादिः सिध्यति, तथापि णमुला सहैव क्त्वाप्रत्ययो यत्र विधीयते तत्र वासरूपविधिर्न प्रवर्तेत इति ज्ञापनार्थं विभाषाग्रहणम् । तत्फलं तु 'आभीक्ष्ण्ये णमुल् च' इत्यत्र लडाद्यप्रवृत्तिः । ततश्च चकारेणैव क्त्वाप्रत्ययो लभ्यत इति नास्त्येव तस्य वैयर्थ्यम् । **किं च** वासरूपं विनैव क्त्वालडाद्योः स्वीकारे तु 'न यद्यनाकाङ्क्षे' इत्यत्र क्त्वाप्रत्ययवत् लडादिरपि न विरुध्येत । तथा च 'यदयं भुङ्क्ते ततः पठति' इत्युदाहरणं न स्यात् । सिद्धान्ते तु 'आभीक्ष्ण्ये णमुल् च' इति विशेषविहितयोः क्त्वाणमुलोरेव निषेधात्सामान्यविहितलडादिर्भवत्येवेति नास्त्येवानुपपत्तिरिति दिक् ॥—**पूर्वविषय इति** । 'समानकर्तृकयोः पूर्वकाले' इत्यर्थे ॥—**पायं पायमिति** । आतो युक् ॥—**वा दीर्घ इति** । गमेर्ण्यन्ताण्णमुलि मितां ह्रस्वे च कृते वा दीर्घ इत्यर्थः ॥—**ण्यन्तस्यापीति** । **यत्तु प्राचा** ण्यन्तजागर्तेश्चिण्णमुलोर्वा वृद्धिरिति मतमुपन्यस्तं तदपाणिनीयमिति भावः ॥—**३३४४ न यदि–**।—'अनाकाङ्क्षे' इति पचाद्यजन्तेन नञ्समासस्तद्दर्शयति—**नाकाङ्क्षते चेदिति** ॥—**इहेति** । ननु 'अनन्तरस्य–' इति न्यायात् णमुल् मा भूत् । क्त्वा तु 'समानकर्तृकयोः' इति सूत्रान्तरेण स्यादेवेति चेत्, **अत्राहुः**—पूर्वकाले यत्प्राप्नोति तन्नेति व्याख्यानात् क्त्वाप्रत्ययोऽपि न भवतीति ॥ **३३४५ विभाषाग्रे–**। यद्यप्यग्रेशब्दो देशविशेषवचनोऽप्यस्ति, प्रभोरग्रे भुङ्क्ते इत्यादिप्रयोगात्, तथापीह कालविशेषवाच्येव गृह्यते, प्रथमशब्दसाहचर्यात् । 'प्रथमं भुङ्क्ते' इत्यादौ तु काल एव प्रतीयते । अग्रे इति सप्तम्यन्तस्यानुकरणम् ।

काले क्त्वाणमुलौ वा स्तः । अग्रे भोजं व्रजति, अग्रे भुक्त्वा । प्रथमं भोजम्, प्रथमं भुक्त्वा । पूर्वं भोजम्, पूर्वं भुक्त्वा । पक्षे लडादयः । अग्रे भुङ्क्ते ततो व्रजति । आभीक्ष्ण्ये तु पूर्वविप्रतिषेधेन नित्यमेव विधिः । अग्रे भोजं भोजं व्रजति, भुक्त्वा भुक्त्वा ।

३३४६ । **कर्मण्याक्रोशे कृञः खमुञ्** ।३।४।२५। कर्मण्युपपदे आक्रोशे गम्ये । चौरङ्कारमाक्रोशति । करोतिरुच्चारणे । चोरशब्दमुच्चार्येत्यर्थः ।

३३४७ । **स्वादुमि णमुल्** ।३।४।२६। स्वाद्वर्थेषु कृञो णमुल् स्यादेककर्तृकयोः पूर्वकाले । पूर्वपदस्य मान्तत्वं निपात्यते । अस्वादुं[1] स्वादुं कृत्वा भुङ्क्ते स्वादुङ्कारं भुङ्क्ते । संपन्नङ्कारं । लवणङ्कारम् । संपन्नलवणशब्दौ स्वादुपर्यायौ । वासरूपेण क्त्वापि, स्वादुं कृत्वा भुङ्क्ते ।

३३४८ । **अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्** ।३।४।२७। एषु कृञो णमुल् स्यात् सिद्धोऽप्रयोगोऽस्य एवंभूतश्चेत् कृञ् । व्यर्थत्वात्प्रयोगानर्ह इत्यर्थः । अन्यथाकारम् । एवङ्कारम् । कथङ्कारम् । इत्थंकारं भुङ्क्ते । इत्थंभुङ्क्ते इत्यर्थः । सिद्धेति किम् । शिरोऽन्यथा कृत्वा भुङ्क्ते ।

३३४९ । **यथातथयोरसूयाप्रतिवचने** ।३।४।२८। कृञः सिद्धाप्रयोग इत्येव, असूयया प्रतिवचने । यथाकारमहं भोक्ष्ये तथाकारं भोक्ष्ये किं तवानेन ।

३३५० । **कर्मणि दृशिविदोः साकल्ये** ।३।४।२९। कर्मण्युपपदे णमुल् स्यात् । कन्यादर्शं वरयति । सर्वाः कन्या इत्यर्थः । ब्राह्मणवेदं भोजयति । यं यं ब्राह्मणं जानाति लभते विचारयति वा तं सर्वं भोजयतीत्यर्थः ।

३३५१ । **यावति विन्दजीवोः** ।३।४।३०। यावद्वेदं भुङ्क्ते । यावल्लभते तावदित्यर्थः । यावज्जीवमधीते ।

३३५२ । **चर्मोदरयोः पूरेः** ।३।४।३१। कर्मणीत्येव । चर्मपूरं स्तृणाति । उदरपूरं भुङ्क्ते ।

३३५३ । **वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्** ।३।४।३२। कर्मण्युपपदे पूरेर्णमुल् स्यादूकारलोपश्च वा समुदायेन वर्षप्रमाणे गम्ये । गोष्पदपूरं वृष्टो देवः, गोष्पदप्रं वृष्टो देवः । अस्येति किम् । उपपदस्य मा भूत् । मूषिकाबिलप्रम् ।

३३५४ । **चेले क्नोपेः** ।३।४।३३। चेलार्थेषु कर्मसूप-

'प्रकृतिवदनुकरणम्' इत्यस्य वैकल्पिकत्वाद्विभक्तेर्लुङ् न कृतः, अस्यवामीयमिति वत् ॥—**अग्रे भोजमिति** । 'अमैवाव्ययेन' इति नियमाद्व्यस्तमेवेदं, न त्वत्रोपपदसमासः ॥ नन्वग्रेप्रथमपूर्वशब्दैः पूर्वकालत्वमुच्यत इति कथमिह क्त्वाणमुलौ स्याताामिति चेत्, **अत्राहुः**—अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वा व्रजतीति हि वाक्यार्थः । तत्राग्रेप्रभृतिभिर्भोक्त्रपेक्षया पूर्वत्वमुच्यते चेत्, अत्रापि अन्येभ्यो भोक्तृभ्यः पूर्वं व्रजतीति व्रजनापेक्षया पूर्वत्वं तु क्त्वाणमुल्भ्यां द्योत्यत इत्याशङ्कैवात्र नास्तीति ॥—**नित्यमेव विधिरिति** । अग्रे भुङ्क्ते इत्येव लडादिर्न प्रयुज्यत इति भावः ॥ **३३४७ स्वादुमि—**। स्वादुमीत्यर्थग्रहणं, व्याख्यानात् । तदाह—**स्वाद्वर्थेष्विति** ॥—**मान्तत्वमिति** । ननु 'स्वादौ' इत्येव सूत्रमस्तु मास्त्वत्र णमुल् । खमुञेवानुवर्त्यताम् । 'अरुर्द्विषत्—' इति मुम्भविष्यति । एवं च निपातनं विनाऽपि मान्तत्वं सिध्यतीति महल्लाघवमिति चेत् । मैवम् । च्व्यन्तस्य मुम् न स्यात्, अनव्ययस्येति वचनात् । ततश्च स्वादुंकारमित्यत्र 'च्वौ च' इति दीर्घः स्यात्, संपन्नंकारमित्यादिषु 'अस्य च्वौ' इतीत्वं स्यात् । **किं च** स्त्रियां 'वोतो गुणवचनात्' इति ङीषि स्वाद्वीकारमिति स्यात् । अतोऽत्र स्वादुमीति रूपं निपात्यते । ततश्चानजन्तत्वान्नेत्वदीर्घौ, न वा ङीष् । निपातनमिह भावप्रत्ययमात्रविषयकम् । तेन स्वादुंकृत्वेत्यपि सिध्यति । **स्यादेतत्**—उक्तदोषपरिहाराय स्वादुमीत्येव सूत्रमङ्गीक्रियतां, णमुल् तु त्यज्यतां, कृञः खमुञि कृतेऽपि स्वादुङ्कारमित्यादिरूपसिद्धिरिति चेत् । मैवम् । तथा सत्युत्तरसूत्रेषु संनिहितत्वात् खमुञेवानुवर्तेत इति 'कन्यादर्श' 'ब्राह्मणवेदम्' इत्यादिषु पूर्वपदस्य मुमागमः स्यादिति दिक् ॥ **३३४८ व्यर्थत्वादिति** । निष्प्रयोजनत्वादित्यर्थः । तदेतद्दर्शयति—**इत्थं भुङ्क्त इत्यर्थ इति** । इह शाब्दबोधे विशेषसत्त्वेऽपि फलितार्थकथनपरतया कारमिति णमुलन्तस्य निष्फलत्वमुक्तम्, अनतिप्रयोजनत्वात् । विस्तरस्तु मनोरमादावनुसन्धेयः ॥—**शिरोऽन्यथेति** । इह शिरोऽन्यथा कृत्वौदनादिकं भुङ्क्त इत्यर्थलाभाय करोतेः प्रयोग आवश्यकः । तदभावे तु भुक्तिक्रियागत एव प्रकारो गम्येत न तु शिरसोऽन्यथाकरणम् । अतः करोतेः प्रयोगार्हत्वमस्तीति णमुलन्तः करोतिरिह न प्रयुज्यत इति भावः ॥ **३३४९ यथाकारमिति** । प्रष्टुमनर्हः सन्यदि पृच्छति तदेदमुत्तरम् । अत्रापि वासरूपन्यायेन पक्षे क्त्वाप्रत्ययो बोध्यः ॥ **३३५० कन्यादर्शमिति** । अत्र दर्शनविषयीभूतानां सर्वासां कन्यानां वाक्यार्थेऽन्वयासाकल्यं बोध्यम् ॥—**सर्वा इति** । दर्शनविषयीभूताः सर्वा इत्यर्थः । अतिशयप्रतिपादनपरमेतत् ॥—**ब्राह्मणवेदमिति** । विद ज्ञाने, विद्लृ लाभे, विद विचारणे इति धात्वर्थान् पर्यालोच्य व्याचष्टे—जानातीत्यादि । सत्तार्थस्य विधेरकर्मकत्वान्नेह ग्रहणमिति भावः ॥ **३३५१ यावति विन्द—**। विन्देर्लाभार्थस्यानुकरणम् । तस्य हि विन्दतीत्यादौ 'शे मुचादीनाम्' इति नुमस्ति ॥—**यावल्लभत इति** । असाकल्यमनेन दर्शयति । साकल्ये हि 'कर्मणि दृशिविदोः—' इत्यनेनैव सिद्धम् ॥ **३३५२ चर्मोदर—**॥—**कर्मणीत्येवेति** । एवं च पूरेरिति ण्यन्तस्य निर्देशः, न तु केवलस्य 'इक्श्तिपौ—' इति इका निर्देशः, तस्याकर्मकत्वादिति भावः ॥—**चर्मपूरमित्यादि** । चर्म पूरयित्वा । उदरं पूरयित्वा । उदरपूरणविशिष्टा भुजिक्रियेत्यर्थः । इह पूर्वकाले इति न संबध्यते, असंभवादप्रतीतेश्च । एवमन्यत्रापि यथासंभवं बोध्यम् ॥ **३३५४ चेले—**। व्याख्याना-

१ **'अस्वाद्वीं स्वाद्वीं कृत्वा'** इति बालमनोरमासम्मतः पाठः ।

पदेषु क्नोपेर्णमुल् स्याद्वर्षप्रमाणे । चेलक्नोपं वृष्टो देवः । वस्त्रक्नोपम् । वसनक्नोपम् ।

३३५५ । निमूलसमूलयोः कषः ।३।४।३४। कर्मणीत्येव । कषादिष्वनुप्रयोग वक्ष्यति । अत्र प्रकरणे 'पूर्वकाले' इति न सबध्यते । निमूलकाष कषति । समूलकाष कषति । निमूल समूल कषतीत्यर्थः । एकस्यापि धात्वर्थस्य निमूलादिविशेषणसंबन्धाद्भेदः । तेन सामान्यविशेषभावेन विशेषणविशेष्यभावः ।

३३५६ । शुष्कचूर्णरूक्षेषु पिषः ।३।४।३५। एषु कर्मसु पिषेर्णमुल् । शुष्कपेष पिनष्टि । शुष्क पिनष्टीत्यर्थः । चूर्णपेषम् । रूक्षपेषम् ।

३३५७ । समूलाकृतजीवेषु हन्कृञ्ग्रहः ।३।४।३६। कर्मणीत्येव । समूलघात हन्ति । अकृतकार करोति । जीवग्राह गृह्णाति । जीवतीति जीवः, इगुपधलक्षणः कः, जीवन्त गृह्णातीत्यर्थः ।

३३५८ । करणे हनः ।३।४।३७। पादघात हन्ति । पादेन हन्तीत्यर्थः । यथाविध्यनुप्रयोगार्थः सन् नित्यसमासार्थोऽयं योग । भिन्नधातुसबन्धे तु 'हिंसार्थाना च' ३३६९ इति वक्ष्यते ।

३३५९ । स्नेहने पिषः ।३।४।३८। स्निह्यते येन तस्मिन् करणे पिषेर्णमुल् । उदपेष पिनष्टि । उदकेन पिनष्टीत्यर्थः ।

३३६० । हस्ते वर्तिग्रहोः ।३।४।३९। हस्तार्थे करणे । हस्तवर्त वर्तयति । करवर्तम् । हस्तेन गुलिका करोतीत्यर्थः । हस्तग्राह गृह्णाति । करग्राहम् । पाणिग्राहम् ।

३३६१ । स्वे पुषः ।३।४।४०। करण इत्येव । 'स्वे' इत्यर्थग्रहणम् । तेन स्वरूपे पर्याये विशेषे च णमुल् । स्वपोष पुष्णाति । धनपोषम् । गोपोषम् ।

३३६२ । अधिकरणे बन्धः ।३।४।४१। चक्रबन्ध बध्नाति । चक्रे बध्नातीत्यर्थः ।

३३६३ । संज्ञायाम् ।३।४।४२। बध्नातेर्णमुल् संज्ञायाम् । क्रौञ्चबन्ध बद्धः । मयूरिकाबन्धम् । अट्टालिकाबन्धम् । बन्धविशेषाणां सज्ञा एताः ।

३३६४ । कर्त्रोर्जीवपुरुषयोर्नशिवहोः ।३।४।४३। जीवनाश नश्यति । जीवो नश्यतीत्यर्थः । पुरुषवाहं वहति । पुरुषो वहतीत्यर्थः ।

३३६५ । ऊर्ध्वे शुषिपूरोः ।३।४।४४। ऊर्ध्वे कर्तरि । ऊर्ध्वशोष शुष्यति । वृक्षादिरूर्ध्व एव तिष्ठन् शुष्यतीत्यर्थः । ऊर्ध्वपूर पूर्यते । ऊर्ध्वमुख एव घटादिर्वर्षोदकादिना पूर्णो भवतीत्यर्थः ।

३३६६ । उपमाने कर्मणि च ।३।४।४५। चात्कर्तरि । घृतनिधाय निहित जलम् । घृतमिव सुरक्षितमित्यर्थ । अजकनाश नष्टः । अजक इव नष्ट इत्यर्थः ।

३३६७ । कषादिषु यथाविध्यनुप्रयोगः ।३।४।४६। यस्माण्णमुलुक्तः स एवानुप्रयोक्तव्य इत्यर्थः । तथैवोदाहृतम् ।

३३६८ । उपदंशस्तृतीयायाम् ।३।४।४७। इतः प्रभृति 'पूर्वकाले' इति संबध्यते । 'तृतीयाप्रभृतीन्यन्यतरस्याम्' ७८४ इति वा समासः । मूलकोपदश भुङ्क्ते, मूलकेनोपदशम् । दश्यमानस्य मूलकस्य भुजि प्रति करणत्वात्तृतीया । यद्यप्युपदशिना सह न शाब्दः सबन्धस्तथाऽप्यार्थोऽस्त्येव, कर्मत्वात् । एतावतैव सामर्थ्येन प्रत्ययः समासश्च, 'तृतीयायाम्' इति वचनसामर्थ्यात् ।

दर्थग्रहणमित्याह—**चेलार्थेष्विति** ॥—**चेलक्नोपमित्यादि** । यथा वर्षणे चेलानि शब्दायन्ते तथा वृष्ट इत्यर्थः । **अन्ये तु**—क्नूयी शब्दे उन्दे च, उन्दी क्लेदने, क्लिदू आर्द्रीभावे, इत्येव क्नोपमिति णमुलन्तस्य प्रकृत्यर्थं पर्यालोच्य यथा वर्षणेन चेलान्यार्द्रीभवन्ति तावद् वृष्ट इति व्याचख्युः ॥ **३३५५ निमूलमिति** । निर्गत मूलमस्य निमूलम् । सह मूलेन समूलम् । निमूलसमूलकषणाभिन्न कषणमिति शाब्दबोध ॥—**तेनेति** । **अत्रेदं बोध्यम्**—सामान्य=विशेष्य, विशेषस्तु विशेषणम् । आम्रो वृक्ष इत्यादौ आम्रो विशेषण वृक्षस्तु विशेष्यमिति सर्वजनानुभवात् । यतश्चात्र निमूलकषणादिक विशेषणं केवलकषण तु विशेष्यमिति ॥ **३३५९ स्नेहने**—। 'शुष्कचूर्ण—' इति सूत्रे एव स्नेहनग्रहण न कृतम् । तत्र हि 'कर्मणि दृशिविदो' इति सूत्रात्कर्मणीत्यनुवर्तते। इह तु पूर्वसूत्रात्करण इत्यनुवर्तनीयमिति ॥ **३३६० हस्ते**—। हस्त इत्यर्थग्रहण तदाह—**हस्तार्थे इति** ॥ **३३६३ संज्ञायाम्** । अनधिकरणार्थं आरम्भ ॥ **३३६७ तथैवेति** । निमूलकाष कषतीत्याद्युदाहृतमित्यर्थ ॥ **३३६८ मूलकोपदंशमिति** । अयमर्थ —मूलकेन भुङ्क्ते । किं कृत्वा ? उपदश्य । किमुपदश्य ? अर्थान्मूलकमिति सबध्यते ॥—**एतावतैवेति** । शाब्दान्वयाभावेऽपि आर्थिकान्वयमात्रेणेत्यर्थ ॥—**वचनसामर्थ्यादिति** । यदि हि तृतीयान्तेन शाब्दान्वये सत्येव प्रत्ययो भवेत्तर्हि 'करणे हन ' इतिवत् 'उपदश करणे' इत्येव ब्रूयात् । ततश्च क्रियान्तर प्रति करणत्व मूलकेनेत्यस्येष्टमिति भाव । एतच्च मनोरमाग्रन्थानुसारेणोक्तम् । **अत्र केचित्**—नन्वेवम् 'उपदश कर्मणि' इत्येव सूत्रमस्तु । अथवा—उपदश इत्येवास्तु । 'उपमाने कर्मणि—' इत्यत कर्मणीत्यनुवर्त्य कर्मण्युपपदे उपपूर्वकाद्दशेर्णमुलिति व्याख्यायता, किमनया कुसृष्ट्या ? इति । न चैव कर्मण्युपपदे नित्यसमास स्यादिति वाच्यम् । करणे इत्युक्तेऽप्युक्तदोषस्य तुल्यत्वात् । न च 'तृतीयाप्रभृतीनि—' इति सूत्रे करणप्रभृतीनीत्युक्ते नास्त्येव दोष । 'करणे हन ' इत्यारभ्य विकल्प इति सदेहवारणाय 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सदेहादलक्षणम्' इति परिभाषास्वीकारादिति वाच्यम् । 'तृतीयाप्रभृति—' इति सूत्रे कर्मणिप्रभृतीत्युक्तेऽपि दोषाभावात् । 'कर्मण्याक्रोशे कृञ खमुञ्' 'कर्मणि दृशिविदो —' इत्यारभ्य वा विकल्प इति सदे-

**३३६९ । हिंसार्थानां च समानकर्मकाणाम्** ।३।४।४८। तृतीयान्ते उपपदेऽनुप्रयोगधातुना समानकर्मकाद्धिंसार्थात् णमुल् स्यात् । दण्डोपघातं गाः कालयति, दण्डेनोपघातम् । दण्डताडम् । समानकर्मकाणामिति किम् । दण्डेन चोरमहत्य गाः कालयति ।

**३३७० । सप्तम्यां चोपपीडरुधकर्षः** ।३।४।४९। उपपूर्वेभ्यः पीडादिभ्यः सप्तम्यन्ते तृतीयान्ते चोपपदे णमुल् स्यात् । पार्श्वोपपीडं शेते, पार्श्वयोरुपपीडम् । पार्श्वाभ्यामुपपीडम् । व्रजोपरोधं गाः स्थापयति–व्रजेन व्रजे वा उपरोधम् । पाण्युपकर्षं धानाः संगृह्णाति, पाणावुपकर्षम्, पाणिनोपकर्षम् ।

**३३७१ । समासत्तौ** ।३।४।५०। तृतीयासप्तम्योर्धातोर्णमुल् स्यात्सन्निकर्षे गम्यमाने । केशग्राहं युध्यन्ते, केशेषु गृहीत्वा । हस्तग्राहम्, हस्तेन गृहीत्वा ।

**३३७२ । प्रमाणे च** ।३।४।५१। तृतीयासप्तम्योरित्येव । द्व्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति–द्व्यङ्गुलेन, द्व्यङ्गुले वोत्कर्षम् ।

**३३७३ । अपादाने परीप्सायाम्** ।३।४।५२। परीप्सा त्वरा । शय्योत्थायं धावति ।

**३३७४ । द्वितीयायां च** ।३।४।५३। परीप्सायामित्येव । यष्टिग्राहं युध्यन्ते । लोष्टग्राहम् ।

**३३७५ । अपगुरो णमुलि** ।६।१।५६। 'गुरी उद्यमने' इत्यस्यैचो वा आत्स्याण्णमुलि । अस्यपगारं युध्यन्ते, अस्यपगोरम् ।

**३३७६ । स्वाङ्गेऽध्रुवे** ।३।४।५४ द्वितीयायामित्येव । अध्रुवे स्वाङ्गे द्वितीयान्ते धातोर्णमुल् । भ्रूविक्षेपं कथयति, भ्रुवं विक्षेपम् । अध्रुवे किम् । शिर उत्क्षिप्य । येन[1] विना न जीवनं तद्ध्रुवम् ।

**३३७७ । परिक्लिश्यमाने च** ।३।४।५५। सर्वतो विबाध्यमाने स्वाङ्गे द्वितीयान्ते णमुल् स्यात् । उरःप्रतिपेषं युध्यन्ते । कृत्स्नमुरः पीडयन्त इत्यर्थः । 'उरोविदारं प्रतिचस्करे नखैः' । ध्रुवार्थमिदम् ।

**३३७८ । विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः** ।३।४।५६। द्वितीयायामित्येव । द्वितीयान्ते उपपदे विश्यादिभ्यो णमुल् स्याद्व्याप्यमाने आसेव्यमाने चार्थे गम्ये । गेहादिद्रव्याणां विश्यादिक्रियाभिः साकल्येन संबन्धो व्याप्तिः । क्रियायाः पौनःपुन्यमासेवा । 'नित्यवीप्सयोः–' २१४० इति द्वित्वं तु न भवति, समासेनैव स्वभावतस्तयोरुक्तत्वात् । यद्यप्याभीक्ष्ण्ये णमुलुक्त एव, तथापि उपपदसंज्ञार्थमासेवायामिह पुनर्विधिः । गेहानुप्रवेशमास्ते, गेहं गेहमनुप्रवेशम् । गेहमनुप्रवेशमनुप्रवेशम् । एवं गेहानुप्रपातम् । गेहानुप्रपादम् । गेहानुस्कन्दम् । असमासे तु गेहस्य णमुलन्तस्य च पर्यायेण द्वित्वम् ।

**३३७९ । अस्यतितृषोः क्रियान्तरे कालेषु** ।३।४।५७। क्रियामन्तरयति व्यवधत्त इति क्रियान्तरः, तस्मिन्धात्वर्थे वर्तमानादस्यतेस्तृष्यतेश्च कालवाचिषु द्वितीयान्तेषु उपपदेषु णमुल् स्यात् । द्व्यहात्यासं गाः पाययति, द्व्यहमत्यासम् । द्व्यहतर्षम्, द्व्यहं तर्षम् । अत्यसनेन तर्षणेन च गवां पानक्रिया व्यवधीयते । अद्य पाययित्वा द्व्यहमतिक्रम्य पुनः पाययतीत्यर्थः ।

हस्य 'व्याख्यानतो विशेषप्रतिपत्तिः' इति परिभाषया वारयितुं शक्यत्वात् । तस्मात् 'उपदंशः करणे' इत्येव ब्रूयात् इति मनोरमा **चिन्त्येत्याहुः** । **वस्तुतस्तु** 'कर्मणि प्रभृतीत्यन्यतरस्याम्' इत्युक्ते 'उपमाने कर्मणि च' इत्यतः कर्मणीत्यनुवर्त्य उपदंश इत्येव सूत्रमिति स्वीकारपक्षे कषादिषु यथाविध्यनुप्रयोगोऽपि विकल्पेन स्यात् । मण्डूकप्लुत्याश्रयणं त्वगतिकगतिः । 'उपदंशः कर्मणि' इति सूत्रस्वीकारपक्षेऽपि मूलकोपदंशमिति समासस्य वैकल्पिकत्वात्समासाभावपक्षे मूलकमुपदंशमिति वाक्यं स्यात्, इष्यते तु मूलकेनोपदंशमिति । करणे प्रभृतीनीति मनोरमोक्तौ तु समासाभावपक्षे मूलकेनोपदंशमिति सिध्यत्येव, करणतृतीयायाः प्रवृत्तेरिति दिक् ॥**—कालयतीति** । कल विक्षेपे चुरादिः । प्रेरयतीत्यर्थः ॥**—दण्डताडमिति** । तड आघाते । अयमपि चुरादिरेव ॥ **३३७० सप्तम्यां चो—**॥**—उपपूर्वेभ्य इति** । सूत्रे पीडादीनां समाहारद्वन्द्वं कृत्वा उपपूर्वः पीडरुधकर्ष इति उत्तरपदलोपी समास इति भावः । इह सौत्रं पुंस्त्वं, पञ्चम्यर्थे प्रथमेति च ज्ञेयम् । कर्षेति शपा निर्देशः, 'कृष विलेखने' इत्यस्य गुणसहितस्योच्चारणात् । तत्फलं तुदादेर्व्युदासः । यद्यपि विलेखन एव सोऽपि पठ्यते तथापि क्षेत्रविषयकविलेखन एव स प्रयुज्यते, पञ्चभिर्हलैः कर्षतीति दर्शनात् । एवंच तौदादिकात् कृषेः क्त्वाप्रत्यय एव भवति—क्षेत्रे उपकृष्य हलेनोपकृष्येति, न त्विह णमुलिति स्थितमाकरे ॥ **३३७१ समासत्तौ** ॥**—केशग्राहमिति** । केशेषु ग्रहणं भवतु वा मा भूत्, संनिकर्षप्रतिपादनपरमेतत् ॥ **३३७२ द्व्यङ्गुलोत्कर्षमिति** । द्वयोरङ्गुल्योः समाहारो द्व्यङ्गुलम् । 'तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः' इत्यच् समासान्तः । द्व्यङ्गुलेनोत्कृष्य । परिच्छिद्येत्यर्थः । स्वल्पः खण्डः खण्डिका । ह्रस्वः खण्डः खण्डिकेति मनोरमायामुक्तम् । यद्यपि ह्रस्वशब्दो वामनपर्यायतया चेतनेष्वेव प्रायेण प्रयुज्यते 'अल्पे' 'ह्रस्वे' इति पृथक् सूत्रस्वारस्यात्, तथापि ह्रस्वदीर्घ इत्यादिनिर्देशादचेतनेष्वपि क्वचिद्भवतीत्याहुः ॥ **३३७४ द्विती–**॥**—परीप्सायामित्येवेति** । कथं तर्हि 'अनुदात्तं पदमेकवर्जम्' इति । नह्यत्र त्वरा गम्यते । **अत्राहुः**—अस्यां हि परिभाषायां त्वरा विवक्षिता । तेनायमर्थः—उदात्तः स्वरितो वा यत्र विधीयते तत्र तत्समकालमेवैकमचं वर्जयित्वा परिशिष्टमनुदात्तं कर्तव्यं न विलम्बितव्यमिति ॥**—यष्टिग्राहमित्यादि** । एवं खलु युद्धाय त्वरन्ते यदासन्नं यष्ट्यादिकमपि गृहीत्वा धावन्ति नायुधं प्रतीक्षन्त इति भावः ॥ **३३७५ अस्यपगोरमिति** । असिमुद्यम्येत्यर्थः ॥ **३३७८ उपपदसंज्ञार्थमिति** । 'विशिपति–' इति

[1] ननु 'शिर उत्क्षिप्य' इति कथं प्रत्युदाहरणम् ? शिरसोऽपि अध्रुवत्वादित्यत आह**—येन विनेति** ।

**३३८० । नाम्न्यादिशिग्रहोः** ।३।४।५८। द्वितीयाया-मित्येव । नामादेशमाचष्टे । नामग्राहमाह्वयति ।

**३३८१ । अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वा-णमुलौ** ।३।४।५९। अयथाभिप्रेताख्यानं नाम अप्रियस्योच्चैः प्रियस्य च नीचैः कथनम् । उच्चैःकृत्य, उच्चैःकृत्वा, उच्चैः-कारमप्रियमाचष्टे । नीचैःकृत्य, नीचैःकृत्वा, नीचैःकारं प्रियं ब्रूते ।

**३३८२ । तिर्यच्यपवर्गे** ।३।४।६०। तिर्यक्शब्दे उप-पदे कृञः क्त्वाणमुलौ स्तः समाप्तौ गम्यायाम् । तिर्य-क्कृत्य गतः, तिर्यक्कारम् । समाप्य गत इत्यर्थः । अपवर्गे किम् । तिर्यक्कृत्वा काष्ठं गतः ।

**३३८३ । स्वाङ्गे तस्प्रत्यये कृभ्वोः** ।३।४।६१। मुख-तःकृत्य गतः, मुखतःकृत्वा, मुखतःकारम् । मुखतोभूय, मुखतो भूत्वा, मुखतोभावम् ।

**३३८४ । नाधार्थप्रत्यये च्व्यर्थे** ।३।४।६२। नाधा-र्थप्रत्ययान्ते च्व्यर्थविषये उपपदे कृभ्वोः क्त्वाणमुलौ स्तः । अनाना नाना कृत्वा नानाकृत्य, नाना कृत्वा, नानाकारम् । विनाकृत्य, विना कृत्वा, विनाकारम् । नानाभूय, नाना भूत्वा, नानाभावम् । अनेकं द्रव्यमेकं भूत्वा एकधाभूय, एकधा भूत्वा, एकधाभावम् । एकधाकृत्य, एकधा कृत्वा, एकधाकारम् । प्रत्ययग्रहणं किम् । हिरुक्कृत्वा, पृथग्भूत्वा ।

**३३८५ । तूष्णीमि भुवः** ।३।४।६३। तूष्णींशब्दे उपपदे भुवः क्त्वाणमुलौ स्तः । तूष्णींभूय, तूष्णीं भूत्वा, तूष्णींभावम् ।

**३३८६ । अन्वच्यानुलोम्ये** ।३।४।६४। अन्वक्शब्दे उपपदे भुवः क्त्वाणमुलौ स्त आनुकूल्ये गम्यमाने । अन्वग्भूय आस्ते, अन्वग् भूत्वा, अन्वग्भावम् । अग्रतः पार्श्वतः पृष्ठतो वाऽनुकूलो भूत्वा आस्त इत्यर्थः । आनु-लोम्ये किम् । अन्वग्भूत्वा तिष्ठति । पृष्ठतो भूत्वेत्यर्थः ॥

इति कृदन्तप्रकरणम् ।

इत्थं लौकिकशब्दानां दिङ्मात्रमिह दर्शितम् ।
विस्तरस्तु यथाशास्त्रं दर्शितः शब्दकौस्तुभे ॥ १ ॥
भट्टोजिदीक्षितकृतिः सैषा सिद्धान्तकौमुदी ।
प्रीत्यै भूयाद्भगवतोर्भवानीविश्वनाथयोः ॥ २ ॥

इति श्रीभट्टोजिदीक्षितविरचितायां सिद्धान्तकौमु-द्यामुत्तरार्धं समाप्तम् ॥

---

सूत्रे द्वितीयायामित्यनुवर्तनात्तदन्तस्योपपदसंज्ञार्थमित्यर्थः ॥ **३३८१ अव्यये-॥—अयथेति** । न यथाभिप्रेतमयथाभिप्रेतम्, तथाऽऽख्यान इत्यर्थः । प्रियस्योच्चैः, अप्रियस्य नीचैः कथनं—यथाऽभिप्रेताख्यानम् । तद्विपरीताख्यान इति यावत् ॥ नन्वप्रियाख्याने इत्येव कुतो नोक्तमिति चेत्, **अत्राहुः**—प्रियस्य नीचैः कथनमपि प्रियाख्यानमेव न त्वप्रियाख्यानमिति 'नीचैःकृत्य नीचैःकारं प्रियं ब्रूते' इति प्रयोगो न स्यात् । तथा अप्रियस्य नीचैः कथनमप्यप्रियाख्यानमिति 'नीचैःकृत्य नीचैःकारमप्रियं ब्रूते' इति प्रयोगोऽपि स्यादित्ययथाभिप्रेताख्याने इत्युक्तमिति ॥ **३३८२ तिर्यक्कृत्वेति** । अनृजुत्वादगमनः स्थितं पार्श्वतः कृत्वा गत इत्यर्थः ॥ **३३८३ स्वाङ्गे तस्प्रत्यये** । यस्मात्तस्प्रत्ययस्तस्मिन्स्वाङ्गे उपपदे इत्येके । प्रत्ययग्रहणपरिभाषया तस्प्रत्ययान्ते स्वाङ्गे **इत्यन्ये** । तस् चासौ प्रत्ययश्चेति कर्मधारयः । तस्प्रत्यये परतो यत्स्वाङ्गं तस्मिन्नुपपद इति तु **प्राञ्चः** । तत्र यद्यपि स्वाङ्गमात्रं नोपपदं तथापि तस्मिन्निलेनत्प्रकृतिप्रत्ययसमुदायपरमिति बोध्यम् ॥—**मुखतःकारं । मुखतोभूयेति** । क्त्वाणमुलोः कृभुवोश्च यथासंख्यं नेष्यत इति भावः । मुखत इत्यत्राद्यादित्वात्सप्तम्यर्थे तसिः । प्रत्ययग्रहणं किम् ? मुखे तस्यति मुखतः । 'तसु उपक्षये' क्विप् । धातुत्वादिह 'अत्वसन्तस्य–' इति दीर्घो न । मुखतः कृत्वा गत इति काशिकादौ स्थितम् । वस्तुतः प्रत्ययाप्रत्ययपरिभाषयैवेष्टसिद्धेः प्रत्ययग्रहणं सुत्यजम् ॥ **३३८४ नाधार्थ-**। नार्थौ–'विनञ्भ्याम्–' इति विहितो नानाञौ । धार्थाः—'द्वित्र्योश्च धमुञ्' इति धमुञादयः । 'संख्याया विधार्थे धा' इति धाप्रत्ययो धार्थको भवतीत्यर्थेनेद इति—**एकधाभूयेत्यादि** । एवं द्वैधंकृत्य द्वैधंकारं द्वैधंभावमित्याद्युदाहर्तव्यम् ॥ ननु नानाञौ प्रत्ययौ धा च प्रत्ययः, धमुञादिविधौ तु 'एकाद्धो ध्यमुञन्यतरस्याम्' इत्यतो ध इत्यनुवर्त्य तेषामादेशत्वाश्रयणेऽपि स्थानि-वद्भावेन धमुञादिर्धाप्रत्ययो भवतीति किमर्थं प्रत्ययग्रहणमित्याक्षिपति—**प्रत्ययग्रहणमिति** । यद्यप्युक्तरीत्या धाग्रह-णेन धमुञादेर्ग्रहणं संभवतीति अर्थग्रहणमिह व्यर्थम्, तथापि 'धमुञन्तात्स्वार्थे डदर्शनम्' इति डप्रत्ययान्तसंग्रहार्थमर्थग्रहणम्, तत्फलं तु द्वैधीकृत्येत्यादिप्रयोगः ॥ **३३८५ तूष्णीमीति** । कृञो निवृत्त्यर्थं भूग्रहणम् ॥ **३३८६ अन्वच्या-**। नन्विह 'अचः' इत्यकारलोपे 'च्वौ' इति पूर्वस्याणो दीर्घेऽन्वूचीति निर्देष्टुमुचितम् । 'द्युप्रागपाग्–' इति सूत्रे प्रतीचो यदितिवत् । एवं 'तिर्यच्यपवर्गे' इति सूत्रेऽपि तिरश्चीत्येव निर्देष्टुमुचितम्–इति चेत् । **अत्र केचित्**—शास्त्रोक्तं कार्यमर्थवदेव भवति । अर्थश्च लोके प्रसिद्ध एव गृह्यते, **'अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः । शास्त्रार्थस्तेषु कर्तव्यः'** इति न्यायात् । अतोऽनुकरणे न भविष्यतीति 'अन्वचि' इति सम्यगेवेति । तच्चिन्त्यम् । एवं तर्हि 'क्षियो दीर्घात्' इत्यत्रापि दीर्घो न स्यात् । 'प्रतीचो यत्' इत्यपि न सिध्येदिति । वस्तुतस्तु प्रकृतिवदनुकरणमित्यस्य वैकल्पिकत्वादन्वची त्यादिनिर्देशे तु न दोषः । वैकल्पिकत्वं च 'यत्तदेतेभ्यः–' इति सूत्रे त्यदाद्यत्वस्य कार्यादेकशेषाभावदर्शनाच्च निर्णीयत इति प्रागेव प्रपञ्चितम् ॥—**अग्रत इत्यादि** । अन्वक्शब्दस्यानुकूल्यमात्रे विश्रान्तेर्देशविशेषवाचित्वे नियमो नेति ध्वनयितुमिदम् ॥—**पृष्ठतो भूत्वेत्यर्थ इति** । इहान्वक्शब्देनानुकूलोऽननुकूलो वेति न स्पृश्यते, तस्य देशविशेषमात्रे पर्यवसानात् । प्रमाणान्तरेण क्वचिदिहानुकूल्यलाभेऽपि अन्वक्शब्दस्य तत्समर्पणे व्यापाराभावाण्णमुल् न । किंतु क्त्वैव भवतीति व्यवस्था बोध्या ॥ इति उत्तरकृदन्तम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवामनेन्द्रस्वामिचरणसेवकज्ञानेन्द्रसरस्वतीकृतायां
सिद्धान्तकौमुदीव्याख्यायां तत्त्वबोधिन्याख्यायां उत्तरार्धं समाप्तम् ।

श्रीः ।

## सुबोधिनीव्याख्यासंवलिता

# सिद्धान्तकौमुदी ।

## वैदिकी प्रक्रिया ।

### प्रथमोऽध्यायः ।

३३८७ । **छन्दसि पुनर्वस्वोरेकवचनम्** ।१।२।६१। द्वयोरेकवचनं वा स्यात् । पुनर्वसु नक्षत्रं-पुनर्वसू वा । लोके तु द्विवचनमेव ।

३३८८ । **विशाखयोश्च** ।१।२।६२। प्राग्वत् । विशाखा नक्षत्रम्-विशाखे वा ।

३३८९ । **षष्ठीयुक्तश्छन्दसि वा** ।१।४।९। षष्ठ्यन्तेन युक्तः पतिशब्दश्छन्दसि घिसंज्ञो वा स्यात् । क्षेत्रस्य पतिना वयम् । इह 'वा' इति योगं विभज्य छन्दसीत्यनुवर्तते । तेन सर्वे विधयश्छन्दसि वैकल्पिकाः । 'बहुलं छन्दसि-' ३४०१ इत्यादिरस्यैव प्रपञ्चः ।

'यचि भम्' २३१ ॥

श्रीगणाधीशाय नमः ।

सिन्दूरेण विराजितं त्रिनयनं दिक्संख्यदोर्भिर्युतं भक्तानुग्रहकारकं प्रमदयाश्लिष्टं सदानन्दनम् ।
अष्टाविंशतिवर्णकैश्च सततं यं चिन्तयन्ते जनास्तं देवं गणपं स्मरामि सततं चन्द्रार्धचूडं विभुम् ॥ १ ॥
यस्तर्कादिसमस्ततन्त्रकमलव्रातप्रसादेष्विव प्रत्यक्षप्रमितः परः किरणवानन्वर्थगोवर्धनः ।
सोऽयं पण्डितमण्डलोद्भटरटद्वादीन्द्रवृन्दाग्रणीः श्रीरामाङ्घ्रिनिषेवकः समजनि **श्रीमौनिगोवर्धनः** ॥ २ ॥
रघुनाथपदारविन्दसेवावशतस्तस्य बभूव नन्दनः । **रघुनाथ** इतीड्यनामगम्यो रघुनाथाङ्घ्रिनिषेवकः सुधीः ॥ ३ ॥
बभूवुस्तस्य चत्वारस्तनयाः सुनया बुधाः । **महादेवा**भिधः श्रेष्ठो महाभाष्यसुभाषितः ॥ ४ ॥
**रामकृष्णो** द्वितीयोऽसौ रामकृष्णाङ्घ्रिसेवकः । तृतीयो **जयकृष्णो**ऽस्मि **श्रीकृष्णा**प्राप्तसूद्भवः ॥ ५ ॥
श्रीमत्सिद्धान्तकौमुद्याः स्वरवैदिकखण्डयोः । नत्वा मुनित्रयं हृद्यां टीकां कुर्वे सुबोधिनीम् ॥ ६ ॥
सुशब्दव्रातश्रीकुमुदवनविद्योतनकरी सदा सद्व्युत्पत्तिप्रसरणपरानन्दनकरी ।
कुशब्दध्वान्तस्य प्रसभमभिविध्वंसनकरी कृतिर्भूयादेषा बुधजनमनःप्राङ्गणचरी ॥ ७ ॥

इयता प्रबन्धेन लौकिकशब्देष्वन्वाख्यातेष्वपि वैदिकान्वाख्यानमवशिष्यते । न चेदिदमप्रयोजनम् । 'रक्षोहागमलघ्वसंदेहाः प्रयोजनम्' इति वदता भाष्यकारेण वेदरक्षाया व्याकरणारम्भस्य प्रयोजनत्वेन मुख्यतयाऽभिधानात् । 'ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति वेदार्थज्ञानोपायतया वेदाङ्गत्वेनैव व्याकरणाध्ययनविधानाच्च ॥ नन्वेवमपि वैदिकशब्दानां लौकिकशब्दाभिन्नत्वात्तदनुशासनेनैव सिद्धे किमर्थं तेषामनुशासनमिति चेन्न । लौकिकशब्देभ्यो भिन्ना अपि वैदिकशब्दाः सन्ति । तद्यथा—'त्मना देवेषु' 'मध्वा जभार-' 'गृभ्णामि ते' इत्यादयो वेदे दृश्यन्ते । लोके तु—आत्मना जहार गृह्णामीत्यादयः । अत एव भाष्यकारो लौकिकेभ्यो वैदिकान्भेदेन व्यपदिशति—'अथ शब्दानुशासनं । केषां शब्दानां ? लौकिकानां वैदिकानां चेति' इतितेषामन्वाख्यानमावश्यकमिति मनसि विभाव्याह—**छन्दसीत्यादि ३३८७** । पुनर्वसुशब्देनोद्भूतावयवस्य ज्योतिःसमुदायस्याभिधानाद्द्वयोर्द्विवचने प्राप्ते एकवचनं विधीयते, तदाह—**द्वयोरित्यादि** ॥—**वा स्यादिति** । 'जात्याख्यायाम्-' इत्यतोऽन्यतरस्यामित्यनुवर्तनात् ॥—**लोके त्विति** । 'गां गताविव दिवः पुनर्वसू' इत्यादौ ॥ **३३८८ विशाख-**॥—**प्राग्वदिति** । द्वयोरेकवचनं वा स्यादित्यर्थः ॥—**विशाखेति** । अमरस्तु 'राधा विशाखा' इति प्रयुञ्जानो द्विवचननियमं नेच्छति । सूत्रं तूदासीनम् ॥ **३३८९ षष्ठीयुक्तश्छन्दसि वा** । 'पतिः समास एव' इत्यतः पतिरिति वर्तते 'पतिः समास एव' इति नियमादसमासे न प्राप्नोतीति वचनमारभ्यते ॥—**पतिनेति** । घित्वात् 'आङो ना-' इति नाभावः । षष्ठीति किम् ? 'मया पत्या जरदष्टिर्यथासः' । छन्दसीति किम् ? ग्रामस्य पत्ये ॥—**योगं विभज्येति** । 'षष्ठीयुक्तश्छन्दसि' इति, उक्त एवार्थः । ततो वा, 'छन्दसि' इति वर्तते । यावदिह शास्त्रे कार्यं तच्छन्दसि वा भवति । तथा च फलितमाह—

❀ **नभोऽङ्गिरोमनुषां वत्युपसंख्यानम्** । नभसा तुल्यं नभस्वत्, भत्वाद्रुत्वाभावः । अङ्गिरस्वदङ्गिरः । मनुष्वदग्ने । (उ. २७२) जनेरुसिः इति विहित उसिप्रत्ययो मनेरपि, बाहुलकात् ॥ ❀**वृषण्वस्वश्वयोः** । वृष-वर्षुकं वसु यस्य स वृषण्वसुः । वृषा अश्वो यस्य वृषणश्वः । इहान्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वे सति नलोपः प्राप्तो भत्वाद्वार्यते । अत एव 'पदान्तस्य' १९८ इति णत्वनिषेधोऽपि न । 'अल्लोपोऽनः' २३४ इत्यल्लोपो न, अनङ्गत्वात् ।

३३९० । **अयस्मयादीनि च्छन्दसि** ।१।४।२०। एतानि छन्दसि साधूनि । भपदसंज्ञाऽधिकाराद्यथायोग्यं संज्ञाद्वयं बोध्यम् । तथा च वार्तिकम्—❀ **उभयसंज्ञान्यपीति वक्तव्यम्** । इति । स सुष्टुभा स ऋक्वता गणेन, पदत्वात्कुत्वम्, भत्वाज्जश्त्वाभावः, जश्त्वविधानार्थायाः पदसंज्ञाया भत्वसामर्थ्येन बाधात् । नैनं हिन्वन्त्यपि वाजिनेषु । अत्र पदत्वाज्जश्त्वम् । भत्वात्कुत्वाभावः ।

**'ते प्राग्धातोः' २२३० ।**

३३९१ । **छन्दसि परेऽपि** ।१।४।८१।

३३९२ । **व्यवहिताश्च** ।१।४।८२। हरिभ्यां याह्योक आ । आ मन्द्रैरिन्द्र हरिभिर्याहि ।

३३९३ । **इन्धिभवतिभ्यां च** ।१।२।६। आभ्यां परोऽपिल्लिट् कित् स्यात् । समीधे दस्युहन्तमम् । पुत्र ईधे अथर्वणः । बभूव । इदं प्रत्याख्यातम् । ❀ **इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यमिति** ॥ इति प्रथमोऽध्यायः ।

---

## द्वितीयोऽध्यायः ।

३३९४ । **तृतीया च होश्छन्दसि** ।२।३।३। जुहोतेः कर्मणि तृतीया स्याद्द्वितीया च । यवाग्वाऽग्निहोत्रं जुहोति । अग्निहोत्रशब्दोऽत्र हविषि वर्तते, 'यस्याग्निहोत्रमधिश्रितममेध्यमापद्येत' इत्यादिप्रयोगदर्शनात्, 'अग्नये हूयते' इति व्युत्पत्तेश्च । यवाग्वाख्यं हविर्देवतोद्देशेन त्यक्त्वा प्रक्षिपतीत्यर्थः ।

---

**तेनेत्यादिना** ॥ ❀ **नभोङ्गिरसिति**–। नभस् अङ्गिरस् मनुष् एषां वति परे भत्वं वक्तव्यमित्यर्थः ॥—**नभस्वदिति** । 'तेन तुल्यम्–' इति वतिः । भत्वफलमाह—**रुत्वाभाव इति** । 'ससजुषोः–' इति प्राप्तस्य । तत्र हि पदस्येत्यनुवर्तते । अङ्गिरसा तुल्यमङ्गिरस्वत् । अत्रापि देहलीदीपकन्यायेन 'रुत्वाभावः' इति संबध्यते ॥—**मनुष्वदिति** । मनुषा तुल्यम् । अत्र भत्वात् 'आदेशप्रत्यययोः' इति षः । पदसंज्ञायां तु रुत्वं स्यात् न तु षत्वम्, अपदान्तस्येति वचनात् ॥—**बाहुलकादिति** । बहूनर्थाँल्लातीति बहुलम् । 'ला आदाने' अस्मात् 'आतोऽनुपसर्गे' इति कः । बहुलस्य भावो बाहुलकम् । मनोज्ञादित्वाद्वुञ् ॥ ❀ **वृष** । वृषन्नित्येतद्वसु, अश्व, एतयोश्च परतो भं स्यात् । 'निपातनान्येतानि छन्दोविषयाणि' इति कैयटः ॥—**वृषण्वसुरिति** । लोके–वृषवसुः, वृषाश्वः ॥—**नलोपः प्राप्त इति** । 'नलोपः प्रातिपदिकान्तस्य' इत्यनेन ॥—**अत एवेति** । भत्वादेवेत्यर्थः ॥—**अनङ्गत्वादिति** । 'अल्लोपोऽनः' इत्यत्राङ्गस्येत्यधिकारात् ॥ ३३९० **अयस्मयादीनि**–। आनन्तर्याद्भसंज्ञाद्वारेणैव निपातनं [illegible]—**सं[illegible]द्वयमिति** । ननु 'अनन्तरस्य–' इति न्याये वाविलोभयसंज्ञाविधाने किं [illegible]—**तथा च वार्तिकमिति** ॥—**कुत्वमिति** । 'चोः कुः' इत्यनेन ॥—**जश्त्वाभाव इति** । 'झलां जशोऽन्ते' इति प्राप्तस्य ॥—**ऋक्वतेति** । अयस्मयादिषु ऋक्वतेत्यादयः समुदाया एव बोध्याः । तेन जश्त्वमस्तु कुत्वं मा भूदिति वैपरीत्येन प्रसज्यन इति बोध्यम् ॥—**नैनमिति** । वाचामिनाः=प्रभवस्तेष्वप्येनं विद्वांसं न हिन्वन्ति । विवदितुं न गच्छन्तीत्यर्थः ॥—**ते प्रागिति**–। व्याख्यातम् ॥ ३३९१ अस्यापवादमाह—**छन्दसीत्यादि** । गत्युपसर्गसंज्ञकाश्छन्दसि परे प्रयोक्तव्याः । अपिशब्दात्पूर्वे ॥ ३३९२ **व्यव**–। व्यवहिता अपि गत्युपसर्गसंज्ञकाः प्रयोक्तव्याः । सूत्रद्वयस्योदाहरणे आह—**हरिभ्यामित्यादि** । आयाहीति प्राप्तम् । 'ते प्राग्' इत्यत्र संज्ञानियमपक्षो भाष्ये उक्तः, 'ते' इत्यनेन प्रादीन्–उपेत्येतत्पर्यन्तान्स्वरूपेण परामृश्य धातोः प्राक् [illegible] पूर्वसूत्रैकवाक्यतया संज्ञाविधानात् । अस्मिंश्च पक्षे 'छन्दसि परेऽपि' 'व्यवहिताश्च' इति सूत्रद्वयं न कर्तव्यम् ॥ ३३९३ **इन्धि**–। इन्धीत्युच्चारणार्थेनकारेण निर्देशः । 'सुद्तिथोः' इतिवत्, न तु 'इक्श्तिपौ–' इति इका, नलोपापत्तेः । 'असंयोगात्–' इत्यतः 'लिट् कित्' इत्यनुवर्तते । तदाह—**लिट् किदिति** । ञि इन्धी दीप्तौ, लिटः कित्वाद् 'अनिदिताम्–' इति नलोपः । [illegible] वचनम् ॥—**बभूवेति** । कित्वाद्गुणाभावे 'भुवो वुक्–' इति वुक् । अत्र पित्वात्पूर्वेणाप्राप्तौ वचनम् ॥—**इदमिति**—'इन्धि–' इति सूत्रम् ॥—**छन्दोविषयत्वादिति** । अयम[illegible]—इन्धेर्[illegible] 'इजादेश्च–' इत्याम् भाव्यम् । छन्दसि तु अमन्त्रे इति प्रतिषेधाद् यद्यप्याम् नास्ति तथापि '[illegible]' इति लिटः सार्वधातुकत्वे ङित्त्वात्समीधे इति नलोपः । श्नमभावस्त्वार्धधातुकत्वाच्छन्दसि दृष्टानुविधानात् ॥—**वुको नित्यत्वादिति** । 'परनित्या–' इति परिभाषया परान्नित्यस्य बलीयस्त्वात् । कृताकृतप्रसङ्गित्वेन नित्यत्वात् ॥ **इति वैदिकप्रकरण प्रथमोऽध्यायः** ॥

३३९४ **तृतीया**—॥ 'कर्मणि द्वितीया' इत्यतः कर्मणीति वर्तते । द्वितीयायां प्राप्तायां तृतीया विधीयते, चशब्दात्सापि भवति । तदाह—**कर्मणीति** ॥—**यवाग्वेति** । अत्र यवागूशब्दात्तृतीया । अग्निहोत्रशब्दाच्च द्वितीया । अग्निहोत्रशब्दो हविर्वाचकः । जुहोतिश्च प्रक्षेपणार्थः । यवाग्वाभिन्नं हविरग्नौ प्रक्षिपतीत्यर्थः । तदाह—**यवाग्वाख्यमित्यादि** ।

३३९५ । **द्वितीया ब्राह्मणे** ।२।३।६०। ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि द्वितीया स्यात् । षष्ठ्यपवादः । गामस्य तदहः सभायां दीव्येयुः ।

३३९६ । **चतुर्थ्यर्थे बहुलं छन्दसि** ।२।३।६२। षष्ठी स्यात् । पुरुषमृगश्चन्द्रमसे । गोधा कालका दार्वाघाटस्ते वनस्पतीनाम् । वनस्पतिभ्य इत्यर्थः ॥ ॐ षष्ठ्यर्थे चतुर्थीति वाच्यम् । या खर्वेण पिबति तस्यै खर्वः ।

३३९७ । **यजेश्च करणे** ।२।३।६३। इह छन्दसि बहुलं षष्ठी । घृतस्य घृतेन वा यजते ।

३३९८ । **बहुलं छन्दसि** २।४।३९। अदो घस्लादेशः स्यात् । घस्तां नूनम्, लुङि 'मन्त्रे घस-' ३४०२ इति च्लेर्लुक्, अडभावः । सग्धिश्च मे ।

३३९९ । **हेमन्तशिशिरावहोरात्रे च छन्दसि** ।२।४।२८। द्वन्द्वः पूर्ववल्लिङ्गः । हेमन्तश्च शिशिरश्च हेमन्तशिशिरौ । अहोरात्रे ।

'अदिप्रभृतिभ्यः शपः' २४२३ ।

३४०० । **बहुलं छन्दसि** ।२।४।७३। वृत्रं हनति वृत्रहा । अहिः शयत उप पृक्पृथिव्याः । अत्र लुङ् । अदादिभिन्नेऽपि क्वचिल्लुक्-त्राध्वं नो देवाः ।

'जुहोत्यादिभ्यः श्लुः' २४८९ ।

३४०१ । **बहुलं छन्दसि** ।२।४।७६। दाति प्रियाणि चिद्वसु । अन्यत्रापि-पूर्णां विवष्टि ।

३४०२ । **मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः** ।२।४।८०। एभ्यो लेर्लुक् स्यान्मन्त्रे । अक्षन्नमीमदन्त हि, घस्लादेशस्य 'गमहन-' २३६३ इत्युपधालोपे 'शासिवसि-' २४१० इति षः । मा ह्वार्मित्रस्य । धूर्तिः प्रणङ्मर्त्यस्य, 'नशेर्वा-' ४३१ इति कुत्वम् । सुरुचो वेन आवः । मा न आधक् । आदित्याकारान्तग्रहणम् । आ प्रा द्यावापृथिवी । परावर्ग्भारभृद्यथा । अक्रन्नुषासः । त्वे रयिं

---

भिन्नविभक्त्यवरुद्धत्वेऽपि भिन्नार्थकविभक्त्यनवरुद्धत्वान्नामार्थयोरभेदान्वयः । भाष्ये चैतत्सूत्रं प्रत्याख्यातम् । अग्निहोत्रशब्दो ह्यग्नावपि वर्तते । 'यस्याग्निहोत्रं प्रज्वलितम्' इति दर्शनात् । हूयतेऽस्मिन्निति व्युत्पत्तेश्च । तद्यदा यवागूशब्दात्तृतीया तदाऽग्निहोत्रशब्दो ह्यग्नौ वर्तते, जुहोतिश्च प्रीणने । यवाग्वा अग्निं प्रीणयतीत्यर्थः । यदा यवागूशब्दाद् द्वितीया तदाऽग्निहोत्रशब्दो हविषि वर्तते, जुहोतिश्च प्रक्षेपणे । यवाग्वाख्यं हविर्द्रव्यं प्रक्षिपतीत्यर्थः ॥ **३३९५ द्वितीया-**। 'दिवस्तदर्थस्य' इति वर्तते, तदाह—**ब्राह्मणेत्यादि** । सोपसर्गस्य च्छन्दसि 'विभाषोपसर्गे' इत्यनेन व्यवस्थितविभाषयाऽपि सिद्धे निरुपसर्गार्थ आरम्भः ॥—**षष्ठ्यपवाद इति** । 'दिवस्तदर्थस्य' इति प्राप्तायाः ॥ **३३९६ चतुर्थ्यर्थे-**।बहुलग्रहणात् 'चन्द्रमसे रुदमो रात्र्यै' इत्यादौ षष्ठ्यभावः ॥ **३३९७ यजेः-**। यजेर्धातोः करणे कारके छन्दसि विषये बहुलं षष्ठी स्यात् ॥ **३३९८ बहुलम्—**। 'अदो जग्धिः-' इत्यतः 'अदः' इति, 'लुङ्सनोः' इत्यतः 'घस्लृ' इति च । अदो बहुलं घस्लादेशः स्याच्छन्दसि ॥—**घस्तामिति** । अदेर्लुङि रूपम् ॥—**अडभाव इति** । 'बहुलं छन्दसि' 'न माङ्योगे' इत्यनेन ॥ नन्विदं 'लुङ्सनोः-' इत्यनेन सिद्धमित्याशङ्क्योदाहरणान्तरमाह—**सग्धिरिति** । अदनं ग्धिः । अदेः क्तिनि घस्लादेशे 'घसिभसोर्हलि च' इत्युपधालोपे 'झलो झलि' इति सलोपः । 'झषस्तथोः-' इति धत्वम् । घस्य जश्त्वम् । न च जश्त्वे कर्तव्येऽल्लोपस्य स्थानिवत्त्वम् । 'न पदान्त-' इति सूत्रेण जश्त्वे तन्निषेधात् । ततः समानशब्देन समासे कृते 'समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु' इति सूत्रेण समानस्य सः ॥ **३३९९ हेमन्तशिशिरौ—**। 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति प्राप्तम् ॥—**अहोरात्रे इति** । अहश्च रात्रिश्चेति द्वन्द्वे कृते 'अहःसर्वैकदेश-' इत्यनेन समासान्तोऽच् । 'यस्येति च' इतीकारलोपः । 'रात्राह्नाहाः पुंसि' इति प्राप्तं द्वित्वमतन्त्रम्, 'अहोरात्राणि विदधत्' । छन्दसि किम् ? हेमन्तशिशिरे, अहोरात्रौ । यद्यपि पाठक्रमेणेदं 'बहुलं छन्दसि' इति घस्लादेशविधायकसूत्रात्पूर्वं व्याख्यातुं युक्तं तथापि 'व्यत्ययो बहुलम्' इति वक्ष्यमाणेन लिङ्गव्यत्ययविधायकेन गतार्थमिति ध्वनयितुं तथा न व्याख्यातम् ॥ **३४०० बहुलं छन्दसि** । बहुलं शपो लुक् स्यात् । 'अदिप्रभृतिभ्यः' इत्युक्तं ततो न भवति । तथैवोदाहरति—**वृत्रं हनतीत्यादि** । 'हन्ति-शेते' इति लोके ॥—**त्राध्वमिति** । 'त्रैङ् पालने' 'आदेच उपदेशेऽशिति' इत्यात्वम् । त्रायध्वमिति लोके ॥ **३४०१ दातीति** । ददातीति लोके ॥—**अन्यत्रापीति** । जुहोत्यादिभिन्नेऽपि श्लुर्भवतीति शेषः ॥—**विवष्टीति** । 'वश कान्तौ' अदादिः । 'श्लौ' इति द्वित्वम् । 'भृञामित्' । 'बहुलं छन्दसि' इति सूत्रेणाभ्यासस्येकारः । 'व्रश्च-' इति षत्वं ष्टुत्वम् ॥ **३४०२ मन्त्रे घस-**। घस अत्तेरादेशः । ह्वर । ह्वृ कौटिल्ये, अस्य कृतगुणानुकरणं ह्वरेति । अकारस्तूच्चारणार्थः । णश अदर्शने । वृञ् वरणे । वृङ संभक्तौ । दह भस्मीकरणे । आत्-आकारान्ताः प्रा पूरणे इत्यादयः । वृजी वर्जने । डुकृञ् करणे । गम्लृ गतौ । जनी प्रादुर्भावे ॥—**अक्षन्निति** । अत्तेर्लुङि झिः ॥—**घस्लादेशस्येति** । 'लुङ्सनोः-' इति विहितस्य ॥—**माह्वरिति** । माङि उपपदे ह्वरतेर्लुङि तिप् । 'इतश्च' इतीकारलोपः । च्लेर्लुकि कृते 'सार्वधातुके-' इति गुणे कृते रपरत्वे 'हल्ङ्याप्-' इति लोपः ॥—**प्रणगिति** । प्रपूर्वान्नशेर्लुङ् । 'हल्ङ्याप-' इति लोपः । 'उपसर्गादसमासेऽपि-' इति णत्वम् ॥—**मर्त्यस्येति** । मकारेऽनुनासिके परे 'यरोऽनुनासिके-' इति ङः ॥—**कुत्वमिति** । पक्षे 'व्रश्च-' इति षत्वेन नडिति रूपं बोध्यम् ॥—**आव इति** । वृञो रूपम् ॥—**आधगिति** । आङ्पूर्वाद्दहेर्लुङ् । 'दादेर्धातोः-' इति घः । 'एकाचो बश-' इति भष्भावः ॥—**आप्रा इति** । आङ्पूर्वात्प्राधातोः सिप् । रुत्वे यत्वे च यलोपः ॥—**परावर्गिति** । परापूर्वाद्वृजेस्तिप् । उपधागुणे 'चोः कुः' इति कुत्वम् ॥—**अक्रन्निति** । झेर्ङित्त्वाद्गुणाभावे यण् ॥—**अनुग्मन्निति** ।

जागृवांसो अनुग्मन् । मन्त्रग्रहणं ब्राह्मणस्याप्युपलक्षणम् । अज्ञत वा अस्य दन्ताः । विभाषानुवृत्तेर्नेह—न ता अगृभ्णन्नजनिष्ट हि षः ॥ इति द्वितीयोऽध्यायः ॥

---

## तृतीयोऽध्यायः ।

३४०३ । **अभ्युत्सादयां प्रजनयां चिकयां रमयामकः पावयां क्रियाद्विदामक्रन्निति च्छन्दसि** ।३।१।४२। आद्येषु चतुर्षु लुङि 'आम्' 'अकः' इत्यनुप्रयोगश्च । अभ्युत्सादयामकः । अभ्युदसीषददिति लोके । प्रजनयामकः । प्राजीजनदित्यर्थः । चिकयामकः । अचैषीदित्यर्थे चिनोतेराम्, द्विर्वचनं, कुत्वं च । रमयामकः, अरीरमत् । पावयांक्रियात् । पाव्यादिति लोके । विदामक्रन्, अवेदिषुः ।

३४०४ । **गुपेश्छन्दसि** ।३।१।५०। च्लेश्चङ्वा । गृहानजूगुपतं युवम् । अगौप्तमित्यर्थः ।

३४०५ । **नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः** ।३।१।५१। च्लेश्चङ् न । मा त्वायतो जरितुः काममूनयीः । मा त्वाग्निर्ध्वनयीत् ।

३४०६ । **कृमृदृरुहिभ्यश्छन्दसि** ।३।१।५९। च्लेरङ् वा । इदं तेभ्योऽकरं नमः । अमरत् । अदरत् । यत्सानोः सानुमारुहत् ।

३४०७ । **छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि** ।३।१।१२३। कृन्ततेर्निस्पूर्वात्क्यपि प्राप्ते ण्यत् । आद्यन्तयोर्विपर्यासो निसः षत्वं च । निष्टर्क्यं चिन्वीत पशुकामः । देवशब्द उपपदे ह्वयतेर्जुहोतेर्वा क्यप् दीर्घश्च, स्पर्धन्ते वा उ देवहूये । 'प्र' 'उत्' आभ्यां नयतेः क्यप्—प्रणीयः, उन्नीयः । उत्पूर्वाच्छिषेः क्यप्, उच्छिष्यः । मृङ्-स्तृञ्ध्वृ-एभ्यो यत्—मर्यः, स्तर्या । स्त्रियामेवायम् । ध्वर्यः । खनेर्यण्यतौ—खन्यः, खान्यः । यजेर्यः—शुन्धध्वं दैव्याय कर्मणे देवयज्यायै । आङ्पूर्वात्पृच्छेः क्यप्, आपृच्छ्यं धरुणं वाज्यर्षति । सीव्यतेः क्यप् षत्वं च,

---

अनुपूर्वाद्गच्छतेर्ङिः । 'गमहन-' इत्युपधालोपः ॥ ननु मन्त्रशब्दः संहितायां रूढ इति अज्ञतेत्यादौ ब्राह्मणप्रयोगे लुक् न प्राप्नोतीत्याशङ्क्याह—**मन्त्रग्रहणमित्यादि** ॥—**अज्ञतेति** । 'गमहन-' इत्युपधालोपः । ब्राह्मणप्रयोगोऽयम् । मन्त्रेति किम् ? अघसत् । अह्वार्षीत् । अनशत् । अवारीत् । अधाक्षीत् । अप्रासीः । अवर्जीत् । अकार्षीत् । अगमन् । अजनि । अजनिष्ट ॥ **इति वैदिकीप्रकरणे द्वितीयोऽध्यायः** ॥

३४०३ । **अभ्युत्सादयाम्-**। अभ्युत्सादयामित्यादयश्छन्दसि विषयेऽन्यतरस्यां निपात्यन्ते । षद्लृ विशरणगत्यवसादनेषु । जनी प्रादुर्भावे । रमु क्रीडायाम् । ण्यन्तेभ्य एभ्यो लुङि आम्प्रत्ययो निपात्यते । चिञ् चयने । शुद्धादस्मादाम्प्रत्यये द्विर्वचनं कुत्वं च । अक इति प्रत्येकं संबध्यते, तदाह—**आद्येष्विति** ॥—**अक इति** । कृञो लुङि तिपि च्लेः 'मन्त्रे घस-' इत्यादिना लुक्, तिपो हल्ङ्यादिलोपः ॥—**अभ्युत्सादयामक इति** । 'आमः' इति लुङो लुक् ॥—**अभ्युदसीषददिति** । सदेर्ण्यन्ताल्लुङि चङि 'णौ चङ्युपधायाः-' इति ह्रस्वः । 'चङि' इति द्विर्वचनम् । हलादिःशेषः । 'सन्वल्लघुनि-' इति सन्वद्भावे 'सन्यतः' इतीत्वम् । दीर्घो लघोः ॥—**लोक इति** । वेदेऽपि पाक्षिकमिदं बोध्यम् । 'विदांकुर्वन्तु-' इति सूत्रादन्यतरस्यांग्रहणानुवृत्तेः ॥—**पावयामिति** । पवतेः पुनातेर्वा ण्यन्तादाशीर्लिङ्यानम्, क्रियादित्यनुप्रयोगश्च ॥—**क्रियादिति** । करोतेराशीर्लिङि रूपम् । 'लिङाशिषि' इत्यार्धधातुकत्वाद्विकरणाभावः । 'रिङ्शयग्-' इति रिङ् ॥—**विदामक्रन्निति** । विदेर्लुङि आम् गुणाभावः, लुङन्तकरोत्यनुप्रयोगश्च ॥ ३४०४ **गुपेः—**। आयप्रत्ययाभावस्थल एवेदं, सूत्रे केवलस्योच्चारणात् ॥—**अजूगुपतमिति** । गुपू रक्षणे । 'तस्थस्थमिपाम्-' इति थसस्तम् । 'तुजादीनां दीर्घोऽभ्यासस्य' इत्यभ्यासस्य दीर्घः ॥—**अगौप्तमिति** । ऊदित्त्वादिडभावे 'वदव्रज-' इति वृद्धिः । 'झलो झलि' इति सिचो लोपः । इट्पक्षे-अगोपिष्टम् । आयप्रत्ययपक्षे-अगोपायिष्टम् । इत्थं चत्वारि च्छन्दसि । लोके तु चङं वर्जयित्वा त्रीण्येवेति विवेकः ॥ ३४०५ **नोनयतीति-**। ऊन परिहाणे । ध्वन शब्दे । इल प्रेरणे । अर्द गतौ याचने च । एभ्यो ण्यन्तेभ्यश्च्लेः 'णिश्रि-' इति प्राप्तश्चङादेशो नेत्यर्थः । तत्रोनयत्येलयती चुरादी ण्यन्तौ । ध्वनयतिरपि चुरादिरदन्तो घटादिर्णान्तश्च । अर्दयतिस्तु हेतुमण्ण्यन्तः ॥—**ऊनयीरिति** । मध्यमपुरुषैकवचनम् । 'न माङ्योगे' इति अट्प्रतिषेधः । इदमिन्द्रं प्रति सव्यस्य ऋषेर्वचनम् । त्वायतः=त्वामिच्छतः जरितुः=स्तोतुः मम काममभिलाषं मा ऊनयीः । ऊनं मा कार्षीरित्यर्थः । औननदिति भाषायाम् ॥—**ध्वनयीदिति** । तिप्, 'न माङ्योगे' इत्यट्प्रतिषेधः । भाषायां तु—घटादेः-अदिध्वनत् । चुरादेः-अदध्वनत् । ऐलयीत् आर्दयीत् । आर्दिदत् । ऐलिलत्-इति लोके ॥ ३४०६ **कृमृदृ-**। 'च्लि लुङि' इत्यतः च्लिरिति 'अस्यतिवक्ति-' इत्यतोऽङिति 'इरितो वा' इत्यतो वेत्यनुवर्तते, तदाह—**च्लेरित्यादि** ॥—**अकरमिति** । 'डु कृञ्करणे' मिप् । अङि कृते 'ऋदृशोऽङि-' इति गुणः ॥—**अमरदिति** । मृङ् प्राणत्यागे । व्यत्ययेन परस्मैपदम् ॥—**अदरदिति** । दॄ विदारणे ॥—**अरुहदिति** रुह बीजजन्मनि प्रादुर्भावे च । लोके तु—अकार्षीत् । अमृत । अदारीत् । अरुक्षत् ॥ ३४०७ **छन्दसि-**। निष्टर्क्यादयः शब्दाश्छन्दसि निपात्यन्त इति ॥—**क्यपि प्राप्त इति** । 'ऋदुपधाच्च-' इति सूत्रेण ॥—**आपृच्छ्यमिति** । प्रच्

प्रतिषीव्यः । ब्रह्मणि वदेर्ण्यत्, ब्रह्मवाद्यम् । लोके तु 'वदः सुपि क्यप् च-' २८५४ इति क्यब्यतौ । भवतेः स्तौतेश्च ण्यत्-भाव्यः, स्ताव्यः । उपपूर्वाच्चिनोतेर्ण्यत् आयादेशश्च पृडे उत्तरपदे, उपचाय्यपृडम् ॥ ॐ हिरण्य इति वक्तव्यम् । उपचेयपृडमन्यत् । 'मृड सुखने' 'पृड च' इत्यस्मादिगुपधलक्षणः कः ।

३४०८ । छन्दसि वनसनरक्षिमथाम् ।३।२।२७। एभ्यः कर्मण्युपपदे इन् स्यात् । ब्रह्मवनिं त्वा क्षत्रवनिम् । उत नो गोषणिं धियम् । ये पथां पथिरक्षयः । चतुरक्षौ पथिरक्षी । हविर्मथीनामभि ।

३४०९ । छन्दसि सहः ।३।२।६३ सुप्युपपदे सहेर्ण्विः स्यात् । पृतनाषाट् ।

३४१० । वहश्च ।३।२।६४। प्राग्वत् । दित्यवाट् । योगविभाग उत्तरार्थः ।

३४११ । कव्यपुरीषपुरीष्येषु ञ्युट् ।३।२।६५। एषु वहेर्ञ्युट् स्याच्छन्दसि । कव्यवाहनः । पुरीषवाहनः । पुरीष्यवाहनः ।

३४१२ । हव्येऽनन्तःपादम् ।३।२।६६। अग्निर्नो हव्यवाहनः । पादमध्ये तु 'वहश्च' ३४१० इति ण्विरेव । हव्यवाळग्निरजरः पिता नः ।

३४१३ । जनसनखनक्रमगमो विट् ।३।२।६७। 'विड्वनोः-' २९८२ इत्यात्वम् । अब्जाः । गोजाः । गोषा इन्द्रो नृषा असि, 'सनोतेरनः-' ३६४५ इति षत्वम् । इयं शुष्मेभिर्बिसखा इवारुजत् । आ दधिक्राः शवसा पञ्च कृष्टीः । अग्रेगाः ।

३४१४ । मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ।३।२।७१। ॐ श्वेतवहादीनां डस्पदस्येति वक्तव्यम् । यत्र पदत्वं भावि तत्र ण्विनोऽपवादो डस् वक्तव्य इत्यर्थः । श्वेतवाः, श्वेतवाहौ, श्वेतवाहः । उक्थानि उक्थैर्वा शंसति उक्थशा यजमानः, उक्थशासौ, उक्थशासः । पुरो दाश्यते दीयते पुरोडाः ।

३४१५ । अवे यजः ।३।२।७२। अवयाः, अवयाजौ, अवयाजः ।

३४१६ । अवयाः श्वेतवाः पुरोडाश्च ।८।२।६७। एते संबुद्धौ कृतदीर्घा निपात्यन्ते । चादुक्थशाः ।

३४१७ । विजुपे छन्दसि ।३।२।७३। उपे उपपदे यजेर्विच् । उपयट् ।

३४१८ । आतो मनिन्क्वनिब्वनिपश्च ।३।२।७४। सुप्युपसर्गे चोपपदे आदन्तेभ्यो धातुभ्यश्छन्दसि विषये मनिनादयस्त्रयः प्रत्ययाः स्युः । चाद्विच् । सुदामा । सुधीवा । सुपीवा । भूरिदावा । घृतपावा । विच्, कीलालपाः ।

'ब्रह्मभ्रूणवृत्रेषु क्विप्-' २९९८ ।

---

ज्ञीप्सायाम् । 'ग्रहिज्या-' इति सम्प्रसारणम् ॥—**प्रतिषीव्येति** । षिवु तन्तुसंताने । 'हलि च' इति दीर्घः ॥—**उपचाय्यपृडमिति** । उपचाय्यं च तत्पृडं चेति कर्मधारयः ॥—**हिरण्य इति** । हिरण्येऽभिधेये इत्यर्थः ॥ **३४०८ छन्दसि-**॥—**एभ्य इति** । वन षण संभक्तौ । रक्ष पालने । मन्थ[1] विलोडने । एभ्य इत्यर्थः ॥ 'स्तम्बशकृतोरिन्' इत्यतः इन्निति वर्तते, तदाह—**इन्स्यादिति** । 'वन षण संभक्तौ' इति भ्वादिगणेन सह निर्दिष्टयोरेव ग्रहणं न तु 'वनु याचने, षणु दाने' इति तानादिकयोः, सानुबन्धकत्वात् ॥—**ब्रह्मवनिमिति** । ब्रह्म वनति क्षत्रं वनति गां सनतीति विग्रहेष्विन्, तदन्ताद्द्वितीयैकवचनम् । सुषामादित्वात्षत्वम् ॥—**पथिरक्षय इति** । पन्थानं रक्षयन्तीति विग्रहः ॥—**पथिरक्षीति** । पन्थानं रक्षत इति विग्रहः । हविर्मन्थतीति विग्रहः ॥ **३४०९ छन्दसि-**। षह मर्षणे । 'भजो ण्विः' इति वर्तते, तदाह—**ण्विः स्यादिति** । ननु 'तुरासाहं पुरोधाय' इति लोके प्रयोगा दृश्यन्ते । तेषां का गतिः ? इति चेत्—णिजन्ताद्विच् बोध्यः ॥—**पृतनाषाडिति** । 'सहेः साडः सः' इति षत्वम् ॥ **३४१० वहः** ॥—**प्राग्वदिति** । ण्विः स्यादित्यर्थः ॥ **३४१२ हव्ये-**। अन्तःशब्दो मध्यमवाची । हव्यशब्दे उपपदे वहेर्ञ्युट् स्यात् पादमध्ये चेन्न पादान्ते इति फलितोऽर्थः ॥—**हव्यवाळग्निरिति** । अत्र डस्य ळः, द्वयोश्चास्य स्वरयोर्मध्यमेत्य संपद्यते स डकारो ळकार इति प्रातिशाख्ये विहितः ॥ **३४१३ जनसन—**। जनादिभ्यो धातुभ्यश्छन्दसि विट् स्यात् ॥—**अग्रेगा इति** । 'हलदन्तात्-' इति सप्तम्या अलुक् ॥ **३४१४ मन्त्रे श्वेतवहो—**। श्वेतादिपूर्वेभ्यो वहादिभ्यो ण्विन्स्यात् । अलाक्षणिककार्यार्थं निपातनम् । **श्वेत**शब्दे कर्तृवाचिन्युपपदे वहेः कर्मणि कारके ण्विन्प्रत्ययः । **उक्थे** कर्मणि करणे चोपपदे शंसतेः प्रत्ययो नलोपश्च । **पुरःपूर्वस्य** 'दाश्ट दाने' इत्यादेर्डत्वं कर्मणि च प्रत्ययः ॥—**डस्पदस्येति** । पदस्येति प्रत्येकमभिसंबध्यते । भाविपदत्वाश्रयणेन चेदमुच्यते, तदाह—**यत्र पदत्वं भावीति** । डसन्तस्येत्यर्थः ॥—**श्वेतवा इति** । श्वेता एतं वहन्ति श्वेतवाः=इन्द्रः । 'अत्वसन्तस्य-' इति दीर्घः ॥—**उक्थशासाविति** । नलोपे कृते 'अत उपधायाः' इति वृद्धिः ॥ **३४१५ अवे-**। योगविभाग उत्तरार्थः । 'पुरोडाशावयजो ण्विन्' इत्येकयोगे श्वेतवहादीनामप्युत्तरत्रानुवृत्तिः स्यात् । [illegible] स्यात्केवलस्यैवेष्यत इति ॥ **३४१६ अवयाः श्वेतवाः-**। ननु मन्त्रे श्वेतवहेत्यादिना डसि कृते सौ 'अत्वसन्तस्य-' इति दीर्घे रुत्वे च श्वेतवा इत्यादि सिद्धेर्नार्थोऽनेन योगेनेत्याशङ्क्याह—**एते संबुद्धाविति** । संबुद्धौ हि 'अत्वसन्तस्य-' इति न प्राप्नोति, तत्रासंबुद्धावित्यनुवर्तनात् ॥ **३४१७ विजुपे-**। ननु छन्दसीति व्यर्थं मन्त्रे इत्यनुवृत्तेरेव भाषायां न भविष्यतीति चेत् । सत्यम् । ब्राह्मणसंग्रहार्थं छन्दोग्रहणम् । मन्त्रव्यतिरिक्तो वेदभागो ब्राह्मणम् । तदुक्तम्—'तच्चोदकेषु मन्त्राख्या शेषे ब्राह्मणशब्दः' ॥ **३४१८ सुधीवा । सुपीवेति** । 'घुमास्था-' इतीत्त्वम् ॥—**कीलालपा इति** । कीलालं=जलम् । 'पयः कीलालममृतं जीवनं भुवनं वनम्' इत्यमरः । तत् पिबतीति । 'पा पाने'

---

[1] 'मथे विलोडने' इत्यपि पाठः ।

३४१९ । **बहुलं छन्दसि** ।३।२।८८। उपपदान्तरेऽपि हन्तेर्बहुलं क्विप् स्यात् । यो मातृहा पितृहा ।

**'छन्दसि लिट्–'** ३०९३ ।

भूतसामान्ये । अहं द्यावापृथिवी आ ततान ।

**'लिटः कानज्वा–'** ३०९४ ।

**'क्वसुश्च–'** ३०९५ ।

छन्दसि लिटः कानच्क्वसू वा स्तः । चक्राणा वृष्णिम् । यो नो अग्ने अररिवाँ अघायु ।

**'णेश्छन्दसि–'** ३११७ ।

ण्यन्ताद्धातोश्छन्दसि इष्णुच् स्यात्तच्छीलादौ । वीरुधः पारयिष्णवः ।

**'भुवश्च–'** ३११८ ।

अस्मात्केवलात्प्राग्वत् । भविष्णुः ॥ ❀ **छन्दसि परेच्छायां क्यच उपसंख्यानम्** ।

**'क्याच्छन्दसि–'** ३१५० । उप्रत्ययः स्यात् । अघायुः ॥ ❀ **एरजधिकारे जवसवौ छन्दसि वाच्यौ** । जुवे याभिर्यूनं । ऊर्वोर्मे जवः । देवस्य सवितुः सवे ।

३४२० । **मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः** ।३।३।९६। वृषादिभ्यः क्तिन्स्यात्स चोदात्तः । वृष्टिं दिवः । सुम्नमिष्टये । पचाः पक्तीरुत । इयं ते नव्यसी मतिः । वित्तिः । भूतिः । अग्न आ याहि वीतये । रातौ स्यामोभयासः ।

३४२१ । **छन्दसि गत्यर्थेभ्यः** ।३।३।१२९। ईषदादिषूपपदेषु गत्यर्थेभ्यो धातुभ्यश्छन्दसि युच् स्यात् । खलोऽपवादः । सूपसदनोऽग्निः ।

३४२२ । **अन्येभ्योऽपि दृश्यते** ।३।३।१३०। गत्यर्थेभ्यो येऽन्ये धातवस्तेभ्योऽपि छन्दसि युच् स्यात् । सुवेदनामकृणोद् ब्रह्मणे गाम् ।

३४२३ । **छन्दसि लुङ्लङ्लिटः** ।३।४।६। धात्वर्थानां संबन्धे सर्वकालेष्वेते वा स्युः । पक्षे यथास्वं प्रत्ययाः । देवो देवेभिरागमन् । लोडर्थे लुङ् । इदं तेभ्योऽकरं नमः । लङ्, अग्निमद्य होतारमवृणीतायं यजमानः । लिट्, अद्य ममार । अद्य म्रियत इत्यर्थः ।

३४२४ । **लिङर्थे लेट्** ।३।४।७। विध्यादौ हेतुहेतुमद्भावादौ च धातोर्लेट् स्याच्छन्दसि ।

३४२५ । **सिब्बहुलं लेटि** ।३।४।३४।

३४२६ । **इतश्च लोपः परस्मैपदेषु** ।३।४।९७। लेटस्तिङामितो लोपो वा स्यात्परस्मैपदेषु ।

३३२७ । **लेटोऽडाटौ** ।३।४।९४। लेटः 'अट्' 'आट्' एतावागमौ स्तस्तौ च पितौ ॥ ❀ **सिब्बहुलं णिद्वक्तव्यः** । वृद्धिः । प्र ण आयूंषि तारिषत् । सुपेशसस्करति जोषिषद्धि । आ साविषदर्शसानाय । सिप इलोपस्य चाभावे । पताति दिद्युत् । प्रिय सूर्ये प्रियो अग्ना भवाति ।

३४२८ । **स उत्तमस्य** ।३।४।९८। लेडुत्तमसकारस्य वा लोपः स्यात् । करवाव–करवावः । टेरेत्वम्,

३४२९ । **आत ऐ** ।३।४।९५। लेट आकारस्य ऐ

---

विच् ॥ ३४१९ **उपपदान्तरेऽपीति** । ब्रह्मभ्रूणवृत्रभिन्नेष्वपीत्यर्थः ॥—**आततानेति** । 'णलुत्तमो वा' इति णित्त्वपक्षे वृद्धिः ॥—**अररिवानिति** । रा दाने । लिटः क्वसुः । 'वस्वेकाजाद्घसाम्' इत्यादन्तत्वादिट् । ततो नञ्समासः । 'दीर्घादटि–' इति वक्ष्यमाणेन नस्य रुत्वम् 'आतोऽटि नित्यम्' इति रोः पूर्वस्यातो नित्यमनुनासिकः ॥ प्रसङ्गादघायुशब्दं साधयितुमाह ❀ **छन्दसीति** । 'सुप आत्मनः–' इत्यत्र 'आत्मनः' इति विशेषणात्परेच्छायां न प्राप्नोतीति वचनम् ॥—**क्याच्छन्दसि** । 'सनाशंसभिक्ष उः' इत्यत उरिति वर्तते क्यन्ताद्धातोरुः स्याच्छन्दसि ॥—**अघायुरिति** । परस्याघमिच्छतीत्यर्थे क्यच्, 'अश्वाघस्यात्' इति वक्ष्यमाणेनाकारादेशः । तदन्तादुप्रत्ययः ॥—**जवसवादिति** । जु इति सौत्रो धातुः । षूङ् प्राणिगर्भविमोचने, षु प्रसवैश्वर्ययोरिति वा । आभ्याम् 'ऋदोरप्' इति अपि प्राप्तेऽज्विधीयते । स्वरे भेदः ॥ ३४२० **मन्त्रे वृषेष–** । 'स्त्रियां क्तिन्' इत्यतः क्तिन्निति वर्तते । **वीरा** इति पञ्चम्यर्थे प्रथमा, तदाह—**वृषादिभ्य इति** ॥—**वृष्टिमिति** । वृषु सेचने ॥—**इष्टये इति** । इषु इच्छायाम् । चतुर्थ्येकवचनम् ॥—**मतिरिति** । मन ज्ञाने क्तिन् । 'अनुदात्तोपदेश–' इत्यनुनासिकलोपः ॥—**वित्तिरिति** । विद सत्तायाम् । कित्त्वान्न लघूपधगुणः ॥—**वीतये इति** । वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु ॥—**राताविति** । रा दाने ॥ ३४२३ **छन्दसि लुङ्लङ्लिटः** । उदाहरणेषु धातुसंबन्धो मृग्यः ॥—**आगमदिति** । गम्लृ गतौ 'पुषादि–' इति लृदित्त्वादङ् ॥—**अकरमिति** । 'कृमृदृरुहिभ्यश्छन्दसि' इति च्लेरङ् । 'ऋदृशोऽङि–' इति गुणः ॥—**अवृणीतेति** । वृञ् वरणे । लङ् । 'क्र्यादिभ्यः श्ना' 'ई हल्यघोः' इतीत्वम् ॥ ३४२६ **इतश्च–** । 'लेटोऽडाटौ' इत्यतो लेट इति 'वैतोऽन्यत्र' इत्यतो वेति चानुवर्तते, तदाह—**लेट इत्यादि** ॥ ३४२७ **लेटो–** ॥—**आगमौ स्त इति** । तौ च पर्यायेण न तु यौगपद्येन, अड्विधिसामर्थ्यात्, अन्यथा सवर्णदीर्घे कृते विशेषाभावात् ॥ 'आडुत्तमस्य–' इति सूत्रान्मण्डूकप्लुत्या पिच्चेत्यनुवर्तत इत्याशयेनाह—**तौ च पिताविति** । तत्फलं तु 'विकन्दसी उर्वरासु ब्रवैते' इत्यादिषु गुणः ॥—**वृद्धिरिति** । 'अचोऽञ्णिति' इत्यनेन ॥—**तारिषदिति** । तॄ प्लवनतरणयोः । तिप इकारलोपः । सिप् इट् ॥—**जोषिषदिति** । जुषी प्रीतिसेवनयोः । अनुदात्तेत् । व्यत्ययेन परस्मैपदम् ॥ ३४२८ **आ साविषदिति** । आङ्पूर्वात् 'षु प्रसवैश्वर्ययोः' इत्यस्माल्लेट् ॥—**पतातीति** । 'पत्लृ पतने' तिप् । आडागमः ॥—**करवावेति** । कृञो लेटो वस्, 'तनादिकृञ्भ्य–' इति उः । गुणः, रपरः । 'लेटोऽडाटौ' इत्याट्, तस्य पित्त्वेनाङित्त्वाद्विकरणस्य गुणः । 'अत उत्सार्वधातुके' इत्युत्वाभावश्च । 'मदी हर्षे' णिच्, तदन्ताल्लेट् । आतामि कृते आह—**टेरेत्वमिति** । 'टित आत्मनेपदाना–' इत्यनेन ॥ ३४२९ **आकारस्येति** । प्रथमस्येत्यर्थः । द्वितीयस्य 'टित आत्मनेपदानाम्–' इत्यने-

स्यात् । सुतेभिः सुप्रयसा मादयैते । आतामित्याकारस्य ऐकारः । विधिसामर्थ्यादाट ऐत्वं न । अन्यथा हि ऐटमेव विदध्यात् । यो यजाति यजात इत् ।

३४३० । वैतोऽन्यत्र ।३।४।९६। लेट एकारस्य ऐ स्याद्वा 'आत ऐ' ३४२९ इत्यस्य विषयं विना । पशूनामीशै । ग्रहा गृह्णान्तै । अन्यत्र किम् । सुप्रयसा मादयैते ।

३४३१ । उपसंवादाशङ्कयोश्च ।३।४।८। पणबन्धे आशङ्कायां च लेट् स्यात् । अहमेव पशूनामीशै । नेज्जिह्मायन्तो नरकं पताम ।

'हलः श्नः शानज्झौ-' २५५७ ।

३४३२ । छन्दसि शायजपि ।३।१।८४। अपिशब्दाच्छानच् ॥ ॐ हृग्रहोर्भश्छन्दसि । इति हस्य भः । गृभाय जिह्वया मधु । बधान देव सवितः, 'अनिदितां-' ४१५ इति बध्नातेर्नलोपः । गृभ्णामि ते । मध्वा जभार ।

३४३३ । व्यत्ययो बहुलम् ।३।१।८५। विकरणानां बहुलं व्यत्ययः स्यात् छन्दसि । आण्डा शुष्णस्य भेदति । भिनत्तीति प्राप्ते । जरसा मरते पतिः । म्रियत इति प्राप्ते । इन्द्रो वस्तेन नेषतु, नयतेर्लोट् शप्सिपौ द्वौ विकरणौ । इन्द्रेण युजा तरुषेम वृत्रम् । तरेमेत्यर्थः । तरतेर्विध्यादौ लिङ्, उः शप् सिप् चेति त्रयो विकरणाः ॥

सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च । व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन ॥ १ ॥

धुरि दक्षिणायाः । दक्षिणस्यामिति प्राप्ते । चषालं ये अश्वयूपाय तक्षति । तक्ष्णुवन्ती प्राप्ते । उपग्रहः=परस्मैपदात्मनेपदे । ब्रह्मचारिणमिच्छते । इच्छतीति प्राप्ते । प्रतीपमन्य ऊर्मिर्युध्यति । युध्यत इति प्राप्ते । मधोस्तृप्ता इवासते । मधुन इति प्राप्ते । नरः=पुरुषः । अधा स वीरैर्दशभिर्वियूयाः । वियूयादिति प्राप्ते । कालः=कालवाची प्रत्ययः । श्वोऽग्नीनाधास्यमानेन, लुटो विषये लृट् । तमसो गा अदुक्षत् । अधुक्षदिति प्राप्ते । मित्रं वयं च सूरयः । मित्रा वयमिति प्राप्ते । स्वरव्यत्ययस्तु वक्ष्यते । कर्तृशब्दः कारकमात्रपरः । तथा च तद्वाचिनां कृत्तद्धितानां व्यत्ययः । अन्नादाय । अण्विषये अच् । अवग्रहे विशेषः । यङो यशब्दादारभ्य 'लिङ्याशिष्यङ्-' ३४३४ इति ङकारेण प्रत्याहारः । तेषां व्यत्ययो 'भेदति' इत्यादिरुक्त एव ।

---

नैत्वमेव, नित्यत्वात् । न च शब्दान्तरप्राप्त्याऽनित्यत्वम्, कृताकृतप्रसङ्गित्वमात्रेण क्वचिन्नित्यताश्रयणात् । उत्तरसूत्रेऽन्यत्रेति लिङ्गाच्च ॥ आट एत्वं नेत्युक्तं, तस्य फलमाह—**यजाति यजात इति** । यज देवपूजादौ । लेट आडागमः ॥ **३४३० वैतो—**। अन्यत्वं किमपेक्ष्येत्याकाङ्क्षायां पूर्वसूत्रविषयादिति लभ्यते, सन्निधानात् । तदाह—**आत इत्यादि** ॥ **ईशै इति** । ईश ऐश्वर्ये । उत्तमैकवचनमिट् । 'इतश्च-' इति लोपो नास्ति, परस्मैपदेषु इत्युक्तेः । टेरेत्वे तस्य ऐः ॥—**गृह्णान्ता इति** । ग्रहेः कर्मणि लेट्, झिः । तस्याडागमः । यक्, 'ग्रहिज्या-' इति संप्रसारणं, टेरेत्वं, पूर्ववदैत्वम् ॥ **३४३१ पण बन्ध इति** । यदि मे भवानिदं कुर्यात्तर्हीदमहं दास्यामीति समयकरणं पणबन्धः । आशङ्का=संभावना ॥ **—अहमेवेति** । त्रिपुरविजये देवैः प्रार्थितस्य रुद्रस्येदं वचनम् । पशवः=संसारिणः ॥**—नेदिति** । इच्छब्द आशङ्कां द्योतयति । जिह्माचरणेन नरकपातः स माभूदित्यर्थः ॥**—पतामेति** । 'स उत्तमस्य' इति सलोपः ॥ **३४३२ छन्दसि शाय-**। छन्दसि श्नः शायजप्यादेशः स्याद्धौ परे ॥**—गृभायेति** । ग्रह उपादाने । लोटः सेर्हिः, 'क्र्यादिभ्यः श्ना', 'ग्रहिज्या-' इति संप्रसारणम् ॥**—बधानेति** । बन्ध बन्धने । 'अतो हेः' इति हेर्लुक् ॥ प्रसङ्गात् 'हृग्रहोर्भश्छन्दसि' इत्यस्योदाहरणमाह—**गृभ्णामीति** ॥**—जभारेति** । हृञ् हरणे । लिटो णलि वृद्धौ हस्य भः । गृह्णामि, जहारेत्यर्थः ॥ **३४३३ भेदतीति** । भिदिर् विदारणे, रौधादिकः । श्नमि प्राप्ते शप् ॥**—म्रियत इति** । मृङ् प्राणत्यागे । 'तुदादिभ्यः-' इति शे कृते 'रिङ् शयग्लिङ्क्षु' इति रिङादेशः, इयङ् ॥**—नेषत्विति** । नयत्वित्यर्थः ॥**—द्वौ विकरणाविति** । तत्र शप् न्याय्यः, सिप्तु बाहुलकात् । एतेन 'सेमामविड्ढि-' इत्यादि व्याख्यातम् । 'अव रक्षणे' अस्माल्लोटि शपि प्राप्ते बाहुलकात्सिप् । 'हुझल्भ्यो हेर्धिः', षत्वं, जश्त्वम् ॥**—तरुषेमेति** । 'तरुष मस्' इति जाते यासुट् । 'लिङः सलोपोऽनन्त्यस्य' । 'नित्यं ङितः' । 'अतो येयः' । 'लोपो व्योर्वलि' । 'आद्गुणः' । अत्रोप्रत्ययान्तस्य सिपं प्रत्यङ्गत्वात् 'सार्वधातुक-' इति गुणः प्राप्तः । सिबन्तस्य शपि लघूपधगुणश्च प्राप्तो बाहुलकान्न भवति ॥**—सुप्तिङिति** । शास्त्रकृत्पाणिनिराचार्य एषां सुप्प्रभृतीनां व्यत्ययमिच्छति । सोऽपि तथाविधो व्यत्ययो बाहुलकेन सिध्यति । बहुलस्य भावो बाहुलकम् । मनोज्ञादित्वाद्वुञ् । तत्पुनर्बहुलशब्दस्य प्रवृत्तिनिमित्तं बह्वर्थादानम् । चशब्दो हेतौ । यस्मादेवमुक्तप्रकारो व्यत्ययो बहुलग्रहणेनैव सिध्यति, तस्माद्बहुलग्रहणं कृतमित्यर्थः ॥**—वियूया इति** । 'यु मिश्रणे' विपूर्वः । आशिषि लिङ् ॥**—आधास्यमानेनेति** । आङ्पूर्वाद्दधातेः 'लृटः सद्वा' इत्यनेन शानजादेशः । 'स्यतासी-' इति स्यः । 'आने मुक्' इति मुक् ॥**—मित्र वयमिति** । दीर्घस्य ह्रस्वव्यत्ययः ॥**—स्वरव्यत्ययस्त्विति** । 'गवामिव श्रियसे' इत्यत्र 'तुमर्थे-' इत्यनेन कसेनि कृते 'ञ्नित्यादि-' इत्याद्युदात्ते प्राप्ते व्यत्ययेन मध्योदात्तता ॥**—कृत्तद्धितानामिति** । 'तेन दीव्यति-' इत्यादौ विधीयमानानां ठगादीनां देवनादिकर्तृत्वादेवमुक्तम् । न त्विह कारकवाचित्वेऽप्याग्रहः, कृत्तद्धितमात्रे तात्पर्यात् । तथा च किमो विहितो डतिर्यच्छब्दादपि भवति । 'त्वं वेत्थ यति ते जातवेदः,' । 'विश्वेदेवासो मरुतो यतिष्ठन' ॥**—अन्नादायेति** । अन्नमत्तीत्यन्नादः-तस्मै । अन्ने कर्मण्युपपदेऽदेः कर्मण्यणि प्राप्तेऽच् ॥**—अवग्रह इति** । अणि कृते अन्न आदा-

३४३४ । **लिङ्याशिष्यङ्** ।३।१।८६। आशीर्लिङि परे धातोरङ् स्याच्छन्दसि । 'वच उम्–' २४५४, मन्त्रं वोचेमाग्नये । ॐ **दृशेरग्वक्तव्यः** । पितरं च दृशेयं मातरं च । अङि तु 'ऋदृशोऽङि–' ३४०६ इति गुणः स्यात् ।

३४३५ । **छन्दस्युभयथा** ।४।४।११७। धात्वधिकारे उक्तः प्रत्ययः सार्वधातुकार्धधातुकोभयसंज्ञः स्यात् । वर्धन्तु त्वा सुष्टुतयः । वर्धयन्त्वित्यर्थः । आर्धधातुकत्वाण्णिलोपः । विशृण्विरे, सार्वधातुकत्वात् श्नः शृभावश्च, 'हुश्नुवोः–' २३८७ इति यण् ।

'**आदृगमहनजनः किकिनौ लिट् च**–'३१५१ । आदन्तादृवर्णान्ताद्गमादेश्च किकिनौ स्तस्तौ च लिड्वत् । बभ्रिर्वज्रम् । पपिः सोमं । ददिर्गाः । जग्मिर्युवा । जघ्निर्वृत्रममित्रियम् । जज्ञिः । लिड्वद्भावादेव सिद्धे 'ऋच्छत्यृताम्–' २३८३ इति गुणबाधनार्थं कित्त्वम् । 'बहुलं छन्दसि–' ३५७८ इत्युत्वम्, ततुरिः । जगुरिः ।

३४३६ । **तुमर्थे सेसेनसेऽसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः** ।३।४।९। से, वक्षे रायः । सेन्, ता वामेषे । असे, शरदो जीवसे धाः । असेन्, नित्त्वादाद्युदात्तः । क्से, प्रेषे । कसेन्, गवामिव श्रियसे । अध्यै–अध्यैन्, जठरं पृणध्यै । पक्षे आद्युदात्तम् । कध्यै–कध्यैन्, आहुवध्यै । पक्षे नित्स्वरः । शध्यै, राधसः सह मादयध्यै । शध्यैन्, वायवे पिबध्यै । तवै, दातवा उ । तवेङ्, सूतवे । तवेन्, कर्तवे ।

३४३७ । **प्रयै रोहिष्यै अव्यथिष्यै** ।३।४।१०। एते तुमर्थे निपात्यन्ते । प्रयातुं–रोढुम्–अव्यथितुमित्यर्थः ।

३४३८ । **दृशे विख्ये च** ।३।४।११। द्रष्टुं–विख्यातुमित्यर्थः ।

३४३९ । **शकि णमुल्कमुलौ** ।३।४।१२। शक्नोतावुपपदे तुमर्थे एतौ स्तः । विभाजं नाशकत् । अपलुपं नाशकत् । विभक्तुम्–अपलोप्तुमित्यर्थः ।

३४४० । **ईश्वरे तोसुन्कसुनौ** ।३।४।१३। ईश्वरो विचरितोः । ईश्वरो विलिखः । विचरितुं–विलेखितुमित्यर्थः ।

३४४१ । **कृत्यार्थे तवैकेन्केन्यत्वनः** ।३।४।१४। न

---

येति, अचि तु—अन्न-अदायेति भावः ॥ **३४३४ वोचेमेति** । वचेराशीर्लिङो मस्, अङ् । वच उम्, यासुट् ॥ **३४३५ छन्दस्युभयथेति** । लिङः सार्वधातुकसंज्ञाऽप्यस्ति, तेन यासुट इयादेशः । वलिलोपः ॥—**आदृ**–। परार्थे प्रयुज्यमानाः शब्दा वतिमन्तरेणापि वत्यर्थं गमयन्ति, गौर्वाहीक इतिवदित्याशयेनाह—**लिड्वदिति** । किकिनौ भवतः, लिट् प्रत्ययश्च भवतीत्ययमर्थस्तु न भवति । तथा हि सति 'लिट्किकिनः' इत्येव ब्रूयात् ॥—**बभ्रिरिति** । 'भृञ्' अस्मात् किः । लिड्वद्भावाद्द्वित्वम् । किकिनोः स्थाने तिबादयस्तु न, लिड्वदित्यतिदेशेन स्वरूपाबाधेनैव कार्यातिदेशात् । 'न लोकाव्यय–' इति षष्ठीनिषेधे वज्रशब्दाद्वितीया ॥—**जग्मिरिति** । 'गमहन–' इत्युपधालोपः ॥—**जघ्निरिति** । 'हो हन्तेः–' इति कुत्वम् ॥—**जज्ञिरिति** । श्चुत्वम् । जज्ञोर्ज्ञः ॥ ननु लिड्वद्भावे सति 'असंयोगाल्लिट् कित्' इत्येव सिद्धे कित्त्वकर[illegible]—**लिड्वद्भावादिति** । 'असंयोगाल्लिट् कित्' इति कित्त्वं सिद्धमिति भावः । आदिति मुखसुखार्थो दकारो न तु तकारः । तेन तात्परत्वाभावाद्दीर्घस्यापि ऋकारस्य ग्रहणं, तदाह—**ततुरिः। जगुरिरिति** । तॄ प्लवनतरणयोः । गॄ निगरणे । आभ्यां किः । द्वित्वात्परत्वात् 'बहुलं छन्दसि' इत्युत्वे प्राप्ते 'द्विर्वचने–' इति निषेधादुत्वाभावे द्वित्वम् । उरदत्वम् । उत्तरस्योत्वम् ॥ **३४३६ तुमर्थे**—। तुमुनोऽर्थः–तुमर्थो भावः ॥ ननु 'कर्तरि कृत्' इति वचनात्कर्तरि तुमुनो विधानात्कथं भावोऽर्थ इति चेत्, शृणु–'अव्ययकृतो भावे' इति वचनात्तुमुनो भावे विधानात् । तुमर्थे पञ्चदश प्रत्यया भवन्ति ॥—**वक्षे इति** । वचः से कुत्वम्, षत्वम् । कषसंयोगे क्षः ॥—**एषे इति** । इणो गुणः । नकारो 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तार्थः ॥—**प्रेषे इति** । इणः से कित्त्वादगुणे आद्गुणः ॥—**श्रियसे इति** । इयङ् नित्त्वादाद्युदात्तः । इह मन्त्रे मध्योदात्तः पठ्यते । तत्र बाहुलकात्प्रत्ययस्वरो बोध्यः ॥—**आहुवध्यै इति** । जुहोतेरुवङ् ॥—**मादयध्यै इति** । 'मदी हर्षे' ण्यन्तात् शध्यैप्रत्ययः । तस्य भाववाचिसार्वधातुकत्वात् 'सार्वधातुके–' इति यकि प्राप्ते व्यत्ययेन शप् गुणायादेशौ ॥—**पिबध्यै इति** । अत्रापि यक्प्रसङ्गे व्यत्ययेन शप् । 'पाघ्रा–' इति पिबादेशः ॥—**दातवा उ इति** । ददातेस्तवै आयादेशे 'लोपः शाकल्यस्य' इति यलोपः ॥—**सूतवे इति** । ङित्त्वान्न गुणः ॥—**कर्तव इति** । कृञो गुणः । कर्तुमित्यर्थः ॥ **३४३७ प्रयै**—। प्रपूर्वाद्यातेः कैप्रत्ययः । रुहेरिष्यै । नञ्पूर्वाद्व्यथेश्च ॥ **३४३८ दृशे**—। योगविभागश्चिन्त्यप्रयोजनः । दृशेः ख्यातेश्च केप्रत्ययः । कित्त्वाद्दृशेर्न गुणः । ख्यातेरालोपश्च ॥ **३४३९ विभाजमिति** । विपूर्वाद्भजतेर्णमुल् । णित्वात् 'अत उपधायाः' इति वृद्धिः ॥—**अपलुपमिति** । 'लुप्लृ छेदने' कित्त्वाद्गुणाभावः ॥ **३४४० ईश्वरे** । ईश्वरशब्दे उपपदे धातोस्तोसुन्कसुनौ स्तश्छन्दसि ॥—**विचरितोरिति** । चर गताविट् ॥—**विलिख इति** । 'लिख विलेखने' कित्त्वान्न गुणः । 'क्त्वातोसुन्कसुनः' इत्यव्ययत्वात् 'अव्ययादाप्सुपः' इति विभक्तेर्लुक्, 'न लुमता–' इति निषेधाद् 'अत्वसन्तस्य' इति दीर्घो न ॥ **३४४१ कृत्यार्थे**–। कृत्यानामर्थौ भावकर्मणी, 'तयोरेव–' इति कृत्यानां भावकर्मणोर्विधानात् । तत्र एते प्रत्ययाः स्युः । यद्यपि कृत्यानामर्थौ 'भव्यगेय–' इत्यादौ कर्ताऽपि, वत्यं स्नानीयमित्यादौ करणादिरपि, तथापि न तत्र कृत्यत्वेन कर्त्रादिषु विधानं । किं तर्हि? स्वरूपेण । कृत्यतया विधानं तु

म्लेच्छितवै । अवगाहे । दिदृक्षेण्यः । भूर्यस्पष्ट कर्त्वम् ।

३४४२ । **अवचक्षे च** ।३।४।१५। रिपुणा नावचक्षे । अवख्यातव्यमित्यर्थः ।

३४४३ । **भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्** ।३।४।१६। आसंस्थातोः सीदन्ति । आसमाप्तेः सीदन्तीत्यर्थः । उदेतोः । अपकर्तोः । प्रवदितोः । प्रचरितोः । होतोः । आतमितोः । 'काममाविजनितोः संभवामः' ।

३४४४ । **सृपितृदोः कसुन्** ।३।४।१७। भावलक्षणे इत्येव । पुरा क्रूरस्य विसृपो विरप्शिन् । पुरा जत्रुभ्य आतृदः ॥ **इति तृतीयोऽध्यायः ॥**

---

## चतुर्थोऽध्यायः ।

३४४५ । **रात्रेश्चाजसौ** ।४।१।३१। रात्रिशब्दान्ङीप्स्यात् अजस्विषये छन्दसि । रात्री व्यख्यदायती । लोके तु—(ग.) कृदिकारात्–इति ङीष्यन्तोदात्तः ।

३४४६ । **नित्यं छन्दसि** ।४।१।४६। बह्वादिभ्यश्छन्दसि विषये नित्यं ङीष् । बह्वीषु हित्वा । नित्यग्रहणमुत्तरार्थम् ।

३४४७ । **भुवश्च** ।४।१।४७। ङीष् स्यात् छन्दसि । विभ्वी । प्रभ्वी । 'विप्रसंभ्य–' ३१६० इति डुप्रत्ययान्तं सूत्रेऽनुक्रियते, उत इत्यनुवृत्तेः । उवङादेशस्तु सौत्रः ॥

❀ **मुद्गलाच्छन्दसि लिच्च** । ङीषो लित्वमानुक् चागमः । लित्स्वरः । रथीरभून्मुद्गलानी ।

३४४८ । **दीर्घजिह्वी च छन्दसि** ।४।१।५९। संयोगोपधत्वादप्राप्तो ङीष् विधीयते । आसुरी वै दीर्घजिह्वी देवानां यज्ञवाट् ।

३४४९ । **कद्रुकमण्डल्वोश्छन्दसि** ।४।१।७१। ऊङ् स्यात् । कद्रूश्च वै कमण्डलूः ॥ ❀ **गुग्गुलुमधुजतुपतयालूनामिति वक्तव्यम्** । गुग्गुलूः । मधूः । जतूः । पतयालूः ।

'अव्ययात्त्यप्' १३२४ । ❀ **आविष्ट्यस्योपसंख्यानं छन्दसि** । आविष्ट्यो वर्धते ।

३४५० । **छन्दसि ठञ्** ।४।३।१९। वर्षाभ्यष्ठकोऽपवादः । स्वरे भेदः । वार्षिकम् ।

---

भावकर्मणोरेवेति भावः ॥—**न म्लेच्छितवै इति** । न म्लेच्छितव्यमित्यर्थः ॥—**अवगाहे इति** । गाहू विलोडने ॥—**दिदृक्षेण्य इति** । दृशेः सन्नन्तात्केन्यः । अतो लोपः ॥—**कर्त्वमिति** । कृञः त्वन् । कृत्यमित्यर्थः । यद्यपि 'तुमर्थे सेसेन्–' इत्यनेन तुमर्थे तवै विहितस्तथापि भावभिन्नेऽपि कर्मकारके तवै यथा स्यादित्येवमर्थम् ॥ **३४४२ अवचक्षे-**। अवपूर्वाच्चक्षिङ एश्प्रत्ययो निपात्यते । शित्त्वात्सार्वधातुकत्वं । तेन ख्याञादेशो न ॥ **३४४३ भावलक्षणे—**। कृत्यार्थे इति निवृत्तम् । तुमर्थे इति वर्तते । प्रकृत्यर्थविशेषणं भावलक्षणग्रहणम् । भावो लक्ष्यते येन तस्मिन्नर्थे वर्तमानेभ्यः स्थादिभ्यो धातुभ्यस्तुमर्थे तोसुन् स्याच्छन्दसि । संस्थानादीनामवधित्वेन लक्षणं भावः ॥—**आ समाप्तेरिति** । संपूर्वो हि तिष्ठतिः समाप्तौ रूढः, संतिष्ठते पिण्डपितृयज्ञ इत्यादौ तथा दर्शनात् ॥—**आतमितोरिति** । तमु ग्लानौ ॥ **३४४४ सृपितृदोः-**। सृप्लृ गतौ । उतृदिर् हिंसाऽनादरयोः । भावलक्षणेऽर्थे वर्तमानयोः सृपितृदोस्तुमर्थे कसुन् स्यात् ॥—**विसृप इति** । गमनादित्यर्थः ॥ **इति तृतीयोऽध्यायः ॥**

**३४४५ रात्रेश्चाजसौ** । न जसिः–अजसिस्तस्मिन् । इकार उच्चारणार्थः । 'आद्यौ प्रभूतादिभ्यः' इतिवत् ॥—**छन्दसीति** । ननु 'तिमिरपटैरवगुण्ठिता रात्र्यः' इति प्रयोगो न स्यात् । छन्दसीत्युच्यते । न चेदं छन्दः । अजसाविति निषेधाच्च । किं च वेदेऽपि रात्र्य इति प्रयोगो न स्यात्–इत्याशङ्क्याह—**लोके त्विति** । तुशब्दोऽनुक्तसमुच्चयार्थः । लोके जसि वेदे चेत्यर्थः ॥—**कृदिकारादिति** । राशदिभ्यां त्रिरिति व्युत्पत्तिपक्षे कृदिकारान्तः । अव्युत्पत्तिपक्षे तु 'सर्वतोऽक्तिन्नर्थात्–' इति ङीष् बोध्यः ॥ **३४४६ नित्यम्-**। 'बह्वादिभ्यश्च' इति वर्तते 'अन्यतो ङीष्' इत्यतो ङीषिति च । तदाह—**बह्वादिभ्य इति** । नन्वारम्भसामर्थ्यादेव नित्यत्वे सिद्धे नित्यग्रहणं व्यर्थमित्याशङ्क्याह—**नित्यग्रहणमुत्तरार्थमिति** ॥ **३४४७ भुवः—**।—**विभ्वीति** । 'विप्रसंभ्यो ड्वसंज्ञायाम्' इति डुप्रत्ययान्तात् ङीष् ॥ ननु स्वयंभूरत्रापि स्यादित्याशङ्क्याह—**डुप्रत्ययान्तमिति** ॥ ननु डुप्रत्ययान्तानुकरणे प्रमाणं किमत आह—**उत इत्यनुवृत्तेरिति** । 'वोतो गुणवचनात्' इति सूत्रात् ॥ ननु तर्हि डुप्रत्ययान्तस्य 'घेर्ङिति' इति गुणे कृते 'भोः' इति निर्देशः प्राप्नोति, तदाह—**उवङादेशस्तु सौत्र इति** ॥ ❀ **मुद्गला-**। 'इन्द्रवरुण–' इति सूत्रस्थं वार्तिकमिदम् ॥—**लित्स्वर इति** । लितीत्यानुगाकारस्योदात्तत्वम् ॥ **३४४८ दीर्घजिह्वी-**। दीर्घजिह्वीति निपात्यते छन्दसि ॥—**अप्राप्तो ङीषिति** । 'स्वाङ्गाच्चोपसर्जनात्–' इति न प्राप्नोति, तत्र ह्यसंयोगोपधादिति प्रतिषेधात् ॥ **३४४९ कद्रु-**। 'ऊङुतः' इत्यत ऊङिति वर्तते, कद्रुशब्दात्कमण्डलुशब्दाच्च स्त्रियामूङ्स्याच्छन्दसि ॥—**गुग्गुलुमधु-**। एषां व्यत्ययेन छन्दसि स्त्रीत्वम् । पतयालुशब्दः 'स्पृहिगृहि–' इत्यादिना आलुजन्तः ॥—**अव्यया-**। व्याख्यातमपि त्यबनुवृत्तिप्रदर्शनार्थं स्मारितम् ॥—**आविष्ट्यस्येति** । 'अव्ययात्त्यप्' इत्यत्र 'अमेहक्वतसित्रेभ्यः' इति नियमादप्राप्तः शैषिकस्त्यब् विधीयते ॥—**आविष्ट्य इति** । आविर्भूतमाविष्ट्यम् । 'ह्रस्वात्तादौ–' इति षत्वं, नकारस्य ष्टुत्वम् ॥ **३४५० ठकोऽपवाद इति** । 'वर्षाभ्यष्ठक्' इति प्राप्तस्य ॥ ननु ठक्ठञोः को विशेषस्तत्राह—**स्वरे भेद इति** । ठञि कृते 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वं, ठकि तु सति 'कितः' इत्यनेनान्तोदात्तत्वं स्यादिति भावः ॥—**वार्षिकमिति** । ठस्येकः ॥ **३४५२ उत्तरार्थ इति** । 'सर्वत्राण् च तलोपश्च' इत्येतदर्थः । तत्र ह्यसै-

३४५१ । **वसन्ताच्च** ।४।३।२०। ठञ् स्यात् छन्दसि । वासन्तिकम् ।

३४५२ । **हेमन्ताच्च** ।४।३।२१। छन्दसि ठञ् । हैमन्तिकम् । योगविभाग उत्तरार्थः ।

**'शौनकादिभ्यश्छन्दसि'** १३८६ । णिनिः प्रोक्तेऽर्थे । छाणोरपवादः । शौनकेन प्रोक्तमधीयते शौनकिनः । वाजसनेयिनः । छन्दसि किम् । शौनकीया शिक्षा ।

३४५३ । **द्व्यचश्छन्दसि** ।४।३।१५०। विकारे मयट् स्यात् । शरमयं बर्हिः । यस्य पर्णमयी जुहूः ।

३४५४ । **नोत्वद्वर्ध्रबिल्वात्** ।४।३।१५१। उत्वान् उकारवान् । मौञ्जं शिक्यम् । वर्ध्रं चर्म, तस्य विकारो वार्ध्री रज्जुः । बैल्वो यूपः ।

**'सभाया यः–'** १६५७ ।

३४५५ । **ढश्छन्दसि** ।४।४।१०६। सभेयो युवा ।

३४५६ । **भवे छन्दसि** ।४।४।११०। सप्तम्यन्ताद्भवार्थे यत् । मेघ्याय च विद्युत्याय च । यथायथं शैषिकाणामणादीनां घादीनां चापवादोऽयं यत् । पक्षे तेऽपि भवन्ति, सर्वविधीनां छन्दसि वैकल्पिकत्वात् । तद्यथा— मुञ्जवान्नाम पर्वतः, तत्र भवो मौञ्जवतः । सोमस्येव मौञ्जवतस्य भक्षः । आ चतुर्थसमाप्तेश्छन्दोऽधिकारः ।

३४५७ । **पाथोनदीभ्यां ड्यण्** ।४।४।१११। तमु त्वा पाथ्यो वृषा । चनो दधीत नाद्यो गिरो मे । पाथसि भवः पाथ्यः । नद्यां भवो नाद्यः ।

३४५८ । **वेशन्तहिमवद्भ्यामण्** ।४।४।११२। भवे । वैशन्तीभ्यः स्वाहा । हैमवतीभ्यः स्वाहा ।

३४५९ । **स्रोतसो विभाषा ड्यड्ड्यौ** ।४।४।११३। पक्षे यत् । ड्यड्ड्ययोस्तु स्वरे भेदः । स्रोतसि भवः स्रोत्यः । स्रोतस्यः ।

३४६० । **सगर्भसयूथसनुताद्यन्** ।४।४।११४। अनुभ्राता सगर्भ्यः । अनुसखा सयूथ्यः । यो नः सनुत्य उत वा जिघत्नुः । नुतिर्नुतम् । 'नपुंसके भावे क्तः–' ३०९० । सगर्भादयस्त्रयोऽपि कर्मधारयाः । 'समानस्य छन्दसि–' १०१३ इति सः । ततो भवार्थे यन् । यतोऽपवादः ।

३४६१ । **तुग्राद्घन्** ।४।४।११५। भवेऽर्थे । पक्षे यदपि । आ वः शर्म वृषभं तुग्र्यासु–इति बह्वृचाः । तुग्रियासु–इति शाखान्तरे । धनाकाशयज्ञवरिष्ठेषु तुग्रशब्द इति वृत्तिः ।

३४६२ । **अग्राद्यत्** ।४।४।११६।

३४६३ । **घच्छौ च** ।४।४।११७। चाद्यत् । अग्रे भवोऽग्र्यः । अग्रियः । अग्रीयः ।

३४६४ । **समुद्राभ्राद्घः** ।४।४।११८। समुद्रिया अप्सरसो मनीषिणम् । नानदतो अभ्रियस्येव घोषाः ।

३४६५ । **बर्हिषि दत्तम्** ।४।४।११९। 'प्राग्घिताद्यत्' १६२६ इत्येव । बर्हिष्येषु निधिषु प्रियेषु ।

३४६६ । **दूतस्य भागकर्मणी** ।४।४।१२०। भागोंऽशः । दूत्यम् ।

३४६७ । **रक्षोयातूनां हननी** ।४।४।१२१। या ते अग्ने रक्षस्या तनूः ।

---

वानुवृत्तिर्यथा स्यात् वसन्तस्य माभूत् ॥—**शौनक—**। 'काश्यपकौशिकाभ्यामृषिभ्यां णिनिः' इत्यतो णितिरिति वर्तते, तदाह— **णिनिरिति** ॥—**प्रोक्ते इति** । 'तेन प्रोक्तम्' इत्येतस्मिन्नर्थे ॥—**शौनकीयेति** । वृद्धाच्छः ॥ **३४५३ द्व्यचः–**। 'मयड्वैतयोर्भाषायाम्–' इत्युक्तेर्वेदेऽप्राप्तो विधीयते ॥ **३४५४ नोत्वत्** । उकारवतः प्रातिपदिकाद्वर्ध्रबिल्वशब्दाभ्यां च मयण्न स्यात् । 'द्व्यचश्छन्दसि' इति प्राप्तः प्रतिषिध्यते ॥—**मौञ्जमिति** । मुञ्जशब्दादौत्सर्गिकोऽण् ॥—**वार्ध्रीति** । वर्ध्रशब्दादौत्सर्गिकोऽण् । 'टिड्ढाणञ्–' इति ङीप् ॥ **३४५५ ढश्छन्दसि** । सप्तम्यन्तात्सभाशब्दात् ढः साध्वर्थे ॥ **३४५६ अणादीनां चेति** । 'तत्र भवः' इति प्राप्तानाम् ॥ **३४५७ पाथोनदीभ्याम्–**। सप्तम्यन्ताभ्यामाभ्यां भवार्थे ड्यण् स्यात् ॥—**पाथसीति** । पाथो जलम् । 'कबन्धमुदकं पाथः' इत्यमरात् । 'पाथोऽन्तरिक्षं' इति वृत्तिः ॥ **३४५८ वैशन्तीभ्य इति** । विशेर्झच् । वेशन्तः=पल्वलम् । तत्र भवा आपः–वैशन्त्यः ॥ **३४६० सगर्भसयूथस–**। अर्तिगृभ्यां भन् । गिरति गीर्यते वा गर्भः । युता भवन्त्यस्मिन्निति यूथम् । 'तिथपृष्ठयूथगूथप्रोथाः' इति थक्प्रत्ययान्तो निपातितः । दीर्घोऽपि निपातनादेव ॥—**कर्मधारया इति** । समानश्चासौ गर्भश्च, तत्र भवः सगर्भ्य इति विग्रहः ॥—**यतोऽपवाद इति** । 'भवे छन्दसि' इति प्राप्तस्य ॥ **३४६२ अग्राद्यत्** । 'भवे छन्दसि' इत्येव सिद्धे घादिभिर्बाधा मा भूदिति यद्विधीयते **३४६४ समुद्रा–**। समुन्दतीति समुद्रः । 'स्फायितञ्चि–' इति रक् । अपो बिभर्ति इत्यभ्रम् । मूलविभुजादित्वात्कः । अभ्रसमुद्रादिति वक्तव्ये समुद्राभ्रादित्युक्तिः पूर्वनिपातस्यानित्यत्वज्ञापनार्था ॥ **३४६५ बर्हिषि–**। तत्र भव इति निवृत्तम् । बर्हिःशब्दाद्दत्तमित्यर्थे यत्प्रत्ययो भवति ॥— **बर्हिष्येष्विति** । 'बृंहतेर्नलोपश्च'इतीस्प्रत्ययान्तो बर्हिस्तस्माद्यत् ॥ **३४६६ दूतस्य–**। दूतशब्दात्षष्ठीसमर्थाद्भागे कर्मणि चाभिधेये यत्प्रत्ययः स्यात् । भागे 'तस्येदम्' इत्यणि प्राप्ते वचनम् । कर्मणि तु 'दूतवणिग्भ्यां च' इत्यौपसंख्यानिके ये **दूत्यमित्यादि** । दूतस्य भागो **दूत्यः**, कर्म **दूत्यम्** ॥ **३४६७ रक्षोयातूनाम्–**। षष्ठीबहुवचनान्ताभ्यां रक्षस्यातुशब्दाभ्यां हननीत्यस्मिन्नर्थे यत्स्यात् । रक्षेरसुनि रक्षः । 'कमितनिमनि–' इत्यादिना यातेस्तुन् । यातुशब्दो रक्षःशब्दपर्यायः । न च 'विरूपाणामपि समानार्थानाम्' इत्येकशेषः स्यादिति वाच्यम् । बह्वर्थाभिधायिस्वरूपवचनेन सूत्रे भिन्नार्थत्वात् ॥—**रक्षस्येति** । हन्यतेऽनया सा हननी रक्षसाम् । एवं यातव्या । बहुवचनं स्तुतिवैशिष्ट्यज्ञापनाय । बहूनां रक्षसां हनने हि

३४६८। **रेवतीजगतीहविष्याभ्यः प्रशस्ये** ।४।४।१२२। प्रशंसने यत्स्यात्। रेवत्यादीनां प्रशंसनं रेवत्यम्। जगत्यम्। हविष्यम्।

३४६९। **असुरस्य स्वम्** ।४।४।१२३। असुर्यं देवेभिर्धायि विश्वम्।

३४७०। **मायायामण्** ।४।४।१२४। आसुरी माया।

३४७१। **तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः** ।४।४।१२५। वर्चस्वानुपधानो मन्त्र आसामिष्टकानां वर्चस्याः। ऋतव्याः।

३४७२। **अश्विमानण्** ।४।४।१२६। आश्विनीरुपदधाति।

३४७३। **वयस्यासु मूर्ध्नो मतुप्** ।४।४।१२७। 'तद्वानासाम्–' ३४७१ इति सूत्रं सर्वमनुवर्तते। 'मतोः' इति पदमावर्त्य पञ्चम्यन्तं बोध्यम्। मतुबन्तो यो मूर्धशब्दस्ततो मतुप्स्यात्प्रथमस्य मतोर्लुक्च वयःशब्दवन्मन्त्रोपधेयास्विष्टकासु। यस्मिन्मन्त्रे मूर्धवयःशब्दौ स्तः, तेनोपधेयासु। मूर्धन्वतीरुपदधाति–इति प्रयोगः।

३४७४। **मत्वर्थे मासतन्वोः** ।४।४।१२८। नभोऽभ्रम्। तदस्मिन्नस्तीति नभस्यो मासः। ओजस्या तनूः।

३४७५। **मधोर्ञ च** ।४।४।१२९। चाद्यत्। माधवः।

---

स्तुतिः प्रतीयते॥ **३४६८ रेवतीजगती—**। प्रशंसनं प्रशस्यम्। प्रपूर्वात् 'शंसु स्तुतौ' इत्यस्माद्भावे क्यप्, तदाह—**प्रशंसने इति**। रयिरस्यास्तीति रेवती। रयिशब्दान्मतुप्, 'छन्दसीरः' इति वत्वम्, 'रयेर्मतौ बहुलम्' इति संप्रसारणम्। उगित्त्वान्ङीप्, नक्षत्रे गौरादित्वान्ङीष्। जगच्छब्दात् 'वर्तमाने–' इत्यनेन शतृवद्भावात् 'उगितश्च' इति ङीप्। हविषे हिता हविष्या। उगवादित्वाद्यत्। तासां प्रशंसनं हविष्यं, 'यस्य–' इति लोपे कृते 'हलो यमां यमि–' इति यलोपः॥ **३४६९ असुरस्य स्वम्**। असुरशब्दात्षष्ठीसमर्थात्स्वमित्येतस्मिन्नर्थे यत्स्यात्॥ **असुर्यमिति**। न सुरोऽसुरः सुरप्रतिपक्षी। अथ वा असेरुरन्। अस्यति अस्यते वा–असुरः। तस्य स्वमसुर्यम्॥ **३४७० मायायामण्**। मीयतेऽनयेति माया=असदर्थप्रकाशनशक्तिः। माङ औणादिको यः। तस्यां वाच्यायामसुरशब्दादण् स्यात्। पूर्वसूत्रापवादः॥—**आसुरीति**। 'टिड्ढाणञ्–' इति ङीप्॥ **३४७१ तद्वानासा–**। मत्वन्तात्प्रथमासमर्थादासामिति षष्ठ्यर्थे यत्स्यात्, तत्प्रथमासमर्थमुपधानो मन्त्रश्चेत्स भवति, यत्तदासामिति निर्दिष्टमिष्टकाश्चेत्ता भवन्ति। मतोश्च लुक्॥—**वर्चस्वानिति**। वर्चःशब्दो यस्मिन्मन्त्रेऽस्ति स वर्चस्वान्। कुम्भेष्टकोपधानमन्त्रः—'भूतं च स्थ भव्यं च स्थ देवस्य वः सवितुः प्रसवे' इत्यादिकः। उपधीयतेऽनेनेत्युपधानः। चयनं रचनमित्यर्थः॥—**ऋतव्या इति**। ऋतुशब्दो यस्मिन्मन्त्रेऽस्ति स ऋतुमान् स च मधुश्च माधवश्चेत्यादिकः। ऋतुमानुपधानो मन्त्र आसामिष्टकानाम्–ऋतव्याः। तद्वानिति किम्? मन्त्रादेव समुदायान्माभूदिति काशिका। **अत्र हरदत्तः**—ननु तद्वानित्यस्मिन्नसति 'समर्थानां प्रथमाद्वा' इति वचनादासामिति प्रथमानिर्दिष्टत्वात्षष्ठ्यन्तादिष्टकाभिधायिन उपधानमन्त्रे प्रत्ययः स्यादिति वाक्यार्थः स्यात्। तथा च समुदायान्न प्राप्नोतीति चेत्। **सत्यम्**। आसामिति प्रथमं न करिष्यत इति मत्वा प्रश्नप्रतिवचने, ततश्च 'उपधानो मन्त्र आसामिष्टकासु लुक् च मतोः' इति योगः करिष्यते। तथा च तद्वानित्यस्याभावे 'भूतं च स्थ भव्यं च स्थ' इत्ययमुपधानो मन्त्र आसामिष्टकानामिति वाक्यं स्यात्। तथा चेतिना परामृष्टान्मन्त्रसमुदायादेव प्रत्ययः प्राप्नोतीति भावः। उपधान इति किम्? वर्चस्वदभिमन्त्रणमासामित्यत्र माभूत्। 'शिवेन मा चक्षुषा' इत्यनुवाकः कुम्भेष्टकाभिमन्त्रणे विनियुक्तः। मन्त्र इति किम्? अङ्गुलिमानुपधानो हस्त आसामित्यत्र माभूत्। इष्टकास्विति किम्? वर्चस्वानुपधान आसां शर्कराणामित्यत्र माभूत्। इति करणं नियमार्थम्। अनेकपदसंभवे केनचिदेव पदेन तद्वान्मन्त्रो गृह्यते, न सर्वेण। मतुब्ग्रहणमुत्तरार्थम्। अश्विमानित्यत्र मतुप एव लुक् यथा स्यात्, इनेर्माभूत्। इह तु मत्वन्तात्प्रत्ययविधानात्तस्यैव लुक् भविष्यति॥ **३४७२ अश्विमान्**। अश्विशब्दो यस्मिन्मन्त्रेऽस्ति सोऽश्विमान्मन्त्रः स च 'ध्रुवक्षितिः–' इत्यादिकः। प्रथमान्तादश्विमच्छब्दादासामिति षष्ठ्यर्थे अण् स्यात् यत्प्रथमानिर्दिष्टमुपधानो मन्त्रश्चेत्स भवति। यत्तदासामिति निर्दिष्टमिष्टकाश्चेत्ता भवन्ति, मतोश्च लुक्॥—**आश्विनीरुपदधातीति**। अश्वशब्दात् 'अत इनिठनौ' इत्यस्त्यर्थे इनिः। तदन्तान्मतुप्। अश्विमान्स उपधानो मन्त्र आसामिष्टकानामिति विगृह्याणि विहिते मतोश्च लुकि कृते 'इनण्यनपत्ये' इति प्रकृतिभावः॥

**३४७३ वयस्यासु—**। वयस्वानुपधानो मन्त्र आसामिष्टकानां ताः–वयस्याः, तास्वभिधेयासु प्रथमासमर्थान्मतुबन्तमूर्धशब्दादासामिति षष्ठ्यर्थे मतुप्स्यात्। यत्प्रथमानिर्दिष्टमुपधानो मन्त्रश्चेत्स भवति, यदासामिति निर्दिष्टमिष्टकाश्चेत्ता भवन्ति। यस्मिन्मन्त्रे मूर्धशब्दो वयःशब्दश्च विद्यते स मूर्धवान् वयस्वान्, यथा 'मूर्धा वयः प्रजापतिश्छन्दः' इति, तत्र वयस्वच्छब्दादिव मूर्धवच्छब्दादपि पूर्वेण यति प्राप्ते मतुब्विधीयते–इत्याशयेनाह—**यस्मिन्मन्त्रे इति**॥—**मूर्धन्वतीरिति**। 'अनो नुट्' इति नुडागमः। मूर्धवत इति वक्तव्ये भाविनं मतुब्लुकं चेतसि कृत्वा मूर्ध्न इत्युक्तम्॥ **३४७४ मत्वर्थे—**। यस्मिन्नर्थे मतुब्विहितस्तस्मिन्नर्थे प्रथमान्ताद्यत्स्यात् मासतन्वोरभिधेययोः॥ ननु प्रथमासमर्थमिति कस्मादागतमिति चेन्मत्वर्थग्रहणादित्यवेहि। 'कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः' इति ऊकारान्तस्तनूशब्दः सूत्रे निर्दिष्टः। न तु 'भृमृशीङ्तृचरित्सरितनिधनिमिमस्जिभ्य उः' इत्युकारान्तः। 'द्वन्द्वे घि' इति पूर्वनिपातप्रसङ्गात्॥—**ओजस्या इति**। ओजो यस्या यस्यां वा अस्तीत्योजस्या॥ **३४७५ मधोः—**। मधुशब्दान्मत्वर्थे ञः स्याच्चाद्यत्॥—**मधव्या इति**। ओर्गुणः। 'वान्तो यि–' इति

मधव्यः ।

३४७६ । **ओजसोऽहनि यत्खौ** ।४।४।१३०। ओजस्यमहः, ओजसीनं वा ।

३४७७ । **वेशोयशआदेर्भगाद्यल्खौ** ।४।४।१३१। यथासंख्यं नेष्यते । वेशो बलं तदेव भगः–इति कर्मधारयः । वेशोभग्यः । वेशोभगीनः । यशोभग्यः । यशोभगीनः ।

३४७८ । **पूर्वैः कृतमिनयौ च** ।४।४।१३२। गम्भीरेभिः पथिभिः पूर्विणेभिः । ये ते पन्थाः सवितः पूर्व्यासः ।

३४७९ । **अद्भिः संस्कृतम्** ।४।४।१३३। यस्येदमप्यं हविः ।

३४८० । **सहस्रेण संमितौ घः** ।४।४।१३४। सहस्रियासो अपां नोर्मयः । सहस्रेण तुल्या इत्यर्थः ।

३४८१ । **मतौ च** ।४।४।१३५ ।सहस्रशब्दान्मत्वर्थे घः स्यात् । सहस्रमस्यास्तीति सहस्रियः ।

३४८२ । **सोममर्हति यः** ।४।४।१३६। सोम्यो ब्राह्मणः । यज्ञार्ह इत्यर्थः ।

३४८३ । **मये च** ।४।४।१३७। सोमशब्दाद्यः स्यान्मयडर्थे । सोम्यं मधु । सोममयमित्यर्थः ।

३४८४ । **मधोः** ।४।४।१३८। मधुशब्दान्मयडर्थे यत्स्यात् । मधव्यः । मधुमय इत्यर्थः ।

३४८५ । **वसोः समूहे च** ।४।४।१३९। चान्मयडर्थे यत् । वसव्यः ॥ ॐ **अक्षरसमूहे छन्दस उपसंख्यानम्** । छन्दःशब्दादक्षरसमूहे वर्तमानात्स्वार्थे यदित्यर्थः । 'आश्रावय' इति चतुरक्षरम्, 'अस्तु श्रौषट्' इति चतुरक्षरं, 'ये यजामहे' इति पञ्चाक्षरं, 'यज' इति द्व्यक्षरम्, 'द्व्यक्षरो वषट्कारः' एष वै सप्तदशाक्षरश्छन्दस्यः ।

३४८६ । **नक्षत्राद्घः** ।४।४।१४०। स्वार्थे । नक्षत्रियेभ्यः स्वाहा ।

३४८७ । **सर्वदेवात्तातिल्** ।४।४।१४१। स्वार्थे । सविता नः सुवतु सर्वतातिम् । प्रदक्षिणिद्देवतातिमुराणः ।

३४८८ । **शिवशमरिष्टस्य करे** ।४।४।१४२। करोतीति करः, पचाद्यच् । शिवं करोतीति शिवतातिः । याभिः शन्ताती भवथो ददाशुषे । अथो अरिष्टतातये ।

३४८९ । **भावे च** ।४।४।१४३। शिवादिभ्यो भावे तातिः स्याच्छन्दसि । शिवस्य भावः शिवतातिः । शन्तातिः । अरिष्टतातिः ॥ **इति चतुर्थोऽध्यायः** ॥

## अथ पञ्चमोऽध्यायः ।

३४९० । **सप्तनोऽञ्छन्दसि** ।५।१।६१। 'तदस्य परिमाणम्–' १७२३ इति 'वर्गे' इति च । सप्त साप्तानि असृजत् ॥ ॐ **शन्शतोर्डिनिश्छन्दसि तदस्य परिमाणमित्यर्थे वाच्यः** । पञ्चदशिनोऽर्धमासाः । त्रिंशिनो मासाः ॥ ॐ **विंशतेश्चेति वाच्यम्** । विंशिनोऽङ्गिरसः ॥ ॐ **युष्मदस्मदोः सादृश्ये वतुब्वाच्यः** ॥ त्वावतः पुरूवसो । न त्वावाँ अन्यः । यज्ञं विप्रस्य मावतः ।

अवादेशः ॥—**३४७६ ओजसोऽहनि—**। ओजःशब्दान्मत्वर्थे यत्खौ स्तोऽहन्यभिधेये ॥ ननु यद्ग्रहणं व्यर्थं, खश्चेत्येवास्त्विति चेन्मैवम् । खश्चेत्युच्यमानेऽनन्तरसूत्रविहितस्य अमात्रस्य समुच्चयो विज्ञायेत, तस्माद्यद्ग्रहणम् ॥ **३४७७ वेशोयश–**। वेशश्च यशश्च वेशोयशसी ते आदौ यस्य तस्माद्वेशोयशआदेर्भगात्प्रातिपदिकाद्यल्खौ स्तो मत्वर्थे । लकारः स्वरार्थः ॥ **३४७८ पूर्विणेभिरिति** । पूर्वैः कृताः पूर्विणाः, तैः । एवं पूर्व्यासः पूर्विणाः ॥ **३४७९ अद्भिः–**। तृतीयान्तादप्शब्दात्संस्कृतमित्यर्थे यत्स्यात् ॥ **३४८० सहस्रेण—**। तृतीयान्तात्सहस्रशब्दात्संमितमित्येतस्मिन्नर्थे घः स्यात् । संमितः सदृशस्तुल्य इत्यर्थः ॥—**सहस्रिया इति** । सहस्रेण संमिताः सहस्रियाः । 'यस्येति च' इत्यकारलोपः । समिताविति पाठान्तरम् ॥ **३४८१ मतौ—**। 'तपःसहस्राभ्यां विनीनी' इत्यस्यापवादः ॥ **३४८२ सोममर्हति—**। द्वितीयान्तात्सोमशब्दादर्हतीत्यस्मिन्नर्थे यः स्यात् ॥—**सोम्य इति** । सोममर्हतीति सोम्यः ॥ **३४८३ मये च** । आगतविकारावयवप्रकृता मयडर्थाः । तत्रागते पञ्चमी समर्थविभक्तिः, विकारावयवयोः षष्ठी, प्रकृतवचने प्रथमा ॥ **३४८४ मधोः** ॥—**यः स्यादिति** । वृत्तिकारस्तु यतमेवानुवर्तयति न तु यम् ॥ **३४८६ नक्षत्रात्–**॥—**स्वार्थ इति** । समूह इति नानुवर्तते । तेनाऽनिर्दिष्टार्थत्वात्स्वार्थे प्रत्यय उत्पद्यत इत्यर्थः ॥ **३४८७ सर्वदेवात्–**। सर्वशब्दाद्देवशब्दाच्च तातिल् स्यात् ॥ **३४८८ शिवशम–**। करशब्दसामानाधिकरण्यात् 'शिवशमरिष्टस्य' इति 'उभयप्राप्तौ कर्मणि' इति षष्ठी ॥ **इति वैदिकसुबोधिन्यां चतुर्थोऽध्यायः** ॥

**३४९० सप्तनोऽञ्–**। सप्तन्शब्दादञ् स्याच्छन्दसि ॥—**साप्तानीति** । सप्तन्शब्दादञि 'नस्तद्धिते' इति टिलोपे तद्धितान्तत्वात्प्रातिपदिकसंज्ञायां जस् । 'जश्शसोः शिः' । 'नपुंसकस्य–' इति नुम् । उपधाया दीर्घः ॥ ॐ **शन्शतोः–**। डित्करणं शदन्तस्य टिलोपार्थम् ॥—**पञ्चदशिन इति** । पञ्चदशाहानि परिमाणमेषामिति डिनिः, टिलोपः । एतेन त्रिंशिनो व्याख्याताः ॥—**विंशिनोऽङ्गिरस इति** । विंशतिर्गोत्राणि परिमाणमेषामिति विग्रहे डिनि कृते 'तिविंशतेर्डिति' इति तिशब्दलोपे कृते यस्येति लोपः । आङ्गिरसाऽयास्यगार्ग्यगौतम इत्यादिप्रवरभेदभिन्नानि विंशतिरवान्तरगोत्राणि परिमाणमेषामित्यर्थः ॥—**त्वावत इति** । त्वमिव त्वावान्, तस्य त्वावतः । अहमिवेति मावान्, तस्य मावतः । 'प्रत्ययोत्तरपदयोश्च'

१ **यथेति—**अत्र वृत्तिकृतः **'यत्, ख च'** इति सूत्रं व्यभजन् । तत् 'यथासंख्यं नेष्यते' इति मूलविरुद्धं 'यथासंख्य–' सूत्रस्थभाष्यविरुद्धं च । २ **यत्स्यादिति** । तत्त्वबोधिनीकारैः 'यः स्यात्' इत्येव पाठो दृष्टः । स च वृत्तिकाराद्यननुकूल इति लेखकैः परिवर्तित इति सम्भाव्यते । शेखरकाराश्च 'य इति निवृत्तम्' इत्येव वदन्ति ।

३४९१ । छन्दसि च ।५।१।६७। प्रातिपदिकमात्रात्तदर्हतीति यत् । सादन्यं विदथ्यम् ।

३४९२ । वत्सरान्ताच्छश्छन्दसि ।५।१।९१। निर्वृत्तादिष्वर्थेषु । इद्वत्सरीयः ।

३४९३ । संपरिपूर्वात्ख च ।५।१।९२। चाच्छः । संवत्सरीणः, संवत्सरीयः । परिवत्सरीणः, परिवत्सरीयः ।

३४९४ । छन्दसि घस् ।५।१।१०६। ऋतुशब्दात्तदस्य प्राप्तमित्यर्थे । भाग ऋत्वियः ।

३४९५ । उपसर्गाच्छन्दसि धात्वर्थे ।५।१।११८। धात्वर्थविशिष्टे साधने वर्तमानात्स्वार्थे वतिः स्यात् । यदुद्वतो निवतः । उद्गतान्निर्गतादित्यर्थः ।

३४९६ । थट् च छन्दसि ।५।२।५०। नान्तादसंख्यादेः परस्य डटस्थट् स्यान्मट् च । पञ्चथम्, पञ्चमम् ।

'छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि-' १८८९ । पर्यवस्थाता शत्रुः । अपत्यं परिपन्थिनम् । मा त्वा परिपरिणो विदन् ।

३४९७ । बहुलं छन्दसि ।५।२।१२२। मत्वर्थे विनिः स्यात् ॥ ॐ छन्दोविन्प्रकरणेऽष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घश्चेति वक्तव्यम् । इति दीर्घः । मंहिष्ठमुभयाविनम् । शुनमष्ट्राव्यचरत् ॥ ॐ छन्दसीवनीपौ च वक्तव्यौ ॥ ई-रथीरभूत्, सुमङ्गलीरियं वधूः । मघवानमीमहे ।

३४९८ । तयोर्दार्हिलौ च छन्दसि ।५।३।२०। इदन्तदोर्यथासंख्यं स्तः । इदा हि व उपस्तुतिम् । तर्हि ।

३४९९ । था हेतौ च छन्दसि ।५।३।२६। किमस्था स्याद्धेतौ प्रकारे च । कथा ग्रामं न पृच्छसि । कथा दाशेम ।

३५०० । पश्च पश्चा च छन्दसि ।५।३।३३। अवरस्य अस्तात्यर्थे निपातौ । पश्च हि सः । नो ते पश्चा ।

'तुश्छन्दसि' २००७ । तृजन्तात्तृन्नन्ताच्च इष्ठन्नीयसुनौ स्तः । आसुतिं करिष्ठः । दोहीयसी धेनुः ।

३५०१ । प्रत्नपूर्वविश्वेमात्थाल्छन्दसि ।५।३।१११ इवार्थे । तं प्रत्नथा पूर्वथा विश्वथेमथा ।

---

इति त्वमादेशौ । 'आ सर्वनाम्नः' इत्यात्वम् ॥ ३४९१ **सादन्यमिति** । सदनं गृहमर्हतीति सादन्यः । 'अन्येषामपि-' इति दीर्घः ॥—**विदथ्यमिति** । विदथो यज्ञस्तमर्हतीत्यर्थः ॥ ३४९२ **इद्वत्सरीय इति** । इद्वत्सरेण निर्वृत्तः, इद्वत्सरमधीष्टो भृतो भूतो भावी वा-इद्वत्सरीयः । इद्वत्सरेदावत्सरशब्दौ पञ्चवर्षे युगे द्वयोर्वर्षयोः संज्ञे । एवं संवत्सरपरिवत्सरशब्दादपि ॥ ३४९३ **संपरिपूर्वात्**-। संपरिपूर्वाद्वत्सरान्तात्प्रातिपदिकाच्छन्दसि विषये निर्वृत्तादिष्वर्थेषु खः स्यात् । चाच्छः ॥ ३४९४ **छन्दसि घस्** । 'समयस्तदस्य प्राप्तम्' इत्यतस्तदस्य प्राप्तमिति 'ऋतोरण्' इत्यतः ऋतोरिति चानुवर्तते, तदाह—**ऋतुशब्दादित्यादि** ॥—**ऋत्विय इति** । 'सिति च' इति पदत्वेन भत्वे निरस्ते 'ओर्गुणः' इति गुणाभावे यण् ॥ ३४९५ **उपसर्गात्**-। इह धातुशब्देन धातुवाच्या क्रिया लक्ष्यते । सोऽर्थः=प्रयोजनं यस्य साधनस्य तस्मिन् वर्तमानादित्यर्थः, तदाह—**धात्वर्थविशिष्ट इति** । उपसर्गाश्च पुनरेवमात्मकाः-यदुत श्रुतायां क्रियायां तामेव विशिंषन्ति । यथा आगच्छति । यत्र तु न श्रूयते तत्र क्रियाविशिष्टसाधनमाहुः । यथा निष्कौशाम्बिः । तथा च यत्र क्रियापदं न श्रूयते तत्रैव यथा स्यादित्येवमर्थं 'धात्वर्थे' इत्युक्तम् ॥ ३४९६ **थट् च**-। 'तस्य पूरणे-' इत्यतो डडिति 'नान्तादसंख्यादेः-' इति च, तदाह—**नान्तादित्यादि** ।—**पञ्चथमिति** । पञ्चानां पूरणमित्यस्मिन्नर्थे डटि कृते तस्य थडागमः ॥—**छन्दसि** । 'परिपन्थिन्-परिपरिन्' एतौ निपात्येते छन्दसि पर्यवस्थातरि वाच्ये । पर्यवस्थाता प्रतिपक्षः सपत्न इत्युच्यते । निपातनं चात्र पर्यवस्थातृशब्दात्स्वार्थे इनिः प्रत्ययोऽवस्थातृशब्दस्य 'पन्थि-परि' एतावादेशौ च निपात्येते ॥ ३४९७ **बहुलम्**-। 'अस्मायामेधास्रजो विनिः' इत्यतो विनिरिति वर्तते, तदाह—**विनिः स्यादिति** ॥—**अष्ट्रावीति** । 'अशेः ष्ट्रन्' अष्ट्रा । दंष्ट्रापर्यायोऽयम् । मेखलावी, द्वयावी, उभयावी, रुजावी, हृदयावी । अत्र द्वयोभयहृदयान्येव दीर्घत्वं प्रयोजयन्ति, अन्येषां स्वत एव दीर्घत्वात् ॥—**छन्दसि**-। ईश्च वनिप् च-ईवनिपौ ॥—**ई इति** । ईप्रत्ययस्योदाहरणमुच्यते ॥—**रथीरिति** । रथोऽस्यास्तीति रथी ॥—**सुमङ्गलीरिति** । सुष्ठु मङ्गलमिति 'सुः पूजायाम्' इति समासः । ततोऽनेन मत्वर्थीय ईकारप्रत्ययः ॥—**मघवानिति** । मघं=धनं, तदस्यास्तीति वनिप् । मतुपि तु मघवच्छब्दः ॥ ३४९८ **तयोः**-। तच्छब्देन 'इदमोर्हिल्' 'तदो दा च' इति संनिहिताविदन्तदौ परामृश्येते, तदाह—**इदन्तदोरिति** । सूत्रे व्यत्ययेन पञ्चम्याः स्थाने षष्ठी ॥—**यथासंख्यं स्त इति** । इदंशब्दाद्दा, तच्छब्दात् र्हिल् ॥—**इदा** । इदम्शब्दाद्दा, 'इदम इश्' इत्यनेनेदम इशादेशः ॥ ३४९९ **था हेतौ**-। 'प्रकारवचने थाल्' इत्यतः प्रकारवचन इति, किमश्चेति च । तदाह—**किमस्था स्यादित्यादि** ॥—**कथा ग्रामं न पृच्छसीति** । केन हेतुना न पृच्छसीत्यर्थः । तस्य 'प्राग्दिशो विभक्तिः' इत्यधिकाराद्विभक्तिसंज्ञाया 'किमः कः' इति कादेशः । प्रकारवचने उदाहरणमाह—**कथा दाशेमेति** । केन प्रकारेणेत्यर्थः ॥ ३५०० **पश्च पश्चा**-। अवरस्य पश्चभावः, अकाराकारौ च प्रत्ययौ निपात्येते ॥—**अस्तात्यर्थे इति** । 'दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः' ॥—**करिष्ठ इति** । कर्तृशब्दादिष्ठन् । 'तुरिष्ठेमेयःसु' इति तृलोपः ॥—**दोहीयसीति** । अतिशयेन दोग्ध्रीत्यर्थः । लिङ्गविशिष्टपरिभाषया दोग्ध्रीशब्दात्प्रत्ययः । 'भस्याढे-' इति पुंवद्भावेन ङीपो निवृत्तिः । ततः 'तुरिष्ठेमेयःसु' इति तृचि निवृत्ते निमित्ताभावाद्धत्वकुत्वयोरपि निवृत्तिः ॥ ३५०१ **प्रत्नपूर्व**-। प्रत्न पूर्व विश्व

---

१ 'मात्रात् 'तदर्हति' इत्यर्थे यत्स्याच्छन्दसि' इत्येवम्पाठः क्वचिद्दृश्यते ।

३५०२ । अमु च छन्दसि ।५।४।१२। किमेत्तिङव्ययघादित्येव । प्रतं नय प्रतरम् ।

३५०३ । वृकज्येष्ठाभ्यांतिल्तातिलौ च छन्दसि ।५।४।४१। स्वार्थे । यो नो दुरेवो वृकतिः । ज्येष्ठतातिं बर्हिषदम् ।

३५०४ । अनसन्तान्नपुंसकाच्छन्दसि ।५।४।१०३। तत्पुरुषाट्टच् स्यात्समासान्तः । ब्रह्मसामं भवति । देवच्छन्दसानि ।

३५०५ । बहुप्रजाश्छन्दसि ।५।४।१२३। बहुप्रजा निर्ऋतिमाविवेश ।

३५०६ छन्दसि च ।५।४।१४२। दन्तस्य दतृ स्याद्बहुव्रीहौ । उभयतोदतः प्रतिगृह्णाति ।

३५०७ । ऋतश्छन्दसि ।५।४।१५८। ऋदन्ताद्बहुव्रीहेर्न कप् । हता माता यस्य हतमाता ॥ इति पञ्चमोऽध्यायः ।

---

## अथ षष्ठोऽध्यायः ।

'एकाचो द्वे प्रथमस्य-' २१७२ ॥ ॐ छन्दसि वेति वक्तव्यम् । यो जागार । दाति प्रियाणि ।

३५०८ । तुजादीनां दीर्घोऽभ्यासस्य ।६।१।७। तुजादिराकृतिगणः । प्रभरा तूतुजानः । सूर्यं मामहानम् । दाधार यः पृथिवीम् । स तूताव ।

३५०९ । बहुलं छन्दसि ।६।१।३४। ह्वः संप्रसारणं स्यात् । इन्द्रमा हुव ऊतये ॥ ॐ ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि । ऋच्शब्दे परे त्रेः संप्रसारणमुत्तरपदादेर्लोपश्चेति वक्तव्यम् । तृचं साम । छन्दसि किम् । त्र्यृचानि ॥ ॐ रयेर्मतौ बहुलम् । रेवान् । रयिमान्पुष्टिवर्धनः ।

३५१० । चायः की ।६।१।३५। न्यन्यं चिक्युर्न निचिक्युरन्यम् । लिटि उसि रूपम् । बहुलग्रहणानुवृत्तेर्नेह—अग्निं ज्योतिर्निचाय्य ।

३५११ । अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताश्रितमाशीराशीर्ताः ।६।१।३६। एते छन्दसि निपात्यन्ते । इन्द्रश्च विष्णो यदपस्पृधेथाम् । स्पर्धेर्लङि आथाम् । अर्कमानृचुः, वसून्यानृहुः, अर्चेरर्हेश्च लिट्युसि । चिच्युषे, च्युङो लिटि थासि । यस्तित्याज, त्यजेर्णलि । श्रातास्त इन्द्र सोमाः, श्रिता नो ग्रहाः, 'श्रीञ् पाके'

---

इम एभ्यस्थाल् स्यात् ॥ ३५०२ अमु च–। किमेत्तिङव्ययघाद् द्रव्यप्रकर्षे वर्तमानादमुप्रत्ययो भवति ॥—प्रतरमिति । प्रकर्षार्थस्य प्रकर्षस्य प्रकर्षे तरप्, प्रकृष्टतर इतिवत् । तदन्तादमुः । स्वरादिषु 'अम्–आम्' इति पठ्येते, तेन तदन्तस्याव्ययत्वे सुपो लुक् । अत्रोदित्करणम् 'इच एकाचोऽम्प्रत्ययवच्च' इत्यत्रास्य ग्रहणं माभूत् । यदि स्यात्तर्हि अत्रापि यद्दृष्टं कार्यं तदप्यतिदिश्येत । तत्र को दोषः ? इह श्रियंमन्यमानः । यस्येति लोपः प्राप्नोति ॥ ३५०४ अनसन्तात्–। अन्नन्तस्योदाहरणमाह —ब्रह्मसाममिति । असन्तस्याह—देवच्छन्दसानीति ॥ ३५०५ बहुप्रजाः–। बहुप्रजा इति निपात्यते छन्दसि ॥—बहुप्रजा इति । बह्व्यः प्रजा यस्येति बहुव्रीहिः । असिच् प्रत्ययः । 'यस्येति च' इत्याकारलोपः । 'अत्वसन्तस्य–' इति दीर्घः । रुत्वविसर्गौ ॥ ३५०६ छन्दसि च । 'वयसि दन्तस्य दतृ' इत्यतो 'दन्तस्य दतृ' इत्यनुवर्तते, तदाह—दन्तस्य दतृ स्यादिति ॥ —उभयतोदत इति । उभयतो दन्ता यस्येति विग्रहः ॥ ३५०७ हतमाता इति । 'नद्यृतश्च' इति नित्यं कप् प्राप्तः ॥ इति सुबोधिन्यां पञ्चमोऽध्यायः ॥

जागारेति । जागृ निद्राक्षये । लिटि प्रथमपुरुषैकवचनम् ॥—दातीति । 'डुदाञ् दाने' लट् । शपः श्लुः । 'श्लौ' इति नित्यं द्वित्वे प्राप्ते विकल्पः ॥ ३५०८ तूतुजान इति । तुजेर्लिट्, तस्य कानजादेशः ॥—मामहानमिति । 'मह पूजायां' कानच् ॥—तूतावेति । तुः सौत्रो धातुः, तस्माल्लिट् ॥ ३५०९ बहुलं छन्दसि । 'ह्वः संप्रसारणं' इति वर्तते, तदाह—ह्वः संप्रसारणं स्यादिति ॥—आहुवे इति । आङ्पूर्वात् ह्वेञो लडात्मनेपदोत्तमैकवचनम् । 'बहुलं छन्दसि' इति शपो लुकि कृते संप्रसारणमुवङादेशश्च ॥—तृचं सूक्तमिति । तिस्रः ऋचो यस्मिंस्तत् तृचम् । 'ऋक्पूरब्धूःपथामानक्षे' इति समासान्तः–अः ॥—रयेर्मतौ । रयिशब्दस्य मतौ परतः संप्रसारणं स्याच्छन्दसि ॥—रेवानिति । 'छन्दसीरः' इति वत्वम् ॥—रयिमानिति । बहुलग्रहणात्संप्रसारणवत्वयोरभावः ॥ ३५१० चायः की । चायतेर्बहुलं कीत्ययमादेशः स्याच्छन्दसि ॥—चिक्युरिति । 'कुहोश्चुः' इति चुः ॥—निचाय्येति । 'चायृ पूजानिशामनयोः' अस्मात्क्त्वा । गतिसमासे 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति ल्यबादेशः ॥ ३५११ स्पर्धेर्लङ्याथामिति । द्विर्वचनं, रेफस्य संप्रसारणम्, अकारलोपश्च निपातनात् । अस्पर्धेथामिति भाषायाम् । अपरे तु—अपपूर्वस्य स्पर्धेर्लङ्याथामि संप्रसारणमलोपश्च निपातनात् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडागमाभावः । तन्मते प्रत्युदाहरणमपास्पर्धेथामिति भाषायाम् ॥—अर्चेरर्हेश्चेति । संप्रसारणमलोपश्च निपातनात् । ततो द्विर्वचनमुरदत्वम्, 'अत आदेः' इति दीर्घत्वम् । 'तस्मान्नुड् द्विहलः' इति नुडागमः । आनर्चुरानर्हुरिति भाषायाम् ॥—च्युङो लिटीति । अभ्यासस्य संप्रसारणमनिट्त्वं च निपातनात् । 'चुच्युविषे' इति भाषायाम् ॥—त्यजेर्णलीति । त्यज वयोहानौ । अभ्यासस्य संप्रसारणं निपात्यते । तत्याजेति भाषायाम् ॥—श्राता इति ।

---

१ अत्र सर्वेषु मुद्रितपुस्तकेषु 'प्रकर्षार्थस्य प्रकर्षे तरप्' इत्येव पाठः । प्राचीनलिखितपुस्तकपाठोऽस्माभिरादृतः । प्रकर्षार्थस्य प्रशब्दस्य यः प्रकर्षरूपोऽर्थस्तस्य प्रकर्षे तरप्–इत्येवमर्थः ।

निष्ठायाम् । आशिरं दुहे, मध्युत आशीर्तः, श्रीञ एव क्विपि निष्ठायां च ।

३५१२ । खिदेश्छन्दसि ।६।१।५२। 'खिद दैन्ये' अस्यैच आ स्यात् । चिखाद । चिखेदेत्यर्थः ।

३५१३ । शीर्षंश्छन्दसि ।६।१।६०। शिरःशब्दस्य शीर्षन् स्यात् । शीर्ष्णः शीर्ष्णो जगतः ।

३५१४ । वा छन्दसि ।६।१।१०६। दीर्घाज्जसि इचि च पूर्वसवर्णदीर्घो वा स्यात् । वाराही, वाराह्यौ । मानुषीरीळते विशः । उत्तरसूत्रद्वयेऽपीदं वाक्यभेदेन संबध्यते । तेनामि पूर्वत्वं वा स्यात् । शमीं च शम्यं च । सूर्म्यं सुषिरामिव । 'संप्रसारणाच्च' ३३० इति पूर्वरूपमपि वा । इज्यमानः, यज्यमानः ।

३५१५ । शेश्छन्दसि बहुलम् ।६।१।७०। लोपः स्यात् । या ते गात्राणाम् । ताता पिण्डानाम् ॥ ॐ एमन्नादिषु छन्दसि पररूपं वक्तव्यम् । अपां त्वेमन् । अपां त्वोद्मन् ।

३५१६ । भय्यप्रवय्ये च छन्दसि ।६।१।८३। बिभेत्यस्मादिति भय्यः । वेतेः 'प्रवय्या' इति स्त्रियामेव निपातनम् । 'प्रवेयम्' इत्यन्यत्र । छन्दसि किम् । भेयम् । प्रवेयम् ॥ ॐ ह्रदय्या उपसंख्यानम् । ह्रदे भवा ह्रदय्या आपः । भवे छन्दसि यत् ।

३५१७ । प्रकृत्यान्तःपादमव्यपरे ।६।१।११५। ऋक्पादमध्यस्थ एङ् प्रकृत्या स्यादति परे, न तु वकारयकारपरेऽति । उपप्रयन्तो अध्वरम् । सुजाते अश्वसूनृते । अन्तःपादं किम् । एतास एतेऽर्चन्ति । अव्यपरे किम् । तेऽवदन् ।

३५१८ । अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च ।६।१।११६। एषु व्यपरेऽप्यति एङ् प्रकृत्या । वसुभिर्नो अव्यात् । मित्रमहो अवद्यात् । मा शिवासो अवक्रमुः । ते नो अव्रत । शतधारो अयं मणिः । ते नो अवन्तु । कुशिकासो अवस्यवः । यद्यपि बह्वृचैः 'ते नोऽवन्तु रथतूः' 'सोऽयमागात्' तेऽरुणेभिः' इत्यादौ प्रकृतिभावो न क्रियते, तथापि बाहुलकात्समाधेयम् । प्रातिशाख्ये तु वाचनिक एवायमर्थः ।

---

'श्रीञ् पाके' इत्यस्य निष्ठायां श्राभावः ॥—**श्रिता इति** । तस्यैव श्रीणातेर्ह्रस्वत्वं च ॥—**आशिरमिति** । आङ्पूर्वस्य श्रीणातेः क्विप् धातोः शिर आदेशः । तस्माद्द्वितीयैकवचनम् ॥—**आशीर्त इति** । श्रीञ आङ्पूर्वस्य शिर इत्यादेशः ॥—**निष्ठायाञ्चेति** । नत्वाभावो निपातनात् । 'हलि च' इति दीर्घः ॥ **३५१२ खिदेश्छन्दसि** । 'आदेच उपदेशे-' इत्यत आदिति, एच् इति च वर्तते, 'विभाषा लीयतेः' इत्यतो विभाषेति च, तदाह—**आद्वा स्यादिति** ॥—**चिखादेति** । व्यत्ययेन परस्मैपदम् ॥ **३५१३ शीर्ष्ण इति** । 'अल्लोपोऽनः' इत्यल्लोपः, 'रषाभ्याम्-' इति णत्वम् । 'पूर्वस्मादपि विधौ स्थानिवद्भावः' इति पक्षे तु 'अट्कुप्वाङ्-' इत्यनेन ॥ **३५१४ वा छन्दसि** । 'नादिचि' 'दीर्घाज्जसि च' इति च वर्तते, तदाह—**दीर्घादित्यादि** ॥—**वाराही इति** । वराहस्य विकार इति 'अवयवे च प्राण्योषधिवृक्षेभ्यः' इति 'प्राणिरजतादिभ्योऽञ्', ङीप् । द्विवचने पूर्वसवर्णदीर्घः । पूर्वसवर्णाभावे यणादेशः ॥—**मानुषीरिति** । प्रथमाबहुवचनम् । 'मनोर्जातावञ्यतौ षुक् च' इति अञ्, मनोः पुगागमः ॥—**सूत्रद्वये इति** । 'अमि पूर्वः' 'संप्रसारणाच्च' इत्यत्र ॥—**वाक्यभेदेनेति** । अकः अमि पूर्वरूपं वा स्याच्छन्दसि, तथा 'संप्रसारणाच्च' इति पूर्वरूपं वा स्याच्छन्दसि, तदाह—**तेनेति** ॥—**शम्यं चेति** । विकल्पविधानसामर्थ्यात्पूर्वरूपत्वाभावे पूर्वसवर्णदीर्घोऽपि न भवति । तयोरत्र विशेषाभावादिति यणादेश एव भवति ॥—**यज्यमान इति** । यजेर्लटः शानच् । 'सार्वधातुके-' इति यक्, 'आने मुक्' इति मुक् । 'ग्रहिज्या-' इति संप्रसारणं, पूर्वरूपस्य वैकल्पिकत्वादभावे यण् ॥ **३५१५ या ते इति** । यानीत्यर्थः । यच्छब्दात्परस्य शेर्लोपे कृते प्रत्ययलक्षणेन 'त्यदादीनामः' इति अत्वे 'नपुंसकस्य झलचः' इति नुम् । 'सर्वनामस्थाने च' इति दीर्घः । नलोपः ॥—**ता ता इति** । तानि तानीत्यर्थः पूर्ववत् ॥ **३५१६ भय्यप्रवय्ये-** । बिभेतेः प्रपूर्वस्य वी इत्येतस्य च यति प्रत्यये परतश्छन्दसि विषये यादेशो निपात्यते ॥—**भय्य इति** । 'कृत्यल्युटः-' इति अपादाने यत् ॥—**ह्रदय्या इति** । अकारस्यायादेशः ॥ **३५१७ प्रकृत्या-** । पादस्य मध्ये इत्यन्तःपादमित्यव्ययीभावः । अन्तरित्यव्ययमधिकरणशक्तिप्रधानं मध्यमाचष्टे । पादश्चेह ऋक्पाद एव गृह्यते न श्लोकस्य । 'वा छन्दसि' इत्यतो मण्डूकप्लुत्या छन्दसीति वर्तते, तेनास्य वैदिकत्वं संपद्यत इत्याशयेनाह—**ऋक्पादमध्यस्थ इति** । 'एङः पदान्तात्-' इति सूत्रादेङः इति पञ्चम्यन्तमनुवृत्तं प्रथमया विपरिणम्यते, अन्यस्य कार्यिणोऽसंभवादित्यभिप्रेत्याह—**एङ् प्रकृत्येति** । सन्धिरूपं विकारं न यातीत्यर्थः ॥—**उपप्रयन्तो अध्वरमिति** । 'एङः पदान्तादति' इति प्राप्तः ॥—**अन्तःपादं किमिति** । ऋचीत्येव किं नोक्तमित्यर्थः ॥—**एतेऽर्चन्तीति** । 'कया मती कुत एतास एतेऽर्चन्ति शुष्मं वृषणो वसूया' इति । अत्र एते इति पादस्यान्ते एङस्ति, अकारश्च परस्य पादस्यादाविति न निमित्तिनिमित्तयोः पादमध्यस्थत्वमिति सत्यपि ऋक्त्वे प्रकृतिभावाभावः ॥ **३५१८ अव्यात्—** । एषामनुकरणत्वात्सुबन्तेन समासः । अव रक्षणे । आशीर्लिङ् । अवद्यादिति पञ्चम्येकवचनान्तम् । अवक्रमुरित्यवपूर्वस्य क्रमेर्लिट्युसि द्विर्वचनप्रकरणे 'छन्दसि वा वचनम्' इति द्विर्वचनाभावे रूपम् । केचित्तु अवचक्रमुरिति सूत्रे कृतद्विर्वचनं पठन्ति । तेषामुदाहरणं मृग्यम् । बह्वृचास्तावदवक्रमुरित्यधीयते ॥—**अव्रतेति** । वृङ्वृञोः 'मन्त्रे घस-' इति च्लेर्लुक् । 'आत्मनेपदेषु' इति झस्यादादेशः ॥—**अयमिति** । इदमः सौ 'इदोऽय् पुंसि' ॥ अवतेर्लोट्—**अवन्तु** । **अवस्य-**

३५१९ । **यजुष्युरः** ।६।१।११७। उरःशब्द एङन्तोऽति प्रकृत्या यजुषि । उरो अन्तरिक्षम् । यजुषि पादाभावादनन्तःपादार्थं वचनम् ।

३५२० । **आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बालेऽम्बिके पूर्वे** ।६।१।११८। यजुषि अति प्रकृत्या । आपो अस्मान्मातरः । जुषाणो अग्निराज्यस्य । वृष्णो अंशुभ्याम् । वर्षिष्ठे अधि नाके । अम्बे अम्बाले अम्बिके । अस्मादेव वचनात् 'अम्बार्थ-' २६७ इति ह्रस्वो न ।

३५२१ । **अङ्ग इत्यादौ च** ।६।१।११९। अङ्गशब्दे य एङ् तदादौ च अकारे य एङ् पूर्वः सोऽति प्रकृत्या यजुषि । प्राणो अङ्गे अङ्गे अदीध्यत् ।

३५२२ । **अनुदात्ते च कुधपरे** ।६।१।१२०। कवर्गधकारपरे अनुदात्तेऽति परे एङ् प्रकृत्या यजुषि । अयं सो अग्निः । अयं सो अध्वरः । अनुदात्ते किम् । अथोऽग्रे रुद्रे । अग्रशब्द आद्युदात्तः । कुधपरे किम् । सोऽयमग्निमन्तः ।

३५२३ । **अवपथासि च** ।६।१।१२१। अनुदात्ते अकारादौ अवपथाःशब्दे परे यजुषि एङ् प्रकृत्या । त्रीरुद्रेभ्यो अवपथाः । वपेस्थासि लङि 'तिङ्ङतिङः' ३९३५ इत्यनुदात्तत्वम् । अनुदात्ते किम् । यद्रुद्रेभ्योऽवपथाः । 'निपातैर्यद्यदि-' ३९३४ इति निघातो न ।

३५२४ । **आङोऽनुनासिकश्छन्दसि** ।६।१।१२६। आङोऽचि परेऽनुनासिकः स्यात्, स च प्रकृत्या । अभ्र आँ अपः । गभीर आँ उग्रपुत्रे ॥ ॐ **ईषाअक्षादीनां छन्दसि प्रकृतिभावो वक्तव्यः** । ईषा अक्षो हिरण्ययः । ज्या इयम् । पूषा अविष्टु ।

३५२५ । **स्यश्छन्दसि बहुलम्** ।६।१।१३३। 'स्यः' इत्यस्य सोर्लोपः स्याद्धलि । एष स्य भानुः ।

३५२६ । **ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे** ।६।१।१५१। ह्रस्वात्परस्य चन्द्रशब्दस्योत्तरपदस्य सुडागमः स्यान्मन्त्रे । हरिश्चन्द्रो मरुद्गणः । सुश्चन्द्र दस्म ।

३५२७ । **पितरामातरा च छन्दसि** ।६।३।३३। द्वन्द्वे निपातः । आ मा गन्तां पितरामातरा च । चाद्विपरीतमपि, न मातरापितरा नू चिदिष्टौ ।

'**समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु' १०१२** । समानस्य सः स्यान्मूर्धादिभिन्ने उत्तरपदे । सगर्भ्यः ॥ ॐ **छन्दसि स्त्रियां बहुलम्** ॥ विष्वग्देवयोरद्र्यादेशः ।

---

**व इति ।** अवेरसुन् औणादिकः । ततः क्यच्, 'क्याच्छन्दसि' इत्युः ॥ **३५१९ यजुष्युरः-॥-उरो अन्तरिक्षमिति ।** नन्वत्र 'प्रकृत्यान्तः पादम्-' इत्यनेनैव सिद्धे व्यर्थोऽयं योग इत्याशङ्क्याह-**यजुषि पादाभावादित्यादि ॥ ३५२० आपो जुषाणो-।** आपो इत्यादीनि पदान्यनुकरणानि, विभक्तिस्तु अनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वान्न भवति । 'सुपां सुलुक्-' इति विभक्तेर्लुग्वा । 'अम्बिके' 'पूर्वे' इत्येतदप्यनुकरणमेव । तत्र प्रथमं जसन्तमनुकरणम् । द्वितीयं स्वन्तम् । तृतीयं शसन्तम् । चतुर्थं ङ्यन्तम् । इतरे संबुद्ध्यन्ताः । 'आपो-जुषाणो-वृष्णो-वर्षिष्ठे' इत्येते शब्दाः 'अम्बिके'शब्दात्पूर्वौ यौ 'अम्बे-अम्बाले'शब्दौ तौ च ते अति परतः प्रकृत्या स्युः ॥ **३५२१ अङ्ग इत्यादौ च ॥—अङ्गशब्दे य एङिति ।** प्रकृत्या भवतीति वक्ष्यमाणेन संबन्धः ॥ **—तदादौ अकारे य एङ्पूर्व इति ।** अत्रापि पूर्ववत्संबन्धः । अतिक्रान्तपरामर्शिना तच्छब्देन इतिशब्दस्यार्थमाचष्टे । तस्याङ्गशब्दस्य यादिरवयवस्तदादिरवयवे योऽकारस्तस्मिन्परे य एङ् स इत्यर्थः ॥ नन्वत्र चकारः किमर्थ इति चेत्, शृणु— असति चकारेऽङ्गशब्दस्यैवैङ् तदादावति परतः प्रकृत्या भवतीत्यर्थः स्यात्ततश्चाङ्गे अङ्गे इत्यत्रैव स्यात् । अङ्गे अदीध्यदित्यत्र न स्यात् । सति तु तस्मिन्नङ्गशब्दस्य य एङ् यत्र कुत्रचिदति प्रकृत्या भवति, तदादौ चाति परतो यः कश्चिदेङ् स प्रकृत्या भवतीत्ययमर्थो भवति । तेन अङ्गे अङ्गे अदीध्यत्, प्राणो अङ्गे इत्युभयत्रापि भवति ॥ **३५२२ अनुदात्ते च कुधपरे ।** कुधौ परौ यस्मात्स तथोक्तः ॥**—कवर्गधकारेति ।** धकारे अकार उच्चारणार्थः ॥**—अग्निरिति ।** अग्निशब्दः 'अङ्गेर्निर्नलोपश्च' इति निप्रत्ययान्तोऽन्तोदात्तः । अध्वरशब्दः प्रातिपदिकस्वरेणान्तोदात्तः ॥**—आद्युदात्त इति ।** 'ऋज्रेन्द्राग्र-' इत्यादिना सूत्रेण निपातितः **३५२४ आङो-।** आङिति ङिद्विशिष्ट आकारो गृह्यते, यः-'**ईषदर्थे क्रियायोगे मर्यादाऽभिविधौ च यः । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्**' इत्यनेन लक्षितः । यद्यपि 'अभ्र आँ अपः' इत्यत्र आकारो न ईषदर्थादिचतुष्टयवृत्तिः, सप्तम्यर्थद्योतकत्वात् । तथापि 'वाक्यस्मरणयोरङित्' इत्यत्रैव तात्पर्यम् । अन्यत्र सर्वत्राङ् ङिद्वेदितव्यः । एवं तावद्भाष्ये स्थितम् ॥**—अभ्र आँ अप इति ।** सप्तम्यर्थद्योतकोऽत्राङ् । 'उपदेशेऽजनुनासिकः-' इतीत्संज्ञा तु न, उपदेशग्रहणात् ॥ **३५२५ स्यश्छन्दसि ।** 'स्यः' इति त्यदित्येतस्य प्रथमान्तस्यानुकरणम् 'सुपां सुलुक्' इति लुप्तषष्ठीकम् ॥ **—एष स्येति ।** एतदस्त्यदश्च त्यदाद्यत्वं, 'तदोः सः सौ' इति सः । एतदस्त्यदश्च परस्य सोः 'एतत्तदोः सुलोपः-' इति 'स्यश्छन्दसि-' इति च लोपः ॥ **३५२६ ह्रस्वात्—।** चन्द्रशब्दे उत्तरपदे ह्रस्वात्परः सुडागमो भवति । स च भवन् चन्द्रशब्दस्यैव, उभयनिर्देशे पञ्चमीनिर्देशो बलीयानित्याशयेनाह—**चन्द्रशब्दस्योत्तरपदस्येति ॥—सुडागमः स्यादिति ।** 'सुट् कात्पूर्वः' इत्यतः सुडित्यनुवर्तनात् ॥ **३५२७ पितरा-।** पूर्वपदस्यारङादेशो निपात्यते । उत्तरपद तु 'सुपां सुलुक्-' इत्यादिना विभक्तेराकारादेशः । 'ऋतो ङिसर्वनामस्थानयोः' इति गुणः ॥**—समानस्य—॥—सः स्यादिति ।** 'सहस्य सः' इत्यतः स इत्यनुवर्तते ॥**—सगर्भ्य इति ।** समानो गर्भः सगर्भः । तत्र भवः सगर्भ्यः । 'सगर्भसयूथसनुताद्यन्' इति यन् प्रत्ययः । अमूर्धेत्यादि किम्? समानमूर्धा । समानप्रभृतयः । समानोदर्काः ॥ ॐ **छन्दसि स्त्रियाम् ।** 'विष्वग्दे-

विश्वाची च घृताची च । देवद्रीचीं नयत देवयन्तः । कद्रीची ।

३५२८ । सध मादस्थयोश्छन्दसि ।६।३।९६। सहस्य सधादेशः स्यात् । इन्द्र त्वास्मिन्सधमादे । सोमः सधस्थम् ।

३५२९ । पथि च छन्दसि ।६।३।१०८। पथिशब्दे उत्तरपदे कोः कवं कादेशश्च । कवपथः, कापथः, कुपथः ।

३५३० । साढ्यै साढ्वा साढेति निगमे ।६।३।११३। सहेः क्त्वाप्रत्यये आद्यं द्वयं तृनि तृतीयं निपात्यते । मरुद्भिरुग्रः पृतनासु साळ्हा । अचोर्मध्यस्थस्य डस्य ळः ढस्य ळ्हश्च प्रातिशाख्ये विहितः । आह हि—

द्वयोश्चास्य स्वरयोर्मध्यमेत्य संपद्यते स डकारो ळकारः ।

ळ्हकारतामेति स एव चास्य ढकारः सन्नूष्मणा संप्रयुक्तः ॥ इति ।

३५३१ । छन्दसि च ।३।६।१२६। अष्टन आत्वं स्यादुत्तरपदे । अष्टापदी ।

३५३२ । मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ ।६।३।१३१। दीर्घः स्यान्मन्त्रे । अश्वावतीं सोमावतीम् । इन्द्रियावान्मदिन्तमः । विश्वकर्मणा विश्वदेव्यावता ।

३५३३ । ओषधेश्च विभक्तावप्रथमायाम् ।६।३।१३२। दीर्घः स्यान्मन्त्रे । यदोषधीभ्यः । अदधात्योषधीषु ।

३५३४ । ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ।६।३।१३३। दीर्घः स्यात् । आ तू न इन्द्र । नू मर्तः । उत वा घा स्यालात् । मक्षू गोमन्तमीमहे । भरता जातवेदसम् । तङिति थादेशस्य ङित्त्वपक्षे ग्रहणम् । तेनेह न–शृणोत ग्रावाणः । कूमनाः । अत्रा ते भद्रा । यत्रा नश्चक्रा । उरुष्याणः ।

३५३५ । इकः सुञि ।६।३।१३४। ऋचि दीर्घ इत्येव । अभीषुणः सखीनाम् । 'सुञः' ३६४२ इति षः । 'नश्च धातुस्थोरुषुभ्यः' ३६४७ इति णः ।

३५३६ । द्व्यचोऽतस्तिङः ।६।३।१३५। मन्त्रे दीर्घः । विद्मा हि चक्रा जरसम् ।

३५३७ । निपातस्य च ।६।३।१३६। एवा हि ते ।

( अन्येषामपि दृश्यते[1] ।६।३।१३७। अन्येषामपि पूर्वपदस्थानां दीर्घः स्यात् । पूरूषः । दण्डादण्डि । )

३५३८ । छन्दस्युभयथा ।६।४।५। नामि दीर्घो वा । 'धाता धातॄणाम्' इति बह्वृचाः । तैत्तिरीयास्तु ह्रस्वमेव पठन्ति ।

३५३९ । वा षपूर्वस्य निगमे ।६।४।९। षपूर्वस्यान उपधाया वा दीर्घोऽसंबुद्धौ सर्वनामस्थाने परे । ऋभुक्षाणम् । ऋभुक्षणम् । निगमे किम् । तक्षा । तक्षाणौ ।

---

वयोः–' इति [illegible] । बहुलग्रहणात्क्वचिन्न भवति ॥—**विश्वाची । देवद्रीचीति** । विश्वमञ्चतीति देवानञ्चतीति क्विन् । 'उगितश्च' इति ङीप् । 'अचः' इत्यकारलोपः । 'चौ' इति दीर्घत्वम् । अत्र विष्वग्देवयोरद्र्यादेशः प्राप्तो बाहुलकान्न । क्वचिच्च भवतीत्याह—**कद्रीचीति** । कुत्सितमञ्चतीति कद्रीची । किंशब्दस्य टेरद्र्यादेशः । ङीबल्लोपदीर्घाः पूर्ववत् ॥ **३५२८ सध माद–** । 'सहस्य सध्रिः' इत्यतः सहस्येति वर्तते । माद स्थ इत्येतयोरुत्तरपदयोः सहस्य सध इत्ययमादेशः स्यात् । सधेत्यविभक्तिको निर्देशः ॥—**सधमादे इति** । सह माद्यन्ति देवा अस्मिन्निति सधमादः=यज्ञ इति । 'मदोऽनुपसर्गे' इत्यपि प्राप्ते 'अजब्भ्यां स्त्रीखलनाः–' इति तद्बाधके ल्युटि 'हलश्च' इति घञ् । सूत्रे मादेत्यकार उच्चारणार्थः । तेन मादयतेः क्विबन्तस्य मादिति यद्रूपं तत्रापि भवति—'आ त्वा बृहन्तो हरयो युज्यमाना अर्वागिन्द्रः सधमादो वहन्तु' ॥—**सधस्थमिति** । सह तिष्ठतीति सधस्थः । 'आतोऽनुपसर्गे–' इति कः ॥ **३५३० साढ्यै** । एते त्रयो निपात्यन्ते निगमे ॥—**सहेः क्त्वाप्रत्यय इति** । पक्षे क्त्वाप्रत्ययस्य ध्यै आदेशश्च निपात्यते ॥—**साढ्यै**–सहेः क्त्वाप्रत्ययस्य ध्यै, 'हो ढः', ष्टुत्वं, 'ढो ढे लोपः', 'ढ्रलोपे–' इति दीर्घः ॥—**साढ्वा इति** । ढत्वादि पूर्ववत् ॥—**तृनि तृतीयमिति** । तृचि त्वन्तोदात्तं स्यात्, तथा 'भूरि चक्र–' इति मन्त्रे साढेत्याद्युदात्तं पठ्यते तन्न संगच्छेतेति भावः । सूत्रे इतिशब्दः प्रकारार्थः । तेन निष्ठायामपि निपातनं बोध्यम् । अषाळ्हो अग्ने वृषभः ॥—**द्वयोरिति** । अस्य आचार्यस्य मते द्वयोः स्वरयोर्मध्यमेत्य डकारो ळकारतां संपद्यते ऊष्मणा संप्रयुक्तो ढकारो ळ्हकारतामेतीत्यन्वयः ॥ **३५३१ अष्टापदीति** । अष्टौ पादा अस्या इति बहुव्रीहौ 'संख्यासुपूर्वस्य' इति पादस्य लोपे कृते 'पादोऽन्यतरस्याम्' इति ङीप् ॥ **३५३२ मन्त्रे–** । सोम, अश्व, इन्द्रिय, विश्वदेव्य, एषां मतुप्प्रत्यये परे दीर्घः स्यान्मन्त्रे ॥ **३५३३ ओषधेश्च** । न च 'कृदिकारादक्तिनः' इति ङीषा गतार्थता, अन्तोदात्ततापत्तेः । इष्यते त्वाद्युदात्तः, 'लघावन्ते–' इति फिट्सूत्रात् ॥ **३५३४ ऋचि तुनु–** । घ इति स्वरूपग्रहणं न तरप्तमपोः, छन्दसि घशब्दस्यैव दीर्घदर्शनात् ॥—**उत वेति** । भार्याया भ्राता श्यालस्ततः पञ्चमी ॥—**भरतेति** । लोण्मध्यमपुरुषबहुवचनस्य थस्य 'लोटो लङ्वत्' इत्यतिदेशात्तस्य स्थाने तादेशः 'तस्थस्थमिपाम्–' इत्यनेन ॥—**शृणोतेति** । 'तप्तनप्तनथनाश्च' इति तबादेशः । अत्र पित्त्वान्ङित्त्वं नास्ति ॥—**उरुष्याण इति** । उरुष्येति कण्ड्वादियगन्तो रक्षणार्थकः । लोटः सेर्हिः । 'अतो हेः' इति लुक् । 'न' इत्यस्य 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम् ॥ **३५३५ इकः—** । इगन्तस्य सुञि परतो दीर्घः स्यादृचि ॥ **३५३६ द्व्यचो–** । द्व्यचस्तिङन्तस्यातो दीर्घः स्यादृचि ॥—**विद्मेति** । 'विद ज्ञाने' लट् । 'विदो लटो वा' इति मसः स्थाने मः ॥—**चक्रेति** । लिटो मध्यमपुरुषबहुवचनम् ॥ **३५३७ निपातस्य च** । दीर्घः स्यान्मन्त्रे । एवशब्दश्चादिषु पाठान्निपातः ॥ **३५३८ छन्दस्यु–** । नामीति वर्तते, 'ढ्रलोपे–' इत्यतो दीर्घ इति च, तदाह—**नामीत्यादि** ॥ **३५३९ ऋभुक्षाणमिति** ।

---

१ अस्यात्र पाठो बहुषु पुस्तकेषु न दृश्यते । टीकाकृद्भिरस्पर्शात्संदिग्धमिव ।

३५४० । **जनिता मन्त्रे** ।६।४।५३। इडादौ तृचि णिलोपो निपात्यते । यो नः पिता जनिता ।

३५४१ । **शमिता यज्ञे** ।६।४।५४। शमयितेत्यर्थः ।

३५४२ । **युप्लुवोर्दीर्घश्छन्दसि** ।६।४।५८। ल्यपीत्यनुवर्तते । वियूय । विप्लूय ।

'**आडजादीनाम्**' २२५४ ।

३५४३ । **छन्दस्यपि दृश्यते** ।६।४।७३। अनजादीनामित्यर्थः । आनट् । आवः ।

'**न माङ्योगे**' २२२८ ।

३५४४ । **बहुलं छन्दस्यमाङ्योगेऽपि** ।६।४।७५। अडाटौ न स्तः, माङ्योगेऽपि स्तः । जनिष्ठा उग्रः सहसे तुराय । मा वः क्षेत्रे परबीजान्यवाप्सुः ।

३५४५ । **इरयो रे** ।६।४।७६। प्रथमं दध्रे आपः । रेभावस्याभीयत्वेनासिद्धत्वादालोपः । अत्र रेशब्दस्येटि कृते पुनरपि रेभावः । तदर्थं च सूत्रे द्विवचनान्तं निर्दिष्टम्–इरयोः–इति ।

३५४६ । **छन्दस्युभयथा** ।६।४।८६। भूसुधियोर्यण् स्यादियङुवङौ च । वनेषु चित्रं विभ्वम्, विभुवं वा । सुध्यो३ नव्यमग्ने, सुधियो वा ॥ ॐ **तन्वादीनां छन्दसि बहुलम्** । तन्वं पुषेम, तनुवं वा । त्र्यम्बकम्, त्रियम्बकं वा ।

३५४७ । **तनिपत्योश्छन्दसि** ।६।४।९९। एतयोरुपधालोपः क्ङिति प्रत्यये । वितत्निरे कवयः । शकुना इव पप्तिम ।

३५४८ । **घसिभसोर्हलि च** ।६।४।१००। सग्धिश्च मे । बब्धां ते हरी धानाः ।

'**हुझल्भ्यो हेर्धिः**' २४२५ ।

३५४९ । **श्रुशृणुपृकृवृभ्यश्छन्दसि** ।६।४।१०२। श्रुधी हवम् । शृणुधी गिरः । रायस्पूर्धि । उरुणस्कृधि । अपावृधि ।

३५५० । **वा छन्दसि** ।३।४।८८। हिरपिद्वा ।

३५५१ । **अङितश्च** ।६।४।१०३। हेर्धिः स्यात् । रारन्धि, रमेर्व्यत्ययेन परस्मैपदम्, शपः श्लुरभ्यासदीर्घश्च । अस्मे प्रयन्धि । युयोधि जातवेदः । यमेः शपो लुक् । यन्धि । यातेः शपः श्लुः ।

३५५२ । **मन्त्रेष्वाङ्यादेरात्मनः** ।६।४।१४१। आत्मन्शब्दस्यादेर्लोपः स्यादाङि । त्मना देवेषु ।

३५५३ । **विभाषर्जोश्छन्दसि** ।६।४।१६२। ऋजुशब्दस्य ऋतः स्थाने रः स्याद्वा इष्ठेमेयस्सु । त्वं रजिष्ठमनुनेषि, ऋजिष्ठं वा ।

ऋभुक्षिन्शब्द उणादिषु निपातितः । 'इतोऽत्सर्वनामस्थाने' इतीकारस्याकारादेशः ॥ **३५४० जनितेति** । जनयितेत्यर्थः ॥ **३५४१ शमिता** । निपातनं पूर्ववत् ॥ **३५४३ आनडिति** । नशेर्लुङि 'मन्त्रे घस–' इति लेर्लुक् । 'नशेर्वा' इत्यस्याभावे 'व्रश्च–' इति षः । जश्त्वेन डः । तस्य चर्त्वेन टः ॥**—आवरिति** । वृञो लुङि लेर्लुक् । गुणः, रेफस्य विसर्गः ॥ **३५४४ बहुलं छन्दसि** । माङ्योगेऽपि बहुलमडाटौ भवतः । अमाङ्योगेऽपि न भवतः । माङ्योगेऽपि च भवतः ॥**—जनिष्ठा इति** । जनेर्लुङ् थास् अडागमाभावः । माङ्योगेऽप्यडागममुदाहरति**—मा व इति** । वो युष्माकं क्षेत्रे भार्यायां परबीजानि=परेषां बीजानि=वीर्याणि मा अवाप्सुः=उप्तानि माभूवन् । वपेः कर्मणि लुङ् । व्यत्ययेन परस्मैपदम् । 'च्लेः सिच्', 'वदव्रज–' इति वृद्धिः । इदं काशिकानुरोधेनोदाहृतम् । अध्ययनं तु **वाप्सुरित्येव** दृश्यते । माङ्यटस्तूदाहरणान्तरमन्वेषणीयम् ॥ **३५४५ इरयो–** । 'इरे' इत्येतस्य रे आदेशः स्याच्छन्दसि ॥**—दध्रे इति** । धाञो लिटि झस्य 'लिटस्तझयोः–' इतीरेचि कृते रेभावः ॥ ननु चात्र परत्वाद्रेभावे कृतेऽनजादित्वादालोपो न प्राप्नोत्यत आह**—रेभावस्येति** । नन्वेवमपि रेभावस्यैव क्रादिनियमादिडागमः प्राप्नोति । न च रेभावस्य वैयर्थ्यम्, कृसृप्रभृतिष्वनिट्सु [illegible] **अत्रेति** ॥ कथं पुनर्लाक्षणिकस्य तस्येरेशब्दस्य रेभावो भवति ? तत्राह**—तदर्थं चेति** । द्विवचननिर्देशाल्लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्तत इति भावः ॥ **३५४६ तन्वादीनाम्** । तन्वादीनां बहुलमियङुवङादेशः स्याच्छन्दसि ॥**—तनुवमिति** । अधातुत्वादप्राप्त उवङ् विधीयते ॥**—तन्वमिति** । 'वा छन्दसि' इत्यमि पूर्वत्वाभावे यण् ॥**—त्र्यम्बकमिति** । त्रीणि अम्बकानि=नेत्राणि यस्यासौ त्र्यम्बको रुद्रः ॥ **३५४७ वितत्निरे इति** । 'तनु विस्तारे' लिटः प्रथमपुरुषबहुवचनम् । अत्राल्लोपस्यासिद्धत्वेऽपि 'अत एकहल्मध्ये–' इति एत्वाभ्यासलोपौ न, लोपविधानसामर्थ्यात् ॥**—पप्तिमेति** । 'पत्लृ पतने' लिटो मसो मस्य इट् । वितेनिरे पेतिमेति भाषायाम् ॥ **३५४८ घसिभसोः–** । अनयोरुपधालोपः [illegible] च क्ङिति ॥**—सग्धिरिति** । अदेः क्तिन् 'बहुलं छन्दसि' इति घस्लादेशे उपधालोपे च कृते 'झलो झलि' इति सलोपस्तकारस्य धत्वं धस्य जश्त्वम् । ततः समाना ग्धिः सग्धिरिति समासे कृते 'समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु' इति सूत्रेण समानस्य सः ॥**—बब्धामिति** । भसेर्लोटि ताम्, श्लुः । परं नित्यमप्युपधालोपं बाधित्वा बाहुलकात्प्रथमं 'श्लौ' इति द्वित्वम् । तत उपधालोपसलोपधत्वजश्त्वानि कर्तव्यानि ॥ **३५४९ श्रुशृणु–** । एभ्यो हेर्धिः स्यात् ॥**—श्रुधीति** । 'बहुलं छन्दसि' इति शपो लुक् । 'अन्येषामपि–' इति दीर्घत्वम् ॥**—शृणुधीति** । 'श्रुवः शृ च' इति श्रुवः शृभावश्च । विधानसामर्थ्यात् 'उतश्च प्रत्ययात्–' इति न हेर्लुक्, दीर्घः पूर्ववत् ॥**—पूर्धीति** । पॄ पालने । शपो लुक्, 'उदोष्ठ्यपूर्वस्य' इत्युत्वम् । 'हलि च' इति दीर्घः ॥**—उरुणस्कृधीति** । 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम् । 'कः करत्–' इत्यादिना विसर्जनीयस्य सत्वम् ॥**—अपावृधीति** । दीर्घः पूर्ववत् ॥ **३५५१ अभ्यासस्य दीर्घश्चेति** । तुजादित्वादिति भावः ॥—रारन्धीत्यत्र 'अनुदात्तोपदेश–' इत्यादिना मलोपो न, हेरङित्त्वात् ॥**—यमेः शपो लुगिति** । 'बहुलं छन्दसि' इत्यनेन । एवमुत्तरत्रापि ॥ **३५५२ विभा-**

१ 'त्वादातो लोपः' इति क्वचित् पाठः ।

३५५४ । **ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि** ।६।४।१७५। ऋतौ भवमृत्व्यम् । वास्तुनि भवं वास्त्व्यम्, वास्त्वं च । मधुशब्दस्याणि स्त्रियां यणादेशो निपात्यते-माध्वीर्नः सन्त्वोषधीः । हिरण्यशब्दाद्विहितस्य मयटो मशब्दस्य लोपो निपात्यते, हिरण्ययेन सविता रथेन ॥ इति षष्ठोऽध्यायः ।

---

## सप्तमोऽध्यायः ।

'शीङो रुट्' २४४२ ।

३५५५ । **बहुलं छन्दसि** ।७।१।८। रुडागमः स्यात् । 'लोपस्त आत्मनेपदेषु' ३५६३ इति पक्षे तलोपः, धेनवो दुह्रे । लोपाभावे-घृतं दुह्रते । अदृश्रमस्य ।

'अतो भिस ऐस्' २०३ ।

३५५६ । **बहुलं छन्दसि** ।७।१।१०। अग्निर्देवेभिः ।

३५५७ । **नेतराच्छन्दसि** ।७।१।२६। स्वमोरदड् न । वार्त्रघ्नमितरम् । छन्दसि किम् । इतरत्काष्ठम् ।

'समासेऽनञ्पूर्वे क्त्वो ल्यप्' ३३३२ ।

३५५८ । **क्त्वाऽपि छन्दसि** ।७।१।३८। यजमानं परिधापयित्वा ।

३५५९ । **सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः** ।७।१।३९। ऋजवः सन्तु पन्थाः । पन्थान इति प्राप्ते सुः । परमे व्योमन्, व्योमनि इति प्राप्ते ङेर्लुक् । धीती मती सुष्टुती, धीत्या मत्या सुष्टुत्येति प्राप्ते पूर्वसवर्णदीर्घः । या सुरथा रथीतमोभा देवा दिविस्पृशा, अश्विना, यौ सुरथौ दिविस्पृशावित्यादौ प्राप्ते आ । नताद्ब्राह्मणम्, नतमिति प्राप्ते आत् । यादेव विद्म तात्त्वा, यमिति प्राप्ते । न युष्मे वाजबन्धवः, अस्मे इन्द्राबृहस्पती, युष्मासु अस्मभ्यमिति प्राप्ते शे । उरुया, धृष्णुया, उरुणा धृष्णुनेति प्राप्ते या । नाभा पृथिव्याः, नाभाविति प्राप्ते डा । ता अनुष्ठ्योच्यावयतात्, अनुष्ठानमनुष्ठा व्यवस्थावदङ्, आङो ड्या । [1]साधुया, साध्विति प्राप्ते याच् । वसन्ता यजेत, वसन्ते इति प्राप्ते आल् ॥ ॐ इयाडियाजीकाराणामुपसंख्यानम् । उर्विया । दार्विया । उरुणा दारुणेति प्राप्ते इया । सुक्षेत्रिया । सुक्षेत्रिणेति प्राप्ते डियाच् । दृतिं न शुष्कं सरसी शयानम् । ङेरीकार इत्याहुः । तत्राद्युदात्ते पदे प्राप्ते व्यत्ययेनान्तोदात्तता । वस्तुतस्तु ङीपन्तात् ङेर्लुक् । ईकारादेशस्य तूदाहरणान्तरं मृग्यम् ॥ ॐ आङ्याजयारामुपसंख्यानम् । प्र बाहवा सिसृतम् । बाहुनेति प्राप्ते

षर्जोः-। 'र ऋतो हलादेर्लघोः' इत्यतः र ऋत इति 'तुरिष्ठेमेयःसु' इति च, तदाह—**ऋतः स्थाने इत्यादि** ॥—**३५५४ ऋत्व्य**-। ऋतुशब्दाद्यति वास्तुशब्दादणि यति च यणादेशो निपात्यते ॥—**मशब्दस्येति** । तस्यासिद्धत्वात् 'यस्य' इति लोपो न । 'अकृत्सार्व-' इति दीर्घस्त्वङ्गवृत्तपरिभाषया वारणीयः । यद्वा मकारमात्रस्य लोपः । ततो 'यस्य-' इति लोपे कृते प्रत्ययाकारस्य श्रवणम् ॥ **इति षष्ठोऽध्यायः** ॥

**३५५५ बहुलं छन्दसि** । छन्दसि विषये बहुलं रुडागमः स्यात् ॥—**दुह्रे इति** । दुहेर्लट्, टेरेत्वे झस्यादेशे रुट्, तलोपः । —**लोपाभावे इति** । 'लोपस्त आत्मनेपदेषु' इत्यस्य वैकल्पिकत्वादित्यर्थः ॥—**अदृश्रमिति** । 'दृशिर् प्रेक्षणे' लुङ्, व्यत्ययेन प्रथमपुरुषबहुवचनस्थाने उत्तमपुरुषैकवचनं मिप् । तस्य रुडागमः ॥ **३५५७ नेतरा**-। इतरशब्दात्परयोः स्वमोरद्डादेशो न स्याच्छन्दसि ॥—**इतरमिति** । 'अद्ड्डतरादिभ्यः' इत्यदडभावे 'अतोऽम्' इत्यम् ॥—**क्त्वो ल्यबिति** । समासेऽनञ्पूर्वे क्त्वो ल्यपि प्राप्ते छन्दसि क्त्वाऽपि विधीयते । तदाह—**३५५८ क्त्वापि**-। अनञ्पूर्वे समासे 'क्त्वा' इत्येतस्य 'क्त्वा' इत्ययमादेशः स्यात् । अपिशब्दाल्ल्यबपि । स च समासेऽसमासे च भवति—अप्राप्तिविषये ल्यपः, प्रापणार्थत्वादपिशब्दस्य । अन्यथा 'वा छन्दसि' इत्येव ब्रूयात् । तथा च छन्दोविधिमनुविदधानाः कल्पसूत्रकारा अपि प्रयुञ्जते—आज्येनाक्षिणी अज्येति ॥—**परिधापयित्वेति** । णिजन्तात्परिपूर्वाद्दधातेः क्त्वा, तस्य ल्यबादेशे प्राप्ते क्त्वादेशः ॥ **३५५९ सुपाम्**-। सुपां स्थाने सुः-लुक्-पूर्वसवर्णः-आ-आत्-शे-या-डा-ड्या-याच्-आल् एते आदेशाः स्युश्छन्दसि ॥—**पन्था इति** । 'व्यत्ययो बहुलम्' इत्येव सिद्धमिदम् । उक्तं हि तत्र—'सुप्तिङुपग्रह-' इत्यादि, तस्यैवायं प्रपञ्चः ॥—**धीतीत्यादि** । धीतीमथीसुष्टुतीशब्देभ्यस्तृतीयैकवचनस्य पूर्वसवर्ण ईकारः, प्रमाणत आन्तर्यात् । सवर्णदीर्घत्वम् ॥—**दिविस्पृशाविति प्राप्ते आ इति** । अनेनादित्यत्राकारोऽपि प्रश्लिष्यत इति दर्शितम् ॥—**नतादिति** । नतशब्दादम् । तस्यादादेशः । 'न विभक्तौ तु-' इतीत्संज्ञाप्रतिषेधः ॥ —**यादेवेत्यादि** । यत्तच्छब्दादम्, तस्यात् ॥—**न युष्मे इति** । युष्मदः सप्तमीबहुवचनस्य शे आदेशः । शेषे लोपः ॥—**अस्मे इन्द्रेति** । शे इति प्रगृह्यत्वादयादेशाभावः ॥—**नाभा इति** । डित्त्वाट्टिलोपः ॥—**ता अनुष्ठ्येति** । षड्विंशतिरस्य वङ्क्रय इति प्रक्रम्य इदमध्वर्युप्रैषे पठितम्—**ताः**=वङ्क्रीः **अनुष्ठ्या**=अनुष्ठानेन अनुक्रमेण गणनया गणयित्वा **उच्यावयतात् भवान्**=विशसनं करोतु । पृथक् करोतु भवानित्यर्थः ॥—**अनुष्ठानमनुष्ठेति** । अनुपूर्वात्तिष्ठतेरङ्, तृतीयैकवचनस्य ड्यादेशे डित्त्वाट्टिलोपः ॥ नन्वनुपूर्वात्तिष्ठतेः 'आतश्चोपसर्गे-' इत्यङं बाधित्वा 'स्थागापापचो भावे' इति क्तिना भाव्यमिति चेत्, **सत्यम्** । 'पूर्वपरावरदक्षिणोत्तरा-' इति सूत्रे व्यवस्थायामिति निर्देशादङपि, सामान्यापेक्षज्ञापकाश्रयणात् । तदेतद् ध्वनयति—**व्यवस्थावदिति** ॥—**साधु इति प्राप्त इति** । सोर्लुकि प्राप्त इत्यर्थः ॥—**वसन्ते इति प्राप्ते आल् इति** । **पूर्वसवर्णे** तु 'अतो गुणे' इति स्यात् ॥—**उर्वियेति** । उरुदारुशब्दात्तृतीयैकवचनस्येयादेशः ॥—**सुक्षेत्रियेति** । सुक्षेत्रिन्शब्दात्तृतीयैकवचनस्य डियाजादेशः । डित्त्वाट्टिलोपः ॥—**बाहुनेति प्राप्त इति** । काशिकायां तु प्रवाहुनेति प्राप्त इत्युक्तम्,

---

१ एतदपि सुपां स्थाने 'आत्' इत्यस्योदाहरणम् ।

आङादेशः, 'घेर्ङिति–' २४५ इति गुणः । स्वम्नया । स्वम्नेनेति प्राप्ते अयाच् । स नः सिन्धुमिव नावया । नावेति प्राप्ते अयार्, रित्स्वरः ।

३५६० । अमो मश् ।७।१।४०। मिबादेशस्यामो मश् स्यात् । अकार उच्चारणार्थः । शित्वात्सर्वादेशः । 'अस्तिसिचः–' २२२५ इति ईट् । वधीं वृत्रम्, अवधिषमिति प्राप्ते ।

३५६१ । लोपस्त आत्मनेपदेषु ।७।१।४१। छन्दसि । देवा अदुह, अदुहतेति प्राप्ते । दक्षिणतः शये, शेते इति प्राप्ते[1] । आत्मने इति । किम् । उत्सं दुहन्ति ।

३५६२ । ध्वमो ध्वात् ।७।१।४२। अन्तरेवोष्माणं वारयध्वात् । वारयध्वमिति प्राप्ते ।

३५६३ । यजध्वैनमिति च ।७।१।४३। एनमित्यस्मिन्परे ध्वमोऽन्तलोपो निपात्यते । यजध्वैनं प्रियमेधाः । वकारस्य यकारो निपात्यत इति वृत्तिकारोक्तिः प्रामादिकी ।

३५६४ । तस्य तात् ।७।१।४४। मध्यमपुरुषबहुवचनस्य स्थाने तात्स्यात् । गात्रमस्यानूनं कृणुतात्, कृणुतेति प्राप्ते । सूर्यं चक्षुर्गमयतात्, गमयतेतिप्राप्ते ।

३५६५ । तप्तनप्तनथनाश्च ।७।१।४५। तस्येत्येव । शृणोत ग्रावाणः । शृणुतेति प्राप्ते तप् । सुनोतन पचत ब्रह्मवाहसे, दधातन द्रविणं चित्रमस्मे, तनप् । मरुतस्तज्जुजुष्टन । जुषध्वमिति प्राप्ते व्यत्ययेन परस्मैपदं श्लुश्च । विश्वेदेवासो मरुतो यतिष्ठन । यत्संख्याकाः स्थेत्यर्थः । यच्छब्दाच्छान्दसो डतिः, अस्तेस्तस्य थनादेशः ।

३५६६ । इदन्तो मसि ।७।१।४६। मसीत्यविभक्तिको निर्देशः । इकार उच्चारणार्थः । मस् इत्ययमिकाररूपचरमावयवविशिष्टः स्यात् । मस इगागमः स्यादिति यावत् । नमो भरन्त एमसि । त्वमस्माकं तव स्मसि । 'इमः' 'स्मः' इति प्राप्ते ।

३५६७ । क्त्वो यक् ।७।१।४७। दिवं सुपर्णो गत्वाय ।

३५६८ । इष्ट्वीनमिति च ।७।१।४८। क्त्वाप्रत्ययस्य

तत्समासभ्रमादित्यवधेयम् । प्रेति न समस्तं, पृथक्स्वरदर्शनात् पदकारैर्विच्छिद्य पाठाच्च । अत आख्यातान्वयीति ध्येयम् ॥ —स्वम्नयेति । अयाचोऽकारः 'सुपि च' इति दीर्घनिवृत्त्यर्थः । 'अतो गुणे' इति पररूपम् ॥—नावयेति । नौशब्दाट्टा इत्यस्याऽयार् ॥—रित्स्वर इति । 'रिति' इति सूत्रेण ॥ ३५६० अमो–। अम इति मिबादेशो गृह्यते न द्वितीयैकवचनं, छन्दसि दृष्टानुविधानात् । तदेतदाह—मिबादेशस्येति ॥—शित्वात्सर्वादेश इति । शित्करणाभावे तु 'अलोऽन्त्यस्य' इति मकारस्य स्यात् । 'आदेः परस्य' इति तु न, पञ्चमीनिर्देशाभावात् । न च मकारस्य मकारवचने प्रयोजनाभावात् सर्वादेशो भविष्यतीति वाच्यम् । मकारस्य मकारवचनमनुस्वारनिवृत्त्यर्थं स्यात्, 'मो राजि समः क्वौ' इत्यत्र यथा ॥—वधीमिति । हन्तेर्लुङ् 'हनो वध लिङि' 'लुङि च' इति वधादेशः । 'च्लेः सिच्', इट्, 'तस्थस्थ–' इति मिपोऽम्भावः । तस्य मश्, 'अस्तिसिचः–' इति मस्यापृक्तस्येट्, 'इट ईटि' इति सिचो लोपः । सवर्णदीर्घत्वम् । 'बहुलं छन्दसि' इत्यडभावः ॥ ३५६१ लोपस्त–। आत्मनेपदेषु यस्तकारस्तस्य च्छन्दसि विषये लोपः स्यात् ॥—अदुहेति । दुहेर्लङ् । 'आत्मनेपदेष्वनतः' इति झस्यादादेशः । 'बहुलं छन्दसि' इति रुट्, तकारस्य लोपे द्वयोरकारयोः 'अतो गुणे' इति पररूपम् ॥—शये इति । शेते इत्यत्र तलोपे कृतेऽयादेशः ॥ ३५६२ ध्वमो–। ध्वमो ध्वादित्यादेशः स्याच्छन्दसि ॥—वारयध्वादिति । वृञो णिचि लोट् ॥ ३५६३ यज–। वृत्तिकारस्तु यजध्वैनमिति पाठं कृत्वा वकारस्य यकारश्च निपात्यत इत्याह । तद् दर्शयति—वकारस्येत्यादि ॥—प्रामादिकीति । लक्ष्ये वकारपाठस्य निर्विवादत्वात् । वेदभाष्येऽपि प्रकृतसूत्रस्य मलोपमात्रपरतोक्तेश्चेति भावः ॥ ३५६४ तस्य–॥ —मध्यमपुरुषबहुवचनस्येति । प्रथमपुरुषैकवचनस्य तु न ग्रहणम्, छन्दसि दृष्टानुविधानात् । पूर्वोत्तराभ्यां बहुवचनाभ्यां साहचर्याच्च ॥—कृणुतादिति । कृवि हिंसाकरणयोश्च । 'धिन्विकृण्व्योर च' इत्युप्रत्ययः, वकारस्य चाकारः । अतो लोपः ॥—गमयतादिति । गमेर्णिच् । 'जनीजॄष्–' इति अमन्तत्वान्मित्संज्ञायां मितां ह्रस्वः, लोण्मध्यमपुरुषबहुवचनस्य तादेशः ॥ ३५६५ तप्तनप्–। तस्य स्थाने एते आदेशाः स्युः ॥—शृणोतेति । श्रु श्रवणे । 'श्रुवः शृ च' इति श्नुप्रत्ययः शृभावश्च । पित्त्वेनाङित्त्वाद्गुणः ॥—सुनोतनेति । 'षुञ् अभिषवे' 'स्वादिभ्यः श्नुः', त इत्यस्य तनप् ॥—दधातनेति । अत्राप्यङित्त्वात् 'श्नाभ्यस्तयोः–' इत्याकारलोपाभावः ॥ ३५६६ इदन्तो । अन्तशब्दोऽवयववचनः । इत् अन्तो यस्य स इदन्तः । तपरकरणमसंदेहार्थम् । तथा चायमर्थः—मस् इत्ययं शब्द इकारान्तो भवति, मसः सकारान्तस्य इकार आगमो भवति स च तस्यान्तो भवतीत्यर्थः । तदेतदाह—मस् इत्ययमिति । तत्र यदि सकारोपमर्देन इकारान्तत्वमभिप्रेतं स्यात्तर्हि 'मस इत्' इति वाच्यं स्यात् । तस्मादवस्थित एव सकारे इकार उपसंजनीयः । अन्तग्रहणाच्च तद्ग्रहणेन गृह्यते । ततश्च टित्त्वकित्त्वादेरागमलिङ्गस्याभावेऽप्यर्थादागमोऽयं संपद्यते । तदेतद्ध्वनयन्नाह—मस इगागमः स्यादिति । एवं च मस इगिति वक्तव्यं, प्रत्याहारसंदेहप्रसङ्गात्तथा नोक्तम् ॥—एमसीति । 'इण गतौ' मस् तस्य इकारोऽन्तावयवः ॥—स्मसीति । अस्तेर्मस् 'श्नसोरल्लोपः' ॥ ३५६७ क्त्वो–। क्त्वा इत्यस्य यगागमः स्याच्छन्दसि ॥—गत्वायेति । गमेः क्त्वा । 'अनुदात्तोपदेश–' इत्यनुनासिकलोपः । क्त्वा इत्यस्य यगागमः ॥ ३५६८ इष्ट्वीन–।—क्त्वाप्रत्ययस्येति । यजेः परस्येति शेषः ॥—इष्ट्वीनमिति । यजेः क्त्वा । 'वचिस्वपि–' इति संप्रसारणम् ।

१ 'दुहामश्विभ्याम् । दुग्धाम्–इतिप्राप्ते' इत्येतदुदाहरणं लिखितपुस्तकेष्वधिकं दृश्यते ।

ईनम् अन्तादेशो निपात्यते । इष्ट्वीनं देवान् । 'इष्ट्वा' इति प्राप्ते ।

३५६९ । स्नात्व्यादयश्च ।७।१।४९। आदिशब्दः प्रकारार्थः । आकारस्य ईकारो निपात्यते । स्विन्नः स्नात्वी मलादिव । पीत्वी सोमस्य वावृधे । 'स्नात्वा' 'पीत्वा' इति प्राप्ते ।

३५७० । आज्जसेरसुक् ।७।१।५०। अवर्णान्तादङ्गात्परस्य जसोऽसुक् स्यात् । देवासः । ब्राह्मणासः ।

३५७१ । श्रीग्रामण्योश्छन्दसि ।७।१।५६। आमो नुट् । श्रीणामुदारो धरुणो रयीणाम् । सूत ग्रामणीनाम् ।

३५७२ । गोः पादान्ते ।७।१।५७। विद्मा हि त्वा गोपतिं शूर गोनाम् । पादान्ते किम् । गवां शता पृक्षयामेषु —पादान्तेऽपि क्वचिन्न, छन्दसि सर्वेषां वैकल्पिकत्वात् । विराजं गोपतिं गवाम् ।

३५७३ । छन्दस्यपि दृश्यते ।७।१।७६। अस्थ्यादीनामनङ् । इन्द्रो दधीचो अस्थभिः ।

३५७४ । ई च द्विवचने ।७।१।७७। अस्थ्यादीनामित्येव । अक्षीभ्यां ते नासिकाभ्याम् ।

३५७५ । दृक्स्ववस्स्वतवसां छन्दसि ।७।१।८३। एषां नुम् स्यात्सौ । कीदृङ्ङिन्द्रः । स्ववान् । स्वतवान् । 'उदोष्ठ्यपूर्वस्य–' २४९४ ।

३५७६ । बहुलं छन्दसि ।७।१।१०३। ततुरिः । जगुरिः पराचैः ।

३५७७ । हु ह्वरेश्छन्दसि ।७।२।३१। ह्वरेर्निष्ठायां 'हु' आदेशः स्यात् । अहुतमसि हविर्धानम् ।

३५७८ । अपरिह्वृताश्च ।७।२।३२। पूर्वेण प्राप्तस्यादेशस्याभावो निपात्यते । अपरिह्वृताः सनुयाम वाजम् ।

३५७९ । सोमे ह्वरितः ।७।२।३३। इड्गुणौ निपात्येते । मा नः सोमो ह्वरितः ।

३५८० । ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ता विशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिवमित्यमितीति च । ।७।२।३४। अष्टादश निपात्यन्ते । तत्र 'ग्रसु-स्कम्भु-स्तम्भु' एषामुदित्त्वान्निष्ठायामिट्प्रतिषेधे प्राप्ते इण्निपात्यते । युवं शचीभिर्ग्रसितामंमुञ्चतम् । विष्कभिते अजरे । येन स्वः स्तभितम् । सत्येनोत्तभिता भूमिः, स्तभितेत्येव सिद्धे उत्पूर्वस्य पुनर्निपातनमन्योपसर्गपूर्वस्य मा भूदिति । चते याचने । कस गतौ । आभ्यां क्तस्येडभावः, चत्तो इतश्चत्तामुतः । त्रिधा ह श्यावमश्विना विकस्तम् । उत्तानाया

---

'व्रश्च–' इदि षत्वम् । ष्टुत्वम् । आकारस्येनमादेशः ॥ ३५६९ पीत्वीति । पिबतेः क्त्वा । 'घुमास्था–' इतीत्वम् ॥ ३५७० आज्जसेः–। जसेरिति पूर्वाचार्यानुरोधेन निर्देशः ॥—देवास इति । असुकि कृते जसः सकारस्य श्रवणम् । असुकः सकारस्य विसर्गः ॥ ३५७१ श्रीणामिति । अस्य 'वामि' इति नदीत्वविकल्पान्नदीत्वाभावे उदाहरणमिदं बोध्यम् । नदीत्वपक्षे तु 'ह्रस्वनद्यापो नुट्' इत्यनेनैव सिद्धम् ॥—सूत ग्रामणीनामिति । सूताश्च ग्रामण्यश्चेतीतरेतरयोगः ॥ ३५७२ गोः पा–। गो इत्येतस्मादुत्तरस्यामो नुडागमः स्यात्पादान्ते । पादश्चेह ऋक्पादो गृह्यते, छन्दसीत्यधिकारात् ॥ ३५७३ छन्दस्य–। 'छन्दसि च–' इत्येव सिद्धे अपि 'दृश्यते' इत्येतत्सर्वोपाधिव्यभिचारार्थम् । अन्यथा आरम्भसामर्थ्यात्कस्यचिदेव व्यभिचारः संभाव्येत । टादावचीत्युक्तं, हलादावपि भवति—अस्थभिः । विभक्तावित्युक्तम्, अविभक्तावपि भवति—'अस्थन्वन्तं यदनस्था बिभर्ति' । अस्थन्वन्तमित्यत्रास्थिशब्दान्मतुप् । अनङि कृते 'अनो नुट्' इति मतुपो नुट् । अनङो नकारस्य लोपः ॥ ३५७५ दृक्–। 'आच्छीनद्योर्नुम्' 'सावनडुहः' इत्यतो 'नुम्-सौ' इत्यनुवर्तते । तदाह—नुम् स्यादिति ॥—कीदृङ्ङिन्द्र इति । किम्शब्दे उपपदे 'त्यदादिषु दृशोऽनालोचने कञ्च' इति दृशेः क्विन् । 'इदंकिमोरीश् की' इति किमः की आदेशः । नुम्, 'संयोगान्तस्य लोपः', 'क्विन्प्रत्ययस्य–' इति कुत्वेन नस्य ङः, 'ङमो ह्रस्वादचि–' इति ङुट् ॥—स्ववानिति । अवतेरसुन् । सुष्ठु अवो यस्येति विग्रहः । स्ववःशब्दान्नुमि कृते 'सान्तमहतः–' इति दीर्घः, संयोगान्तलोपः । तस्यासिद्धत्वान्नलोपो न ॥—स्वतवानिति । तुधातुः सौत्रो वृद्ध्यर्थः । ततोऽसुन् । स्वं तवो वृद्धिर्यस्येति विग्रहः ॥ ३५७६ ततुरिरिति । तरतेः 'आदृगम–' इति क्विन्प्रत्ययः । उत्वं, तस्य 'द्विर्वचनेऽचि' इति स्थानिवद्भावात्तृ इत्येतस्य द्विर्वचनम् । उरदत्वम् ॥ ३५७७ हु ह्वरे–। 'श्वीदितो निष्ठायाम्' इत्यतो निष्ठायामिति वर्तते । तदाह—निष्ठायामिति ॥ अहुतमिति । न हुतमहुतम् ॥ ३५७८ अपरिह्वृताः–। छन्दसि बहुवचनान्तस्यैव प्रयोगदर्शनाद्बहुवचननिर्देशः ॥ ३५७९ सोमे ॥—इड्गुणाविति । हु इत्यादेशस्याभावोऽपि बोध्यः ॥ ३५८० ग्रसित–। ग्रसु अदने । स्कम्भु स्तम्भु रोधनार्थौ सौत्रौ । चते याचने । कस गतौ । शसु हिंसायाम् । शंसु स्तुतौ । शासु अनुशिष्टौ । तॄ प्लवनतरणयोः । वृङ् संभक्तौ । वृञ् वरणे । ज्वल दीप्तौ क्षर संचलने । क्षमूष् सहने । टुवम् उद्गिरणे । अम गत्यादिषु ॥—अष्टादशेति । क्षमितेः पाठपक्षे तु एकोनविंशतिः ॥—उदित्त्वान्निष्ठायामिट्प्रतिषेधे प्राप्ते इति । 'उदितो वा' इति क्त्वायां वेट्त्वात् 'यस्य विभाषा' इति निषेधे प्राप्ते इत्यर्थः ॥—विष्कभित–। 'अनिदिताम्–' इति नलोपः । 'वेः स्कभ्नातेर्नित्यम्' इति षत्वम् ॥—उत्तभितेति । 'उदः स्थास्तम्भोः–' इति पूर्वसवर्णः । सकारस्य थकारः । तस्य 'झरो झरि सवर्णे' इति लोपः ॥—अन्योपसर्गपूर्वस्य माभूदिति । यदि स्यात् उत्तभितग्रहणं व्यर्थं स्यात् ॥—चत्तो इति । चत्तशब्दाट्टापि उञा सह 'आद्गुणः' । निपातेन

हृदयं यद्विकस्तम् । निपातनं बहुत्वापेक्षं सूत्रे बहुवचनं विकस्ता इति । तेनैकवचनान्तोऽपि प्रयोगः साधुरेव । 'शसु-शंसु-शासु' एभ्यस्तृच इडभावः, एकुस्त्वष्टुरश्वस्या-विशस्ता । ग्रावग्राभ उत शंस्ता । प्रशास्ता पोता । तरतेर्वृ-ञ्वृञोश्च तृचः 'उट्' 'ऊट्' एतावागमौ निपात्येते, तरुतारं रथानाम्–तरूतारम् । वरुतारम्–वरूतारम् । वरूत्रीभिः सुशरणो नो अस्तु । अत्र ङीबन्तनिपातनं प्रपञ्चार्थम् । वरूतृशब्दो हि निपातितः, ततो ङीपा गतार्थत्वात् । उज्ज्वलादिभ्यश्चतुर्भ्यः शप इकारादेशो निपात्यते । ज्वल दीप्तौ । क्षर संचलने । टुवम उद्गिरणे । अम गत्यादिषु । इह 'क्षरिति' इत्यस्यानन्तरं 'क्षमिति' इत्यपि केचित्पठन्ति । तत्र 'क्षमूष् सहने' इति धातुर्बोध्यः । भाषायां तु ग्रस्त-स्कब्धस्तब्धोत्तब्धचतितविकसिताः । विशसिता । शंसिता । शासिता । तरीता, तरिता । वरीता, वरिता । उज्ज्वलति । क्षरति । पाठान्तरे—क्षमति । वमति । अमति ।

'बभूथाऽऽततन्थजगृभ्मववर्थेति निगमे' २५२७ । विद्मा तमुत्सं यत आबभूथ । येनान्तरिक्षमुर्वा-ततन्थ । जगृभ्मा ते दक्षिणमिन्द्र हस्तम् । त्वं ज्योतिषा वितमो ववर्थ । भाषायां तु—बभूविथ, आतेनिथ, जगृहिम, ववरिथ–इति ।

३५८१ । **ससनिसनिवांसम्** ।७।२।६९। सनिमि-त्येतत्पूर्वात्सनतेः सनोतेर्वा क्वसोरिट् एत्वाभ्यासलोपाभा-वश्च निपात्यते । ॐ **पावकादीनां छन्दसि प्रत्ययस्था-त्कादित्वं नेति वाच्यम्** । हिरण्यवर्णाः शुचयः पावकाः ।

३५८२ । **घोर्लोपो लेटि वा** ।७।३।७०। दधद्रत्नानि दाशुषे । सोमो ददद्गन्धर्वाय । यदग्निरग्नये ददात् ।

३५८३ । **मीनातेर्निगमे** ।७।३।८१। शिति ह्रस्वः । प्रमिणन्ति व्रतानि । लोके—प्रमीणन्ति ।

'अस्तिसिचोऽपृक्ते' २२२५ ।

३५८४ । **बहुलं छन्दसि** ।७।३।९७। सर्वमा इदम् । आसीदिति प्राप्ते ॥

'ह्रस्वस्य गुणः' २४२ ।

'जसि च' २४१ । ॐ **जसादिषु छन्दसि वाव-चनं प्राङ् णौ चङ्युपधायाः** । अधा शतक्रत्वो यूयम्, शतक्रतवः । पश्वे नृभ्यो यथा गवे, पशवे ॥ ॐ **'नाभ्यस्तस्याचि' २५०३ इति निषेधे 'बहुलं छन्दसि' इति वक्तव्यम्** । आनुषग्जुजोषत् ।

३५८५ । **नित्यं छन्दसि** ।७।४।८। छन्दसि विषये चङ्युपधाया ऋवर्णस्य ऋन्नित्यम् । अवीवृधत् ।

३५८६ । **न छन्दस्यपुत्रस्य** ।७।४।३५। पुत्रभिन्नस्या-दन्तस्य क्यचि ईत्वदीर्घौ न । मित्रयुः, 'क्याच्छन्दसि' ३१५० इति उः । अपुत्रस्य किम् । पुत्रीयन्तः सुदानवः । ॐ **अपुत्रादीनामिति वाच्यम्** । जनीयन्तोऽन्वग्रवः । जनमिच्छन्त इत्यर्थः ।

३५८७ । **दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति** ।७।४।३६। एते क्यचि निपात्यन्ते । भाषायां तु उप्रत्यया-भावात्—दुष्टीयति, द्रविणीयति, वृषीयति, रिष्टीयति ।

---

सह एकीकृत्य छेदस्तु पदकाराणां संप्रदायसिद्धः । 'भूयामो—' इति मन्त्रे 'भूयामो' इति यथा ॥ **अश्वस्याविशस्तेति** । 'अन्येषामपि–' इति पूर्वपदस्य दीर्घः ॥—**निपातनं बहुत्वापेक्षमिति** । तेन छान्दसः प्रयोग एकवचनान्तोऽप्युदाहृत इति भावः ॥—**ततो ङीपा इति** । 'ऋन्नेभ्यः–' इति विहितेन ॥—बभूथा—। निगमो वेदः । एषां वेद इडभावो निपा-त्यते । वृञः क्रादिसूत्रेणेडभावे सिद्धे निगम एवेति नियमार्थं निपातनम् । तदेतदाह—**भाषायां तु ववरिथेति** ॥ ३५८१ **ससनिस—**। सनिपूर्वात्सनतेः सनोतेर्वा ससनिसनिवांसमिति निपात्यते ।—**क्वसोरिडिति** । 'नेड्वशि कृति' इति निषेधे प्राप्ते निपातनम् ॥—**पावका इति** । पुनन्ति पावयन्ति वा पावकाः । पुनातेः पावयतेर्वा ण्वुल्, टाप् ॥—**दधदिति** । दधातेर्लेट्, तिप्, 'श्लौ' इति द्वित्वम् । 'दधाति' इति स्थिते आकारलोपः । 'लेटोऽडाटौ' इत्यडागमः । 'इतश्च लोपः परस्मैपदेषु' इतीकारलोपः । दाशुषे=यजमानाय रत्नानि दधत् । दध्यादित्यर्थः । ददादिति ददाते रूपम् ॥ **३५८२** लोपाभावे उदाहरणमाह—**ददादिति** ॥ **३५८३ मीनातेः**—। 'प्वादीनां ह्रस्वः' इत्यतो ह्रस्व इति वर्तते, तदाह—**शिति ह्रस्व इति** ॥ —**प्रमिणन्तीति** । 'हिनुमीना' इति णत्वम् ॥ **३५८४ आ इदमिति** । अस्तेर्लङ्, तिप्, 'आडजादीनाम्' इत्याट्, शपो लुक् । 'अस्तिसिचः' इतीडभावे अपृक्तत्वाद्धल्ङ्यादिलोपः, रुत्वविसर्गौ । संहितायां तु 'भोभगो–' इति रोर्यत्वम् । 'लोपः शाक-ल्यस्य' इति यलोपः ॥—**जसादिष्विति** । आदिशब्दः प्रकारे, तेन पूर्वयोगनिर्दिष्टानामपि ग्रहणम् ॥—**शतक्रत्व इति** । 'जसि च' इति गुणाभावपक्षे प्रथमयोः पूर्वसवर्णदीर्घोऽपि 'वा छन्दसि' इति वचनादत्र न भवतीति यणादेशः प्रवर्तते ॥—**पश्वे इति** । 'घेर्ङिति' इत्यस्याभावे यण् ॥—**जुजोषदिति** । जुषी प्रीतिसेवनयोः । लेट्, व्यत्ययेन पर-स्मैपदम्, तिप् । 'इतश्च लोपः परस्मैपदेषु', 'लेटोऽडाटौ' इत्यट्, व्यत्ययेन शपः श्लुः, द्विर्वचनम् ॥ **३५८६ न छन्दसि—**। इह यद्यानन्तर्यादीत्वमात्रं प्रतिषिध्येत तर्हि 'अकृत्सार्व–' इति दीर्घः स्यात्, अपवादेन पुनरुत्सर्गस्थितेः । अत आह—**ईत्व-दीर्घौ नेति** । क्यचि यदुक्तं तन्नेति व्याख्यानादिति भावः । अत्र च ज्ञापकमनुपदमेव वक्ष्यति ॥—**पुत्रीयन्त इति** । पुत्रमिच्छन्तः पुत्रीयन्तः । जनमिच्छन्तो जनीयन्तः । लटः शत्रादेशः । 'उगिदचाम्' इति नुम् ॥ **३५८७ दुरस्यु—**। दुष्टशब्दस्य दुरस्भावः, द्रविणशब्दस्य द्रविणस्भावः, वृषस्य वृषण्भावः, रिष्टस्य रिषण्भावश्च निपात्यते ॥—**दुष्टीयतीति** ।

---

१ अत्र 'भूयाम' इत्यस्य उत्रा सह आङ्गुणेऽपि पदकारा 'भूयामो' इत्येव छेदम्पठन्ति ।

३५८८ । अश्वाघस्यात् ।७।४।३७। 'अश्व' 'अघ' एतयोः क्यचि आत्स्याच्छन्दसि । अश्वायन्तो मघवन् । मा त्वा वृका अघायवः । 'न च्छन्दसि-' ३५८८ इति निषेधो नेत्वमात्रस्य, किंतु दीर्घस्यापीति। अत्रेदमेव सूत्रं ज्ञापकम् ।

३५८९ । देवसुम्नयोर्यजुषि काठके ।७।४।३८। अनयोः क्यचि आत्स्याद्यजुषि कठशाखायाम् । देवायन्तो यजमानाः । सुम्नायन्तो हवामहे । इह यजुःशब्दो न मन्त्रमात्रपरः, किंतु वेदोपलक्षकः । तेन ऋगात्मकेऽपि मन्त्रे यजुर्वेदस्थे भवति । किं च ऋग्वेदेऽपि भवति, स चेन्मन्त्रो यजुषि कठशाखायां दृष्टः । यजुषीति, किम् । देवाञ्जिगाति सुम्नयुः । बह्वृचानामप्यस्ति कठशाखा, ततो भवति प्रत्युदाहरणमिति हरदत्तः ।

३५९० । कव्यध्वरपृतनस्यर्चि लोपः ।७।४।३९। एषामन्त्यस्य लोपः स्यात् क्यचि परे ऋग्विषये । सपूर्वया निविदा कव्यतायोः । अध्वर्युं वा मधुपाणिम् । दमयन्तं पृतन्युम् ।

'दधातेर्हिः' ३०७६ ।

'जहातेश्च क्त्वि' ३३३१ ।

३५९१ । विभाषा छन्दसि ।७।४।४४। हित्वा शरीरम्, हीत्वा वा ।

३५९२ । सुधित वसुधित नेमधित धिष्व धिषीय च ।७।४।४५। 'सु' 'वसु' 'नेम' एतत्पूर्वस्य दधातेः क्तप्रत्यये इत्वं निपात्यते । गर्भं माता सुधितं वक्षणासु । वसुधितमग्नौ । नेमधिता न पौंस्या । क्तिन्यपि दृश्यते । उत श्वेतं वसुधितिं निरेके । धिष्व वज्रं दक्षिण इन्द्र हस्ते । धत्स्वेति प्राप्ते । सुरेता रेतो धिषीय, आशीर्लिङि इट् । 'इटोऽत्' २२५७ । धासीयेति प्राप्ते ।

'अपो भि' ४४२ । ॐ मासश्छन्दसीति वक्तव्यम् ॥ माद्भिः शरद्भिः ॥ ॐ स्ववःस्वतवसोरुषसश्चेष्यते ॥ स्ववद्भिः, अवतेरसुन्, शोभनमवो येषां ते स्ववसस्तैः । 'तु' इति सौत्रो धातुस्तस्मादसुन्, स्वं तवो येषां तैः स्वतवद्भिः । समुषद्भिरजायथाः । मिथुनेऽसिः । 'वसेः किच्च' इत्यसिप्रत्यय इति हरदत्तः । पञ्चपादीरीत्या तु 'उषः कित्' इति प्राग्व्याख्यातम् ।

'न कवतेर्यङि' २६४१ ।

३५९३ । कृपेश्छन्दसि ।७।४।६४। यङि अभ्यासस्य चुत्वं न । करीकृष्यते ।

३५९४ । दाधर्ति दर्धर्ति दर्धर्षि बोभूतु तेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतः सरीसृपतं वरीवृजन्मर्मृज्याऽऽगनीगन्तीति च ।७।४।६५। एतेऽष्टादश निपात्यन्ते । आद्यास्त्रयो धृङो धारयतेर्वा । भवतेर्यङ्लुगन्तस्य गुणाभावः । तेन भाषायां गुणो लभ्यते । तिजेर्यङ्लुगन्तात्तङ् । इयर्तेर्लटि हलादिःशेषापवादो रेफस्य लत्वमित्वाभावश्च निपात्यते, अलर्षि युध्म खजकृत्पुरन्दर । सिपा निर्देशो न तन्त्रम्, अलर्ति दक्षं उत । फणतेराङ्पूर्वस्य यङ्लुगन्तस्य शतरि अभ्यासस्य नीगागमो निपात्यते, अन्वापनीफणत् । स्यन्देः संपूर्वस्य यङ्लुकि शतरि अभ्यासस्य निक्, धातुसकारस्य षत्वम् ।

---

प्रकृतिमात्रे तात्पर्यम् । उप्रत्ययस्य समानार्थेन तृना दुष्टीयितेत्यादि बोध्यम् ॥—**अश्वायन्त इति** । अश्वशब्दात् क्यच् । लटः शत्रादेशः ॥—**अघायव इति** । 'छन्दसि परेच्छायां-' इति क्यच् । 'क्याच्छन्दसि' इत्युप्रत्ययः ॥—**इदमेव सूत्रं ज्ञापकमिति** । अन्यथा दीर्घेणैव सिद्धत्वादात्ववचनमनर्थकं स्यात् ॥ **३५८९ देवाञ्जिगातीति** । नन्विदं प्रत्युदाहरणमङ्गद्वयविकलम् । यजुषि काठक इत्यंशद्वयस्यापि तत्राभावादित्याशङ्क्याह—**बह्वृचानामप्यस्तीति** । तत्रेदं दृष्टमिति भावः । काठक इति किम् ? यजुर्वेदे शाखान्तरे माभूत् । अन्यत्र सुम्नयुरिदमस्ति ॥ **३५९० कव्यध्वर—** । 'कवि-अध्वर-पृतना' एषामन्त्यस्य लोपः स्यात् क्यचि परे ऋचि विषये । मृगव्यादिगणेऽध्वर्युशब्दः पठ्यते तद्व्युत्पत्त्यन्तरं बोध्यम् ॥ **३५९१ विभाषा—** । जहातेरङ्गस्य विभाषा हिरादेशः स्यात् ॥—**हीत्वेति** । हिआदेशाभावे 'घुमास्था-' इतीत्वम् । क्वचित्तु हात्वेति पाठस्तत्र छान्दसत्वात् 'घुमास्था-' इतीत्वाभावः ॥ **३५९२ वसुधितमिति**—कर्मधारय इति हरदत्तः । वसूनां धातारं प्रदातारमित्यर्थ इति वेदभाष्यम् ॥—**नेमधितमिति** । सामिपर्यायो नेमशब्दः । अयं कर्मधारयः ॥—**धत्स्वेति** । 'श्नाभ्यस्तयोरातः' इत्याकारलोपः । 'दधस्तथोश्च' इति भष्भावः ॥—**धिषीयेति** । आशीर्लिङात्मनेपदोत्तमपुरुषैकवचने दधातेरित्वं निपात्यते । तदाह—**आशीर्लिङीति** ॥—**माद्भिरिति** । 'पद्दन्नोमास्-' इति मासशब्दस्य मास् इत्यादेशः ॥—**न कवतेरिति** । अनुवृत्त्यर्थ उपन्यासः ॥ **३५९३ करीकृष्यत इति** । 'रुग्रिकौ च लुकि' इति रीगागमः । लोके तु चरीकृष्यते कृषीवलः ॥ **३५९४ धृङ इति** । धृङ् अवस्थाने ॥—**धारयतेर्वेति** । स एव ण्यन्तः । तत्र दाधर्तीत्यत्र धारयतेः शपः श्लौ णिलुक्, अभ्यासस्य दीर्घत्वं च निपात्यते । धृङो वा शे प्राप्ते व्यत्ययेन शप् तत्र श्लावभ्यासस्य दीर्घत्वं च । अत्र परस्मैपदमपि निपात्य तस्यैव यङ्लुक्यभ्यासस्य रुगाद्यपवादकं दीर्घत्वं निपात्यत इति । दर्धर्तीत्यत्र यङ्लुक्पक्षे दाधर्तीति निपातनेन प्राप्तस्य दीर्घस्याभावो निपात्यते । 'रुग्रिकौ च लुकि' 'ऋतश्च' इत्येव रुक् सिद्धः । श्लुपक्षे तु रुगपि निपात्यः । दर्धर्षीत्यत्र यङ्लुक्पक्षे न किंचिन्निपातनं किं तु श्लावेव । भवतेर्यङ्लुगन्तात्लोट् गुणाभाव इति ॥ ननु 'भूसुवोस्तिङि' इत्येव गुणनिषेधे सिद्धे निपातनमनर्थकमिति चेत्, **सत्यम्** । ज्ञापकार्थं तर्हि निपातनम् । एतज्ज्ञापयति—अन्यत्र यङ्लुगन्तस्य गुणप्रतिषेधो न भवतीति । तेन बोभवीतीत्यत्र भाषायां गुणः सिद्धः, तदेतदाह—**तेन भाषायामिति** । तिजेर्यङ्लुक्यात्मनेपदं निपात्यते । तदाह—**तिजेरिति** । 'ऋ गतौ' लटि सिपि 'श्लौ' इति द्वित्वम् । अभ्यासस्य हलादिःशेषापवादो रेफस्य लत्वं निपात्यते । 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्य प्राप्तस्येत्वस्याभावो निपात्यते । तदाह—**इयर्तेरिति** । करोतेर्यङ्लुगन्तस्य शतरि

करोतेर्यङ्लुगन्तस्याभ्यासस्य चुत्वाभावः, करिक्रदत्। क्रन्देर्लुङि च्लेरङ् द्विर्वचनमभ्यासस्य चुत्वाभावो निगागमश्च, कनिक्रदज्जनुर्षम् । अक्रन्दीदित्यर्थः । बिभर्तेरभ्यासस्य जश्त्वाभावः, बिभ्रो भरिभ्रदोषधीषु । ध्वरतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य विगागमो धातोर्ऋकारलोपश्च, दविध्वतो रश्मयः सूर्यस्य । द्युतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य संप्रसारणाभावोऽत्वं विगागमश्च, दविद्युतद्दीद्यच्छोशुचानः । तरतेः शतरि श्लौ अभ्यासस्य रिगागमः, सहोर्जा तरित्रतः । सृपेः शतरि श्लौ द्वितीयैकवचने रीगागमोऽभ्यासस्य । वृजेः शतरि श्लावभ्यासस्य रीक् । मृजेर्लिटि णल्, अभ्यासस्य रुक्, धातोश्च युक् । गमेराङ्पूर्वस्य लटि श्लावभ्यासस्य चुत्वाभावो नीगागमश्च, वक्ष्यन्ती वेदा गनीगन्ति कर्णम् ।

३५९५ । ससूवेति निगमे ।७।४।७४। सूतेर्लिटि परस्मैपदं वुगागमोऽभ्यासस्य चात्वं निपात्यते । गृष्टिः ससूव स्थविरम् । 'सुषुवे' इति भाषायाम् ।

३५९६ । बहुलं छन्दसि ।७।४।७८। अभ्यासस्य इकारः स्याच्छन्दसि । पूर्णा विवष्टि । वशेरेतद्रूपम् ॥

इति सप्तमोऽध्यायः ॥

## अथाष्टमोऽध्यायः ।

३५९७ । प्रसमुपोदः पादपूरणे ।८।१।६। एषां द्वे स्तः पादपूरणे । प्रप्रायमग्निः । संसमिद्युवसे । उपोप मे परामृश । किं नोदुदु हर्षसे ।

३५९८ । छन्दसीरः ।८।२।१५। इवर्णान्तादिरेफान्ताच्च परस्य मतोर्मस्य वः स्यात् । हरिवते हर्यश्वाय गीर्वान् ।

३५९९ । अनो नुट् ।८।२।१६। अन्नन्तान्मतोर्नुट् स्यात् । अक्षण्वन्तः कर्णवन्तः । अस्थन्वन्तं यदनस्था ।

३६०० । नाद्धस्य ।८।२।१७। नान्तात्परस्य घस्य नुट् । सुपथिन्तरः ॥ ॐ भूरिदान्नस्तुड्वाच्यः । भूरिदावत्तरो जनः ॥ ॐ ईद्रथिनः । रथीतरः । रथीतमं रथीनाम् ।

३६०१ । नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि छन्दसि ।८।२।६१। सदेर्नञ्पूर्वान्निपूर्वाच्च निष्ठायां नत्वाभावो निपात्यते । नसत्तमञ्जसा । निषत्तमस्य चरतः । असन्नं निषण्णमिति प्राप्ते । उन्देर्नञ्पूर्वस्य-अनुत्तम् ।

अभ्यासस्य चुत्वाभावो निपात्यते । 'ऋतश्च-' इति रिगागमः, तदाह—**करोतेरिति ।—चुत्वाभाव इति ।** 'कुहोश्चुः' इति प्राप्तस्य । बिभर्तेर्यङ्लुगन्तस्य शतरि अभ्यासस्य जश्त्वाभावो निपात्यते, तदाह—**बिभर्तेरिति ।—जश्त्वाभाव इति ।** 'अभ्यासे चर्च' इति प्राप्तस्य ॥—**दविध्वत इति ।** ध्वरतेर्यङ्लुगन्तस्य शतरि जसि रूपम् । 'नाभ्यस्ताच्छतुः' इति नुम्प्रतिषेधः । द्युतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य संप्रसारणभावोऽत्वं च निपात्यते, तदाह—**द्युतेरिति ।—संप्रसारणाभाव इति ।** 'द्युतिस्वाप्योः संप्रसारणम्' इति प्राप्तस्य ॥ **३५९५ ससूवेति निगमे ।** दाधर्त्यादिष्वेतत्पठितव्यम् ॥ **३५९६ विवष्टीति ।** वश कान्तौ । लटि तिपि शपः श्लौ द्वित्वम् अभ्यासस्येत्वं 'व्रश्च' इति षत्वम् ष्टुत्वम् ॥ **इति सुबोधिन्यां सप्तमोऽध्यायः ॥**

**३५९७ प्रसमुपोदः पादपूरणे ।** समाहारद्वन्द्वः । समासान्तविधेरनित्यत्वाद् 'द्वन्द्वाच्चुदषहान्तात्-' इति न टच् ॥—**प्रप्रायमग्निरिति ।** नात्र द्विर्वचनस्य किंचिद्द्योत्यं, केवलं पादपूरणमेव कार्यम् । न चैवंविधस्य भाषायां प्रयोगोऽस्ति-इति सामर्थ्याच्छन्दस्येवेदं विधानमित्याहुः ॥ **३५९८ छन्दसीरः ॥—हरिवते इति ।** हरयो विद्यन्ते यस्येति हरिवान्, तस्मै । हरिशब्दान्मतुप्, मस्य वकारः ॥—**गीर्वानिति ।** 'र्वोरुपधाया दीर्घ इकः' इति दीर्घः ॥ **३५९९ अक्षण्वन्त इति ।** अक्षिशब्दान्मतुप्, 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' । 'छन्दस्यपि दृश्यते' इत्यनङ् । नुटोऽसिद्धत्वात्पूर्वं नलोपे भूतपूर्वगत्या नुट्, णत्वम् ॥ ननु यदि परादिर्नुट् क्रियते, तस्य मतुब्ग्रहणेन ग्रहणात् 'मादुपधायाः-' इति वत्वं स्यात्, मस्य तु न स्यात्, नुटा व्यवधानात् । यदि तु पूर्वान्तो नुट् क्रियते, तर्हि णत्वं न स्यात्, 'पदान्तस्य' इति निषेधात्-इति चेत्, **सत्यम् ।** नुटोऽसिद्धत्वान्नोक्तदोषः ॥ नन्वेवमवग्रहे दोषः स्यात् । अक्षणिति णान्तं ह्यवगृह्णन्ति, अक्षेत्यकारान्तमवग्रहीतुमुचितमिति चेत्, **सत्यम् ।** न लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नामलक्षणमनुवर्तनीयम्, तस्माद्यथालक्षणं पदं कर्तव्यमिति महाभाष्ये स्थितम् । **किंच** ईयिवांसमित्यादौ पदत्वं विनाऽपि अवग्रहः क्रियते । **पूर्वेभिरग्निने**त्यादौ सत्यपि पदत्वे न क्रियते **इति ॥ ३६०० घस्येति ।** तरप्तमपोरित्यर्थः, 'तरप्तमपौ घः' इति तरप्तमपोर्घसंज्ञाविधानात् ॥—**सुपथिन्तर इति ।** सुपथिन्-शब्दात् 'द्विवचनविभज्योपपदे-' इति तरप्, नलोपः । तरपो नुट्, तस्यानुस्वारः, परसवर्णः ॥—**भूरिदान्न इति ।** भूरिदान्नः परस्य घस्य नुट् वाच्य इत्यर्थः ॥—**भूरिदावत्तर इति ।** 'आतो मनिन्-' इत्यादिना दाधातोर्वनिप्, तदन्तात्तरप्, 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः, तुडागमः ॥—**ईद्रथिन इति ।** रथिन ईकारोऽन्तादेशो घे परे ॥—**रथीतर इति ।** रथशब्दात् 'अत इनिठनौ' इति मत्वर्थीय इनिः । तदन्तात्तरप्, नकारलोपे कृते इकारस्य ईकारादेशः । यदि तु नकारलोपापवादो नकारस्थाने ईकारो विधीयते तदा तस्यासिद्धत्वादेकादेशो न स्यात् ॥—**रथीतममिति ।** इह पदकारा ह्रस्वान्तमवगृह्णन्ति । 'अन्येषामपि-' इति संहितायां दीर्घ इति तदाशयः ॥ **३६०१ नसत्त—।** एतानि छन्दसि विषये निपात्यन्ते ॥—**नत्वाभाव इति ।** 'रदाभ्याम्-' इति प्राप्तस्य ॥—**निषत्तमिति ।** 'सदिरप्रतेः' इति षत्वम् ॥—

१ अस्य पाठो बहुषु पुस्तकेषु न दृश्यते ।

प्रतूर्तम्-इति त्वरतेः, तुर्वीत्यस्य वा । सूर्तम्-इति 'सृ' इत्यस्य । गूर्तम्-इति 'गूरी' इत्यस्य ।

३६०२ । **अम्नरूधरवरित्युभयथा छन्दसि** ।८।२।७०। रुर्वा रेफो वा । अम्न एव-अम्नरेव । ऊध एव-ऊधरेव । अव एव-अवरेव ।

३६०३ । **भुवश्च महाव्याहृतेः** ।८।२।७१। भुव इति-भुवरिति ।

३६०४ । **ओमभ्यादाने** ।८।२।८७। ओंशब्दस्य प्लुतः स्यादारम्भे । ओ३म् अग्निमीळे पुरोहितम् । अभ्यादाने किम् । ओमित्येकाक्षरम् ।

३६०५ । **ये यज्ञकर्मणि** ।८।२।८८। ये३यजामहे । यज्ञ-इति किम् । ये यजामहे ।

३६०६ । **प्रणवष्टेः** ।८।२।८९। यज्ञकर्मणि टेरोमित्यादेशः स्यात् । अपां रेतांसि जिन्वतो३म् । टेः किम् । हलन्ते अन्त्यस्य मा भूत् ।

३६०७ । **याज्यान्तः** ।८।२।९०। ये याज्या मन्त्रास्तेषामन्त्यस्य टेः प्लुतो यज्ञकर्मणि । जिह्वामग्ने चकृषे हव्यवाहा३म् । अन्तः किम् । याज्यानामृचां वाक्यसमुदायरूपाणां प्रतिवाक्यं टेः स्यात् । सर्वान्त्यस्य चेष्यते ।

३६०८ । **ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः** ।८।२।९१। एषामादेः प्लुतो यज्ञकर्मणि । अग्नयेनुब्रू३हि । अग्नये गोमयानि प्रे३ष्य । अस्तु श्रौ३षट् । सोमस्याग्ने वीहि वौ३षट् । अग्निमा३वह ।

३६०९ । **अग्नीत्प्रेषणे परस्य च** ।८।२।९२। अग्नीधः प्रेषणे आदेः प्लुतस्तस्मात्परस्य च । ओ३श्रा३वय ।

३६१० । **विभाषा पृष्टप्रतिवचने हेः** ।८।२।९३। प्लुतः । अकार्षीः कटम्? अकार्षं हि३-अकार्षं हि । पृष्ट-इति किम् । कटं करिष्यति हि । हेः किम् । करोमि ननु ।

३६११ । **निगृह्यानुयोगे च** ।८।२।९४। अत्र यद्वाक्यं तस्य टेः प्लुतो वा । अद्यामावास्येत्यात्थ३ । अमावास्येत्येवंवादिनं युक्त्या स्वमतात्प्रच्याव्य एवमनुयुज्यते ।

३६१२ । **आम्रेडितं भर्त्सने** ।८।२।९५। दस्यो३

---

**अनुत्तमिति** । अनुन्नमिति भाषायाम् । एतन्निपातनारम्भसामर्थ्याद्भाषायां 'नुदविदोन्दत्र-' इति विकल्पो नेत्याहुः ॥—**प्रतूर्तमिति** । यदा त्वरतेः, तदा 'ज्वरत्वर-' इत्यादिना ऊठ् । यदा तुर्वी हिंसायामित्यस्य, तदा 'राल्लोपः' ॥—**सृ इत्यस्येति** । निपातनादुत्वम् । रपरत्वं तु 'उरण् रपरः' इत्येव सिद्धम्, कार्यकालपक्षाश्रयणेन परिभाषाणामसिद्धत्वप्रकरणेऽपि प्रवृत्तेः ॥—**गूर्तमिति** । गूर्णमिति भाषायाम् ॥ **३६०२ अम्न-**। उभयथेति व्याचष्टे—**रुर्वा रेफो वेति** । 'ससजुषो रुः' इति नित्यं रुत्वे प्राप्ते पक्षे रेफादेशार्थमिदम् । अम्नस्शब्द ईषदर्थे । अम्नरस्तमितमिति यथा । अवो रक्षणम् ॥—**अम्न एवेति** । यदा रुत्वं तदा 'भोभगो-' इति रोर्यत्वं, 'लोपः शाकल्यस्य' इति लोपः ॥ **३६०३ भुवश्च-**। महाव्याहृतेर्भुवस् इत्येतस्य छन्दसि विषये रुर्वा रेफो वा । तिस्रो महाव्याहृतयः पृथिव्यन्तरिक्षस्वर्गाणां वाचिकाः । इह तु मध्यमाया ग्रहणम् । महाव्याहृतेरिति किम्? भुवो विश्वेषु भुवनेषु, तिङन्तमेतद्भवतेः । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लङ्, सिप्, शपि गुणाभावश्छान्दसः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः । लाक्षणिकत्वादेवास्याग्रहणे सिद्धे महाव्याहृतिग्रहणमस्याः परिभाषाया अनित्यत्वज्ञापनार्थं, तेन क्नापयतीत्यादौ पुक् सिध्यति ॥—**भुव इति** । भुव इत्येतदव्ययमन्तरिक्षवाचि महाव्याहृतिः ॥ **३६०४ ओम-**। अभ्यादानम्=आरम्भः । तदाह—**आरम्भे इति** । अत्र प्लुतश्रुत्याऽच्परिभाषोपस्थानादच एव प्लुतः । मकारस्त्वर्धमात्र इति समुदायोऽध्यर्द्धतुर्यमात्रः संपद्यते ॥ **३६०५ ये यज्ञ-**। 'ये' इत्येतस्य यज्ञकर्मणि प्लुतो भवति ॥ **३६०६ प्रणवः-**। यज्ञकर्मणीति वर्तते । यज्ञकर्मणि टेः प्रणवादेशः स्यात् । तदाह—**यज्ञकर्मणीत्यादि** ॥—**जिन्वतोमिति** । जिविः प्रीणनार्थः । लट्, तिप्, टेः प्रणवादेशः ॥—**टेः किमिति** । 'वाक्यस्य टेः-' इत्यतः 'टेः' इत्यनुवर्तमाने पुनष्टेर्ग्रहणं किमर्थमिति प्रश्नः । असति हि टिग्रहणे 'अलोऽन्त्यस्य' इति वचनाट्टेर्योऽन्त्योऽल् तस्यौकारः स्यात् । तस्मात्सर्वादेशार्थं टिग्रहणमित्याह—**हलन्ते अन्त्यस्य मा भूदिति** । अजन्ते विशेषाभावाद्धलन्ते इत्युक्तम् ॥ **३६०७ याज्यान्तः । ये याज्या मन्त्रा इति** । याज्याकाण्डे पठ्यन्ते ये मन्त्राः=याज्यानुवाक्याकाण्डमिति समाख्याते प्रकरणे ये मन्त्रा इत्यर्थः ॥—**तेषामिति** । मन्त्राणामित्यर्थः । तासामिति पाठे **तासां**=याज्यानाम् । इहेदमन्तग्रहणं टेरित्यस्य **निवर्तकं** वा स्याद्विशेषणं वा । **आद्ये**-अचाऽन्ते विशेषिते अजन्ताया एव याज्यायाः प्लुतः स्यात् । **पक्षान्तरे** त्वन्तग्रहणमनर्थकम्, टेरन्तत्वाव्यभिचारात्-इत्यभिप्रायेणाह—**अन्तः किमिति** ॥ इतरोऽपि विदिताभिप्राय आह—**याज्यानामृचामिति** । याज्या नाम ऋचः काश्चिद्वाक्यसमुदायरूपाः, तत्र यावन्ति वाक्यानि तेषां सर्वेषां टेः प्लुतः प्राप्नोति, स चान्तस्यैवेष्यते, तदर्थमन्तग्रहणमिति भावः ॥ **३६०९ अग्नीत्प्रेषणे परस्य च** । अग्नीधः प्रेषणमग्नीत्प्रेषणम्, तस्मिन् । तदाह—**अग्नीधः प्रेषण इति** ॥ **३६१० विभाषा** । पृष्टप्रतिवचने विभाषा हेः प्लुतो भवति ॥ **३६११ निगृह्या-**। निगृह्येति ल्यबन्तम् । स्वमतात्प्रच्यवनं **निग्रहः** । तस्यैव स्वमतस्य 'एवं किल त्वं निरुपपत्तिकमात्थ' इति शब्देन प्रतिपादनम्-**अनुयोगः**, तत्र यद्वाक्यं । तदाह—**अत्र यद्वाक्यमिति** । निगृह्यानुयोगे यद्वाक्यमित्यर्थः । अद्यामावास्येत्येवं केनचित्प्रतिज्ञातं तमुपपत्तिभिर्निगृह्य साभ्यसूयमनुयुङ्क्ते—**अद्यामावास्येत्यात्थेति** । तदेव विवृणोति—**अमावास्येत्येवमित्यादि** ॥ **३६१२ दस्यो३ दस्यो३ इति** । 'वाक्यादेरामन्त्रितस्य' इत्यादिना द्विर्वचनम् ॥ ननु द्विरुक्तसमुदाये परभागस्यैव प्लुतः प्राप्नोति न तु पूर्वस्य, 'तस्य परमाम्रेडितम्' इति

दस्यो३ घातयिष्यामि त्वाम् । आम्रेडितग्रहणं द्विरुक्तोपलक्षणम्। चौर३ चौर३ चौर३ चौर३ ।

३६१३ । अङ्गयुक्तं तिङाकाङ्क्षम् ।८।२।९६। अङ्गेत्यनेन युक्तं तिङन्तं प्लवते । अङ्ग कूज३ इदानीं ज्ञास्यसि जाल्म । तिङ् किम् । अङ्ग देवदत्त । मिथ्या वदसि । आकाङ्क्षं किम् । अङ्ग पच । नैतदपरमाकाङ्क्षति । भर्त्सने इत्येव । अङ्गाधीष्व भक्तं तव दास्यामि ।

३६१४ । विचार्यमाणानाम् ।८।२।९७। वाक्यानां टेः प्लुतः । होतव्यं दीक्षितस्य गृहा३ इ । न होतव्य३मिति । होतव्यं न होतव्यमिति विचार्यते । प्रमाणैर्वस्तुतत्त्वपरीक्षणं विचारः ।

३६१५ । पूर्वं तु भाषायाम् ।८।२।९८। विचार्यमाणानां पूर्वमेव प्लवते । अहिर्नु३ रज्जुर्नु । प्रयोगापेक्षं पूर्वत्वम् । इह भाषाग्रहणात्पूर्वयोगश्छन्दसीति ज्ञायते ।

३६१६ । प्रतिश्रवणे च ।८।२।९९। वाक्यस्य टेः प्लुतोऽभ्युपगमे प्रतिज्ञाने श्रवणाभिमुख्ये च । गां मे देहि भोः । हन्त ते ददामि ३ । नित्यः शब्दो भवितुमर्हति ३ । दत्त किमात्थ ३ ।

३६१७ । अनुदात्तं प्रश्नान्ताभिपूजितयोः ।८।२।१००। अनुदात्तः प्लुतः स्यात् । दूराद्धूतादिषु सिद्धस्य प्लुतस्यानुदात्तत्वमात्रमनेन विधीयते । अग्निभूत३इ । पट३उ । 'अग्निभूते' 'पटो' एतयोः प्रश्नान्ते टेरनुदात्तः प्लुतः । शोभनः खल्वसि माणवक ३ ।

३६१८ । चिदिति चोपमार्थे प्रयुज्यमाने ।८।२।१०१। वाक्यस्य टेरनुदात्तः प्लुतः । अग्निचिद्भाया३त् । अग्निचिदिव भाया३त् । उपमार्थे किम् । कथंचिदाहुः । प्रयुज्यमाने किम् । अग्निर्माणवको भायात् ।

३६१९ । उपरिस्विदासीदिति च ।८।२।१०२। टेः प्लुतोऽनुदात्तः स्यात् । उपरिस्विदासी३त् । अधःस्विदासी३त्–इत्यत्र तु 'विचार्यमाणानाम्' ३६१६ इत्युदात्तः प्लुतः ।

३६२० । स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु ।८।२।१०३। स्वरितः प्लुतः स्यादाम्रेडिते परेऽसूयादौ गम्ये । असूयायाम्—अभिरूपक ३ अभिरूपक रिक्तं ते आभिरूप्यम् । संमतौ—अभिरूपक ३ अभि-

परभागस्यैवाम्रेडितसंज्ञाविधानात्, इष्यते द्वयोरपीत्याह—आम्रेडितग्रहणमित्यादि ॥ द्विरुक्तोपलक्षणार्थमिति । द्विरुक्तसमुदाये भागद्वयोपलक्षणार्थमित्यर्थः । एतच्चाम्रेडितस्य भर्त्सने वृत्त्यसंभवाल्लभ्यते ॥ ३६१३ अङ्गयुक्तम्–। आकाङ्क्षतीत्याकाङ्क्षं, पचाद्यच् ॥—तिङन्तमिति । आकाङ्क्षं तिङन्तमित्यर्थः ॥—अङ्ग कूज ३ इति । अङ्गशब्दोऽमर्षे, 'कूज अव्यक्ते' लोण्मध्यमपुरुषैकवचनम् ॥—ज्ञास्यसि जाल्मेति । कूजनफलमस्मिन्नेव क्षणे ज्ञास्यसीत्यर्थः ॥—अङ्गदेवदत्तेति । अङ्गशब्दोऽत्रानुनये । अङ्ग देवदत्तेत्येकं वाक्यम् । एतच्च मिथ्या वदस्येतदपेक्षते ॥ ३६१४ विचार्यमाणानाम् । 'कोटिद्वयस्पृग्विज्ञानं विचार इति कथ्यते । विचार्यमाणस्तज्ज्ञानविषयीभूत उच्यते ॥' इह तु विचार्यमाणविषयत्वाद्वाक्यानि विचार्यमाणानि ॥—गृहा ३ इ इति । सप्तम्येकवचनान्तस्य गृहे इत्यस्य 'एचोऽप्रगृह्यस्य–' इति प्लुतविकारः ॥ ३६१५ पूर्वं तु–। पूर्वेणैव सिद्धे नियमार्थमिदम् । तुशब्दस्त्वर्थतोऽवधारणार्थः । यथैवं विज्ञायेत—पूर्वमेव प्लुत इति, मैवं विज्ञायि—पूर्वं भाषायामेवेति । उदाहरणे तुशब्दो वितर्के ॥ ३६१६ प्रतिश्रव–। प्रतिश्रवणार्थमाह—अभ्युपगमे इत्यादि । अङ्गीकारे इत्यर्थः ॥—प्रतिज्ञाने इति । अत्रोभयत्रापि गतिसमासः । अर्थद्वयेऽपि प्रतिपूर्वः शृणोतिः प्रसिद्धः ॥—आभिमुख्ये चेति । अत्र 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः ॥—दत्त किमात्थ ३ इति । 'किं ब्रूषे' इत्येवं पृच्छ्यते । अत्र श्रवणाभिमुख्यं गम्यते ॥ ३६१७ अनुदात्तं प्रश्नान्त–। प्रश्नवाक्ये यच्चरमं प्रयुज्यते स प्रश्नान्तः । नानेन प्लुतो विधीयते, किं तु दूराद्धूतादिषु विहितस्य प्लुतस्योदात्तत्वे प्राप्ते प्रश्नान्ताभिपूजितयोरनुदात्तत्वगुणमात्रं विधीयते । तदाह—दूराद्धूतादिष्विति । तत्रैषा वचनव्यक्तिः—प्रश्नान्ते अभिपूजिते च यः प्लुतः सोऽनुदात्तो भवतीति । तत्राभिपूजिते 'दूराद्धूते च' इति प्लुत इति । इतरत्र तु 'अनन्त्यस्यापि प्रश्नाख्यानयोः' इति ॥—अग्निभूत ३ इ इति ॥ पट ३ उ इति । 'अगम३ः पूर्वान् ग्रामान्' इत्येतद्वाक्यं 'अग्निभूते' 'पटो' इत्यनन्तरेण समाप्तम् । तत्र 'अगमः' इत्येवमादीनाम् 'अनन्त्यस्यापि प्रश्नाख्यानयोः' इति स्वरितः प्लुतः । 'अग्निभूते-पटो' अनयोरनुदात्तः । अभिपूजिते उदाहरणमाह—शोभनः खल्वसीत्यादि ॥ ३६१८ चिदिति चोप—। चिदित्येतन्निपाते उपमानेऽर्थे प्रयुज्यमाने वाक्यस्य टेरनुदात्तः प्लुतो भवतीत्यर्थः । प्लुतोऽप्यत्राज्विधीयते न गुणमात्रम् । इतीति किम् ? अक्रियमाणे तस्मिन्नुपमानार्थे कस्मिंश्चिच्छब्दे प्रयुज्यमाने चिच्छब्दः प्लुत इति विज्ञायते । इतिशब्दे तु सति 'प्रयुज्यमाने' इत्येतच्चिच्छब्दस्य विशेषणं, प्लुतस्तु 'वाक्यस्य टेः–' इत्यधिकारात्तस्यैव भवतीति मनसि विभाव्योदाहरणमुखेनाह—अग्निचिदिव भायादिति । अत्र न चिच्छब्दस्य प्लुतः, किं तु भायादित्यस्यैव । अक्रियमाणे तु इतिशब्दे चिच्छब्दस्यैव प्लुतः स्यात् अग्निचिद्भायादित्यत्र न स्यादिति भावः ॥—कथंचिदिति । अत्र कष्टे चिच्छब्दः ॥—अग्निर्माणवको भायादिति । अग्निरिव माणवको दीप्यत इत्यर्थः । अत्रोपमानार्थस्य गम्यमानत्वादस्ति चिच्छब्दस्य प्रतीतिः । प्रयोगस्तु नास्ति । यद्यन्येषामप्युपमानार्थानामिवादीनामस्ति प्रतीतिस्तथापि चिच्छब्दस्यापि तावदस्तीति भावः ॥ ३६१९ उपरिस्विदासीदिति । अत्रापि 'विचार्यमाणानाम्' इति विहितस्य प्लुतस्य गुणमात्रं विधीयते ॥ ३६२० स्वरितमाम्रेडिते—। उदाहरणे सर्वत्र 'वाक्यादेरामन्त्रितस्य–' इति द्विर्व-

१ 'द्विरुक्तोपलक्षणार्थम्' इति सुबोधिन्यनुकूलः पाठः । २ क्वचित् 'चौर३ चौर३' इत्येव पाठः ।

रूपक शोभनोऽसि । कोपे-अविनीतक ३ अविनीतक इदानीं ज्ञास्यसि जाल्म । कुत्सने-शाक्तीक ३ शाक्तीक रिक्ता ते शक्तिः ।

**३६२१ । क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्** ।८।२।१०४। आकाङ्क्षस्य तिङन्तस्य टेः स्वरितः प्लुतः स्यादाचारभेदे । स्वयं ह रथेन याति ३, उपाध्यायं पदातिं गमयति । प्रार्थनायाम्—पुत्रांश्च लप्सीष्ट ३ धनं च तात । व्यापारणे—कटं कुरु ३ ग्रामं गच्छ । आकाङ्क्षं किम् । दीर्घायुरसि, अग्नीदग्नीन्विहर ।

**३६२२ । अनन्त्यस्यापि प्रश्नाख्यानयोः** ।८।२।१०५। अनन्त्यस्यान्त्यस्यापि पदस्य टेः स्वरितः प्लुत एतयोः । अगम३ः पूर्वा३न् ग्रामा३न् । सर्वपदानामयम् । आख्याने—अगम३म् पूर्वा३न् ग्रामा३न् ।

**३६२३ । प्लुतावैच इदुतौ** ।८।२।१०६। दूराद्धूतादिषु प्लुतो विहितस्तत्रैव ऐचः प्लुतप्रसङ्गे तदवयवाविदुतौ प्लवेते । ऐ३तिकायन । औ३पगव । चतुर्मात्रावत्र ऐचौ संपद्येते ।

**३६२४ । एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ** ।८।२।१०७। अप्रगृह्यस्य एचोऽदूराद्धूते प्लुतविषये पूर्वस्यार्धस्याकारः प्लुतः स्यादुत्तरस्य त्वर्धस्य इदुतौ स्तः ॥ ❀ **प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभिवादयाज्यान्तेष्वेव** । प्रश्नान्ते—अगम३ः पूर्वा३न् ग्रामा३न् अग्निभूत३इ । अभिपूजिते—भद्रं करोषि पट३उ । विचार्यमाणे—होतव्यं दीक्षितस्य गृह३इ । प्रत्यभिवादे—आयुष्मानेधि अग्निभूत३इ । याज्यान्ते—स्तोमैर्विधेमाग्नय३इ । परिगणनं किम् । विष्णुभूते घातयिष्यामि त्वाम् । अदूराद्धूत इति न वक्तव्यम् । पदान्तग्रहणं तु कर्तव्यम् । इह मा भूत्—भद्रं करोषि गौरिति । अप्रगृह्यस्य किम् । शोभने माले३ ॥ ❀ **आमन्त्रिते छन्दसि प्लुतविकारोऽयं वक्तव्यः** । अग्न३इ पत्नी व३ः ।

**३६२५ । तयोर्य्वावचि संहितायाम्** ।८।२।१०८। इदुतोर्यकारवकारौ स्तोऽचि संहितायाम् । अग्न ३ याशा । पट ३ वाशा । अग्न ३ यिन्द्रम् । पट ३ वुदकम् । अचि किम् । अग्न ३ इ वरुणौ । संहितायां किम् । अग्न ३ इ इन्द्रः । संहितायामित्यध्यायसमाप्तेरधिकारः । इदुतोरसिद्धत्वादयमारम्भः सवर्णदीर्घत्वस्य शाकल्यस्य च निवृत्त्यर्थम्, यवयोरसिद्धत्वात् 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' ३६५४ इत्यस्य बाधनार्थौ वा ।

---

चनम् ॥ **३६२१ क्षियाशीः—**। क्षिया=आचारोल्लङ्घनम् । इष्टाशंसनमाशीः ॥—**दीर्घायुरसि, अग्नीदग्नीन्विहरेति** । क्षियायां तु न प्रत्युदाहृतं, नित्यसाकाङ्क्षत्वात् । न हि स्वयं ह रथेन यातीत्युक्ते आचारभेदो गम्यते । किं तर्हि ? उपाध्यायं पदातिं गमयतीत्युक्ते ॥ **३६२३ प्लुतावै—**। उदाहरणे 'गुरोरनृतः–' इति प्लुतः ॥—**चतुर्मात्राविति** । ऐचौ समाहारवर्णौ तत्र मात्रा–अवर्णस्य, मात्रा–इवर्णोवर्णयोः । तत्र ईदूतोः प्लुते कृते तयोस्तिस्रो मात्राः, अवर्णस्य चैका मात्रेति समुदायश्चतुर्मात्र इत्यर्थः ॥ नन्वत्रार्धमात्राऽवर्णस्याध्यर्द्धमात्रेवर्णोवर्णयोरिति मतेऽर्धचतुर्थमात्रावप्यैचौ प्राप्नुतः । **सत्यम्**, 'चतुर्मात्रः प्लुत इष्यते' इति भाष्यात् समविभाग एवात्राश्रीयत इति भावः ॥ **३६२४** परिगणनमाह—**प्रश्नान्तेत्यादि** । 'अनुदात्तं प्रश्नान्ताभिपूजितयोः' 'अनन्त्यस्यापि प्रश्नाख्यानयोः' इति चानुदात्तः स्वरितो वा प्लुतः । **अभिपूजिते**–'अनुदात्तं प्रश्नान्ताभिपूजितयोः' इति प्लुतः । **विचार्यमाणे**–'विचार्यमाणानाम्' इति प्लुतः । **प्रत्यभिवादे**–'प्रत्यभिवादेऽशूद्रे' इति प्लुतः । **याज्यान्ते**–'याज्यान्तः' इति प्लुतः ॥—**विष्णुभूते इति** । नन्विदं परिगणनस्योदाहरणमयुक्तं, यावता सूत्रे एवादूराद्धूत इत्युच्यते, अत आह—**अदूराद्धूत इति न वक्तव्यमिति** । अन्यार्थेऽवश्यं कर्तव्ये परिगणने तेनैव सिद्धत्वात् 'अदूराद्धूते' इति न वक्तव्यम् ॥—**भद्रं करोषि गौ ३ रिति** । अत्रासर्वनामस्थान इति प्रतिषेधात्सौ परतः पूर्वपदं न भवति ॥—**शोभने माले ३ इति** । 'ईदूदेद्–' इति प्रगृह्यसंज्ञा ॥—**आमन्त्रिते इति** । अप्राप्ते एव प्लुते वचनम् ॥—**अग्न ३ इ इति** । अग्निशब्दस्य संबुद्धौ रूपं, 'सामन्त्रितम्' इति आमन्त्रितसंज्ञा ॥ **३६२५ तयोर्य्वा—**। नन्विदं व्यर्थम् 'इको यणचि' इत्यनेनैव सिद्धम्, अत आह—**इदुतोरसिद्धत्वादिति** । ननु सिद्धः प्लुतः स्वरसन्धिषु । कथं ज्ञायते ? 'प्लुतप्रगृह्या अचि–' इति प्रकृतिभावविधानात् । यस्य हि विकारः प्राप्तस्तस्य प्रकृतिभावो विधेयः, प्लुतस्यासिद्धत्वे न तस्य स्वरसन्ध्याख्यो विकारः प्राप्नोति । अस्तु प्लुतः सिद्धः, किमायातमिदुतोः ? उच्यते । प्लुतप्रकरणे यत्कार्यं तत्स्वरसन्धिषु सिद्धमिति सामान्येन ज्ञापकमाश्रयिष्यते, ततश्चेदुतोरपि सिद्धत्वात्सिद्ध एव यणादेशः, अत आह—**सवर्णदीर्घत्वस्येति** । यदीदं नोच्येत 'अग्न ३ इ इन्द्रं' 'पट ३ उ उदकम्' इत्यत्र षाष्ठिकं यणादेशं बाधित्वा सवर्णदीर्घः स्यात् । अग्न ३ याशेत्यादौ च 'इकोऽसवर्णे शाकल्यस्य–' इति प्रकृतिभावः स्यात्तद्बाधनार्थमिदं वक्तव्यमेव ॥ ननु च तन्निवृत्तये यत्नान्तरमस्ति । किं पुनस्तत् ? 'प्लुतपूर्वस्य यणादेशो वक्तव्यः सवर्णदीर्घनिवृत्त्यर्थः शाकलनिवृत्त्यर्थश्च' । तच्चावश्यं वक्तव्यं । य इक् प्लुतपूर्वः, न च प्लुतविकारः—भो३ इ इन्द्रं, भो३यिन्द्रं गायतीति । भोशब्दस्य छान्दसः प्लुतः, ततः परस्येकारस्य निपातत्वात् प्रकृतिभावे प्राप्ते तं बाधित्वा यणादेशः । तदेवं तस्यावश्यं कर्तव्यत्वेनैव यणा सिद्धे, अत आह—**यवयोरित्यादि** । तथाचोक्तं वृत्तिकृता—'**किं तु यणा भवतीह न सिद्धं य्वाविदुतोर्यदयं विदधाति । तौ च मम स्वरसन्धिषु सिद्धौ शाकलदीर्घविधी तु निवर्त्यौ । इक् च यदा भवति प्लुतपूर्वस्तस्य यणं विदधात्यपवादम् । तेन तयोश्च न शाकलदीर्घौ यण्स्वरबाधनमेव तु हेतुः**' ॥ अयमर्थः—'इको यणचि' इति

३६२६ । **मतुवसो रु संबुद्धौ छन्दसि** ।८।३।१। 'रु' इत्यविभक्तिको निर्देशः । मत्वन्तस्य वस्वन्तस्य च रुः स्यात् । 'अलोऽन्त्यस्य' ४२ इति परिभाषया नकारस्य । इन्द्र॑ मरुत्व इ॒ह पा॑हि॒ सोम॑म् । हरिवो मेदि॑नं त्वा । 'छन्दसीरः' ३६०० इति वत्वम् ।

३६२७ । **दाश्वान्साह्वान्मीढ्वांश्च** ।६।१।१२। एते क्वस्वन्ता निपात्यन्ते । मीढ्वस्तोकाय तनयाय ॥ ॐ **वन उपसंख्यानम्** । क्वनिब्वनिपोः सामान्यग्रहणम् । अनुबन्धपरिभाषा तु नोपतिष्ठते, अनुबन्धस्येहानिर्देशात् । यस्त्वायन्तं वसुना प्रातरित्वः । इणः क्वनिप् ।

३६२८ । **उभयथर्क्षु** ।८।३।८। अम्परे छवि नकारस्य रुर्वा । प॒शूंस्तांश्चक्रे ।

३६२९ । **दीर्घादटि समानपादे** ।८।३।९। दीर्घान्नकारस्य रुर्वा स्यादटि, तौ चेन्नाटौ एकपादस्थौ स्याताम् । दे॒वाँ अच्छा॑ सुम॒ती । म॒हाँ इन्द्रो॒ य ओज॑सा । 'उभयथा' इत्यनुवृत्तेर्नेह—आ॒दि॒त्यान्या॑चिषामहे ।

३६३० । **आतोऽटि नित्यम्** ।८।३।३। अटि परतो रोः पूर्वस्यातः स्थाने नित्यमनुनासिकः । म॒हाँ इन्द्रः॑ । तैत्तिरीयास्तु अनुस्वारमधीयते । तत्र छान्दसो व्यत्यय इति प्राञ्चः । एवं च सूत्रस्य फलं चिन्त्यम् ।

३६३१ । **स्वतवान्पायौ** ।८।३।११। रुर्वा । भुव॒स्तस्य॑ स्वत॑वाँः पा॒युर॑ग्ने ।

३६३२ । **छन्दसि वाऽप्राम्रेडितयोः** ।८।३।४९। विसर्गस्य सो वा स्यात् कुप्वोः प्रशब्दमाम्रेडितं च वर्जयित्वा । अग्ने॑ त्रात॒रृत॑स्कविः । गि॒रिर्न॑ वि॒श्वत॑स्पृ॒थुः । नेह—वसु॑नः पू॒र्व्यः पतिः॑ । अप्रेत्यादि किम् । अ॒ग्निः प्र वि॒द्वान् । परु॑षः परुषः ।

३६३३ । **कःकरत्करतिकृधिकृतेष्वनदितेः** ।८।३।५०। विसर्गस्य सः स्यात् । प्र॒दि॒वो अ॑पस्कः । यथा॑ नो॒ वस्य॑सस्कर॑त् । सु॒पेश॑सस्करति । उ॒रुण॑स्कृधि । सोम॑ न चारु॑ म॒घव॑त्सु नस्कृतम् । अनदितेरिति किम् । यथा॑ नो॒ अदि॑तिः कर॑त् ।

३६३४ । **पञ्चम्याः परावध्यर्थे** ।८।३।५१। पञ्चमीविसर्गस्य सः स्यादुपरिभवार्थे परिशब्दे परतः । दि॒वस्परि॑ प्र॒थ॒मं ज॑ज्ञे । अध्यर्थे किम् । दि॒वस्पृ॑थि॒व्याः पर्योज॑ः ।

३६३५ । **पातौ च बहुलम्** ।८।३।५२। पञ्चम्या इत्येव । सूर्यो॑ नो दि॒वस्पा॑तु ।

यणादेशेन किं रूपं न सिध्यति ? यतोऽयमाचार्यः—इदुतोर्ग्वौ विदधाति । तौ च 'इदुतौ' स्वरसन्धिषु सिद्धौ । **ममेति** सूत्रकारेणैकीभूतस्य वचनम् । एवं चोदिते परिहरति—**शाकलदीर्घविधी तु निवर्त्याविति** । शाकलस्येदं शाकलं, 'कण्वादिभ्यो गोत्रे' इत्यण् । पुनश्चोदयति—**इकू च यदेति** । वार्तिककारोऽपि इकः प्लुतपूर्वस्य यणं विदधाति । स च प्रकृतिभावस्येव शाकलदीर्घविध्योरप्यपवादः । ततश्च तेनैव यणा एतयोरपि इदुतोः शाकलदीर्घौ न भविष्यत इति नार्थ एतेन । परिहरति—**यण स्वरेति** । यणस्वरबाधनार्थमेव हेतुः सूत्रारम्भस्येति ॥ **३६२६ मतु—**। अनुबन्धपरित्यागेन सकारान्तस्य वस् इत्यस्य मतुपा सह द्वन्द्वः । अल्पाच्तरस्यापि सौत्रः परनिपातः ॥—**मरुत्व इति** । मरुतो यस्य सन्तीति मतुप् । 'झयः' इति वत्वं । 'तसौ मत्वर्थे' इति भत्वाजश्त्वं न ॥—**हरिवो मेदिनमिति** । हरयो विद्यन्ते यस्येति मतुप् । हरिवच्छब्दात्संबुद्ध्येकवचने 'उगिदचाम्–' इति नुम् । हल्ङ्यादिलोपे संयोगान्तलोपे च कृते नकारस्य रुः, 'संयोगान्तलोपो रुत्वे सिद्धो वक्तव्यः' इति वचनात् 'हशि च' इत्युत्वम् ॥ **३६२७** प्रसङ्गादाह—**दाश्वानिति** ॥—**क्वनिब्वनिपोः सामान्येन ग्रहणमिति** । अनुबन्धनिर्देशात्तदनुबन्धकपरिभाषाया अनुपस्थानात् क्वनिपोऽपि ग्रहणम् ॥—**प्रातरित्व इति** । प्रातरेतीति 'अन्येभ्योऽपि दृश्यन्ते' इति क्वनिप् । 'ह्रस्वस्य पिति कृति तुक्' । तदाह—**इणः क्वनिविति** ॥ **उभयथा** । 'नश्छव्यप्रशान्' इति वर्तते । तेनैव नित्ये प्राप्ते विकल्पार्थं वचनम् ॥ **३६२८ पशूंस्तांश्चक्रे इति** । पशून् तानिति स्थिते नस्य रुः । पूर्वत्र 'अत्रानुनासिकः–' इति वाऽनुनासिकः । उत्तरत्र तु 'आतोऽटि नित्यम्' इति नित्यमनुनासिकः । रेफस्य विसर्गः । तस्य 'विसर्जनीयस्य' इति सः ॥ **३६२९ दीर्घादटि समानपादे** । एकपर्यायः समानशब्दः, तदाह—**तौ चेन्नाटावेकपादस्थाविति** । नाटौ=नकार-अटौ ॥—**देवाँ अच्छा । महाँ इन्द्र इति** । देवान् अच्छा महानिति नस्य रुः । 'आतोऽटि नित्यम्' इति नित्यमनुनासिकः ॥—**नेहेति** । एतेन महान् हि स इति बह्वृचानां पाठोऽपि व्याख्यातः । आकरे तु 'महाँ हि' इत्युदाहृतं, तच्छाखान्तरे अन्वेषणीयम् ॥ **३६३० एवं चेति** । विकल्पस्यैव व्यवस्थिततया प्रकृतसूत्रत्यागेन महल्लाघवम् । सूत्रारम्भे तु व्यत्ययोऽपि शरणीकरणीय इति महान् क्लेश इति भावः ॥ **३६३१ स्वतवान्**–। स्वतवानित्येतस्य नकारस्य रुर्वा पायुशब्दे परे ॥—**स्वतवा इति** । तु वृद्धौ सौत्रो धातुः, ततोऽसुन् । स्वं तवो यस्यासौ स्वतवान् । 'दृक्स्ववःस्वतवसां छन्दसि' इति नुम् ॥ **३६३२ परुषः परुष इति** । वीप्सायां द्विर्वचनम् ॥ **३६३३ कःकरत्—। 'कः' इति** कृञो लुङ्, 'मन्त्रे घस–' इत्यादिना च्लेर्लुक्, तिपि गुणः । हल्ङ्यादिलोपः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः । **'करत्' इति** कृञ एव लुङ् । 'कृमृदृरुहिभ्यश्छन्दसि' इति च्लेरङ् । 'ऋदृशोऽङि–' इति गुणः । **'करति' इति** लट्, व्यत्ययेन शप् । **'कृधि' इति** लोट्, मेर्हिः । 'श्रुशृणुपृकृवृभ्यश्छन्दसि' इति हेर्धिरादेशः । **'कृत' इति** कृञ एव क्तः ॥ **३६३४ पर्योज इति** । अत्र परिः सर्वतोभावे ॥ **३६३५ पातौ च** । क्वचित्पठ्यते—**पाताविति धातुनिर्देश इति** । अन्ये तूदाहरण-

३६३६ । **षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु** ।८।३।५३। वाचस्पतिं विश्वकर्माणम् । दिवस्पुत्राय सूर्याय । दिवस्पृष्ठं भन्दमानः । तमसस्पारमस्य । परिवीत इळस्पदे । दिवस्पयो दिधिषाणाः । रायस्पोषं यजमानेषु ।

३६३७ । **इडाया वा** ।८।३।५४। पतिपुत्रादिषु परेषु । इळायास्पुत्रः, इळायाः पुत्रः । इळायास्पदे, इळायाः पदे ।

**'निसस्तपतावनासेवने'** २४०३ । निसः सकारस्य मूर्धन्यः स्यात् । निष्टपं रक्षो निष्टप्ता अरातयः । अनासेवने किम् । निस्तपति । पुनःपुनस्तपतीत्यर्थः ।

३६३८ । **युष्मत्तत्ततक्षुष्वन्तःपादम्** ।८।३।१०३। पादमध्यस्थस्य सस्य मूर्धन्यः स्यात्तकारादिषु परेषु । युष्मदादेशाः—त्वं-त्वा-ते-तवाः । त्रिभिष्ट्वं देव सवितः । तेभिष्ट्वा । आभिष्टे । अप्स्वग्ने सधिष्टव । अग्निष्टद्विश्वम् । द्यावापृथिवी निष्टतक्षुः । अन्तःपादं किम् । तदग्निस्तदर्यमा । यन्मे आत्मनो मिन्दाभूदग्निस्तत्पुनराहाज्जातवेदा विचर्पणिः । अत्राग्निरिति पूर्वपादस्यान्तो न तु मध्यः ।

३६३९ । **यजुष्येकेषाम्** ।८।३।१०४। युष्मत्तत्ततक्षुषु परतः सस्य मूर्धन्यो वा । अर्चिभिष्ट्वम् । अग्निष्टे अग्रम् । अर्चिभिष्टतक्षुः । पक्षे—अर्चिभिस्त्वम्–इत्यादि ।

३६४० । **स्तुतस्तोमयोश्छन्दसि** ।८।३।१०५। नृभिष्टुतस्य, नृभिः स्तुतस्य । गोष्टोमम्, गोस्तोमम् । 'पूर्वपदात्' इत्येव सिद्धे प्रपञ्चार्थमिदम् ।

३६४१ । **पूर्वपदात्** ।८।३।१०६। पूर्वपदस्थान्निमित्तात्परस्य सस्य षो वा । यदिन्द्राग्नी दिवि ष्ठः । युवं हि स्थः स्वर्पती ।

३६४२ । **सुञः** ।८।३।१०७। पूर्वपदस्थान्निमित्तात्परस्य सुञो निपातस्य सस्य षः । ऊर्ध्व ऊ षु णः । अभी षु णः ।

३६४३ । **सनोतेरनः** ।८।३।१०८। गोषा इन्दो नृषा असि । अनः किम् । गोसनिः ।

३६४४ । **सहेः पृतनर्ताभ्यां च** ।८।३।१०९। पृतनाषाहम् । ऋताषाहम् । चात्—ऋतीषाहम् ।

३६४५ । **निव्यभिभ्योऽड्व्यवाये वा छन्दसि** ।८।३।११९। सस्य मूर्धन्यः । न्यषीदत्, न्यसीदत् । व्यषीदत्, व्यसीदत् । अभ्यष्टौत्, अभ्यस्तौत् ।

३६४६ । **छन्दस्यृदवग्रहात्** ।८।४।२६। ऋकारान्तादवग्रहात्परस्य नस्य णः । नृमणाः । पितृयाणम् ।

३६४७ । **नश्च धातुस्थोरुषुभ्यः** ।८।४।२७। धातुस्थात्—अग्ने रक्षा णः । शिक्षा णो अस्मिन् । उरु णस्कृधि । अभी षु णः । मो षु णः ॥ इत्यष्टमोऽध्यायः ॥

॥ इति सिद्धान्तकौमुद्यां वैदिकी प्रक्रिया ॥

---

पर्यालोचनया लोडन्तानुकरणं मन्यन्ते ॥ **३६३६ षष्ठ्याः—**॥—**वाचस्पतिमिति** । 'तत्पुरुषे कृति बहुलम्' इति षष्ठ्यलुक् ॥ **३६३७ निसस्तपता—**। आसेवनं=पौनःपुन्यं, ततोऽन्यस्मिन्नित्यर्थः ॥ **३६३८ युष्मत्तत्ततक्षुष्विति** । सकारान्तानुकरणात् परस्य सुप्सकारस्य 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति षत्वम् ॥ 'ह्रस्वात्तादौ–' इत्यतः तादाविति वर्तते । तदाह—**तकारादिष्विति** । एतद्युष्मद एव विशेषणं नेतरयोः, अव्यभिचारात् ॥—**त्वं त्वा ते तवा इति** । एतेषामेव संभव इत्यर्थः ॥ **३६४० स्तुतस्तोमयोः—**। एतयोः परतः सस्य षत्वं स्यात् ॥—**पूर्वपदादित्येव सिद्ध इति** । पूर्वं पदं पूर्वपदमिति सामान्यत आश्रीयते, न तु समासावयव एवेति वाक्येऽपि तेनैव सिद्धं षत्वमिति भावः । ततश्च स्तुतस्तोमग्रहणं प्रपञ्चार्थं, छन्दोग्रहणं तूत्तरार्थं कर्तव्यमेव ॥ **३६४२ ऊ षुण इत्यादि** । 'इकः सुञि' इति पूर्वपदस्य दीर्घत्वं, नस् इत्यादेशस्य 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम् ॥ **३६४४ सनोतेरनः** । अन्नन्तस्य सनोतेः सस्य षः स्यात् ॥—**गोषा इति** । 'जनसनखनक्रमगमो विट्', 'विड्वनो–' इत्यात्वम् ॥—**गोसनिरिति** । 'छन्दसि वनसनरक्षिमथाम्' इतीन्प्रत्ययः ॥ **३६४७ निव्यभिभ्यो—**। 'न रपर–' इत्यतो नेति वर्तते । तत्र निषेधविकल्पे विधिविकल्प एव फलतीत्याह—**मूर्धन्यो वा स्यादिति** ॥—**अभ्यष्टौदिति** । 'उतो वृद्धिर्लुकि हलि' इति वृद्धिः ॥ **३६४६ छन्दस्यृदव—**। अवगृह्यते=विच्छिद्य पठ्यते इत्यवग्रहः । ऋच्चासाववग्रहश्च ऋदवग्रहः, तस्मात् ॥—**नृमणा इति** । अत्र संहिताधिकारात्संहिताकाल एव हि तेषां णत्वं, पदकाले चावग्रहः क्रियते । तेनावग्रहयोग्यत्वादृकारोऽवग्रह इत्युक्तः, न तु तद्दशापन्नः । अत्र हि नृमना इति पदकालेऽवगृह्यते ॥ **३६४७ नश्च—**। धातुस्थान्निमित्तादुत्तरस्य उरुशब्दात् षुशब्दाच्च परस्य नस् इत्येतस्य णः स्यात् । धातौ तिष्ठतीति धातुस्थो रेफः षकारश्च । उरु इति स्वरूपग्रहणम् । षु इति कृतषत्वस्य सुञो ग्रहणं न सप्तमीबहुवचनस्य । तेन 'इन्द्रो धर्ता गृहेषु नः' इत्यादौ न । नसिति नासिकादेशस्य नासादेशस्य च सामान्येन ग्रहणम् ॥—**रक्षा ण इति** । रक्षेति लोटो मध्यमपुरुषैकवचनान्तं, 'द्व्यचोतस्तिङः' इति दीर्घः ॥—**उरुणस्कृधीति** । कृञो लोट् सेर्हिः 'श्रुशृणुपॄकृवृभ्यश्छन्दसि' इति हेर्धिः । 'कः करत्–' इत्यादिना विसर्जनीयस्य सत्वम् ॥—**अभी षुण इति** । 'इकः सुञि' इति दीर्घः । एवं मोषुण इत्यत्रापि । सर्वत्रोदाहरणे अस्मदादेशोऽयं नस् ॥

इति श्रीमन्मौनिकुलतिलकायमानगोवर्धनभट्टात्मजरघुनाथभट्टात्मजेन जयकृष्णेन कृतायां सुबोधिन्याख्यायां सिद्धान्तकौमुदीव्याख्यायां वैदिकी प्रक्रिया समाप्तिमगमत् ॥



# अथ स्वरप्रकरणम् ।

३६४८ । **अनुदात्तं पदमेकवर्जम्** ।६।१।१५८। परिभाषेयं स्वरविधिविषया । यस्मिन्पदे यस्योदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा शेषं तत्पदमनुदात्ताच्कं स्यात् । गोपायतं नः । अत्र 'सनाद्यन्ताः—' २३०४ इति धातुत्वे धातुस्वरेण यकाराकार उदात्तः, शिष्टमनुदात्तम् ॥ ***सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वाच्यम्** । तेनोक्तोदाहरणे गुपेर्धातुस्वर आयस्य प्रत्ययस्वरश्च न शिष्यते । अन्यत्रेति किम् । यज्ञं यज्ञमभिवृधे गृणीतः । अत्र सति शिष्टोऽपि 'श्ना' इत्यस्य स्वरो न शिष्यते, किंतु तस एव ।

३६४९ । **अनुदात्तस्य च यत्रोदात्तलोपः** ।६।१।१६१। यस्मिन्ननुदात्ते परे उदात्तो लुप्यते तस्योदात्तः स्यात् । देवीं वाचम् । अत्र ङीबुदात्तः ।

---

**३६४८ अनुदात्तं पदम्-॥—परिभाषेयमिति** । नाधिकारः, अस्वरितत्वात् । 'आद्युदात्तश्च' 'समानोदरे शयित ओ चोदात्तः' इत्यादीनामसंग्रहश्च स्यात् ॥ परिभाषाया लिङ्गापेक्षायामाह—**स्वरविधीति** । सूत्रे अनुदात्तशब्दोऽर्शआद्यजन्तः, पदसामानाधिकरण्यात् । अत्रानुदात्तस्य क्रियमाणत्वात् तद्भिन्न उदात्तः स्वरितो वा वर्ज्यत इत्याह—**तमेकमचमिति** । यत्तदोर्नित्यसंवन्धाद्यस्योदात्तस्वरितविधानं तस्यैव वर्जनम् । एकग्रहणं विधीयमानस्योपलक्षणम् । तेन 'तवै चान्तश्च युगपत्' इति द्वयोर्वर्जनम् । इन्द्राबृहस्पती इत्यत्र 'देवताद्वन्द्वे च' इति सूत्रेण पदद्वयस्यापि प्रकृतिस्वरे विधेये त्रयाणां वर्जनम् । बृहस्पतिशब्दो हि वनस्पत्यादित्वादाद्युदात्त इति स्थितम् ॥—**गोपायतमिति** । गुप इत्यस्य 'धातोः' इत्यन्त उदात्तः । तत आयः प्रत्ययः 'आद्युदात्तश्च' इति प्रत्ययस्वरेणाद्युदात्तः । ततः 'सनाद्यन्ताः–' इति धातुसंज्ञायां 'धातोः' इति यकाराकार उदात्तः । स च प्रागुक्तयोरुदात्तयोः सतोः पश्चात्प्रवृत्तत्वात्सति शिष्टः, अतो बलवान् । तस्य 'अनुदात्तौ सुप्पितौ' इत्यनेनानुदात्तेन शबकारेण सह 'अतो गुणे' इति पररूपे कृते 'एकादेश उदात्तेनोदात्तः' इत्युदात्तः । थसस्तमादेशः । तस्य 'तास्यनुदात्तेन्ङिददुपदेशात्–' इत्यनेनादुपदेशात्परत्वादनुदात्तत्वम् । तस्य 'उदात्तादनुदात्तस्य–' इति स्वरितः ॥ नन्वत्र तमिति स्वरितमाश्रित्य 'अनुदात्तं पदम्–' इति परिभाषया शेषनिघातः स्यादिति चेत्, **मैवम्** । यथोद्देशपक्षाश्रयणेनेयं परिभाषा त्रिपाद्यां न प्रवर्तते इत्यत्र ज्ञापकं—तव्यतस्तित्त्वं, 'यतोऽनावः' इति च ॥—**सति शिष्टेति** । यो हि यस्मिन् सति शिष्यते स शिष्टः, तस्य बाधको भवतीत्यर्थः । एतच्च सति शिष्टस्य बाधकत्वं न्यायसिद्धम् । **तथा हि**—उदात्तस्वरितविधिभिरेकवाक्यतामापन्नयाऽनया शेषनिघातः क्रियते । तत्रोत्सर्गस्यापवादस्य वा चरमा या प्राप्तिस्तत्रास्या उपस्थाने पूर्वा प्रवृत्तिर्बाध्यते । तद्यथा—औपगवत्वमिति–अत्राण्प्रत्यये त्वप्रत्यये च 'आद्युदात्तश्च' इति प्रवर्तमानं स्वस्यैव प्रथमप्रवृत्तिं बाधते, द्वितीयप्रवृत्त्या लक्ष्यं परिनिष्ठापयतीति दिक् ॥ ननु यदि सति शिष्टः स्वरो बलीयस्तर्हि सति शिष्टत्वाद्विकरणस्वरोऽपि बलीयः स्यात् । तथा च गृणीत इत्यादि मध्योदात्तं पदं स्यादत आह—**अन्यत्रेति** । सति शिष्टोऽपि विकरणस्वरः प्रत्ययस्वरं न बाधत इत्यर्थः । अत्र च ज्ञापकं—तासेः परस्य लसार्वधातुकस्यानुदात्तविधानम् । **तथाहि**—यद्यपि लावस्थायां तासिर्विधीयते तथापि लकारमात्रापेक्षत्वादन्तरङ्गेषु परेषु च लादेशेषु प्रवृत्तेषु पश्चात्तासिरिति तत्स्वरस्य सतिशिष्टत्वात् शेषनिघातेनैव सिद्धेरपार्थकं तत्स्यात् ॥—**गृणीत इति**—अन्तोदात्तं पदम् । अत्र 'तास्यनुदात्त–' इति लसार्वधातुकनिघातो न, अदुपदेशेति तपरकरणात्, श्नाप्रत्ययस्यादन्तत्वाभावात् । 'तिङ्ङतिङः' इति निघातस्तु न भवति, 'यद्वृत्तान्नित्यम्' इति निषेधात् । स हि व्यवहितेऽपि प्रवर्तते ॥—**तस एवेति** । तसः 'आद्युदात्तश्च' इत्याद्युदात्तः स्वरः शिष्यत इत्यर्थः ॥ **३६४९ अनुदात्तस्य-** । देवशब्दोऽच्प्रत्ययान्तत्वात् 'चितः' इत्यन्तोदात्तः । पचादिषु देवडिति पाठः । 'टिड्ढा–' इति ङीप्, तस्य 'अनुदात्तौ सुप्पित्तौ' इत्यनुदात्तत्वे 'यस्येति च' इत्यकारलोपः ॥ नन्वनुदात्तस्येति व्यर्थं, न ह्याद्युदात्ते स्वरिते वा परे उदात्तलोपोऽस्ति । **न च** प्रसज्यत इति प्रसङ्गः, कर्मणि घञ्, 'कर्षात्वतो घञोऽन्त उदात्तः' इत्यन्तोदात्तत्वम् । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इत्युपसर्गस्य दीर्घः, 'तं वहति' इति प्रागिघतायत्, तित्त्वात्स्वरितः, तस्मिन् परे 'यस्य–' इति लोपः । अत्र स्वरिते परे उदात्तलोपोऽस्त्येवेति **वाच्यम्** । स्वरिते हि विधीयमाने परिशिष्टम् 'अनुदात्तं पदमेकवर्जम्' इत्यनुदात्तं, तत्कृत उदात्तलोप इति चेत्, **सत्यम्** । मा हि धुक्षातामित्यत्र दुहेर्लुङात्मनेपदमातां, 'शल इगुपधा–' इति च्लेः क्सः, आतामित्यस्य 'तास्यनुदात्तेन्ङिददुपदेशात्' इति लसार्वधातुकानुदात्तत्वम् । क्सः प्रत्ययस्वरेणोदात्तः, 'क्सस्याचि' इत्यकारलोपः । अत्र 'कर्षात्वतो घञोऽन्त उदात्तः' इत्यतः 'अन्तः' इत्यधिकारादन्त्यस्योदात्तत्वं स्यात्, सति त्वस्मिन्नादेर्भवति ॥ ननु यत्रोदात्तलोप इत्युच्यमाने कथमन्त्यस्य प्रसङ्गः? न हि तदुदात्तलोपस्य

३६५० । चौ ।६।१।२२२। लुप्ताकारेऽञ्चतौ परे पूर्वस्यान्तोदात्तः स्यात् । उदात्तनिवृत्तिस्वरापवादः । दे॒व॒द्रीचीं॑ नयत देव॒यन्तः॑ ॥ ॐ **अतद्धित इति वाच्यम्** । दाधीचः । माधूचः । प्रत्ययस्वर एवात्र ।

३६५१ । **आमन्त्रितस्य च** ।६।१।१९८। आमन्त्रितस्यादिरुदात्तः स्यात् । अग्ने॒ इन्द्र॒ वरु॑ण॒ मित्र॒ देवाः॑ ।

३६५२ । **आमन्त्रितस्य च** ।८।१।१९। पदात्परस्यापादादिस्थितस्यामन्त्रितस्य सर्वस्यानुदात्तः स्यात् । प्रागुक्तस्य षाष्ठस्यापवादोऽयमाष्टमिकः । इ॒मं मे॑ गङ्गे यमुने सरस्वति । अपादादौ किम् । शुतु॑द्रि॒ स्तोम॑म् ।

**'आमन्त्रितं पूर्वमविद्यमानवत्' ४१२** । अग्न॒ इन्द्र॑ । अत्रेन्द्रादीनां निघातो न, पूर्वस्याविद्यमानत्वेन पदात्परत्वाभावात् ।

**'नामन्त्रिते समाना[1]धिकरणे सामान्यवचनम्' ४१३** । समानाधिकरण आमन्त्रिते परे विशेष्यं पूर्वमविद्यमानवन्न । अग्ने॑ तेजस्विन् । अ॒ग्ने॑ त्रातः । सामान्यवचनं किम् । पर्यायेषु मा भूत् । अ॒ध्न्ये॑ देवि सरस्वति ।

**सामान्यवचनं विभाषितं विशेषवचने ४१४** । अत्र भाष्यकृता 'बहुवचनम्' इति पूरितम् । 'सामान्यवचनम्' इति च पूर्वसूत्रे योजितम् । आमन्त्रितान्ते विशेषणे परे पूर्वं बहुवचनान्तमविद्यमानवद्वा । देवीः॑ षळुर्वीरु॒रु नः॑ कृणोत । अत्र देवीनां विशेषणं षडिति । देवाः शरण्याः । इह द्वितीयस्य निघातो वैकल्पिकः ।

३६५३ । **सुबामन्त्रिते पराङ्गवत्स्वरे** ।२।१।२। सुबन्तमामन्त्रिते परे परस्याङ्गवत्स्वरे कर्तव्ये । द्रव॑त्पाणी॒ शुभस्पती । 'शुभ' इति शुभेः क्विबन्तात्षष्ठ्यन्तस्य परशरीरानुप्रवेशे षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । न चाष्टमिको निघातः शङ्क्यः, पूर्वामन्त्रितस्याविद्यमानत्वेन पादादित्वात् । यत्ते॑ दिवो दुहितर्मर्त॒ भोज॑नम् । इह दिवःशब्दस्याष्टमिको निघातः । परशुना वृश्चन् ॥ ॐ **षष्ठ्यामन्त्रितकारकवचनम्** । षष्ठ्यन्तमामन्त्रितान्तं प्रति यत्कारकं

---

निमित्तमिति चेत्–तर्हि आदेरपि न प्राप्नोति, तस्याप्युदात्तलोपं प्रत्यनिमित्तत्वात् । 'क्सस्याचि' इत्यजादौ प्रत्यये विधानात् । तस्माद्यत्र प्रत्यये उदात्तलोपस्तत्संबन्धिनोऽनुदात्तस्योदात्तो भवतीति सूत्रार्थेऽन्ताधिकारादन्त्यस्य प्रसङ्गः । यदि तु निमित्तत्वानादरेण यत्रानुदात्ते परत उदात्तलोपस्तस्योदात्तो भवतीति सूत्रार्थस्तदाऽनुदात्तस्येति न वक्तव्यम्, अन्त्यस्य प्रसङ्गाभावात् । **न च** मा हि धुक्षातामित्यत्र 'तिङ्ङतिङः' इति निघातः स्यादिति **वाच्यम्** । 'हि च' इति निषेधात् ॥ **३६५० उदात्तनिवृत्तीति** । क्रदुत्तरपदप्रकृतिस्वरेणोदात्तस्याञ्चत्यकारस्य 'अचः' इति लोपे सति 'अनुदात्तस्य च–' इति सूत्रेणोदात्तः प्राप्तस्तस्यायमपवाद इत्यर्थः ॥—**देवद्रीचीमिति** । देव अच् इति स्थिते 'विष्वग्देवयोः–' इति देवशब्दस्याद्रि आदेशः । 'उगितश्च' इति ङीप्, 'अचः' इत्यञ्चतेरकारलोपः । 'चौ' इति दीर्घत्वम् । द्री–इतीकार उदात्तः । ततः परस्य 'उदात्तादनुदात्तस्य स्वरितः' इति स्वरित इति ॥—**अतद्धित इति** । चौ यः स्वरः स तद्धिते परतो न भवतीत्यर्थः । अन्यथा देवद्रीचीमित्यादौ यथोदात्तनिवृत्तिस्वरं बाधते तथा दाधीच इत्यादौ प्रत्ययस्वरमपि सतिशिष्टस्वरो बाधेत । तस्मादतद्धित इति वक्तव्यम् । अस्मिंश्च सति उदात्तनिवृत्तिस्वरस्यायमपवाद इति फलितम् ॥—**दाधीच इति** । दधि अच् अण् इति स्थितेऽण्स्वरे उदात्तत्वे कृते 'अचः' इत्यकारलोपः । ततः सति शिष्टत्वात् 'चौ' इति स्वरः प्राप्तो निषिध्यते । तथा चाण्प्रत्ययस्वरेणैव व्यवस्था । तदाह—**प्रत्ययस्वर एवात्रेति** ॥ **३६५१ अग्न इत्यादि** । 'सामन्त्रितम्' इत्यनेनामन्त्रितत्वम् ॥ **३६५२ प्रागुक्तषाष्ठस्येति** । आमन्त्रितस्य चेत्यस्य ॥—**इमं म इति** । मेशब्दात्परत्वमाश्रित्य गङ्गेप्रभृतीनां त्रयाणामनुदात्तः । स च पदपाठे स्पष्टः । एवं संहितायां 'स्वरितात्संहितायामनुदात्तानाम्' इति वक्ष्यमाणा प्रचयापरपर्याया एकश्रुतिः प्रवर्तते ॥—**शुतुद्रीति** । षाष्ठेन 'आमन्त्रितस्य च' इत्यनेनाद्युदात्तः ॥—**आमन्त्रितं पूर्वम्** ॥—**अग्न इन्द्रेति** । सर्वाणि षाष्ठेनाद्युदात्तानि ॥—**निघातो नेति** । आष्टमिकेनेति भावः ॥—**नामन्त्रिते**–। अत्र 'उत्तरसूत्रस्थं सामान्यवचनमत्र संबन्धनीयम्' इति भाष्यम्, तद्याचष्टे—**विशेष्यमिति** । विशेष्यसमर्पकमित्यर्थः । क्वचित्तु 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' इति पाठः स वृत्त्यनुरोधेनेति ज्ञेयम् ॥—**अग्ने तेजस्विन्नित्यादि** । अग्ने इत्यस्याविद्यमानत्वाभावात्तेजस्विन्नित्यस्य त्रातरित्यस्य चाष्टमिकनिघातः—॥ **अघ्न्ये देवि सरस्वतीति** । तैत्तिरीयके ब्राह्मणे सहस्रतमीं प्रकृत्य 'इडेरन्ते दिते सरस्वति प्रिये प्रेयसि महि विश्रुति एतानि ते अघ्न्ये नामानि' । वृत्तौ तु 'इडे काल्ये विहव्ये' इति पाठः स तु शाखान्तरे द्रष्टव्यः । समानाधिकरणग्रहणं पाणिनिमते–'अग्न इन्द्र वरुण' इत्यादौ व्यधिकरणनिवृत्त्यर्थम् । भाष्यकृन्मते विस्पष्टार्थं, सामान्यवचनापेक्षत्वात्तत्र सामानाधिकरण्यस्यावश्यं स्थितत्वात् ॥ **सामान्य—। बहुवचनमिति**—पूर्वनिषेधस्यास्य विकल्पस्य च विषयविभागार्थम् ॥—**देवीः षडिति** । अत्र देवीरित्यामन्त्रितं नाविद्यमानवत् । तेन षडित्यस्य निघातः ॥—**शरण्या इति** । शरणं=रक्षितृत्वं, तत्र साधवः शरण्याः । 'तत्र साधुः' इति यत् ॥—**द्वितीयस्येति** । षट्शब्दस्य शरण्यशब्दस्य चेत्यर्थः ॥ **३६५३ सुबामन्त्रिते**—॥—**परस्याङ्गवदिति** । तस्यैव परस्यामन्त्रितस्याङ्गवत्=एकदेशवद्भवति । तद्ग्रहणेन गृह्यत इत्यर्थः ॥—**षष्ठ्यामन्त्रित**—। अत्र षष्ठीशब्देन षष्ठ्यर्था विभक्तिरुच्यते । तेन गोषु स्वामिन्नित्यत्रापि पराङ्गवद्भावः सिध्यति ॥—**परशुना वृश्चन्निति** । आङ्पूर्वयोः 'खनिशृभ्यां डिच्च' इति कुप्रत्ययान्तोऽन्तोदात्तः ॥—**षष्ठ्यन्तमामन्त्रितान्तं प्रति यत्कारकमिति** । यद्यप्यामन्त्रितस्य द्रव्यवचनत्वाच्च

---

१ इदानीन्तनोपलब्धपुस्तकेषु सूत्रस्यास्य एवमेव पाठ उपलभ्यते । सुबोधिनीसम्मतश्च 'नामन्त्रिते समानाधिकरणे' इत्येव ।

तद्वाचकं चेति परिगणनं कर्तव्यमित्यर्थः । तेनेह न— अ॒यम॑ग्ने जरि॒ता । ए॒तेना॑ग्ने ब्रह्म॑णा । समर्थानुवृत्त्या वा सिद्धम् ॥ ॐ पूर्वाङ्गवच्चेति वक्तव्यम् । आ ते॑ पित॑र्मरुताम् । प्रति॑ त्वा दुहितर्दिवः ॥ ॐ अव्ययानां न । उच्चैरधीयान ॥ ॐ अव्ययीभावस्य त्विष्यते । उपाग्न्यधीयान ।

३६५४ । उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ।८।२।४। उदात्तस्थाने स्वरितस्थाने च यो यण् ततः परस्यानुदात्तस्य स्वरितः स्यात् । अ॒भ्य॑भि॒ हि । स्वरितस्य यणः—खलप्व्याशा । अस्य स्वरितस्य त्रैपादिकत्वेनासिद्धत्वाच्छेषनिघातो न ।

३६५५ । एकादेश उदात्तेनोदात्तः ।८।२।५। उदात्तेन सहैकादेश उदात्तः स्यात् । वोऽश्वाः । क्वा॑वरं॑ मरुतः ।

३६५६ । स्वरितो वाऽनुदात्ते पदादौ ।८।२।६। अनुदात्ते पदादौ परे उदात्तेन सहैकादेशः स्वरितो वा स्यात् । पक्षे पूर्वसूत्रेणोदात्तः । वी॑१दं ज्योति॒र्हृद॑ये । अ॒स्य श्लोको॑ दि॒वीय॑ते । व्यवस्थितविभाषात्वादिकारयोः स्वरितः, दीर्घप्रवेशे तूदात्तः । किञ्च 'एङः पदान्तात्–' ८६ इति पूर्वरूपे स्वरित एव—तेऽवदन् । सो ३ यमागात् । उक्तं च प्रातिशाख्ये—

'इकारयोश्च प्रश्लेषे क्षैप्राभिनिहतेषु च' इति ।

कारकापेक्षा, तथापि आमन्त्रिते या धातुवाच्या क्रिया तस्यास्तदपेक्षाऽस्तीति तत्कारकमित्यर्थः ॥—**पितर्मरुतामिति ।** अत्र मरुतामिति पदं पूर्वस्य पितरित्येतस्याङ्गवद्भवति । पितरित्यामन्त्रितनिघातेनानुदात्ते ततः परं मरुतामित्येतदप्यनुदात्तमेव भवतीत्यर्थः ॥—**अव्ययानां नेति ।** तेनोच्चैरधीयानेत्यत्र 'आमन्त्रितस्य च' इत्याद्युदात्तत्वं न । न च निषेधवैयर्थ्यम्, 'निपाता आद्युदात्ताः' इत्याद्युदात्तत्वस्यानिवारणादिति वाच्यम् । स्वरादिष्वन्तोदात्तयोरुच्चैर्नीचैःशब्दयोः पाठात् ॥—**अव्ययीभावस्य त्विति ।** 'अव्ययीभावश्च' इति अव्ययीभावस्याव्ययसंज्ञा, सूत्रे 'लुङ्मुखस्वरोपचाराः' इति परिगणनादन्यत्राव्ययसंज्ञाऽभावेन 'अव्ययानां न' इति निषेधो न प्रवर्तते इति भावः ॥—**उपाग्न्यधीयानेति ।** पराङ्गवद्भावेन 'आमन्त्रितस्य च' इत्याद्युदात्तत्वम् ॥ **३६५४ अभ्यभीति ।** अभिशब्द 'उपसर्गाश्चाभिवर्जम्' इत्याद्युदात्तनिषेधात् फिट्स्वरेणान्तोदात्तः । तस्य 'नित्यवीप्सयोः' इति द्वित्वम् । 'तस्य परमाम्रेडितम्' 'अनुदात्तं च' इति परस्यानुदात्तत्वं, तस्मिन्नेव परे इकारस्योदात्तस्य यणि कृते उदात्तयणः परत्वाद्यकाराकारः स्वरितः । खलपूशब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः । तस्य 'ओः सुपि' इति यण् । स उदात्तयण् । ततः परो ङिप्रत्ययः सुप्त्वादनुदात्तः । तस्यानेन स्वरितः । 'उदात्तयणो हल्पूर्वात्' इत्युदात्तत्वं तु न, 'नोङ्धात्वोः' इति निषेधात् । तस्य स्वरितेकारस्य यणि ततः परस्याशाशब्दाकारस्यानेनैव स्वरितः । आशाशब्दो हि 'आशाया अदिगाख्या चेत्' इत्यन्तोदात्तत्वादनुदात्तादिः ॥—**अस्येति ।** आशाशब्दप्रथमाकारस्थानिकस्येत्यर्थः ॥—**शेषेति ।** शाशब्दस्य निघातो नेत्यर्थः ॥ ननु यणादेशं प्रति स्वरितस्यासिद्धत्वात्स्थानिन्येव यण् प्रवृत्तः । यथा औजढदित्यत्र हतशब्दे द्वित्वं प्रवर्तते, न तु ढशब्दे । न च 'स्वरितयणः परस्य' इत्याश्रयणात्सिद्धत्वं शङ्क्यम् । तथा सति 'उदात्तादनुदात्तस्य स्वरितः' इत्यनेन यत्र स्वरितः क्रियते तत्रापि ह्यसिद्धत्वं न स्यात् । न चेष्टापत्तिः, लक्ष्यविरोधात् । 'प्रत्यग्निरुषसामग्र्यमख्यत्' इत्यादौ स्वरितादर्शनात् । न च 'नोदात्तस्वरितोदयम्–' इति निषेधः शङ्क्यः । 'अनन्तरस्य–' इति न्यायेन 'उदात्तादनुदात्तस्य' इति यत्र प्राप्तिस्तन्मात्रस्य निषेधात् । अन्यथा 'खलप्व्याशान्या अग्निर्ग्राह्या अस्मान्' इत्यादावपि निषेधापत्तिरिति चेत् । **अत्राहुर्भाष्यकाराः**—'योगविभागः करिष्यते–'उदात्तयणः परस्यानुदात्तस्य स्वरितः' भवति । ततः—'स्वरितयणः' उदात्तयण इत्यनुवर्तते, उदात्तयण इत्येवं योऽभिनिर्वृत्तः स्वरितस्तद्यणः परस्यानुदात्तस्य स्वरितः स्यादित्यर्थः । एवं चास्यैवात्राश्रयात्सिद्धत्वं, नान्यस्य ॥ **३६५५ एकादेश इति ।** उदात्तयोरेव स्थानित्वे आन्तरतम्यादेव सिद्धम् । अन्यतरस्यानुदात्तत्वे स्वरितत्वे वा आन्तरतम्यात् स्वरिते प्राप्ते विधिरयमिति ध्वनयन्नुदाहरणद्वयमाह—**वोऽश्वा इत्यादि ।** 'बहुवचनस्य वस्नसौ' इत्यत्र 'अनुदात्तं सर्वमपादादौ' इत्यधिकाराद्वस् अनुदात्तः । 'अशेः क्वन्' इति व्युत्पादनादश्वशब्द आद्युदात्तः । वसोरुत्वम्, उत्वम् । 'एङः पदान्तादति' इति पूर्वरूपम् ॥—**क्वेति ।** 'किमोत्', 'क्वाति' इति किमः क्वादेशः, 'तित्स्वरितम्' । अवरशब्दः 'स्वाङ्गशिटामदन्तानाम्' इत्याद्युदात्तः । तयोर्दीर्घे उदात्तः ॥ **३६५६ स्वरितो—॥—वीदमित्यादि ।** विशब्दो निपातत्वादाद्युदात्तः । इदंशब्दः फिट्स्वरेणान्तोदात्तः । तयोरेकादेशः स्वरितः । **दिविशब्दे** 'ऊडिदंपदाद्–' इति विभक्तिरुदात्ता । **ईयते**–'इङ् गतौ' दिवादिः–इति 'तिङ्ङतिङः' इति निहतम् । अत्रेकादेश उदात्तः ॥—**इकारयोः स्वरित इति ।** ह्रस्वेकारयोरेवेत्यर्थः ॥—**दीर्घप्रवेशे त्विति ।** दिवीयत इत्यत्र ॥—**उदात्त इति ।** एकादेश उदात्त इत्यनेन । इयं च बह्वृचानां व्यवस्थोक्ता । अन्येषामपि तदीयप्रातिशाख्यानुसारेण ज्ञेया ॥—**पूर्वरूपे इति ।** तेऽवदन्नित्यादौ 'ते' इति तच्छब्दः फिट्स्वरेणान्तोदात्तः, जसः सुप्त्वात् 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तः । तयोरेकादेश उदात्तः ॥—**अवदन्निति ।** वदेर्लङि प्रथमपुरुषबहुवचनम् । 'ते'इत्यतिङन्तात्परस्य 'तिङ्ङतिङः' इति निघातः ॥—**सोऽयमिति ।** स इति तच्छब्दस्य प्रथमैकवचनम् । तच्छब्दः फिट्स्वरेणान्तोदात्तः । सुरिति सुप्त्वादनुदात्तः । तस्य रुत्वे उत्वे गुणे च कृते एकादेशेनौकार उदात्तः । **अयमिति**–इदमः प्रथमैकवचनं फिट्स्वरेणान्तोदात्तम् । तयोः 'एङः पदान्ता–' इति पूर्वरूपे ओकारः स्वरितः ॥—**इकारयोश्च प्रश्लेष इति ।** ह्रस्वयोरिकारयोः

३६५७ । **उदात्तादनुदात्तस्य स्वरितः** ।८।४।६६। उदात्तात्परस्यानुदात्तस्य स्वरितः स्यात् । अ॒ग्निमीळे । अस्याप्यसिद्धत्वाच्छेषनिघातो न । तमीशानासः ।

३६५८ । **नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्** ।८।४।६७। उदात्तपरः स्वरितपरश्चानुदात्तः स्वरितो न स्यात् । गार्ग्यादिमते तु स्यादेव । प्र य आ॒रुः । वोऽश्वाः । क्वां १ भीशंवः ।

३६५९ । **एकश्रुति दूरात्संबुद्धौ** ।१।२।३३। दूरात्संबोधने वाक्यमेकश्रुतिः स्यात् । त्रैस्वर्यापवादः । आगच्छ भो माणवक ।

३६६० । **यज्ञकर्मण्यजपन्यूङ्खसामसु** ।१।२।३४। यज्ञक्रियायां मन्त्र एकश्रुतिः स्याज्जपादीन्वर्जयित्वा । अग्निर्मूर्धा दिवः । यज्ञ-इति किम् । स्वाध्यायकाले त्रैस्वर्यमेव (अ॒ग्निर्मूर्धा दि॒वः) । अजप-इति किम् । ममा॑ग्ने वर्चो विह॒वेष्वस्तु । जपो नाम उपांशुप्रयोगः, यथा जले निमग्नस्य । न्यूङ्खा नाम षोडश[1] ओंकाराः । गीतिषु सामाख्या ।

---

सवर्णदीर्घे, ह्रस्वयोर्यत्र सवर्णदीर्घः स **प्रश्लेष** इत्युच्यते । उदात्तस्वरितस्थाने यो यण् स **क्षैप्रः** सन्धिः । यत्र 'एङः पदान्तात्–' इति स **अभिनिहतसन्धि**रित्युच्यते । तेषु स्वरितः स्वीक्रियत इत्यर्थः । **'वीदं ज्योतिः', 'अभ्यभि हि' 'तेऽवदन्'** इति क्रमेणोदाहरणानि ॥ **३६५७ उदात्तादनुदात्तस्य** । यत्र 'तयोर्य्वावचि' इत्यतः संहितायामित्यनुवर्तते, तेन पदकालेऽनुदात्तमेव ॥**—अग्निमीळे इति** । अग्निशब्दः फिट्स्वरेण प्रत्ययस्वरेण वाऽन्तोदात्तः । अम् सुप्त्वादनुदात्तः । 'अमि पूर्वः' इति एकादेश उदात्तः । **ईळे** इति तु 'ईड स्तुतौ' लट्, उत्तमपुरुषैकवचनम् । 'द्वयोश्चास्य स्वरयोर्मध्यमेत्य संपद्यते स डकारो ळकारः' इति वक्ष्यमाणेन प्रातिशाख्येन डस्य ळः । 'तिङ्ङतिङः' इति निहतम् । ईकारस्य स्वरितः । न च मकारेण व्यवधानम् । 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति परिभाषणात् । एतत् सर्वत्र ज्ञेयम् ॥ ननु 'तित्स्वरितम्' इत्यस्यानन्तरमिदं वक्तव्यम् । एवं च स्वरितग्रहणं न कर्तव्यं भवतीत्याशङ्क्याह**—अस्येति** । यदि तत्र क्रियेत, 'अनुदात्तं पदमेकवर्जम्' इत्येतत्प्रवर्तेत । इह तु प्रकरणे न प्रवर्तते, स्वरितस्यासिद्धत्वात् । तेन द्वयोरप्युदात्तस्वरितयोः श्रवणं सिद्धम् ॥**—तमीशानास इति** । तमिति तच्छब्दस्य द्वितीयैकवचनमन्तोदात्तम् । ईशानशब्दाज्जसि 'आज्जसेरसुक्' इत्यसुगागमे कृते रूपम् । 'ईश ऐश्वर्ये' अस्माच्छानच्, चित्त्वादन्तोदात्तः । जसः सुप्त्वादनुदात्तत्वम् । ईकारस्य सकाराकारस्य च स्वरितत्वम् ॥ **३६५८ नोदात्त—**। उदात्तस्वरितौ उदयौ=परौ यस्मादिति बहुव्रीहिः । उदयशब्दः परशब्देन समानार्थः प्रातिशाख्येषु प्रसिद्धः । लाघवार्थं परशब्दे प्रयोक्तव्ये **मङ्गलार्थ**मुदयशब्दः प्रयुक्तः । तथा च भाष्यम्**—'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि च'** । इहादौ **वृद्धिशब्दः**, मध्ये **शिवशब्दः**–'शिवशमरिष्टस्य करे' इति, अन्ते चाय**मुदयशब्द** इति पाणिनीये मङ्गलं कृतम् ॥ **—प्र य आरुरिति** । ये इति यच्छब्दस्य प्रथमाबहुवचनं फिट्स्वरेणान्तोदात्तम् ॥**—आरुरिति—**अर्तेर्लिटि प्रथमपुरुषबहुवचनं झिः । तस्य 'परस्मैपदानाम्–' इत्युस् प्रत्ययस्वरेणोदात्तः । न च 'तिङ्ङतिङः' इति निघातः शङ्क्यः, 'यद्वृत्तान्नित्यम्' इति निषेधात् । आकारस्य तु 'उदात्तस्वरितपरस्य–' इति वक्ष्यमाणेन सन्नतरादेशः ॥**—वोऽश्वाः क्वेति** । अत्रापि श्वेत्याकारस्य सन्नतरः ॥**—क्वेति** । 'किमोत्', 'तित्स्वरितम्' ॥ **३६५९ एकश्रुति—**। संबोधनं संबुद्धिरित्यनेनान्वर्थस्य संबुद्धिशब्दस्य ग्रहणं, न 'एकवचनं संबुद्धिः' इति पारिभाषिकस्य । सति तु तस्य ग्रहणे 'आगच्छत देवा ब्राह्मणाः' इत्यत्र न स्यात् । तदाह**—दूरात्संबोधने इति** । अन्वर्थग्रहणं च दूरादित्यनेन संबन्धाल्लभ्यते । न ह्यामन्त्रितविभक्तेर्दूरत्वमदूरत्वं च च संभवति । संबोधनस्य तु क्रियारूपत्वादपादान–एह्यादि विशेषणसंभवः, दूरत्वं च न देशस्वरूपमाश्रीयते, अनवस्थितत्वात् । किं तर्हि ? संबोधनक्रियापेक्षया दूरत्वं यावति देशे प्रकृतप्रयत्नोच्चारितं संबोध्यमानेन न श्रूयते किं त्वधिकं प्रयत्नमपेक्षते तत्संबुद्धौ दूरत्वं भवति ॥**—एकश्रुतिरिति** । उदात्तादीनां स्वराणामविभागेनावस्थानमेकश्रुतिः ॥**—आगच्छेत्यादि** । 'दूराद्धूते च' इति 'वाक्यस्य टेः प्लुत उदात्तः' । प्रत्युदाहरणे त्रैस्वर्यमेव भवति । तत्र 'आङ्' 'उपसर्गाश्चाभिवर्जम्' इत्याद्युदात्तः । गच्छेति तिङन्तस्य निघातः । भोशब्दो 'निपाता आद्युदात्ताः' इत्याद्युदात्तः । शेषस्यामन्त्रितनिघातः ॥ **३६६० यज्ञ—**। त्रैस्वर्येण वेदे मन्त्राः पठ्यन्ते तेषां यज्ञक्रियायामपि तथैव प्रयोगे प्राप्ते एकश्रुतिर्विधीयते ॥**—मन्त्र इति** । एतच्चाजपेति पर्युदासाल्लभ्यते, तेनोहादिषु न । अत एव स्वाहेन्द्रशत्रुर्वर्धस्वेति समासान्तोदात्तत्वे कर्तव्ये आद्युदात्तं प्रयुक्तमिति प्रसिद्धिः ॥**—जपादीनिति** । जपन्यूङ्खसामानीत्यर्थः ॥**—अग्निर्मूर्धेति** । 'अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वतोम्' । 'अङ्गेर्नलोपश्च' इति **अग्नि**शब्दः प्रत्ययस्वरेण फिट्स्वरेण वाऽन्तोदात्तः । 'मुर्वी बन्धने' 'कनिन् युवृषितक्षिराजिधन्वि–' इत्यतः कनिनि वर्तमाने 'श्वन्नुक्षन्पूषन्–' इत्यत्र **मूर्धन्**शब्दः कनिन्प्रत्ययान्तोऽन्तोदात्तश्च निपातितः । **दिव**शब्दात्परस्य षष्ठ्येकवचनस्य 'ऊडिदम्पदात्–' इत्युदात्तत्वम् । **ककु**च्छब्दः प्रातिपदिकस्वरेणान्तोदात्तः । पातेर्डतिः–**पति**शब्दः प्रत्ययस्वरेणाद्युदात्तः । **'प्रथेः** षिवन् संप्रसारणं च' षित्त्वान्ङीष्, षष्ठ्येकवचनस्य 'उदात्तयणो हल्पूर्वात्' इत्युदात्तत्वम् । **इदम्**शब्दः प्रातिपदिकस्वरेणान्तोदात्तः । **आप्नोतेः** क्विप् ह्रस्वश्च, 'ऊडिदम्–' इति विभक्तेरुदात्तत्वम् । 'रीङ्सृजिभ्यां तुट्च' इत्यसुन्प्रत्ययः, नित्स्वरेणाद्युदात्तो **रेतः**शब्दः । **जिन्वतीति**–जिन्वतेः प्रीणनार्थस्य तिपि 'तिङ्ङतिङः' इति निघातः । 'प्रणवष्टेः' इति प्रयोगकाले प्रणवः ॥**—ममेत्यादि** । 'युष्मदस्मदोर्ङसि' इत्याद्युदात्तत्वम् ।

---

१ 'षोडश ओंकाराः' इत्येवम्पाठो मुद्रितपुस्तकेषु दृश्यते ।

३६६१ । **उच्चैस्तरां वा वषट्कारः** ।१।२।३५। यज्ञकर्मणि वौषट्शब्द उच्चैस्तरां वा स्यादेकश्रुतिर्वा ।

३६६२ । **विभाषा छन्दसि** ।१।२।३६। छन्दसि विभाषा एकश्रुतिः स्यात् । व्यवस्थितविभाषेयम् । संहितायां त्रैस्वर्यम् । ब्राह्मणे एकश्रुतिर्बह्वृचानाम् । अन्येषामपि यथासंप्रदायं व्यवस्था ।

३६६३ । **न सुब्रह्मण्यायां स्वरितस्य तूदात्तः** ।१।२।३७। सुब्रह्मण्याख्ये निगदे 'यज्ञकर्मणि' ३६६२ इति 'विभाषा छन्दसि' ३६३५ इति च प्राप्ता एकश्रुतिर्न स्यात्स्वरितस्योदात्तश्च स्यात् । सुब्रह्मण्योऽ३म् । सुब्रह्मणि साधुरिति यत्[1] । ❀ **असावित्यन्तः** । तस्मिन्नेव निगदे प्रथमान्तस्यान्त उदात्तः स्यात् । गार्ग्यो यजते, ञित्त्वात्प्राप्त आद्युदात्तोऽनेन बाध्यते ॥ ❀ **अमुष्येत्यन्तः** । षष्ठ्यन्तस्यापि प्राग्वत् । दाक्षेः पिता यजते ॥ ❀ **स्यान्तस्योपोत्तमं च** । चादन्तः । तेन द्वावुदात्तौ । गार्ग्यस्य पिता यजते ॥ ❀ **वा नामधेयस्य** ॥ स्यान्तस्य नामधेयस्य उपोत्तममुदात्तं वा स्यात् । देवदत्तस्य पिता यजते ।

३६६४ । **देवब्रह्मणोरनुदात्तः** ।१।२।३८। अनयोः स्वरितस्यानुदात्तः स्यात्सुब्रह्मण्यायाम् । देवा ब्रह्माण आगच्छत ।

३६६५ । **स्वरितात्संहितायामनुदात्तानाम्** ।१।२।३९। स्वरितात्परेषामनुदात्तानां संहितायामेकश्रुतिः स्यात् । इमं मे गङ्गे यमुने सरस्वति ।

'अग्ने' शब्दस्यामन्त्रितनिघातः । वर्चःशब्दोऽसुन्प्रत्ययान्तः । विपूर्वात् ह्वयतेः 'ह्वः संप्रसारणं च' इति अप्रत्ययः । थाथादिसूत्रेणान्तोदात्तत्वम् ॥ **३६६१ उच्चैस्तराम्**–। वषट्शब्देनात्र वौषट्शब्दो लक्ष्यते, समानार्थत्वात् । द्वावपि हि तौ देवतासंप्रदानकस्य दानस्य द्योतकौ ॥ **नन्वेवं** प्रतिपत्तिलाघवार्थं वौषट्शब्द एव कुतो नोक्त इति चेत्, विचित्रा हि सूत्रस्य कृतिः पाणिनेः–क्वचिदक्षरलाघवमाश्रीयते, क्वचित्प्रतिपत्तिलाघवमिति ॥ **ननु** वषट्कार इत्यत्र कारप्रत्ययो न स्यात्, वर्णनिर्देशे हि स विहित इति चेत्, **सत्यम्** । एतदेव ज्ञापयति—**समुदायादपि कारप्रत्ययो भवतीति** । तेन **एवकार** इत्यादि सिद्धम् । उच्चैःशब्दोऽधिकरणप्रधानोऽपि तद्विशिष्टभवनक्रियायां वर्तते, तेन क्रियाप्रकर्षादाम्प्रत्ययः । उदात्ततरो भवतीति फलितोऽर्थः । 'ब्रूहि प्रेष्य–' इति सूत्रेण वौषट्शब्दस्यादेः प्लुत उदात्तो विहितः, तदपेक्षयाऽयमुदात्ततरोऽन्त्यस्य विधीयते । **अन्ये तु** स्वार्थिकस्तरबित्याहुः[2] ॥ **३६६२ विभाषा**–। वाग्रहणेऽनुवर्तमाने विभाषाग्रहणं 'अच्छन्दसि' इति पदच्छेदेन तन्त्रादिना भाषायामपि विधानार्थम् । अत एव 'श्वेतो धावति अलंबुसानां याता' इति द्व्यर्थं वाक्यमिति पस्पशान्ते भाष्यम् । तत्र '**श्वा**' इति प्रातिपदिकस्वरेणान्तोदात्तम् । '**इतः**' इति इदंशब्दात्तसिल् । 'ऊडिदम्–' इत्यनेनान्तोदात्तः । '**श्वेतः**' इति 'वर्णानां तण–' इत्याद्युदात्ते प्राप्ते घृतादित्वादन्तोदात्तम् । **अलं**शब्दो निपातत्वादाद्युदात्तः । **बुस**शब्दः प्रातिपदिकस्वरेणान्तोदात्तः । **अलंबुस**शब्दः फिट्स्वरेणान्तोदात्तः । तत्र भाषायां यद्येकश्रुतिर्न स्यात्तर्हि स्वरभेदे कथमेकवाक्यं द्व्यर्थं स्यात् ॥ **३६६३ न सु**–॥—**सुब्रह्मण्याख्ये निगदे इति** । अपादबन्धे गदिर्वर्तते, यथा–गद्यमिति । निःशब्दः प्रकर्षे । उच्चैरपादबन्धं यजुरात्मकं यन्मन्त्रवाक्यं प्राप्यते स निगदः । नितरां गद्यत इति कर्मणि 'नौ गदनद–' इत्यप् । तस्य च सुब्रह्मण्याशब्दोपलक्षकत्वात् सुब्रह्मण्याशब्दोऽपरित्यक्तस्त्रीलिङ्ग एव निगदविशेषस्य नाम ॥—**सुब्रह्मण्योमिति** । 'तत्र साधुः' इति यत्, 'तित्स्वरितं' । 'यतोऽनावः' इति तु न, तत्र द्व्यच इत्यनुवृत्तेः । टापा सहैकादेशः 'स्थानेन्तरतमः' इति स्वरितः । ततो निपातत्वादाद्युदात्तेन ओम्शब्देन 'ओमाङोश्च' इत्युदात्तस्वरितयोरेकादेशः स्वरित एवेति **हरदत्तादयः** ॥ असाविति प्रथमान्तस्योपलक्षणम्, तदाह—**प्रथमान्तस्येति** ॥—**गार्ग्य इति** । 'गर्गादिभ्यो यञ्' ॥—**अमुष्येति** । षष्ठ्यन्तस्योपलक्षणम् ॥—**दाक्षेरिति** । दक्षशब्ददपत्येऽत इञ् । अत्रापि ञित्स्वरः प्राप्तः ॥—**स्यान्तस्येति** । स्येति रूपं विवक्षितं, पूर्ववार्तिकारम्भात् । स्यशब्दान्तस्योपोत्तममन्त्यश्चोभयमुदात्तं भवति ॥ **३६६४ देवब्रह्मणो**—। सुब्रह्मण्यायामेव देवा ब्रह्माण इति पठ्यते । तत्र पूर्वेण स्वरितस्योदात्ते प्राप्तेऽनेनानुदात्तो विधीयते ॥—**देवा ब्रह्माण इति** । देवब्रह्मणोर्वैयधिकरण्ये द्वयोरप्याद्युदात्तत्वम् । ततः परस्यानुदात्तस्य स्वरितः । तस्यानेनानुदात्तः । आमन्त्रितनिघातस्तूत्तरस्य न, पूर्वामन्त्रिताविद्यमानत्वेन पदात्परत्वाभावात् । यदा तु सामानाधिकरण्यं तदा 'विभाषितं विशेषवचने' इति पूर्वस्य पक्षे विद्यमानत्वात् पदात्परत्वाद् ब्रह्माण इत्यस्य निघातोऽपि भवति । अस्मिन् पक्षे देवशब्दस्यैवानेनानुदात्तत्वं विधेयम् । ब्रह्मग्रहणं तु न कर्तव्यम् ॥ **३६६५ स्वरित**—॥—**अनुदात्तानामिति** । जातौ बहुवचनम् । तेनैकस्य द्वयोर्बहूनां च भवति । एकस्य—पचति । द्वयोः—अग्निमीळे पुरोहितम् । बहूनां तु मूल एव दर्शितम् ॥—**इमं मे इति** । इदम्शब्दः प्रातिपदिकस्वरेणान्तोदात्तः । विभक्तिरनुदात्ता । त्यदाद्यत्वे 'अमि पूर्वः', एकादेश उदात्तः । मे इत्यनुदात्तम् । 'अनुदात्तं सर्वमपादादौ' इत्यधिकारात्तस्य उदात्तादनुदात्तस्य स्वरितः । तस्मात्परेषां गङ्गेप्रभृतीनामेकश्रुतिः । सर्व एते आमन्त्रितनिघातानुदात्ताः ॥ ननु मे इत्यस्य स्वरितस्य उदात्तविधायकं त्रिपादीस्थत्वादसिद्धत्वं स्यात् । न च 'स्वरितात्–' इत्याश्रयात्सिद्धत्वम् । 'क्व वः सुम्ना–' इत्यादौ चरितार्थत्वात्–इति चेन्**मैवम्** । 'तस्यादितः–' इत्यारभ्य नवसूत्र्याः स्वस्थानादुत्कृष्य शास्त्रान्ते भाष्यवार्तिकयो-

---

१ मुद्रितपुस्तकेषु 'सुब्रह्मणि साधुरिति यत् । न च 'एकादेश उदात्तेनोदात्तः' इति सिद्धे पुनरत्रेदमुदात्तविधानं व्यर्थमिति वाच्यम् । तत्रानुदात्त इत्यस्यानुवृत्तेः' इत्यधिकः पाठो दृश्यते । स च शेखरसुबोधिनीदर्शनात्प्रक्षिप्त इति प्रतीयते । २ 'उच्चैःशब्द इत्यतस्तरबित्याहुः' इत्यन्तो ग्रन्थोऽस्मदुपलब्धलिखितपुस्तकेषु न दृश्यते । अत्रेत्थं शेखरः—'अधिकरणशक्तिप्रधानोच्चैःशब्दात्तद्विशिष्टभवनक्रियाकर्तरि वर्तमानात् प्रकर्षे प्रत्ययः । तेनोदात्ततर इत्यर्थः' ॥

**३६६६ । उदात्तस्वरितपरस्य सन्नतरः** ।१।२।४०। उदात्तस्वरितौ परौ यस्मात्तस्यानुदात्तस्यानुदात्ततरः स्यात् । सरस्वति शुतुद्रि । व्यंचक्षयत्स्वः ।

'तस्य परमाम्रेडितम्' ८३ ।

**३६६७ । अनुदात्तं च** ।८।१।३। द्विरुक्तस्य परं रूपमनुदात्तं स्यात् । दिवे दिवे ॥ इति साधारणस्वराः ॥

---

## अथ धातुस्वराः ।

**३६६८ । धातोः** ।६।१।१६२। अन्त उदात्तः स्यात् । गोपायतं नः । असि सत्यः ।

**३६६९ । स्वपादिहिंसामच्यनिटि** ।६।१।१८८। स्वपादीनां हिंसेश्चानिट्यजादौ लसार्वधातुके परे आदिरुदात्तो वा स्यात् । स्वपादिरदाद्यन्तर्गणः । स्वपन्ति । श्वसन्ति । हिंसन्ति । पक्षे प्रत्ययस्वरेण मध्योदात्तता । (इ.) ङित्येवेष्यते । नेह—स्वपानि, हिनसानि ।

**३६७० । अभ्यस्तानामादिः** ।६।१।१८९। अनिट्यजादौ लसार्वधातुके परे अभ्यस्तानामादिरुदात्तः । ये ददति प्रिया वसु । परत्वाच्चित्स्वरमयं बाधते, दधाना इन्द्रे ।

**३६७१ । अनुदात्ते च** ।६।१।१९०। अविद्यमानोदात्ते लसार्वधातुके परेऽभ्यस्तानामादिरुदात्तः । दधासि रत्नं द्रविणं च दाशुषे ।

**३६७२ । भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति** ।६।१।१९२। भीप्रभृतीनामभ्यस्तानां पिति लसार्वधातुके परे प्रत्ययात्पूर्वमुदात्तं स्यात् । योऽग्निहोत्रं जुहोति । ममत्तु नः परिज्मा । माता यद्वीरं जजनत् । दधनत् । जागर्षि त्वम् ।

---

निर्वेशात् । 'न सुब्रह्मण्यायाम्–' इति सूत्रे 'स्वरितस्य तूदात्तः' इति वदता एव काण्डोत्कर्षस्य ज्ञापितत्वाच्च । न च सुब्रह्मण्योमिति सिद्धः स्वरितोऽस्तीति वाच्यम् । तत्र 'एकादेश उदात्तेन–' इति सूत्रप्रवृत्तेरावश्यकत्वात् । तत्र ह्यनुदात्तग्रहणं नानुवर्तते ॥ **३६६६ उदात्त—**। सन्नशब्देन नीचैरर्थ उच्यते, तेन त्वनुदात्तत्वं लक्ष्यत इत्याह—**अनुदात्ततर इति**। प्रकर्षस्त्वन्यानुदात्तापेक्षः ॥—**सरस्वतीत्यादि** । अत्र मेशब्दमाश्रित्य सरस्वतीत्यस्यामन्त्रितनिघातः । शुतुद्रिशब्दस्य तु न, पादादित्वात् । 'आमन्त्रितस्य' इति षाष्ठेन शुतुद्रीत्यस्योदात्तं प्रथममक्षरं, तस्मिन्परे पूर्वस्य सरस्वतीकारस्य सन्नतरः ॥—**व्यचक्षयत्स्व इति**। वीति उपसर्गत्वादाद्युदात्तः । ततः परस्याचक्षयदिति तिङन्तस्य 'तिङ्ङतिङः इति निघातः ॥—**स्वरिति** । न्यङ्स्वरौ स्वरिताविति स्वरितः, तस्मिन् परे यकाराकारस्य सन्नतरः ॥ **३६६७ साधारणस्वरा इति**। एकस्मिन् पदे पदद्वयेऽपि च प्रवर्तमानात्साधारण्यम् । 'आद्युदात्तश्च' 'ञ्नित्यादिर्नित्यम्' इत्यादयस्तु एकस्मिन्नेव पदे प्रवर्तमानान्न साधारणाः ॥

**३६६८** प्रकृतिर्द्विधा–धातुः प्रातिपदिकं च । तत्र धातुस्वरानाह—**धातोरिति** । 'कर्षात्वतः–' इत्यत 'अन्त उदात्तः' इत्यनुवर्तते, तदाह—**अन्त उदात्त इति ॥ गोपायेति** । यकाराकारस्योदात्तत्वे तामित्यस्य 'तास्यनुदात्तेत्–' इत्यनुदात्तत्वे 'उदात्तादनुदात्तस्य–' इति स्वरितः । 'बहुवचनस्य वस्नसौ' इति नसादेशस्य, 'स्वरितात्संहितायाम्–' इति प्रचयापरपर्याया एकश्रुतिः ॥—**असीति** । अस्तेः–सिप्, 'तासस्त्योः–' इति सलोपः । अकारस्योदात्तत्वम् । ततः परस्य स्वरितः । सत्यशब्दे सकारस्य 'उदात्तस्वरितपरस्य' इत्यनुदात्ततरादेशः ॥ **३६६९ स्वपादि—**। 'तास्यनुदात्तेत्–' इत्यतः लसार्वधातुकमित्यनुवर्तते । तत् 'अच्यनिटि' इति संबन्धादिह सप्तम्यन्तं संपद्यते, तदाह—**अनिट्यजादावित्यादि** ॥—**अदाद्यन्तर्गण इति** । आ गणान्तादिति भावः ॥—**हिंसन्तीति** । 'हिसि हिंसायां' रुधादिः । 'श्नान्नलोपः' । 'श्नसोरल्लोपः' ॥—**ङित्येवेष्यत इति** । वृत्त्यनुरोधादेतदुक्तम् । भाष्ये तु प्रायेणेदं न दृश्यते । एवं च हिनसानीत्यत्राद्युदात्तत्वमपि पक्षे भवति । यदि तु आद्युदात्तत्वं पक्षे नेष्यते तर्हि व्यवस्थितविभाषाश्रयणान्न । केचित्तु स्वपानीत्यत्रैतदभावे धातुस्वरेणाद्युदात्तत्वमेवेति विशेषाभावादयं विधिर्न प्रवर्तते । तत्साहचर्याद्धिनसानीत्यत्राप्ययं न प्रवर्तते इति वृत्तिकाराशयं कल्पयन्ति ॥—**हिनसानीति** । अत्र श्नमः 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति न्यायाद् धातुग्रहणेन नकाराकार उदात्तः । ततः परस्य स्वरितत्वम् । अनिटीति किम्? स्वपितः । 'रुधादिभ्यः सार्वधातुके' इतीट् ॥ **३६७० अभ्यस्तानाम्—**। 'आदिः सिचोऽन्यतरस्याम्' इत्यतः आदिरिति वर्तमाने पुनरादिग्रहणं नित्यार्थम् । अन्यथाऽदिग्रहणसंबद्धमन्यतरस्यांग्रहणमनुवर्तेत । अचि किम्? दद्यात् । अनिटि किम्? जक्षिथ ॥—**ये ददतीति** । 'डुदाञ् दाने' लटि झिः । तस्य 'अदभ्यस्तात्' इत्यदादेशः । 'श्नाभ्यस्तयोः–' इत्यालोपः ॥—**चित्स्वरमिति** । 'चितः' इत्यनेन विहितमन्तोदात्तस्वरमित्यर्थः ॥—**दधानेति** । लटः शानजादेशः ॥ **३६७१ अनुदात्ते च** । न विद्यते उदात्तो यस्मिन्निति बहुव्रीहिस्तदाह—**अविद्यमानेत्यादि** । अन्यथा हि शास्त्रीयेऽनुदात्ते गृह्यमाणे 'मा हि स्म दधात्' इत्यत्र नित्यत्वादन्तरङ्गत्वाद्वा इकारलोपे कृते आद्युदात्तत्वं न स्यात् । बहुव्रीहौ विज्ञाते तु भवति । हिशब्दो 'हि च' इति निघातनिषेधार्थः ॥ **३६७२ भीह्री—**। आद्युदात्तस्यापवादोऽयम् । अत्र मदिर्दिवादिः । दरिद्राजाग्रावदादी । अन्ये तु जुहोत्यादयः । उदाहरणानि—बिभेति, जिह्रेति, बिभर्ति । 'भृञामित्' इत्यभ्यासस्येत्वम् ॥—**ममत्त्विति** । मदेर्लोट्, 'बहुलं छन्दसि' इति शपः श्लुः । **जजनत् । दधनदिति** । जन जनने, धन धान्ये । आभ्यां लेट्, तिप्, 'इतश्च लोप–' इतीकारलोपः, 'लेटोऽडाटौ' इत्यट् । दरिद्राति । जागर्ति । पिति किम्? दरिद्रति । अत्र परत्वादाकारलोपे कृते इकारस्योदात्तत्वं मा भूत् ॥ **ननु** पूर्वग्रहणं व्यर्थ, 'प्रत्यये पिति' इत्येवोक्ते 'तस्मिन्निति निर्दिष्टे–' इति पूर्वस्यैव भविष्यति । न च पितः पूर्वमेव कार्यभाग्यथा स्यात् पिदन्तं मा भूदित्येवमर्थं तदिति

३६७३ । लिति ।६।१।१९३। प्रत्ययात्पूर्वमुदात्तम् । चिकीर्षकः ।

३६७४ । आदिर्णमुल्यन्यतरस्याम् ।६।१।१९४। अभ्यस्तानामादिरुदात्तो वा णमुलि परे । लोलूयं लोलूयम् । पक्षे लित्स्वरः ।

३६७५ । अचः कर्तृयकि ।६।१।१९५। उपदेशेऽजन्तानां कर्तृयकि परे आदिरुदात्तो वा । लूयते केदारः स्वयमेव ।

३६७६ । चङ्यन्यतरस्याम् ।६।१।२१८। चङन्ते धातावुपोत्तममुदात्तं वा । मा हि चीकरताम् । धात्वकार उदात्तः । पक्षान्तरे चङुदात्तः ॥ इति धातुस्वराः ॥

---

## अथ प्रातिपदिकस्वराः ।

३६७७ । कर्षात्वतो घञोऽन्तउदात्तः ।६।१।१५९। कर्षतेर्धातोराकारवतश्च । घञन्तस्यान्त उदात्तः स्यात् । कर्षः । शपा निर्देशात्तुदादेराद्युदात्त एव । कर्षः । पाकः ।

३६७८ । उञ्छादीनां च ।६।१।१६०। अन्त उदात्तः स्यात् । उञ्छादिषु युगशब्दो घञन्तोऽगुणो निपात्यते कालविशेषे रथाद्यवयवे च । वैश्वानरः कुशिकेभिर्युगेयुगे । अन्यत्र–योगेयोगे तवस्तरम् । भक्षशब्दो घञन्तः । गावः सोमस्य प्रथमस्य भक्षः । (ग.) उत्तमशश्वत्तमावपि । उदुत्तमं वरुण । शश्वत्तममीळते ।

३६७९ । चतुरः शसि ।६।१।१६७। चतुरोऽन्त उदात्तः शसि परे । चतुरः कुल्पयन्तः । 'अचि र–' २९९ इति रादेशस्य पूर्वविधौ स्थानिवत्त्वान्नेह—चतस्रः पश्य । 'चतेरुरन्' ( उ. ७३६ ) । नित्वादाद्युदात्तता ।

---

वाच्यम् । कथं पुनः सप्तमीनिर्देशे तदन्तस्य प्रसङ्गः? एतदेव ज्ञापयति—सौवर्यः सप्तम्यस्तदन्तसप्तम्या इति । तेन 'उपोत्तमं रिति' रित्प्रत्ययान्ते उपोत्तममुदात्तं भवति, 'चङ्यन्यतरस्यां' चङन्तस्येत्यर्थः, न तु रिति परतश्चङि परत इति ॥ नन्वेवं 'चतुरः शसि' इत्यत्रापि शसन्तस्य प्राप्नोति, शस्ग्रहणसामर्थ्यान्न भविष्यति । यदि हि 'चतुरः शसि' इत्यनेन शस उदात्तत्वमिष्टं स्यात्तत 'ऊडिदंपदात्–' इत्यस्यानन्तरं चतुरश्चेत्येव ब्रूयात् । तत्रासर्वनामस्थानग्रहणानुवृत्त्या 'षट्त्रिचतुर्भ्यो हलादिः' इति हलादेरुदात्तविधानाच्च शस एव भविष्यति ॥ **३६७३ लिति** । पूर्वसूत्रात्प्रत्ययात्पूर्वमिति वर्तते, तदाह—**प्रत्ययात्पूर्वमिति** । तेन स्वरविधौ सप्तम्यास्तदन्तत्वज्ञापनात् लिदन्तस्य स्वरो न शङ्कनीयः ॥—**चिकीर्षक इति** । चिकीर्षेति—सन्नन्ताण्ण्वुल्, तस्याकादेशः । सनोऽतो लोपे ककारेकार उदात्तः । नचाल्लोपस्य स्थानिवत्त्वम्, स्वरविधौ तन्निषेधात् । क्वचित्पुस्तके 'भौरिकिविधम् । ऐषुकारिभक्तम्' इति दृश्यते । तत्र 'भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ' इति 'विषयो देशे' इत्यस्मिन्नर्थे यथाक्रमं भौरिकिशब्दादैषुकारिशब्दाच्च विधल्भक्तलौ ज्ञेयौ ॥ **३६७४ आदिर्णमुलि**—॥—**अभ्यस्तानामिति** । यद्यपि लोलूयमिति प्रतीकमुपादाय 'एकाच्सु धातुषु लित्स्वरस्यास्य च विशेषाभावादनेकाजुदाहृतः' इति हरदत्तग्रन्थादभ्यस्तेति निवृत्तमिति प्रतीयते तथाप्यार्थिकार्थकथनपरतया नेयम् ॥—**णमुलि पर इति** । यद्यपि सौवर्यः सप्तम्यस्तदन्तसप्तम्या इति 'भीर्ह्री–' इति सूत्रे व्यवस्थापितत्वात् णमुलन्तस्यादिरुदात्तो भवतीति सूत्रार्थेन भाव्यं । तथापि फले विशेषाभावादेवमुक्तमिति प्रतिभाति ॥—**लोलूयं लोलूयमिति** । यङन्ताण्णमुल् । 'नित्यवीप्सयोः' इति द्वित्वम् । अत्र प्रथमो लोलूयशब्द आद्युदात्तः । 'लो' इत्युदात्तः, 'लू' इति स्वरितः । ततश्चत्वारः प्रचयाः ॥ **३६७५ अचः**–। इह कीर्यत इत्यादौ इत्वे रपरत्वे च सति अयं स्वर इष्टस्तन्निर्वाहार्थं 'तास्यनुदात्तेत्–' इति सूत्रे समासैकदेशोऽप्युपदेशशब्द इहानुवर्तते, सप्तम्या च विपरिणम्यते, तदाह—**उपदेशेऽजन्तानामिति** । नन्वेवम् 'एकं द्वादशधा जज्ञे' इत्यादाविवान्तर्भूतण्यर्थात्कर्मकर्तृविषयात् जनेर्लटि 'जायते स्वयमेव' इत्यत्रैव स्वरो न स्यात् । 'ये विभाषा–' इत्यात्वे सति उत्तरकालमजन्तत्वेऽपि उपदेशेऽनजन्तत्वादिति चेन्मैवम् । 'ये' इति विषयसप्तमीमाश्रित्य प्रत्ययोत्पत्तेः प्रागेवात्वप्रवृत्तेरित्याहुः ॥—**कर्तृयकीति** । कर्तृवाचिनि सार्वधातुके विहितो यो यक् तस्मिन् परे ॥—**लूयत इति** । आदिमध्यौ पर्यायेणोदात्तौ 'तास्यनुदात्तेत्–' इति 'ते' इत्यस्यानुदात्तत्वम् ॥ **३६७६ चङ्यन्यतरस्याम्** । 'उपोत्तमं रिति' इत्यत उपोत्तममिति वर्तते, तदाह—**उपोत्तममिति** । त्र्यादीनामन्त्यमुत्तमं तस्य समीपमुपोत्तमम् ॥—**मा हि चीकरतामिति** । अदुपदेशात्परत्वेन लसार्वधातुकानुदात्तत्वे कृते चङ एव स्वरे प्राप्ते पक्षे धात्वकार उदात्तः । उपोत्तमग्रहणानुवृत्त्या द्वयोर्न । **मा हि दधत्** । अत्र 'विभाषा धेट्श्व्योः इति चङ् ॥ **इति धातुस्वराः** ॥

**३६७७ कर्षात्वतः**–। 'ञ्नित्यादिर्नित्यम्' इत्यस्यापवादः । आत्–अस्यास्तीति आत्वान् । 'तसौ मत्वर्थे' इति भत्वाज्जश्त्वाभावः । कर्षश्च आत्वांश्चेति समाहारद्वन्द्वः । कर्ष इति शबन्तस्यानुकरणं न घञन्तस्य । तदाह—**शपा निर्देशादिति** ॥—**पाक इति** । पचेर्घञ् । 'चजोः–' इति कुत्वम् ॥ **३६७८ कालविशेष इति** । कृतद्वापरादौ ॥—**भक्षशब्द इति** । 'भक्ष अदने' चुरादिः । 'अनित्यण्यन्ताश्चुरादयः' इति यदा णिच् नास्ति तदा घञ्, ण्यन्तात्तु 'एरच्' इत्यचि सिद्धम् । 'एरजण्यन्तानाम्' इति तु नास्तीत्याहुः ॥—**उत्तमशश्वत्तमाविति** । तमबन्तावेतौ । तेन द्रव्यप्रकर्षविवक्षायामामभावः । पित्वादनुदात्तत्वे प्राप्ते पाठः ॥ **३६७९ चतुरः**-। 'चतेरुरन्', नित्वादाद्युदात्तत्वे प्राप्तेऽन्तोदात्तार्थमिदम् ॥ ननु चतस्रः पश्येत्यत्र चतसृ अस् इति स्थिते परत्वात् 'अचि र ऋतः' इति रेफादेशे तकाराकारस्योदात्तत्वं प्राप्नोति, अत आह—**अचि र इति** । **स्थानिवत्त्वादिति** । न च स्वरविधौ स्थानिवत्त्वनिषेधः । 'स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत्' इति

३६८० । झल्युपोत्तमम् ।६।१।१८०। षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं स्यात् । अध्वर्युभिः पञ्चभिः । नवभिर्वाजैर्नवती च । सप्तभ्यो जायमानः । आदशभिर्विवस्वतः । उपोत्तमं किम् । आ षड्भिर्हूयमानः । विश्वैर्देवैस्त्रिभिः । झलि किम् । नवानां नवतीनाम् ।

३६८१। विभाषा भाषायाम् ।६।१।१८१।उक्तविषये।

३६८२ । सर्वस्य सुपि ।६।१।१९१। सुपि परे सर्वशब्दस्यादिरुदात्तः स्यात् । सर्वे नन्दन्ति यशसा ।

३६८३ । ञ्नित्यादिर्नित्यम् ।६।१।१९७। ञिदन्तस्य निदन्तस्य चादिरुदात्तः स्यात् । यस्मिन्विश्वानि पौंस्या, पुंसः कर्मणि ब्राह्मणादित्वात् ष्यञ् । सुते दधिष्व नश्चनः, चायतेरसुन् ( उ. ) चायेरन्ने ह्रस्वश्च-इति चकाराद्सुनो नुडागमश्च ।

३६८४ । पथिमथोः सर्वनामस्थाने ।६।१।१९९। आदिरुदात्तः स्यात् । अयं पन्थाः । सर्वनामस्थाने किम् । ज्योतिष्मतः पथो रक्ष । उदात्तनिवृत्तिस्वरेणान्तोदात्तं पदम् ।

३६८५ । अन्तश्च तवैयुगपत् ।६।१।२००। तवैप्रत्ययान्तस्याद्यन्तौ युगपदाद्युदात्तौ स्तः । हर्षसे दातवा उ ।

३६८६ । क्षयो निवासे ।६।१।२०१। आद्युदात्तः स्यात् । स्वे क्षये शुचिव्रत ।

३६८७ । जयः करणम् ।६।१।२०२। करणवाची जयशब्द आद्युदात्तः स्यात् । जयत्यनेन जयोऽश्वः ।

३६८८ । वृषादीनां च ।६।१।२०३। आदिरुदात्तः । आकृतिगणोऽयम् । वाजेभिर्वाजिनीवती । इन्द्रं वाणीः ।

३६८९ । संज्ञायामुपमानम् ।६।१।२०४। उपमानशब्दः संज्ञायामाद्युदात्तः । चञ्चेव चञ्चा, कनोऽत्र लुप् । एतदेव ज्ञापयति-'क्वचित्स्वरविधौ प्रत्ययलक्षणं न' इति । संज्ञायां किम् । अग्निर्माणवकः । उपमानं किम् । चैत्रः ।

३६९० । निष्ठा च द्व्यजनात् ।६।१।२०५। निष्ठान्तस्य द्व्यचः संज्ञायामादिरुदात्तो न त्वाकारः । दत्तः । द्व्यच् किम् । चिन्तितः । अनात्किम् । त्रातः । संज्ञायामित्यनुवृत्तेर्नेह—कृतम्, हृतम् ।

३६९१ । शुष्कधृष्टौ ।६।१।२०६। एतावाद्युदात्तौ स्तः । असंज्ञार्थमिदम् । अतसं न शुष्कम् ।

३६९२ । आशितः कर्ता ।६।१।२०७। कर्तृवाचि आशितशब्द आद्युदात्तः । कृषन्नित्फाल आशितम् ।

३६९३ । रिक्ते विभाषा ।६।१।२०८। रिक्तशब्दे

---

नियमात् ॥ ३६८० झल्युपोत्तमम् । 'षट्त्रिचतुर्भ्यो हलादिः' इत्यस्यापवादः ॥—**पञ्चभिरित्यादि** । पञ्चनवसप्तदशशब्दाः कनिनन्ताः ॥—**आषड्भिरिति** । षट्शब्दः फिट्स्वरेणान्तोदात्तः । तनोतेर्ड्रिः, त्रिः । अयमपि फिट्स्वरेण प्रत्ययस्वरेण वाऽन्तोदात्तः । उभयत्रापि 'षट्त्रिचतुर्भ्यो हलादिः' इति विभक्तेरुदात्तत्वम् ॥—**नवानामिति** । अत्रापि विभक्तिरुदात्ता ॥ **३६८१ विभाषा—**॥—**उक्तविषय इति** । षट्त्रिचतुर्भ्यः परा या झलादिर्विभक्तिस्तदन्तस्योपोत्तमं भाषायामुदात्तं वा स्यात् । पञ्चभिः, सप्तभिः, तिसृभिः, चतुर्भिः । पक्षे 'षट्त्रिचतुर्भ्यो हलादिः' इत्यन्तोदात्तानि ॥ **३६८२ सर्वस्य-**। सर्वशब्द उञ्छादिष्वन्तोदात्तो निपातितः । सर्वस्य विकारः सार्व इत्यत्र 'अनुदात्तादेरञ्' इत्यनुदात्तलक्षणोऽञ् यथा स्यात् । श्रवणं तु सर्वत्रानुदात्तस्यैव, प्रत्ययलक्षणेनापि सर्वस्वरस्येष्यमाणत्वात् ॥ **३६८३ ञ्नित्यादि-**। 'भीह्री-' इति सूत्रे पूर्वग्रहणेन 'सौवर्यः सप्तम्यस्तदन्तासप्तम्यः' इति ज्ञापितत्वात् तदन्तसप्तमीयम्-इत्याह—**ञिदन्तस्येति** ॥ **३६८४ पथिमथोः-**। 'गमेरिनिः' । 'उषः कित्' । 'मन्थः' । 'पतः स्थ च' इतीनिप्रत्ययान्तावेतावन्तोदात्तौ । मन्थः कित्त्वादुपधालोपः ॥—**पन्था इति** । 'पथिमथ्यृभुक्षामात्' 'थो न्थः' ॥—**पथ इति** । भस्य टिलोपः ॥—**उदात्तनिवृत्तिस्वरेणेति** । 'अनुदात्तस्य च यत्रोदात्तलोपः' इति विभक्तिरुदात्ता ॥ **३६८५ दातवा उ इति** । ददातेः 'कृत्यार्थे तवैकेन्केन्यत्वनः' इति तवैप्रत्ययः । ऐकारस्यायादेशः । 'लोपः शाकल्यस्य' इति यलोपः । युगपद्ग्रहणं पर्यायनिवृत्त्यर्थम् । अन्यथा एकवर्जमिति वचनाद्यौगपद्यं न स्यात् ॥ **३६८६ क्षयो-**। निवासेऽभिधेये क्षयशब्द आद्युदात्तः ॥—**स्वे क्षये इति** । क्षि निवासगत्योः । क्षयन्ति निवसन्ति यस्मिन्नित्यधिकरणे 'पुंसि संज्ञायाम्-' इति घः । निवासे किम् ? व्याधेः क्षयः । क्षि क्षये 'एरच्' । कर्तरि षष्ठी ॥ **३६८७ जयः-**॥—**जयोऽश्व इति** । पुंसीति करणे घः । करणे किम् ? जयो ब्राह्मणानाम् । भावे 'एरच्' ॥ **३६८८ वृषादीनाम्-**। वृषु सेचने इगुपधलक्षणः कः ॥—**वाजेभिरिति** । वजेर्घञ् । 'कर्षात्त्वतः-' इत्यन्तोदात्ते प्राप्ते वृषादेराकृतिगणत्वादाद्युदात्तः ॥ **३६८९ संज्ञायाम्-**॥ **चञ्चेति** । उपमानशब्दोऽयमुपमेयस्य संज्ञा ॥—**कनोऽत्र लुबिति** । 'इवे प्रतिकृतौ' इति कनो 'लुम्मनुष्ये' इति लुप् ॥ ननु प्रत्ययलक्षणेन नित्त्वात् 'ञ्नित्यादिर्नित्यम्' इत्येव सिद्धमत आह—**एतदेवेति** ॥ **३६९० निष्ठा** ॥—**दत्त इति** । ददातेः क्तः, 'दो दद्घोः' इति दथादेशः ॥—**चिन्तित इति** । चिति स्मृत्याम्, चुरादिः ॥—**कृतं, हृतमिति** । प्रत्ययस्वरेणान्तोदात्तावेतौ ॥ **३६९१ असंज्ञार्थमिति** । संज्ञायां च 'निष्ठा च द्व्यजनात्-' इत्येव सिद्धम् ॥—**शुष्कमिति** । शुषेः क्तः, तस्य 'शुषः कः' इति कादेशः ॥ **३६९२ आशितः-**॥—**कर्तृवाचीति** । आङ्पूर्वात् 'अश भोजने' अस्मात्कर्तरि क्तो निपात्यते । **अपर आह**—कर्तेत्यनेन भूतपूर्वगत्या अणौ कर्ता णौ कर्मीभूत एव विवक्षितः । तथा चाशेर्ण्यन्तस्य प्रयोज्यकर्तरि 'गतिबुद्धिप्रत्यवसानार्थ-' इति कर्मसंज्ञके निष्ठायामाशित इति रूपमिति ॥ **३६९३ रिक्त**

वाऽऽदिरुदात्तः । रिक्तः । संज्ञायां तु 'निष्ठा च द्व्यजनात्' ३६९० इति नित्यमाद्युदात्तत्वं पूर्वविप्रतिषेधेन ।

३६९४ । जुष्टार्पिते च छन्दसि ।६।१।२०९। आद्युदात्ते वा स्तः ।

३६९५ । नित्यं मन्त्रे ।६।१।२१०। एतत्सूत्रं शक्यमकर्तुम्, 'जुष्टो॑ दमू॑नाः' 'प॒ळर आ॒हुरर्पि॑तम्' इत्यादेः पूर्वेणैव सिद्धेः । छन्दसि पाठस्य व्यवस्थिततया विपरीतापादनायोगात् । 'अ॒र्पि॑ताः प॒ष्टिर्न च॑लाच॒लासः॑' इत्यत्रान्तोदात्तदर्शनाच्च ।

३६९६ । युष्मदस्मदोर्ङसि ।६।१।२११। आदिरुदात्तः स्यात् । न॒ हि प॒स्तव॒ नो मम॑ ।

३६९७ । ङयि च ।६।१।२१२। तुभ्यं॑ हि॒न्वा॒नः । मह्यं॒ वातः॑ पवताम् ।

३६९८ । यतोऽनावः ।६।१।२१३। यत्प्रत्ययान्तस्य द्व्यच आदिरुदात्तो नावं विना । यु॒ञ्जन्त्य॑स्य काम्या॑ । कमेर्णिङन्तात् 'अचो यत्' २८४२ ।

३६९९ । ईडवन्दवृशंसदुहां ण्यतः ।६।१।२१४। एषां ण्यदन्तानामादिरुदात्तः । ईड्यो॒ नूत॑नैरु॒त । आ॒जु॒ह्वा॒न ईड्यो॒ वन्द्य॑श्च । श्रेष्ठं॑ नो धेहि॒ वार्य॑म् । उ॒क्थमि॑न्द्राय॒ शंस्य॑म् ।

३७०० । विभाषा वेण्विन्धानयोः ।६।१।२१५। आदिरुदात्तो वा । इन्धानो॑ अ॒ग्निम् ।

३७०१ । त्यागरागहासकुहश्वठक्रथानाम् ।६।१।२१६। आदिरुदात्तो वा । आद्यास्त्रयो घञन्ताः । त्रयः पचाद्यजन्ताः ।

३७०२ । मतोः पूर्वमात्संज्ञायां स्त्रियाम् ।६।१।२१९। मतोः पूर्वमाकार उदात्तः स्त्रीनाम्नि । उदुम्बरावती । शरावती ।

३७०३ । अन्तोऽवत्याः ।६।१।२२०। अवतीशब्दस्यान्त उदात्तः । वेत्रवती । ङीपः पित्त्वादनुदात्तत्वं प्राप्तम् ।

३७०४ । ईवत्याः ।६।१।२२१। ईवत्यन्तस्यापि प्राग्वत् । अहीवती । मुनीवती ।

इति प्रातिपदिकस्वराः ।

इति । रिचिर् विरेचने ॥—संज्ञायामित्यादि । 'निष्ठा च द्व्यजनात्' इत्यस्यावकाशः—दत्तः, गुप्तः । अस्य त्ववकाशः—असंज्ञायां 'रिक्तो घटः' इति । संज्ञायामुभयप्रसङ्गे पूर्वविप्रतिषेधः, रिक्तो नाम कश्चित् ॥ ३६९४ जुष्टार्पिते–। 'जुष्टः–अर्पितः' इत्येते शब्दरूपे छन्दसि विषये आद्युदात्ते वा स्तः । 'जुषी प्रीतिसेवनयोः' क्तः, 'श्वीदितो निष्ठायाम्' इतीण्निषेधः, जुष्टः । अर्तेर्णिच्, 'अर्ति–' इत्यादिना पुक्, अर्पितः ॥ ३६९५ नित्यं–। जुष्टार्पिते शब्दरूपे मन्त्रविषये नित्यमाद्युदात्ते स्तः ॥—पूर्वेणैव सिद्धेरिति । ननु पक्षेऽन्तोदात्तत्वमपि प्राप्नोतीत्याशङ्क्याह—छन्दसीत्यादि । न केवलं गतार्थत्वमात्रं किं त्वारभ्यमाणे सूत्रे दोषोऽप्यस्तीत्याह—अर्पिताः षष्टिरित्यादिना ॥ ३६९६ युष्मदस्मदोः–। 'युष्यसिभ्यां मदिक्' इति मदिक्प्रत्ययान्तावन्तोदात्तौ ॥—ममेति । 'युष्मदस्मद्भ्यां ङसोऽश्', 'तवममौ ङसि' इति मपर्यन्तस्य ममादेशः । शेषे लोपः । 'अतो गुणे' इति पररूपत्वम् । 'एकादेश उदात्तेनोदात्तः' इति विभक्तेरुदात्तत्वे प्राप्ते इदमुच्यते ॥ ३६९७ ङयि च । योगविभागो यथासंख्यनिवृत्त्यर्थः ॥—तुभ्यं मह्यमिति । 'ङे प्रथमयोरम्' । 'तुभ्यमह्यौ ङयि' ॥ ३६९८ यतः–'तित्स्वरितम्' इत्यस्यापवादः । 'निष्ठा च द्व्यजनात्' इत्यतो द्व्यजनुवर्तते, तदाह—द्व्यच इति । अत्र 'अनावः' इति निषेधो ज्ञापयति—'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति । अन्यथा य आदिर्नकारो नासौ स्वरयोग्यः, यश्च स्वरयोग्य आकारो नासावादिरिति प्रतिषेधोऽनर्थकः स्यात् । अनावः किम् ? नावा तार्यं नाव्यम् । 'नौवयोधर्म–' इति यत् । द्व्यच् किम् ? चिकीर्ष्यम् । उभयत्रापि तित्स्वरः ॥ ३६९९ ईडवन्द—। ईड स्तुतौ, वदि अभिवादनस्तुत्योः, वृङ् संभक्तौ, शंसु स्तुतौ, दुह प्रपूरणे । ण्यन्तो द्व्यनुबन्धकत्वाद्यद्ग्रहणेन ग्रहणं न प्राप्नोतीति वचनम् ॥—ईड्य इत्यादि । 'ऋहलोः–' इति ण्यत् ॥—वार्यमिति । नन्वत्र 'एतिस्तुशासु–' इत्यादिना विशेषविहितेन क्यपा भाव्यमिति चेत्सत्यम् । क्यब्विधौ वृञ एव ग्रहणं नास्येति मूल एव स्पष्टम् ॥ ३७०० विभाषा–। वेणुशब्दो नित्स्वरेण नित्यमाद्युदात्तः प्राप्तः । 'स्थो णुः' इत्यनुवर्तमाने 'अजिवृरीभ्यो निच्च' इति व्युत्पादनात् । इन्धानशब्दो यदि चानशन्तस्तदा चित्त्वादन्तोदात्तः । यदा शानजन्तस्तदा लसार्वधातुकानुदात्तत्वे कृते उदात्तनिवृत्तिस्वरेण मध्योदात्तः । 'श्नसोरल्लोपः' इति उदात्तस्य श्नमोऽकारस्य लोपात् सर्वथाऽप्यप्राप्तमाद्युदात्तत्वं पक्षे विधीयते ॥ ३७०१ त्यागराग—। त्यज हानौ । 'चजोः–' इति कुत्वम् । रञ्ज रागे, 'घञि च भाव–' इति नलोपः । 'हसे हसने' । एषां पक्षे 'कर्षात्वतो घञोऽन्त उदात्तः' इति भवति ॥—त्रयः पचाद्यजन्ता इति । कुह विस्मापने, श्वठ असम्यग्भाषणे, चौरादिकावदन्तौ । क्रथ हिंसायाम् । अत्र प्रत्ययस्वरेणान्तोदात्तत्वं पक्षे भवति । ३७०२ मतोः–। मतोः पूर्व आकार इति–आर्थं व्याख्यानमेतत् । सूत्रे तु शब्दस्वरूपापेक्षया नपुंसकनिर्देशः । केचित्तु सूत्रे पूर्वशब्दं पुंलिङ्गमेव पठन्ति ॥—शरावतीति । चातुरर्थिको नद्यां मतुप्, 'मादुपधायाः' इति वत्वम् । 'मतौ बह्वचोऽनजिरादीनां' 'शरादीनां च' इति दीर्घत्वम् ॥ ३७०३ वेत्रवतीति । मतुप् । वत्वम् । न चात्र वत्वस्यासिद्धत्वादवतीशब्दोऽयं न भवतीति शङ्क्यम् । तस्याश्रयात्सिद्धत्वेनासिद्धत्वाभावात् । अवत्या इति निर्देशादिह न भवति—राजवतीति । स्वरविधौ व्यञ्जनस्याविद्यमानत्वान्नायमवतीशब्दः ॥ ३७०४ अहीवतीति । पूर्ववद्दीर्घः । संज्ञायामिति वत्वम् ॥ इति प्रातिपदिकस्वराः ॥

१ 'अनावः किम् ? न॒वतिं॑ ना॒व्या॑नाम् ।' इत्यधिकः पाठो यदित्यस्याग्रे क्वचिन्मुद्रितपुस्तकेषु दृश्यते । २ फिट्सूत्रैः प्रातिपदिकस्वरकथनादिदमितिकरणमष्टाध्यायीस्थनिमित्तमेव । अतएव प्राचीनपुस्तकेष्विदमितिकरणं न दृश्यते ।

# अथ फिट्सूत्राणि

## प्रथमपादः ।

१ । **फिषोऽन्तउदात्तः** । प्रातिपदिकं=फिट्, तस्यान्त उदात्तः स्यात् । उच्चैः । २ । **पाटलाऽपालङ्काम्बासागरार्थानाम्** । एतदर्थानामन्त उदात्तः । पाटला, फलेरुहा, सुरूपा, पाकला–इति पर्यायाः । 'लघावन्ते' ४२ इति प्राप्ते । अपालङ्क, व्याधिघात, आरेवत, आरग्वध–इति पर्यायाः । अम्बार्थः–माता । 'उनर्वन्नन्तानाम्' ३२ इत्याद्युदात्तत्वे प्राप्ते । सागरः । समुद्रः । ३ । **गेहार्थानामस्त्रियाम्** । गेहम् । 'नब्विषयस्य–' २६ इति प्राप्ते । अस्त्रियां किम् । शाला । आद्युदात्तोऽयम्, इहैव पर्युदासाज्ज्ञापकात् । ४ । **गुदस्य च** । अन्त उदात्तः स्यान्न तु स्त्रियाम् । गुदम् । अस्त्रियां किम् । आन्त्रेभ्यस्ते गुदाभ्यः । 'स्वाङ्गशिटामदन्तानाम्' २९ इत्यन्तरङ्गमाद्युदात्तत्वम्, ततष्टाप् । ५ । **ध्यपूर्वस्य स्त्रीविषयस्य** । धकारयकारपूर्वो योऽन्त्योऽच् स उदात्तः । अन्तर्धा । 'स्त्रीविषयवर्णनाम्नाम्' ४३ इति प्राप्ते । छाया । माया । जाया । 'यान्तस्यान्त्यात्पूर्वम्' ६२ इत्याद्युदात्तत्वे प्राप्ते । स्त्रीति किम् । बाह्यम्, यञन्तत्वादाद्युदात्तत्वम् । विषयग्रहणं किम् । इभ्या, क्षत्रिया । 'यतो नावः' ३६९८ इत्याद्युदात्त इभ्यशब्दः । क्षत्रियशब्दस्तु 'यान्तस्यान्त्यात्पूर्वम्' ६२ इति मध्योदात्तः । ६ । **खान्तस्याश्मादेः** । नखम् । उखा । सुखम् । दुःखम् । नखस्य 'स्वाङ्गशिटाम्–' २९ इत्याद्युदात्तत्वे प्राप्ते । उखा नाम भाण्डविशेषः, तस्य कृत्रिमत्वात् 'खय्युवर्णं कृत्रिमाख्या चेत्' ३१ इत्युवर्णस्योदात्तत्वे प्राप्ते । सुखदुःखयोः 'नब्विषयस्य–' २६ इति प्राप्ते । अश्मादेः किम् । शिखा । मुखम् । मुखस्य 'स्वाङ्गशिटाम्–' २९ इति 'नब्विषयस्य–' २६ इति वा आद्युदात्तत्वम् । शिखायास्तु 'शीङः खो निद्ध्रस्वश्च' इति उणादिषु नित्त्वोक्तेः, अन्तरङ्गत्वाट्टापः प्रागेव 'स्वाङ्गशिटाम्–' २९ इति वा बोध्यम् । ७ । **हिष्ठवत्सरतिशत्थान्तानाम्** । एषामन्त उदात्तः स्यात् । अतिशयेन बहुलो बंहिष्ठः । नित्त्वादाद्युदात्तत्वे प्राप्ते । बंहिष्ठैरश्वैः सुवृता रथेन । यद्वंहिष्ठं नातिविधे-इत्यादौ व्यत्ययादाद्युदात्तः । परिवत्सरः । अव्ययपूर्वपदप्रकृतिस्वरोऽत्र बाध्यते इत्याहु । सप्ततिः, अशीतिः–'लघावन्ते' ४२ इति प्राप्ते । चत्वारिंशत्, इहापि प्राग्वत् । अभ्यूर्ण्वाना प्रभृथस्यायोः–अव्ययपूर्वपदप्रकृतिस्वरोऽत्र बाध्यत इत्याहुः । थाथादिसूत्रेण गतार्थमेतत् । ८ । **दक्षिणस्य साधौ** । अन्त उदात्तः स्यात् । साधुवाचित्वाभावे तु व्यवस्थायां सर्वनामतया 'स्वाङ्गशिटाम्–' २६ इत्याद्युदात्तः । अर्थान्तरे तु 'लघावन्ते–' ४२ इति गुरुरुदात्तः । 'दक्षिणः सरलोदारपरच्छन्दानुवर्तिषु' इति कोशः । ९ । **स्वाङ्गाख्यायामादिर्वा** । इह दक्षिणस्याद्यन्तौ पर्यायेणोदात्तौ स्तः । दक्षिणो बाहुः । आख्याग्रहणं किम् । प्रत्यङ्मुखस्यासीनस्य वामपाणिर्दक्षिणो भवति । १० । **छन्दसि च** । अस्वाङ्गार्थमिदम् । दक्षिणः । इह पर्यायेणाद्यन्तावुदात्तौ । ११ । **कृष्णस्यामृगाख्या चेत्**[1] ।

अथ **फिट्सूत्राणि** ॥ **१ फिषोऽन्त उदात्तः** । फिडिति पूर्वाचार्यप्रसिद्ध्या प्रातिपदिकमुच्यते, तदाह—**प्रातिपदिकं फिडिति** । ननु कथमपाणिनीयानि सूत्राण्युपन्यस्यन्ते ? पाणिनीयसूत्रैर्यः स्वर आयाति स एव प्रमाणं, तथा च 'शताच्च ठन्यतावशते' इति सूत्रे कैयटः—'नियतकालाश्च स्मृतयो व्यवस्थाहेतवः' इति मुनित्रयमतेनाद्यत्वे 'साध्वसाधुप्रविभागः' इति । **नैतत्** । अपाणिनीयान्यपि फिट्सूत्राणि पाणिनीयैराश्रीयन्ते भाष्यात् ज्ञापकात् । तथाच 'आद्युदात्तश्च' इति सूत्रे भाष्यं—'प्रातिपदिकस्य चान्त इति प्रकृतेरन्तोदात्तत्वं शास्ति' इति । तथा तस्मिन्नेव सूत्रे—प्रत्ययाद्युदात्तत्वस्यावकाशः—यत्रानुदात्ता प्रकृतिः—समत्वं, सिमत्वमिति । न हि 'फिषोऽन्त उदात्तः' 'त्वत्त्वसमसिम्–' इत्यादिफिट्सूत्राश्रयणं विना प्रकृतेरन्तोदात्तत्वं सर्वानुदात्तत्वं च संभवतीति दिक् ॥ **२ पाट—**। पाटलेत्यादय ओषधिविशेषस्य वाचकाः ॥—**लघावन्त इति प्राप्त इति** । इदं पूर्वेण परेण च संबध्यते ॥—**पर्याया इति** । वृक्षविशेषस्य वाचकाः । सागरसमुद्रयोः 'लघावन्ते–' इति प्राप्ते ॥ **३ गेहा—**। गेहार्थानामन्त उदात्तः स्यात्, स्त्रियां न ॥ **४ गुद–**। अगेहार्थमिदम् ॥ **५ ध्यपूर्वे—**॥—**धकारेति** । नित्यस्त्रीलिङ्गस्येति शेषः ॥—**प्राप्ते इति** । आद्युदात्तत्वे प्राप्ते इत्यर्थः ॥—**यञन्तत्वादिति** । 'बहिष्टिलोपो यञ्च' इति वचनात् ॥—**यतो नाव इति** । इभमर्हतीति दण्डादित्वाद्यत् ॥—**यान्तस्यान्त्यादिति** । 'क्षत्राद् घः' इति प्रत्ययस्वरेणापीति वा बोध्यम् ॥ **६ खान्तस्या—**। श् च म् च श्मौ तौ आदी यस्य स श्मादिः, न श्मादिः–अश्मादिः, तस्य शकारमकारादिभिन्नस्य खशब्दस्यान्तोदात्तः स्यात् ॥—**शीङः खो निद्ध्रस्वश्चेत्यादि** । ननु बहुषूणादिपुस्तकेषु शीङो ह्रस्वश्चेत्येव पठ्यते । 'मुहेः खो मूर्च' इत्यतः खोऽनुवर्तते, ह्रस्वविधानसामर्थ्याद्गुणाभाव इति स्वयमप्युणादिष्वेवमेवोक्तम् । तस्मात्पूर्वापरविरुद्धोऽयं ग्रन्थ इत्यस्वरसादाह—**अन्तरङ्गत्वादित्यादि** ॥ **७ हिष्ठ—**॥—**एषामिति** । 'हिष्ठ-वत्सर-ति-शत्-थ' एतदन्तानामित्यर्थः ॥—**बंहिष्ठ इति** । बहुलशब्दात् 'अतिशायने तमबिष्ठनौ' इतीष्ठन् । 'प्रियस्थिरस्फिर–' इत्यनेन बहुलस्य बंहिरादेशः ॥—**परिवत्सर इति** । क्वचित्तु 'संवत्सरः' इति पाठः, तत्र 'वसेश्च' 'संपूर्वाच्चित्' इति सरप्रत्ययस्य चित्त्वादपि सिद्धः ॥—**सप्ततिरित्यादि** । 'पङ्क्तिविंशतित्रिंशत्–' इत्यत्र व्युत्पादिता एते ॥—**प्राग्वदिति** । 'लघावन्ते–' इति प्राप्त इत्यर्थः ॥ **८ दक्षिणस्य–**। अस्यान्त उदात्तः स्यात्प्रावीण्येऽर्थे । वीणायां दक्षिणः, प्रवीण इत्यर्थः ॥ **१० छन्दसि–**। दक्षिणस्याद्यन्तौ पर्यायेणोदात्तौ स्यातां वेदे ॥ **११ कृष्णस्य–**।

१ क्वचित् चेदित्यस्याग्रे 'अन्त उदात्तः' इति वृत्तिपाठो दृश्यते ।

'वर्णानां तण–' इत्याद्युदात्तत्वे प्राप्ते अन्तोदात्तो विधीयते। कृष्णानां व्रीहीणाम्। कृष्णो नो नाव वृषभः। मृगाख्यायां तु–कृष्णो रात्र्यै। १२। **वा नामधेयस्य**। कृष्णस्येत्येव। अयं वां कृष्णो अश्विना। कृष्ण ऋषिः। १३। **शुक्लगौरयोरादिः**। नित्यमुदात्तः स्यादित्येके। 'वा' इत्यनुवर्तत इति तु युक्तम्। सरो गौरो यथा पिब–इत्यत्रान्तोदात्तदर्शनात्। १४। **अङ्गुष्ठोदकबकवशानां छन्दस्यन्तः**। अङ्गुष्ठस्य 'स्वाङ्गानामकुर्वादीनाम्' इति द्वितीयस्योदात्तत्वे प्राप्तेऽन्तोदात्तार्थं आरम्भः। वशाग्रहणं नियमार्थम्—'छन्दस्येव' इति। तेन लोके आद्युदात्तेत्याहुः। १५। **पृष्ठस्य च**। छन्दस्यन्त उदात्तः स्याद्वा भाषायाम्। पृष्ठम्। १६। **अर्जुनस्य तृणाख्या चेत्**। 'उनर्वन्नन्तानाम्' इत्याद्युदात्तस्यापवादः। १७। **अर्यस्य स्वाम्याख्या चेत्**। 'यान्तस्यान्त्यात्पूर्वम्' इति 'यतो नावः' ३६९८ इति वाऽऽद्युदात्ते प्राप्ते वचनम्। १८। **आशाया अदिगाख्या चेत्**। दिगाख्याव्यावृत्त्यर्थमिदम्। अत एव ज्ञापकाद्दिक्पर्यायस्याद्युदात्तता। इन्द्र आशाभ्यस्परि। १९। **नक्षत्राणामाब्विषयाणाम्**। अन्त उदात्तः स्यात्। आश्लेषाऽनुराधादीनां 'लघावन्ते' इति प्राप्ते ज्येष्ठाश्रविष्ठाधनिष्ठानामिष्ठन्नन्तत्वेनाद्युदात्ते प्राप्ते वचनम्। २०। **न कुपूर्वस्य कृत्तिकाख्या चेत्**। अन्त उदात्तो न। कृत्तिका नक्षत्रम्। केचित्तु कुपूर्वो य आप् तद्विषयाणामिति व्याख्याय 'आर्यिका' 'बहुलिका' इत्यत्राप्यन्तोदात्तो नेत्याहुः। २१। **घृतादीनां च**। अन्त उदात्तः। घृतं मिमिक्षे। आकृतिगणोऽयम्। २२। **ज्येष्ठकनिष्ठयोर्वयसि**। अन्तउदात्तः स्यात्। ज्येष्ठ आह चमसा। कनिष्ठ आह चतुरः। वयसि किम्। ज्येष्ठः=श्रेष्ठः। कनिष्ठोऽल्पिकः। इह नित्स्वरादाद्युदात्त एव। २३। **बिल्वतिष्ययोः स्वरितो वा**। अनयोरन्तः स्वरितो वा स्यात्। पक्षे उदात्तः॥

इति फिट्सूत्रेषु प्रथमः पादः।

---

## द्वितीयः पादः।

२४। **अथादिः प्राक् शकटेः**। अधिकारोऽयम्। 'शकटिशकट्योः–' इति यावत्। २५। **ह्रस्वान्तस्य स्त्रीविषयस्य**। आदिरुदात्तः स्यात्। बलिः। तनुः। २६। **नब्विषयस्यानिसन्तस्य**। वने न वा यः। इसन्तस्य तु–सर्पिः। नप्=नपुंसकम्। २७। **तृणधान्यानां च द्व्यषाम्**। द्व्यचामित्यर्थः। कुशाः। काशाः। माषाः। तिलाः। बह्वचां तु–गोधूमाः। २८। **त्रः संख्यायाः**। पञ्च। चतुष्कपालः। २९। **स्वाङ्गशिटामदन्तानाम्**। शिट् सर्वनाम। कर्णाभ्यां छुबुकादधि। ओष्ठाविव मधु। विश्वो विहायाः। ३०। **प्राणिनां कुपूर्वम्**। कवर्गात्पूर्वं आदिरुदात्तः। काकः। वृकः। शुकेषु मे। प्राणिनां किम्। क्षीरं सर्पिर्मधूदकम्। ३१। **खय्युवर्णं कृत्रिमाख्या चेत्**। खयि परे उवर्णमुदात्तं स्यात्। कन्दुकः। ३२। **उनर्वन्नन्तानाम्**। उन–वरुणं वो रिशादसम्। ऋ–स्वसारं त्वा कृणवै। वन्–पीवानं मेषम्। ३३। **वर्णानां तणतिनितान्तानाम्**। आदिरुदात्तः। एतः। हरिणः।

अस्यान्त उदात्तश्छन्दसि, न तु मृगाख्यायाम्॥ **१३ एके इति**। तन्मतेऽस्मिन्सूत्रे नामधेयस्येत्यनुवर्तते, वचनविपरिणामेनान्वयः—नामधेययोः शुक्लगौरयोरादिरुदात्त इत्यर्थः। तेन 'सरो गौरो यथा पिब' इत्यत्रान्तोदात्तत्वमेव, नामधेयत्वाभावात्॥ **१४ अङ्गुष्ठो–**। एषामन्तोदात्तश्छन्दसि॥—**अङ्गुष्ठस्येति**। उपलक्षणमिदम्। बकशब्देऽपि 'प्राणिनां कुपूर्वम्' इत्याद्युदात्ते प्राप्ते इति बोध्यम्॥ **१५ वा भाषायाम्**।—**पृष्ठमिति**। पक्षे 'स्वाङ्गशिटाम्–' इत्याद्युदात्तत्वम्॥ **१६ अर्जुनस्य—**। अन्त उदात्तस्तृणाख्यायाम्। तृणाख्यायां किम्? अर्जुनो वृक्षः। 'उनर्वन्नन्तानाम्–' इत्याद्युदात्तः॥ **१७ अर्यस्य–**। अन्त उदात्तः स्वाम्याख्यायाम्। 'अर्यः स्वामिवैश्ययोः' इति निपातितोऽयमर्यशब्दः॥ **१८ आशाया–**। अदिगाख्यायामाशाशब्द आद्युदात्तः स्यात्॥ **१९ ज्येष्ठेत्यादि**। 'प्रशस्य श्रः' 'ज्य च' इति प्रशस्यशब्दादिष्ठनि ज्यादेशः। श्रवणं श्रवः सोऽस्त्यस्याः सा श्रववती। धनं विद्यते अस्याः सा धनवती। अतिशयिता श्रववती–श्रविष्ठा। धनिष्ठा। इष्ठनि 'विन्मतोर्लुक्' इति मतुपो लुक्॥—**आद्युदात्ते प्राप्त इति**। 'ञ्नित्यादिः–' इत्यनेन॥ **२० कृत्तिकेति**। 'लघावन्ते–' इति आद्युदात्तत्वम्॥ **२१ घृतमिति**। 'नब्विषयस्य–' इति प्राप्ते॥ **२२ ज्येष्ठ इति**। उदाहरणे वृद्धशब्दस्य 'वृद्धस्य च' इतीष्ठनि ज्यादेशः। 'युवाल्पयोः कनन्यतरस्याम्' इति युवन्शब्दस्य कनादेशः। प्रत्युदाहरणे 'प्रशस्यस्य श्रः' 'ज्य च' इति प्रशस्यशब्दस्य ज्यादेशः। अल्पस्य कन्॥—**नित्स्वरादिति**। तथा च नित्स्वरापवादोऽयं योगः॥ **२३ पक्षे उदात्त इति**। उदात्त इत्यनुवृत्तेः॥ **इति प्रथमः पादः**॥

**२६ नब्विषयस्य**। इसन्तवर्जितस्य नित्यनपुंसकस्यादिरुदात्तः स्यात्॥—**सर्पिरिति**। 'अर्चिशुचि–' इत्यादिना इसिः॥ **२७ तृण—**। तृणवाचिनां धान्यवाचिनां च द्व्यचामादिरुदात्तः स्यात्॥ अषिति अचः प्राचां संज्ञा, तदाह—**द्व्यचामित्यर्थ इति**॥—**गोधूमा इति**। 'लघावन्ते–' इति मध्योदात्तता॥ **२८ त्रः संख्या—**। नकाररेफान्तायाः संख्याया आदिरुदात्तः॥—**चतुष्कपाल इति**। चत्वार इत्यत्रामुस्वरेण भाव्यम्, चतुर इत्यत्र 'चतुरः शसि' इति, चतुर्भिरित्यत्र 'झल्युपोत्तम्' इति, चतुर्णामित्यत्र 'षट्त्रिचतुर्भ्यः' इत्यनेनेति समास उदाहृतः। 'इगन्तकालकपालभगाल–' इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तोऽयम्॥ **२९ स्वाङ्गशिटाम्–**। स्वाङ्गवाचिनामदन्तानां सर्वनाम्नामादिरुदात्तः स्यात्॥ **३० उदकमिति**। छन्दसि 'अङ्गुष्ठोदकबकवशानाम्' इत्यन्तोदात्तः। भाषायां तु कर्दमादित्वादादिर्द्वितीयं वोदात्तम्॥ **३२ उनर्वन्—**।

---

१ 'चतुष्कपर्दा' इत्यपि पाठः।

शितिः । पृश्निः । हरित् । ३४ । **ह्रस्वान्तस्य ह्रस्वमनृत्ताच्छील्ये** । ऋद्वर्ज्यं ह्रस्वान्तस्यादिभूतं ह्रस्वमुदात्तं स्यात् । मुनिः । ३५ । **अक्षस्यादेवनस्य** । आदिरुदात्तः । तस्य नाक्षः । देवने तु-अक्षैर्मा दीव्यः । ३६ । **अर्धस्यासमद्योतने** । अर्धो ग्रामस्य । समेंऽशके तु-अर्धं पिप्पल्याः । ३७ । **पीतद्र्वर्थानाम्** । आदिरुदात्तः । पीतद्रुः सरलः । ३८ । **ग्रामादीनां च** । ग्रामः । सोमः । यामः । ३९ । **लुबन्तस्योपमेयनामधेयस्य** । चञ्चेव चञ्चा । 'स्फिगन्तस्य' इति पाठान्तरम् । स्फिगिति लुपः प्राचां संज्ञा । ४० । **न वृक्षपर्वतविशेषव्याघ्रसिंहमहिषाणाम्** । एषामुपमेयनाम्नामादिरुदात्तो न । ताल इव तालः । मेरुरिव मेरुः । व्याघ्रः । सिंहः । महिषः । ४१ । **राजविशेषस्य यमन्वा चेत्** । यमन्वा=वृद्धः । 'आङ्गः' उदाहरणम् । 'अङ्गाः' प्रत्युदाहरणम् । ४२ । **लघावन्ते द्वयोश्च बह्वषो गुरुः** । अन्ते लघौ द्वयोश्च लघ्वोः सतोर्बह्वच्कस्य गुरुरुदात्तः । कल्याणः । कोलाहलः । ४३ । **स्त्रीविषयवर्णाक्षुपूर्वाणाम्** । एषां त्रयाणामाद्युदात्तः स्त्रीविषये । मल्लिका । वर्णः-श्येनी, हरिणी । अक्षुशब्दात्पूर्वोऽस्त्येषां ते अक्षुपूर्वाः-तरक्षुः । ४४ । **शकुनीनां च लघु पूर्वम्** । पूर्वं लघु उदात्तं स्यात् । कुक्कुटः । तित्तिरिः । ४५ । **नर्तुप्राण्याख्यायाम्** । यथालक्षणं प्राप्तमुदात्तत्वं न । वसन्तः । कृकलासः । ४६ । **धान्यानां च वृद्धक्षान्तानाम्** । आदिरुदात्तः । कान्तानाम्-श्यामाकाः । षान्तानाम्-राजमाषाः । ४७ । **जनपदशब्दानामषान्तानाम्** । आदिरुदात्तः । केकयः । ४८ । **हयादीनामसंयुक्तलान्तानामन्तः पूर्वं वा** । हयिति हल्संज्ञा । पललम् । शललम् । हयादीनां किम् । एकलः । असंयुक्त-इति किम् । मल्लः । ४९ । **इगन्तानां च द्व्यषाम्** । आदिरुदात्तः । कृषिः ॥

**॥ इति फिट्सूत्रेषु द्वितीयः पादः ॥**

---

## तृतीयः पादः ।

५० । **अथ द्वितीयं प्रागीषात्** । 'ईषान्तस्य हयादेः-' ६६ इत्यतः प्राक् द्वितीयाधिकारः । ५१ । **त्र्यचां प्राङ्मकरात्** । 'मकरवरूढ-' ५७ इत्यतः प्राक् त्र्यचामित्यधिकारः । ५२ । **स्वाङ्गानामकुर्वादीनाम्** । कवर्गरेफवकारादीनि वर्जयित्वा त्र्यचां स्वाङ्गानां द्वितीयमुदात्तम् । ललाटम् । कुर्वादीनां तु—कपोलः, रसना, वदनम् । ५३ । **मादीनां च** । मलयः । मकरः । ५४ । **शादीनां शाका-**

---

उन ऋ वन् एतदन्तानामादिरुदात्तः स्यात् ॥ ३४ **ह्रस्वान्तस्य-**। अनृत्किम् ? नृशंसः ॥ ३५ **अक्षस्य—**। अदेवनस्याक्षस्यादिरुदात्तः ॥ ३६ **अर्धस्य-**। असमद्योतनेऽर्धशब्दस्यादिरुदात्तः ॥ ३८ **ग्रामादीनां च** । आदिरुदात्तः ॥ ३९ **लुबन्तस्य** । उपमेयवाचिनो लुबन्तस्यादिरुदात्तः ॥—**चञ्चेति** । 'इवे प्रतिकृतौ' इति विहितस्य 'लुम्मनुष्ये-' इति कनो लुप् । लुबन्तस्य किम् ? अग्निर्माणवकः ॥ ४० **न वृक्ष-**। पूर्वेण प्राप्तमाद्युदात्तत्वं निषिध्यते । अत्र वृक्षपर्वतविशेषग्रहणात् वृक्ष इवायं वृक्षः, पर्वतः । अत्र पूर्वेणाद्युदात्तत्वं भवत्येव ॥ ४१ **राजविशेषस्य-**। लुबन्तस्योपमेयनामधेयस्य राजविशेषस्याद्युदात्तः, यमन्वा चेन्नामधेयं भवति । पूर्वेणैव सिद्धे नियमार्थमिदम्—राजविशेषस्य चेद्वृद्धस्यैवेत्याहुः । फिड्वृत्तौ तु वृद्धस्य चेद्राजविशेषस्यैवेति नियमो दर्शितः ॥—**आङ्ग इति** । आङ्ग इवायमाङ्गः ॥ ४२ **लघावन्ते-**। इह आदिरिति न संबध्यते, तेन नादेरपि गुरोरुदात्तः । अत एव वृषाकपिशब्दस्य गुरुरुदात्त इति 'वृषाकप्यग्नि-' इति सूत्रे वृत्त्यादिग्रन्थेषु विभावितम् । **न च** गुरूणां मध्ये य आदिरित्यर्थोऽस्त्विति वाच्यम् । 'अन्यतो ङीष्' इति सूत्रे सारङ्गकल्माषशब्दौ 'लघावन्ते-' इत्यादिना मध्योदात्ताविति हरदत्तग्रन्थविरोधादित्याहुः ॥—**कल्याण इति** । पर्यायेणादिमध्याद्युदात्तौ ॥ ४४ **शकुनीनाम्** । पक्षिवाचिनाम् ॥—**पूर्वमिति** । अन्त्यात्पूर्वमित्यर्थः । अत्राप्यादिरिति न संबध्यते, पूर्वग्रहणात् ॥—**कुक्कुटेत्यादि** । मध्योदात्तावेतौ ॥ ४५ **नर्तु-**। ऋतुवाचिनां प्राणिवाचिनां च यथालक्षणप्राप्तमुदात्तत्वं न ॥ ४६ **धान्यानाम्-**। धान्यवाचिनां वृद्धकशब्दान्तानां षशब्दान्तानां चादिरुदात्तः ॥—**श्यामाकाः माषा इति** । अत्र 'उशीर-' इत्यनेन 'तृणधान्यानाम्-' इत्यनेन चाद्युदात्तत्वस्य सिद्धत्वात् नैषादका राजमाषा इत्युदाहर्तव्यम् । फिट्वृत्तौ तु सूत्रे **च**शब्दो न पठितः । वृत्तौ **गुरुरुदात्त** इति व्याख्यातं न त्वादिरुदात्त इति । 'नैषादकाः-बालाक्षाः' इत्युदाहृतं च । यत्तु-'धान्यानामिति किं ? श्यामाकाः' इत्युदाहृतं, तत्र श्यामाके धान्यत्वाभावश्चिन्त्यः ॥ ४७ **जनपद—**। जनपदवाचिनामजन्तानामादिरुदात्तः स्यात् ॥—**केकय इति** । अत्र परत्वाद्यान्तस्यान्त्यात्पूर्वमिति स्वरेण भाव्यमतः 'अङ्गाः-वङ्गाः' इत्युदाहर्तव्यमिति वदन्ति ॥ ४८ **हयादीनाम्** । हलादीनामसंयोगपूर्वो यो लशब्दस्तदन्तानामादिरुदात्तः, अन्त्यात्पूर्वं वा । केचित्तु अत्र जनपदानामित्यनुवर्तयन्ति । पञ्चालाः कोशला इत्युदाहृत्य पलालमिति प्रत्युदाहरन्ति च ॥ ४९ **इग—**। अत्रापि जनपदानामित्यनुवर्त्य 'कुरवश्चेदयः' इत्युदाहृतं, कृषिरिति प्रत्युदाहृतम्, 'अक्षैर्मा दीव्यः कृषिमित् कृषस्व' इत्यत्र कृषिशब्दस्यान्तोदात्तत्वात् ॥ **इति द्वितीयः पादः ॥**

५२ **कपोल इति** । 'लघावन्ते-' इति मध्योदात्तम् ॥ **रसना, वदनमिति** । 'स्वाङ्गशिटाम्' इत्याद्युदात्तत्वम् ॥ ५३ **मादी-**॥ **मलयः मकर इति** । अनयोर्मकरवरूढेति यान्तस्यान्त्यात्पूर्वमिति विशिष्यस्वरविधानान्महेन्द्र इत्युदाहर्तव्यम् ॥ ५४ **शादीनां शा-**। शकारादीनां शाकवाचिनां त्र्यचां द्वितीयमुदात्तं स्यात् । केचित्तु सादीनामिति पठित्वा

नाम् । शीतन्या । शतपुष्पा । ५५ । **पान्तानां गुर्वादीनाम्** । पादपः । आतपः । लघ्वादीनां तु—अनूपम् । द्व्यचां तु—नीपम् । ५६ । **युतान्यण्यन्तानाम्** । युते-अयुतम् । अनि-धमनिः । अणि-विपणिः । ५७ । **मकरवरूढपारेवतवितस्तेक्ष्वार्जिद्राक्षाकलोमाकाष्ठापेष्ठाकाशीनामादिर्वा** । एषामादिर्द्वितीयो वोदात्तः । मकरः । वरूढः । इत्यादि । ५८ । **छन्दसि च** । अमकरार्थ आरम्भः । लक्ष्यानुसारादादिर्द्वितीयं चोदात्तं ज्ञेयम् । ५९ । **कर्दमादीनां च** । आदिर्द्वितीयं वोदात्तम् । ६० । **सुगन्धितेजनस्य ते वा** । आदिर्द्वितीयं तेशब्दश्चेति त्रयः पर्यायेणोदात्ताः । सुगन्धितेजनाः । ६१ । **नपः फलान्तानाम्** । आदिर्द्वितीयं वोदात्तम् । राजादनफलम् । ६२ । **यान्तस्यान्त्यात्पूर्वम्** । कुलायः । ६३ । **थान्तस्य च नालघुनी** । नाशब्दो लघु च उदात्ते स्तः । सनाथा सभा । ६४ । **शिशुमारोदुम्बरबलीवर्दोष्ट्रारपुरूरवसां च** । अन्त्यात्पूर्वमुदात्तं द्वितीयं वा । ६५ । **सांकाश्यकाम्पिल्यनासिक्यदार्वाघाटानाम्** । द्वितीयमुदात्तं वा । ६६ । **ईषान्तस्य हयादेरादिर्वा** । हलीषा । लाङ्गलीषा । ६७ । **उशीरदाशेरकपालपलालशैवालश्यामाकशारीरशरावहृदयहिरण्यारण्यापत्यदेवराणाम्** । एषामादिरुदात्तः स्यात् । ६८ । **महिष्यषाढयोर्जायेष्टकाख्या चेत्** । आदिरुदात्तः । महिषी जाया । अषाढा उपदधाति ॥

॥ इति फिट्सूत्रेषु तृतीयः पादः ॥

---

## चतुर्थः पादः ।

६९ । **शकटिशकट्योरक्षरमक्षरं पर्यायेण** ॥ उदात्तम् । शकटिः । शकटी । ७० । **गोष्ठजस्य ब्राह्मणनामधेयस्य** । अक्षरमक्षरं पर्यायेणोदात्तम् । गोष्ठजो ब्राह्मणः । अन्यत्र-गोष्ठजः पशुः, कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः । ७१ । **पारावतस्योपोत्तमवर्जम्** । शेषं क्रमेणोदात्तम् । पारावतः । ७२ । **धूम्रजानुमुञ्जकेशकालवालस्थालीपाकानामधूजलस्थानाम्** । एषां चतुर्णां धूप्रभृतींश्चतुरो वर्जयित्वा शिष्टानि क्रमेणोदात्तानि । धूम्रजानुः । मुञ्जकेशः । कालवालः । स्थालीपाकः । ७३ । **कपिकेशहरिकेशयोश्छन्दसि** । कपिकेशः । हरिकेशः । ७४ । **न्यङ्स्वरौ स्वरितौ** । स्पष्टम् । न्यं॑ङ्ङुत्ता॒नः । व्यं॑चक्षय॒त्स्वः॑ । ७५ । **न्यर्बुदव्यल्कशयोरादिः** । स्वरितः स्यात् । ७६ । **तिल्यशिक्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः** । स्वरितः स्यात् । तिलानां भवनं क्षेत्रं तिल्यम् । 'यतो नावः' ३७०१ इति प्राप्ते । ७७ । **बिल्वभक्ष्यवीर्याणि छन्दसि** । अन्तस्वरितानि । ननो बिल्व उदतिष्ठत् । ७८ । **त्वत्त्वसमसिमेत्यनुच्चानि** । स्तरीं॑ त्वत् । उत त्वः॑ पश्यन् । नभन्तामन्यके॑ समे । सिमस्मै । ७९ । **सिमस्याथर्वणेऽन्त उदात्तः** । 'अथर्वणे' इति प्रायिकम् । तत्र दृष्टस्येत्येवंपरं वा । तेन 'वार्सस्तनुते सिमस्मै' इत्यृग्वेदेऽपि भवत्येव । ८० । **निपाता आद्युदात्ताः** । स्वाहा । ८१ । **उपसर्गाश्चाभिवर्जम्** । ८२ । **एवादीनामन्तः** । 'एवमादीनाम्' इति पाठान्तरम् । एव । एवम् । नूनम् । सह । ते मित्र सूरिभिः सह । षष्ठस्य तृतीये 'सहस्य सः–' १००९ इति प्रकरणे सहशब्द आद्युदात्त इति प्राञ्चः, तच्चिन्त्यम् । ८३ । **वाचादीनामुभावुदात्तौ** । उभौग्रहणम् 'अनुदात्तं पदमेकवर्जम्' ३६४८ इत्यस्य बाधाय । ८४ । **चादयोऽनुदात्ताः** ।

---

सर्षपा इत्युदाहरन्ति ॥ ५५ **पान्तानाम्**–। पशब्दान्तानां गुर्वादीनां त्र्यचां द्वितीयमुदात्तं स्यात् । अनूपे अनोरप्रधानकनीयसीत्यनेनोदात्तत्वं, नीपे 'नेरनिधाने' इत्यनेनेत्याहुः ॥ ५६ **युता**–। युत अनि अणि एतदन्तानां त्र्यचां द्वितीयमुदात्तं स्यात् ॥ ५७ **इत्यादीति** । आदिशब्देन पारावत वितस्ता इक्षु आर्जि द्राक्षा कला उमा काष्ठा पेष्ठा काशीना । काशीनानामिति वक्तव्ये नुडभाव आर्षः ॥ ५८ **छन्दसि**–। छन्दसि मकारादीनामन्येषां चादिर्द्वितीयं वोदात्तम् । काश्यपः ॥ ५९ कर्दमः । कुलटा । उदकं । गान्धारिः ॥ ६० **सुगन्धि**–॥—**आदिरिति** । सुगन्धितेजनशब्दस्य ॥ ६१ **नपः फलान्तानाम्**–। नप् नपुंसकम् । नपः किम् ? दासीफलो वृक्षः ॥ ६२ **यान्तस्य**—। यशब्दान्तस्यान्त्यात्पूर्वमुदात्तं स्यात् ॥ ६३ **थान्तस्य**–। केचित्तु 'आन्तस्य च नालघुनी' इति पठित्वा आकारान्तस्य नाशब्दस्य च लघुनी अन्त्यात्पूर्वे उदात्ते स्त इति व्याख्याय 'नाना' 'दिवा' 'मुधा' इत्युदाजह्रुः ॥ ६४ **शिशुमारो**–। शिंशुमार इति पाठान्तरम् ॥—**उष्ट्रार**–। उष्टार इति पाठान्तरम् ॥ ६५ **सांकाश्य**–। सांकाश्यकाम्पिल्यशब्दौ 'वुञ्छण्–' इति ण्यान्तौ । दार्वाघाटशब्दो 'दारावाहनोऽणन्तस्य च टः संज्ञायाम्' इत्यण्प्रत्ययान्तः ॥ ६६ **ईषान्तस्य**–। ईषान्तस्य हलादेरादिरुदात्तो वा स्यात् ॥ ६७ **उशीर**–। अत्र श्यामाकग्रहणं चिन्त्यम्, 'धान्यानां च वृद्धक्षान्तानाम्' इत्यनेनैव सिद्धत्वात् । इदमेव ज्ञापयितुं मूले धान्यानामित्यत्र श्यामाक इत्युदाहृतम् । देवरग्रहणमपि चिन्त्यम्, 'लघावन्ते–' इत्यनेनैव सिद्धत्वात् । हृदयग्रहणं 'स्वाङ्गानामकुर्वादीनाम्' इति द्वितीयस्योदात्तत्वं बाधितुम्, अन्येषां 'लघावन्ते' इति प्राप्ते वचनम् ॥ ६८ **महिष्य**–। एतयोरादिरुदात्तः स्यात् यथासंख्यं जायाख्यायामिष्टकाख्यायां च ॥ **इति तृतीयः पादः** ॥

७८ **त्वत्त्व**–। एतानि सर्वानुदात्तानि ॥ ७९ **सिमस्य**–। सिमशब्दस्याथर्वणे वेदे उदात्तः ॥ ८१ **उपसर्गाश्चाभि**–।

---

१ स्वादित्यस्याग्रे 'न्युर्बुदाय स्वाहा' पाकदूर्वा व्यल्कशा, इत्यधिकः पाठः क्वचित् ।

स्पष्टम्। ८५। यथेति पादान्ते। तन्नेमिमृभवो यथा। पदान्ते किम्। यथा नो अदितिः करत्। ८६। प्रकारादिद्विरुक्तौ परस्यान्त उदात्तः। पटु पटुः। ८७। शेषं सर्वमनुदात्तम्। शेषं=नित्यादि, द्विरुक्तस्य परमित्यर्थः। प्रग्रायम्। दिवे दिवे॥ ॥ इति शान्तनवाचार्यप्रणीतेषु फिट्सूत्रेषु तुरीयः पादः।

---

## अथ प्रत्ययस्वराः।

३७०५। आद्युदात्तश्च।३।१।३। प्रत्यय आद्युदात्तः स्यात्। अग्निः। कर्तव्यम्।

३७०६। अनुदात्तौ सुप्पितौ।३।१।४। पूर्वस्यापवादः। यज्ञस्य। न यो युच्छति। शप्तिपोरनुदात्तत्वे स्वरितप्रचयौ।

३७०७। चितः।६।१।१६३। अन्त उदात्तः स्यात्॥ * चितः सप्रकृतेर्बह्वकजर्थम्। चिति प्रत्यये सति प्रकृतिप्रत्ययसमुदायस्यान्त उदात्तो वाच्य इत्यर्थः। नभन्तामन्यके समे। यके सरस्वतीमनु। तकत्सुते।

३७०८। तद्धितस्य।६।१।१६४। चितस्तद्धितस्यान्त उदात्तः। पूर्वेण सिद्धे ञित्स्वरबाधनार्थमिदम्। कौञ्जायनाः।

३७०९। कितः।६।१।१६५। कितस्तद्धितस्यान्त उदात्तः। यदाग्नेयः।

३७१०। तिसृभ्यो जसः।६।१।१६६। अन्त उदात्तः। तिस्रो द्यावः सवितुः।

३७११। सावेकाचस्तृतीयादिर्विभक्तिः।६।१।१६८। साविति सप्तमीबहुवचनम्। तत्र य एकाच् ततः परा तृतीयादिर्विभक्तिरुदात्ता। वाचा विरूपः। सौ किम्। 'राज्ञा' इत्यादौ एकाचोऽपि राजशब्दात्परस्य मा भूत्, राज्ञो नु ते। एकाचः किम्। विदद्वसे राजनि त्वे। तृतीयादिः किम्। न ददर्श वाचम्।

३७१२। अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे।६।१।१६९। नित्याधिकारविहितसमासादन्यत्र

---

अभिशब्दं वर्जयित्वा उपसर्गा आद्युदात्ताः स्युः॥ ८५ यथेति। यथाशब्दः पादान्तेऽनुदात्तः स्यात्॥ ८६ प्रकारादि-। 'प्रकारे गुणवचनस्य' इत्यादिद्वित्वे परस्यान्तोदात्तः स्यात्॥—पटु पटुरिति। ननु 'कर्मधारयवदुत्तरेषु' इति कर्मधारयवद्भावादेव 'समासस्य' इत्यन्तोदात्तत्वे सिद्धे व्यर्थमिदमिति वाच्यम्। तस्य [illegible]त्वेनादोषात्॥ शेषं प्रकारादिद्वित्वादन्यस्मिन्द्वित्वे परं सर्वमनुदात्तं स्यात्॥ इति चतुर्थः पादः॥

३७०५ अग्निरिति। 'अङ्गेर्नलोपश्च' इति निप्रत्ययः॥—कर्तव्यमिति। तव्यप्रत्ययः। तव्यतस्तु तित्त्वात्स्वरितो वक्ष्यते। न च तव्यस्याप्याद्युदात्तत्वे 'उदात्तादनुदात्तस्य-' इति स्वरितो भवत्येवेति चेत्। सत्यम्। किं त्वयमसिद्धः, तित्स्वरस्तु सिद्ध इति प्रवृत्त्यप्रवृत्तिभ्यां महान् विशेषः। तव्यतस्तित्त्वमेव शेषनिघातपरिभाषाया यथोद्देशप्रवृत्तौ ज्ञापकमिति ध्येयम्॥ ३७०६ युच्छतीति। युच्छ प्रमादे। 'धातोः' इत्यन्तोदात्तः, ततः परः शप् 'उदात्तादनुदात्तस्य-' इति स्वरितः। 'स्वरितात्संहितायामनुदात्तानाम्' इति तिपः प्रचयः॥ ३७०७ चितः॥—सप्रकृतेरिति। नन्विदं कथं लभ्यमिति चेत्। शृणु—चित इत्यवयवादेषा षष्ठी न कार्यिणः। चिदोऽवयवस्तस्य संबन्धी यः समुदायः स कार्यी, अथवा चिदस्यास्ति स चितः। अर्शआदेराकृतिगणत्वादच् प्रत्ययः। षष्ठ्यर्थे प्रथमा। तेन चिद्वतः समुदायस्येत्यर्थः। अत्र च लिङ्गम्-अकचश्चित्करणम्, अन्यथा तस्यैकाच्त्वादनर्थकं तत्स्यात्॥—अन्यके इति। 'अव्ययसर्वनाम्नाम्-' इत्यकच्, ततः परा टिरुदात्ता। एवं 'यके' 'तकत्' इत्यत्रापि यत्तच्छब्दादकच्। बहुच उदाहरणं तु बहुपटव इत्यादि ज्ञेयम्॥ ३७०८ ञित्स्वरबाधनार्थमिति। च्फञश्चकारो 'व्रातच्फञोरस्त्रियाम्' इति विशेषणे चरितार्थः। ञकारो वृद्धौ। तत्रासत्यस्मिन् परत्वात् ञित्स्वरः स्यात् इति भावः॥—कौञ्जायना इति। कुञ्जस्यापत्यानि बहूनि। 'गोत्रे कुञ्जादिभ्यश्च्फञ्' 'व्रातच्फञोरस्त्रियाम्' इति ञ्यः। 'ञ्यादयस्तद्राजाः' तद्राजस्य बहुषु लुक्॥ ३७०९ आग्नेय इति। अग्नेर्ढक्॥ ३७१० तिसृ-। अर्थगतं बहुत्वं शब्द आरोप्य बहुवचननिर्देशः। तिसृभ्यः परस्य जसोऽन्त उदात्तः स्यात्॥—तिस्र इति। अन्तोदात्तत्रिशब्दस्य स्थाने तिस्रादेशः स्थानिवद्भावादन्तोदात्तः। 'अनुदात्तौ सुप्पितौ' इति जसनुदात्तः। अत्र 'अचि र ऋतः' इति रेफादेशे कृते 'उदात्तस्वरितयोर्यणः-' इति जसः स्वरितत्वं प्राप्तमनेन बाध्यते॥ ३७११ सप्तमीबहुवचनमिति। न प्रथमैकवचनम्, व्याख्यानात्। राज्ञेति। 'सौ' इत्येतस्मिन्नसति एकाचः परा तृतीयादिर्विभक्तिरुदात्ता भवतीत्यर्थो भवति। भवति चायमल्लोपे कृते एकाच्॥—राज्ञ इति। राजशब्द आद्युदात्तः। 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः' इति कनिनन्तत्वात्॥ ३७१२ अन्तोदात्ता-। एकाच इति वर्तते, तृतीयादिर्विभक्तिरिति च। नित्यशब्दः स्वर्यते, तेन नित्याधिकारगतिर्भवतीत्याह—नित्याधिकारेत्यादि। अनित्यसमासे किम्? अग्निचिता। 'अग्नौ चेः' इति क्विप्प्रत्ययः। उपपदसमासः। 'गतिकारकोपपदात्कृत्' इति कृदुत्तरपदप्रकृतिस्वरेण चिच्छब्द उदात्तः। अधिकारग्रहणं किम्? विग्रहाभावमात्रेण यो नित्यसमासस्तत्र पर्युदासो मा भूत्—अवाचा ब्राह्मणेन। 'बहुव्रीहौ नञ्सुभ्याम्' इत्यन्तोदात्तत्वम्। अत्र विभक्तेर्वैकल्पिक उदात्तो भवत्येव। अन्तोदात्तात्किम्? अवाचा। नञ्समासोऽयं, न तु बहुव्रीहिः। तेन 'नञ्सुभ्याम्' इत्यन्तोदात्तत्वं

यदुत्तरपदमन्तोदात्तमेकाच् ततः परा तृतीयादिर्विभक्तिरुदात्ता वा स्यात् । परमवाचा ।

३७१३ । अञ्चेश्छन्दस्यसर्वनामस्थानम् ।६।१।१७०। अञ्चेः परा विभक्तिरुदात्ता । इन्द्रो दधीचः । 'चौ' ३६५२ इति पूर्वपदान्तोदात्तत्वं प्राप्तम् । तृतीयादिरित्यनुवर्तमाने असर्वनामस्थानग्रहणं शस्परिग्रहार्थम् । प्रतीचो बाहून् ।

३७१४ । ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः ।६।१।१७६। एभ्योऽसर्वनामस्थानविभक्तिरुदात्ता । प्रष्ठौहः । प्रष्ठौहा ॥ ॐ ऊठ्युपधाग्रहणं कर्तव्यम् । इह मा भूत्–अक्षद्युवा, अक्षद्युवे । इदम्–एभिर्नृभिर्नृतमः । अन्वादेशे न, अन्तोदात्तादित्यनुवृत्तेः । न च तत्रान्तोदात्तताऽप्यस्तीति वाच्यम् । 'इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ' ३५० इति सूत्रेणानुदात्तस्य अशो विधानात् । प्र ते बभ्रू । माभ्यां गा अनु । 'पद्दन्नोमासहृन्निश्' २२८ इति पद् पदादयः । पद्भ्यां भूमिः । दद्भिर्न जिह्वा । अहरहर्जायते मासिमासि । मनश्चिन्मे हृद आ । अप्–अपां फेनेन । पुम्–अभ्रातेव पुंसः । रै–राया वयम् । रायो धर्ता विवस्वतः । दिव्–उप त्वाग्ने दिवेदिवे ।

३७१५ । अष्टनो दीर्घात् ।६।१।१७२। शसादिर्विभक्तिरुदात्ता । अष्टाभिर्दशभिः ।

३७१६ । शतुरनुमो नद्यजादी ।६।१।१७३। अनुम् यः शतृप्रत्ययस्तदन्तादन्तोदात्तात्परा नदी अजादिश्च शसादिर्विभक्तिरुदात्ता स्यात् । अच्छा रवं प्रथमा जानती । कृण्वते । अन्तोदात्तात्किम् । दधती । 'अभ्यस्तानामादिः' ३६७३ इत्याद्युदात्तः । अनुमः किम् । तुदन्ती । एकादेशोऽत्र उदात्तः । अदुपदेशात्परत्वाच्छतुः 'लसार्वधातुक' ३७३० इति निघातः ।

३७१७ । उदात्तयणो हल्पूर्वात् ।६।१।१७४। उदात्तस्थाने यो यण् हल्पूर्वस्तस्मात्परा नदी शसादिर्विभक्तिश्च उदात्ता स्यात् । चोदयित्री सूनृतानाम् । एषा नेत्री । ऋतं देवाय कृण्वते सवित्रे ।

---

न भवति, किं त्वव्ययपूर्वपदप्रकृतिस्वर एव भवतीत्यर्थः । उत्तरपदग्रहणं तु एकाच्त्वेनोत्तरपदं विशेषयितुम् । अन्यथा समासविशेषणं स्यात् । तथा च शुनः ऊर्क्–श्वोर्क्, श्वोर्जा–इत्यादावेवायं विधिः स्यात् । एकाच् किम् ? राजदृषदा । षष्ठीसमासात् टा ॥ **३७१३ दधीच इति** । दध्यञ्चतीति 'ऋत्विग्–' आदिना क्विन् । 'अनिदिताम्–' इति नलोपः । 'अचः' इत्यकारलोपः । 'चौ' इति दीर्घत्वम् । अत्र 'चौ' इति पूर्वपदान्तोदात्तत्वं प्राप्तम् ॥—**शस्परिग्रहार्थमिति** । शसादिग्रहणं तु न कृतं, नपुंसके शसि मा भूत्, सुटि यथा स्यादिति ॥ **३७१४ ऊडिदं–**। अत्रैकाच इति वर्तते, अन्तोदात्तादिति च । एकाजन्तोदात्तेभ्यः परा सर्वनामस्थानविभक्तिरुदात्ता स्यात् ॥—**प्रष्ठौह इति** । 'छन्दसि सहः', 'वहश्च' इति ण्विः । 'वाह ऊठ्' । उपपदसमासे प्रष्ठवाह्शब्दो 'गतिकारकोपपदात्कृत्' इत्यन्तोदात्तः । अत्र प्रष्ठौह्शब्दस्यानेकाच्त्वेऽपि ऊह्शब्दस्यैकाच्त्वमेव ॥—**ऊठ्युपधाग्रहणमिति** । उपधाभूत ऊठ् गृह्यते न त्वन्त्य इत्यर्थः । पञ्चमीनिर्देशात्परस्यैव ग्रहणे प्राप्ते वचनम् । तेनाक्षद्यूरित्यादौ विभक्तेराद्युदात्तत्वं न । अत्र हि अक्षैर्दीव्यतीति क्विप् । अन्तरङ्गत्वादूठ्, यण्, उपपदसमासत्वात् कृत्स्वरेणान्तोदात्तोऽयम् ॥—**अन्वादेशे नेति** । अत एव 'सावेकाचः–' इत्यपि स्वरो न । यदि स्यात्तर्हीहान्तोदात्ताधिकारो व्यर्थः स्यात् ॥—**प्र ते बभ्रू इति**—भिन्ना ऋक्–अन्वादेशप्रदर्शनार्थं माभ्यामित्यत्रोक्ता ॥—**माभ्यामिति** । अत्र पूर्वार्धर्चे बभ्रुशब्देनोक्तयोरिहेदमा परामर्शेऽप्यन्वादेशोऽस्त्येव । अन्वादेशश्च कथितानुकथितमात्रं, न त्विदमा कथितस्येदमैवानुकथनमिति भाष्योक्तेः ॥—**षट्पदादय इति** । न तु ततः परे, एकाच इत्यनुवृत्तेः ॥ **३७१५ अष्टनो–**। दीर्घान्तादष्टनः पराऽसर्वनामस्थानविभक्तिरुदात्ता । 'झल्युपोत्तमम्' इत्यस्यापवादः । अष्टन्शब्दो घृतादित्वादन्तोदात्तः । तेन उत्तरार्थमनुवर्तमानस्यान्तोदात्तादित्यस्येहापि नान्वयः । दीर्घात्किम् ? अष्टभिः । इह 'झल्युपोत्तमम्' इति स्वरः ॥ ननु चात्रापि 'अष्टन आ विभक्तौ' इत्यनेन भवितव्यम्, तद्विधौ विकल्पस्याभावादिति चेत्, **सत्यम्** । इदमेव दीर्घग्रहणमष्टन आत्वविकल्पं ज्ञापयति । नित्ये त्वात्वे व्यावर्त्याभावाद्दीर्घग्रहणमनर्थकं स्यात् । कृतात्वस्य षट्संज्ञां च ज्ञापयति । अन्यथा ह्यात्वपक्षे सावकाशोऽष्टनः स्वरः परत्वादनात्वपक्षे षट्स्वरेण बाधिष्यत इति किं दीर्घग्रहणेन ? ॥ **३७१६ जानतीति** । 'ज्ञाजनोर्जा' इति जादेशः । 'श्नाभ्यस्तयोरातः' इति श्नाकारलोपः । अत्र प्रत्ययस्वरेण शत्रन्तमन्तोदात्तम् ॥—**कृण्वत इति** । 'धिन्विकृण्व्योर च' ॥—**तुदन्तीति** । तुदादित्वाच्छः । 'आच्छीनद्योः–' इति नुम् ॥ प्रत्युदाहरणे ह्यङ्गविकलतां परिहरति—**एकादेशोऽत्रोदात्त इति** । तुदन्तीत्यत्र शे कृते तस्मात्परस्य शतुरदुपदेशात्परत्वात् 'तास्यनुदात्त–' इति निघाते 'एकादेश उदात्तेनोदात्तः' इत्युदात्तत्वम् । अस्मिन्कर्तव्ये तस्यासिद्धत्वं नास्ति, अनुम इति प्रतिषेधाज्ज्ञापकात् । न ह्येकादेशस्वरेण विना शत्रन्तं सनुमुकमन्तोदात्तं भवति ॥ **३७१७ उदात्तयणो–**। 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इति प्राप्ते वचनम् । **चोदयत्री नेत्री सवित्रे इति**—तृजन्ता एते 'चितः' इत्यन्तोदात्ताः ॥ हल्पूर्वादिति किम् ? बहुतितवा ब्राह्मण्या । स्त्रीलिङ्गोपादानं नाभावनिवृत्त्यर्थम् । 'तनोतेर्डउः सन्वच्च' इति उः । 'चालनी तितउः पुमान्' 'बहोर्नञ्वदुत्तरपदभूम्नि' इति बहुव्रीहिरन्तोदात्तः । तत्र 'उदात्तस्वरितयोः–' इति विभक्तेः स्वरितत्वम् । अस्मिन्सूत्रे नकारग्रहणं कर्तव्यम् । उदात्तस्थाने यो नकारस्ततोऽपि परस्या नद्या उदात्तत्वं वक्तव्यमित्यर्थः । तेन वाचां पतिः—

३८७३ । नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु ।६।२।१४२। पृथिव्यादिवर्जितेऽनुदात्तादावुत्तरपदे प्रागुक्तं न । इन्द्राग्निभ्यां कं वृषणः । अपृथिव्यादौ किम् । द्यावापृथिवी जनयन्, आद्युदात्तो द्यावा निपात्यते, पृथिवीत्यन्तोदात्तः । सोमारुद्रौ, 'रोदेर्णिलुक्च' इति रगन्तो रुद्रशब्दः । इन्द्रापूषणौ, 'श्वन्नुक्षन्पूषन्' इति पूषा अन्तोदात्तो निपात्यते । शुक्रामन्थिनौ । मन्थिन्निन्नन्तत्वादन्तोदात्तः । उत्तरपदग्रहणम् 'अनुदात्तादौ' इत्युत्तरपदविशेषणं यथा स्यात् द्वन्द्वविशेषणं मा भूत् । अनुदात्तादाविति विधिप्रतिषेधयोर्विषयविभागार्थम् ।

३८७४ । अन्तः ।६।२।१४३। अधिकारोऽयम् ।

३८७५ । थाथघञ्क्ताजबित्रकाणाम् ।६।२।१४४। थ अथ घञ् क्त अच् अप् इत्र क एतदन्तानां गतिकारकोपपदात्परेषामन्त उदात्तः । प्रभृथस्यायोः । आवसथः । घञ्-प्रभेदः । क्तः-धर्ता वज्री पुरुष्टुतः, पुरुषु=बहुप्रदेशेषु स्तुत इति विग्रहः । अच्-प्रक्षयः । अप्-प्रलवः । इत्र-प्रलवित्रम् । क-गोवृषः, मूलविभुजादित्वात्कः । गतिकारकोपपदादित्येव, सुस्तुतं भवता ।

३८७६ । सूपमानात्क्तः ।६।२।१४५। सोरुपमानाच्च परं क्तान्तमन्तोदात्तम् । ऋतस्य योनौ सुकृतस्य । शशप्लुतः ।

३८७७ । संज्ञायामनाचितादीनाम् ।६।२।१४६। गतिकारकोपपदात् क्तान्तमन्तोदात्तमनाचितादीन्वर्जयित्वा । उपहूतः शाकल्यः । परिजग्धः कौण्डिन्यः । अन- इति किम् । आचितम् । आस्थापितम् ।

३८७८ । प्रवृद्धादीनां च ।६।२।१४७। एषां क्तान्तमुत्तरपदमन्तोदात्तम् । प्रवृद्धः । प्रयुक्तः । असंज्ञार्थोऽयमारम्भः । आकृतिगणोऽयम् ।

३८७९ । कारकाद्दत्तश्रुतयोरेवाशिषि ।६।२।१४८। संज्ञायामन्त उदात्तः । देवदत्तः । विष्णुश्रुतः । कारकात्किम् । अकारकान्नियमो मा भूत्, [1]संभूतो रामायणः । दत्तश्रुतयोः किम् । देवपालितः । अस्मान्नियमादत्र 'संज्ञायामन-' ३८७७ इति न । 'तृतीया कर्मणि-' ३७७९ इति तु भवति । एव किम् । कारकावधारणं यथा स्यात् दत्तश्रुतावधारणं मा

३८७३ **इन्द्राग्निभ्यामिति** । अग्निशब्दः 'अङ्गेर्निर्नलोपश्च' इति निप्रत्ययान्तत्वादन्तोदात्तः ॥—**पृथिवीत्यन्तोदात्त इति** । ङीष्प्रत्ययान्तत्वात् ॥—**सोमारुद्राविति** । 'अर्तिस्तुसुहुसृधृ-' इति मन्नन्तत्वादाद्युदात्तः सोमशब्दः ॥—**उत्तरपदग्रहणमित्यादि** । अन्यथाऽस्मिन् प्रकरणे द्वन्द्वः सप्तम्या निर्दिष्टः, न उत्तरपदम्; तत्रानुदात्तादाविति सप्तम्यन्तं द्वन्द्वस्य विशेषणं स्यात् । ततश्चन्द्रासूर्यावित्यादौ प्रतिषेधः स्यात् । चन्द्रशब्दो रगन्तत्वादन्तोदात्तः । सूर्यशब्दः 'राजसूयसूर्य-' इति यदन्तत्वात् 'यतोऽनावः' इत्याद्युदात्तः । उत्तरपदग्रहणे तस्यैव श्रुतस्यानुदात्तादावित्येतद्विशेषणं भवति ॥—**अनुदात्तादाविति विधिप्रतिषेधयोरित्यादि** । अन्यथा विधिप्रतिषेधयोः समानविषयत्वाद्विकल्पः प्रसज्येत । इह पृथिव्यादिप्रतिषेधो ज्ञापयति—स्वरविधौ व्यञ्जनमविद्यमानवदिति । तेन 'अग्निमीळे' इत्यादौ स्वरितः सिध्यति ॥ ३८७५ **थाऽथ-** ॥—**प्रभृथस्येति** । 'हनिकुषिनिरमिकाशिभ्यः क्थन्' 'अवे भृञः' इति क्थन्, नित्स्वरेणाद्युदात्तत्वे प्राप्ते ॥—**आवसथ इति** । 'उपसर्गे वसेः' इत्यथप्रत्ययान्तः ॥—**पुरुष्टुत इति** । कर्मणि क्तः ॥—**पुरुष्विति** । तृतीयातत्पुरुषे तु 'तृतीया कर्मणि' इति सूत्रेण कर्मणि क्तान्ते उत्तरपदे तृतीयान्तस्य पूर्वपदस्य प्रकृतिस्वरः स्यादिति भावः ॥—**प्रक्षय इति** । 'एरच्' । न च क्षयशब्दस्याच्प्रत्ययान्तत्वात्कृदुत्तरपदप्रकृतिस्वरेणैवान्तोदात्तत्वं सिद्धमिति वाच्यम् । 'क्षयो निवासे' इति क्षयशब्दस्याद्युदात्तत्वात् ॥—**प्रलव इति** । 'ऋदोरप्' ॥—**प्रलवित्रमिति** । 'अर्तिलूधूसूखनसहचर इत्रः' ॥—**गोवृष इति** । 'गां वर्षते' इति विग्रहः । वृषु सेचने 'वृषादीनां च' इत्याद्युदात्तोऽयम् ॥—**सुस्तुतमिति** । 'सुः पूजायाम्' इति कर्मप्रवचनीयः । अव्ययपूर्वपदप्रकृतिस्वर एव ॥ ३८७६ **सूप-** ॥—**सुकृतस्येति** । 'गतिरनन्तरः' इति प्राप्तः ॥—**शशप्लुतमिति** । शश इव प्लुतमिति विग्रहः । 'तृतीया कर्मणि' इति प्राप्तम् ॥ ३८७७ **उपहूत इति** । 'ह्वेञो निष्ठायाम्' यजादित्वात्संप्रसारणम् ॥—**परिजग्ध इति** । अदो जग्धादेशः । उभयत्र 'गतिरनन्तरः' इति प्राप्तम् ॥—**अनेति किमिति** । अनाचितादीनामिति किमर्थमित्यर्थः ॥—**आचितमित्यादि** । चिञ् चयने । ष्ठा गतिनिवृत्तौ, णिजन्तः । आभ्यां कर्तरि क्तः ॥ ३८७८ **प्रवृद्धः प्रयुक्त इति** । वृधु वृद्धौ । यु मिश्रणे ॥—**असंज्ञार्थोऽयमारम्भ इति** । संज्ञायां तु 'संज्ञायामनाचितादीनाम्' इत्येव सिद्धम् ॥ ३८७९ **कारकाद्दत्त-** । तत्पुरुषे संज्ञायामाशिषि कारकात्परयोर्दत्तश्रुतयोरेव क्तान्तयोरन्त उदात्तः स्यात् । 'संज्ञायामनाचितादीनाम्' इत्यनेन विहितमन्तोदात्तत्वमनेन नियम्यते ॥—**देवदत्त इत्यादि** । देवा एनं देयासुरित्येवं प्रार्थितैर्देवैर्दत्तो **देवदत्तः** । 'आशिषि लिङ्लोटौ' इति वर्तमाने 'क्तिच्क्तौ च संज्ञायाम्' इति क्तः । 'दो दद्घोः' इति ददादेशः । विष्णुरेनं श्रूयादित्येवं प्रार्थिते विष्णुना श्रुतो **विष्णुश्रुतः** । क्तप्रत्ययः पूर्ववत् ॥—**संभूतो रामायण इति**[2] । कारकादित्यनुच्यमाने गतिकारकोपपदादिति त्रितयाधिकाराद्यथैव कारकान्नियमो भवति, तथा गतेरपि स्यात्[3] ॥—**एव किमिति** । सिद्धे विधिरारभ्यमाणोऽन्तरेणाप्येवकारं नियमार्थो भविष्यतीति प्रश्नः ॥—**कारकावधारणमित्यादि** । असति ह्येवकारे विपरीतनियमोऽपि स्यात्—कारकादेव दत्तश्रुतयोरिति । एवं चाकारकाद्दत्तश्रुतयोर्न स्यात्, इष्यते च । तथा कारकस्यानियतत्वाद्देवपालित इत्यादावन्तोदात्तः । अतः कारकावधारणं यथा स्याद्दत्तश्रुतावधारणं

१ 'संश्रुतो रामायणः' 'सम्भूतं रामायणम्' इत्येव पाठद्वयम् । २ 'सम्भूतं रामायणमिति । 'क्तिच्क्तौ च' इत्याशिषि क्तः । सम्भूतमिति रामायणस्य नाम । 'संज्ञाया मनाचितादीनाम्' इति क्तः । 'कारकादित्यनु-'-' इति अधिकः पाठः क्वचित् । ३ स्यादित्यस्याग्रे 'ततश्च संभूतं रामायणमित्यनाशिषि सावकाशं 'संज्ञायामना-' इत्येतदाशिषि न स्यात्, किंतु 'गतिरनन्तरः' एव स्यात् इत्यधिकः पाठः क्वचित् ।

भूत् । अकारकादपि वृत्तश्रुतयोरन्त उदात्तो भवति, संश्रुतः । आशिषि किम् । देवैः खाता—देवखाता । आशिष्येवेत्येवमत्रेष्टो नियमः । तेन—'अनाहतो नदति देवदत्तः' इत्यत्र न। शङ्खविशेषस्य संज्ञेयम् । 'तृतीया कर्मणि—' ३७७९ इति पूर्वपदप्रकृतिस्वरत्वमेव भवति ।

३८८० । इत्थम्भूतेन कृतमिति च ।६।२।१४९। इत्थम्भूतेन कृतमित्येतस्मिन्नर्थे यः समासस्तत्र क्तान्तमुत्तरपदमन्तोदात्तं स्यात् । सुप्तप्रलपितम् । प्रमत्तगीतम् । 'कृतम्' इति कृतिसामान्ये करोतिर्वर्तते, नाभूतप्रादुर्भाव एव । तेन प्रलपितायपि कृतं भवति । 'तृतीया कर्मणि—' ३७७९ इत्यस्यापवादः ।

**३८८१ । अनो भावकर्मवचनः** ।६।२।१५०। कारकात्परमनप्रत्ययान्तं भाववचनं कर्मवचनं चान्तोदात्तम् । पयःपानं सुखम् । राजभोजनाः शालयः । अनः किम् । हस्तादायः । भा—इति किम् । दन्तधावनम्, करणे ल्युट् । कारकात्किम् । निदर्शनम् ।

**३८८२ । मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः** ।६।२।१५१। कारकात्पराणि एतान्युत्तरपदान्यन्तोदात्तानि तत्पुरुषे । कृत्स्वरापवादः । रथवर्त्म । पाणिनिकृतिः । छन्दोव्याख्यानम् । राजशयनम् । राजासनम् । अश्वस्थानम् । ब्राह्मणयाजकः । गोक्रीतः । कारकात्किम् । प्रभूतौ सङ्गतिम् । अत्र 'तादौ च निति—' ३७८१ इति स्वरः ।

३८८३ । सप्तम्याः पुण्यम् ।६।२।१५२। अन्तोदात्तम् । अध्ययनपुण्यम् । 'तत्पुरुषे तुल्यार्थ—' ३७३३ इति प्राप्तम् । सप्तम्याः किम् । वेदेन पुण्यं-वेदपुण्यम् ।

**३८८४ । ऊनार्थकलहं तृतीयायाः** ।६।२।१५३। माषोनम् । माषविकलम् । वाक्कलहः । तृतीयापूर्वपदप्रकृतिस्वरापवादोऽयम् । अत्र केचित् 'अर्थ' इति स्वरूपग्रहणमिच्छन्ति, धान्यार्थः । ऊनशब्देन त्वर्थनिर्देशार्थेन तदर्थानां ग्रहणमिति प्रतिपदोक्तत्वादेव सिद्धे तृतीयाग्रहणं स्पष्टार्थम् ।

**३८८५ । मिश्रं चानुपसर्गमसन्धौ** ।६।२।१५४। पणबन्धेनैकार्थ्यं सन्धिः । तिलमिश्राः । सर्पिर्मिश्राः । मिश्रं किम् । गुडधानाः । अनुपसर्गं किम् । तिलसंमिश्राः । मिश्रग्रहणे सोपसर्गग्रहणस्येदमेव ज्ञापकम् । असन्धौ किम् । ब्राह्मणमिश्रो राजा । ब्राह्मणैः सह संहित ऐकार्थ्यमापन्नः ।

मा भूदित्येवमर्थमेवकारग्रहणमित्यर्थः ॥—**देवखातेति** । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरः ॥ **३८८० इत्थम्—इत्थंभूतेन कृतमित्येतस्मिन्नर्थे इति** । इत्थं प्रकारमापन्नः—इत्थंभूतः, तेन कृतमित्यर्थे ॥—**सुप्तप्रलपितमित्यादि** । कथमेतान्युदाहरणानि? यावता कृतमित्युच्यते । न च प्रलपितानीति कृतानि, अभूतप्रादुर्भाव एव हि करोतिर्वर्तते । ततश्च सुप्तकृतं सुप्तभावितम् उन्मत्तभावितमित्यादिकमेवोदाहर्तव्यम्, इत्यत आह—**कृतमितीति** ॥—**कृतिसामान्ये करोतिर्वर्तते इति** । ततश्च यथा '**क्रिया**वचनो धातुः' 'क्रियायां **क्रियार्थायाम्**' ३१७५ इत्यादौ विशेषाणामपि ग्रहणं भवति, तद्वदत्रापि ॥ ननु सुप्तप्रलपितमित्यादौ 'कारकात्' इति योगविभागेनैव सिद्धमित्याशङ्क्याह—**तृतीयेति** । तस्य तु योगविभागो न बाधकः, तस्य निर्विषयत्वं स्यात् । **अभूतप्रादुर्भावः**=निष्पादना, न तथाभूतप्रादुर्भाव इति ॥ **३८८१ अनो**—। 'गतिकारकोपपदात्कृत्' इत्यस्यापवादः ॥—**पयःपानमिति** । 'कर्मणि च येन—' इति कर्मण्युपपदे भावे ल्युट् । उपपदसमासः ॥—**राजभोजना इति** । 'कृत्यल्युटो बहुलम्' इति कर्मणि ल्युट्, कर्तरि षष्ठीसमासः ॥ **३८८२ मन्क्तिन्**—। कृत्स्वरापवादः । क्रीते तु 'तृतीया कर्मणि' इत्यस्य ॥—**रथवर्त्मेति** । वृतेरधिकरणे मनिन्, कर्तरि षष्ठ्या समासः ॥—**पाणिनिकृतिरिति** । कर्मणिक्तिन् । पूर्ववत्समासः ॥—**छन्दोव्याख्यानमिति** । व्याख्यानमिति करणे ल्युट् । शयनासनस्थानेष्वधिकरणे ल्युट् ॥—**ब्राह्मणयाजक इति** । 'याजकादिभिश्च' इति सूत्रे षष्ठीसमासार्थं ये याजकादयस्त एव गृह्यन्ते ॥—**प्रभूतौ संगतिमिति** । 'तादौ च निति कृत्यतौ' इति पूर्वपदप्रकृतिस्वर एवात्र भवति ॥ **३८८३ सप्तम्या**—। सप्तम्यन्तात्परं पुण्यमित्येतदुत्तरपदमन्तोदात्तं स्यात्तत्पुरुषे ॥—**अध्ययनपुण्यमिति** । अध्ययनेन पुण्यमिति विग्रहः । सप्तमीति योगविभागात्समासः ॥ **३८८४ ऊनार्थ**—। तृतीयान्तात्पराणि ऊनार्थानि कलहश्च एतान्युत्तरपदान्यन्तोदात्तानि स्युः । उदाहरणेषु 'पूर्वसदृश—' इत्यादिना तृतीयासमासः ॥—**केचित्त्वित्यादि** । नन्वेवमूनशब्दस्यापि स्वरूपस्य ग्रहणं प्रसज्येत । ततश्च तदर्थानामन्येषां ग्रहणं न स्यादत आह—**ऊनशब्देन त्विति** । अर्थनिर्देशार्थत्वं तु व्याख्यानादवसेयम् ॥ **३८८५ मिश्रं च**—। तृतीयान्तात्परमनुपसर्गं मिश्रमन्तोदात्तं स्यादसन्धौ । अयमपि 'तत्पुरुषे तुल्यार्थ—' इत्यस्यापवादः ॥—**पणबन्धेनैकार्थ्यमिति** । पणबन्धः=परिभाषणम् । यदि मे भवानिदं कुर्यादहमपि भवतः करिष्यामीत्येवंरूपम् ॥—**तिलमिश्रा इति** । 'पूर्वसदृशसमोनार्थ—' इति समासः ॥—**गुडधाना इति** । 'भक्ष्येण मिश्री—' इति समासः ॥—**तिलसंमिश्रा इति** । कथं पुनर्मिश्रशब्दस्य विधीयमानं संमिश्रशब्दस्य प्राप्नोति हि कथं च मिश्रशब्देनोच्यमानसमासः सोपसर्गेण लभ्यतेऽत आह—**मिश्रग्रहणे इत्यादि** । 'तेन मिश्रश्लक्ष्णैः' इति विधीयमानः समासः सोपसर्गेणापि सिद्धः ॥—**ब्राह्मणमिश्र इति** । यदि मे भवन्तः कार्यं कुर्युस्तदाऽहं भवतामुपकारं करिष्यामीत्येवंरूपेण पणबन्धेन कृत्वा ब्राह्मणैः सह मिलित इत्यर्थः । **अपरे तु** स्वरूपमेदग्रहणं सन्धिः । ब्राह्मणमिश्र इत्यत्र ब्राह्मणेनैकीभावेऽपि राजस्वरूपेण गृह्यते । गुडमिश्र इत्यत्र गुडेनैकीभूतस्य स्वरूपभेदो न गृह्यत इत्याहुः ॥—

१ 'क्रियासामान्ये करोतिर्नाभूत—' इति पाठान्तरम् । २ 'अभूतप्रादुर्भाव इति । अभूतप्रादुर्भावो निष्पादनम्' इति क्वचित्पाठः । ३ 'कर्तरि षष्ठ्या समासः' इति पाठः ।

३८८६ । **नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः** ।६।२।१५५। संपाद्याद्यर्थतद्धितान्ता नञो गुणप्रतिषेधे वर्तमानात्परेऽन्तोदात्ताः । कर्णवेष्टकाभ्यां संपादि कार्णवेष्टकिकम्, न कार्णवेष्टकिकमकार्णवेष्टकिकम् । छेदमर्हति छैदिकः, न छैदिकोऽच्छैदिकः । न वत्सेभ्यो हितोऽवत्सीयः । न सन्तापाय प्रभवति असान्तापिकः । नञ इति किम् । गर्दभरथमर्हति गार्दभरथिकः, विगार्दभरथिकः । गुणप्रतिषेधे किम् । गार्दभरथिकादन्योऽगार्दभरथिकः । गुणो हि तद्धितार्थे प्रवृत्तिनिमित्तं संपादित्वाद्युच्यते, तत्प्रतिषेधो यत्रोच्यते तत्रायं विधिः—कर्णवेष्टकाभ्यां न सम्पादि मुखमिति । सम्पा-इति किम् । पाणिनीयमधीते पाणिनीयः, न पाणिनीयः-अपाणिनीयः । तद्धिता इति किम् । वोढुमर्हति वोढा, न वोढा-अवोढा ।

३८८७ । **ययतोश्चातदर्थे** ।६।२।१५६। ययतौ यौ तद्धितौ तदन्तस्योत्तरपदस्य नञो गुणप्रतिषेधविषयात्परस्यान्त उदात्तः स्यात् । पाशानां समूहः पाश्या, न पाश्या अपाश्या । अदन्त्यम् । अतदर्थे किम् । अपाद्यम् । तद्धितः किम् । अदेयम् । गुणप्रतिषेधे किम् । दन्त्यादन्यत्-अदन्त्यम् । 'तदनुबन्धग्रहणे नातदनुबन्धकस्य' इति नेह—अवामदेव्यम् ।

३८८८ । **अच्कावशक्तौ** ।६।२।१५७। अजन्तं कान्तं च नञः परमन्तोदात्तमशक्तौ गम्यायाम् । अपचः, पक्तुं न शक्तः । अविलिखः । अशक्तौ किम् । अपचो दीक्षितः । गुणप्रतिषेधे इत्येव, अन्योऽयं पचात्-अपचः ।

३८८९ । **आक्रोशे च** ।६।२।१५८। नञः परावच्कावन्तोदात्तावाक्रोशे । अपचो जाल्मः, पक्तुं न शक्नोतीत्येवमाक्रोश्यते । अविक्षिपः ।

३८९० । **संज्ञायाम्** ।६।२।१५९। नञः परमन्तोदात्तं संज्ञायामाक्रोशे । अदेवदत्तः ।

३८९१ । **कृत्योकेष्णुच्चार्वादयश्च** ।६।२।१६०। नञः परेऽन्तोदात्ताः स्युः । अकर्तव्यः । उक—अनागामुकः । इष्णुच्-अनलङ्करिष्णुः । इष्णुज्ग्रहणे खिष्णुचो ह्यनुबन्धकस्यापि ग्रहणम्, इकारादेर्विधानसामर्थ्यात् । अनाढ्यंभविष्णुः । चार्वादिः—अचारुः, असाधुः । (ग) **राजाह्नोश्छन्दसि** । अराजा । अनहः । भाषायां नञः स्वर एव ।

३८९२ । **विभाषा तृन्नन्नतीक्ष्णशुचिषु** ।६।२।१६१। तृन्—अकर्ता । अन्न—अनन्नम् । अतीक्ष्णम् । अशुचि । पक्षे-अव्ययस्वरः ।

३८९३ । **बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने** ।६।२।१६२। एभ्योऽनयोरन्त उदात्तः । इदं प्रथमं यस्य स इदंप्रथमः । एतद्द्वितीयः । तत्पञ्चमः । बहुव्रीहौ किम् । अनेन प्रथम इदंप्रथमः । 'तृतीया-' ६९३ इति योगविभागात्समासः । इदमेतत्तद्भ्यः किम् । यत्प्रथमः ।

---

३८८६ **नञो गुण-** ॥—**कार्णवेष्टकिकमिति** । 'संपादिनि' इति प्राग्वतेष्ठञ् ॥—**छैदिक इति** । 'छेदादिभ्यो नित्यम्' इति ठक् ॥—**वत्सीय इति**-'तस्मै हितम्' इति छः ॥—**सान्तापिक इति**-'तस्मै प्रभवति सन्तापादिभ्यः' इति ठञ् ॥ —**नञ इति किमिति** । प्रतिषेधे प्रायेण नञ एव वृत्तिदर्शनात्प्रश्नः ॥—**विगार्दभरथिक इति** । अव्ययपूर्वपदप्रकृतिस्वर एवात्र भवति ॥—**गार्दभरथिकादन्य इति** । उदाहरणादस्य विशेषं दर्शयितुं 'गुणप्रतिषेधे' इति सूत्रावयव व्याचष्टे—**गुण इति** ॥—**तद्धितार्थे प्रवृत्तिनिमित्तमिति** । तद्धितार्थः संपाद्यादि, तस्य यत् प्रवृत्तिनिमित्तम् ॥—**संपादित्वादीति** । आदिशब्देन तदर्हत्वादेर्ग्रहणं, स गुण इत्युच्यते । उक्तं हि—**'संसर्गभेदकं यद्यत्सव्यापारं प्रतीयते । गुणत्वं परतन्त्रत्वात्तस्य शास्त्रे उदाहृतम्'** इति ॥—**वोढेति** । 'अर्हे कृत्यतृचश्च' इति तृच् । धत्वढत्वष्टुत्वढलोपेषु 'सहिवहोरोदवर्णस्य' इत्योत्वम् ॥ ३८८७ **पाश्येति** । समूहे 'पाशादिभ्यो यः' ॥—**अदन्त्यमिति** । 'शरीरावयवाच्च' इति यत् ॥—**अपाद्यमिति** । 'पादार्घाभ्यां च' इति यत् ॥—**अदेयमिति** । 'डुदाञ् दाने' अर्हार्थे 'अचो यत्' । 'ईद्यति' इतीत्वे गुणः ॥—**अवामदेव्यमिति** । वामदेवेन दृष्टमित्यर्थे 'वामदेवात् ड्यड्ड्यौ' इति ड्यः ॥ ३८८८ **अपच इति** । पचाद्यच् ॥ —**अविलिख इति** । 'इगुपध-' इति कः । 'कृत्योकेष्णुच्चार्वादयश्च' इति वक्ष्यमाणैः कृत्योकेष्णुभिः साहचर्यादच्कयोः कृतोरिह ग्रहणं, तेन कृद्ग्रहणपरिभाषया विलिखशब्दस्य कान्तत्वम् ॥—**अपचो दीक्षित इति** । दीक्षितः शास्त्रविरोधान्न पचति, न त्वशक्तत्वेन ॥ ३८८९ **अपचो जाल्म इति** । पक्तुं शक्तोऽपि पक्तुमयं न शक्नोतीत्यनेन प्रकारेण क्षिप्यते । तदाह—**पक्तुमित्यादि** ॥ ३८९० **अदेवदत्त इति** । देवदत्तः सन् यः 'तत्कर्म' न करोति स एवमाक्षिप्यते ॥ ३८९१ **अनागामुक इति** । 'लषपतपद-' इत्युकञ् ॥—**अनलङ्करिष्णुरिति** । 'अलंकृञ्-' इतीष्णुच् ॥—**इकारादेर्विधानसामर्थ्यादिति** । भवतेरुदात्तत्वात्ततः परस्य खिष्णुच इटैवेकारादित्वे सिद्धे इकारादेर्विधानमिह सामान्यग्रहणार्थमेवेति भावः ॥ —**अनाढ्यंभविष्णुरिति** । 'भुवः खिष्णुच्खुकञौ' इति खिष्णुच् ॥—**अचारुरिति** । 'हसति-' इति चरेरुण् ॥—**असाधुरिति** । साध्नोतेः 'कृवापाजि-' इत्युण् ॥—**राजाह्नोः** । चार्वाद्यन्तर्गणसूत्रम् । नञः परयोरेतयोश्छन्दस्यन्तोदात्तत्वम् ॥ —**अराजेति** । 'नञस्तत्पुरुषात्' इति समासान्तनिषेधः ॥ ३८९२ **विभाषा तृन्-** । नञ उत्तरपदान्येतान्यन्तोदात्तानि स्युस्तत्पुरुषे ॥ ३८९३ **बहुव्रीहाविद-** ॥—**एभ्य इत्यादि**—इदमेतत्तद्भ्यः, अनयोः=प्रथमपूरणयोः ॥—**इदं प्रथमं यस्येति** । गमनं भोजनं वा ॥—**अनेन प्रथम इदंप्रथम इति** । तृतीयापूर्वपदप्रकृतिस्वर एव भवति ॥—**यत्प्रथम इति** । यत्प्रथमं

प्रथमपूरणयोः किम् । तानि बहून्यस्य तद्बहुः । क्रियागणने किम् । अयं प्रथमः=प्रधानं येषां ते इदंप्रथमाः, द्रव्यगणनमिदम् । गणने किम् । अयं प्रथमो येषां ते इदंप्रथमाः । इदंप्रधाना इत्यर्थः । उत्तरपदस्य कार्यित्वात्कपि पूर्वमन्तोदात्तम् । इदंप्रथमकाः । 'बहुव्रीहौ' इत्यधिकारो 'वनं समासे–' ३९०९ इत्यतः प्राग्बोध्यः ।

३८९४ । **संख्यायाः स्तनः** ।६।२।१६३। बहुव्रीहावन्तोदात्तः । द्विस्तना । चतुःस्तना । संख्यायाः किम् । दर्शनीयस्तना । स्तनः किम् । द्विशिराः ।

३८९५ । **विभाषा छन्दसि** ।६।२।१६४। द्विस्तनीं करोति वामदेवः । चतुस्तनां करोति द्यावापृथिव्योर्दोहिनाय ।

३८९६ । **संज्ञायां मित्राजिनयोः** ।६।२।१६५। देवमित्रः । कृष्णाजिनम् । संज्ञायां किम् । प्रियमित्रः । ॐ **ऋषिप्रतिषेधो मित्रे** । विश्वामित्र ऋषिः ।

३८९७ । **व्यवायिनोऽन्तरम्** ।६।२।१६६। व्यवधानवाचकात्परमन्तोदात्तम् । वस्त्रमन्तरं व्यवधायकं यस्य स वस्त्रान्तरः । व्यवायिनः किम् । आत्मान्तरः । अन्यस्वभाव इत्यर्थः ।

३८९८ । **मुखं स्वाङ्गम्** ।६।२।१६७। गौरमुखः । स्वाङ्गं किम् । दीर्घमुखा शाला ।

३८९९ । **नाव्ययदिक्छब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः** ।६।२।१६८। उच्चैर्मुखः । प्राङ्मुखः । गोमुखः । महामुखः । स्थूलमुखः । मुष्टिमुखः । पृथुमुखः । वत्समुखः । पूर्वपदप्रकृतिस्वरोऽत्र । गोमुष्टिवत्सपूर्वपदस्योपमानलक्षणोऽपि विकल्पोऽनेन बाध्यते ।

३९०० । **निष्ठोपमानादन्यतरस्याम्** ।६।२।१६९। निष्ठान्तादुपमानवाचिनश्च परं मुखं स्वाङ्गं वाऽन्तोदात्तं बहुव्रीहौ । प्रक्षालितमुखः । पक्षे 'निष्ठोपसर्ग–' ३८४१ इति पूर्वपदान्तोदात्तत्वम् । पूर्वपदप्रकृतिस्वरत्वेन गतिस्वरोऽपि भवति । उपमानम्—सिंहमुखः ।

३९०१ । **जातिकालसुखादिभ्योऽनाच्छादनात्क्तोऽकृतमितप्रतिपन्नाः** ।६।२।१७०। सारङ्गजग्धः । मासजातः । सुखजातः । दुःखजातः । जातिकालेति किम् । पुत्रजातः । अनाच्छादनात्किम् । वस्त्रच्छन्नः ।

गमनं यस्य स यत्प्रथमः ॥—**इदंप्रधाना इत्यर्थ इति** । अनेन प्रधानवचनः प्रथमशब्दो न लोकसंख्यावचन इति दर्शितम् । तेनात्र गणनाभाव उक्तः ॥—**उत्तरपदस्येत्यादि** । इह समासस्येति प्रकृतम् । उत्तरपदादिरित्यतः प्रभृति उत्तरपदस्येति वर्तते । इहोत्तरपदं कार्यित्वेनाश्रीयते, तेन यदा कबुत्पद्यते तदा कपि परतो यत्पूर्वं प्रथमेति तत् अन्तोदात्तं भवति, न तु कबन्तम् । कप्प्रत्ययो हि समासस्यैवान्तो नोत्तरपदस्य । **'उत्तरपदावयवाः समासान्ताः'** इति पक्षेऽपि प्रथमपूरणयोरिति विशिष्टरूपग्रहणात् कपस्तत्रानन्तर्भावादुपात्तयोरेव स्वरः ॥ **३८९४ संख्यायाः–**। संख्यायाः परः स्तनशब्दोऽन्तोदात्तः स्यात् ॥—**दर्शनीयस्तनेति** । पूर्वपदप्रकृतिस्वरः । दर्शनीयशब्दोऽनीयर्प्रत्ययान्तः, रित्स्वरः ॥ **३८९५ विभाषा–**। पूर्वसूत्रोक्तं छन्दसि वा स्यात् ॥—**द्विस्तनीमिति** । अन्तोदात्तत्वम् । 'स्वाङ्गाच्चोपसर्जनात्–' इति ङीष् ॥—**चतुःस्तनामिति** । पूर्वपदप्रकृतिस्वरेण 'चतेरुरन्' इति चतुर्शब्दस्य नित्त्वादाद्युदात्तत्वम् । अत्रान्तोदात्तत्वाभावात् 'स्वाङ्गात्–' इति ङीष् न ॥ **३८९६ संज्ञायां मित्रा–**। एतयोरुत्तरपदयोरन्त उदात्तः स्यात् बहुव्रीहौ संज्ञायाम् ॥—**विश्वामित्र इति** । 'मित्रे चर्षौ' इति दीर्घः । अत्र 'बहुव्रीहौ विश्वं संज्ञायाम्' इति बाधित्वा परत्वादनेनान्तोदात्तत्वं प्राप्तं प्रतिषिध्यते । अतो 'बहुव्रीहौ विश्वं संज्ञायाम्' इत्यन्तोदात्तत्वं भवति ॥ **३८९७ व्यवायि–**। उदाहरणे व्यवधानवाचिनोऽन्तरशब्दात् 'तत्करोति–' इति णिचि पचाद्यच् । प्रत्युदाहरणे त्वन्यवाच्यन्तरशब्दः ॥ **३८९८ मुखं–**। स्वाङ्गं मुखमुत्तरपदमन्तोदात्तं बहुव्रीहौ ॥—**दीर्घमुखा शालेति** । मुखशब्देनात्र द्वारप्रदेशः शालाया उच्यते । स्वाङ्गं अद्रवादिलक्षणमिह गृह्यते, न तु स्वमङ्गं स्वाङ्गमिति व्युत्पत्तिलभ्यम् । अन्यथाऽत्रापि स्यादिति भावः ॥ **३८९९ नाव्यय–**। एभ्यः परो मुखशब्दोऽन्तोदात्तो न स्यात् ॥—**पूर्वपदप्रकृतिस्वरोऽत्रेति** । एषूदाहरणेषु 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति पूर्वपदप्रकृतिस्वरेणान्तोदात्तं पूर्वपदम् । **तथाहि**—'उदि चेडैसिः', **उच्चैः** । 'अनिगन्तोऽञ्चतौ प्रत्यये' इति प्रशब्द उदात्तः । तत एकादेशस्वरेण **प्राङ्**शब्द उदात्तः । 'गमेर्डोसिः', **गौः** । 'वर्तमाने पृषत्–' इत्यादिना **महच्छब्द** उदात्तो निपातितः । **स्थूल**शब्दः 'ऋज्रेन्द्र–' इत्यादावन्तोदात्तो निपातितः । मुषेः क्तिच्, **मुष्टिः** । 'प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च' इति कुः, **पृथुः** । 'कृतृवदि–' इत्यादिना सः, **वत्सः** ॥—**उपमानलक्षणो विकल्प इति** । 'निष्ठोपमानात्–' इति प्राप्तः ॥—**बाध्यत इति** । अस्य प्रतिषेधस्यावकाशो यत्र गवाद्युपमानं न भवति—गौर्मुखमिव यस्य सः, वत्सो मुखमिव यस्येति । सर्वत्रात्र गवाद्युपमेयं नोपमानम् । उत्तरस्य विकल्पस्यावकाशः—यत्र गवादिपूर्वपदं न भवति–सिंहमुखः । गवादावुपमाने उभयप्रसङ्गेऽयमेव भवति पूर्वविप्रतिषेधेन ॥ **३९०० सिंहमुख इति** । पक्षे पूर्वपदप्रकृतिस्वरः । हिंसेः पचाद्यचि सिंहः । पृषोदरादित्वादाद्यन्तविपर्ययः ॥ **३९०१ जातिकाल–**। जात्यादिभ्यः परं क्तान्तमन्तोदात्तं स्याद् बहुव्रीहौ कृतादीन्वर्जयित्वा आच्छादनवाचकात्परं चेन्न ॥—**सारङ्गजग्ध इति** । सारङ्गः पक्षिविशेषः, स जग्धो भक्षितो येनेति विग्रहः । प्रत्युदाहरणे सर्वत्र पूर्वपदप्रकृतिस्वरः । तत्र पुत्रशब्दोऽन्तोदात्तः । वसेः ष्ट्रन् । वस्त्रशब्द आद्युदात्तः । कुण्डशब्दो 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तः ॥ ननूदाहरणेषु प्रत्युदाहरणेषु च 'निष्ठा' इति निष्ठान्तस्य

१ द्विस्तना । चतुःस्तनेति । स्वाङ्गाच्चोपसर्जनादित्यस्य वैकल्पिकत्वान्ङीषभावे टाप् । २ अत्र 'द्विस्तनां करोति' इत्येवमेव पाठो बहुषु पुस्तकेषु । स च सुबोधिनीविरुद्धः ।

अकृतेति किम् । कुण्डकृतः । कुण्डमितः । कुण्डप्रतिपन्नः । अस्माज्ज्ञापकान्निष्ठान्तस्य परनिपातः ।

३९०२ । वा जाते ।६।२।१७१। जातिकालसुखादिभ्यः परो जातशब्दो वाऽन्तोदात्तः । दन्तजातः । मासजातः ।

३९०३ । नञ्सुभ्याम् ।६।२।१७२। बहुव्रीहावुत्तरपदमन्तोदात्तम् । अव्रीहिः । सुमाषः ।

३९०४ । कपि पूर्वम् ।६।२।१७३। नञ्सुभ्यां परं यदुत्तरपदं तदन्तस्य समासस्य पूर्वमुदात्तं कपि परे[1] । अब्रह्मबन्धूकः । सुकुमारीकः ।

३९०५ । ह्रस्वान्तेऽन्त्यात्पूर्वम् ।६।२।१७४। ह्रस्वान्ते उत्तरपदे समासे वा अन्त्यात्पूर्वमुदात्तं कपि नञ्सुभ्यां परं बहुव्रीहौ[2] । अव्रीहिकः । सुमाषकः । पूर्वमित्यनुवर्तमाने पुनः पूर्वग्रहणं वृत्तिभेदेन[3] नियमार्थम्—ह्रस्वान्तेऽन्त्यादेव पूर्वपदमुदात्तं, न कपि पूर्वमिति । अज्ञकः, कबन्तस्यैवान्तोदात्तत्वम् ।

३९०६ । बहोर्नञ्वदुत्तरपदभूम्नि ।६।२।१७५। उत्तरपदार्थबहुत्ववाचिनो बहोः परस्य पदस्य नञः परस्येव स्वरः स्यात् । बहुव्रीहिकः । बहुमित्रकः । उत्तरपद—इति किम् । बहुषु मानोऽस्य स बहुमानः ।

३९०७ । न गुणादयोऽवयवाः ।६।२।१७६। अवयववाचिनो बहोः परे गुणादयो नान्तोदात्ता बहुव्रीहौ । बहुगुणा रज्जुः । बह्वक्षरं पदम् । बह्वध्यायः[4] । गुणादिराकृतिगणः । अवयवाः किम् । बहुगुणो द्विजः । अध्ययनश्रुतसदाचारादयो गुणाः ।

३९०८ । उपसर्गात्स्वाङ्गं ध्रुवमपर्शु ।६।२।१७७। प्रपृष्ठः । प्रललाटः । ध्रुवं=एकरूपम् । उपसर्गात्किम् । दर्शनीयपृष्ठः । स्वाङ्गं किम् । प्रशाखो वृक्षः । ध्रुवम् किम् । उद्बाहुः । अपर्शु किम् । विपर्शुः ।

३९०९ । वनं समासे ।६।२।१७८। समासमात्रे उपसर्गादुत्तरपदं वनमन्तोदात्तम् । तस्येदिमे प्रवणे ।

३९१० । अन्तः ।६।२।१७९। अस्मात्परं वनमन्तोदात्तम् । अन्तर्वणो देशः । अनुपसर्गार्थमिदम् ।

३९११ । अन्तश्च ।६।२।१८०। उपसर्गादन्तःशब्दोऽन्तोदात्तः । पर्यन्तः । समन्तः ।

३९१२ । न निविभ्याम् ।६।२।१८१। न्यन्तः । व्यन्तः । पूर्वपदप्रकृतिस्वरे यणि च कृते 'उदात्तस्वरितयोर्यणः—' ३६५४ इति स्वरितः ।

३९१३ । परेरभितोभावि मण्डलम् ।६।२।१८२।

---

पूर्वनिपातः प्राप्नोति, तत्राह—**अस्माज्ज्ञापकादिति** । इदमेव मनसि विभाव्योक्तं 'जातिकालसुखादिभ्यः परा निष्ठा वाच्या' इति ॥ **३९०२ दन्तजात इति** । पक्षे पूर्वपदप्रकृतिस्वरः । दन्तशब्दः 'स्वाङ्गशिटामदन्तानाम्' इत्याद्युदात्तः । मासशब्दो 'ग्रामादीनां च' इत्याद्युदात्तः ॥ **३९०३ नञ्सु-**। नञ्सुभ्यां परमुत्तरपदमन्तोदात्तं स्यात् । समासान्ता उत्तरपदावयवाः । तेन 'अनृचः' इत्यत्र 'ऋक्पूर्—' इत्यप्यकारस्योदात्तत्वं भवति । **समासावयवाः समासान्ता इति पक्षे** तु अस्मिन् सूत्रे समासस्यैव कार्यित्वमाश्रीयते नोत्तरपदस्य, 'कपि पूर्वम्' इति ज्ञापकात् । यद्यनेनोत्तरपदस्यान्तोदात्तः स्यात् ततोऽकुमारीक इत्यादावनेनैव सिद्धत्वात् 'कपि पूर्वम्' इत्यवाच्यं स्यात् ॥ **३९०४ कपि पूर्वम्** । पूर्वेण कप एवोदात्तत्वे प्राप्ते ततः पूर्वस्योदात्तत्वं विधीयते । 'ह्रस्वान्तेऽन्त्यात्पूर्वम्' इति वचनादिह दीर्घान्ता एवोदाहृताः । उदाहरणे 'नद्यृतश्च' इति कप् ॥ **३९०५ ह्रस्वान्ते** । ह्रस्वः अन्तो यस्य तदिदं ह्रस्वान्तमिति बहुव्रीहेरन्यपदार्थमुत्तरपदं समासो वा गृह्यत इत्याशयेनाह—**उत्तरपदे समासे वेति** । अत्र कपि पर इति सामान्यवचनात्तद्रहितमुत्तरपदं समासो वा गृह्यते ॥ ननु पूर्वग्रहणमनर्थकं, कपि पूर्वमित्यनुवृत्तेः—अत आह—**पूर्वमित्यनुवर्तमान इति** । वृत्तिभेदेन=वाक्यभेदेन । तत्रैकेन वाक्येन ह्रस्वान्तेऽन्त्यात्पूर्वस्योदात्तत्वं विधीयते । द्वितीयेन तु नियम्यते—ह्रस्वान्तेऽन्त्यादेव पूर्वमुदात्तं भवति, न कपि पूर्वमिति । तेन किं सिद्धमत आह—**कबन्तस्यैवान्तोदात्तत्वमिति** । नास्ति ज्ञा यस्य अज्ञकः । अत्र यद्येष नियमो न स्यात्तर्हि एतस्याभावे 'कपि पूर्वम्' इत्ययमेव स्वरः स्यात् । अस्मिंस्तु नियमे सति न भवति । 'नञ्सुभ्याम्' इति कबन्तस्यैव भवति ॥ **३९०६ बहोर्नञ्** । नञ इव नञ्वत् । अस्मादेव निपातनात्पञ्चमीसमर्थाद्वतिः । बहूनां भावो भूमा, 'बहोर्लोपो भू च बहोः' । उत्तरपदशब्देन तदर्थो गृह्यते, स्वरूपेणोत्तरपदस्य बहुत्वासंभवात् । तदाह—**उत्तरपदार्थबहुत्वेति** ॥—**बहुव्रीहिक इत्यादि** । 'ह्रस्वान्तेऽन्त्यात्पूर्वम्' इति स्वरः ॥—**बहुमान इति** । पूर्वपदप्रकृतिस्वरः । बहुशब्दस्तु 'लंघिबंह्योर्नलोपश्च' इति कुप्रत्ययान्तोऽन्तोदात्तः ॥ **३९०७ न गुणा-**। **अवयववाचिनो बहोः परे इति** । अवयववाचिन इति गुणादीनां विशेषणम् ॥ **३९०८ उपस-**। स्वाङ्गं प्रति क्रियायोगाभावादुपसर्गग्रहणं प्राद्युपलक्षणम् । प्रादेरुत्तरं ध्रुवं स्वाङ्गवाचि पर्शुवर्जितमन्तोदात्तं स्यात् बहुव्रीहौ । प्रत्युदाहरणे पूर्वपदप्रकृतिस्वरः । दर्शनीयशब्दोऽनीयर्प्रत्ययान्तः, रित्स्वरः ॥—**उद्बाहुरिति** । क्रोशतीति शेषः । अत्र क्रोशनसमय एवोद्बाहुत्वं न सर्वदैवेत्यध्रुवम् ॥ **३९०९ वनं समासे** । बहुव्रीहावित्यस्य निवृत्त्यर्थं समासग्रहणम् ॥—**प्रवण इति** । बहुव्रीहौ तत्पुरुषे च पूर्वपदप्रकृतिस्वरे प्राप्ते । 'प्रनिरन्तः—' इति णत्वम् ॥ **३९१० अन्तः** । अन्तःशब्दात्पञ्चम्याश्छान्दसो लुक्, तदाह—**अस्मात्परमिति** । अन्तःशब्दात्परमित्यर्थः ॥—**अन्तर्वण इति** । अत्रापि तेनैव णत्वम् ॥—**अनुपसर्गार्थमिति** । उपसर्गे तु पूर्वेणैव सिद्धम् ॥ **३९१२ न निविभ्याम्** । निविभ्यामुत्तरोऽन्तःशब्दो नान्तोदात्तः स्यात् ॥—**पूर्वपदप्रकृतिस्वर इति** । बहुव्रीहिसमासे 'बहुव्रीहौ प्रकृत्या' इति तत्पुरुषे 'तत्पुरुषे तुल्यार्थ—' इत्यनेन ॥ **३९१३ परेरभितः-**। परेरुत्तर-

---

१ 'नञ्सुभ्यामुत्तरपदस्य पूर्वमुदात्तं कपि परे' एवं वृत्तिपाठ भेदोऽपि दृश्यते । २ ह्रस्वान्तोत्तरपदक समासे नञ्सुभ्यां परस्य कपि पूर्वस्योत्तरपदस्यान्त्यात्पूर्वमुदात्तमिति सूत्रार्थः । ३ 'प्रवृत्तिभेदेन' इति पाठः । ४ 'बह्वध्यायो ग्रन्थः' इति पाठान्तरम् ।

परेः परमभितो भावो यस्यास्ति तत्कूलादि, मण्डलं चान्तोदात्तम् । परिकूलम् । परिमण्डलम् ।

३९१४ । प्रादस्वाङ्गं संज्ञायाम् ।६।२।१८३। प्रगृहम् । अस्वाङ्गं किम् । प्रपदम् ।

३९१५ । निरुदकादीनि च ।६।२।१८४। अन्तोदात्तानि । निरुदकम् । निरुपलम् ।

३९१६ । अभेर्मुखम् ।६।२।१८५। अभिमुखम् । 'उपसर्गात्स्वाङ्गम्–' ३९०८ इति सिद्धे बहुव्रीह्यर्थमध्रुवार्थमस्वाङ्गार्थं चेदम् । अभिमुखा शाला ।

३९१७ । अपाच्च ।६।२।१८६। अपमुखम् । योगविभाग उत्तरार्थः ।

३९१८ । स्फिगपूतवीणाऽञ्जोऽध्वकुक्षिसीरनामनाम च ।६।२।१८७। अपादिमान्यन्तोदात्तानि । अपस्फिगम् । अपपूतम् । अपवीणम् । अञ्जस्—अपाञ्जः । अध्वन्—अपाध्वा । 'उपसर्गादध्वनः–' ९५५ इत्यस्याभावे इदम् । एतदेव च ज्ञापकं समासान्तानित्यत्वे । अपकुक्षि । सीरनाम—अपसीरम्, अपहलम् । नाम—अपनाम । स्फिगपूतकुक्षिग्रहणमबहुव्रीह्यर्थमध्रुवार्थमस्वाङ्गार्थं च ।

३९१९ । अधेरुपरिस्थम् ।६।२।१८८। अध्यारूढो दन्तोऽधिदन्तः, दन्तस्योपरि जातो दन्तः । उपरिस्थं किम् । अधिकरणम् ।

३९२० । अनोरप्रधानकनीयसी ।६।२।१८९। अनोः परमप्रधानवाचि कनीयश्चान्तोदात्तम् । अनुगतो ज्येष्ठोऽनुज्येष्ठः, पूर्वपदार्थप्रधानः प्रादिसमासोऽयम् । अनुगतः कनीयाननुकनीयान्, उत्तरपदार्थप्रधानः । प्रधानार्थं च कनीयोग्रहणम् । अप्र–इति किम् । अनुगतो ज्येष्ठोऽनुज्येष्ठः ।

३९२१ । पुरुषश्चाऽन्वादिष्टः ।६।२।१९०। अनोः परोऽन्वादिष्टवाची पुरुषोऽन्तोदात्तः । अन्वादिष्टः पुरुषोऽनुपुरुषः । अन्वादिष्टः किम् । अनुगतः पुरुषोऽनुपुरुषः ।

३९२२ । अतेरकृत्पदे ।६।२।१९१। अतेः परमकृदन्तं पदशब्दश्चान्तोदात्तः । अत्यङ्कुशो नागः । अतिपदा गायत्री । अकृत्पदे किम् । अतिकारकः । ॐ अतेर्धातुलोप इति वाच्यम् । इह मा भूत्—शोभनो गार्ग्योऽतिगार्ग्यः । इह च स्यात्—अतिक्रान्तः कारकमतिकारकः ।

---

मभितो भाववाचि, मण्डलं चान्तोदात्तं स्यात् । अभितोभावीत्यस्यार्थमाह—**अभितो भावो यस्यास्तीति** । अथवा अभितः=उभयतो भवति नद्यादौ कूलादिकमित्यभितोभावि । 'सुप्यजातौ–' इति णिनिः ॥—**परिकूलमिति**—बहुव्रीहिः प्रादिसमासोऽव्ययीभावो वा । तत्र बहुव्रीहौ तत्पुरुषे च पूर्वपदप्रकृतिस्वरे प्राप्ते, अव्ययीभावे तु 'परिप्रत्युपापा–' इति, 'कूलतीर–' इति च प्राप्ते । परितः कूलमस्य, परिगतं कूलमिति वा, 'कूलात्कूलं वर्जयित्वेत्यर्थः' इति उदकस्याभाव इव विग्रहः ॥ **३९१४ प्राद–**। प्रादुत्तरमस्वाङ्गवाचि संज्ञायामन्तोदात्तं स्यात् ॥—**प्रगृहमिति** । प्रादिसमासः, बहुव्रीहिर्वा ॥ —**प्रपदमिति** । पूर्वपदप्रकृतिस्वरः ॥ **३९१५ निरुदकमित्यादि** । निर्गतमुदकं यस्मादिति बहुव्रीहिः । निर्गतमुदकमिति प्रादिसमासो वा । उदकस्याभाव इत्यव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम् ॥ **३९१६ अभे–**। अभेरुत्तरपदं मुखमन्तोदात्तं स्यात् ॥—**उपसर्गात्स्वाङ्गमितीति** । 'मुखं स्वाङ्गम्' इति तु न भवति, 'नाव्ययदिक्शब्द–' इति निषेधात् ॥ **३९१७ अपाच्च** । अपादुत्तरं मुखमन्तोदात्तं स्यात्समासे ॥—**अपमुखमिति** । प्रादिसमासे बहुव्रीहौ च पूर्वपदप्रकृतिस्वरे प्राप्ते मुखं वर्जयित्वेत्यव्ययीभावेऽपि 'परिप्रत्युपापावर्ज्यमानाहोरात्रावयवेषु' इति प्राप्तेऽयमारम्भः ॥—**उत्तरार्थ इति** । उत्तरत्र अपादित्यस्यैवानुवृत्तिर्यथा स्यात्, अभेर्मा भूत् ॥ **३९१८ स्फिगपूत–**। नामग्रहणं सीरेणैव संबध्यते न स्फिगादिभिः, स्फिगपूतकुक्षीणां पृथग्ग्रहणादिति हरदत्तः । तेन स्फिगपूतकुक्षयः पर्याया इति निश्चीयते ॥—**उपसर्गादध्वन इत्यस्याभाव इति** । 'उपसर्गादध्वनः' इदं समासान्ताच्प्रत्ययविधायकं, तदभावे । तस्मिन् सति अच्प्रत्ययस्य चित्त्वादेव सिद्धम् ॥ ननु 'उपसर्गादध्वनः' इत्यनेन नित्योऽज् विधीयते, तत्कथमुक्तम् 'इत्यस्याभावे' इति ? इत्यत आह—**एतदेव च ज्ञापकमिति** । यदि हि नित्यः समासान्तः स्यात् अध्वग्रहणमिहानर्थकं स्यात्, अच्प्रत्ययस्य चित्त्वादन्तोदात्तस्य सिद्धत्वात् । कृतं तु अध्वग्रहणं ज्ञापयति—**'समासान्ता अनित्याः'** इति ॥—**स्फिगपूतकुक्षिग्रहणमिति** । यदा ह्येतानि स्वाङ्गवाचीनि ध्रुवाणि च भवन्ति बहुव्रीहिश्च समासस्तदा 'उपसर्गात्स्वाङ्गम्' इत्येव सिद्धम् ॥ **३९१९ अधेः–**। अधेरुत्तरमुपरिस्थवाचि अन्तोदात्तं स्यात् । उपरि तिष्ठतीत्युपरिस्थम् । 'सुपि स्थः' इति कः । तदेतद्दर्शयति—**दन्तस्योपरीति** ।—**अधिकरणमिति** । अधिक्रियतेऽस्मिन्नित्यधिकरणं, नैतदुपरिस्थवाचि किं त्वधःस्थवाचि । अत्र कृदुत्तरपदप्रकृतिस्वरेण काकार उदात्तः ॥ **३९२० अनुज्येष्ठ इति** । उत्तरपदार्थस्याप्राधान्यं दर्शयति—**पूर्वपदार्थप्रधानः प्रादिसमासोऽयमिति** ॥—**प्रधानार्थं च कनीयोग्रहणमिति** । अन्यत्राप्रधानग्रहणेनैव सिद्धत्वात् ॥—**अनुगतो ज्येष्ठ इति**—। विग्रहविशेषेण प्रधानवाचित्वं ज्येष्ठशब्दस्य दर्शयति ॥ **३९२१ पुरुष–**॥—**अन्वादिष्ट इति** । अनु पश्चादादिष्टः कथितः । कस्मिंश्चित्कथिते योऽन्यः कथ्यते सोऽन्वादिष्ट इत्यर्थः ॥ **३९२२ अतेरकृत्पदे** । अकृच्च पदं च अकृत्पदे । तदाह—**अकृदन्तं पदशब्दश्चेति** ॥—**अत्यङ्कुश इति** । अङ्कुशमतिक्रान्त इति विग्रहः ॥—**अतिकारक इति** । शोभनः कारकः । पूजार्थोऽयमतिः ॥—**अतेर्धातुलोप इति** । अत्यङ्कुशादौ वृत्तिविषयेऽतिशब्दोऽतिक्रान्तार्थवृत्तिरिति । क्रमेरप्रयोग एव धातुलोपः ॥—**अतिगार्ग्य इति** । यथान्यासे त्वत्रापि प्राप्नोति, गार्ग्यशब्दस्याकृदन्तत्वात् । तस्मादव्याप्त्यतिव्याप्तिपरिहारार्थम् 'अकृत्पदे' इत्येतदपनीय धातुलोप इति

---

१ 'परमभित उभयतो भावो यस्यास्ति' इत्यपि पाठः । २ 'अतिक्रान्तः कारकमतिकारकः' इत्यपि पाठः ।

३९२३। **नेरनिधाने** ।६।२।१९२। निधानम्=अप्रकाशता, ततोऽन्यदनिधानम्। प्रकाशनमित्यर्थः। निर्मूलम्। न्यक्षम्। अनिधाने किम्। निहितो दण्डो निदण्डः।

३९२४। **प्रतेरंश्वादयस्तत्पुरुषे** ।६।२।१९३। प्रतेः परेंऽश्वादयोऽन्तोदात्ताः। प्रतिगतोंऽशुः प्रत्यंशुः। प्रतिजनः। प्रतिराजा, समासान्तस्यानित्यत्वान्न टच्।

३९२५। **उपाद्द्व्यजजिनमगौरादयः** ।६।२।१९४। उपात्परं यत् द्व्यच्कमजिनं चान्तोदात्तं तत्पुरुषे गौरादीन्वर्जयित्वा। उपदेवः। उपेन्द्रः। उपाजिनम्। अगौरादयः किम्। उपगौरः। उपतैषः। तत्पुरुषे किम्। उपगतः सोमोऽस्य स उपसोमः।

३९२६। **सोरवक्षेपणे** ।६।२।१९५। सुप्रत्यवसितः। सुरत्र पूजायामेव। वाक्यार्थस्त्वत्र निन्दा, असूयया तथाऽभिधानात्। सोः किम्। कुब्राह्मणः। अवक्षेपणे किम्। सुवृषणम्।

३९२७। **विभाषोत्पुच्छे** ।६।२।१९६। तत्पुरुषे। उत्क्रान्तः पुच्छादुत्पुच्छः। यदा तु उच्छमुदस्यति—उत्पुच्छयते 'एरच्' ३२३१—उत्पुच्छः, तदा थाथादिस्वरेण नित्यमन्तोदात्तत्वे प्राप्ते विकल्पोऽयम्। सेयमुभयत्र विभाषा। तत्पुरुषे किम्। उदस्तं पुच्छं येन स उत्पुच्छः।

३९२८। **द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ** ।६।२।१९७। आभ्यां परेष्वेष्वन्तोदात्तो वा। द्विपाच्चतुष्पाच्च रथाय। त्रिपाद्ध्वीः। द्विदन्। त्रिमूर्धानं सप्तरश्मिम्। मूर्धन्नित्यकृतसमासान्त एव मूर्धन्शब्दः। तस्येतत्प्रयोजनम्—असत्यपि समासान्ते अन्तोदात्तत्वं यथा स्यात्। एतदेव ज्ञापकम्—अनित्यः समासान्तो भवतीति। यदाऽपि च समासान्तः क्रियते, तदाऽपि बहुव्रीहिकार्यत्वात्तदेकदेशत्वाच्च समासान्तोदात्तत्वं पक्षे भवत्येव। द्विमूर्धः। त्रिमूर्धः। द्वित्रिभ्यां किम्। कल्याणमूर्धा। बहुव्रीहौ किम्। द्वयोर्मूर्धा द्विमूर्धा।

३९२९। **सक्थं चाक्रान्तात्** ।६।२।१९८। गौरसक्थः। श्लक्ष्णसक्थः। अक्रान्तात्किम्। चक्रसक्थः। समासान्तस्य षचश्चित्वान्नित्यमेवान्तोदात्तत्वं भवति।

३९३०। **परादिश्छन्दसि बहुलम्** ।६।२।१९९। छन्दसि परस्य सक्थशब्दस्यादिरुदात्तो वा। अजिसक्थमा-

वक्तव्यमित्यर्थः॥ ३९२३ **नेरनि**–। नीशब्दादुत्तरपदमन्तोदात्तं स्यादनिधानेऽर्थे॥—**निमूलमिति**। निर्गतं मूलमस्य, निर्गतं वा मूलं निर्मूलम्[1]॥—**निदण्ड इति**। निशब्दो निधानार्थे वर्तते। कथं पुनर्निशब्दस्यायमर्थ इति चेत्। शृणु। प्रादयो हि वृत्तिविषये सक्रियं साधनमाहुः॥—**समासान्तस्यानित्यत्वादिति**। इह राजन्शब्दस्य पाठ एव ज्ञापयति—समासान्ता अनित्या इति। अन्यथा 'राजाहःसखिभ्यष्टच्' इति टचश्चित्वादेव सिद्धं स्यात्॥ ३९२६ **सोरव**–। सोरुत्तरपदं निन्दायामन्तोदात्तं स्यात्तत्पुरुषे॥—**सुप्रत्यवसित इति**। 'सुः पूजायाम्' इति कर्मप्रवचनीयस्य सोः 'स्वती पूजायाम्' इति समासः। तेन सुप्रत्यवसिते थाथादिविधिर्न शङ्कनीयः॥ ननु यदि सुशब्दोऽत्र पूजायां वर्तते कथं तर्हि क्षेपो गम्यते? इत्याह—**वाक्यार्थस्त्विति**। कथमित्याह—**असूययेति**। यः खल्वनर्थे उपस्थिते सुखायमान आस्ते तं प्रत्येवमुक्ते क्षेपो गम्यते॥ ३९२७ **विभाषोत्**–। उच्छब्दात्परः पुच्छशब्दः-अन्तोदात्तो वा स्यात्तत्पुरुषे॥—**सेयमुभयत्र विभाषेति**। आद्यायां तु व्युत्पत्तौ अव्ययपूर्वपदप्रकृतिस्वरेण बाधितत्वात्समासस्यान्तोदात्तत्वमप्राप्तम्। द्वितीयायां तु व्युत्पत्तौ थाथादिस्वरेण नित्यमन्तोदात्तत्वं प्राप्तमिति कृत्वा-**उभयत्र विभाषा**॥ ३९२८ **द्वित्रिभ्याम्**-। पादिति कृताकारलोपो गृह्यते। ददिति कृतददादेशो दन्तशब्दः॥—**आभ्यामिति**। द्वित्रिभ्याम्॥—**द्विपादिति**। द्वौ पादौ यस्येति द्विपात्। 'संख्यासुपूर्वस्य' इति पादशब्दस्याकारलोपः॥—**द्विदन्निति**। 'वयसि दन्तस्य दतृ'॥—**मूर्धन्नित्यकृतसमासान्त एव मूर्धन्शब्द इति**। एतच्च मूर्धस्विति निर्देशादेवावसीयते। अन्यथा मूर्धस्विति निर्देश्यं स्यात्[2]। किमर्थं पुनरकृतसमासान्त एव निर्दिष्ट इत्यत आह—**तस्येति**। यद्यकृतसमासान्तस्योपादानं तर्हि यदा समासान्तः क्रियते तदा न प्राप्नोति, तदा शब्दान्तरत्वादित्यत आह—**यदापीति**। इह हि बहुव्रीहिः कार्यित्वेनोपात्तो न मूर्धन्शब्दः॥—**तदेकदेशत्वाच्चेति**। तस्य बहुव्रीहेरेकदेशः समासान्तस्तस्य भावस्तत्त्वं तस्मादिति-स एवार्थः। **तदेकदेशित्वादिति पाठे** तु—सः=बहुव्रीहिरेकदेशी=अवयवी यस्य स तदेकदेशी=समासान्तस्तद्भावस्तत्त्वं तस्मादिति-स एवार्थः। तदेवं बहुव्रीहेः कार्यत्वात्तदेकदेशत्वाच्च समासान्तस्येति यदा समासान्तः क्रियते तदाप्ययं विधिर्भवत्येव॥—**द्विमूर्ध इति**। 'द्वित्रिभ्यां ष मूर्ध्नः' इति षः॥ **कल्याणमूर्धेति**। पूर्वपदप्रकृतिस्वर एवात्र भवति। कल्याणशब्दो 'लघावन्ते–' इत्यादिना मध्योदात्तः॥ ३९२९ **सक्थं च**। 'बहुव्रीहौ सक्थ्यक्ष्णोः–' इति षजन्तः सक्थशब्द उत्तरपदमन्तोदात्तं वा स्यात्, स चेत् क्रशब्दान्तात्परो न भवति। चित्त्वान्नित्यमन्तोदात्तत्वे प्राप्तेऽयं विकल्पः॥—**गौरसक्थ इति**। पक्षे पूर्वपदप्रकृतिस्वरः। 'शुक्रगौरयोरादिः' इति गौरस्याद्यन्तावुदात्तौ। तेनात्र त्रैस्वर्यम्॥—**श्लक्ष्णसक्थ इति**। 'कृत्सम्भ्यां क्स्नः' 'ल्शिषेरचोपधायाः' इति श्लक्ष्णशब्दोऽन्तोदात्तः॥—**षचश्चित्वादिति**। एतेन चित्स्वरस्यापवादः प्राप्तविभाषेयमिति दर्शयति॥ ३९३० **परादिश्छन्दसि**–। परशब्देनात्र सक्थशब्द एव, तस्यैव पूर्वसूत्रे सन्निहितत्वात्। तदाह—**परस्य सक्थशब्दस्येति**। ननु तर्हि परग्रहणमनर्थकं, प्रकृतो हि सक्थशब्दोऽनुवर्तते। नैतदस्ति। बहुव्रीहेरपि प्रकृतत्वात्तस्याद्युदात्तत्वं

१ 'निश्चितं मूलं निमूलम्' इति क्वचित्। २ 'मूर्धशब्दः' इत्यपि पाठः।

लभेत । अत्र वार्तिकम्—

ॐ **परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते ।**
**पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं ततः ॥** इति ।

परादिः—तुविजाता उरुक्षया । परान्तः—नि येन मुष्टिहत्यया । यास्त्रिचक्रः । पूर्वान्तः—विश्वायुर्धेहि ॥ इति समासस्वराः ॥

---

## अथ तिङन्तस्वराः ।

**३९३१ । तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः** ।८।१।२७। तिङन्तात्पदाद्गोत्रादीन्यनुदात्तान्येतयोः । पचति गोत्रम् । पचति पचति गोत्रम् । एवं प्रवचनप्रहसनप्रकथनप्रत्यायनादयः । कुत्सनाभीक्ष्ण्यग्रहणं पाठविशेषणम् । तेनान्यत्रापि गोत्रादिग्रहणे कुत्सनादावेव कार्यं ज्ञेयम् । गोत्रादीनि किम् । पचति पापम् । कुत्स-इति किम् । खनति गोत्रं समेत्य कूपम् ।

**३९३२ । तिङ्ङतिङः** ।८।१।२८। अतिङन्तात्पदात्परं तिङन्तं निहन्यते । अग्निमीळे ।

**३९३३ । न लुट्** ।८।१।२९। लुडन्तं न निहन्यते । श्वः कर्ता । श्वः कर्तारौ ।

**३९३४ । निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम्** ।८।१।३०। एतैर्निपातैर्युक्तं न निहन्यते । यदग्ने स्यामहं त्वम् । युवा यदीकृथः । कुविदङ्ग आसन् । आचित्तिभिश्चकृमा कच्चित् । पुत्रासो यत्र पितरो भवन्ति ।

---

शङ्क्येत । 'विभाषोत्पुच्छ-' इत्यतो विभाषेति वर्तमाने बहुलग्रहणं बह्वर्थप्रदर्शनार्थम् । बहुलग्रहणस्यार्थं श्लोकेन दर्शयति—**परादिश्चेति** ॥—**उरुक्षयेति** । उरूणां क्षयो निवास इति विग्रहः । 'क्षयो निवासे' इति क्षयशब्द आद्युदात्तः । 'समासस्य' इत्यन्तोदात्तं बाधित्वा कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदाद्युदात्तत्वं प्राप्तं तत्थाथादिस्वरेण बाधितम् । अतो बाहुलकेनोत्तरपदाद्युदात्तत्वम् । एतच्च 'क्षि निवासगत्योः' इति धातोर्बाहुलकादधिकरणे 'एरच्' इति **माधवेनोक्तम्** । वस्तुतस्तु घप्रत्ययान्तः क्षयशब्द इति **हरदत्तोक्तरीत्या** थाथादिस्वरस्येहाप्राप्त्या कृदुत्तरपदप्रकृतिस्वरेणैव सिद्धम् । 'परादिश्च' इत्यस्योदाहरणं तु 'चोदयित्री सूनृतानाम्' इति बोध्यम् । ऊन परिहाणे, चुरादिष्वदन्तः । णिच्, क्विप्, सुतरामूनयत्यप्रियमिति सून्, तद्दतं च सूनृतम् । 'अयस्मयादीनि-' इति भत्वान्नलोपो न ॥—**मुष्टिहत्ययेति** । मुष्ट्या हननं-मुष्टिहत्या 'हनस्त च' इति सुबन्ते उपपदे क्यप् । कृदुत्तरपदप्रकृतिस्वरोऽत्र प्राप्तः ॥—**त्रिचक्र इति** । बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरः प्राप्तः ॥—**विश्वायुरिति** । विश्वमायुर्यस्मिन्निति बहुव्रीहिः । विश्वशब्दः कन्प्रत्ययान्तः पूर्वपदप्रकृतिस्वरेणाद्युदात्तः प्राप्तः ॥

**इति स्वरसुबोधिन्यां समासस्वरप्रकरणम् ॥**

**३९३१ तिङो-**॥—**पचति गोत्रमिति** । गोत्रं=स्वकुलं पीडयतीत्यर्थः । एवं हि कुत्सा भवति ॥ आभीक्ष्ण्ये उदाहरणमाह—**पचति पचति गोत्रमिति** । अनेकार्थत्वात्पचिः करोत्यर्थे वर्तते । विवाहादौ गोत्रं पुनः पुनः सुखीकरोतीत्यर्थः । 'नित्यवीप्सयोः' इति द्वित्वम् ॥ ननु किं कुत्सनाभीक्ष्ण्यग्रहणं गोत्रादीनां पाठविशेषणम्—एतयोरर्थयोर्गोत्रादीनि भवन्ति, तानि च तिङः पराण्यनुदात्तानि भवन्ति, आहोस्विदनुदात्तविशेषणं-तिङः पराणि गोत्रादीन्यनुदात्तानि भवन्त्येतयोरर्थयोरिति । अस्मिन्विचारे निर्णयमाह—**कुत्सनाभीक्ष्ण्यग्रहणमिति** । अयं चार्थो योगविभागाल्लभ्यते । 'तिङो गोत्रादीनि' इत्येको योगोऽनुदात्तविधानार्थः । 'कुत्सनाभीक्ष्ण्ययोः' इति द्वितीयो योगः, गोत्रादीनीत्येव । परिभाषेयम् । इह शास्त्रे गोत्रादीनि कुत्सनाभीक्ष्ण्यविषयाण्येव ग्राह्याणि । तेन किं सिद्धं भवति ? इत्यत आह—**तेनेति** ॥—**अन्यत्रापीति** । 'चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः' इत्यत्र ॥—**पचति पापमिति** । पापमिति क्रियाविशेषणम् ॥—**खनति गोत्रं समेत्य-कूपमिति** । गोत्रं=कुलं समुदितं भूत्वा कूपं खनतीत्यर्थः ॥ **३९३२ तिङ्ङ-**। अनुदात्तं सर्वमिति वर्तते, तदाह—**निहन्यत इति** । सर्वानुदात्तः=**निघात** इति वैयाकरणानां व्यवहारः । अतिङ इति किम् ? पचति भवति । एककर्तृका पचिक्रिया भवतीत्यर्थः ॥ नन्वतिङ्ग्रहणं व्यर्थं, 'समानवाक्ये निघातयुष्मदस्मदादेशाः' इत्युक्तत्वात् । एकस्मिंश्च वाक्ये तिङन्तद्वयाभावादिति चेत्, **सत्यम्** । सूत्रकारेण समानवाक्याधिकारो न कृत इत्यतिङ्ग्रहणमकारि । भाष्ये तु अतिङ्ग्रहणं प्रत्याख्यातम् ॥ **३९३३ न लुट्** । इत आरभ्य निषेधसूत्राणि ॥—**श्वःकर्ता । श्वःकर्ताराविति** । तासेः परस्य लसार्वधातुकस्यानुदात्तत्वे कृते तासिरुदात्तः । एकवचने टिलोपे कृते उदात्तनिवृत्तिस्वरेण डा उदात्तः ॥ **३९३४ निपातैः-**। यदित्यादीनां यत्रेत्यन्तानां द्वन्द्वे तृतीयायाः सौत्रो लुक्, न तु युक्तशब्देन समासः, निपातैरिति विशेषणस्यानन्वयापत्तेः । तदाह—**एतैर्निपातैरिति** । यत् यदि हन्त कुवित् नेत् चेत् चण् कच्चित् यत्र एतैरित्यर्थः ।—**'यत्-यदार्थे च हेतौ च विचारे यदि चेच्चणः । हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः । कच्चित्प्रश्ने नेत् निषेधे प्रशंसायां कुवित्स्मृतम्'** । यत्रेत्याधारे । तत्र मूले केचिदुदाहृताः[1] । अन्येऽप्यूह्याः । तत्रग्रहणं साक्षात्संबन्धप्रतिपादनार्थम् ॥—**यदग्ने स्यामिति** । अस्तेर्लिङि अम् ॥—**चकृमा कच्चिदिति** । चकृमेति लिट् । प्रत्ययस्वरेणान्तोदात्तम् । 'कच्चित्' अयं निपातसमुदायः, पदकाले कत् चिदिति विच्छिद्य पाठात् । निपातैः किम् ? यत्कूजति शकटम् । एतीति यत् । इणः शतरि रूपम् । 'इणो यण्' इति यण् ॥ ननु प्रतिपदोक्तत्वात् यद्यादिभिः साहचर्याच्च निपातस्यैव यच्छब्दस्य ग्रहणं स्यादिति चेत्, **सत्यम्** । एतदेव ज्ञापयति—**अस्मिन्प्रकरणे नेदमुभयं व्यवस्थापकमिति** । तेन 'यावद्यथाभ्याम्' इत्यत्र 'यत्तदेतेभ्यः परिमाणे वतुप्' इति व्युत्पादितस्यापि

---

१ 'तत्रमूले कुविदुदाहृतः' इति पाठः प्राचीनपुस्तकेषु दृश्यते ।

३९३५ । **नह प्रत्यारम्भे** ।८।१।३१। नहेत्यनेन युक्तं तिङन्तं नानुदात्तम् । प्रतिषेधयुक्त आरम्भः प्रत्यारम्भः । नह भोक्ष्यसे । प्रत्यारम्भे किम् । नह वैतस्मिँल्लोके दक्षिणमिच्छन्ति ।

३९३६ । **सत्यं प्रश्ने** ।८।१।३२। सत्ययुक्तं तिङन्तं नानुदात्तं प्रश्ने । सत्यं भोक्ष्यसे । प्रश्ने किम् । सत्यमिद्वा उ तं वयमिन्द्रं स्तवाम ।

३९३७ । **अङ्गाप्रातिलोम्ये** ।८।१।३३। अङ्गेत्यनेन युक्तं तिङन्तं नानुदात्तम् । अङ्ग कुरु । अप्रातिलोम्ये किम् । अङ्ग कूजसि वृषल इदानीं ज्ञास्यसि जाल्म । अनभिप्रेतमसौ कुर्वन्प्रतिलोमो भवति ।

३९३८ । **हि च** ।८।१।३४। हियुक्तं तिङन्तं नानुदात्तम् । आ हि ष्मा याति । आ हि रुहन्तम् ।

३९३९ । **छन्दस्यनेकमपि साकाङ्क्षम्** ।८।१।३५। 'हि' इत्यनेन युक्तं साकाङ्क्षमनेकमपि नानुदात्तम् । अनृतं हि मत्तो वदति, पाप्मा चैनं पुनाति । तिङन्तद्वयमपि न निहन्यते ।

३९४० । **यावद्यथाभ्याम्** ।८।१।३६। आभ्यां युक्तं तिङन्तं नानुदात्तम् । यथा चित्कण्वमावतम् ।

३९४१ । **पूजायां नानन्तरम्** ।८।१।३७। यावद्यथाभ्यां युक्तमनन्तरं तिङन्तं पूजायां नानुदात्तम् । यावत्पचति शोभनम् । यथा पचति शोभनम् । पूजायां किम् । यावद्भुङ्क्ते । अनन्तरं किम् । यावद्देवदत्तः पचति शोभनम् । पूर्वेणात्र निघातः प्रतिषिध्यते ।

३९४२ **उपसर्गव्यपेतं च** ।८।१।३८। पूर्वेणानन्तरमित्युक्तम् । उपसर्गव्यवधानार्थं वचनम् । यावत्प्रपचति शोभनम् । अनन्तरमित्येव । यावद्देवदत्तः प्रपचति शोभनम् ।

३९४३ । **तुपश्यपश्यताऽहैः पूजायाम्** ।८।१।३९। एभिर्युक्तं तिङन्तं न निहन्यते पूजायाम् । आदह स्वधामनु पुनर्गर्भत्वमेरिरे ।

---

लाक्षणिकस्यानिपातस्यापि ग्रहणं भवति–'यावत् स्तोतृभ्योऽरदो गृणानाः' इति । अत्र–अरद इत्यट्स्वरेणाद्युदात्तम् । युक्तग्रहणं किम् ? अन्यान्विते मा भूत् । 'यत्र क्व च ते मनो दक्षं दधस उत्तरम्' इह यत्रेत्यस्योत्तरमित्यनेन साक्षात्संबन्धः । दध धारणे । अनुदात्तेत् ॥ **३९३५ नह प्रत्या–**। नहशब्दो निपातसमुदायो निषेधे वर्तते ॥**—नह भोक्ष्यस इति** । अदुपदेशात्परत्वात् 'से' इत्यस्य निघातः । स्यप्रत्ययस्वरेण मध्योदात्तं पदम् । पूर्वं [illegible] पुनः क्रोधेनोपहासेन वा पुनः पुनः प्रतिषेध उक्ते पृच्छति–भोजनं करिष्यसि, स एवमुच्यते ॥**—नह वैतस्मिन्निति** । तस्मिन्शब्दः फिट्स्वरेणाद्युदात्तः । लोकशब्दः पचाद्यजन्तत्वादन्तोदात्तः । दक्षिणशब्दः 'स्वाङ्गशिष्टामदन्तानाम्' इति शिट्त्वादाद्युदात्तः ॥ **३९३६ सत्यं भोक्ष्यस इति** । इदं मध्योदात्तम् ॥ **३९३७ अङ्गा—**। प्रातिलोम्यं=प्रतिकूलकारित्वं, ततोऽन्यदभिमतकारित्वमप्रातिलोम्यम् । एवं चानुलोम्य इति वक्तव्यम् । अङ्गशब्दः उदाहरणेऽनुज्ञायां, प्रत्युदाहरणे त्वमर्षे ॥**—अङ्ग कुर्विति** । करोतेर्लोण्मध्यमपुरुषैकवचनं सिप्, तस्य 'सेर्ह्यपिच्च' इति हिरादेशः । 'तनादिकृञ्भ्य उः', 'सार्वधातुका–' इति करोतेर्गुणः । 'अत उत्सार्वधातुके', 'उतश्च प्रत्ययादसंयोगपूर्वात्' इति हेर्लुक् । कुरु इति उप्रत्ययस्वरेणान्तोदात्तम् ॥ **३९३८ हि च** । अत्राप्यप्रातिलोम्य इति संबध्यते ॥**—आ हि ष्मेति** । स्मशब्दो निपातोऽपि चादित्वादनुदात्तः । दीर्घत्वं षत्वं च छान्दसम् । प्रातिलोम्ये तु—हि कूज वृषल । उदाहरणे–हिशब्दोऽवधारणे हेतौ वा । स च प्रत्युदाहरणे त्वमर्षे ॥ **३९३९ छन्दस्य–॥—अनेकमपीति** । अपिशब्दादेकम् । तत्रानेकमुदाहरति**—अनृतं हीति** । हिर्यत इत्यर्थे । यस्मादयं मत्तोऽनृतं वदति ततः पाप्मा=पापमेनं युनाति=अनृतवदनदोषेण युज्यत इति तात्पर्यार्थः । एकस्योदाहरणम्—अग्निर्हि पूर्वमुदजयत्तमिन्द्रोऽनुजयत् । अत्र एकमुदजयदित्याद्युदात्तम् । परं निहतम् । अत्र हेतुहेतुमद्भावस्य द्योतको हिरित्यनेकमपि तिङन्तं हियुक्तं भवति । अत्र पूर्वेण सर्वस्य निघातप्रतिषेधे प्राप्ते क्वचिदनेकस्य क्वचिदेकस्य यथा स्यादिति वचनम् । तत्र छन्दसि दृष्टानुविधानाद्यथाप्रयोगं व्यवस्था ॥ **३९४० यावद्यथा–**। इयं तृतीया, न पञ्चमीत्याह**—आभ्यां युक्तमिति** । तेन परभूतयोरपि भवति—देवदत्तः पचति यावदिति । यावच्छब्दो निपातश्चानिपातश्च गृह्यते, 'निपातैर्यद्यदि' इत्यत्र ज्ञापितत्वात् । **आद्यः** साकल्ये, **द्वितीयः** परिमाणोपाधिको वतुप्रत्ययान्तः । **यथा**शब्दो योग्यतादिषु ॥**—आवतमिति** । अवतेर्लोण्मध्यमपुरुषद्विवचनम् । यावच्छब्दोदाहरणं तु—यावद् भुङ्क्ते देवदत्तः, पचति यावत्–इति । 'यावत्स्तोतृभ्योऽरदो गृणानाः' इति । 'रद विलेखने' लङि सिपि अट्, अट्स्वरेणाद्युदात्तम् ॥ **३९४१ पूजायां–॥—नानुदात्तमिति** । अनुदात्त एव भवतीत्यर्थः ॥ **यावद्देवदत्त इति** । पूर्वेणात्र निघातप्रतिषेधः । 'व्यवाये यदि भवति उपसर्गेणैव' इति नियमादत्रातिप्रसङ्गाभावेऽनन्तरग्रहणं शक्यमकर्तुम् ॥ **३९४२ उपसर्ग–**। यावद्यथाभ्यां युक्तमनन्तरमुपसर्गेण व्यवहितं तिङन्तं पूजायां विषये नानुदात्तं स्यात् ॥**—अनन्तरमित्येवेति** । तच्चानन्तर्यं सोपसर्गस्य, न तिङन्तमात्रस्य ॥**—प्रपचतीति** । प्रशब्द आद्युदात्तः ॥ **३९४३ तुपश्य–**। तुप्रभृतीनि पूजाविषयाणि उदाहरणानि—तु माणवको भुङ्क्ते, पश्य माणवको भुङ्क्ते । माणवकस्तु भुङ्क्ते इति आश्चर्ये तुशब्द इति भोजनस्य पूजा गम्यते । एवमन्यत्रापि । पूजायां किम् ? पश्य मृगो धावति । तत्त्वकथनमेतत् ॥ ननु 'पूजायां नानन्तरम्' इत्यतः पूजायामिति वर्तमाने पूजाग्रहणं व्यर्थमिति चेत्, **मैवम्** । पूजाग्रहणं निघातप्रतिषेधार्थम् । तद्धि

३९४४ । **अहो च** ।८।१।४०। एतद्योगे नानुदात्तं पूजायाम् । अहो देवदत्तः पचति शोभनम् ।

३९४५ । **शेषे विभाषा** ।८।१।४१। अहो इत्यनेन युक्तं तिङन्तं वाऽनुदात्तमपूजायाम् । अहो कटं करिष्यति ।

३९४६ । **पुरा च परीप्सायाम्** ।८।१।४२। पुरेत्यनेन युक्तं वाऽनुदात्तं त्वरायाम् । अधीष्व माणवक पुरा विद्योतते विद्युत् । निकटागामिन्यत्र पुराशब्दः । परीप्सायां किम् । न तेन स्म पुराऽधीयते । चिराऽतीतेऽत्र पुरा ।

३९४७ । **नन्वित्यनुज्ञैषणायाम्** ।८।१।४३। नन्वित्यनेन युक्तं तिङन्तं नानुदात्तमनुज्ञाप्रार्थनायाम् । ननु गच्छामि भोः । अनुजानीहि मां गच्छन्तमित्यर्थः । अनु–इति किम् । आकर्षीः कटं त्वम्? ननु करोमि । पृष्टप्रतिवचनमेतत् ।

३९४८ । **किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम्** । ।८।१।४४। क्रियाप्रश्ने वर्तमानेन किंशब्देन युक्तं तिङन्तं नानुदात्तम् । किं द्विजः पचति, आहोस्विद्गच्छति । क्रिया–इति किम् । साधनप्रश्ने मा भूत्—किं भक्तं पचत्यपूपान्वा । प्रश्ने किम् । किं पठति । क्षेपोऽयम् । अनुपसर्गं किम् । किं प्रपचति उत प्रकरोति । अप्रतिषिद्धं किम् । किं द्विजो न पचति ।

३९४९ । **लोपे विभाषा** ।८।१।४५। किमोऽप्रयोगे उक्तं वा । देवदत्तः पचत्याहोस्वित्पठति ।

३९५० । **एहिमन्ये प्रहासे लृट्** ।८।१।४६। एहिमन्ये इत्यनेन युक्तं लृडन्तं नानुदात्तं क्रीडायाम् । एहि मन्ये भक्तं भोक्ष्यसे भुक्तं तत्त्वतिथिभिः । प्रहासे किम् । एहि मन्यसे ओदनं भोक्ष्ये इति सुष्ठु मन्यसे । 'गत्यर्थलोटा लृट्–' ३९५५ इत्येव सिद्धे नियमार्थोऽयमारम्भः—एहिमन्येयुक्ते प्रहास एव नान्यत्र । एहि मन्यसे ओदनं भोक्ष्ये ।

---

पूजाग्रहणं प्रतिषेधस्य प्रतिषेधेन संबद्धम् । ततश्च तदनुवृत्ताविहापि 'न लुट्' इत्यादिके विषये प्रतिषेधस्य प्रतिषेधः स्यात्, **मा भूदेवं,** निघातस्यैव यथा स्यादित्येतदर्थं पूजाग्रहणम् । किं च 'अनन्तरम्' इत्येवं तदभूत्, इह त्वविशेषेणेष्यते ॥ **३९४४ अहो च–।** अहो देवदत्तः पचति शोभनमित्युदाहरणम् । पृथग्योगकरणमुत्तरार्थम् । उत्तरो योगः 'अहोयोगे' एव यथा स्यात्, तु प्रभृतिभिर्योगे मा भूदिति ॥ **३९४५ शेषे–।** पूर्वं पूजायामित्युक्तत्वात्ततोऽन्यः शेषः–इत्याह—[illegible]**मिति** ॥—**अहो कटं करिष्यतीति** । पक्षे स्वप्रत्ययस्वरः । अनाश्चर्यभूतमेव वस्तु असूयया आश्चर्यवत्प्रतिपाद्यते, न पूजा । शेषग्रहणं स्पष्टार्थम् । योगविभागसामर्थ्यादेव 'पूर्वप्रकृतेषु किञ्चिन्नानुवर्तते' इति ज्ञातम् । तत्र चानुकृष्टत्वात् पूजायामित्येतन्निवर्तिष्यत इति **भावः ॥—३९४६ पुरा । पुरा विद्योतते विद्युदिति ।** 'यावत्पुरा–' इति भविष्यति लट् । विद्योतनादावध्ययनं धर्मशास्त्रप्रतिषिद्धम्, अतस्तदुपन्यासेन त्वरितमधीष्वेति गम्यते । पक्षे 'द्योतते'इति धातुस्वरेणाद्युदात्तम् । 'तास्यनुदात्त–' इति लसार्वधातुकनिघातः ॥—**न तेन स्म पुराधीयत इति** । 'लट् स्मे' इति भूते लट् । अत्र भूतस्याध्ययनस्य चिरकालप्रवृत्तत्वं गम्यते, न त्वरा ॥ **३९४७ नन्वि–।** किंचित्कर्तुं स्वयमेवोद्यतस्य एवं क्रियतामित्यभ्युपगमोऽनुज्ञा, तस्याः एषणा=प्रार्थनाऽनुज्ञैषणा । अनुज्ञाप्रार्थनेत्यर्थः । तदाह—**अनुज्ञाप्रार्थनायामिति** । उदाहरणे वर्तमानसामीप्ये लट् । प्रत्युदाहरणे 'ननौ पृष्टप्रतिवचने' इति भूते लट् ॥—**अनु–इति किमिति** । अनुज्ञैषणायामिति किमित्यर्थः ॥ 'अज्ञाप्रातिलोम्ये' इत्यादिवदितिकरणं विनाऽपि सिद्धे एकनिपातोऽयमिति प्रदर्शनार्थ**मिति**शब्दः । अन्यथा द्वयोर्निपातयोर्ग्रहणं संभाव्येत ॥ **३९४८ किं क्रिया—॥—अप्रतिषिद्धमिति** । अप्रतिषिद्धार्थमित्यर्थः ॥—**किं द्विजः पचति आहोस्विद्गच्छतीति** । आहोस्वित्–एको निपात आद्युदात्तः । **अत्र केचित्**—पूर्वं किंयुक्तं तन्न निहन्यते, उत्तरं तु न किंयुक्तमिति निहन्यत एवेति । **अन्ये तु**—यद्यप्येकस्याख्यातस्य समीपे किंशब्दः श्रूयते, तथापि सर्वस्य संशयविषयस्य तेन योग इति उभयत्रापि निषेधेन भाव्यमिति । **अत्र हरदत्तः**—ये त्वाहुः 'पूर्वं किंयुक्तम्' इति, ते मन्यन्ते—अस्तु द्वयोः संशयविषयत्वम्, किंशब्देन तु श्रुतक्रियाविषय एव प्रश्नो द्योत्यते । क्रियान्तरविषयस्तु प्रश्नः 'आहोस्वित्' इत्यनेन । क्रिया प्रश्न इति चोच्यते, तस्मात्तस्यैव निघातप्रतिषेध इति ॥ **प्रश्ने किम्? किं देवदत्तः पठति**—क्षेपे किंशब्दः । क्वचित्पुस्तके 'किमधीते' इति प्रत्युदाहरणं दृश्यते तन्नादर्तव्यं, सोपसृष्टत्वात् ॥ **३९४९ लोपे–।** 'किंक्रियाप्रश्न–' इति सूत्रमनुवर्तते । तथा चायमर्थः—क्रियाप्रश्ने यः किंशब्दः तस्य लोपे तदर्थेन युक्तमनुपसर्गमप्रतिषिद्धं च तिङन्तं वाऽनुदात्तं स्यात् । सूत्रेण किमो लोपस्याविधानात्[3] अर्थप्रकरणादिना गम्यमानार्थत्वादप्रयोग एव लोपो विवक्षितः ॥—**देवदत्तः पचति आहोस्वित्पठतीति** । अत्र पक्षे निघातः । पक्षे धातुस्वरेणाद्युदात्तता । किंशब्दाप्रयोगादप्राप्तविभाषेयम् । यद्वा तस्याप्रयोगेऽपि अर्थेन योगात्प्राप्तविभाषा । पूर्वसूत्रस्थानि प्रत्युदाहरणानि किंशब्दं त्यक्त्वाऽत्र योजनीयानि ॥ **३९५० एहि–॥—एहिमन्य इत्यनेन युक्तमिति**—समुदायाभिप्रायमेकवचनम् । अन्यथा आख्याते द्वे, आङ् चापर इति बहुवचनप्रसङ्गः ॥—**एहि मन्ये भक्तं भोक्ष्यस इति** । 'मन्यसे भोक्ष्ये' इत्यर्थे 'प्रहासे च मन्योपपदे–' इत्यादिना 'मन्ये भोक्ष्यसे' इति पुरुषव्यत्ययः । इदं च वृत्तिकारमतरीत्या प्रत्युदाहरणम् । तन्मते उत्तमोपादानस्यातन्त्रत्वात् । **भाष्ये** तु एहि मन्ये रथेन यास्यसीति प्रत्युदाहृतम् । तत्रायमर्थः—त्वं रथेन यास्यसीत्यहं मन्य एहीति ॥—**गत्यर्थलोटा लृडित्येव सिद्ध इति** । आङ्पूर्वादिणो लोट्, सिपो हिः । अत्र एहीत्यस्य गत्यर्थत्वाद् 'गत्यर्थलोटा–' इति सिद्धमित्यर्थः । एहीत्यत्र

---

१ 'इत्यनेनैव सिद्धे' इति पाठः । २ सूत्रे 'एहि मन्ये' इति 'प्रहासे च–' इति सूत्रविहितलडनुवाद एव । धातुमात्रं विवक्षितमिति भावः । इदञ्च वृत्तिमतम् । भाष्ये तु उत्तमोऽपि विवक्षितः । 'एहि मन्ये रथेन यास्यसि' इति प्रत्युदाहरणम् । एहि त्वं रथेन यास्यसीत्यहं मन्ये–इत्यर्थ इति प्रतीयते । ३ कतिपयपुस्तकेषु 'विधानार्थप्रकरणादिना' इत्येवम्पाठो दृश्यते ।

३९५१ । **जात्वपूर्वम्** ।८।१।४७। अविद्यमानपूर्वं यज्जातु तेन युक्तं तिङन्तं नानुदात्तम् । जातु भोक्ष्यसे । अपूर्वं किम् । कटं जातु करिष्यसि ।

३९५२ । **किंवृत्तं च चिदुत्तरम्** ।८।१।४८। अविद्यमानपूर्वं चिदुत्तरं यत्किंवृत्तं तेन युक्तं तिङन्तं नानुदात्तम् । विभक्त्यन्तं डतरडतमान्तं किमो रूपं किंवृत्तम् । कश्चिद्भुङ्क्ते, कतरश्चित्, कतमश्चिद्वा । चिदुत्तरं किम् । को भुङ्क्ते । अपूर्वमित्येव, रामः किंचित्पठति ।

३९५३ । **आहो उताहो चाऽनन्तरम्** ।८।१।४९। 'आहो' 'उताहो' इत्याभ्यां अपूर्वाभ्यां युक्तं तिङन्तं नानुदात्तम् । आहो उताहो वा भुङ्क्ते । अनन्तरमित्येव, शेषे विभाषां वक्ष्यति । अपूर्व—इति किम् । देव आहो भुङ्क्ते ।

३९५४ । **शेषे विभाषा** ।८।१।५०। आभ्यां युक्तं व्यवहितं तिङन्तं वाऽनुदात्तम् । आहो देवः पचति ।

३९५५ । **गत्यर्थलोटा लृण्न चेत्कारकं सर्वान्यत्** ।८।१।५१। गत्यर्थानां लोटा युक्तं तिङन्तं नानुदात्तं, यत्रैव कारके लोट् तत्रैव लृडपि चेत् । आगच्छ देवदत्त ग्रामं द्रक्ष्यस्येनम् । उह्यन्तां देवदत्तेन शालयो रामेण भोक्ष्यन्ते । गत्यर्थे किम् । पच देव ओदनं भोक्ष्यसेऽन्नम् । लोटा किम् । आगच्छेर्देव ग्रामं द्रक्ष्यस्येनम् । लृट् किम् । आगच्छ देव ग्रामं पश्यस्येनम् । न चेदिति किम् । आगच्छ देव ग्रामं पिता ते ओदनं भोक्ष्यते । सर्वं किम् । 'आगच्छ देव ग्रामं त्वं चाहं च द्रक्ष्याव एनम्' इत्यत्रापि निघातनिषेधो यथा स्यात्, यल्लोडन्तस्य कारकं तच्चान्यच्च लृडन्तेनोच्यते ।

३९५६ । **लोट् च** ।८।१।५२। लोडन्तं गत्यर्थलोटा युक्तं नानुदात्तम् । आगच्छ देव ग्रामं पश्य । गत्यर्थेति किम् । पच देवौदनं भुङ्क्ष्वैनम् । लोट् किम् । आगच्छ देव ग्रामं पश्यसि । न चेत्कारकं सर्वान्यदित्येव, आगच्छ देव ग्रामं पश्यत्वेनं रामः । सर्वग्रहणात्त्विह स्यादेव—आगच्छ देव ग्रामं त्वं चाहं च पश्यावः । योगविभाग उत्तरार्थः ।

३९५७ । **विभाषितं सोपसर्गमनुत्तमम्** ।८।१।५३। लोडन्तं गत्यर्थलोटा युक्तं तिङन्तं वाऽनुदात्तम् । आगच्छ देव ग्रामं प्रविश । सोपसर्गं किम् । आगच्छ

---

आङः परत्वादिहीत्यत्र निघातः ॥—**मन्य इति** । 'मन ज्ञाने' अनुदात्तेत् । श्यन्नन्तत्वादाद्युदात्तत्वम् । 'तास्यनुदात्तेत्—' इति अदुपदेशात्परत्वादिडनुदात्तः ॥ **३९५१ जात्व**—। अपूर्वमित्येतज्जातुशब्दस्यैव विशेषणं, न तिङन्तस्य, 'आहो उताहो' इति सूत्रे अनन्तरग्रहणाज्ज्ञापकात् । अन्यथा तत्राप्यपूर्वमित्यनुवृत्तेरेव केवलतिङन्तस्यानन्तर्यं लभ्यते इति किं तेन ? ॥ ननु शेषे विभाषां वक्ष्यति तत्र शेषप्रक्लृप्त्यर्थं तत्स्यात्—शेषे विभाषा, कश्च शेषः ? सान्तरं शेष इति—अन्तरेणाप्यनन्तरग्रहणं प्रक्लृप्तः शेषः । कथम् ? अपूर्वमिति प्रकृतं सपूर्वः शेष इति । तदेतत्सकलमभिप्रेत्याह—**अविद्यमानपूर्वं यज्जात्विति** ॥—**जातु भोक्ष्यस इति** । अदुपदेशात्परत्वात्से इत्यस्य निघातः । मध्योदात्तं पदम् । जातुशब्दो निपातत्वादाद्युदात्तः ॥—**कटं जातु करिष्यसीति** । कटशब्दः फिट्त्वादन्तोदात्तः ॥ **३९५२ किंवृत्तम्**—। वृत्तमित्यधिकरणे क्तः । किमो वृत्तं—किंवृत्तम् । 'अधिकरणवाचिनश्च' इति कर्तरि षष्ठी । 'अधिकरणवाचिना च' इति समासनिषेधे प्राप्तेऽस्मादेव निपातनात्समासः । इह 'जात्वपूर्वम्' इत्यतोऽपूर्वमिति वर्तते, तद्व्याचष्टे—**अविद्यमानपूर्वमिति** । यदि यत्र किंशब्दो वर्तते तत्सर्वं गृह्यते, तर्हि 'किमीयः' 'किंतराम्' इत्यादेरपि प्रसङ्गः स्यादिति मत्वा परिसंचष्टे—**विभक्त्यन्तमित्यादि** ॥ **३९५४ शेषे वि**—। अनन्तरापेक्षं शेषत्वमित्याह—**व्यवहितमिति** ॥—**पचतीति** । पक्षे धातुस्वरेणाद्युदात्तम् ॥ **३९५५ गत्यर्थ**—। गतिरर्थो येषामिति विग्रहः ॥—**गत्यर्थलोटा युक्तमिति** । योगः पुनरर्थद्वारको निमित्तीभावः । लोडन्तवाच्यं हि निमित्तं लृडन्तवाच्यस्य । 'न चेत्कारकं सर्वान्यत्' इत्यस्य व्याख्यानमाह—**यत्रैव कारके लोडित्यादि** । कर्तरि कर्मणि वा ॥—**आगच्छ देवदत्त ग्रामं द्रक्ष्यस्येनमिति** । आङुपसर्गः, गच्छदेवदत्तशब्दयोः पदात्परत्वान्निघातः । ग्रामशब्दो 'ग्रसेरा च' इति मन्नन्त आद्युदात्तः ॥—**द्रक्ष्यसीति**—प्रत्ययस्वरेण मध्योदात्तम् ॥—**उह्यन्तां देवदत्तेन शालयो रामेण भोक्ष्यन्त इति** । वहेः प्रापणार्थत्वेऽपि गतिर्गम्यत इति गत्यर्थत्वम् । उह्यन्तामित्यत्र देवदत्तरामयोः कर्त्रोर्भेदेऽपि लकारवाच्यस्य शालेः कर्मण अभेदात् ॥—**आगच्छेरिति** । लिङयं, न लोट् ॥—**द्रक्ष्यसीति** । वर्तमानसामीप्ये लट् ॥—**आगच्छ देव ग्रामं पिता ते ओदनं भोक्ष्यत इति** । कारकशब्देन सूत्रे कारकव्यक्तिरेवाश्रीयते, तेन कर्तृत्वाभेदेऽपि व्यक्तिभेदात्कारकभेदः ॥—**त्वं चाहं च द्रक्ष्याव एनमिति** । अक्रियमाणे सर्वग्रहणे यत्र वाच्यं न भिद्यते तत्रैव भवितव्यम् , इह च भिद्यते वाच्यम् , एकत्रैकमन्यत्र द्वयमिति निघातप्रतिषेधो न स्यात् । क्रियमाणे तु सर्वग्रहणे लोड्वाच्यकारकापेक्षया लृड्वाच्यकारकाधिक्येऽपि निघातप्रतिषेधः सिद्धः ॥ **३९५६ लोट् च** । लृट्ग्रहणं विहाय 'गत्यर्थलोटा—' इति संपूर्णं सूत्रमनुवर्तते, तदाह—**गत्यर्थेत्यादि** । **'आगच्छ'** इति तु[1] निहतमेव ॥—**योगविभाग उत्तरार्थ इति** । उत्तरो विकल्पो लोट एव यथा स्यात्, लृटो मा भूत्—इति ॥ **३९५७ विभाषितम्**—। पूर्वसूत्रं सर्वमनुवर्तते । प्राप्तविभाषा चेयम् । गत्यर्थलोटा युक्तं लोडन्तं सोपसर्गमुत्तमभिन्नं विभाषा नानुदात्तं स्यात् न चेत्कारकं सर्वान्यत् ॥—**सोपसर्गमिति**—उपसर्गेण सह, उपसर्गे विद्यमान इत्यर्थः । सहशब्दो विद्यमानार्थो न तुल्ययोगे, न ह्युपसर्गस्य निघातप्रसङ्गोऽस्ति ॥—**आगच्छ देव ग्रामं प्रविशेति** । अत्र 'विश' इति पक्षे निहतं, पक्षे शप्रत्ययस्वरेणान्तोदात्तम् ।

---

१ '॥—**आगच्छेति** । गत्यर्थलोटा युक्तं पश्येति न निहतम् , गच्छेति तु निहतमेव' इति क्वचित्पाठः ॥

देव ग्रामं पश्य । अनुत्तमं किम् । आगच्छानि देव ग्रामं प्रविशानि ।

३९५८ । **हन्त च** ।८।१।५४। 'हन्त' इत्यनेन युक्तमनुत्तमं लोडन्तं वाऽनुदात्तम् । हन्त प्रविश । सोपसर्गमित्येव । हन्त कुरु, 'निपातैर्यद्यदि' ३९३४ इति निघातप्रतिषेधः । अनुत्तमं किम् । हन्त प्रभुञ्जावहै ।

३९५९ । **आम एकान्तरमामन्त्रितमनन्तिके** ।८।१।५५। आमः परमेकपदान्तरितमामन्त्रितं नानुदात्तम् । आम् पचसि देवदत्त ३ । एकान्तरं किम् । आम् प्रपचसि देवदत्त ३ । आमन्त्रितं किम् । आम् पचति देवदत्तः । अनन्तिके किम् । आम् पचसि देवदत्त ।

३९६० । **यद्धितुपरं छन्दसि** ।८।१।५६। तिङन्तं नानुदात्तम् । उदसृजो यदङ्गिरः । उशन्ति हि । आख्यास्यामि तु ते । 'निपातैर्यत्–' ३९३४ इति 'हि च' ३९३८ इति 'तुपश्य–' ३९४३ इति च सिद्धे नियमार्थमिदम्–एतैरेव परभूतैर्योगे नान्यैरिति । जाये स्वारोहावैहि । एहीति गत्यर्थलोटा युक्तस्य लोडन्तस्य निघातो भवति ।

३९६१ । **चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः** ।८।१।५७। एषु षट्सु परतस्तिङन्तं नानुदात्तम् । देवः पचति चन । देवः पचति चित् । देवः पचतीव । देवः पचति गोत्रम् । देवः पचतिकल्पम् । देवः पचति पचति । अगतेः किम् । देवः प्रपचति चन ।

३९६२ । **चादिषु च** ।८।१।५८। चवाहाहैवेषु परेषु तिङन्तं नानुदात्तम् । देवः पचति च खादति च । अगतेरित्येव । देवः प्रपचति च प्रखादति च । प्रथमस्य 'चवायोगे' ३९६२ इति निघातः प्रतिषिध्यते, द्वितीयं तु निहन्यत एव ।

३९६३ । **चवायोगे प्रथमा** ।८।१।५९। 'चवा' इत्याभ्यां योगे प्रथमा तिङ्विभक्तिर्नानुदात्ता । गाश्च चारयति वीणां वा वादयति । इतो वा सातिमीमहे । उत्तरवाक्ययोरनुषञ्जनीयतिङन्तापेक्षयेयं प्राथमिकी । योगे किम् । पूर्वभूतयोरपि योगे निघातार्थम् । प्रथमाग्रहणं द्वितीयादेस्तिङन्तस्य मा भूत् ।

३९६४ **हेति क्षियायाम्** ।८।१।६०। हयुक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता धर्मव्यतिक्रमे । स्वयं ह रथेन याति३, उपाध्यायं पदातिं गमयति । 'क्षियाशीः–' ३६२३ इति प्लुतः ।[1]

---

यदाऽन्तोदात्तं तदा 'तिङि चोदात्तवति–' इति गतेर्निघातः ॥—**'पश्य' 'प्रविशानि' इति**–उभयत्रापि पूर्वेण नित्यमेव निघातः । प्रत्युदाहरणानि पूर्वसूत्रोक्तान्येव प्रशब्दपूर्वाणि योज्यानि ॥ **३९५८ हन्त च** । पूर्वसूत्रमनुवर्तते, लोट्ग्रहणं च, तदाह—**हन्तेत्यनेनेत्यादि** । प्राप्तविभाषेयम्, 'निपातैर्यद्यदि–' इति निघातनिषेधस्य सिद्धत्वात् ॥—**प्रभुञ्जावहा इति** । भुजेर्लोट्, 'भुजोऽनवने' इत्यात्मनेपदम्, वहिः, टेरेत्वं, श्नम्, 'आडुत्तमस्य पिच्च', 'एत ऐ', अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वम्, विकरणस्वरः ॥ **३९५९ आमः** । अन्तरयतीत्यन्तरं=व्यवधायकम् । एकमन्तरं यस्य तदेकान्तरम् । उदाहरणे निघाते प्रतिषिद्धे षाष्ठमाद्युदात्तत्वम् ॥—**अनन्तिक इति किमिति** । **अत्र केचित्**—अनन्तिकं=दूरं, तस्यैव सामर्थ्यादेकश्रुतेर्निघातस्य च प्रतिषेधः । यदि निघातमात्रनिषेधोऽयम्, तदा निघातस्यैकश्रुत्या बाधितत्वादिदं सूत्रं व्यर्थं स्यादिति सामर्थ्यादेव चैतन्निषेधं प्रति एकश्रुतेरसिद्धत्वाभावः । प्लुतोदात्तस्तु न प्रतिषिध्यत इत्याहुः । **अपरे तु**—अनन्तिक इत्यनेन यन्न दूरं न च संनिकृष्टं तदुच्यते, न दूरमेव । अन्यथा दूरमित्येव वदेत् । तेनास्मिन्नेकश्रुतेः प्राप्तिरेव नास्ति, अदूरत्वात्प्लुतोदात्तोऽपि नोदाहर्तव्य इति ॥ **३९६० यद्धितु–**॥—**उदसृज इति** । तुदादेः सृजेर्लङि सिप्यट् ॥—**उशन्ति हीति** । वश कान्तौ, अदादिः । लटि 'झोन्तः' । ग्रह्यादित्वात्संप्रसारणम् ॥—**नान्यैरिति** । यदिहन्तेत्यादिभिरित्यर्थः ॥—**जाये स्वारोहावैहीति** । रुहेर्लोट् । वस्, शप् । 'आडुत्तमस्य पिच्च', 'लोटो लङ्वत्' इति लङ्वद्भावात् 'नित्यं ङितः' इति सलोपः । आङ्पूर्वादिणो लोट, सिपो हिः, **एहि** । तेन परभूतेन युक्तस्य रोहावेत्यस्य 'लोट् च' इति प्राप्तो निघातप्रतिषेधो नियमान्निवर्त्यते । तेन स्वशब्दाश्रयो निघातो बोध्यः । स्वाशब्दे 'रो रि' इति लोपः, 'ढ्रलोपे–' इति दीर्घः । 'स्वो रोहाव' इति पाठे तु छान्दसत्वादुत्वम् ॥ **३९६१ चनचि** ॥—**एष्विति** । चन चित् इव गोत्रादि तद्धित आम्रेडित एष्वित्यर्थः । इहापि गोत्रादयः कुत्सनाभीक्ष्ण्ययोरेव गृह्यन्त इति 'तिङो गोत्रादि–' इत्यत्रैवोक्तम् ॥—**पचतिकल्पमिति** । अत्रानुदात्त एव तद्धितो ग्राह्यः । अन्यत्र तद्धितस्वरेण तिङन्तस्वरो बाध्यते, अयं पचतिदेश्यः ॥ **३९६२ चादिषु च** । 'न चवाहाहैवयुक्ते' इति सूत्रे निर्दिष्टाश्चादयोऽत्र गृह्यन्ते, संनिकृष्टत्वात् । न तु 'चादयोऽसत्त्वे' इति सूत्रनिर्दिष्टाः, विप्रकृष्टत्वात् । तदेतदाह—**चवाहाहैवेषु परेष्विति** ॥—**पचति च खादति चेति** । उभयत्र खादतीत्यस्य निघातप्रसङ्ग एव नास्ति, नानावाक्यत्वात् । चवायोगो हि समुच्चये विकल्पे वा सति भवति, स चानेकस्य धर्म इति कृत्वोदाहृतम् ॥ **३९६३ चवा–** । 'प्रथमा' इति स्त्रीलिङ्गस्य निर्वाहमाह—**प्रथमा तिङ्विभक्तिरिति** । प्रथममुच्चारिता तिङ्विभक्तिरित्यर्थः । 'अगतेः' इति प्रथमसूत्रे चानुकृष्टत्वादिह नानुवर्तते ॥—**उत्तरवाक्ययोरिति** । 'देवो वा पार्थिवादधि', 'इन्द्रं महो वा रजसः' इत्येतयोरित्यर्थः ॥ ननु श्रुतस्यैव तिङन्तस्योत्तरत्रानुषङ्गः, तत्कथं प्राथम्यमिति चेत्, अनुषक्तस्याप्यौपाधिकं भेदं पुरस्कृत्य प्राथम्याश्रयणेन निघातनिषेधस्य छन्दसि बहुशो दृष्टत्वात् । एतच्चेहैव मन्त्रे 'नियमेन मुष्टिहत्यया–' इति च मन्त्रे वेदभाष्ये स्पष्टम् ॥ **३९६४ हेति–** ॥ **स्वयं**

---

१ 'क्षियाशीरिति प्लुतः' अयं पाठो बहुषु पुस्तकेषु न दृश्यते ।

३९६५। अहेति विनियोगे च ।८।१।६१। अहयुक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता नानाप्रयोजने नियोगे क्षियायां च। त्वमह ग्रामं गच्छ। त्वमह रथेनारण्यं गच्छ। क्षियायाम्-स्वयमह रथेन याति ३, उपाध्यायं पदातिं नयति।

३९६६। चाहलोप एवेत्यवधारणम् ।८।१।६२। 'च' 'अह' एतयोर्लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता। देव एव ग्रामं गच्छतु। देव एवारण्यं गच्छतु। ग्राममरण्यं च गच्छत्वित्यर्थः। देव एव ग्रामं गच्छतु। राम एवारण्यं गच्छतु। ग्रामं केवलमरण्यं केवलं गच्छत्वित्यर्थः। इह 'अह'लोपः स च केवलार्थः। अवधारणं किम्। देव क्वेव भोक्ष्यसे। न क्वचिदित्यर्थः। अनवक्लृप्तावेवकारः।

३९६७। चादिलोपे विभाषा ।८।१।६३।चवाहाहैवानां लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता। चलोपे— इन्द्र वाजेषु नोऽव। शुक्ला व्रीहयो भवन्ति। श्वेता गा आज्याय दुहन्ति। वालोपे—व्रीहिभिर्यजेत। यवैर्यजेत।

३९६८। वैवावेति च छन्दसि ।८।१।६४। अहर्वै देवानामासीत्। अयंवाव हस्त आसीत्।

३९६९। एकान्याभ्यां समर्थाभ्याम् ।८।१।६५। आभ्यां युक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता छन्दसि। अजामेकां जिन्वति। अजामेकां रक्षति। तयोरन्यः पिप्पलं स्वाद्वत्ति। समर्थाभ्यां किम्। एको देवानुपातिष्ठत्। एक इति संख्यापरं, नान्यार्थम्।

३९७०। यद्वृत्तान्नित्यम् ।८।१।६६। यत्र पदे यच्छब्दस्ततः परं तिङन्तं नानुदात्तम्। यो भुङ्क्ते। यदंग्रङ्वायुर्वाति। अत्र व्यवहिते कार्यमिष्यते।

३९७१। पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः ।८।१।६७। पूजनेभ्यः काष्ठादिभ्यः पूजितवचनमनुदात्तम्। काष्ठाध्यापकः। ॐ मलोपश्च वक्तव्यः। दारुणाध्यापकः। अज्ञाताध्यापकः। समासान्तोदात्तत्वापवादः। 'एतत्समासे इष्यते। नेह—दारुणमध्यापकः' इति वृत्तिमतम्। 'पूजनात्' इत्येव पूजितपरिग्रहे सिद्धे पूजितग्रहणमनन्तरपूजितलाभार्थम्। एतदेव ज्ञापकम्—'अत्र प्रकरणे पञ्चमीनिर्देशेऽपि नानन्तर्यमाश्रीयते' इति।

ह रथेन यातीति। उपाध्याये पदातौ गच्छति सति शिष्यस्य रथेन गमनं प्रतिषिद्धमित्याचारभेदः॥ ३९६५ अहेति। अनेकस्मिन्प्रयोजने प्रेषणं=विनियोगः, तदाह—नानाप्रयोजने नियोगे इति। अनेकप्रयोजनो नियोगः=प्रेषणम्। उदाहरणे पूर्वत्र प्रैषे प्लुतः, उत्तरत्र क्षियायाम्॥ ३९६६ चाहलोप-। अवधारणार्थ-एवशब्दप्रयोगे सति प्रथमं तिङन्तं नानुदात्तम्। सूत्रेण चाहलोपस्याविधानाद् अर्थप्रकरणादिना गम्यमानार्थत्वादप्रयोग एव लोपो विवक्षितः। चशब्दः समुच्चयार्थः। अहशब्दः केवलार्थः। समानकर्तृके चलोपः। नानाकर्तृकेऽहलोपः। उदाहरणे चलोपं दर्शयति—ग्राममरण्यं चेति॥ —क्वेव भोक्ष्यस इति। अनवक्लृप्तावयमेवशब्दः। 'एवे चानियोगे' इति पररूपम्॥ ३९६७ चादि-॥—वाजेष्विति। अवेति तिङन्तस्येह निघातः। निघाताभावस्य तूदाहरणान्तरं मृग्यम्॥ ननु पूर्वसूत्रे समानकर्तृके चलोप इत्युक्तम्। इह तु कर्तृभेदात् कथं चलोपः? इति चेत्। अवधारणार्थे एवशब्दप्रयोगे समानकर्तृके चलोप इति नियमः, न तु सर्वत्र-इत्यस्त्यत्र चलोपः॥—व्रीहिभिर्यजेतेति। पक्षे निहतम्। पक्षे आद्युदात्तम्। द्वितीयं तु निहतमेव। एवं शेषेष्वपि यथादर्शनमुदाहरणम्॥ ३९६८ वैवाव-। आभ्यां युक्तं प्रथमं तिङन्तमनुदात्तं वा स्यात् छन्दसि। वै स्फुटार्थे क्षमार्थे च। वाव प्रसिद्धौ स्फुटार्थे च॥ ३९६९ एकान्या-। समौ=तुल्यावर्थौ ययोस्तौ समर्थौ। शकन्ध्वादित्वात्पररूपम्॥— जिन्वतीति। जिविः प्रीणनार्थः। इदित्त्वान्नुम्। लट्, तिप्, शप्॥—अजामेकां रक्षतीति। अन्यां प्रीणयति, अन्यां रक्षतीत्यर्थः॥—एक इति संख्यापरमिति। एकशब्दस्यानेकार्थत्वात्। तथा चोक्तम्—'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा। साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते' इति॥ ननु साहचर्यादन्यार्थक एवैकशब्दो ग्रहिष्यत इति चेत्सत्यम्। न साहचर्यमत्र प्रकरणे व्यवस्थापकमिति 'निपातैर्यद्यदिहन्त-' इत्यत्रैवावोचाम॥ ३९७० यद्वृ-॥—यदङ्ङिति। यद् अञ्चतीति क्विन्। 'विष्वग्देवयोश्च-' इति टेरद्र्यादेशः॥ कथं पुनः पञ्चमीनिर्देशे सति 'यदद्र्यङ् वायुर्वाति' इत्यादौ व्यवधाने भवत्यत आह—अत्र व्यवहिते कार्यमिष्यत इति। अत्र च ज्ञापकमुत्तरसूत्रे मूल एव स्फुटीभविष्यति॥ ३९७१ पूजनात्-। 'काष्ठादिभ्य-' इति वार्तिके दृष्टं तदनुरोधेन पूजनादिति बहुवचनस्थाने एकवचनमिति व्याचष्टे— पूजनेभ्यः काष्ठादिभ्य इति। उत्तरसूत्रे तिङ्ग्रहणादिदं सुबन्तविषयकम्॥—काष्ठाध्यापक इति। काष्ठादयोऽद्भुतपर्यायाः सन्तः पूजनवचना भवन्ति। समासविषयकं सूत्रमिदम्। उदाहरणे मयूरव्यंसकादित्वात्समासः॥— मलोपश्च वक्तव्य इति॥ दारुणमध्यापक इति समासे कृते विभक्तेर्लुकि स्वाभाविकी मकारनिवृत्तिरित्यनेन वचनेनान्वाख्यायते इति वृत्तिन्यासकारयोर्मतं। तदेतदाह—इति वृत्तिमतमिति। भाष्यवार्तिककैयटास्तु—असमास एव क्रियाविशेषणभूतानां दारुणमित्यादीनामसमास एवास्य सूत्रस्य प्रवृत्तिमिच्छन्ति। मयूरव्यंसकादित्वे नास्ति प्रमाणम्। हरदत्तोऽप्याह—यदि समासे एवेदमभिमतमभविष्यत्तदा समास इत्येवावक्ष्यत्। युक्तं चैतत्। न ह्यत्र समासाधिकारोऽस्ति येन समासः स्यात्। अस्मिन् पक्षे मलोपवचने च सार्थकम्॥—पूजनादित्येव पूजितपरिग्रहे सिद्ध इति। पूजनस्य पूजितापेक्षत्वादिति भावः॥—अनन्तरपूजितलाभार्थमिति। 'पूजनात्पूजितम्' इति सूत्रे सामान्यगतमानन्तर्यविशेषणं विज्ञायत इति भावः॥ कथं पुनः पञ्चमीनिर्देशे व्यवहितस्य प्रसङ्ग इत्याह—एतदेवेति। ज्ञापक-

१ 'नानाप्रयोजने विनियोगे' इत्यपि क्वचित्पाठः।

३९७२ । **सगतिरपि तिङ्** ।८।१।६८। पूजनेभ्यः काष्ठादिभ्यस्तिङन्तं पूजितमनुदात्तम् । यत्काष्ठां प्रपचति । 'तिङ्ङतिङः' ३९३२ इति निघातस्य 'निपातैर्यत्–' ३९३४ इति निषेधे प्राप्ते विधिरयम् । सगतिग्रहणाच्च गतिरपि निहन्यते । ❀ **गतिग्रहणे उपसर्गग्रहणमिष्यते** । नेह—यत्काष्ठां शुक्लीकरोति ।

३९७३ । **कुत्सने च सुप्यगोत्रादौ** ।८।१।६९। कुत्सने च सुबन्ते परे सगतिरगतिरपि तिङनुदात्तः । पचति पूति । प्रपचति पूति । पचति मिथ्या । कुत्सने किम् । प्रपचति शोभनम् । सुपि किम् । पचति क्लिश्नाति । अगोत्रादौ किम् । पचति गोत्रम् । ❀ **क्रियाकुत्सन इति वाच्यम्** । कर्तुः कुत्सने मा भूत् । पचति पूतिर्देवदत्तः । ❀ **पूतिश्चानुबन्ध इति वाच्यम्** । तेनायं चकारानुबन्धत्वादन्तोदात्तः । ❀ **वा बह्वर्थमनुदात्तमिति वाच्यम्** । पचन्ति पूति ।

३९७४ । **गतिर्गतौ** ।८।१।७०। अनुदात्तः । अभ्युद्धरति । गतिः किम् । दत्तः पचति । गतौ किम् । आमन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः ।

३९७५ । **तिङि चोदात्तवति** ।८।१।७१। गतिरनुदात्तः । यत्प्रपचति । तिङ्ग्रहणमुदात्तवतः परिमाणार्थम् । अन्यथा हि यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गतिस्तत्र धातावेवोदात्तवति स्यात् प्रत्यये न स्यात् । उदात्तवति किम् । प्रपचति ॥ इति तिङन्तस्वराः ॥

---

## स्वरसंचारप्रकारः ।

अथ वैदिकवाक्येषु स्वरसंचारप्रकारः कथ्यते—'अग्निमीळे–' इति प्रथमा ऋक् । तत्रा[illegible] (फि० १) 'फिषः'–इत्यन्तोदात्त इति माधवः । वस्तुतस्तु घृतादित्वात् । व्युत्पत्तौ तु 'नि'प्रत्ययस्वरेण, अम् सुप्त्वादनुदात्तः, 'अमि पूर्वः' १९४ इत्येकादेशस्तु 'एकादेश उदात्तेन–' ३६५५ इत्युदात्तः । ईळे—'तिङ्ङतिङः' ३९३२ इति निघातः । संहितायां तु 'उदात्तादनुदात्तस्य–' ३६५७ इतीकारः स्वरितः, 'स्वरितात्संहितायाम्–' ३६६५ इति 'ळे' इत्यस्य प्रचयापरपर्याया एकश्रुतिः । पुरःशब्दोऽन्तोदात्तः, 'पूर्वाधरावराणाम्–' १९७५ इत्यसिप्रत्ययस्वरात् । हितशब्दोऽपि धाञो निष्ठायां 'दधातेर्हिः–' ३०७६ इति ह्यादेशे प्रत्ययस्वरेणान्तोदात्तः । 'पुरोऽव्ययम्–' ७६९ इति संज्ञायां 'कुगति–' ७६२ इति समासे समासान्तोदात्ते 'तत्पुरुषे तुल्यार्थ–' ३७३३ इत्यव्ययपूर्वपदप्रकृतिस्वरे 'गतिकारकोपपदात्कृत्–' ३८७० इति कृदुत्तरपदप्रकृतिस्वरे थाथादिस्वरे च पूर्वपूर्वोपमर्देन प्राप्ते 'गतिरनन्तरः' ३७८० इति पूर्वपदप्रकृतिस्वरः । पुरःशब्दोकारस्य संहितायां प्रचये प्राप्ते 'उदात्तस्वरितपरस्य सन्नतरः' ३६६६ इत्यनुदात्ततरः । यज्ञस्य—नङः प्रत्ययस्वरः, विभक्तेः

---

फलं तु 'यद्वृत्तान्नित्यम्' इत्युक्तम् ॥ **३९७२ सगति–॥ यत्काष्ठां पचतीति** । 'ये मलोपश्च' इत्यनेन वाक्येन मलोपमाहुस्तेऽपि तिङन्ते परतो नैव लोपमिच्छन्ति ॥—**सगतिग्रहणाच्च गतिरपि निहन्यत इति** । तुल्ययोगे अत्र सहशब्दः । यत्र तुल्ययोगे सहशब्दस्तत्र द्वयोरपि कार्ययोगो भवति । तद्यथा—सपुत्रो भोज्यतामित्युक्ते पुत्रोऽपि भोज्यते । अपिग्रहणं यत्र गतिर्न युज्यते तत्र केवलस्यापि तिङन्तस्य यथा स्यात्, गतिप्रयोगे तु द्वयोः सहैव भवति । तिङ्ग्रहणं पूर्वयोगस्यातिङ्विषयत्वज्ञापनार्थम् ॥ **३९७३ कुत्सने–।** पदादिति निवृत्तम् ॥—**पचति क्लिश्नातीति** । अत्र समानवाक्यत्वस्य सामर्थ्यस्य वाऽभावादेवाप्राप्तेः सुपीति स्पष्टार्थम् ॥—**कर्तुः कुत्सने मा भूत् । पचति पूतिर्देवदत्त इति** । कर्तृत्वमत्र कुत्स्यते—अस्येदमयुक्तमिति । क्रिया तु शोभनैव ॥—**पूतिश्चानुबन्ध इति** । चकारानुबन्ध इत्यर्थः । तिबन्तपूतिशब्द आद्युदात्तः । 'वशेस्तिप्' इति तिप् बाहुलकात्पूञोऽपि भवति । तस्मादेव[1] गुणाभावः । तस्य निघातनिमित्तस्यान्तोदात्तत्वं यथा स्यादिति चित्त्वमुपसंख्यायते ॥—**वा बह्वर्थमिति** । बहुवचनान्तं तिङन्तं वाऽनुदात्तं स्यात् । यदा तिङन्तस्य निघातस्तदा पूतिरन्तोदात्तः । अन्यदा त्वाद्युदात्तः ॥ **३९७४ आमन्द्रैरिति** । अत्र याहीत्येतत्प्रति क्रियायोगादाङित्येष गतिः ॥ **३९७५ तिङि–।** उदात्तवति तिङन्ते परे गतिर्निहन्यते । 'निपाता आद्युदात्ताः' इत्यस्यापवादः ॥—**यत्प्रपचतीति** । 'निपातैर्यद्यदि–' इति निघातप्रतिषेधात्तिङन्तमुदात्तवत् ॥ ननु तिङ्ग्रहणं व्यर्थम् । न च तिङन्ते यथा स्यात् मन्द्रशब्दे मा भूत्, 'आमन्द्रैरिन्द्र हरिभिर्याहि' इति मन्द्रशब्दो रक्प्रत्ययान्तोन्तोदात्त इति वाच्यम् । 'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः' इति वचनात् स्वसंबन्धिनमाक्षिपतीति क्रियावाचिन्येवोदात्तवति भविष्यति । न च कृदन्तेऽतिप्रसङ्गः । तत्र कृत्स्वरथाथादिस्वरगतिस्वरेषु कृतेषु शेषनिघातेन गतिर्निहन्यत एव । तस्मान्नार्थस्तिङ्ग्रहणेन–इत्याशङ्क्याह—**तिङ्ग्रहणमिति** । परिमाणमियत्ता । परिमाणार्थत्वमेव स्पष्टयति—**अन्यथा हीति** । अक्रियमाणे तिङ्ग्रहणे धातुरेव क्रियावाचित्वाद्गतिसंज्ञानिमित्तमिति तत्रैवोदात्तवति निघातः स्यात्, न प्रत्यये । तिङ्ग्रहणे कृते तु यं धातुं प्रति गतित्वं तद्धटके तिङन्ते उदात्तवति परे इत्यर्थो जायते, तेन यत्प्रकरोतीत्यादौ धातोः शेषनिघातेनानुदात्तत्वेऽपि तिङन्तस्य उप्रत्ययस्वरेण मध्योदात्तत्वाद्गतेर्निघातः सिद्ध इत्याहुः ॥—**प्रपचतीति** । 'तिङ्ङतिङः' इति निघातः ॥ **इति सुबोधिन्यां तिङन्तस्वराः ॥**

**ईळे इति** । 'ईड स्तुतौ' लडुत्तमैकवचनम्—इट्, टेरेत्वं । 'द्वयोश्चास्य स्वरयोः–' इति प्रातिशाख्येन ळः ॥—**यज्ञस्येति** ।

---

१ तस्मादेव—बाहुलकादेव ।

सुप्त्वादनुदात्तत्वे स्वरितत्वम् । **देवम्**—पचाद्यच्, फिट्स्वरेण प्रत्ययस्वरेण चित्स्वरेण वाऽन्तोदात्तः । **ऋत्विक्**शब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः । होतृशब्दस्तृन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः । **रत्न**शब्दो ( फि० २६ ) 'नब्विषयस्य-' इत्याद्युदात्तः । रत्नानि दधातीति **रत्नधाः**, समासस्वरेण कृदुत्तरपदप्रकृतिस्वरेण वाऽन्तोदात्तः । तमपः पित्त्वादनुदात्तत्वे स्वरितप्रचयौ—इत्यादि यथाशास्त्रमुन्नेयम् ॥ इति स्वरसंचारः ।

**इत्थं वैदिकशब्दानां दिङ्मात्रमिह दर्शितम् ।**
**तदस्तु प्रीतये श्रीमद्भवानीविश्वनाथयोः ॥**

इति श्रीसिद्धान्तकौमुद्यां श्रीभट्टोजिदीक्षितविरचितायां वैदिकस्वरप्रक्रिया समाप्ता ॥

'यजयाच-' इति यजेर्नङ् ॥—**विभक्तेः सुप्त्वादनुदात्तत्वे स्वरितत्वमिति ।** 'स्वरितो वाऽनुदात्त-' इत्यनेन ।—**ऋत्विगिति ।** ऋतावुपपदे यजेः क्विन् ऋत्विगित्यनेन । 'वचिस्वपि-' इति संप्रसारणम् ॥—**नब्विषयस्येति ।** इसन्तवर्जितस्य नित्यनपुंसकस्यादिरुदात्त इति सूत्रार्थः ॥ **इति स्वरसंचारः ॥**

इति श्रीमन्मौनिकुलतिलकायमानश्रीगोवर्धनभट्टात्मजरघुनाथात्मजेन जयकृष्णेन कृतायां सुबोधिन्याख्यायां सिद्धान्तकौमुदीव्याख्यायां वैदिकस्वरप्रक्रिया समाप्ता ॥

॥ श्रीः ॥

भैरवमिश्रकृतचन्द्रकलाव्याख्यासंवलिता

# सिद्धान्तकौमुदी ।

## लिङ्गानुशासनम्

### स्त्र्यधिकारः ।[1]

१ । लिङ्गम् । २ । स्त्री । अधिकारसूत्रे एते । ३ । ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः । ऋकारान्ता एते पञ्चैव स्त्रीलिङ्गाः । स्वस्रादिपञ्चकस्यैव ङीब्निषेधेन 'कर्त्री' इत्यादेर्ङीपा ईकारान्तत्वात् । तिसृचतस्रोस्तु स्त्रियामादेशतया विधानेऽपि प्रकृत्योस्त्रिचतुरोऋदन्तत्वाभावात् । ४ । अन्यूप्रत्ययान्तो धातुः । अनिप्रत्ययान्त ऊप्रत्ययान्तश्च धातुः स्त्रियां स्यात् । अवनिः । चमूः । प्रत्ययग्रहणं किम् । देवयतेः क्विप्, द्यूः । विशेष्यलिङ्गः । ५ । अशनिभरण्यरणयः पुंसि च । इयमयं वा अशनिः । । ६ । मिन्यन्तः । मिप्रत्ययान्तो निप्रत्ययान्तश्च धातुः स्त्रियां स्यात् । भूमिः । ग्लानिः । ७ । वह्निवृष्ण्यग्नयः पुंसि । पूर्वस्यापवादः । ८ । श्रोणियोन्यूर्मयः पुंसि च । इयमयं वा श्रोणिः । ९ । क्तिन्नन्तः । स्पष्टम् । कृतिः । इत्यादि । १० । ईकारान्तश्च । ईप्रत्ययान्तः स्त्री स्यात् । लक्ष्मीः ।

---

श्रीः ॥ १-२ मूले[2]—**अधिकारसूत्रे एते इति** । उभयोरधिकारसूत्रत्वेऽपि 'लिङ्गम्' इत्याशास्त्रसमाप्तेः, द्वितीयस्तु 'ताराधारा-' ३३ इति यावदिति विवेकः । अत्रापि लिङ्गं शास्त्रीयं प्रागुक्तमेव विवक्षितम् । तच्चार्थनिष्ठं तत्तच्छब्दप्रतिपाद्यम् । तत्रायं विशेषः—शब्दशक्तिस्वभावेन कस्यचित् सर्वलिङ्गप्रतिपादकता, कस्यचिदेकलिङ्गप्रतिपादकता, कस्यचिद्द्विलिङ्गयुक्तार्थप्रतिपादकता चेति ॥ ३ यद्यपि शब्दानामर्थानां चानन्त्यात्प्रातिस्विकरूपेण तेषां ज्ञानं योगिनां युक्तयुञ्जानत्वेन व्यवहारयोग्यानामेव संभवति, न त्वस्मदादीनामज्ञानाम्, तथाप्यस्मदाद्युद्देशेन शास्त्रप्रवृत्तेर्यथा लघुनोपायेनास्मदादीनां ज्ञानं संभवेत्तथाह—**ऋकारान्ता इत्यादिना** । 'स्त्री' इति पदमेषु सूत्रेषु संबध्यते । तच्च भावप्रधाननिर्देशेन स्त्रीत्वपरम् । तस्य लिङ्गपदेन बहुव्रीहिसमासे **'स्त्रीलिङ्गाः'** इति सामानाधिकरण्येन व्यवहारः । मात्रादिशब्दानां विशेषत उपादानात् 'पञ्च' इति लब्धम् । अवधारणस्य तु यथा लाभस्तं प्रकारमाह—**स्वस्रादिपञ्चकस्यैवेति** ॥—**ङीब्निषेधेन**—'न षट्स्वस्रादिभ्यः' इति सूत्रेण ङीपो निषेधेन ॥—**कर्त्रीत्यादेरिति** । अनेन कर्तृपदेन यौगिकाः शब्दा ऋकारान्ताः परिग्राह्याः । रूढस्य क्रोष्टृप्रभृतिशब्दस्यादिना परिग्रहः । न च सप्तैवेति वक्तव्ये पञ्चैवेति नियमानुपपत्तिरिति वाच्यम् । आदेशत्वानाक्रान्ताः पञ्चैवेत्यर्थात् । यद्यपि भाष्यसंमते 'तृज्वत्क्रोष्टुः' इत्यादित्रिसूत्र्याः प्रयोगनियमार्थत्वपक्षे स्त्रियां प्रवर्तमानस्य क्रोष्टृशब्दस्याप्यादेशत्वानाक्रान्तत्वम्, तथापि परिनिष्ठिते शब्देऽयमीकारान्त एव प्रयुज्यत इति भावः ॥ ४ 'उणादयो बहुलम्' इति संगृहीतसाधुत्वकानां व्युत्पन्नत्वं शास्त्रान्तरे प्रसिद्धमिति तदभिप्रायेणाह—**अन्यू इत्यादि** ॥ **अवनिः** । 'अर्तिसृधृधम्यम्यश्यवितृभ्योऽनिः' इत्यनिः ॥—**चमूरिति** । 'कृषिचमितनिधनिसर्जिभ्य ऊः' इत्यूः । दयूः । अत्र वकारस्य 'च्छ्वोः-' इत्यूठ् ॥ ५ **अशनिभर**—। पूर्वसूत्रापवादोऽयम् ॥ ६ **मिन्यन्तः । भूमिः**—'नियो मिः' इत्यतो मिरित्यनुवर्त्य विहितो 'भुवः कित्' इति मिः । **ग्लानिः**—'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्' इति निः ॥ ७ वह्न्यादिशब्दानां निप्रत्ययान्तत्वेन स्त्रीत्वे प्राप्ते आह—**वह्निवृष्णि**—। **वृष्णिः** । 'सृवृषिभ्यां कित्' इति निः । **अग्निः** । 'अङ्गेर्नलोपश्च' इति निः ॥ ८ **श्रोणियोन्यू**—। **श्रोणिः । योनिः** । 'वहिश्रि-' इतीनिः । **ऊर्मिः** । 'अर्तेरूच्च' इति मिः ॥ १० **ईकारान्तश्च** । अत्र ईकारः प्रत्यय एव, पूर्वोत्तरसाहचर्यात् ॥—**लक्ष्मीरिति** । अत्र 'लक्षेर्मुट् च' इति सूत्रे 'अवितृस्तृतन्त्रिभ्य ईः' इत्यत ईरित्यस्यानुवृत्त्या तेनेकारः प्रत्ययः । एवमव्यादिधातुभ्य ईकारप्रत्ययेऽपि स्त्रीत्वम् । तद्यथा—अवीर्नारी रजस्वला, तरीर्नौः, स्तरी धूमः, तन्त्रीर्वीणादेर्गुणः । न च 'यापोः किद्द्वे च' इति सूत्रविहितेकारान्तस्यापि स्त्रीत्वापत्तिरिति वाच्यम् । पुंस्त्वाधिकारोक्तेन 'योपधः' 'पोपधः' इत्याभ्यां परत्वाद्बाधात् । यूप

---

१ एतदुत्तरं '**ईदन्तश्च** । ईदन्तश्च प्रातिपदिकं स्त्री स्यात् । देवी । कुरुचरी । भद्रचरी । आग्नेयी । कौबेरी । वारुणी । इत्यादि' । इत्यधिकः पाठः कतिपयपुस्तकेषु । २ **मूले इति** । कौमुद्यामित्यर्थः । भैरवमिश्रकृतशेखरव्याख्यायामेतदिति 'मूले' इत्यनुपज्यते ।

११ । ऊङाबन्तश्च । कुरूः । विद्या । १२ । य्वन्तमेकाक्षरम् । श्रीः । श्रूः[1] । एकाक्षरं किम् । पृथुश्रीः । १३ । विंशत्यादिरा नवतेः । इयं विंशतिः ॥ त्रिंशत् । चत्वारिंशत् । पञ्चाशत् । षष्टिः । सप्ततिः । अशीतिः । नवतिः । १४ । दुन्दुभिरक्षेषु । इयं दुन्दुभिः । अक्षेपु किम् । अयं दुन्दुभिः । वाद्यविशेषोऽसुरो वेत्यर्थः । १५ । नाभिरक्षत्रिये । इयं नाभिः । १६ । उ[2]भावन्यत्र पुंसि । दुन्दुभिर्नाभिश्चोक्तविषयादन्यत्र पुंसि स्तः । नाभिः क्षत्रियः । कथं तर्हि 'समुल्लसत्पङ्कजपत्रकोमलैरुपाहितश्रीण्युपनीविनाभिभिः' इति भारविः ? उच्यते । 'दृढभक्तिः' इत्यादाविव 'कोमलैः' इति सामान्ये नपुंसकं बोध्यम् । वस्तुतस्तु 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति भाष्यात्पुंस्त्वमपीह साधु । अत एव—

नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् ।
द्वयोः प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदे ॥ इति

मेदिनी ।

रभसोऽप्याह—

मुख्यराट्क्षत्रिये नाभिः पुंसि प्राण्यङ्गके द्वयोः ।
चक्रमध्ये प्रधाने च स्त्रियां कस्तूरिकामदे ॥ इति ।

एवमेवंविधेऽन्यत्रापि बोध्यम् । १७ । तलन्तः । अयं स्त्रियां स्यात् । शुक्लस्य भावः शुक्लता । ब्राह्मणस्य कर्म ब्राह्मणता । ग्रामस्य समूहो ग्रामता । देव एव देवता । १८ । भूमिविद्युत्सरिल्लतावनिताभिधानानि । भूमिर्भूः । विद्युत् सौदामनी । सरिन्निम्नगा । लता वल्ली । वनिता योषित् । १९ । यादो नपुंसकम् । यादःशब्दः सरिद्वाचकोऽपि क्लीबे स्यात् । २० । भाःस्रुक्स्रग्दिगुष्णिगुपानहः । एते स्त्रियां स्युः । इयं भाः । इत्यादि । २१ । स्थूणोर्णे नपुंसके च । एते स्त्रियां क्लीबे च स्तः । स्थूणा, स्थूणम् । ऊर्णा, ऊर्णम् । तत्र स्थूणा काष्ठमयी द्विकर्णिका । ऊर्णा तु मेषादिलोम । २२ । गृहशशाभ्यां क्लीबे । नियमार्थमिदम् । गृहशशपूर्वे स्थूणोर्णे यथासंख्यं नपुंसके स्तः । गृहस्थूणम् । 'शशोर्णं शशलोमनि' इत्यमरः । २३ । प्रावृड्विप्रुड्रुट्तृड्विट्त्विषः । एते स्त्रियां स्युः । २४ । दर्विविदिवेदिखनिशान्यश्रिवेशिकृ[3]ष्योषधिकट्यङ्गुलयः । एते स्त्रियां स्युः । पक्षे ङीष् । दर्वी । दर्विः । इत्यादि । २५ । तिथिनाडिरुचिवीचिनालिधूलिकिकिकेलिछ[4]विरात्र्यादयः । एते प्राग्वत् । इयं तिथिः । इत्यादि । अमरस्त्वाह—'तिथयो द्वयोः' इति । तथा च भारविः—'तस्य भुवि बहुतिथास्तिथयः' इति । स्त्रीत्वे हि बहुतिथ्य इति स्यात् । श्रीहर्षश्च—'निखिलान्निशि पौर्णिमातिथीन्' इति । २६ । शष्कुलिराजिकुट्यशनिवर्तिभ्रुकुटित्रु[5]टिवलिपङ्क्तयः । एतेऽपि स्त्रियां स्युः । इयं शष्कुलिः । २७ । प्रतिपदापद्विपत्सम्पच्छरत्संसत्परिषदुषःसंवित्क्षुत्पुन्मुत्समिधः । इयं प्रतिपत् । इत्यादि । (उ[6]षा उच्छती । उषा प्रातरधिष्ठात्री देवता) । २८ । आशीर्धूःपूर्गीर्द्वारः । इयमाशीः । इत्यादि । २९ । अप्सुमनस्स-

इत्यादौ प्रथमस्य, समय इत्यादौ द्वितीयस्य चारितार्थ्यात् । एवं च पपीययीशब्दस्य पुंस्त्वेऽपि न क्षतिः ॥ ११ **ऊङाबन्तश्च** । 'ऊङुतः' इत्यूङ् । आब्ग्रहणेन टाप्डाप्चापां ग्रहणम् ॥ **१२ य्वन्तमेकाक्षरम्** । ईकारोऽत्र प्रत्ययः, ऊकारसाहचर्यात् ॥ **१३ विंशत्यादिरानवतेः** । विंशत्यादयः 'पङ्क्तिविंशति–' इति सूत्रनिर्दिष्टाः ॥ **१४ दुन्दुभिरक्षेषु** । अक्षेपु बोधनीयेषु यः प्रयुज्यत इत्यर्थः ॥ **१५ नाभिरक्षत्रिये** । क्षत्रियभिन्ने यो नाभिशब्दः प्रयुज्यते स स्त्रियां स्यात् ॥—**इयं नाभिरिति** । पुरुषावयवे इदम् ॥ **१६ उभावन्यत्र पुंसि** । इदं स्पष्टार्थम् । पूर्वसूत्रयोः 'अक्षेषु' 'अक्षत्रिये' इत्यभिधानेन सिद्धेः ॥—**कथं तर्हीति** । अत्र यत्कोमलैरिति तदनुपपन्नम्, स्त्रीलिङ्गनाभिशब्दार्थविशेषणत्वात् ॥—**सामान्य इति** । लिङ्गविशेषाविवक्षया नपुंसकं कोमलैरिति प्रसाध्य तस्य नाभिशब्दार्थविशेषणत्वं स्वीकार्यम् ॥ विशेष्यप्रतिपादकस्य यथा पुंस्त्वं तथाऽस्यापि भविष्यतीत्याशयेन समाधानान्तरमाह—**वस्तुतस्त्विति** ॥—**चक्रमध्यक्षत्रिययोरिति**–अत्र चक्रमध्यं च क्षत्रियश्चेति द्वन्द्वः । अत एव 'प्राण्यङ्गके द्वयोः' इति संगच्छते ॥ **१७ तलन्तः** । 'तस्य भावस्त्वतलौ' इति सूत्रविहिततल्प्रत्ययान्तं स्त्रियां स्यात् ॥ **१८ भूमिविद्युदिति** । अत्राभिधानशब्दो भूम्यादिशब्दशक्यतावच्छेदकधर्मावच्छिन्नशक्तपरः । तेन प्रमेयशब्दव्यावृत्तिः । एवमन्यत्रापि बोध्यम् ॥ **१९ यादो नपुंसकम्** । पूर्वस्यापवादः ॥ **२१ स्थूणोर्णे नपुंसके च** । चकारेण 'स्त्रियाम्' इत्यस्यानुकर्षणार्थमस्यात्र लेखः ॥ **२३ प्रावृडिति** । स्त्रीशब्दस्य पूर्वत्र चानुकृष्टत्वेऽपि 'स्वरितेनाधिकारः' इत्यस्याधिकः कार इति व्याख्यानस्यापि प्रसिद्धत्वादत्र संबन्धः ॥ **२४ दर्विविदि** । दर्विशब्दो 'वृदृभ्यां विन्' इति विन्नन्तः, तस्मात् 'सर्वतोऽक्तिन्नर्थादित्येके' इति विकल्पेन ङीष्, **दर्वी** इति ॥ **२५ तिथिनाडि–**॥—**एते प्राग्वदिति** । स्त्रियां स्युरित्यर्थः ॥ **२९ पुंस्ये-**

१ मुद्रितपुस्तकेष्वखिलेष्वपि 'भ्रूः' इति पाठो दृश्यते । स च प्रामादिकः, ऊकारस्यात्र प्रत्ययस्यैव ग्रहणात् । भ्रूशब्दश्च भूधातोः क्विपि निष्पन्न इति ऊप्रत्ययान्तत्वाभावान्न तस्य ग्रहणम् । 'भ्रमेर्डूः' इति डूप्रत्ययान्तस्य 'भ्रू'शब्दस्य ग्रहणञ्च युज्यते । २ 'उभावप्यन्यत्र पुंसि' इत्याधुनिकः पाठः । ३ 'कृष्योषधि–' इत्यपि पाठः । ४ 'छविनीविरात्र्यादयः' इति पाठान्तरम् । ५ 'त्रुटिलिपिपंक्तयः' इति पाठान्तरम् । ६ सूत्रमेतत्प्राचीनपुस्तकेषु दृश्यते । मुद्रितेषु च सूत्रत्वेन नोल्लेखः ।

**भासिकतावर्षाणां बहुत्वं च**। अबादीनां पञ्चानां स्त्रीत्वं स्याद्बहुत्वं च । आप इमाः । 'स्त्रियः सुमनसः पुष्पम्' । 'सुमना मालती जातिः' । देववाची तु पुंस्येव, 'सुपर्वाणः सुमनसः' । बहुत्वं प्रायिकम्, 'एका च सिकता तैलदाने असमर्था' इति अर्थवत्सूत्रे भाष्यप्रयोगात् । 'समांसमां विजायते' १८१३ इत्यत्र समायां समायामिति भाष्याच्च । 'विभाषाघ्राधेट्' २३७६ इति सूत्रे 'अघ्रासातां सुमनसौ' इति वृत्तिव्याख्यायां हरदत्तोऽप्येवम् । ३० । **स्रक्त्वक्ज्योग्वाग्यवागूनौस्फिचः**। इयं स्रक् त्वक् ज्योक् वाक् यवागूः नौः स्फिक् । ३१ । **तृटिसीमासंबध्याः** । इयं तृटिः । सीमा । संबध्या । ३२ । **चुल्लिवेणिखार्यश्च** । स्पष्टम् । ३३ । **ताराधाराज्योत्स्नादयश्च** । ३४ । **शलाका स्त्रियां नित्यम्** । नित्यग्रहणमन्येषां क्वचिद्व्यभिचारं ज्ञापयति ॥ **इति स्त्र्यधिकारः** ॥

---

## पुंलिङ्गाधिकारः ।

३५ । **पुमान्** । अधिकारोऽयम् । ३६ । **घञबन्तः** । पाकः । त्यागः । करः । गरः । भावार्थ एवेदम् । नपुंसकत्वविशिष्टे भावे क्तल्युड्भ्यां स्त्रीत्वविशिष्टे तु क्तिन्नादिभिर्बाधेन परिशेषात् । कर्मादौ तु घञाद्यन्तमपि विशेष्यलिङ्गम् । तथा च **भाष्यम्**—'संबन्धमनुवर्तिष्यते' इति । ३७ । **घाजन्तश्च** । विस्तरः । गोचरः । चयः । जयः । इत्यादि । ३८ । **भयलिङ्गभगपदानि नपुंसके** । एतानि नपुंसके स्युः । भयम् । लिङ्गम् । भगम् । पदम् । ३९ । **नङन्तः** । नङ्प्रत्ययान्तः पुंसि स्यात् । यज्ञः । यत्नः । ४० । **याच्ञा स्त्रियाम्** । पूर्वस्यापवादः । ४१ । **क्यन्तो घुः** । किप्रत्ययान्तो घुः पुंसि स्यात् । आधिः । निधिः । उदधिः । क्यन्तः किम् । दानम् । घुः किम् । जर्झिर्बीजम् । ४२ । **इषुधिः स्त्री च** । इषुधिशब्दः स्त्रियां पुंसि च स्यात् । पूर्वस्यापवादः । ४३ । **देवासुरात्मस्वर्गगिरिसमुद्रनखकेशदन्तस्तनभुजकण्ठखड्गशरपङ्काभिधानानि** । एतानि पुंसि स्युः । देवाः–अमराः । असुरा दैत्याः । आत्मा क्षेत्रज्ञः । स्वर्गो नाकः । गिरिः पर्वतः । समुद्रः–अब्धिः । नखः कररुहः । केशः शिरोरुहः । दन्तो दशनः । स्तनः कुचः । भुजो दोः । कण्ठो गलः । खड्गः करवालः । शरो मार्गणः । पङ्कः कर्दमः । इत्यादि । ४४ । **त्रिविष्टपत्रिभुवने नपुंसके** । स्पष्टम् । तृतीयं विष्टपं–त्रिविष्टम्, स्वर्गाभिधानतया पुंस्त्वे प्राप्ते अयमारम्भः । ४५ । **द्यौः स्त्रियाम्** । द्योदिवोस्तत्रेणोपादानमिदम् । ४६ । **इषुबाहू स्त्रियां च** । चात्पुंसि । ४७ । **बाणकाण्डौ नपुंसके च** । चात्पुंसि । 'त्रिविष्टप–' इत्यादिचतुःसूत्री 'देवासुर–' इत्यस्यापवादः । ४८ । **नान्तः** । अयं पुंसि । राजा । तक्षा । न च चर्मवर्मादिष्वतिव्याप्तिः, 'मन्व्यच्कोऽकर्तरि' १४८ इति नपुंसकप्रकरणे वक्ष्यमाणत्वात् । ४९ । **क्रतुपुरुषकपोलगुल्फमेघाभिधानानि** । क्रतुरध्वरः । पुरुषो नरः । कपोलो गण्डः । गुल्फः प्रपदः । मेघो नीरदः । ५० । **अभ्रं नपुंसकम्** । पूर्वस्यापवादः । ५१ । **उकारान्तः** । अयं पुंसि स्यात् । प्रभुः । इक्षुः । 'हनुर्हट्टविलासिन्यां नृत्यारम्भे गदे स्त्रियाम् । द्वयोः कपोलावयवे' इति मेदिनी । 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः । एवंजातीयकविशेषवचनानाक्रान्तस्तु प्रकृतसूत्रस्य विषयः । उक्तं च–'लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः' इति । एवमन्यत्रापि । ५२ । **धेनुरज्जुकुहु[1]सरयुतनु[2]करेणुप्रियङ्गवः स्त्रियाम्** । ५३ । **समासे रज्जुः पुंसि च** । कर्कटरज्ज्वा । कर्कट-

---

वेति । 'देवासुरात्म–' (लि. ४३) इत्यनेन पुंस्त्वबोधकेन परत्वाद्बाधादिति भावः ॥—**भाष्यप्रयोगादिति** । तेन भाष्येण सूत्रनिर्दिष्टानां बहुत्वं प्रायिकमिति कल्प्यते । तेनान्यत्र बहुलाभावेऽपि न क्षतिः ॥ ३४ **क्वचिद्व्यभिचारमिति** । तेन तिथिशब्दस्य पूर्वत्र यथा पुंस्त्वं प्रदर्शितं तथाऽन्येषामन्यलिङ्गत्वेऽपि साधुत्वमिति सूचयति ॥ **इति लिङ्गानुशासने स्त्र्यधिकारः** ॥

३६ **भावार्थ एवेति** । भावे यो घञ् तदन्तस्य पुंस्त्वमित्युक्तम् । एतल्लाभप्रकारमाह—**नपुंसकेत्यादि** ॥ ३८ **भयलिङ्गेत्यादि** । पूर्वस्यापवादोऽयम् ॥ ४१ **क्यन्तो घुः** । किप्रत्ययोऽन्तः परो यस्मात्तादृशो यो घुसंज्ञको धातुस्तद्घटितः पुमानित्यर्थः ॥ ४३ **देवासुरा**—। अत्र पङ्कशब्दान्तद्वन्द्वं कृत्वा तस्य षष्ठीसमासोऽभिधानशब्देन कर्तव्यः, अभिधानशब्दः करणल्युडन्तो वाचकशब्दपरः, तेन देवादिशब्दवाच्यतावच्छेदकेत्यादि पूर्ववद्बोध्यम् । शब्दस्वरूपापेक्षया च नपुंसकत्वम् ॥ ४४ **त्रिविष्टप** ॥—**स्वर्गाभिधानत्वात्पुंस्त्वे प्राप्तेऽस्यारम्भ इति** । अत एवाहामरसिंहः—'क्लीबे त्रिविष्टपम्' इति ॥ ४५ **द्यौः स्त्रियाम्** । अस्य स्वर्गाभिधानत्वात्पुंस्त्वस्य पूर्वेण प्राप्तेऽस्यारम्भः ॥ ४६ **इषुबाहू** । शरभुजपर्यायाविमौ ॥ ४७ **बाणकाण्डौ**–। शराभिधानोऽयम् ॥ ४८ **नान्त इति** । नान्तप्रत्ययान्त इत्यर्थः ॥ ५० **अभ्रं नपुंसकमिति** । मेघाभिधानविषये पूर्वस्यापवाद इत्यर्थः ॥ ५१ **लिङ्गशेषविधिरिति** । लिङ्गस्य शेषः=अवशेषस्तस्य विधिः, व्यापी=काण्ड-

---

१ 'कुहू' इति दीर्घान्तपाठोऽपि क्वचित् । २ '**तनुरेणुप्रियङ्गवः**' इति मुद्रितपाठः । स च प्रामादिकः, रेणुशब्दस्य 'रेणुर्द्वयोः स्त्रियां धूलिः' इति पुंस्त्वाभिधानात् ।

रज्जुना । ५४ । **श्मश्रुजानुवसुस्वाद्वश्रुजतुत्रपुतालूनि नपुंसके च ।** ५५ । **वसु चार्थवाचि ।** अर्थवाचीति किम् । 'वसुर्मयूखाग्निधनाधिपेषु' । ५६ । **मद्गुमधुसीधुशीधुसानुकमण्डलूनि नपुंसके च ।** चात्पुंसि । अयं मद्गुः । इदं मद्गुः । ५७ । **रुत्वन्तः ।** मेरुः । सेतुः । ५८ । **दारुकशेरुजतुवस्तुमस्तूनि नपुंसके ।** 'रुत्वन्तः' इति पुंस्त्वस्यापवादः । इदं दारु । ५९ । **सक्तुर्नपुंसके च ।** चात्पुंसि । सक्तुः । सक्तु । ६० । **प्राग्रश्मेरकारान्तः ।** 'रश्मिदिवसाभिधानानि' इति वक्ष्यति, प्रागेतस्मादकारान्त इत्यधिक्रियते । ६१ । **कोपधः ।** कोपधोऽकारान्तः पुंसि स्यात् । स्तबकः । कल्कः । ६२ । **चिबुकशालूकप्रातिपदिकांशुकोल्मुकानि नपुंसके ।** पूर्वसूत्रापवादः । ६३ । **कण्टकानीकसरकमोदकचषकमस्तकपुस्तकतडाकनिष्कशुष्कवर्चस्कपिनाकभाण्डकपिण्डककटकशण्डकपिटकतालकफलकपुलाकानि नपुंसके च ।** चात्पुंसि । अयं कण्टकः । इदं कण्टकम् । इत्यादि । ६४ । **टोपधः ।** टोपधोऽकारान्तः पुंसि स्यात् । घटः । पटः । ६५ । **किरीटमुकुटललाटवटवीटशृङ्गाटकराटलोष्टानि नपुंसके ।** किरीटमित्यादि । ६६ । **कुटकूटपटकपटकवाटकर्पटतटनिकटकीटकटानि नपुंसके च ।** चात्पुंसि । कुटः । कुटम् । इत्यादि । ६७ । **णोपधः ।** णोपधोऽकारान्तः पुंसि स्यात् । गुणः । गणः । पाषाणः । ६८ । **ऋणलवणपर्णतोरणरणोष्णानि नपुंसके ।** पूर्वसूत्रापवादः । ६९ । **कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचूर्णतृणानि नपुंसके च ।** चात्पुंसि । ७० । **थोपधः ।** रथः । ७१ । **काष्ठपृष्ठसिक्थोक्थानि नपुंसके ।** इदं काष्ठम् । इत्यादि । ७२ । **काष्ठा दिगर्था स्त्रियाम् ।** इमाः काष्ठाः । ७३ । **तीर्थप्रोथयूथगाथानि नपुंसके च ।** चात्पुंसि । अयं तीर्थः । इदं तीर्थम् । ७४ । **नोपधः ।** अदन्तः पुंसि । इनः । फेनः । ७५ । **जघनाजिनतुहिनकाननवनवृजिनविपिनवेतनशासनसोपानमिथुनश्मशानरत्ननिम्नचिह्नानि नपुंसके ।** पूर्वस्यापवादः । ७६ । **मानयानाभिधाननलिनपुलिनोद्यान[1]शयनासनस्थानचन्दनालानसमानभवनवसनसंभावन[2]विभावनविमानानि नपुंसके च ।** चात्पुंसि । अयं मानः । इदं मानम् । ७७ । **पोपधः ।** अदन्तः पुंसि । यूपः । दीपः सर्पः । ७८ । **पापरूपोडुपतल्पशिल्पपुष्पशष्पसमीपान्तरीपाणि नपुंसके ।** इदं पापम् । इत्यादि । ७९ । **शूर्पकुतपकुणपद्वीपविटपानि नपुंसके च ।** अयं शूर्पः । इदं शूर्पम् । इत्यादि । ८० । **भोपधः ।** स्तम्भः । कुम्भः । ८१ । **तलभं नपुंसकम् ।** पूर्वस्यापवादः । ८२ । **जृम्भं नपुंसके च ।** जृम्भम् । जृम्भः । ८३ । **मोपधः ।** सोमः । भीमः । ८४ । **रुक्मसिध्मयुग्मेध्मगुल्माध्यात्मकुङ्कुमानि नपुंसके ।** इदं रुक्मम् । इत्यादि । ८५ । **संग्रामदाडिमकुसुमाश्रमक्षेमक्षौमहोमोद्दामानि[3] नपुंसके च ।** चात्पुंसि । अयं संग्रामः । इदं संग्रामम् । ८६ । **योपधः ।** समयः । हयः । ८७ । **किसलयहृदयेन्द्रियोत्तरीयाणि नपुंसके ।** स्पष्टम् । ८८ । **गोमयकषायमलयान्वयाव्ययानि नपुंसके च ।** गोमयः । गोमयम् । ८९ । **रोपधः ।** क्षुरः । अङ्कुरः । ९० । **द्वाराग्रस्फारतक्रवक्रवप्रक्षिप्रक्षुद्रनारतीरदूरकृच्छ्ररन्ध्राश्रश्वभ्रभीरगभीरक्रूरविचित्रकेयूरकेदारोदराजस्रशरीरकन्दरमन्दारपञ्जरजठराजिरवैरचामरपुष्करगह्वरकुहरकुटीरकुलीरचत्वरकाश्मीरनीराम्बरशिशिरतन्त्रयन्त्रक्षत्रक्षेत्रमित्रकलत्रचित्रमूत्रसूत्रवक्त्रनेत्रगोत्राङ्गुलित्रभलत्रशस्त्रशास्त्रवस्त्रपत्रपात्र[4]छत्राणि नपुंसके ।** इदं द्वारम् । इत्यादि । ९१ । **शुक्रमदेवतायाम् ।** इदं शुक्रं=रेतः । ९२ । **चक्रवज्रान्धकारसारावारपारक्षीरतोमरशृङ्गारभृङ्गारमन्दारोशीरतिमिरशिशिराणि नपुंसके च ।** चात्पुंसि । चक्रः । चक्रम् । इत्यादि । ९३ । **षोपधः ।** वृषः । वृक्षः । ९४ । **शिरीषर्जीषाम्बरीषपीयूषपुरीषकिल्बिषकल्माषाणि नपुंसके ।** ९५ । **यूषकरीषमिषविषवर्षाणि नपुंसके च ।** चात्पुंसि । अयं यूषः । इदं यूषम् । इत्यादि । ९६ । **सोपधः ।** वत्सः । वायसः । महानसः । ९७ । **पनसबिसबुससाहसानि नपुंसके ।** ९८ । **चमस[5]रसनिर्यासोपवासकार्पासवासमासकांस[6]कंसमांसानि नपुंसके च ।** इदं चमसम् । अयं चमसः । इत्यादि । ९९ । **कंसं चाप्राणिनि ।** 'कंसोऽस्त्री पानभाजनम्' ।

---

ऽयस्य व्यापको यदि विशेषशास्त्रेण बाधितो न स्यादित्यर्थः ॥ ५४ **नपुंसके चेति ।** चात्पुंसि ॥ ५५ **वसु चार्थवाचि ।** अर्थवाचि वसुशब्दो नपुंसके वा द्रष्टव्यः ॥ ५७ **रुत्वन्तः ।** उकारो नकारेत्संज्ञकः । **मेरुः ।** सेतुरित्यत्र 'सितनिगमिमसिसच्यविधाञ्कुशिभ्यस्तुन्' इति तुन् । सूर्यवाचकः प्रथमः ॥ ५८ **दारुकशेरु–।** जन्वादित्वात् ( उ. सू. ५५२ ) रुप्रत्ययान्ता एते ॥ ९९ **कंसं चाप्राणिनि ।** कंसमिति शब्दस्य निर्देशात् 'नपुंसके च' इत्यस्य संबन्धः । अप्राणिनि वाच्ये

---

१ **'पुलिनाधानशय–'** इति प्राचीनलिखितपाठः । २ **'संभावनवितानविमानानि–'** इति पाठः । ३ **'होमोद्दामानि–'** इति मुद्रितपाठः । ४ **'पत्रपात्रक्षत्राणि'** इति पाठान्तरम् । ५ **'चमसांसरस–'** इति मुद्रितपाठः । ६ **'कासकांसमांसानि–'** इति मुद्रितपाठः । स च प्रामादिकः, उत्तरसूत्रानुरोधात् ।

प्राणिनि तु–कंसो नाम कश्चिद्राजा । १०० । **रश्मिदिवसाभिधानानि** । एतानि पुंसि स्युः । रश्मिर्मयूखः । दिवसो घस्रः । १०१ । **दीधितिः स्त्रियाम्** । पूर्वस्यापवादः । १०२ । **दिनाहनी नपुंसके** । अयमप्यपवादः १०३ । **मानाभिधानानि** । एतानि पुंसि स्युः । कुडवः । प्रस्थः । १०४ **द्रोणाढकौ नपुंसके च** । इदं द्रोणम् । अयं द्रोणः । १०५ । **खारीमानिके स्त्रियाम्** । इयं खारी । इयं मानिका । १०६ । **दाराक्षतलाजासूनां बहुत्वं च** । इमे दाराः । १०७ । **नाड्यपजनोपपदानि व्रणाङ्गपदानि** । यथासंख्यं नाड्याद्युपपदानि व्रणादीनि पुंसि स्युः । अयं नाडीव्रणः । अपाङ्गः । जनपदः । व्रणादीनामुभयलिङ्गत्वेऽपि क्लीबत्वनिवृत्त्यर्थं सूत्रम् । १०८ । **मरुद्गरुत्तरदृत्विजः** । अयं मरुत् । १०९ । **ऋषिराशिदृतिग्रन्थिक्रिमिध्वनि[1]बलिकौलिमौलिरविकविकपिमुनयः** । एते पुंसि स्युः । अयमृषिः । ११० । **ध्वजगजमुञ्जपुञ्जाः** । एते पुंसि । १११ । **हस्तकुन्तान्तव्रातवातदूतधूर्तसूतचूतमुहूर्ताः** । एते पुंसि । अमरस्तु 'मुहूर्तोऽस्त्रियाम्' इत्याह । ११२ । **षण्डमण्डकरण्डभरण्डवरण्डतुण्डगण्डमुण्डपाषण्ड[2]शिखण्डाः** । अयं षण्डः । ११३ **वंशांशपुरोडाशाः** । अयं वंशः । पुरो दाश्यते पुरोडाशः । कर्मणि घञ् । भवव्याख्यानयोः प्रकरणे 'पौरोडाशपुरोडाशात्ष्ठन्' १४५१ इति, विकारप्रकरणे 'व्रीहेः पुरोडाशे' १५२९ इति च निपातनात्, प्रकृतसूत्र एव निपातनाद्वा दस्य डत्वम् । 'पुरोडाशभुजामिष्टमिष्टिकर्तुमलंतराम्' इति माघः । ११४ । **ह्रदकन्दकुन्दबुद्बुदशब्दाः** । अयं ह्रदः । ११५ । **अर्घपथिमथ्यृभुक्षिस्तम्बनितम्बपूगाः** । अयमर्घः । ११६ । **पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गतुरङ्ग[3]गन्धकमृदङ्गसङ्गसमुद्गपुङ्खाः** । अयं पल्लवः । इत्यादि । ११७ । **सारथ्यतिथिकुक्षिबस्तिपाण्यञ्जलयः** । एते पुंसि । अयं सारथिः । **इति पुंलिङ्गाधिकारः** ।

---

## नपुंसकाधिकारः ।

११८ । **नपुंसकम्** । अधिकारोऽयम् । ११९ । **भावे ल्युडन्तः** । हसनम् । भावे किम् । पचनोऽग्निः । इध्मप्रव्रश्चनः कुठारः । १२० । **निष्ठा च** । भावे या निष्ठा तदन्तं क्लीबं स्यात् । हसितम् । गीतम् । १२१ । **त्वष्यञौ तद्धितौ** । शुक्लत्वम्, शौक्ल्यम् । ष्यञः षित्वसामर्थ्यात्पक्षे स्त्रीत्वम् । चातुर्यम् । चातुरी । सामग्र्यम् । सामग्री । औचित्यम् । औचिती । १२२ । **कर्मणि च ब्राह्मणादिगुणवचनेभ्यः** । ब्राह्मणस्य कर्म ब्राह्मण्यम् । १२३ । **यद्यढ्ग्यगञण्वुञ्छाश्च भावकर्मणि** । एतदन्तानि क्लीबानि । 'स्तेनाद्यन्नलोपश्च' १७९०, स्तेयम् । 'सख्युर्यः' १७९१, सख्यम् । 'कपिज्ञात्योर्ढक्' १७९२, कापेयम् । 'पत्यन्तपुरोहितादिभ्यो यक्' १७९३, आधिपत्यम् । 'प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्' १७९४, औष्ट्रम् । 'हायनान्तयुवादिभ्योऽण्' १७९५, द्वैहायनम् । 'द्वन्द्वमनोज्ञादिभ्यो वुञ्' १७९८, पितापुत्रकम् । 'होत्राभ्यश्छः' १८००, अच्छावाकियम् । 'अव्ययीभावः' ६६०, अधिस्त्रि । १२४ । **द्वन्द्वैकत्वम्** । पाणिपादम् । १२५ । **अभाषायां**

---

कंसशब्द इत्यर्थः ॥ **दिनाहनी–** । दिवसाभिधानाविमौ ॥ १०५ **खारीमानिके–** । मानाभिधानत्वात्पुंस्त्वे प्राप्तेऽस्यारम्भः ॥ १०६ **बहुत्वं चेति** । चकारः पुंस्त्वस्य समुच्चायकः ॥ १०७ **नाड्यपजनोपपदानि व्रणाङ्गपदानि** । अत्रोपपदशब्दः पूर्वपदपरो न तु 'तत्रोपपदम्–' इति तत्संज्ञकपरः, तस्य प्राप्त्यभावात् ॥—**क्लीबत्वनिवृत्त्यर्थमिति** । नपुंसकाधिकारे 'मुखनयन' (लि. १३०) इत्यादिवक्ष्यमाणसूत्रेण विवराभिधानत्वेन क्लीबत्वं प्राप्तं, तन्निवृत्त्यर्थमित्यर्थः ॥ १११ **अमरस्त्विति** । एवं च तन्मतेऽर्धर्चादिष्वयं द्रष्टव्यः । इति लिङ्गानुशासने पुंलिङ्गाधिकारः ॥

११९ **भावे ल्युडन्तः** । इदं च सूत्रं यद्यपि 'नपुंसके भावे क्तः' 'ल्युट् च' इत्यनेन गतार्थम्, तथापि स्पष्टार्थमुपात्तम् । एवमन्तग्रहणं चेति बोध्यम् ॥—**इध्मप्रव्रश्चन इति** । अत्र करणे ल्युट् ॥ १२० **निष्ठा च** । अत्र निष्ठापदं क्तस्य बोधकम् । इदमपि सूत्रं 'नपुंसके भावे क्तः' इत्यनेन गतार्थम् । प्रत्ययग्रहणे तदन्तस्य ग्रहणम् ॥ १२१ **त्वष्यञौ तद्धितौ** । भावे इत्यनुवर्तते । यद्यपि 'तस्य भावः' इति सूत्रे भावशब्दः प्रकृतिजन्यबोधीयप्रकारताश्रयधर्मपरः । 'भावे ल्युडन्तः' इत्यत्र तु भावशब्दो भावनाबोधक इति भेदः, तथापीह भावशब्दः शब्दाधिकारेणान्यार्थको द्रष्टव्यः ॥ १२२ **कर्मणि च–** । चाद्भावे । त्वष्यञावित्याद्यनुवर्तते ॥—**स्तेनाद्यन्नलोपश्चेति** । यद्यपीदं सूत्रं प्रागव्याख्यातमेव तथापीतः प्रभृति कथितानां नपुंसकत्वस्य स्पष्टप्रतिपत्त्यर्थमिहोपादानमिति बोध्यम् ॥ १२४ **द्वन्द्वैकत्वमिति** । 'द्वन्द्वश्च प्राणितूर्य–'इत्यादिना येषां द्वन्द्वानामेकवद्भावो भवति ते द्वन्द्वा नपुंसकत्वाभिधायका बोध्या इत्यर्थः ॥ १२५ **अभाषायामिति** । इदमपि सूत्रं 'हेमन्त-

---

१ 'क्रिमिध्वनि–' इति पाठान्तरम् ।　२ 'पाखण्ड' इति पाठान्तरम् ।　३ 'तुरङ्गगन्धस्कन्धमृदङ्ग–' इत्यपि पाठः ।

हेमन्तशिशिरावहोरात्रे च । स्पष्टम् । १२६ । अनञ्कर्मधारयस्तत्पुरुषः । अधिकारोऽयम् । १२७ । अनल्पे छाया । शरच्छायम् । १२८ । राजामनुष्यपूर्वा सभा । इनसभम् । इत्यादि । १२९ । सुरासेनाच्छायाशालानिशाः स्त्रियां च । १३० । परवत् । अन्यस्तत्पुरुषः परवल्लिङ्गः स्यात् । 'रात्राह्नाहाः पुंसि' ८१५ । १३१ । अपथपुण्याहे नपुंसके । १३२ । संख्यापूर्वा रात्रिः । त्रिरात्रम् । संख्यापूर्वेति किम् । सर्वरात्रः । १३३ । द्विगुः स्त्रियां च । व्यवस्थया । पञ्चमूली । त्रिभुवनम् । १३४ । इसुसन्तः । हविः । धनुः । १३५ । अर्चिः स्त्रियां च । इसन्तत्वेऽपि अर्चिः स्त्रियां नपुंसके च स्यात् । इयमिदं वा अर्चिः । १३६ । छदिः स्त्रियामेव । इयं छदिः । छद्यतेऽनेनेति छदेश्चुरादिण्यन्तात् 'अर्चिशुचि–' ( उ. २६५ ) 'इत्यादिना इस । 'इस्मन्–' इत्यादिना ह्रस्वः । 'पटलं छदिः' इत्यमरः । तत्र पटलसाहचर्याच्छदिषः क्लीबतां वदन्तोऽमरव्याख्यातार उपेक्ष्याः । १३७ । मुखनयनलोहवनमांसरुधिरकार्मुकविवरजलहलधनान्नाभिधानानि । एतेषामभिधायकानि क्लीबे स्युः । मुखमाननम् । नयनं लोचनम् । लोहं कालम्–अयः । वनं गहनम् । मांसमामिषम् । रुधिरं रक्तम् । कार्मुकं शरासनम् । विवरं बिलम् । जलं वारि । हलं लाङ्गलम् । धनं द्रविणम् । अन्नमशनम् ॥ अस्यापवादानाह त्रिसूत्र्या—

१३८ । सीरार्थौदनाः पुंसि । १३९ । वक्रनेत्रारण्यगाण्डीवानि पुंसि च । वक्रो वक्रम् । नेत्रो नेत्रम् । अरण्योऽरण्यम् । गाण्डीवो गाण्डीवम् । १४० । अटवी स्त्रियाम् । १४१ । लोपधः । कुलम् । कूलम् । स्थलम् । १४२ । तूलोपलतालकुसूलतरलकम्बलदेवलवृषलाः पुंसि । अयं तूलः । १४३ । शीलमूलमङ्गलसालकमलतलमुसलकुण्डलपललमृणालवालनिगलपलालबिडालखिलशूलाः पुंसि च । चात् क्लीबे । शीलं । शीलः । इत्यादि । १४४ । शतादिः संख्या । शतम् । सहस्रम् । शतादिरिति किम् । एको द्वौ बहवः । संख्येति किम् । शतशृङ्गो नाम पर्वतः । १४५ । शतायुतप्रयुताः पुंसि च । अयं शतः । इदं शतम् । इत्यादि । १४६ । लक्षा[1] कोटिः स्त्रियाम् । इयं लक्षा । इयं कोटिः । 'वा लक्षा नियुतं च तत्' इत्यमरात् क्लीबेऽपि, लक्षम् । १४७ । शङ्कुः पुंसि । १४८ । सहस्रः क्वचित् । अयं सहस्रः । इदं सहस्रम् । १४९ । मन्द्व्यच्कोऽकर्तरि । मन्प्रत्ययान्तो द्व्यच्कः क्लीबं स्यान्न तु कर्तरि । चर्म । वर्म । द्व्यच्कः किम् । अणिमा । महिमा । अकर्तरि किम् । ददाति— इति दामा । १५० । ब्रह्मन् पुंसि च । अयं ब्रह्मा । इदं ब्रह्म । १५१ । नामरोमणी नपुंसके । 'मन्द्व्यच्कः'

---

शिशिरावहोरात्रे च छन्दसि' इति सूत्रे छन्दसीत्युपादानेन गतार्थम् । हेमन्तशिशिरावित्यत्र तु निर्देशादेव पुंस्त्वप्रतिपादकता बोध्या ॥ **१२९ स्त्रियां चेति** । चेन नपुंसकमित्यनुकर्षः । 'विभाषा सेना–' इति विभाषापदोपादानेनेदमपि गतार्थम् ॥ **१३० परवदिति** । 'परवल्लिङ्गं–' इति सूत्रोपात्त इत्यर्थः । 'परवत्' इति सूत्रस्य स्मारकमिह परवदिति, नत्विदमपूर्वम् ॥—**तत्पुरुष इति** । इति द्वन्द्वस्याप्युपलक्षणम् ॥ **१३२ संख्यापूर्वा रात्रिः** । 'संख्यापूर्वं रात्रं क्लीबम्' इत्यस्यानुवादः ॥ **१३३ द्विगुः स्त्रियां चेति** । चान्नपुंसकमिति संबध्यते । इदमपि 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' 'पात्राद्यन्तस्य न' इत्यनेन गतार्थम् । अत एवाह—**व्यवस्थयेति** ॥ **१३४ इसुसन्तः** । 'अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः', 'जनेरुसिः' एतयोरुपात्तावेतौ ॥ **१३६ छदिः स्त्रियामेवेति** । यद्यपि छदिरित्यस्येसन्तत्वेन नपुंसकत्वे प्राप्ते विशेषोपादानेन 'स्त्रियाम्' इत्यनेनैव नित्यं स्त्रीत्वलाभे सिद्धे एवकारो व्यर्थः, तथापि 'पटलं छदिः' इत्यमरग्रन्थदर्शनेन साहचर्यान्नपुंसकत्वमपीति भ्रान्तिः स्यात्तन्निवारणायैवकारः । अत एव वक्ष्यति—**अमरव्याख्यातार इति** ॥ **१३७ अस्येति** । 'मुखनयन–' इति सूत्रस्य ॥ **१३८ सीरार्थौदनाः**—। सीरशब्दो हलाभिधानः । अर्थशब्दस्तु धनशब्दस्य पर्यायः । ओदनशब्दोऽन्नवाची । भिस्साभिस्सटाशब्दौ तु दग्धान्नपराविति तयोः स्त्रीत्वेऽपि न क्षतिरिति ॥ **१४० अटवी स्त्रियाम्** । अयं वनाभिधानः ॥ **१४४ संख्येति** । संख्यावाचीत्यर्थः ॥ **१४५ शतायुत**—। अयं शतशब्दोऽनन्तवाची । 'शतादिः–' इति पूर्वसूत्रापवादोऽयम् ॥ **१४६ लक्षा कोटिः**—। एतयोरपि संख्यावाचकत्वान्नपुंसकत्वे प्राप्ते इदम् ॥—**क्लीबेऽपीति** । एवं चायमर्धर्चादिषु द्रष्टव्यः ॥ **१४७ शङ्कुः पुंसि** । अस्य शङ्कुशब्दस्य संख्याविशेषवाचकत्वात् 'शतादिः संख्या' इति नपुंसकत्व प्राप्तेऽस्यारम्भः ॥ **१४८ सहस्रः क्वचिदिति** ॥—**क्वचिदिति**–अर्थविशेष इत्यर्थः । 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्' इत्यत्रानन्तवाची । न चात्र सहस्रशब्दस्यानन्तपरत्वे संख्यापरत्वाभावेन सहस्रपादित्यत्र 'संख्यासुपूर्वस्य' इति पादशब्दान्त्यलोपो न स्यादिति वाच्यम् । नियतविषयपरिच्छेदकत्वरूपसंख्यात्वाभावेऽपि यथाकथंचित्संख्यायाः प्रतीतिरिति लोपः । वस्तुतश्छान्दसो लोप इति तूचितम् ॥ **१४९ मन्द्व्यच्कः**–। अत्र मन्प्रत्ययः श्रूयमाणनकारान्तः 'सर्वधातुभ्यो मनिन्' इति विहितः ॥—**चर्म वर्मेति** । चरादिधातोर्मनिन्प्रत्ययः । [illegible] । अणिमादौ त्विद । दामेत्यत्रापि 'सर्वधातुभ्यो मनिन्' ( उ. ५९४ ) इत्यनेनैव मनिन्, परं त्वयं विशेषः—उणादिप्रत्ययान्तानां संज्ञाशब्दत्वेन यादृशी व्युत्पत्तिर्यत्रोचिता सा कल्पनीयेति कर्तर्यपि प्रत्ययः संभवतीति ॥ **१५० ब्रह्मेति** । 'बृंहेर्नोच्च'

---

१ 'लक्षाकोटी स्त्रियाम्' इति पाठान्तरम् ।

इत्यस्यायं प्रपञ्चः । १५२ । असन्तो द्व्यचकः । यशः । मनः । तपः । द्व्यचकः किम् । चन्द्रमाः । १५३ । अप्सराः स्त्रियाम् । एता अप्सरसः । प्रायेणायं बहुवचनान्तः । १५४ । त्रान्तः । पत्रम् । छत्रम् । १५५ । यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव । १५६ । भृत्रामित्रछात्रपुत्रमन्त्रवृत्रमेढ्रोष्ट्राः पुंसि । अयं भृत्रः । न मित्रममित्रः । 'तस्य मित्राण्यमित्रास्ते' इति माघः । 'स्यातामित्रौ मित्रे च' इति च । यत्तु 'द्विषोऽमित्रे' ३१११ इति सूत्रे हरदत्तेनोक्तम्—'अमेर्द्विषत् (उ. ६१३) इत्यौणादिक इत्रच् । अमेरमित्रम्, मित्रस्य व्यथयेत्' इत्यादौ मध्योदात्तस्तु चिन्त्यः । नञ्समासेऽप्येवम् । परवल्लिङ्गताऽपि स्यादिति तु तत्र दोषान्तरम्' इति, तत्प्रकृतसूत्रापर्यालोचनमूलकम् । स्वरदोषोद्भावनमपि 'नञो जरमरमित्रमृताः' ३८५० इति षाष्ठसूत्रास्मरणमूलकमिति दिक् । १५७ । पत्रपात्रपवित्रसूत्रच्छत्राः पुंसि च । १५८ । बलकुसुमशुल्बपत्तनरणाभिधानानि । बलं वीर्यम् । १५९ । पद्मकमलोत्पलानि पुंसि च । पद्मादयः शब्दाः कुसुमाभिधायित्वेऽपि द्विलिङ्गाः स्युः । अमरोऽप्याह—'वा पुंसि पद्मं नलिनम्' इति । एवं च अर्धर्चादिसूत्रे तु 'जलजे पद्मं नपुंसकमेव' इति वृत्तिग्रन्थो मतान्तरेण नेयः । १६० । आहवसंग्रामौ पुंसि । १६१ । आजिः स्त्रियामेव । १६२ । फलजातिः । फलजातिवाची शब्दो नपुंसकं स्यात् । आमलकम् । आम्रम् । १६३ । वृक्षजातिः स्त्रियामेव । क्वचिदेवेदम् । हरीतकी । १६४ । वियज्जगत्सकृच्छकन्पृषच्छकृद्यकृदुदश्वितः । एते क्लीबाः स्युः । १६५ । नवनीतावतानानृतामृतनिमित्तवित्तचित्तपित्तव्रतरजतवृत्तपलितानि । १६६ । श्राद्धकुलिशदैवपीठकुण्डाङ्काङ्गदधिसक्थ्यक्ष्यास्यास्पदाकाशकण्वबीजानि । एतानि क्लीबे स्युः । १६७ । दैवं पुंसि च । दैवम् । दैवः । १६८ । धान्याज्यसस्यरूप्यपण्यवर्ण्यधिष्ण्य[1]हव्यकव्यकाव्यसत्या[2]पत्यमूल्यशिक्यकुड्यमद्यहर्म्यतूर्यसैन्यानि । इदं धान्यम् । इत्यादि । १६९ । द्वन्द्वबर्हदुःखबडिशपिच्छबिम्बकुटुम्बकवचवरशरवृन्दारकाणि । १७० । अक्षमिन्द्रिये । इन्द्रिये किम् । रथाङ्गादौ मा भूत् ॥ इति नपुंसकाधिकारः ।

---

## स्त्रीपुंसाधिकारः ।

१७१ । स्त्रीपुंसयोः । अधिकारोऽयम् । १७२ । गोमणियष्टिमुष्टिपाटलिवस्तिशाल्मलित्रुटिमसिमरीचयः । इयमयं वा गौः । १७३ । मृत्युसिन्धु[3]कर्कन्धुकिष्कुकण्डुरेणवः । इयमयं वा मृत्युः । १७४ । गुणवचनमुकारान्तं नपुंसकं च । त्रिलिङ्ग-

(उ. ५९५) इति मनिन्प्रत्ययः ॥ **१५२ असन्तो द्व्यचकः** । 'सर्वधातुभ्योऽसुन्' (उ. ६३८) इति विहितोऽसुन् । तस्यासुनो येष्वनुवृत्तिस्तदन्ता अपि बोध्याः । 'चन्देर्मो डित्' (उ. ६७७) इति विहितासुन्प्रत्ययान्तश्चन्द्रमस्शब्दोऽप्यसुन्नन्तः, कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् । एवमप्सरःशब्दोऽपि ॥ **१५४ त्रान्तः** । त्रप्रत्ययान्तो नपुंसकं स्यात् । 'सर्वधातुभ्यष्ट्रन्' इति त्रन्प्रत्ययो नकारानुबन्धक इति ॥ **१५५ यात्रामात्रा—** । 'हुयाम–' इति विहितस्त्रन्प्रत्ययोऽपि त्रग्रहणेन गृह्यत इति नपुंसकत्वे प्राप्तेऽस्यारम्भः । एवकारो न्यायसिद्धबाध्यबाधकभावानुवादकः ॥ **१५६ भृत्रामित्र—** । पूर्वस्यापवादः ॥**—यत्त्विति** । 'दोषान्तरम्' इत्यन्ता तदुक्तिः ॥**—मध्योदात्तः—**मकारेकारस्य प्रत्ययाद्युदात्तत्वेन मध्योदात्त इति तद्भावः ॥**—चिन्त्य इति** । नित्त्वस्य सत्त्वात् ॥ नन्वमित्रशब्दो नेत्रन्तः, किंतु 'अमिचिमि–' इति मिधातुविहितक्त्रान्तमित्रशब्देन नञः समासे सति सिद्ध इत्याह**—नञ्समासेऽप्येवमिति** । अन्तोदात्त इत्यर्थः ॥ **परवल्लिङ्गतेति** । एवं सति नपुंसकत्वं स्यात् ॥ हरदत्तोक्तं दूषयति**—तत्प्रकृतेत्यादिना** ॥**—नञो जरमरेति** । यदि तु न मित्रं–अमित्र इति नञ्समासस्तदा न 'नञो जरमरमित्र–' इत्यस्य प्राप्तिः, तस्य बहुव्रीहिसमासे प्रवृत्तेरिति बोध्यम् ॥ **१५९ कुसुमाभिधायित्वेति** । वस्तुतः कुसुमाभिधायित्वेऽपीत्यर्थः । यदि तु कुसुमविशेषाभिधायकोऽयं न तु कुसुमशब्दशक्यतावच्छेदकावच्छिन्नशक्त इति विभाव्यते तदा त्वपूर्वमेवोभयलिङ्गत्वाभिधानमिति ॥**—मतान्तरेण**–जलजशब्दस्य जलजातकुसुमान्तराभिधायकत्वमित्यभिप्रायकमतान्तरेणेत्यर्थः ॥ **१६० आहवसंग्रामौ पुंसि** । एतयोर्युद्धाभिधायकत्वान्नपुंसकत्वे प्राप्ते । एवमाजिशब्दोऽपि ॥ **१६२ फलजातिरिति** । फलोपादानाद्वृक्षपरस्यामलकीशब्दस्य स्त्रीत्वेऽपि न क्षतिः ॥ **१६३ हरीतकीति** । हरीतक्याः फलानि हरीतक्यः । 'हरीतक्यादिषु व्यक्तिः' इति स्त्रीत्वाभिधानात् ॥ **१७० रथाङ्गादाविति** । आदिना देवनाक्षपरिग्रहः ॥ **इति लिङ्गानुशासने नपुंसकाधिकारः** ॥

**१७१ स्त्रीपुंसयोः** । अधिकारोऽयम् ॥ **१७४ नपुंसकं चेति** । चात्स्त्रीपुंसयोः ॥ **इति लिङ्गानुशासने स्त्रीपुंसाधिकारः** ॥

---

१ 'धिष्ण्य' इति पाठः । २ 'सत्यासत्य' इति पाठः । ३ 'मृत्युसीधु' इति पाठः ।

मित्यर्थः । पट्टु । पट्टुः । पट्वी । १७५ । अपत्यार्थस्तद्धिते । औपगवः । औपगवी । इति स्त्रीपुंसाधिकारः ।

## पुंनपुंसकाधिकारः ।

१७६ । **पुंनपुंसकयोः** । अधिकारोऽयम् । १७७ । **घृतभूतमुस्तक्ष्वेलितैरावतपुस्तकबुस्तलोहिताः** । अयं घृतः । इदं घृतम् । १७८ । **शृङ्गार्घनिदाघोद्यमशल्यदृढाः** । अयं श्रृङ्गः । इदं श्रृङ्गम् । १७९ । **व्रजकुञ्जकुथकूर्चप्रस्थदर्पार्भार्धर्चदर्भपुच्छाः**[1] । अयं व्रजः । इदं व्रजम् । १८० । **कबन्धौषधायुधान्ताः** । स्पष्टम् । १८१ । **दण्डमण्डखण्डशवसैन्धवपार्श्वाकाशकुशकाशाङ्कुशकुलिशाः** । एते पुंनपुंसकयोः स्युः । 'कुशो रामसुते दर्भे योक्त्रे द्वीपे कुशं जले' इति विश्वः । शलाकावाची तु स्त्रियाम् । तथा च 'जानपद–' ५०१ आदिसूत्रेणायोविकारे ङीषि–कुशी । दारुणि तु टाप्– 'कुशा वानस्पत्याः स्थ ता मा यात' इति श्रुतिः । 'अतः कृकमि–' १६० इति सूत्रे 'कुशाकर्णीषु' इति प्रयोगश्च । व्याससूत्रे च–'हानौ तूपायनशब्दे शेषत्वात्कुशाच्छन्दः' इति । तत्र शारीरकभाष्येऽप्येवम् । एवं च श्रुतिसूत्रभाष्याणामेकवाक्यत्वे स्थिते 'आच्छन्द' इत्याङ्प्रश्लेषादिपरो भामतीग्रन्थः प्रौढिवादमात्रपर इति विभावनीयं बहुश्रुतैः । १८२ । **गृहमेहदेहपट्टपटहाष्टापदाम्बुदककुदाश्च** । इति पुंनपुंसकाधिकारः ।

## अविशिष्टलिङ्गाधिकारः ।

१८३ । **अविशिष्टलिङ्गम्** । १८४ । **अव्ययं कतियुष्मदस्मदः** । १८५ । **ष्णान्ता संख्या** । शिष्टा परवत् । एकः पुरुषः । एका स्त्री । एकं कुलम् । १८६ । **गुणवचनं च** । शुक्लः पटः । शुक्ला पटी । शुक्लं वस्त्रम् । १८७ । **कृत्याश्च** । १८८ । **करणाधिकरणयोर्ल्युट्** । १८९ । **सर्वादीनि सर्वनामानि** । स्पष्टार्थेयं त्रिसूत्री ॥ इति लिङ्गानुशासनं समाप्तम् ॥

इति श्रीभट्टोजिदीक्षितविरचिता वैयाकरणसिद्धान्तकौमुदी संपूर्णा ॥

---

१८१ **शलाकावाचीति** । सा च शलाका काष्ठादिनिर्मिता । तत्र मानमाह—**तथा चेति** । इति **पुंनपुंसकाधिकारः** ॥

१८३ **अविशिष्टलिङ्गम्** । तत्तल्लिङ्गवाचकताप्रयुक्तकार्यविशेषशून्यम् ॥ १८५ **शिष्टा इति** । पूर्वोक्तशब्दान्यतमत्वावच्छिन्नप्रतियोगिताकभेदवन्तः ॥—**परवदिति** । विशेष्यवदित्यर्थः ॥ १८६ **गुणवचनं च** । परवदित्यनुवर्तते ॥ १८७ **कृत्याश्च** । कृत्यप्रत्ययान्ताः परवद्बोध्याः ॥ १८९ **सर्वादीनि सर्वनामानि** । सर्वनामसंज्ञकानि सर्वादीनि परवद्बोध्यानि ॥—**स्पष्टार्थेति** । लोकव्युत्पत्त्यैव तत्तल्लिङ्गाभिधानस्य सिद्धत्वात् । अत एव 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति **भगवता भाष्यकृतोक्तम्** । तेन 'यौगिकेषु शब्देषु लोकव्युत्पत्तिरेव लिङ्गाभिधाने प्रमाणम्' इति सिद्धम् ॥ **इति लिङ्गानुशासनविवरणम्** ॥

इति श्रीमदनन्तकल्याणसद्गुणनिधानाखिलपण्डितसार्वभौमभूमण्डलसंचारिविमलतरानवद्यसद्यशःपार्वणपीयूषभान्वगस्त्यकुलवंशावतंसश्रीमद्भवदेवमिश्रात्मजभैरवमिश्रकल्पितायां सिद्धान्तकौमुदीव्याख्यायां लिङ्गानुशासनं संपूर्णम् ॥




---

[1] 'दर्पार्मार्धं' इति पाठः ।

॥ श्रीः ॥

# सिद्धान्तकौमुदीपरिशिष्टानि ।

## अथ पाणिनीयशिक्षा १

### भाष्यसहिता ।

**अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतं यथा । शास्त्रानुपूर्व्यं[1] तद्विद्याद्यथोक्तं लोकवेदयोः ॥ १ ॥**

पातु वो निकषग्रावा मतिहेम्नः सरस्वती । प्राज्ञेतरपरिच्छेदं वचसैव करोति या ॥ १ ॥

छन्दःकल्पनिरुक्तानि विवृतानीह सूरिभिः । शिक्षा न विवृता यस्मात्तस्मात्तां विवृणोम्यहम् ॥ २ ॥

**अथ शिक्षां प्रवक्ष्यामीति** । अथेत्ययमानन्तर्ये, वेदाध्ययनानन्तरमङ्गपाठः । किं कारणं? 'षडङ्गो वेदोऽध्येतव्यः' इति स्मरणात् । तत्र च शिक्षा प्रथमा, अथशब्दानुषङ्गात् । सा च वक्तव्येत्यथशब्दस्यार्थः । एतेनैव सिद्धे वेदस्याङ्गानन्तर्येण व्याकरणादिष्वथशब्दोऽत एव नाधीयते । केषुचित् कल्पेषु अधीयते इति चेत् 'अथातोऽधिकारः' 'अथैतस्य समाम्नायस्य' इत्येवमादिषु ? नैष दोषः । नियमार्थः सः, शिक्षानन्तरं कल्प एवाध्येतव्यो नान्यानीति । मङ्गलार्थो वा ॥ आदौ **सम्बन्धाभिधेयप्रयोजनानि** वक्तव्यानि । तत्र चायमेव **सम्बन्धो** यदुक्तोऽङ्गाङ्गिभावः । नित्यसम्बन्धानि ह्यङ्गान्यङ्गिनः । **अभिधेयं** तु स्वयमेव वक्ष्यति-'वाच उच्चारणे विधिम्' इति । **प्रयोजनं** सम्यग्वर्णोच्चारणम् । प्रयोजनमपि श्रूयते एव-'एकोऽपि वर्णः सम्यक् प्रयुक्तः स्वर्गे लोके कामधुग्भवति' इति । शिक्ष्यतेऽनया वर्णोच्चारणमिति **शिक्षा**, तां प्रकर्षेण **वक्ष्यामि**=कथयिष्यामि ॥ **पाणिनीयं मतं यथेति** । पाणिनीयमिति 'वृद्धाच्छः' इति छप्रत्ययः । तस्येदमित्यर्थनिर्देशः ॥ **मतमिति** । 'मन ज्ञाने' पाणिनीयं मतं ज्ञानं यथा तथा प्रवक्ष्यामि तैरेव प्रत्याहारैस्तयैव परिभाषया 'अचोऽस्पृष्टा यणस्त्वीषत्' इत्यादि, 'अणुदित्सवर्णस्य चाप्रत्ययः' इति, 'कण्ठ्यावहाविचुयशाः' इति च । तथाऽन्यदप्युक्तमत्र प्रयोजनं यत्तद् व्याकरणादेव ग्रहीतव्यं सोऽनुस्वारः' इति ॥ ननु व्याकरणे शब्दचिन्ता, अत्रापि सेति । ततश्च व्याकरणेनैव सिद्धत्वादिदमनारभ्यम् । सत्यम्, उभयोः शब्दचिन्ता, किन्तु व्याकरणे एतच्चिन्त्यते-गोशब्दः सास्नादिमदर्थे साधुः, इह तु-गोशब्दो जिह्वामूलेनोच्चारयितव्य इति भेदः ॥ **शास्त्रानुपूर्व्यं तद्विद्यादिति । शास्त्र**मिति शासेः करणे ष्ट्रन् प्रत्ययः । **आनुपूर्व्य**मिति गुरुपूर्वक्रमः । **तदि**ति पाणिनिमतपरामर्शः । तत् पाणिनिमतमेवास्यापि शिक्षाख्यशास्त्रस्याप्यानुपूर्व्यं विद्यावंशपरम्परां जानीयात् । पाणिनिमतस्य यदानुपूर्व्यं यो गुरुपूर्वक्रमः स एवास्येत्यर्थः । तथा च वक्ष्यति-'शङ्करः शाङ्करीं प्रादात्' इत्यादि ॥ **यथोक्तं लोकवेदयोरिति** । समानार्थमित्यर्थः । तथा च भाष्यकारः-"य एव लौकिकाः शब्दास्त एव वैदिकास्त एव तेषामर्थाः" इति ॥ १ ॥

नन्वकारादयो वर्णाः स्वस्थानेनैवोच्चार्यन्ते, परस्थाननिराकाङ्क्षत्वात् । किमर्थः शास्त्रारम्भः? इत्याशङ्क्याह—

**प्रसिद्धमपि शब्दार्थमविज्ञातमबुद्धिभिः । पुनर्व्यक्तीकरिष्यामि वाच उच्चारणे विधिम् ॥ २ ॥**

**प्रसिद्धमिति** । अबुद्धिभिर्बुद्धिहीनैः प्रसिद्धमपि शब्दार्थमविज्ञातं सम्मतं, पुनः पश्चाद् व्यक्तीकरिष्यामि स्फुटीकरिष्यामि । किम्? **वाच उच्चारणे विधिं**, वाचो गिरस्तदुच्चारणे उद्गिरणे विधिं विधानम् । ननु 'विधिरत्यन्तमप्राप्तौ' इति स्मर्यते, न चात्रात्यन्तमप्राप्तिः । उक्तं च अधस्तात्-'अकारादयो वर्णाः स्वस्थानेनैवोच्चार्यन्ते' इति । उच्यते—यद्यपि स्वस्थानस्थिता उच्चार्यन्ते तथाऽप्यप्राप्तोऽशः कथनीयोऽनुप्रदानादिः, एतदर्थो विधिशब्दः ॥ २ ॥

वागुच्चारणं च वर्णैः क्रियते, कतिसंख्यास्ते? इत्यत आह—

**त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शंम्भुमते मताः[2] । प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयंभुवा ॥ ३ ॥**

**त्रिषष्टिश्चतुःषष्टिर्वेति** । सम्भवत इति सम्भूतेः । सकाशान्मताः ज्ञाताः । वर्णो वृणोतेः । अत्र 'यथोक्तं लोकवेदयोः' इत्युक्तम् । तत्र किं लोके संस्कृतविषया एव वर्णा उत सर्वभाषाविषयाः? इत्याह—**प्राकृते संस्कृते चापीति** । अपिशब्दादपभ्रंशादिष्वपि ये वर्णाः सम्भूतेर्जाताः सन्तः तेऽपि ॥ **स्वयं प्रोक्ताः स्वयम्भुवेति** । ब्रह्मणा स्वयमेव हरेण प्रकर्षेणोच्चारिताः ॥ ३ ॥

कथं ते त्रिषष्टिः कथं वा चतुःषष्टिरित्याशङ्क्याह—

**स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः । यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः ॥ ४ ॥**

**स्वरा विंशतिरेकश्चेति** । स्वरा इति 'स्वृ शब्दोपतापयोः' स्वर्यते शब्द्यतेऽनेन व्यञ्जनमिति करणेऽच् प्रत्ययः । कथं ते एकविंशतिः? ततश्चतुरो यथास्मृति विवृणोमि—अ इ उ ऋ एते चत्वारो ह्रस्वदीर्घप्लुतभेदेन द्वादश । ऌकारस्य दीर्घादयो न

---

१ 'शास्त्रानुपूर्वं' इत्येवं पाठः क्वचिद्दृश्यते स नातीव रमणीयः । २ सम्भवतो मताः' इति भाष्य पाठः ।

सन्तीति स्मरणात् ह्रस्व एवोपदिश्यते, अत एते त्रयोदश । ए ऐ ओ औ सन्ध्यक्षराणि, सन्ध्यक्षराणामपि ह्रस्वा न सन्तीति स्मरणात् दीर्घप्लुता एव गृह्यन्ते, ते एतेऽष्टौ पूर्वैस्त्रयोदशभिः **सहैकविंशतिः ॥ स्पर्शानां पञ्चविंशतिः ।** कादयो मावसानाः स्पर्शाः । जिह्वामूलतालुमूर्धदन्तोष्ठादिभिः परस्परं स्पर्शैरभिनिष्पत्त्य आविर्भवन्तीति स्पर्शाः । पूर्वैरेकविंशत्या सह **षट्चत्वारिंशत् ॥ यादयश्च स्मृता ह्यष्टाविति ।** यकारादयश्च अष्टौ—य र ल व श ष स हाः—इति । अत्र आद्याश्चत्वारोऽन्तःस्थसञ्ज्ञाः, उपरितना ऊष्माणः । पूर्वैर्या षट्चत्वारिंशता सह **चतुःपञ्चाशत् ॥ चत्वारश्च यमाः स्मृता इति ।** यच्छन्तीति यमाः, स्वयमेवोपरमेरन् । के ते यमाः ? लोके—कुँ खुँ गुँ घुँ इति । "अनन्त्यान्त्यसंयोगे मध्ये यमः पूर्वगुणः" इत्यौदव्रजिः । तथाच—

ह्रस्वादिभेदैश्चत्वारः प्रथमा द्वादश स्मृताः । ऌकारो ह्रस्व एवैचोऽष्टौ स्वरा एकविंशतिः ॥
पञ्चविंशतिरष्टाविधः स्पर्शाः स्युर्यादयो यमाः । अनुस्वारो विसर्गश्च ᳵकᳶपौ प्लुतऌकारकः ॥
त्रिषष्टिरेवं वर्णाः स्युर्ह्रस्वदीर्घादिभेदतः । अनुस्वारद्वयाद्वर्णाश्चतुःषष्टिरितीरिताः ॥

तथा च नारदः—

अनन्त्यश्च भवेत्पूर्वो ह्यन्त्यश्च परतो यदि । तत्र मध्ये यमस्तिष्ठेत् सवर्णः पूर्ववर्णयोः ॥
वर्गान्त्यान् शषसैः सार्धमन्तस्थैर्वाऽपि संयुतान् । दृष्ट्वा यमा निवर्तन्ते आदेशिकमिवाध्वगाः ॥

इति नारदौदव्रज्योर्मतेन यमो वर्णागम इति विधीयते । अस्मात् शास्त्रात् 'चत्वारश्च यमाः स्मृताः' इति वर्णान्तरत्वेनोपदेशः संयोगशास्त्रात् । अथ चतुरक्षराणामुदाहरणमिति प्रकृत्य अग्निरिति यमो गकारौ द्वौ नकार इकारश्चेति । अन्ये तु यमं वर्णापत्तिं मन्यन्ते । तथा च शौनकः—"स्पर्शा यमाननुनासिकान् स्वान् परेषु स्पर्शेष्वनुनासिकेषु" इति । पूर्वैर्या चतुःपञ्चाशता सहाष्टपञ्चाशत् ॥ ४ ॥

**अनुस्वारो विसर्गश्च ᳵकᳶपौ चापि पराश्रितौ ।**
**दुःस्पृष्टश्चेति विज्ञेयो ऌकारः प्लुत एव च ॥ ५ ॥ (१)**

**अनुस्वारो विसर्गश्चेति ।** स्वरमनु भवतीत्यनुस्वारः, अनु अकारानुगमेनानुस्वारः । वक्ष्यति च—'दन्तमूल्यः स्वरानुगः' इति ॥ **विसर्ग इति ।** विविधं सृज्यते क्षिप्यते इति विसर्गः ॥ **ᳵकᳶपौ चापि पराश्रयाविति ।** पराश्रयाविति परौ ककारपकारौ आश्रयः स्थानं ययोस्तौ पराश्रयौ । तथा च वक्ष्यति—

"अयोगवाहा विज्ञेया आश्रयस्थानभागिनः" इति ।

अपरः पाठः—**'ᳵकᳶपावपि परौ स्मृतौ'** । अनुस्वारविसर्गयोः परावित्यर्थः । अपरोऽपि पाठः—**'ᳵकᳶपौ चापि कपाश्रयौ'** ककारपकारौ आश्रयः स्थानं ययोस्तौ कपाश्रयौ । चशब्दादनुस्वारविसर्जनीयावपि पराश्रयौ ॥ **दुःस्पृष्टश्चेतीति ।** ईषत्स्पृष्टो वर्णधर्मो न वर्णान्तरम् । वक्ष्यति च—'अचोऽस्पृष्टा यणस्त्वीषत्' इति । तथा चौदव्रजिः—'तत्र स्पृष्टं प्रयतनं करणं स्पर्शानाम्' 'दुःस्पृष्टमन्तःस्थानाम्' इति । यणभक्तिश्च ऌकारो विद्यते । अतो ऌकारो दुःस्पृष्टधर्मा, चशब्दात् ऋकारः । इतिशब्दः पादपूरणार्थः ॥ **ऌकार इति ।** ऌवर्णात् कारप्रत्ययः ॥ **प्लुत एव चेति ।** ऌकारस्य दीर्घादयो न सन्तीत्यधस्तात् परमतमुपन्यस्तम् । स्वमतं चाह—**ऌकारः प्लुत एव चेति ।** त्रिमात्रः, चशब्दाद्ध्रस्वश्च ॥ ननु वर्णानां प्रयत्नमुपरिष्टाद्वक्ष्यत्येव, किमर्थमप्रस्तुतः प्रयत्नः कथ्यते ? उच्यते, प्लुतविधानार्थं तावल्लृकार उच्चारयितव्यः, उच्चारिते च ऌकारे लाघवार्थमप्रस्तुतोऽपि प्रयत्न उच्चारितः—दुस्पृष्टश्चेति । अनुस्वारादयः प्लुतान्ताःपञ्च । पूर्वैरष्टपञ्चाशद्भिः सह त्रिषष्टिः । चतुःषष्टिः कथम् ? 'अनुस्वारौ विसर्गश्च' इति पाठान्तरात् । कथं पुनरनुस्वारद्वयं ? ह्रस्वदीर्घभेदेनेति ब्रूमः । तथा चौदव्रजिः—"अनुस्वारावं आं इत्यनुस्वारौ ह्रस्वदीर्घौ दीर्घह्रस्वौ वर्णौ" इति । अत एव चतुःषष्टिः ॥५॥

अथ वर्णसंख्यापरिज्ञानोत्तरकालं चिन्त्यते, क एषामुच्चारयिता, कथं चोच्चारयति, केन क्रमेण चेत्याह—

**आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया ।**
**मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥ ६ ॥**

**आत्मेति ।** आत्मा शरीरेन्द्रियमनोबुद्धिव्यतिरिक्तः । कथं पुनरेतदवगम्यते ? यथा शरीरेन्द्रियमनोबुद्धिव्यतिरिक्त आत्मा उच्यते, द्रष्टृत्वात् । द्रष्टा हि दृश्यादिव्यतिरिक्तो भवति, प्रयोजकत्वात् 'बुद्ध्यादीनि कर्तृप्रयोज्यानि, करणत्वात् कुठारवत्' इति । न्यायात् श्रुतेश्च । न्यायस्तावत्—'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति स्वर्गादिफलसाधनानि कर्माणि श्रूयन्ते । स्वर्गश्च वायुशरीरोपभोग्यः, तद्व्यतिरिक्त आत्मा शरीरादेः । श्रुतेश्च "तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः" इति । शरीरापक्रमणाय शरीरादिव्यतिरिक्त आत्मा । छान्दोग्यश्रुतेश्च—"एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतीरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति । क एषामुच्चारयितेति पृष्टे तस्योत्तरं दत्तम्—आत्मेति । कथमुच्चारयति केन क्रमेणेति प्रश्नद्वयस्योत्तरं दीयते—स आत्मा बुद्ध्या सहार्थान् बाह्यान् समर्थ्य सम्यगवगम्यार्थप्रत्यायनाय यदि शब्दा उच्चार्यन्ते तदा मनो युङ्क्ते विवक्षया वक्तुमिच्छा विवक्षा तया । तच्च

१ 'पराश्रयौ' इति भाष्यानुसारी पाठः । २ 'समर्थ्यार्थान्' इति भाष्यपाठः ।

मनो नियुङ्क्ते आत्मा ॥ **मनः कायाग्निमाहन्तीति** । तच्च मनो नियुक्तं सत् कायाग्निमाहन्ति कायाग्निं शरीराग्निम् आभिमुख्येनाहन्ति ॥ **स प्रेरयति मारुतमिति** । सोऽग्निरभिहतः सन्मारुतं वायुं प्रेरयति ॥ ६ ॥

**मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् । प्रातः सवनयोगं तं छन्दो गायत्रमाश्रितम् ॥ ७ ॥**

**मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरमिति** । मारुतो वायुरुरसि चरन्मन्द्रं स्वरमुत्पादयति । मन्द्रमिति मन्देरक् प्रत्ययः ॥ **प्रातस्सवनयोगमिति** । प्रातः सवनेन सह योगोऽस्येति प्रातःसवनयोगस्तम् । तथा च ऐतरेयब्राह्मणे—'अथ मन्द्रं तपति तस्मात् मन्द्रया वाचा प्रातःसवने शंसेत्' इति । गायत्रं छन्दोऽस्याश्रयः । गायत्रं गायतेः स्तुतिकर्मणः । आच्छादयति छन्दः ॥ ७ ॥

**कण्ठे माध्यन्दिनयुगं मध्यमं त्रैष्टुभानुगम् । तारं तार्तीयसवनं शीर्षण्यं जागतानुगम् ॥ ८ ॥**

**कण्ठ इति** । मारुत इति वर्तते, सवनं छन्दः स्वरं चरन्निति च । वर्णान् जनयतीति यावत् । कण्ठे चरन्वायुर्मध्यमं स्वरं जनयति । **कण्ठे इति**—'कणेष्ठः' (उ. सू. १०३) इति ठप्रत्ययः । मध्यं दिनं युनक्तीति माध्यन्दिनं सवनभाजं त्रिष्टुप्छन्दोऽनुगामिनम् ॥ **तारमिति** । तार्तीयसवनमिति तृतीयसवनभाजं तारं स्वरं शीर्षण्यमिति मूर्धनि चरन् वायुं जनयत्युत्पादयति जागतछन्दोऽनुगामिनम् । जागतं छन्दोऽनुगच्छतीति जागतानुगः । शीर्षण्यमिति 'शीर्षश्छन्दसि' (सू. ३५१३) इति शिरःशब्दस्य शीर्षभावः । तत्र भवं शीर्षण्यम् ॥ ८ ॥

**सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः । वर्णाञ्जनयते तेषां विभागः पञ्चधा स्मृतः ॥ ९ ॥**

**सोदीर्ण इति** । स वायुरुदीर्ण उर्ध्वगतो मूर्धानं यावदुपरितनां गतिमलभमानः शिरः कपालेनावष्टब्धत्वात्पुनः प्रत्यावृत्य वक्त्रमेवापद्य वर्णाञ्जनयते उत्पादयति । पुनर्मारुतग्रहणं विस्पष्टार्थम् ॥ **तेषां विभागः पञ्चधा स्मृत इति** । तेषां वर्णानां जन्यमानानां विभागो विवेकः पञ्चधा पञ्चप्रकारः । 'संख्याया विधार्थे धा' ( सू. १९८८ ) इति धा । स्मृतोऽनुमतः ॥ ९ ॥

कैर्हेतुभिस्तेषां वर्णानां पञ्चधा विवेक इत्याह—

**स्वरतः कालतः स्थानात् प्रयत्नानुप्रदानतः । इति वर्णविदः प्राहुर्निपुणं तं निबोधत ॥ १० ॥ (२)**

**स्वरतः इति** । स्वरस्थानहेतून् व्याख्यास्यामः । वर्णानां ज्ञातार एवमाहुः—'पञ्चधा विवेको वर्णानाम्' इति । स्वरतः—उदात्तादिभेदेन । कालतः—ह्रस्वादि । स्थानं—कण्ठादि । प्रयत्नो द्विधा । अनुप्रदानं स्वस्थानादिकं घोषादि । अनु प्रकर्षेण दीयते इत्यनुप्रदानम् । 'द्वौ नादानुप्रदानौ' इत्यौदव्रजिः । पञ्चधा विवेकं वर्णानां निपुणमुच्यमानं हे श्रोतारः! निबोधत शृणुत ॥ १० ॥

अत्र किञ्चिदुच्यते बालव्युत्पत्त्यर्थम्—ननु सर्वमेवैतदनुपपन्नम् । कथम्? आत्मा बुद्ध्या सहार्थान् समर्थ्य मनो युङ्क्ते इति व्याख्यातम् । आत्मनश्च नियोजकभावो नोपपद्यते अकर्तृरूपत्वात् तस्य । तथा च श्रुतिः—"असङ्गो ह्ययं पुरुषः" इति, "अस्थूलमनण्वह्रस्वम्" इत्यादिका च । भवता चैवमात्मस्वरूपं व्याख्यातम् । आत्मनश्च नियोजकभावे शरीरेन्द्रियमनोबुद्धिव्यतिरिक्त इति शरीरादिव्यतिरिक्त आत्मा मनो युङ्क्ते इत्यनुपपन्नम् । उच्यते, अयमात्मा समर्थ्यार्थान्मनो युङ्क्ते इत्येतत् क्षेत्रज्ञाभिप्रायम् । क्षेत्रज्ञस्य तदेव स्वरूपं यन्नियोजकत्वम् । तथा च मनुः—

"योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते । यः करोति तु कर्माणि स भूतात्मोच्यते बुधैः ॥
जीवसंज्ञोऽन्तरात्माऽन्यः सहजः सर्वदेहिनाम् । येन वेदयते सर्वं सुखं दुःखं च कर्मसु ॥
तावुभौ भूतसंपृक्तौ महाक्षेत्रज्ञ एव च । उच्चावचेषु भूतेषु स्थितं तं व्याप्य तिष्ठति ॥" इति ।

तं व्याप्येति परमात्मानमाहुः । तथा च व्यासः—

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः" ॥

ननु यद्यात्मा बुद्ध्या समर्थ्यार्थानित्युदाहृतो यो नित्यः क्षेत्रज्ञ एवात्रात्माऽभिप्रेतो भवेत्, ततः क्षेत्रज्ञ एवात्मशब्दस्य चरितार्थत्वात् शरीरेन्द्रियमनोबुद्धिव्यतिरिक्तत्वं कतरस्माच्छब्दात् त्वया वर्णितं, किमर्थं च? उच्यते, आत्मा बुद्ध्येत्यत्र द्वावप्यात्मानौ तौ क्षेत्रज्ञपरमात्माभिधेयरूपावभिप्रेतौ तन्त्रेणोच्चारितौ । तन्त्रेणोच्चारणं सूत्राणामलङ्कारः । एवं चेत् किमर्थं परमात्मनो वर्णनिमित्तत्वं यदुक्तम्, तत्रोच्यते—अपवर्गसाधनोपकारत्वाच्छिक्षायाः । अपवर्गस्य चायमेवोपायः शरीरादिव्यतिरिक्तस्य परमात्मनो बोधः । बुद्धे च बुद्ध्यादिभिरैक्यं भवति । किं तदपवर्गसाधनं यस्य शिक्षोपकारे वर्तते? उच्यते, वेदा यज्ञाश्च । तथा च श्रुतिः—"तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन च" इति । वेदानुवचनं यज्ञगतमन्त्राङ्गत्वात्सम्यग्वर्णोच्चारणेन यस्मान्मोक्षमाप्नोति । वक्ष्यति च—'अतुलं च सुखं समश्नुते' इति । अतुलं सुखं मोक्ष एव भवति । अलमतिप्रसङ्गेन ।

प्रकृतमनुसरामः—

**उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः । ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि ॥ ११ ॥**
**उदात्ते निषादगान्धारावनुदात्त ऋषभधैवतौ । स्वरितप्रभवा ह्येते षड्जमध्यमपञ्चमाः ॥ १२ ॥**

**अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥१३॥**
**ओभावश्च विवृत्तिश्च शषसा रेफ एव च । जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ॥ १४ ॥**
**यद्योभावप्रसन्धानमुकारादिपरं पदम् । स्वरान्तं तादृशं विद्याद् यदन्यद् व्यक्तमूष्मणः ॥१५॥ (३)**
**हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम् । औरस्यं तं विजानीयात् कण्ठ्यमाहुरसंयुतम् ॥ १६ ॥**

**उदात्तश्चानुदात्तश्चेति** । स्वरतः कालत इत्येतौ द्वौ हेतू श्लोके विवृणोति । स्वर उदात्तादिः । कालो मात्राप्रभृति-त्रिमात्रपर्यन्तः । उदात्त इत्युपरिष्टात् परिगृहीतः । अनुदात्तस्तद्विपरीतः, अधस्ताद् गृहीत इत्यर्थः । स्वरित इति स्वरान्तरम् । स्वरतीति स्वरितः–आक्षेपनिष्पाद्यः, य उदात्तानुदात्तविकारः । तथा च नारदः—

"उच्चादुच्चतरं नास्ति नीचान्नीचतरं तथा । त्रैस्वर्ये स्वरसंज्ञायां किंस्थानं स्वर उच्यते ॥
उच्चनीचस्ययोर्मध्ये साधारण इति श्रुतिः । तं स्वरं स्वरसंज्ञायां प्रतिजानन्ति शैक्षिकाः" ।

**स्वरास्त्रय इति** । त्रय एव । ऋग्यजुर्विषयाः पञ्च षट्, सप्त च सामसु । ह्रस्व एकमात्रो दीर्घो द्विमात्रः प्लुतस्त्रिमात्रः । "निमेषकाला मात्रा स्यात्" इत्यौदव्रजिः । तथा च नारदः—

"निमेषकाला मात्रा स्याद्विद्युत्कालेति चापरे" इति ।

इतिशब्दः प्रकारार्थः । अनेन प्रकारेण कालत हेतोः स्वरतश्च विषमभागनियमः । तथा च नारदः—

"स्वर उच्चस्वरो नीचस्वरः स्वरित एव च ।
व्यञ्जनान्यत्र वर्तन्ते यत्र तिष्ठति स स्वरः" इति ॥ ११–१६ ॥

स्थानत इति यदुक्तं तदाह—

**कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू । स्युर्मूर्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः ॥ १७ ॥**

**कण्ठ्यावहाविति** । कण्ठ्यावहौ–अकारहकारौ कण्ठतो जातौ ॥ **इचुयशास्तालव्याः**—इकारश्च चवर्गश्च यकार-शकारौ च, एते तालव्याः-तालुस्थाने भवाः । 'चु' इत्युकाराऽनुबन्धो वर्गं ज्ञापयति । वर्गादावन्यत्रापि 'कुचुटुतुपु' इत्येव-मादिषु उकारः पञ्चवर्णपरिग्रहणार्थः । तथा च पाणिनिः–"अणुदित् सवर्णस्य चाप्रत्ययः" इति । औदव्रजिरपि–"स्पर्शवर्गस्य स्पर्शग्रहणे च ज्ञेयम् । वर्गस्य ग्रहणं स्थानेष्वित्याकरः" इति ॥ **ओष्ठजावुपू**—उकारः पवर्गश्च ओष्ठयोर्जातौ ॥ **स्युर्मूर्धन्या ऋटुरषा इति** । ऋकारः टवर्गश्च रेफषकारौ च मूर्द्धन्या भवेयुः ॥ **दन्त्या लृतुलसा इति** । लृकारस्तवर्गश्च लकार-सकारौ च दन्तेषु भवाः ॥ १७ ॥

**जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो वः स्मृतो बुधैः । एऐ तु कण्ठतालव्या ओऔ कण्ठोष्ठजौ स्मृतौ ॥१८॥**

**जिह्वामूले इति** । कवर्गस्तु जिह्वामूले कथितः । **दन्त्योष्ठ्यो वः स्मृतो बुधैरिति** । वकारो दन्तोष्ठयोर्भवतीति पण्डितैः स्मर्यते ॥ **एऐ तु कण्ठतालव्या इति** । एकार ऐकारश्च कण्ठतालुतो जातौ ॥ **ओऔ कण्ठोष्ठजौ स्मृता-विति** । ओकारश्चौकारश्च कण्ठोष्ठयोर्जातौ ॥ १८ ॥

**अर्धमात्रा तु कण्ठ्या स्यादेकारैकारयोर्भवेत् । ओकारौकारयोर्मात्रा तयोर्विवृतसंवृतम् ॥ १९ ॥**
**संवृतं मात्रिकं ज्ञेयं विवृतं तु द्विमात्रिकम् । घोषा वा संवृताः सर्वे अघोषा विवृताः स्मृताः ॥२०॥ (४)**
**स्वराणामूष्मणां चैव विवृतं करणं स्मृतम् । तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च ॥ २१ ॥**
**अनुस्वारयमानां च नासिका स्थानमुच्यते । अयोगवाहा विज्ञेया आश्रयस्थानभागिनः ॥ २२ ॥**

**अर्धमात्रा इति** । अर्धमात्रा तु कण्ठस्य भवति । कयोः ? एकारस्यौकारस्य च । सवर्णग्राहकत्वादैकारश्च औकारश्च द्वावपि गृह्येते । अतश्चतुर्णामपि सन्ध्यक्षराणामर्धमात्रा कण्ठसबन्धिनी भवेत् । अध्यर्धास्ताल्वोष्ठस्थानाः ॥ **अयोगेति** । अयोगवाहा इत्यनुस्वारादयश्चत्वार उच्यन्ते । अनुस्वारो विसर्गश्च ᳵकᳶपौ च कण्ठ्यौ । तथा च औदव्रजिः–'अयोग-वाहाः अः इति विसर्जनीयः, ᳵक इति जिह्वामूलीयः, ᳶपᳶफ इत्युपध्मानीयः, अं इत्यनुस्वारः–नासिक्यः, इत्ययोगवाहाः'। न विद्यते योगः संयोगो वर्णान्तरेण येषां ते अयोगवाहाः ॥ **आश्रयस्थानभाजिन इति** । आश्रयस्य ककारादेः स्थानं भाजितुं शीलं येषां ते आश्रयस्थानभाजिन. । अन्ये तु–यमानप्ययोगवाहान्मन्यन्ते । तेषां मतेन अयोगवाहशब्दः प्रत्यस्त-मितावयवो रूढिशब्दोऽश्वकर्णवद्वेदितव्यः । अनुस्वारस्य स्वरूपमाह—अनुस्वारस्य प्रकृतिः पाणिनिनैव कथिता "मोऽनुस्वारः" इति ॥ १९ ॥ २० ॥ २१ ॥ ॥ २२ ॥

**अलाबुवीणानिर्घोषो दन्तमूल्यः स्वराननु । अनुस्वारस्तु कर्तव्यो नित्यं ह्रोः शषसेषु च ॥ २३ ॥**
**अनुस्वारे विवृत्यां तु विरामे चाक्षरद्वये । द्विरोष्ठ्यौ तु विगृह्णीयाद् यत्रौकारवकारयोः ॥ २४ ॥**
**व्याघ्री यथा हरेत् पुत्रान् दंष्ट्राभ्यां न च पीडयेत् । भीता पतनभेदाभ्यां तद्वद्वर्णान् प्रयोजयेत् ॥२५॥ (५)**
**यथा सौराष्ट्रिका नारी तक्रँ इत्यभिभाषते । एवं रङ्गाः प्रयोक्तव्याः खे अराँ इव खेदया ॥ २६ ॥**

---

१ 'भाजिनः' इति भाष्यसंमतपाठः ।

रङ्गवर्णं प्रयुञ्जीरन् नो ग्रसेत् पूर्वमक्षरम् । दीर्घस्वरं प्रयुञ्जीयात् पश्चान्नासिक्यमाचरेत् ॥ २७ ॥
हृदये चैकमात्रस्त्वर्द्धमात्रस्तु मूर्धनि । नासिकायां तथाऽर्द्धं च रङ्गस्यैवं द्विमात्रता ॥ २८ ॥
हृदयादुत्करे तिष्ठन् कांस्येन समनुस्वरन् । मार्दवं च द्विमात्रं च जघन्वाँ २ इति निदर्शनम् ॥ २९ ॥
मध्ये तु कम्पयेत् कम्पमुभौ पार्श्वौ समौ भवेत् । स रङ्गं कम्पयेत् कम्पं रथीवेति निदर्शनम् ॥ ३० ॥
एवं वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडिताः । सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते ॥ ३१ ॥ (६)
गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः । अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ॥ ३२ ॥
माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः । धैर्यं लयसमर्थं च षडेते पाठका गुणाः ॥ ३३ ॥
शङ्कितं भीतमुद्घृष्टमव्यक्तमनुनासिकम् । काकस्वरं शिरसिगतं तथा स्थानविवर्जितम् ॥ ३४ ॥
उपांशुदष्टं त्वरितं निरस्तं विलम्बितं गद्गदितं प्रगीतम् ।
निष्पीडितं ग्रस्तपदाक्षरं च वदेन्न दीनं न तु सानुनास्यम् ॥ ३५ ॥
प्रातः पठेन्नित्यमुरःस्थितेन स्वरेण शार्दूलरुतोपमेन ।
मध्यंदिने कण्ठगतेन चैव चक्राह्वसंकूजितसन्निभेन ॥ ३६ ॥
तारं तु विद्यात् सवनं तृतीयं शिरोगतं तच्च सदा प्रयोज्यम् ।
मयूरहंसान्यभृतस्वराणां तुल्येन नादेन शिरःस्थितेन ॥ ३७ ॥ (७)

अलाब्विति । अलाबुस्तुम्बी, तस्या वीणाया निर्घोष इव शब्दो यस्य सोऽलाबुवीणानिर्घोषः । स्थानं दन्तमूलं तत्र भवो दन्तमूल्यः । स्वरान् अकारादीन् अनु भवतीति शेषः । हकाररेफयोः शषसेषु च सदा भवति । तथा च नारदः—

"आपद्यते मकारो रेफोष्मसु प्रत्ययेष्वनुस्वारम् । यवलेषु परसवर्णं स्पर्शेषु चोत्तमापत्तिम्" इति ।

"अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥"

इति–इमं श्लोकमनुवादरूपं केचित् पठन्ति ॥ २३—३७ ॥

स्वरतः कालतः स्थानतो वर्णानां भेदः कथितः । अधुना प्रयत्नतो भेदः कथ्यते—प्रकर्षेण यत्नो वर्णोच्चारणं प्रत्यस्पृष्टादिभिः स प्रयत्नः ।

अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शरस्तथा । शेषाः स्पृष्टा हलः प्रोक्ता निबोधानुप्रदानतः ॥ ३८ ॥

अजिति । अजिति प्रत्याहारग्रहणम् । 'अ इ उ ऋ ऌ ए ओ ऐ औ' एते अस्पृष्टाः । यणः–यवरलाः, एते ईषत्स्पृष्टाः । शरिति प्रत्याहारग्रहणं–शषसाः, एते नेमस्पृष्टाः । अर्धस्पृष्टा इत्यर्थः । तथेति पादपूरणार्थः ॥ **शेषाः स्पृष्टा हलः प्रोक्ता इति** । हल इति प्रत्याहारग्रहणं हकारादारभ्याऽऽलकारात् । शेष इति–उपयुक्तादन्यः शेषः । यणः शरश्च ईषत्स्पृष्टाः, तद्वर्जिता हलः स्पृष्टाः स्वस्थानैः कथिताः ॥ **निबोधानुप्रदानत इति** । अनुप्रदानमिति स्वस्थानादिकं घोषादि अनुप्रकर्षेण दीयते इति अनुप्रदानम् "द्वौ नादानुप्रदानौ" इत्यौदव्रजिः । अनुप्रदानतो हेतोर्वर्णानां भेदं शृणु ॥ ३८ ॥

ञमोऽनुनासिकानह्रो नादिनो हझषः स्मृताः । ईषन्नादा यणं जश्च श्वासिनस्तु खफादयः ॥ ३९ ॥

ञमिति—प्रत्याहारग्रहणं 'ञ म ङ ण न म्' ॥ **अनुनासिका इति** । स्वस्थानैरधिका अनुपाठाः, नासिकामनुभवन्तीति अनुनासिकाः–ञमङणनमोऽनुनासिकानिमान् जानीयात् । तथा च पाणिनिः–'मुखनासिकावचनोऽनुनासिकः' इति ॥ **अह्र इति**—अकारो रेफश्च हकारो झषश्च । प्रत्याहारग्रहणं—**झ इति**, 'झभघढधष्' एते अह्रादयो नादिनः स्मर्यन्ते । नाद एषामस्तीति **नादिनः** । अपरः पाठः—**अमोनुनासिका न ह्रौ** । अम इति प्रत्याहारग्रहणं 'अ इ उ ऋ ऌ ए ओ ऐ औ ह य व र ल ञ म ङ ण न म्' एते अनुनासिकाः । **न ह्रौ**—न तु रेफहकारौ अमावपि सन्तौ ॥ **नादिनो हझषः स्मृताः** । हकारो झषश्च नादिनः, **झषः**—झभघढधषः, अस्यार्थे पाठद्वयात् अमां हकाररेफवर्जितानां विकल्पेनानुनासिकत्वम्, ञमां तु नित्यम् । तथा च शौनकः—

"सचादयो या विहिता विवृत्तयः प्लुतोपधान्ता अनुनासिकोपधाः" इति ।

तथा उकारश्चेति करणे युक्तो रक्तः पृक्तो द्राधितः शाकलेनेति । अकाररेफयोः प्रथमे पाठे नादित्वं, द्वितीयपाठे हकाररेफयोर्नासिकत्वप्रतिषेधः ॥ **ईषन्नादा यणजशस्त्विवति** । यणः कथिताः । जशस्तु जकाराद्याः शकारेण प्रत्याहारः 'ज ब ग ड द श्' एते यण् जशश्च ईषन्मनाक् नादाः ॥ **श्वासिनस्तु खफादय इति** । 'खफछठथाः' एते श्वासिनः श्वास एषामस्तीति श्वासिनः "श्वासो घोषाणां तृतीयात् प्रथमानामुभावघोषश्चतुर्थानां युग्माः सोष्माणम्" इति चौदव्रजिः ॥३९॥

ईषच्छ्वासांश्चरो विद्याद्गोर्धामैतत् प्रचक्षते । दाक्षीपुत्रपाणिनिना[2] येनेदं व्यापितं भुवि ॥ ४० ॥
छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते । ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥ ४१ ॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् । तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥ ४२ ॥ (८)
उदात्तमाख्याति वृषोऽङ्गुलीनां प्रदेशिनीमूलनिविष्टमूर्धा ।
उपान्तमध्ये स्वरितं धृतं च कनिष्ठिकायामनुदात्तमेव ॥ ४३ ॥

१ 'यण्जशः' इति भाष्यपाठः । २ 'दाक्षीपुत्रः पाणिनिना' इत्येवं पाठो वैदिकसंप्रदाये समुपलभ्यते । स चानन्वितः, आर्षो वा ।

**उदात्तं प्रदेशिनीं विद्यात् प्रचयं मध्यतोऽङ्गुलिम् । निहतं तु कनिष्ठिक्यां स्वरितोपकनिष्ठिकाम् ॥ ४४ ॥**
**अन्तोदात्तमाद्युदात्तमुदात्तमनुदात्तं नीचस्वरितम् ।**
**मध्योदात्तं स्वरितं द्व्युदात्तं त्र्युदात्तमिति नवपदशय्या ॥ ४५ ॥**
**अग्निः सोमः प्रवो वीर्यं हविषां स्वर्बृहस्पतिरिन्द्राबृहस्पती ।**
**अग्निरित्यन्तोदात्तं सोम इत्याद्युदात्तं प्रेत्युदात्तं व इत्यनुदात्तं वीर्यं नीचस्वरितम् ॥ ४६ ॥**
**हविषां मध्योदात्तं स्वरिति स्वरितम् । बृहस्पतिरिति द्व्युदात्तमिन्द्राबृहस्पती इति त्र्युदात्तम् ॥४७॥**
**अनुदात्तो हृदि ज्ञेयो मूर्ध्न्युदात्त उदाहृतः । स्वरितः कर्णमूलीयः सर्वास्ये प्रचयः स्मृतः ॥ ४८ ॥ (९)**
**चाषस्तु वदते मात्रां द्विमात्रं चैव वायसः । शिखी रौति त्रिमात्रं तु नकुलस्त्वर्द्धमात्रकम् ॥ ४९ ॥**
**कुतीर्थादागतं दग्धमपवर्णं च भक्षितम् । न तस्य पाठे मोक्षोऽस्ति पापाहेरिव किल्बिषात् ॥ ५० ॥**
**सुतीर्थादागतं व्यक्तं स्वाम्नाय्यं सुव्यवस्थितम् । सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते ॥ ५१ ॥**

**ईषच्छ्वासांश्चरो विद्यादिति ।** चर इति प्रत्याहारग्रहणं 'च ट त क प श ष स र्' एतन्नामकान् ईपच्छ्वासान् जानीयात् ॥ **गोर्धामैतत्प्रचक्षत इति ।** गोर्वाचः, धाम स्थानम्, एतच्छास्त्रमाचक्षते वर्णविदः शास्त्रानुपूर्व्यमिति च उक्ताः ॥ ४०–५१ ॥

अथ मन्त्रव्यत्यासलक्षणमाह—

**मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।**
**स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ ५२ ॥**
**अवक्षरमनायुष्यं विस्वरं व्याधिपीडितम् । अक्षता शस्त्ररूपेण वज्रं पतति मस्तके ॥ ५३ ॥**
**हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम् । ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति ॥ ५४ ॥**
**हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम् । ऋग्यजुःसामभिः पूतो ब्रह्मलोके महीयते ॥ ५५ ॥ (१०)**

**मन्त्रः**—मननान्मन्त्रः **स्वरतः**—उदात्तादिभेदतः, **वर्णतः**—त्रिषष्टिरित्यादिभेदतः, **मिथ्याप्रयुक्तः**—यः स्वरो यो वर्णस्तमज्ञात्वैव प्रयुक्तः, **न तमर्थमाह**—तस्यार्थं न वेद । स ईदृशो मन्त्रो वाग्रूपो वज्रसमो यजमानं हिनस्ति । तत्र दृष्टान्तमाह—यथा स्वरतोऽपराधाद् इन्द्र एव शत्रुहन्ताऽभूदिति ॥ ५२–५५ ॥

इदानीं गुरुपूर्वकममाह—

**शङ्करः शाङ्करीं प्रादाद्दाक्षीपुत्राय धीमते । वाङ्मयेभ्यः समाहृत्य देवीं वाचमिति स्थितिः ॥ ५६ ॥**

**शङ्कर इति ।** शङ्करः शं सुखं करोतीति शंकरः सुखकरः शाङ्करीं सुखकरीं विद्यां दाक्षीपुत्राय ऋषये दाक्षीनाम्नी ऋषिकन्या तत्पुत्राय धीमते बुद्धिमते प्रादाद्दत्तवान् ॥ ५६ ॥

सम्प्रति पाणिनिस्तुतिपरं श्लोकमाह—

**येनाक्षरसमाम्नायमधिगम्य महेश्वरात् । कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥ ५७ ॥**
**येन धौता गिरः पुंसां विमलैः शब्दवारिभिः । तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥ ५८ ॥**
**अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै पाणिनये नमः ॥ ५९ ॥**

**येनेति ।** नन्वप्रकृतं स्तुतिपूर्वकं पाणिनेर्नमस्कारकरणं किमर्थम्? उच्यते, अचोऽस्पृष्टा यणस्त्वीषदिति प्रत्याहारैः शिक्षा ग्रथिता प्रत्याहाराश्च पाणिनिना शङ्करादधिगम्य कृत्स्नं समग्रं व्याकरणं प्रोक्तं शिष्योपकाराय स्वप्रत्याहारा लोके प्रवर्तिताः, तदर्थां स्तुतिः । अक्षरसमाम्नायमिति प्रत्याहारानाहुः । ऋज्वन्यत् ॥ ५७–५९ ॥

भगवतः शिक्षायाश्च साक्षात् स्तुतिपरं श्लोकमाह—

**त्रिनयनमभिमुखनिःसृतामिमां य इह पठेत् प्रयतश्च सदा द्विजः ।**
**स भवति धनधान्यपशुपुत्रकीर्तिमानतुलं च सुखं समश्नुते दिवीति दिवीति ॥ ६० ॥ (११)**
**अथ शिक्षामात्मोदात्तश्चहकारं स्वराणां यथा गीत्यचोस्पृष्टोदात्तं चाषस्तुशङ्कर एकादश ।**
**इति पाणिनीयशिक्षा समाप्ता ॥**

---

**त्रिनयनेति ।** वैतालीयं छन्दोऽस्य, अन्येषामनुष्टुप् छन्दोऽस्ति । त्रिनयनः शिवस्तस्य मुखान्निःसृता यथा गुहायाः सिंहो निष्क्रामति तथा निःसृता, एतावता त्रिनयनेनापि न कृतेत्यर्थः । तां यः–द्विजः पठेदधीयीत स धनादिभिर्युज्यते सुखमतुलं परमानन्दलक्षणमुक्तिमुक्तप्रकारेणाश्नुते प्राप्नोति । अन्यत्रामुष्मिन् लोके धनधान्यपशुकीर्तिभाग् भवत्यन्ते मुक्तिभाक्, अन्यदवान्तरफलानि स्वर्गादीनि परिमितकालत्वात् तोलयितुं शक्यन्ते–मोक्षाख्यं तु अपरिमितकालावच्छिन्नं सुखरूपमित्यर्थः ॥ ६० ॥

इति पाणिनीयशिक्षापञ्जिकाख्यं भाष्यं सम्पूर्णम् ।

श्रीगणेशाय नमः ।

# अष्टाध्यायीसूत्रपाठः २

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् । कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥

येन धौता गिरः पुंसां विमलैः शब्दवारिभिः । तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥

अइउण् । २ आ० १ । ऋऌक् । २ आ० २ । एओङ् । २ आ० ३ । ऐऔच् । २ आ० ३ । हयवरट् । २ आ० ४ । लण् । २ आ० ५ । ञमङणनम् । २ आ० ६ । झभञ् । २ आ० ६ । घढधष् । जबगडदश् । खफछठथचटतव् । कपय् । शषसर् । हल् ॥ इति प्रत्याहारसूत्राणि ।

## अथ प्रथमोऽध्यायः ।

### प्रथमः पादः ।

१ वृद्धिरादैच् ।३।१
२ अदेङ्गुणः ।
३ इको गुणवृद्धी ।३।२
४ न धातुलोप आर्धधातुके ।४।१
५ क्क्ङिति च ।४।२
६ दीधीवेवीटाम् ।४।३
७ हलोऽनन्तराः संयोगः ।४।४
८ मुखनासिकावचनोऽनुनासिकः ।४।५
९ तुल्यास्यप्रयत्नं सवर्णम् ।४।६
१० नाज्झलौ ।४।७
११ ईदूदेद्द्विवचनं प्रगृह्यम् ।५।१
१२ अदसो मात् ।५।२
१३ शे ।५।३
१४ निपात एकाजनाङ् ।५।४
१५ ओत् ।५।५
१६ संबुद्धौ शाकल्यस्येतावनार्षे ।
१७ उञः ।५।६
१८ ऊँ ।५।६
१९ ईदूतौ च सप्तम्यर्थे ।५।७
२० दाधा घ्वदाप् ।५।८
२१ आद्यन्तवदेकस्मिन् ।५।९
२२ तरप्तमपौ घः ।५।१०
२३ बहुगणवतुडति संख्या ।५।११
२४ ष्णान्ता षट् ।५।१२
२५ डति च ।५।१३
२६ क्तक्तवतू निष्ठा ।५।१४
२७ सर्वादीनि सर्वनामानि ।६।१
२८ विभाषा दिक्समासे बहुव्रीहौ।६।१
२९ न बहुव्रीहौ ।६।२
३० तृतीयासमासे ।६।४
३१ द्वन्द्वे च ।६।४
३२ विभाषा जसि ।५।६
३३ प्रथमचरमतयाल्पार्धकतिपयनेमाश्च ।६।५
३४ पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ।६।६
३५ स्वमज्ञातिधनाख्यायाम् ।६।७
३६ अन्तरं बहिर्योगोपसंव्यानयोः ।६।८
३७ स्वरादिनिपातमव्ययम् ।६।९
३८ तद्धितश्चासर्वविभक्तिः ।६।१०
३९ कृन्मेजन्तः ।६।११
४० क्त्वातोसुन्कसुनः ।६।११
४१ अव्ययीभावश्च ।६।१२
४२ शि सर्वनामस्थानम् ।६।१३
४३ सुडनपुंसकस्य ।६।१३
४४ न वेति विभाषा ।६।१४
४५ इग्यणः संप्रसारणम् ।७।१
४६ आद्यन्तौ टकितौ ।७।२
४७ मिदचोऽन्त्यात्परः ।७।३
४८ एच इग्घ्रस्वादेशे ।७।४
४९ षष्ठी स्थानेयोगा ।७।५
५० स्थानेऽन्तरतमः ।७।६
५१ उरण्रपरः ।७।७
५२ अलोऽन्त्यस्य ।७।८
५३ ङिच्च ।७।९
५४ आदेः परस्य ।७।१०
५५ अनेकाल्शित् सर्वस्य ।७।११
५६ स्थानिवदादेशोऽनल्विधौ ।८।१
५७ अचः परस्मिन् पूर्वविधौ ।८।२
५८ न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ।८।३
५९ द्विर्वचनेऽचि ।८।४
६० अदर्शनं लोपः ।९।१
६१ प्रत्ययस्य लुक्श्लुलुपः ।९।२
६२ प्रत्ययलोपे प्रत्ययलक्षणम् ।९।३
६३ न लुमताऽङ्गस्य ।९।४
६४ अचोऽन्त्यादि टि ।९।४
६५ अलोऽन्त्यात् पूर्व उपधा ।९।५
६६ तस्मिन्निति निर्दिष्टे पूर्वस्य ।९।६
६७ तस्मादित्युत्तरस्य ।९।६
६८ स्वं रूपं शब्दस्याशब्दसंज्ञा ।९।७
६९ अणुदित्सवर्णस्य चाप्रत्ययः ।९।८
७० तपरस्तत्कालस्य ।९।१०
७१ आदिरन्त्येन सहेता ।९।११
७२ येन विधिस्तदन्तस्य ।९।१२
७३ वृद्धिर्यस्याचामादिस्तद्वृद्धम् ।९।१३
७४ त्यदादीनि च ।९।१४
७५ एङ् प्राचां देशे ।९।१५

"वृद्धिराद्यन्तवदव्ययीभावः प्रत्ययस्य लुक् पञ्चदश"

### द्वितीयः पादः ।

१ गाङ्कुटादिभ्योऽञ्णिन्ङित् ।
२ विज इट् ।१।१
३ विभाषोर्णोः ।
४ सार्वधातुकमपित् ।१।२
५ असंयोगाल्लिट् कित् ।१।३

---

१ सूत्रभागसमाप्तिस्थेषु संख्याङ्केषु प्रथमो भाष्याह्निकाङ्कः द्वितीयस्तदाह्निके तत्सूत्रसंख्याबोधक इति बोध्यम् ॥

६ इन्धिभवतिभ्यां च ।१।३
७ मृडमृदगुधकुषक्लिशवदवसः क्त्वा ।१।५
८ रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ।
९ इको झल् ।१।६
१० हलन्ताच्च ।१।७
११ लिङ्सिचावात्मनेपदेषु ।१।८
१२ उश्च ।
१३ वा गमः ।
१४ हनः सिच् ।
१५ यमो गन्धने ।
१६ विभाषोपयमने ।
१७ स्थाघ्वोरिच्च ।१।९
१८ न क्त्वा सेट् ।१।१०
१९ निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः ।
२० मृषस्तितिक्षायाम् ।
२१ उदुपधाद्भावादिकर्मणोरन्यतरस्याम् ।१।११
२२ पूङः क्त्वा च ।
२३ नोपधात्थफान्ताद्वा ।
२४ वञ्चिलुञ्च्यृतश्च ।
२५ तृषिमृषिकृशेः काश्यपस्य ।१।१२
२६ रलो व्युपधाद्धलादेः संश्च ।१।१३
२७ ऊकालोऽज्झ्रस्वदीर्घप्लुतः ।१।१४
२८ अचश्च ।१।१५
२९ उच्चैरुदात्तः ।१।१६
३० नीचैरनुदात्तः ।१।१६
३१ समाहारः स्वरितः ।१।१७
३२ तस्यादित उदात्तमर्धह्रस्वम् ।१।१८
३३ एकश्रुति दूरात्संबुद्धौ ।१।१९
३४ यज्ञकर्मण्यजपन्यूङ्खसामसु ।
३५ उच्चैस्तरां वा वषट्कारः ।
३६ विभाषा छन्दसि ।
३७ न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ।१।२०
३८ देवब्रह्मणोरनुदात्तः ।१।२१
३९ स्वरितात्संहितायामनुदात्तानाम् ।१।२२
४० उदात्तस्वरितपरस्य सन्नतरः ।
४१ अपृक्त एकाल्प्रत्ययः ।१।२३
४२ तत्पुरुषः समानाधिकरणः कर्मधारयः ।१।२४
४३ प्रथमानिर्दिष्टं समास उपसर्जनम् ।१।२५
४४ एकविभक्ति चापूर्वनिपाते ।१।२६
४५ अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ।२।१
४६ कृत्तद्धितसमासाश्च ।२।२
४७ ह्रस्वो नपुंसके प्रातिपदिकस्य ।२।३
४८ गोस्त्रियोरुपसर्जनस्य ।
४९ लुक्तद्धितलुकि ।२।४
५० इद्गोण्याः ।२।५
५१ लुपि युक्तवद्व्यक्तिवचने ।२।६
५२ विशेषणानां चाजातेः ।२।७
५३ तदशिष्यं संज्ञाप्रमाणत्वात् ।२।८
५४ लुब्योगाप्रख्यानात् ।
५५ योगप्रमाणे च तदभावेऽदर्शनं स्यात् ।
५६ प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् ।
५७ कालोपसर्जने च तुल्यम् ।
५८ जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् ।२।९
५९ अस्मदो द्वयोश्च ।२।१०
६० फल्गुनीप्रोष्ठपदानां च नक्षत्रे ।२।११
६१ छन्दसि पुनर्वस्वोरेकवचनम् ।२।१२
६२ विशाखयोश्च ।२।१२
६३ तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ।२।१३
६४ सरूपाणामेकशेष एकविभक्तौ ।३।१
६५ वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ।३।२
६६ स्त्री पुंवच्च ।३।३
६७ पुमान्स्त्रिया ।३।४
६८ नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ।३।५
६९ भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ।३।६
७० पिता मात्रा ।३।६
७१ श्वशुरः श्वश्र्वा ।३।६
७२ त्यदादीनि सर्वैर्नित्यम् ।३।७
७३ ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री ।३।८

"गाङ्कुटाद्युदुपधादपृक्तश्छन्दसि पुनर्वस्वोस्त्रयोदश"

---

## तृतीय पादः ।

१ भूवादयो धातवः ।१।१
२ उपदेशेऽजनुनासिक इत् ।१।२
३ हलन्त्यम् ।१।३
४ न विभक्तौ तुस्माः ।१।४
५ आदिर्ञिटुडवः ।
६ षः प्रत्ययस्य ।
७ चुटू ।१।५
८ लशक्वतद्धिते ।
९ तस्य लोपः ।१।६
१० यथासंख्यमनुदेशः समानाम् ।१।७
११ स्वरितेनाधिकारः ।१।८
१२ अनुदात्तङित आत्मनेपदम् ।२।१
१३ भावकर्मणोः ।
१४ कर्तरि कर्मव्यतिहारे ।२।२
१५ न गतिहिंसार्थेभ्यः ।२।३
१६ इतरेतरान्योऽन्योपपदाच्च ।२।४
१७ नेर्विशः ।
१८ परिव्यवेभ्यः क्रियः ।
१९ विपराभ्यां जेः ।२।५
२० आङो दोऽनास्यविहरणे ।२।६
२१ क्रीडोऽनुसंपरिभ्यश्च ।२।८
२२ समवप्रविभ्यः स्थः ।२।८
२३ प्रकाशनस्थेयाख्ययोश्च ।
२४ उदोऽनूर्ध्वकर्मणि ।२।९
२५ उपान्मन्त्रकरणे ।२।१०
२६ अकर्मकाच्च ।
२७ उद्विभ्यां तपः ।२।११
२८ आङो यमहनः ।२।१२
२९ समो गम्यृच्छिभ्याम् ।२।१३
३० निसमुपविभ्यो ह्वः ।
३१ स्पर्धायामाङः ।
३२ गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः ।
३३ अधेः प्रसहने ।
३४ वेः शब्दकर्मणः ।
३५ अकर्मकाच्च ।
३६ संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ।
३७ कर्तृस्थे चाशरीरे कर्मणि ।
३८ वृत्तिसर्गतायनेषु क्रमः ।

३९ उपपराभ्याम् ।
४० आङ उद्गमने ।२।१४
४१ वेः पादविहरणे ।
४२ प्रोपाभ्यां समर्थाभ्याम् ।
४३ अनुपसर्गाद्वा ।
४४ अपह्नवे ज्ञः ।
४५ अकर्मकाच्च ।
४६ संप्रतिभ्यामनाध्याने ।
४७ भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ।
४८ व्यक्तवाचां समुच्चारणे ।२।१५
४९ अनोरकर्मकात् ।
५० विभाषा विप्रलापे ।
५१ अवाद्ग्रः ।२।१६
५२ समः प्रतिज्ञाने ।
५३ उदश्चरः सकर्मकात् ।
५४ समस्तृतीयायुक्तात् ।२।१७
५५ दाणश्च सा चेच्चतुर्थ्यर्थे ।२।१८
५६ उपाद्यमः स्वकरणे ।२।१९
५७ ज्ञाश्रुस्मृदृशां सनः ।
५८ नानोर्ज्ञः ।२।२०
५९ प्रत्याङ्भ्यां श्रुवः ।
६० शदेः शितः ।२।२१
६१ म्रियतेर्लुङ्लिङोश्च ।
६२ पूर्ववत् सनः ।२।२२
६३ आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य ।२।२३
६४ प्रोपाभ्यां युजेरयज्ञपात्रेषु ।२।२४
६५ समः क्ष्णुवः ।२।२५
६६ भुजोऽनवने ।२।२६
६७ णेरणौ यत्कर्म णौ चेत्स कर्ताऽनाध्याने ।२।२७
६८ भीस्म्योर्हेतुभये ।
६९ गृधिवञ्च्योः प्रलम्भने ।
७० लियः संमाननशालीनीकरणयोश्च ।
७१ मिथ्योपपदात् कृञोऽभ्यासे ।
७२ स्वरितञितः कर्त्रभिप्राये क्रियाफले ।२।२८
७३ अपाद्वदः ।
७४ णिचश्च ।
७५ समुदाङ्भ्यो यमोऽग्रन्थे ।
७६ अनुपसर्गाज्ज्ञः ।
७७ विभाषोपपदेन प्रतीयमाने ।
७८ शेषात्कर्तरि परस्मैपदम् ।२।२९

सि० कौ० ८६

७९ अनुपराभ्यां कृञः ।२।३०
८० अभिप्रत्यतिभ्यः क्षिपः ।
८१ प्राद्वहः ।
८२ परेर्मृषः ।
८३ व्याङ्परिभ्यो रमः ।
८४ उपाच्च ।
८५ विभाषाऽकर्मकात् ।
८६ बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ।२।३१
८७ निगरणचलनार्थेभ्यश्च
८८ अणावकर्मकाच्चित्तवत्कर्तृकात् ।२।३२
८९ न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ।२।३३
९० वा क्यषः ।
९१ द्युद्भ्यो लुङि ।
९२ वृद्भ्यः स्यसनोः ।
९३ लुटि च क्लृपः ।२।३४
"भूवादयः क्रीडोऽनुवेः पादम्रियतेः प्राद्वहस्त्रयोदश"

---

## चतुर्थः पादः १।४

१ आ कडारादेका संज्ञा ।१।१
२ विप्रतिषेधे परं कार्यम् ।१।२
३ यू स्त्र्याख्यौ नदी ।२।१
४ नेयङुवङ्स्थानावस्त्री ।
५ वामि ।
६ ङिति ह्रस्वश्च ।
७ शेषो घ्यसखि ।
८ पतिः समास एव ।
९ षष्ठीयुक्तश्छन्दसि वा ।२।२
१० ह्रस्वं लघु ।
११ संयोगे गुरु ।
१२ दीर्घं च ।
१३ यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् ।२।३
१४ सुप्तिङन्तं पदम् ।२।४
१५ नः क्ये ।२।५
१६ सिति च ।
१७ स्वादिष्वसर्वनामस्थाने ।२।६
१८ यचि भम् ।२।७
१९ तसौ मत्वर्थे ।२।८
२० अयस्मयादीनि छन्दसि ।२।९
२१ बहुषु बहुवचनम् ।२।१०
२२ द्व्येकयोर्द्विवचनैकवचने ।
२३ कारके ।३।१
२४ ध्रुवमपायेऽपादानम् ।३।२
२५ भीत्रार्थानां भयहेतुः ।३।३
२६ पराजेरसोढः ।३।४
२७ वारणार्थानामीप्सितः ।३।५
२८ अन्तर्धौ येनादर्शनमिच्छति ।३।६
२९ आख्यातोपयोगे ।३।७
३० जनिकर्तुः प्रकृतिः ।३।८
३१ भुवः प्रभवः ।३।९
३२ कर्मणा यमभिप्रैति स संप्रदानम् ।३।१०
३३ रुच्यर्थानां प्रीयमाणः ।
३४ श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ।
३५ धारेरुत्तमर्णः ।
३६ स्पृहेरीप्सितः ।
३७ क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ।३।११
३८ क्रुधद्रुहोरुपसृष्टयोः कर्म ।
३९ राधीक्ष्योर्यस्य विप्रश्नः ।
४० प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता ।
४१ अनुप्रतिगृणश्च ।
४२ साधकतमं करणम् ।३।१२
४३ दिवः कर्म च ।
४४ परिक्रयणे संप्रदानमन्यतरस्याम् ।
४५ आधारोऽधिकरणम् ।
४६ अधिशीङ्स्थासां कर्म ।
४७ अभिनिविशश्च ।
४८ उपान्वध्याङ्वसः ।३।१३
४९ कर्तुरीप्सिततमं कर्म ।३।१४
५० तथायुक्तं चानीप्सितम् ।३।१५
५१ अकथितं च ।३।१६
५२ गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ ।३।१७
५३ हृक्रोरन्यतरस्याम् ।३।१८
५४ स्वतन्त्रः कर्ता ।३।१९
५५ तत्प्रयोजको हेतुश्च ।३।२०
५६ प्राग्रीश्वरान्निपाताः ।४।१
५७ चादयोऽसत्त्वे ।४।२
५८ प्रादयः ।४।३
५९ उपसर्गाः क्रियायोगे ।४।३

६० गतिश्च ।४।४
६१ ऊर्यादिच्विडाचश्च ।४।५
६२ अनुकरणं चानितिपरम् ।४।६
६३ आदरानादरयोः सदसती ।४।७
६४ भूषणेऽलम् ।
६५ अन्तरपरिग्रहे ।४।८
६६ कणेमनसी श्रद्धाप्रतीघाते ।
६७ पुरोऽव्ययम् ।
६८ अस्तं च ।
६९ अच्छ गत्यर्थवदेषु ।
७० अदोऽनुपदेशे ।
७१ तिरोऽन्तर्धौ ।
७२ विभाषा कृञि ।
७३ उपाजेऽन्वाजे ।
७४ साक्षात्प्रभृतीनि च ।४।९
७५ अनत्याधान उरसिमनसी ।
७६ मध्येपदे निवचने च ।
७७ नित्यं हस्ते पाणावुपयमने ।
७८ प्राध्वं बन्धने ।
७९ जीविकोपनिषदावौपम्ये ।
८० ते प्राग्धातोः ४।१०
८१ छन्दसि परेऽपि ।
८२ व्यवहिताश्च ।
८३ कर्मप्रवचनीयाः ।४।११
८४ अनुर्लक्षणे ।४।१२
८५ तृतीयार्थे ।
८६ हीने ।
८७ उपोऽधिके च ।
८८ अपपरी वर्जने ।
८९ आङ्मर्यादावचने ।४।१३
९० लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः ।४।१४
९१ अभिरभागे ।
९२ प्रतिः प्रतिनिधिप्रतिदानयोः ।
९३ अधिपरी अनर्थकौ ।४।१५
९४ सुः पूजायाम् ।
९५ अतिरतिक्रमणे च ।
९६ अपिः पदार्थसंभावनाऽन्ववसर्गगर्हासमुच्चयेषु ।४।१६
९७ अधिरीश्वरे ।४।१७
९८ विभाषा कृञि ।
९९ लः परस्मैपदम् ।४।१८
१०० तङानावात्मनेपदम् ।
१०१ तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ।४।१९
१०२ तान्येकवचनद्विवचनबहुवचनान्येकशः ।
१०३ सुपः ।
१०४ विभक्तिश्च ।४।२०
१०५ युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ।४।२१
१०६ प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ।
१०७ अस्मद्युत्तमः ।४।२१
१०८ शेषे प्रथमः ।४।२१
१०९ परः संनिकर्षः संहिता ।४।२२
११० विरामोऽवसानम् ।४।२३

"आकडाराद् बहुष्वनुप्रतिगृण ऊर्यादिच्छन्दसि तिङो दश"

---

## अथ द्वितीयोऽध्यायः ।

### प्रथमः पादः २।१

१ समर्थः पदविधिः ।१।१
२ सुबामन्त्रिते पराङ्गवत्स्वरे ।२।१
३ प्राक्कडारात्समासः ।२।२
४ सह सुपा ।२।३
५ अव्ययीभावः ।२।४
६ अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथाऽनुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु ।२।५
७ यथाऽसादृश्ये ।२।६
८ यावदवधारणे ।
९ सुप्प्रतिना मात्रार्थे ।२।७
१० अक्षशलाकासंख्याः परिणा ।२।८
११ विभाषा[1] ।२।९
१२ अपपरिबहिरञ्चवः पञ्चम्या ।२।९
१३ आङ्मर्यादाऽभिविध्योः ।२।१०
१४ लक्षणेनाभिप्रती आभिमुख्ये ।
१५ अनुर्यत्समया ।
१६ यस्य चायामः ।२।११
१७ तिष्ठद्गुप्रभृतीनि च ।२।१२
१८ पारे मध्ये षष्ठ्या वा ।२।१३
१९ संख्या वंश्येन ।
२० नदीभिश्च ।२।१४
२१ अन्यपदार्थे च संज्ञायाम् ।
२२ तत्पुरुषः ।
२३ द्विगुश्च ।२।१५
२४ द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ।२।१६
२५ स्वयं क्तेन ।
२६ खट्वा क्षेपे ।२।१७
२७ सामि ।
२८ कालाः ।
२९ अत्यन्तसंयोगे च ।२।१८
३० तृतीया तत्कृतार्थेन गुणवचनेन ।२।१९
३१ पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ।२।२०
३२ कर्तृकरणे कृता बहुलम् ।२।२१
३३ कृत्यैरधिकार्थवचने ।२।२२
३४ अन्नेन व्यञ्जनम् ।२।२३
३५ भक्ष्येण मिश्रीकरणम् ।२।२३
३६ चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः २।२४
३७ पञ्चमी भयेन ।२।२५
३८ अपेतापोढमुक्तपतितापत्रस्तैरल्पशः ।
३९ स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ।
४० सप्तमी शौण्डैः ।२।२६
४१ सिद्धशुष्कपक्वबन्धैश्च ।
४२ ध्वाङ्क्षेण क्षेपे ।२।२७
४३ कृत्यैर्ऋणे ।२।२८
४४ संज्ञायाम् ।
४५ क्तेनाहोरात्रावयवाः ।
४६ तत्र ।
४७ क्षेपे ।२।२९
४८ पात्रे समितादयश्च ।२।३०
४९ पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ।२।३१
५० दिक्संख्ये संज्ञायाम् ।
५१ तद्धितार्थोत्तरपदसमाहारे च ।३।१
५२ संख्यापूर्वो द्विगुः ।३।२
५३ कुत्सितानि कुत्सनैः ।३।३
५४ पापाणके कुत्सितैः ।
५५ उपमानानि सामान्यवचनैः ।३।४
५६ उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ।३।५

---

१ 'विभाषाऽपपरिबहिरञ्चवः पञ्चम्या' इत्येको योगो विभक्तो भाष्ये ॥

५७ विशेषणं विशेष्येण बहुलम् ।३।६
५८ पूर्वापरप्रथमचरमजघन्यसमान-मध्यमध्यमवीराश्च ।३।७
५९ श्रेण्यादयः कृतादिभिः ।३।८
६० क्तेन नञ्विशिष्टेनानञ् ।३।९
६१ सन्महत्परमोत्तमोत्कृष्टाः पूज्य-मानैः ।
६२ वृन्दारकनागकुञ्जरैः पूज्यमानम् ।
६३ कतरकतमौ जातिपरिप्रश्ने ।
६४ किं क्षेपे ।
६५ पोटायुवतिस्तोककतिपयगृष्टिधेनु-वशावेहद्बष्कयणीप्रवक्तृश्रोत्रिया-ध्यापकधूर्तैर्जातिः ।
६६ प्रशंसावचनैश्च ।
६७ युवा खलतिपलितवलिनजरती-भिः ।३।१०
६८ कृत्यतुल्याख्या अजात्या ।
६९ वर्णो वर्णेन ।३।११
७० कुमारः श्रमणादिभिः ।
७१ चतुष्पादो गर्भिण्या ।३।१२
७२ मयूरव्यंसकादयश्च ।
"समर्थोऽन्यपदार्थे सिद्धशुष्क-सन्महद्द्वादश"

## द्वितीयः पादः २।२

१ पूर्वापराधरोत्तरमेकदेशिनैका-धिकरणे ।
२ अर्धं नपुंसकम् ।१।१
३ द्वितीयतृतीयचतुर्थतुर्याण्य-न्यतरस्याम् ।१।२
४ प्राप्तापन्ने च द्वितीयया ।१।३
५ कालाः परिमाणिना ।१।४
६ नञ् ।१।५
७ ईषदकृता ।१।६
८ षष्ठी ।१।७
९ याजकादिभिश्च ।
१० न निर्धारणे ।१।८
११ पूरणगुणसुहितार्थसदव्ययत-व्यसमानाधिकरणेन ।१।९
१२ क्तेन च पूजायाम् ।
१३ अधिकरणवाचिना च ।
१४ कर्मणि च ।१।१०
१५ तृजकाभ्यां कर्तरि ।
१६ कर्तरि च ।
१७ नित्यं क्रीडाजीविकयोः ।१।११
१८ कुगतिप्रादयः ।१।१२
१९ उपपदमतिङ् ।१।१३
२० अमैवाव्ययेन ।१।१४
२१ तृतीयाप्रभृतीन्यन्यतरस्याम् ।
२२ क्त्वा च ।
२३ शेषो बहुव्रीहिः ।१।१५
२४ अनेकमन्यपदार्थे ।२।१
२५ संख्ययाऽव्ययासन्नादूराधिक-संख्याः संख्येये ।२।२
२६ दिङ्नामान्यन्तराले ।२।३
२७ तत्र तेनेदमिति सरूपे ।२।३
२८ तेन सहेति तुल्ययोगे ।२।३
२९ चार्थे द्वन्द्वः ।२।५
३० उपसर्जनं पूर्वम् ।२।६
३१ राजदन्तादिषु परम् ।
३२ द्वन्द्वे घि ।
३३ अजाद्यदन्तम् ।
३४ अल्पाच्तरम् ।२।७
३५ सप्तमीविशेषणे बहुव्रीहौ ।
३६ निष्ठा ।
३७ वाहिताग्न्यादिषु ।
३८ कडाराः कर्मधारये ।२।८
"पूर्वापराधरोत्तरं तृतीयाप्रभृती-न्यष्टादश"

## तृतीयः पादः २।३

१ अनभिहिते ।१।१
२ कर्मणि द्वितीया ।१।२
३ तृतीया च होश्छन्दसि ।१।३
४ अन्तरान्तरेण युक्ते ।१।४
५ कालाध्वनोरत्यन्तसंयोगे ।१।५
६ अपवर्गे तृतीया ।१।६
७ सप्तमीपञ्चम्यौ कारकमध्ये ।१।७
८ कर्मप्रवचनीययुक्ते द्वितीया ।१।८
९ यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ।१।९
१० पञ्चम्यपाङ्परिभिः ।
११ प्रतिनिधिप्रतिदाने च यस्मात् ।
१२ गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ।१।१०
१३ चतुर्थी संप्रदाने ।१।११
१४ क्रियार्थोपपदस्य च कर्मणि स्थानिनः ।
१५ तुमर्थाच्च भाववचनात् ।
१६ नमःस्वस्तिस्वाहास्वधाऽलंव-षड्योगाच्च ।१।१२
१७ मन्यकर्मण्यनादरे विभाषा-ऽप्राणिषु ।१।१३
१८ कर्तृकरणयोस्तृतीया ।२।१
१९ सहयुक्तेऽप्रधाने ।२।२
२० येनाङ्गविकारः ।२।३
२१ इत्थंभूतलक्षणे ।२।४
२२ संज्ञोऽन्यतरस्यां कर्मणि ।२।५
२३ हेतौ ।२।६
२४ अकर्तर्यृणे पञ्चमी ।
२५ विभाषा गुणेऽस्त्रियाम् ।
२६ षष्ठी हेतुप्रयोगे ।
२७ सर्वनाम्नस्तृतीया च ।
२८ अपादाने पञ्चमी ।२।७
२९ अन्यारादितरर्ते दिक्छब्दाञ्चू-त्तरपदाजाहियुक्ते ।२।८
३० षष्ठ्यतसर्थप्रत्ययेन ।२।९
३१ एनपा द्वितीया ।
३२ पृथग्विनानानाभिस्तृतीया-ऽन्यतरस्याम् ।२।१०
३३ करणे च स्तोकाल्पकृच्छ्रकति-पयस्यासत्त्ववचनस्य ।
३४ दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ।
३५ दूरान्तिकार्थेभ्यो द्वितीया च ।२।११
३६ सप्तम्यधिकरणे च ।२।१२
३७ यस्य च भावेन भावलक्ष-णम् ।२।१३
३८ षष्ठी चानादरे ।
३९ स्वामीश्वराधिपतिदायादसाक्षि-प्रतिभूप्रसूतैश्च ।
४० आयुक्तकुशलाभ्यां चासेवायाम् ।
४१ यतश्च निर्धारणम् ।
४२ पञ्चमी विभक्ते ।२।१४
४३ साधुनिपुणाभ्यामर्चायां सप्त-म्यप्रतेः ।२।१५
४४ प्रसितोत्सुकाभ्यां तृतीया च ।२।१६
४५ नक्षत्रे च लुपि ।२।१७
४६ प्रातिपदिकार्थलिङ्गपरिमाण-वचनमात्रे प्रथमा ।३।१
४७ संबोधने च ।
४८ सामन्त्रितम् ।
४९ एकवचनं संबुद्धिः ।
५० षष्ठी शेषे ।३।२

५१ ज्ञोऽविदर्थस्य करणे ।
५२ अधीगर्थदयेशां कर्मणि ।३।३
५३ कृञः प्रतियत्ने ।
५४ रुजार्थानां भाववचनानामज्वरेः ।
५५ आशिषि नाथः ।
५६ जासिनिप्रहणनाटक्राथपिषां हिंसायाम् ।
५७ व्यवहृपणोः समर्थयोः ।
५८ दिवस्तदर्थस्य ।
५९ विभाषोपसर्गे ।
६० द्वितीया ब्राह्मणे ।३।५
६१ प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने ।३।६
६२ चातुर्थ्यर्थे बहुलं छन्दसि ।
६३ यजेश्च करणे ।
६४ कृत्वोर्थप्रयोगे कालेऽधिकरणे ।
६५ कर्तृकर्मणोः कृति ।३।७
६६ उभयप्राप्तौ कर्मणि ।३।८
६७ क्तस्य च वर्तमाने ।३।९
६८ अधिकरणवाचिनश्च ।
६९ न लोकाव्ययनिष्ठाखलर्थतृनाम् ।३।१०
७० अकेनोर्भविष्यदाधमर्ण्ययोः ।३।११
७१ कृत्यानां कर्तरि वा ।३।१२
७२ तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम् ।
७३ चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ।

"अनभिहित इत्थंभूतयतश्च प्रेष्यब्रुवोस्त्रयोदश"

---

## चतुर्थः पादः २।४

१ द्विगुरेकवचनम् ।१।१
२ द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ।१।२
३ अनुवादे चरणानाम् ।१।३
४ अध्वर्युक्रतुरनपुंसकम् ।
५ अध्ययनतोऽविप्रकृष्टाख्यानाम् ।
६ जातिरप्राणिनाम् ।
७ विशिष्टलिङ्गो नदीदेशोऽग्रामाः ।१।४
८ क्षुद्रजन्तवः ।१।५
९ येषां च विरोधः शाश्वतिकः ।१।६
१० शूद्राणामनिरवसितानाम् ।१।७
११ गवाश्वप्रभृतीनि च ।१।८
१२ विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् ।१।९
१३ विप्रतिषिद्धं चानधिकरणवाचि ।
१४ न दधिपयआदीनि ।
१५ अधिकरणैतावत्त्वे च ।
१६ विभाषा समीपे ।१।१०
१७ स नपुंसकम् ।
१८ अव्ययीभावश्च ।
१९ तत्पुरुषोऽनञ्कर्मधारयः ।१।११
२० संज्ञायां कन्थोशीनरेषु ।
२१ उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ।
२२ छाया बाहुल्ये ।
२३ सभा राजाऽमनुष्यपूर्वा ।
२४ अशाला च ।
२५ विभाषा सेनासुराच्छायाशालानिशानाम् ।
२६ परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ।१।१२
२७ पूर्ववदश्ववडवौ ।
२८ हेमन्तशिशिरावहोरात्रे च च्छन्दसि ।
२९ रात्राह्नाहाः पुंसि ।१।१३
३० अपथं नपुंसकम् ।१।१४
३१ अर्धर्चाः पुंसि च ।१।१५
३२ इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ।१।१६
३३ एतदस्त्रतसोस्त्रतसौ चानुदात्तौ ।१।१७
३४ द्वितीयाटौस्स्वेनः ।१।१८
३५ आर्धधातुके ।१।१९
३६ अदो जग्धिर्ल्यप्ति किति ।१।२०
३७ लुङ्सनोर्घस्लृ ।१।२१
३८ घञपोश्च ।
३९ बहुलं छन्दसि ।
४० लिट्यन्यतरस्याम् ।
४१ वेञो वयिः ।
४२ हनो वध लिङि ।१।२२
४३ लुङि च ।१।२२
४४ आत्मनेपदेष्वन्यतरस्याम् ।
४५ इणो गा लुङि ।१।२३
४६ णौ गमिरबोधने ।१।२४
४७ सनि च ।१।२५
४८ इङश्च ।
४९ गाङ् लिटि ।१।२६
५० विभाषा लुङ्लृङोः ।
५१ णौ च संश्चङोः ।
५२ अस्तेर्भूः ।
५३ ब्रुवो वचिः ।
५४ चक्षिङः ख्याञ् ।१।२७
५५ वा लिटि ।
५६ अजेर्व्यघञपोः ।१।२८
५७ वा यौ ।
५८ ण्यक्षत्रियार्षञितो यूनि लुगणिञोः ।१।२९
५९ पैलादिभ्यश्च ।
६० इञः प्राचाम् ।
६१ न तौल्वलिभ्यः ।
६२ तद्राजस्य बहुषु तेनैवास्त्रियाम् ।२।१
६३ यस्कादिभ्यो गोत्रे ।
६४ यञञोश्च ।२।२
६५ अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च ।
६६ बह्वच इञः प्राच्यभरतेषु ।२।३
६७ न गोपवनादिभ्यः ।२।४
६८ तिककितवादिभ्यो द्वन्द्वे ।
६९ उपकादिभ्योऽन्यतरस्यामद्वन्द्वे ।२।५
७० आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ।२।६
७१ सुपो धातुप्रातिपदिकयोः ।
७२ अदिप्रभृतिभ्यः शपः ।
७३ बहुलं छन्दसि ।
७४ यङोऽचि च ।२।७
७५ जुहोत्यादिभ्यः श्लुः ।
७६ बहुलं छन्दसि ।
७७ गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ।२।८
७८ विभाषा घ्राधेट्शाच्छासः ।
७९ तनादिभ्यस्तथासोः ।२।९
८० मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः ।
८१ आमः ।२।१०
८२ अव्ययादाप्सुपः ।२।११
८३ नाव्ययीभावादतोऽम्त्वपञ्चम्याः ।२।१२
८४ तृतीयासप्तम्योर्बहुलम् ।२।१३
८५ लुटः प्रथमस्य डारौरसः ।

"द्विगुरुपज्ञोपक्रमं वेञोवयिर्न तौल्वलिभ्य आमः पञ्च"

## अथ तृतीयोऽध्यायः ।

### प्रथमः पादः ३।१

१ प्रत्ययः ।१।१
२ परश्च ।१।२
३ आद्युदात्तश्च ।१।३
४ अनुदात्तौ सुप्पितौ ।
५ गुप्तिज्किद्भ्यः सन् ।१।४
६ मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ।१।५
७ धातोः कर्मणः समानकर्तृकादिच्छायां वा ।१।६
८ सुप आत्मनः क्यच् ।२।१
९ काम्यच्च ।२।२
१० उपमानादाचारे ।२।३
११ कर्तुः क्यङ् सलोपश्च ।२।४
१२ भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ।२।५
१३ लोहितादिडाज्भ्यः क्यष् ।२।६
१४ कष्टाय क्रमणे ।२।७
१५ कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ।२।८
१६ बाष्पोष्मभ्यामुद्वमने ।२।९
१७ शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ।२।१०
१८ सुखादिभ्यः कर्तृवेदनायाम् ।
१९ नमोवरिवश्चित्रङः क्यच् ।२।१२
२० पुच्छभाण्डचीवराण्णिङ् ।
२१ मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ।२।१३
२२ धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ।२।१४
२३ नित्यं कौटिल्ये गतौ ।
२४ लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम् ।
२५ सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ।२।१५
२६ हेतुमति च ।२।१६
२७ कण्ड्वादिभ्यो यक् ।३।१
२८ गुपूधूपविच्छिपणिपनिभ्य आयः ।
२९ ऋतेरीयङ् ।
३० कमेर्णिङ् ।३।२
३१ आयादय आर्धधातुके वा ।३।३
३२ सनाद्यन्ता धातवः ।३।४
३३ स्यतासी लृलुटोः ।३।५
३४ सिब्बहुलं लेटि ।३।६
३५ कास्प्रत्ययादाममन्त्रे लिटि ।३।७
३६ इजादेश्च गुरुमतोऽनृच्छः ।३।८
३७ दयायासश्च ।
३८ उषविदजागृभ्योऽन्यतरस्याम् ।३।९
३९ भीह्रीभृहुवां श्लुवच्च ।३।१०
४० कृञ्चानुप्रयुज्यते लिटि ।३।११
४१ विदांकुर्वन्त्वित्यन्यतरस्याम् ।
४२ अभ्युत्सादयांप्रजनयांचिकयांरमयामकः पावयांक्रियाद्विदामक्रन्निति च्छन्दसि ।
४३ च्लि लुङि ।४।१
४४ च्लेः सिच् ।४।२
४५ शल इगुपधादनिटः क्सः ।४।३
४६ श्लिष आलिङ्गने ।४।४
४७ न दृशः ।
४८ णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ।४।५
४९ विभाषा धेट्श्व्योः ।
५० गुपेश्छन्दसि ।
५१ नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः ।
५२ अस्यतिवक्तिख्यातिभ्योऽङ् ।४।६
५३ लिपिसिचिह्वश्च ।
५४ आत्मनेपदेष्वन्यतरस्याम् ।
५५ पुषादिद्युताद्यॢदितः परस्मैपदेषु ।
५६ सर्तिशास्त्यर्तिभ्यश्च ।
५७ इरितो वा ।
५८ जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ।४।७
५९ कृमृदृरुहिभ्यश्छन्दसि ।
६० चिण् ते पदः ।४।८
६१ दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ।
६२ अचः कर्मकर्तरि ।
६३ दुहश्च ।
६४ न रुधः ।
६५ तपोऽनुतापे च ।
६६ चिण् भावकर्मणोः ।४।९
६७ सार्वधातुके यक् ।४।१०
६८ कर्तरि शप् ।
६९ दिवादिभ्यः श्यन् ।
७० वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ।
७१ यसोऽनुपसर्गात् ४।११
७२ संयसश्च ।
७३ स्वादिभ्यः श्नुः ।
७४ श्रुवः शृ च ।
७५ अक्षोऽन्यतरस्याम् ।
७६ तनूकरणे तक्षः ।
७७ तुदादिभ्यः शः ।
७८ रुधादिभ्यः श्नम् ।४।१२
७९ तनादिकृञ्भ्य उः ।४।१३
८० धिन्विकृण्व्योर च ।४।१४
८१ क्र्यादिभ्यः श्ना ।
८२ स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ।
८३ हलः श्नः शानज्झौ ।४।१५
८४ छन्दसि शायजपि ।४।१६
८५ व्यत्ययो बहुलम् ।४।१७
८६ लिङ्याशिष्यङ् ।४।१८
८७ कर्मवत्कर्मणा तुल्यक्रियः ।५।१
८८ तपस्तपःकर्मकस्यैव ।
८९ न दुहस्नुनमां यक्चिणौ ।५।२
९० कुषिरजोः प्राचां श्यन्परस्मैपदं च ।५।३
९१ धातोः ।५।४
९२ तत्रोपपदं सप्तमीस्थम् ।५।५
९३ कृदतिङ् ।५।६
९४ वाऽसरूपोऽस्त्रियाम् ।६।१
९५ कृत्याः ( प्राङ्ण्वुलः[१] ) ।६।२
९६ तव्यत्तव्यानीयरः ।६।३
९७ अचो यत् ।६।४
९८ पोरदुपधात् ।
९९ शकिसहोश्च ।
१०० गदमदचरयमश्चानुपसर्गे ।६।५
१०१ अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु ।
१०२ वह्यं करणम् ।
१०३ अर्यः स्वामिवैश्ययोः ।६।६
१०४ उपसर्या काल्या प्रजने ।

---

१ 'प्राङ्ण्वुलः' इति न सूत्रांशः । तस्य वार्तिकत्वात् ॥

१०५ अजर्यं संगतम् ।६।७
१०६ वदः सुपि क्यप्च ।६।८
१०७ भुवो भावे ।६।९
१०८ हनस्त च ।६।१
१०९ एतिस्तुशास्वृदृजुषः क्यप् ।६।११
११० ऋदुपधाच्चाक्लृपिचृतेः ।
१११ ई च खनः ।६।१२
११२ भृञोऽसंज्ञायाम् ।६।१३
११३ मृजेर्विभाषा ।
११४ राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ।६।१४
११५ भिद्योद्ध्यौ नदे ।
११६ पुष्यसिध्यौ नक्षत्रे ।
११७ विपूयविनीयजित्या मुञ्जकल्कहलिषु ।
११८ प्रत्यपिभ्यां ग्रहेः ( छन्दसि[1] ) ।६।१५
११९ पदास्वैरिबाह्यापक्ष्येषु च ।
१२० विभाषा कृवृषोः ।
१२१ युग्यं च पत्रे ।
१२२ अमावस्यदन्यतरस्याम् ।६।१६
१२३ छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि ।६।१७
१२४ ऋहलोर्ण्यत् ।६।१८
१२५ ओरावश्यके ।६।१९
१२६ आसुयुवपिरपिलपित्रपिचमश्च ।
१२७ आनाय्योऽनित्ये ।६।२०
१२८ प्रणाय्योऽसंमतौ ।
१२९ पाय्यसांनाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु । ६।२१
१३० क्रतौ कुण्डपाय्यसंचाय्यौ ।६।२२
१३१ अग्नौ परिचाय्योपचाय्यसमूह्याः ।६।२३
१३२ चित्याग्निचित्ये च ।६।२४
१३३ ण्वुल्तृचौ ।६।२५
१३४ नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ।६।२६
१३५ इगुपधज्ञाप्रीकिरः कः ।६।२७
१३६ आतश्चोपसर्गे ।
१३७ पाघ्राध्माधेट्दृशः शः ।६।२८
१३८ अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ६।२९
१३९ ददातिदधात्योर्विभाषा ।
१४० ज्वलितिकसन्तेभ्यो णः ।६।३०
१४१ श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च ।
१४२ दुन्योरनुपसर्गे ।
१४३ विभाषा ग्रहः ।
१४४ गेहे कः ।
१४५ शिल्पिनि ष्वुन् ।६।३१
१४६ गः स्थकन् ।
१४७ ण्युट् च ।
१४८ हश्च व्रीहिकालयोः ।
१४९ प्रुसृल्वः समभिहारे वुन् ।६।३२
१५० आशिषि च ।

"प्रत्ययो मुण्डविदांदीपजनक्यादिभ्योऽवद्ययुर्यच श्याद्व्यधा दश"

---

## द्वितीयः पादः ३।२

१ कर्मण्यण् ।१।१
२ ह्वावामश्च ।
३ आतोऽनुपसर्गे कः ।१।२
४ सुपि स्थः ।१।३
५ तुन्दशोकयोः परिमृजापनुदोः ।१।४
६ प्रे दाज्ञः ।
७ समि ख्यः ।
८ गापोष्टक् ।१।५
९ हरतेरनुद्यमनेऽच् ।१।६
१० वयसि च ।
११ आङि ताच्छील्ये ।
१२ अर्हः ।
१३ स्तम्बकर्णयोरमिजपोः ।१।७
१४ शमि धातोः संज्ञायाम् ।१।८
१५ अधिकरणे शेतेः ।१।९
१६ चरेष्टः ।१।१०
१७ भिक्षासेनादायेषु च ।
१८ पुरोऽग्रतोऽग्रेषु सर्तेः ।
१९ पूर्वे कर्तरि ।
२० कृञो हेतुताच्छील्यानुलोम्येषु ।
२१ दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुःषु ।१।११
२२ कर्मणि भृतौ ।
२३ न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ।
२४ स्तम्बशकृतोरिन् ।१।१२
२५ हरतेर्दृतिनाथयोः पशौ ।
२६ फलेग्रहिरात्मंभरिश्च ।१।१३
२७ छन्दसि वनसनरक्षिमथाम् ।
२८ एजेः खश् ।१।१४
२९ नासिकास्तनयोर्ध्माधेटोः ।१।१५
३० नाडीमुष्ट्योश्च ।१।१५
३१ उदि कूले रुजिवहोः ।
३२ वहाभ्रे लिहः ।
३३ परिमाणे पचः ।
३४ मितनखे च ।
३५ विध्वरुषोस्तुदः ।
३६ असूर्यललाटयोर्दृशितपोः ।
३७ उग्रंपश्येरंमदपाणिंधमाश्च ।
३८ प्रियवशे वदः खच् ।१।१६
३९ द्विषत्परयोस्तापेः ।
४० वाचि यमो व्रते ।
४१ पूःसर्वयोर्दारिसहोः ।
४२ सर्वकूलाभ्रकरीषेषु कषः ।
४३ मेघर्तिभयेषु कृञः ।
४४ क्षेमप्रियमद्रेऽण्च ।
४५ आशिते भुवः करणभावयोः ।
४६ संज्ञायां भृतॄवृजिधारिसहितपिदमः ।
४७ गमश्च ।
४८ अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ।१।१७
४९ आशिषि हनः ।१।१८
५० अपे क्लेशतमसोः ।
५१ कुमारशीर्षयोर्णिनिः ।
५२ लक्षणे जायापत्योष्टक् ।१।१९
५३ अमनुष्यकर्तृके च ।१।२०
५४ शक्तौ हस्तिकपाटयोः ।
५५ पाणिघताडघौ शिल्पिनि ।१।२१
५६ आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ।१।२२

---

[1] 'छन्दसि' इति वार्तिकप्रक्षेपः। [2] 'लपिदभिभ्यां' इति वार्तिकारम्भात् सूत्रे 'लपि' इति केनचित्प्रक्षिप्तमिति केचित्।

५७ कर्तरि भुवः खिष्णुच्खुकञौ ।१।२३
५८ स्पृशोऽनुदके क्विन् ।१।२४
५९ ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ।१।२५
६० त्यदादिषु दृशोऽनालोचने कञ्च ।१।२६
६१ सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ।१।२७
६२ भजो ण्विः ।
६३ छन्दसि सहः ।
६४ वहश्च ।
६५ कव्यपुरीषपुरीष्येषु ञ्युट् ।
६६ हव्येऽनन्तःपादम् ।
६७ जनसनखनक्रमगमो विट् ।
६८ अदोऽनन्ने } ।१।२८
६९ क्रव्ये च
७० दुहः कब्घश्च ।
७१ मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ।१।२९
७२ अवे यजः ।
७३ विजुपे छन्दसि ।
७४ आतो मनिन्क्वनिब्वनिपश्च ।
७५ अन्येभ्योऽपि दृश्यन्ते ।
७६ क्विप्च ।
७७ स्थः क च ।१।३०
७८ सुप्यजातौ णिनिस्ताच्छील्ये ।१।३१
७९ कर्तर्युपमाने ।
८० व्रते ।१।३२
८१ बहुलमाभीक्ष्ण्ये ।
८२ मनः
८३ आत्ममाने खश्च ।१।३३
८४ भूते ।२।१
८५ करणे यजः ।
८६ कर्मणि हनः ।
८७ ब्रह्मभ्रूणवृत्रेषु क्विप् ।२।२
८८ बहुलं छन्दसि ।
८९ सुकर्मपापमन्त्रपुण्येषु कृञः ।
९० सोमे सुञः ।
९१ अग्नौ चेः ।
९२ कर्मण्यग्न्याख्यायाम् ।
९३ कर्मणीनिविक्रियः ।२।३
९४ दृशेः क्वनिप् ।
९५ राजनि युधि कृञः ।
९६ सहे च ।
९७ सप्तम्यां जनेर्डः ।
९८ पञ्चम्यामजातौ ।
९९ उपसर्गे च संज्ञायाम् ।
१०० अनौ कर्मणि ।
१०१ अन्येष्वपि दृश्यते ।२।४
१०२ निष्ठा ।२।५
१०३ सुयजोर्ङ्वनिप् ।
१०४ जीर्यतेरतृन् ।
१०५ छन्दसि लिट् ।
१०६ लिटः कानज्वा ।२।५
१०७ क्वसुश्च ।
१०८ भाषायां सदवसश्रुवः ।२।६
१०९ उपेयिवाननाश्वाननूचानश्च ।२।७
११० लुङ् ।२।८
१११ अनद्यतने लङ् ।२।९
११२ अभिज्ञावचने लृट् ।
११३ न यदि ।
११४ विभाषा साकाङ्क्षे ।२।१०
११५ परोक्षे लिट् २।११
११६ हशश्वतोर्लङ् च ।
११७ प्रश्ने चासन्नकाले ।
११८ लट् स्मे ।२।१२
११९ अपरोक्षे च ।
१२० ननौ पृष्टप्रतिवचने ।
१२१ नन्वोर्विभाषा ।
१२२ पुरि लुङ् चास्मे ।२।१३
१२३ वर्तमाने लट् ।२।१४
१२४ लटः शतृशानचावप्रथमासमानाधिकरणे ।३।१
१२५ संबोधने च ।
१२६ लक्षणहेत्वोः क्रियायाः ।३।२
१२७ तौ सत् ।३।३
१२८ पूङ्यजोः शानन् ।
१२९ ताच्छील्यवयोवचनशक्तिषु चानश् ।
१३० इङ्धार्योः शत्रकृच्छ्रिणि ।
१३१ द्विषोऽमित्रे ।
१३२ सुञो यज्ञसंयोगे ।
१३३ अर्हः प्रशंसायाम् ।
१३४ आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ।
१३५ तृन् ।३।४
१३६ अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् ।
१३७ णेश्छन्दसि ।
१३८ भुवश्च ।
१३९ ग्लाजिस्थश्च ग्स्नुः ।३।५
१४० त्रसिगृधिधृषिक्षिपेः क्नुः ।
१४१ शमित्यष्टाभ्यो घिनुण् ।३।६
१४२ संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च ।
१४३ वौ कषलसकत्थस्रम्भः
१४४ अपे च लषः ।
१४५ प्रे लपसृद्रुमथवदवसः ।
१४६ निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूञो वुञ् ।३।७
१४७ देविक्रुशोश्चोपसर्गे ।
१४८ चलनशब्दार्थादकर्मकाद्युच् ।
१४९ अनुदात्तेतश्च हलादेः ।
१५० जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः ।३।८
१५१ क्रुधमण्डार्थेभ्यश्च ।
१५२ न यः ।
१५३ सूददीपदीक्षश्च ।
१५४ लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् ।
१५५ जल्पभिक्षकुट्टलुण्टवृङः षाकन् ।
१५६ प्रजोरिनिः ।
१५७ जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च ।
१५८ स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ।३।९
१५९ दाधेट्सिशदसदो रुः ।
१६० सृघस्यदः क्मरच् ।
१६१ भञ्जभासमिदो घुरच् ।
१६२ विदिभिदिच्छिदेः कुरच् ।
१६३ इण्नशजिसर्तिभ्यः क्वरप् ।
१६४ गत्वरश्च ।
१६५ जागरूकः ।
१६६ यजजपदशां यङः ।
१६७ नमिकम्पिस्म्यजसकमहिंसदीपो रः ।
१६८ सनाशंसभिक्ष उः ।
१६९ विन्दुरिच्छुः ।

१७० क्याच्छन्दसि ।
१७१ आदृगमहनजनः किकिनौ लिट् च ।३।१०
१७२ स्वपितृषोर्नजिङ् ।
१७३ शृवन्द्योरारुः ।
१७४ भियः क्रुक्लुकनौ ।३।११
१७५ स्थेशभासपिसकसो वरच् ।
१७६ यश्च यङः ।
१७७ भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ।
१७८ अन्येभ्योऽपि दृश्यते ।३।१२
१७९ भुवः संज्ञान्तरयोः ।
१८० विप्रसंभ्यो ड्वसंज्ञायाम् ।३।१३
१८१ धः कर्मणि ष्ट्रन् ।
१८२ दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ।
१८३ हलसूकरयोः पुवः ।
१८४ अर्तिलूधूसूखनसहचर इत्रः ।
१८५ पुवः संज्ञायाम् ।
१८६ कर्तरि चर्षिदेवतयोः ।
१८७ ञीतः क्तः ।
१८८ मतिबुद्धिपूजार्थेभ्यश्च ।
"कर्मणिदिवापूःसर्वसत्सूबहुलमन्येष्वपिनन्वोः शमितिभञ्जभासधःकर्मण्यष्टौ"

---

**तृतीयः पादः ३।३**

१ उणादयो बहुलम् ।१।१
२ भूतेऽपि दृश्यन्ते ।
३ भविष्यति गम्यादयः ।१।२
४ यावत्पुरानिपातयोर्लट् ।१।३
५ विभाषा कदाकर्ह्योः ।
६ किंवृत्ते लिप्सायाम् ।
७ लिप्स्यमानसिद्धौ च ।१।४
८ लोडर्थलक्षणे च ।
९ लिङ्चोर्ध्वमौहूर्तिके ।
१० तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् १।५
११ भाववचनाश्च ।१।६
१२ अण्कर्मणि च ।१।७
१३ लृट् शेषे च ।१।८
१४ लृटः सद्वा ।१।९
१५ अनद्यतने लुट् ।१।१०
१६ पदरुजविशस्पृशो घञ् ।१।११
१७ सृ स्थिरे ।१।१२
१८ भावे ।१।१२
१९ अकर्तरि च कारके संज्ञायाम् १।१३
२० परिमाणाख्यायां सर्वेभ्यः ।१।१३
२१ इङश्च १।१४
२२ उपसर्गे रुवः ।
२३ समि युद्रुदुवः ।
२४ श्रिणीभुवोऽनुपसर्गे ।
२५ वौ क्षुश्रुवः ।
२६ अवोदोर्नियः ।
२७ प्रे द्रुस्तुस्रुवः ।
२८ निरभ्योः पूल्वोः ।
२९ उन्न्योर्ग्रः ।
३० कॄ धान्ये ।
३१ यज्ञे समि स्तुवः ।
३२ प्रे स्त्रोऽयज्ञे ।
३३ प्रथने वावशब्दे ।
३४ छन्दोनाम्नि च ।
३५ उदि ग्रहः ।
३६ समि मुष्टौ ।१।१५
३७ परिन्योर्नीणोर्द्यूताभ्रेषयोः ।
३८ परावनुपात्यय इणः
३९ व्युपयोः शेतेः पर्याये ।
४० हस्तादाने चेरस्तेये ।
४१ निवासचितिशरीरोपसमाधानेष्वादेश्च कः ।
४२ संघे चानौत्तराधर्ये ।
४३ कर्मव्यतिहारे णच्स्त्रियाम् १।१६
४४ अभिविधौ भाव इनुण् १।१७
४५ आक्रोशेऽवन्योर्ग्रहः ।
४६ प्रे लिप्सायाम् ।
४७ परौ यज्ञे ।
४८ नौ वृ धान्ये ।
४९ उदि श्रयतियौतिपूद्रुवः ।
५० विभाषाऽऽङि रुप्लुवोः ।
५१ अवे ग्रहो वर्षप्रतिबन्धे ।
५२ प्रे वणिजाम् ।
५३ रश्मौ च ।
५४ वृणोतेराच्छादने ।
५५ परौ भुवोऽवज्ञाने ।
५६ एरच् ।१।१८
५७ ऋदोरप् ।
५८ ग्रहवृदृनिश्चिगमश्च ।१।१९
५९ उपसर्गेऽदः ।
६० नौ ण च ।
६१ व्यधजपोरनुपसर्गे
६२ स्वनहसोर्वा ।
६३ यमः समुपनिविषु च ।
६४ नौ गदनदपठस्वनः ।
६५ क्वणो वीणायां च ।
६६ नित्यं पणः परिमाणे ।
६७ मदोऽनुपसर्गे ।
६८ प्रमदसंमदौ हर्षे ।
६९ समुदोरजः पशुषु ।
७० अक्षेषु ग्लहः ।
७१ प्रजने सर्तेः ।
७२ ह्वः संप्रसारणं च न्यभ्युपविषु ।
७३ आङि युद्धे ।
७४ निपानमाहावः ।
७५ भावेऽनुपसर्गस्य ।
७६ हनश्च वधः ।
७७ मूर्तौ घनः
७८ अन्तर्घनो देशे ।
७९ अगारैकदेशे प्रघणः प्रघाणश्च ।
८० उद्घनोऽत्याधानम् ।
८१ अपघनोऽङ्गम् ।
८२ करणेऽयोविद्रुषु ।
८३ स्तम्बे क च ।१।२०
८४ परौ घः ।
८५ उपघ्न आश्रये ।
८६ संघोद्घौ गणप्रशंसयोः ।
८७ निघो निमितम् ।
८८ ड्वितः क्त्रिः ।
८९ ट्वितोऽथुच् ।
९० यजयाचयतविच्छप्रच्छरक्षो नङ्
९१ स्वपो नन् ।
९२ उपसर्गे घोः किः ।
९३ कर्मण्यधिकरणे च ।
९४ स्त्रियां क्तिन् ।१।२१
९५ स्थागापापचो भावे ।१।२२
९६ मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः ।
९७ ऊतियूतिजूतिसातिहेतिकीर्तयश्च ।
९८ व्रजयजोर्भावे क्यप् ।१।२३
९९ संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः ।
१०० कृञः श च ।१।२४
१०१ इच्छा ।१।२५
१०२ अ प्रत्ययात् ।

१०३ गुरोश्च हलः ।
१०४ षिद्भिदादिभ्योऽङ् ।१।२६
१०५ चिन्तिपूजिकथिकुम्बिचर्चश्च ।
१०६ आतश्चोपसर्गे ।
१०७ ण्यासश्रन्थो युच् ।१।२७
१०८ रोगाख्यायां ण्वुल्बहुलम् ।१।२८
१०९ संज्ञायाम् ।
११० विभाषाख्यानपरिप्रश्नयोरिञ्च ।
१११ पर्यायार्हर्णोत्पत्तिषु ण्वुच् ।
११२ आक्रोशे नञ्यनिः ।
११३ कृत्यल्युटो बहुलम् ।१।२९
११४ नपुंसके भावे क्तः ।
११५ ल्युट् च ।
११६ कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम् ।
११७ करणाधिकरणयोश्च ।
११८ पुंसि संज्ञायां घः प्रायेण ।
११९ गोचरसंचरवहव्रजव्यजापणनिगमाश्च ।१।३०
१२० अवे तॄस्त्रोर्घञ् ।
१२१ हलश्च ।१।३१
१२२ अध्यायन्यायोद्यावसंहाराश्च ।
१२३ उदङ्कोऽनुदके ।१।३२
१२४ जालमानायः ।
१२५ खनो घ च ।१।३३
१२६ ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ।१।३४
१२७ कर्तृकर्मणोश्च भूकृञोः ।१।३५
१२८ आतो युच् ।
१२९ छन्दसि गत्यर्थेभ्यः ।
१३० अन्येभ्योऽपि दृश्यते ।१।३६
१३१ वर्तमानसामीप्ये वर्तमानवद्वा ।२।१
१३२ आशंसायां भूतवच्च ।२।२
१३३ क्षिप्रवचने लृट् ।२।३
१३४ आशंसावचने लिङ् ।
१३५ नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः ।२।४
१३६ भविष्यति मर्यादावचनेऽवरस्मिन् ।२।५
१३७ कालविभागे चानहोरात्राणाम् ।२।६
१३८ परस्मिन्विभाषा ।२।७
१३९ लिङ्निमित्ते लृङ् क्रियाऽतिपत्तौ ।
१४० भूते च ।२।८

१४१ वोताप्योः ।२।९
१४२ गर्हायां लडपिजात्वोः ।२।१०
१४३ विभाषा कथमि लिङ् च ।
१४४ किंवृत्ते लिङ्लृटौ ।
१४५ अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि ।२।११
१४६ किंकिलास्त्यर्थेषु लृट् ।
१४७ जातुयदोर्लिङ् ।२।१२
१४८ यच्चयत्रयोः ।
१४९ गर्हायां च ।
१५० चित्रीकरणे च ।
१५१ शेषे लृडयदौ ।२।१३
१५२ उताप्योः समर्थयोर्लिङ् ।
१५३ कामप्रवेदनेऽकच्चिति ।
१५४ संभावनेऽलमिति चेत्सिद्धाप्रयोगे ।
१५५ विभाषा धातौ संभावनवचनेऽयदि ।
१५६ हेतुहेतुमतोर्लिङ् ।२।१४
१५७ इच्छार्थेषु लिङ्लोटौ ।२।१५
१५८ समानकर्तृकेषु तुमुन् ।
१५९ लिङ् च ।
१६० इच्छार्थेभ्यो विभाषा वर्तमाने ।
१६१ विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ।२।१६
१६२ लोट् च ।
१६३ प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ।२।१७
१६४ लिङ् चोर्ध्वमौहूर्तिके ।
१६५ स्मे लोट् ।
१६६ अधीष्टे च ।
१६७ कालसमयवेलासु तुमुन् ।२।१८
१६८ लिङ्यदि ।
१६९ अर्हे कृत्यतृचश्च ।
१७० आवश्यकाधमर्ण्ययोर्णिनिः ।
१७१ कृत्याश्च ।
१७२ शकि लिङ् च ।
१७३ आशिषि लिङ्लोटौ ।
१७४ क्तिच्क्तौ च संज्ञायाम् ।
१७५ माङि लुङ् ।
१७६ स्मोत्तरे लङ् च ।

"उणादय इञो निवासव्यधजपोरपघन इच्छा हलश्च वोताप्योर्विंधिषोडश" ॥

---

## चतुर्थः पादः ३।४

१ धातुसंबन्धे प्रत्ययाः ।१।१
२ क्रियासमभिहारे लोट् लोटो हि स्वौ वा च तध्वमोः ।१।२
३ समुच्चयेऽन्यतरस्याम् ।
४ यथाविध्यनुप्रयोगः पूर्वस्मिन् ।१।३
५ समुच्चये सामान्यवचनस्य ।१।४
६ छन्दसि लुङ्लङ्लिटः ।
७ लिङर्थे लेट् ।
८ उपसंवादाशङ्कयोश्च ।१।५
९ तुमर्थे सेसेनसेऽसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः ।१।६
१० प्रयै रोहिष्यै अव्यथिष्यै ।
११ दृशे विख्ये च ।
१२ शकि णमुल्कमुलौ ।
१३ ईश्वरे तोसुन्कसुनौ ।
१४ कृत्यार्थे तवैकेन्केन्यत्वनः ।
१५ अवचक्षे च ।
१६ भावलक्षणे स्थेण्कृञ्वदिचरिहुततमिजनिभ्यस्तोसुन् ।
१७ सृपितृदोः कसुन् ।
१८ अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ।
१९ उदीचां माङो व्यतीहारे ।१।७
२० परावरयोगे च ।
२१ समानकर्तृकयोः पूर्वकाले ।१।८
२२ आभीक्ष्ण्ये णमुल् च ।
२३ न यद्यनाकाङ्क्षे ।
२४ विभाषाऽग्रेप्रथमपूर्वेषु ।१।९
२५ कर्मण्याक्रोशे कृञः खमुञ् ।
२६ स्वादुमि णमुल् ।१।१०
२७ अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ।
२८ यथातथयोरसूयाप्रतिवचने ।
२९ कर्मणि दृशिविदोः साकल्ये ।
३० यावति विन्दजीवोः ।
३१ चर्मोदरयोः पूरेः ।
३२ वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् ।१।११
३३ चेले क्नोपेः ।
३४ निमूलसमूलयोः कषः ।
३५ शुष्कचूर्णरूक्षेषु पिषः ।

३६ समूलाकृतजीवेषु हन्कृञ्ग्रहः ।
३७ करणे हनः ।१।१२
३८ स्नेहने पिषः ।
३९ हस्ते वर्तिग्रहोः ।
४० स्वे पुषः ।
४१ अधिकरणे बन्धः ।१।१३
४२ संज्ञायाम् ।
४३ कर्त्रोर्जीवपुरुषयोर्नशिवहोः ।
४४ ऊर्ध्वे शुषिपूरोः ।
४५ उपमाने कर्मणि च ।
४६ कषादिषु यथाविध्यनुप्रयोगः ।
४७ उपदंशस्तृतीयायाम् ।
४८ हिंसार्थानां च समानकर्मकाणाम् ।
४९ सप्तम्यां चोपपीडरुधकर्षः ।
५० समासत्तौ ।
५१ प्रमाणे च ।
५२ अपादाने परीप्सायाम् ।
५३ द्वितीयायां च ।
५४ स्वाङ्गेऽध्रुवे ।
५५ परिक्लिश्यमाने च ।
५६ विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ।
५७ अस्यतितृषोः क्रियान्तरे कालेषु ।
५८ नाम्न्यादिशिग्रहोः ।
५९ अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ ।
६० तिर्यच्यपवर्गे ।१।१४
६१ स्वाङ्गे तस्प्रत्यये कृभ्वोः ।
६२ नाधार्थप्रत्यये च्व्यर्थे ।१।१५
६३ तूष्णीमि भुवः ।
६४ अन्वच्यानुलोम्ये ।१।१६
६५ शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ।
६६ पर्याप्तिवचनेष्वलमर्थेषु ।
६७ कर्तरि कृत् ।१।१७
६८ भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ।
६९ लः कर्मणि च भावे चाकर्मकेभ्यः ।१।१८
७० तयोरेव कृत्यक्तखलर्थाः ।
७१ आदिकर्मणि क्तः कर्तरि च ।
७२ गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ।
७३ दाशगोघ्नौ संप्रदाने ।
७४ भीमादयोऽपादाने ।
७५ ताभ्यामन्यत्रोणादयः ।
७६ क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ।
७७ लस्य ।१।१९
७८ तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् ।
७९ टित आत्मनेपदानां टेरे ।१।२०
८० थासः से ।
८१ लिटस्तझयोरेशिरेच् ।
८२ परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ।१।२१
८३ विदो लटो वा ।
८४ ब्रुवः पञ्चानामादित आहो ब्रुवः ।
८५ लोटो लङ्वत् ।१।२२
८६ एरुः ।
८७ सेर्ह्यपिच्च ।१।२३
८८ वा च्छन्दसि ।
८९ मेर्निः ।१।२३
९० आमेतः ।
९१ सवाभ्यां वामौ ।
९२ आडुत्तमस्य पिच्च ।
९३ एत ऐ ।१।२४
९४ लेटोऽडाटौ ।
९५ आत ऐ ।
९६ वैतोऽन्यत्र ।
९७ इतश्च लोपः परस्मैपदेषु ।
९८ स उत्तमस्य ।
९९ नित्यं ङितः ।
१०० इतश्च ।
१०१ तस्थस्थमिपां तांतंतामः ।
१०२ लिङः सीयुट् ।१।२५
१०३ यासुट् परस्मैपदेषूदात्तो ङिच्च ।१।२६
१०४ किदाशिषि ।
१०५ झस्य रन् ।
१०६ इटोऽत् ।
१०७ सुट् तिथोः ।
१०८ झेर्जुस् ।
१०९ सिजभ्यस्तविदिभ्यश्च ।
११० आतः ।१।२७
१११ लङः शाकटायनस्यैव ।
११२ द्विषश्च ।
११३ तिङ्शित्सार्वधातुकम् ।
११४ आर्धधातुकं शेषः ।१।२८
११५ लिट् च ।
११६ लिङाशिषि ।
११७ छन्दस्युभयथा ।
"धातुसंबन्धे समानाधिकरणे स्वाङ्गे लिटस्तस्थस्थमिपां सप्तदश" ॥

---

## अथ चतुर्थोऽध्यायः ।

### प्रथमः पादः ४।१

१ ङ्याप्प्रातिपदिकात् ।१।१
२ स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् ।
३ स्त्रियाम् ।१।२
४ अजाद्यतष्टाप् ।१।३
५ ऋन्नेभ्यो ङीप् ।
६ उगितश्च ।१।४
७ वनो र च ।१।५
८ पादोऽन्यतरस्याम् ।
९ टाबृचि ।
१० न षट्स्वस्रादिभ्यः ।१।६
११ मनः ।
१२ अनो बहुव्रीहेः ।
१३ डाबुभाभ्यामन्यतरस्याम् ।१।७
१४ अनुपसर्जनात् ।१।८
१५ टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ।२।१
१६ यञश्च ।२।२
१७ प्राचां ष्फ तद्धितः ।२।३
१८ सर्वत्र लोहितादिकतन्तेभ्यः ।२।४
१९ कौरव्यमाण्डूकाभ्यां च ।२।५
२० वयसि प्रथमे ।२।६
२१ द्विगोः ।
२२ अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि ।२।७
२३ काण्डान्तात्क्षेत्रे ।
२४ पुरुषात्प्रमाणेऽन्यतरस्याम् ।
२५ बहुव्रीहेरूधसो ङीष् ।२।८
२६ संख्याव्ययादेर्ङीप् ।
२७ दामहायनान्ताच्च ।२।९
२८ अन उपधालोपिनोऽन्यतरस्याम् ।
२९ नित्यं संज्ञाछन्दसोः ।
३० केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च ।
३१ रात्रेश्चाजसौ ।२।१०
३२ अन्तर्वत्पतिवतोर्नुक् ।२।११

३३ पत्युर्नो यज्ञसंयोगे ।२।११२
३४ विभाषा सपूर्वस्य ।२।११३
३५ नित्यं सपत्न्यादिषु ।
३६ पूतक्रतोरै च ।२।११४
३७ वृषाकप्यग्निकुसितकुसिदानामुदात्तः ।
३८ मनोरौ वा ।
३९ वर्णादनुदात्तात्तोपधात्तो नः ।२।११५
४० अन्यतो ङीष् ।
४१ षिद्गौरादिभ्यश्च ।
४२ जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु ।२।११६
४३ शोणात्प्राचाम् ।
४४ वोतो गुणवचनात् ।२।११७
४५ बह्वादिभ्यश्च ।
४६ नित्यं छन्दसि ।
४७ भुवश्च ।
४८ पुंयोगादाख्यायाम् ।२।११८
४९ इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ।२।११९
५० क्रीतात्करणपूर्वात् ।२।१२०
५१ क्तादल्पाख्यायाम् ।
५२ बहुव्रीहेश्चान्तोदात्तात् ।२।१२१
५३ अस्वाङ्गपूर्वपदाद्वा ।
५४ स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ।२।१२२
५५ नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ।२।१२३
५६ न क्रोडादिबह्वचः ।
५७ सहनञ्विद्यमानपूर्वाच्च ।
५८ नखमुखात्संज्ञायाम् ।
५९ दीर्घजिह्वी च च्छन्दसि ।
६० दिक्पूर्वपदान्ङीप् ।२।१२४
६१ वाहः ।
६२ सख्यशिश्वीति भाषायाम् ।
६३ जातेरस्त्रीविषयादयोपधात् ।२।१२५
६४ पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च ।२।१२६
६५ इतो मनुष्यजातेः ।२।१२७
६६ ऊङुतः ।२।१२८
६७ बाह्वन्तात्संज्ञायाम् ।
६८ पङ्गोश्च ।
६९ ऊरूत्तरपदादौपम्ये ।
७० संहितशफलक्षणवामादेश्च ।२।१२९
७१ कद्रुकमण्डल्वोश्छन्दसि ।२।१३०
७२ संज्ञायाम् ।
७३ शार्ङ्गरवाद्यञो ङीन् ।
७४ यङश्चाप् ।२।१३१
७५ आवट्याच्च ।२।१३२
७६ **तद्धिताः ।**
७७ यूनस्तिः ।
७८ अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ।२।१३३
७९ गोत्रावयवात् ।२।१३४
८० क्रौड्यादिभ्यश्च ।
८१ दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतरस्याम् ।
८२ समर्थानां प्रथमाद्वा ।३।१
८३ प्राग्दीव्यतोऽण् ।३।२
८४ अश्वपत्यादिभ्यश्च ।
८५ दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ।३।३
८६ उत्सादिभ्योऽञ् ।३।४
८७ स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ।३।५
८८ द्विगोर्लुगनपत्ये ।३।६
८९ गोत्रेऽलुगचि ।३।७
९० यूनि लुक् ।३।८
९१ फक्फिञोरन्यतरस्याम् ।
९२ तस्यापत्यम् ।३।९
९३ एको गोत्रे ।३।१०
९४ गोत्राद्यून्यस्त्रियाम् ।
९५ अत इञ् ।४।१
९६ बाह्वादिभ्यश्च ।४।२
९७ सुधातुरकङ् च ।४।३
९८ गोत्रे कुञ्जादिभ्यश्च्फञ् ।४।४
९९ नडादिभ्यः फक् ।
१०० हरितादिभ्योऽञः ।
१०१ यञिञोश्च ।
१०२ शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु ।
१०३ द्रोणपर्वतजीवन्तादन्यतरस्याम् ।
१०४ अनृष्यानन्तर्ये बिदादिभ्योऽञ् ।४।५
१०५ गर्गादिभ्यो यञ् ।
१०६ मधुबभ्र्वोर्ब्राह्मणकौशिकयोः ।
१०७ कपिबोधादाङ्गिरसे ।
१०८ वतण्डाच्च ।४।६
१०९ लुक् स्त्रियाम् ।
११० अश्वादिभ्यः फञ् ।
१११ भर्गात्त्रैगर्ते ।
११२ शिवादिभ्योऽण् ।४।७
११३ अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः ।
११४ ऋष्यन्धकवृष्णिकुरुभ्यश्च ।४।८
११५ मातुरुत्संख्यासंभद्रपूर्वायाः ।४।९
११६ कन्यायाः कनीन च ।४।१०
११७ विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु ।
११८ पीलाया वा ।
११९ ढक्च मण्डूकात् ।
१२० स्त्रीभ्यो ढक् ।४।११
१२१ द्व्यचः ।
१२२ इतश्चानिञः ।
१२३ शुभ्रादिभ्यश्च ।
१२४ विकर्णकुषीतकात्काश्यपे ।
१२५ भ्रुवो वुक्च ।
१२६ कल्याण्यादीनामिनङ् ।
१२७ कुलटाया वा ।
१२८ चटकाया ऐरक् ।४।१२
१२९ गोधाया ढ्रक् ।
१३० आरगुदीचाम् ।४।१३
१३१ क्षुद्राभ्यो वा ।४।१४
१३२ पितृष्वसुश्छण् ।
१३३ ढकि लोपः ।४।१५
१३४ मातृष्वसुश्च ।४।१६
१३५ चतुष्पाद्भ्यो ढञ् ।
१३६ गृष्ट्यादिभ्यश्च ।
१३७ राजश्वशुराद्यत् ।४।१७
१३८ क्षत्राद्घः ।
१३९ कुलात्खः ।
१४० अपूर्वपदादन्यतरस्यां यड्ढकञौ ।
१४१ महाकुलादञ्खञौ ।
१४२ दुष्कुलाड्ढक् ।
१४३ स्वसुश्छः ।
१४४ भ्रातुर्व्यच्च ।
१४५ व्यन्सपत्ने ।४।१८

१४६ रेवत्यादिभ्यष्ठक् ।
१४७ गोत्रस्त्रियाः कुत्सने ण च ।४।१९
१४८ वृद्धाट्टक्सौवीरेषु बहुलम् ।४।२०
१४९ फेश्छ च ।
१५० फाण्टाहृतिमिमताभ्यां णफिञौ ।
१५१ कुर्वादिभ्यो ण्यः ।४।२१
१५२ सेनान्तलक्षणकारिभ्यश्च ।
१५३ उदीचामिञ् ।४।२२
१५४ तिकादिभ्यः फिञ् ।
१५५ कौशल्यकार्मार्याभ्यां च ।४।२३
१५६ अणो द्व्यचः ।
१५७ उदीच्यां वृद्धादगोत्रात् ।
१५८ वाकिनादीनां कुक्च ।४।२४
१५९ पुत्रान्तादन्यतरस्याम् ।
१६० प्राचामवृद्धात्फिन्बहुलम् ।
१६१ मनोर्जातावञ्यतौ षुक्च ।४।२५
१६२ अपत्यं पौत्रप्रभृति गोत्रम् ।४।२६
१६३ जीवति तु वंश्ये युवा ।४।२७
१६४ भ्रातरि च ज्यायसि ।
१६५ वाऽन्यस्मिन्सपिण्डे स्थविरतरे जीवति ।४।२८
१६६ जनपदशब्दात्क्षत्रियादञ् ।४।२९
१६७ साल्वेयगान्धारिभ्यां च ।
१६८ द्व्यञ्मगधकलिङ्गसूरमसादण् । ४।३०
१६९ वृद्धेत्कोसलाजादाञ्ञ्यङ् ।
१७० कुरुनादिभ्यो ण्यः ।
१७१ साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ।
१७२ ते तद्राजाः ।
१७३ कम्बोजाल्लुक् ।४।३१
१७४ स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ।
१७५ अतश्च ।४।३२
१७६ न प्राच्यभर्गादियौधेयादिभ्यः ।

"ङ्याब्द्विगोः षिद्गौरादिवाहो दैवयज्ञियञिणोर्द्व्यचो महाकुलान्मनोर्जातौ षोडश" ॥

---

## द्वितीयः पादः ४।२

१ तेन रक्तं रागात् ।१।१
२ लाक्षारोचना-ट्ठक् ।१।२
३ नक्षत्रेण युक्तः कालः ।१।३
४ लुबविशेषे ।१।४
५ संज्ञायां श्रवणाश्वत्थाभ्याम् ।१।५
६ द्वन्द्वाच्छः ।
७ दृष्टं साम ।१।६
८ कलेर्ढक् । (वार्तिकम्)
९ वामदेवाड्ड्यड्ड्यौ ।१।७
१० परिवृतो रथः ।
११ पाण्डुकम्बलादिनिः ।१।९
१२ द्वैपवैयाघ्रादञ् ।
१३ कौमारापूर्ववचने ।१।१०
१४ तत्रोद्धृतममत्रेभ्यः ।
१५ स्थण्डिलाच्छयितरि व्रते ।
१६ संस्कृतं भक्षाः ।
१७ शूलोखाद्यत् ।
१८ दध्नष्ठक् ।
१९ उदश्वितोऽन्यतरस्याम् ।
२० क्षीराड्ढञ् ।
२१ साऽस्मिन्पौर्णमासीति १।११
२२ आग्रहायण्यश्वत्थाट्ठक् ।
२३ विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः ।
२४ साऽस्य देवता ।
२५ कस्येत् ।१।१२
२६ शुक्राद्घन् ।
२७ अपोनप्त्रपांनप्तृभ्यां घः ।१।१३
२८ छ च ।१।१४
२९ महेन्द्राद्घाणौ च ।
३० सोमाट्ट्यण् ।
३१ वाय्वृतुपित्रुषसो यत् ।
३२ द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च ।
३३ अग्नेर्ढक् ।
३४ कालेभ्यो भववत् ।१।१५
३५ महाराजप्रोष्ठपदाट्ठञ् ।१।१६
३६ पितृव्यमातुलमातामहपितामहाः ।१।१७
३७ तस्य समूहः ।
३८ भिक्षादिभ्योऽण् ।१।१८
३९ गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् ।१।१९
४० केदाराद्यञ्च ।१।२०
४१ ठञ्कवचिनश्च ।
४२ ब्राह्मणमाणववाडवाद्यत् ।१।२१
४३ ग्रामजनबन्धुभ्यस्तल् ।१।२२
४४ अनुदात्तादेरञ् ।
४५ खण्डिकादिभ्यश्च ।१।२३
४६ चरणेभ्यो धर्मवत् ।
४७ अचित्तहस्तिधेनोष्ठक् ।
४८ केशाश्वाभ्यां यञ्छावन्यतरस्याम् ।
४९ पाशादिभ्यो यः ।
५० खलगोरथात् । } १।२४
५१ इनित्रकट्यचश्च }
५२ विषयो देशे ।१।२५
५३ राजन्यादिभ्यो वुञ् ।
५४ भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ ।
५५ सोऽस्यादिरिति च्छन्दसः प्रगाथेषु ।१।२६
५६ संग्रामे प्रयोजनयोद्धृभ्यः ।
५७ तदस्यां प्रहरणमिति क्रीडायां णः ।
५८ घञः साऽस्यां क्रियेति ञः ।
५९ तदधीते तद्वेद ।१।२७
६० क्रतूक्थादिसूत्रान्ताट्ठक् ।१।२८
६१ क्रमादिभ्यो वुन् ।
६२ अनुब्राह्मणादिनिः १।२९
६३ वसन्तादिभ्यष्ठक् ।१।३०
६४ प्रोक्ताल्लुक् ।१।३१
६५ सूत्राच्च कोपधात् ।१।३२
६६ छन्दोब्राह्मणानि च तद्विषयाणि १।३३
६७ तदस्मिन्नस्तीति देशे तन्नाम्नि ।
६८ तेन निर्वृत्तम् ।
६९ तस्य निवासः ।
७० अदूरभवश्च ।
७१ ओरञ् ।१।३३
७२ मतोश्च बह्वजङ्गात् ।१।३४
७३ बह्वचः कूपेषु ।
७४ उदक्च विपाशः ।
७५ संकलादिभ्यश्च ।
७६ स्त्रीषु सौवीरसाल्वप्राक्षु ।
७७ सुवास्त्वादिभ्योऽण् ।
७८ रोणी ।
७९ कोपधाच्च ।
८० वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशा-

श्वश्र्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्णसुतंगमप्रगदिन्वराहकुमुदादिभ्य ।
८१ जनपदे लुप् ।
८२ वरणादिभ्यश्च ।
८३ शर्कराया वा ।
८४ ठक्छौ च ।
८५ नद्यां मतुप् ।१।३५
८६ मध्वादिभ्यश्च ।
८७ कुमुदनडवेतसेभ्यो ड्मतुप् ।१।३६
८८ नडशादाद्ड्वलच् ।
८९ शिखाया वलच् ।
९० उत्करादिभ्यश्छ ।
९१ नडादीनां कुक्च ।१।३७
९२ शेषे ।२।१
९३ राष्ट्रावारपाराद्घखौ ।२।२
९४ ग्रामाद्यखञौ ।
९५ कत्र्यादिभ्यो ढकञ् ।२।३
९६ कुलकुक्षिग्रीवाभ्य श्वाऽस्यलंकारेषु ।२।४
९७ नद्यादिभ्यो ढक् ।
९८ दक्षिणापश्चात्पुरसस्त्यक् ।
९९ कापिश्या ष्फक् ।२।५
१०० रङ्कोरमनुष्येऽण्च ।२।६
१०१ द्युप्रागपागुदक्प्रतीचो यत् ।
१०२ कन्थायाष्ठक् ।
१०३ वर्णौ वुक् ।
१०४ अव्ययात्त्यप् ।२।७
१०५ ऐषमोह्यःश्वसोऽन्यतरस्याम् ।
१०६ तीररूप्योत्तरपदादञ्ञौ[1] ।
१०७ दिक्पूर्वपदादसंज्ञायां ञ ।
१०८ मद्रेभ्योऽञ् ।
१०९ उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् ।
११० प्रस्थोत्तरपदपलद्यादिकोपधादण् ।
१११ कण्वादिभ्यो गोत्रे ।
११२ इञश्च ।
११३ न द्व्यचः प्राच्यभरतेषु ।
११४ वृद्धाच्छ ।
११५ भवतष्ठक्छसौ ।
११६ काश्यादिभ्यष्ठञ्ञिठौ ।
११७ वाहीकग्रामेभ्यश्च ।
११८ विभाषोशीनरेषु ।
११९ ओर्देशे ठञ् ।
१२० वृद्धात्प्राचाम् ।
१२१ धन्वयोपधाद्वुञ् ।
१२२ प्रस्थपुरवहान्ताच्च ।
१२३ रोपधेतो प्राचाम् ।
१२४ जनपदतदवध्योश्च ।२।८
१२५ अवृद्धादपि बहुवचनविषयात् ।
१२६ कच्छाग्निवक्त्रवर्तोत्तरपदात् ।
१२७ धूमादिभ्यश्च ।
१२८ नगरात्कुत्सनप्रावीण्ययो. ।
१२९ अरण्यान्मनुष्ये ।२।९
१३० विभाषा कुरुयुगन्धराभ्याम् ।२।१०
१३१ मद्रवृज्यो कन् ।
१३२ कोपधादण् ।
१३३ कच्छादिभ्यश्च ।२।११
१३४ मनुष्यतत्स्थयोर्वुञ् ।
१३५ अपदातौ साल्वात् ।
१३६ गोयवाग्वोश्च ।
१३७ गर्तोत्तरपदाच्छ ।२।१२
१३८ गहादिभ्यश्च ।२।१३
१३९ प्राचां कटादे ।
१४० राज्ञ क च ।
१४१ वृद्धादकेकान्तखोपधात् ।२।१४
१४२ कन्थापलदनगरग्रामह्रदोत्तरपदात् ।
१४३ पर्वताच्च ।
१४४ विभाषाऽमनुष्ये ।
१४५ कृकणपर्णाद्भारद्वाजे ।

"तेन साऽस्मिन्ठञ्क्रमादिभ्यो जनपदे द्युप्रागपाग्ध-न्ववृद्धात्पञ्च" ॥

## तृतीयः पादः ४।३

१ युष्मदस्मदोरन्यतरस्यां खञ्च ।१।१
२ तस्मिन्नणि च युष्माकास्माकौ ।१।२
३ तवकममकावेकवचने ।१।३।
४ अर्धाद्यत् ।१।४
५ परावराधमोत्तमपूर्वाच्च ।
६ दिक्पूर्वपदाट्ठञ्च ।
७ ग्रामजनपदैकदेशादञ्ठञौ ।
८ मध्यान्म ।
९ अ साम्प्रतिके ।
१० द्वीपादनुसमुद्रं यञ् ।
११ कालाट्ठञ् ।
१२ श्राद्धे शरद ।
१३ विभाषा रोगातपयो ।
१४ निशाप्रदोषाभ्यां च ।
१५ श्वसस्तुट् च ।१।५
१६ सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ।
१७ प्रावृष एण्य ।
१८ वर्षाभ्यष्ठक् ।
१९ छन्दसि ठञ् ।
२० वसन्ताच्च ।
२१ हेमन्ताच्च ।
२२ सर्वत्राण्च तलोपश्च ।१।६
२३ सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ।१।७
२४ विभाषा पूर्वाह्णापराह्णाभ्याम् ।१।८
२५ तत्र जात. ।१।९
२६ प्रावृषष्ठप् ।
२७ सञ्ज्ञायां शरदो वुञ् ।
२८ पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन् ।
२९ पथ पन्थ च ।
३० अमावास्याया वा ।
३१ अ च ।
३२ सिन्धवपकराभ्यां कन् ।
३३ अणञौ च ।
३४ श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाऽषाढाबहुलाल्लुक् ।१।१०
३५ स्थानान्तगोशालखरशालाच्च ।
३६ वत्सशालाभिजिदश्वयुक्शतभिषजो वा ।
३७ नक्षत्रेभ्यो बहुलम् ।
३८ कृतलब्धक्रीतकुशला. ।
३९ प्रायभव ।१।११
४० उपजानूपकर्णोपनीवेष्ठक् ।
४१ सम्भूते
४२ कोशाड्ढञ् ।१।१२
४३ कालात्साधुपुष्प्यत्पच्यमानेषु ।
४४ उप्ते च ।
४५ आश्वयुज्या वुञ् ।
४६ ग्रीष्मवसन्तादन्यतरस्याम् ।
४७ देयमृणे ।
४८ कलाप्यश्वत्थयवबुसाद्वुन् ।
४९ ग्रीष्मावरसमाद्वुञ् ।

१ 'तीररूप्योत्तरपदादञ्ञौ' इत्येवमपि पाठो दृश्यते ।

५० संवत्सराग्रहायणीभ्यां ठञ्च ।
५१ व्याहरति मृगः ।
५२ तदस्य सोढम् ।
५३ तत्र भवः ।१।१३
५४ दिगादिभ्यो यत् ।
५५ शरीरावयवाच्च ।
५६ दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् ।[1]
५७ ग्रीवाभ्योऽण्च ।
५८ गम्भीराञ्ञ्यः ।१।१४
५९ अव्ययीभावाच्च ।
६० अन्तःपूर्वपदाट्ठञ् ।१।१५
६१ ग्रामात्पर्यनुपूर्वात् ।
६२ जिह्वामूलाङ्गुलेश्छः ।
६३ वर्गान्ताच्च ।
६४ अशब्दे यत्खावन्यतरस्याम् ।
६५ कर्णललाटात्कनलंकारे ।
६६ तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ।१।१६
६७ बह्वचोऽन्तोदात्ताट्ठञ् ।
६८ क्रतुयज्ञेभ्यश्च ।१।१७
६९ अध्यायेष्वेवर्षेः ।
७० पौरोडाशपुरोडाशात्ष्ठन् ।
७१ छन्दसो यदणौ ।
७२ द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् ।
७३ अणृगयनादिभ्यः ।
७४ तत आगतः ।
७५ ठगायस्थानेभ्यः ।
७६ शुण्डिकादिभ्योऽण् ।
७७ विद्यायोनिसंबन्धेभ्यो वुञ् ।
७८ ऋतष्ठञ् ।
७९ पितुर्यच्च ।
८० गोत्रादङ्कवत् ।
८१ हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ।
८२ मयट् च ।
८३ प्रभवति ।
८४ विदूराञ्ञ्यः ।१।१८
८५ तद्गच्छति पथिदूतयोः ।
८६ अभिनिष्क्रामति द्वारम् ।१।१९
८७ अधिकृत्य कृते ग्रन्थे ।१।२०
८८ शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ।१।२१
८९ सोऽस्य निवासः } ।१।२२
९० अभिजनश्च }
९१ आयुधजीविभ्यश्छः पर्वते ।
९२ शण्डिकादिभ्यो ञ्यः ।
९३ सिन्धुतक्षशिलादिभ्योऽणञौ ।
९४ तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः ।
९५ भक्तिः ।
९६ अचित्ताददेशकालाट्ठक् ।
९७ महाराजाट्ठञ् ।
९८ वासुदेवार्जुनाभ्यां वुन् ।१।२३
९९ गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् ।
१०० जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने ।१।२४
१०१ तेन प्रोक्तम् ।१।२५
१०२ तित्तिरिवरतन्तुखण्डिकोखाच्छण् ।
१०३ काश्यपकौशिकाभ्यामृषिभ्यां णिनिः ।
१०४ कलापिवैशम्पायनान्तेवासिभ्यश्च ।१।२६
१०५ पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ।१।२७
१०६ शौनकादिभ्यश्छन्दसि ।
१०७ कठचरकाल्लुक् ।
१०८ कलापिनोऽण् ।
१०९ छगलिनो ढिनुक् ।
११० पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः ।
१११ कर्मन्दकृशाश्वादिनिः ।
११२ तेनैकदिक् ।
११३ तसिश्च ।
११४ उरसो यच्च ।
११५ उपज्ञाते ।
११६ कृते ग्रन्थे ।१।८
११७ संज्ञायाम् ।
११८ कुलालादिभ्यो वुञ् ।
११९ क्षुद्राभ्रमरवटरपादपादञ् ।
१२० तस्येदम् ।२।१
१२१ रथाद्यत् ।
१२२ पत्रपूर्वादञ् ।
१२३ पत्राध्वर्युपरिषदश्च ।
१२४ हलसीराट्ठक् ।
१२५ द्वन्द्वाद्वुन्वैरमैथुनिकयोः ।२।२
१२६ गोत्रचरणाद्वुञ् ।
१२७ सङ्घाङ्कलक्षणेष्वञ्यञिञामण् ।२।३
१२८ शाकलाद्वा ।
१२९ छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः ।
१३० न दण्डमाणवान्तेवासिषु ।
१३१ रैवतिकादिभ्यश्छः ।२।४
१३२ कौपिञ्जलहास्तिपदादण् । ( वार्तिकम् )
१३३ आथर्वणिकस्येकलोपश्च । ( वार्तिकम् )
१३४ तस्य विकारः ।२।५
१३५ अवयवे च प्राण्योषधिवृक्षेभ्यः ।
१३६ बिल्वादिभ्योऽण् ।२।६
१३७ कोपधाच्च ।
१३८ त्रपुजतुनोः षुक् ।
१३९ ओरञ् ।
१४० अनुदात्तादेश्च ।२।७
१४१ पलाशादिभ्यो वा ।
१४२ शम्याः ष्लञ् ।[2]
१४३ मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ।२।८
१४४ नित्यं वृद्धशरादिभ्यः ।
१४५ गोश्च पुरीषे ।
१४६ पिष्टाच्च ।
१४७ संज्ञायां कन् ।
१४८ व्रीहेः पुरोडाशे ।
१४९ असंज्ञायां तिलयवाभ्याम् ।
१५० द्व्यचश्छन्दसि ।
१५१ नोत्वद्वर्ध्रबिल्वात् ।
१५२ तालादिभ्योऽण् ।
१५३ जातरूपेभ्यः परिमाणे ।
१५४ प्राणिरजतादिभ्योऽञ् ।
१५५ ञितश्च तत्प्रत्ययात् ।२।९
१५६ क्रीतवत्परिमाणात् ।२।१०
१५७ उष्ट्राद्वुञ् ।
१५८ उमोर्णयोर्वा ।
१५९ एण्या ढञ् ।
१६० गोपयसोर्यत् ।
१६१ द्रोश्च ।
१६२ माने वयः ।
१६३ फले लुक् ।२।११
१६४ प्लक्षादिभ्योऽण् ।
१६५ जम्ब्वा वा ।
१६६ लुप् च ।२।१२

१ 'कलशिवस्त्य' इत्यपि पाठः । २ 'शम्याष्टलञ्' इति भाष्यतोऽवगम्यते ।

१६७ हरीतक्यादिभ्यश्च ।
१६८ कंसीयपरशव्ययोर्यञञौ लुक् च ।
"युष्मदेमन्तात्संभूते ग्रामाद्धेतुतेन रथात्पलाशादिभ्यो द्रोश्चाष्टौ" ॥

---

### चतुर्थः पादः ४।४

१ प्राग्वहतेष्ठक् ।१।१
२ तेन दीव्यति खनति जयति जितम् ।
३ संस्कृतम् ।
४ कुलत्थकोपधादण् ।
५ तरति ।
६ गोपुच्छाट्ठञ् ।
७ नौद्व्यचष्ठन् ।
८ चरति ।
९ आकर्षात्ष्ठल् ।१।२
१० पर्पादिभ्यः ष्ठन् ।
११ श्वगणाट्ठञ्च ।
१२ वेतनादिभ्यो जीवति ।
१३ वस्नक्रयविक्रयाट्ठन् ।
१४ आयुधाच्छ च ।
१५ हरत्युत्सङ्गादिभ्यः ।
१६ भस्त्रादिभ्यः ष्ठन् ।
१७ विभाषा विवधात् ।१।३
१८ अण्कुटिलिकायाः ।
१९ निर्वृत्तेऽक्षद्यूतादिभ्यः ।
२० त्रेर्मम्नित्यम् ।१।४
२१ अपमित्ययाचिताभ्यां कक्कनौ ।
२२ संसृष्टे ।
२३ चूर्णादिनिः ।१।५
२४ लवणाल्लुक् ।१।६
२५ मुद्गादण् ।
२६ व्यञ्जनैरुपसिक्ते ।
२७ ओजःसहोऽम्भसा वर्तते ।
२८ तत्प्रत्यनुपूर्वमीपलोमकूलम् ।
२९ परिमुखं च ।
३० प्रयच्छति गर्ह्यम् ।१।७
३१ कुसीददशैकादशात्ष्ठन्ष्ठचौ ।
३२ उञ्छति ।
३३ रक्षति ।
३४ शब्ददर्दुरं करोति ।
३५ पक्षिमत्स्यमृगान्हन्ति ।
३६ परिपन्थं च तिष्ठति ।
३७ माथोत्तरपदपदव्यनुपदं धावति ।
३८ आक्रन्दाट्ठञ्च ।
३९ पदोत्तरपदं गृह्णाति ।
४० प्रतिकण्ठार्थललामं च ।
४१ धर्मं चरति ।१।८
४२ प्रतिपथमेति ठंश्च ।
४३ समवायान्समवैति ।
४४ परिषदो ण्यः ।
४५ सेनाया वा ।
४६ संज्ञायां ललाटकुक्कुट्यौ पश्यति ।
४७ तस्य धर्म्यम् ।
४८ अण्महिष्यादिभ्यः ।
४९ ऋतोऽञ् ।१।९
५० अवक्रयः ।
५१ तदस्य पण्यम् ।
५२ लवणाट्ठञ् ।
५३ किसरादिभ्यः ष्ठन् ।
५४ शलालुनोऽन्यतरस्याम् ।
५५ शिल्पम् ।१।१०
५६ मड्डुकझर्झरादणन्यतरस्याम् ।
५७ प्रहरणम् ।
५८ परश्वधाट्ठञ्च ।
५९ शक्तियष्ट्योरीकक् ।१।११
६० अस्ति नास्ति दिष्टं मतिः ।१।१२
६१ शीलम् ।
६२ छत्रादिभ्यो णः ।१।१३
६३ कर्माध्ययने वृत्तम् ।
६४ बह्वच्पूर्वपदाट्ठच् ।
६५ हितं भक्षाः ।१।१४
६६ तदस्मै दीयते नियुक्तम् ।
६७ श्राणामांसौदनाट्टिठन् ।
६८ भक्तादणन्यतरस्याम् ।
६९ तत्र नियुक्तः ।
७० अगारान्ताट्ठन् ।
७१ अध्यायिन्यदेशकालात् ।
७२ कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति ।
७३ निकटे वसति ।
७४ आवसथात्ष्ठल् ।
७५ प्राग्घिताद्यत् ।
७६ तद्वहति रथयुगप्रासङ्गम् ।१।१५
७७ धुरो यड्ढकौ ।
७८ खः सर्वधुरात् ।
७९ एकधुराल्लुक्च ।
८० शकटादण् ।
८१ हलसीराट्ठक् ।
८२ संज्ञायां जन्याः ।१।१६
८३ विध्यत्यधनुषा ।१।१७
८४ धनगणं लब्धा ।
८५ अन्नाण्णः ।
८६ वशं गतः ।
८७ पदमस्मिन्दृश्यम् ।
८८ मूलमस्याबर्हि ।
८९ संज्ञायां धेनुष्या ।
९० गृहपतिना संयुक्ते ञ्यः ।१।१८
९१ नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु ।
९२ धर्मपथ्यर्थन्यायादनपेते ।
९३ छन्दसो निर्मिते ।
९४ उरसोऽण्च ।
९५ हृदयस्य प्रियः ।
९६ बन्धने चर्षौ ।
९७ मतजनहलात्करणजल्पकर्षेषु ।
९८ तत्र साधुः ।
९९ प्रतिजनादिभ्यः खञ् ।
१०० भक्ताण्णः ।
१०१ परिषदो ण्यः ।
१०२ कथादिभ्यष्ठक् ।
१०३ गुडादिभ्यष्ठञ् ।
१०४ पथ्यतिथिवसतिस्वपतेर्ढञ् ।
१०५ सभाया यः ।
१०६ ढश्छन्दसि ।
१०७ समानतीर्थे वासी ।
१०८ समानोदरे शयित ओ चोदात्तः ।
१०९ सोदराद्यः ।
११० भवे छन्दसि ।
१११ पाथोनदीभ्यां ड्यण् ।
११२ वेशन्तहिमवद्भ्यामण् ।
११३ स्रोतसो विभाषा ड्यड्ड्यौ ।
११४ सगर्भसयूथसनुताद्यन् ।
११५ तुग्राद्घन् ।
११६ अग्राद्यत् ।
११७ घच्छौ च ।
११८ समुद्राभ्राद्घः ।
११९ बर्हिषि दत्तम् ।
१२० दूतस्य भागकर्मणी ।

---

१ 'विभाषा विवधवीवधात्' इत्येवं वार्तिकांशम्प्रक्षिप्यापि क्वचित्पाठो दृश्यते । २ 'नियतम्' अयमपि पाठः क्वचिद्दृश्यते ।

१२१ रक्षोयातूना हननी ।
१२२ रेवतीजगतीहविष्याभ्य प्रशस्ये।
१२३ असुरस्य स्वम् ।
१२४ मायायामण् ।
१२५ तद्वानासामुपधानो मन्त्र इती-
ष्टकासु लुक्च मतो ।
१२६ अश्विमानण् ।
१२७ वयस्यासु मूर्ध्नो मतुप् ।
१२८ मत्वर्थे मासतन्वो ।१।१९
१२९ मधोर्ञ च ।
१३० ओजसोऽहनि यत्खौ ।
१३१ वेशोयशआदेर्भगाद्यल्खौ ।
१३२ पूर्वैं कृतमिनियौ च ।
१३३ अद्भि सस्कृतम् ।
१३४ सहस्रेण समितौ घ ।
१३५ मतौ च ।
१३६ सोममर्हति य ।
१३७ मये च ।
१३८ मधो ।
१३९ वसो समूहे च ।१।२०
१४० नक्षत्राद्घ ।
१४१ सर्वदेवात्तातिल् ।
१४२ शिवशमरिष्टस्य करे ।
१४३ भावे च ।
"प्राग्वहतेरपमित्यधर्म शीलं हल-
परिषदो रक्षोनक्षत्राश्रीणि"॥

---

## अथ पञ्चमोऽध्यायः ।

### प्रथमः पादः ५।१

१ प्राक् क्रीताच्छ ।१।१
२ उगवादिभ्यो यत् ।१।२
३ कम्बलाच्च सज्ञायाम् ।१।३
४ विभाषा हविरपूपादिभ्य ।१।४
५ तस्मै हितम् ।
६ शरीरावयवाद्यत् ।१।५
७ खलयवमाषतिलवृषब्रह्मणश्च
।१।६
८ अजाविभ्या थ्यन् ।
९ आत्मन्विश्वजनभोगोत्तरपदा-
त्खः ।१।७
१० सर्वपुरुषाभ्यां णढञौ ।१।८
११ माणवचरकाभ्या खञ् ।
१२ तदर्थं विकृते प्रकृतौ ।१।९
१३ छदिरुपधिबलेर्ढञ् ।१।१०
१४ ऋषभोपानहोर्ञ्य ।
१५ चर्मणोऽञ् ।
१६ तदस्य तस्मिन्स्यादिति ।१।११
१७ परिखाया ढञ् ।
१८ प्राग्वतेष्ठञ् ।
१९ आर्हादगोपुच्छसख्यापरिमाणा-
ट्ठक् ।१।१२
२० असमासे निष्कादिभ्य ।१।१३
२१ शताच्च ठन्यतावशते ।१।१४
२२ सख्याया अतिशदन्ताया
कन् ।१।१५
२३ वतोरिड्वा ।१।१६
२४ विंशतित्रिंशद्भ्या ड्वुन्सज्ञायाम्
।१।१७
२५ कसाट्टिठन् ।१।१८
२६ शूर्पादञन्यतरस्याम् ।
२७ शतमानविंशतिकसहस्रवसना-
दण् ।
२८ अध्यर्धपूर्वद्विगोर्लुगसज्ञायाम्
।१।१९
२९ विभाषा कार्षापणसहस्राभ्याम्
।१।२०
३० द्वित्रिपूर्वान्निष्कात् ⎫ ।१।२१
३१ बिस्ताच्च ⎭
३२ विंशतिकात्ख ।
३३ खार्या ईकन् ।१।२२
३४ पणपादमाषशताद्यत् ।
३५ शाणाद्वा ।१।२३
३६ द्वित्रिपूर्वादण्च ( वार्तिकम् ) ।
३७ तेन क्रीतम् ।१।२४
३८ तस्य निमित्त सयोगोत्पातौ
।१।२५
३९ गोद्व्यचोऽसख्यापरिमाणाश्वादे-
र्यत् ।१।२६
४० पुत्राच्छ च ।
४१ सर्वभूमिपृथिवीभ्यामणञौ ।
४२ तस्येश्वर ।
४३ तत्र विदित इति च ।
४४ लोकसर्वलोकाट्ठञ् ।
४५ तस्य वाप ।
४६ पात्रात्ष्ठन् ।
४७ तदस्मिन्वृद्ध्यायलाभशुल्कोपदा
दीयते ।१।२७
४८ पूरणार्धाट्ठन् ।१।२८
४९ भागाद्यच्च ।
५० तद्धरति वहत्यावहति भारा-
द्वंशादिभ्य ।
५१ वस्नद्रव्याभ्या ठन्कनौ ।
५२ सभवत्यवहरति पचति ।१।२९
५३ आढकाचितपात्रात् खोऽन्य-
तरस्याम् ।
५४ द्विगो ष्ठश्च ।
५५ कुलिजाल्लुक्खौ च ।१।३०
५६ सोऽस्यांशवस्नभृतय ।
५७ तदस्य परिमाणम् ।१।३१
५८ सख्याया सज्ञासङ्घसूत्राध्यय-
नेषु ।१।३१
५९ पक्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चा-
शत्षष्टिसप्तत्यशीतिनवतिशतम्
।२।१
६० पञ्चद्दशतौ वर्गे वा ।
६१ सप्तनोऽञ्छन्दसि ।
६२ त्रिंशच्चत्वारिंशतोर्ब्राह्मणे सज्ञाया
डण् ।
६३ तदर्हति ।
६४ छेदादिभ्यो नित्यम् ।२।२
६५ शीर्षच्छेदाद्यच्च ।
६६ दण्डादिभ्यो यत् ।
६७ छन्दसि च ।
६८ पात्राद्घंश्च ।
६९ कडकरदक्षिणाच्छ च ।
७० स्थालीबिलात् ।
७१ यज्ञर्त्विग्भ्या घखञौ ।२।३
७२ पारायणतुरायणचान्द्रायण
वर्तयति ।२।४
७३ सशयमापन्न ।
७४ योजन गच्छति ।२।५
७५ पथ ष्कन् ।
७६ पन्थो ण नित्यम् ।२।६
७७ उत्तरपथेनाहृत च ।
७८ कालात् ।
७९ तेन निर्वृत्तम् ।
८० तमधीष्टो भृतो भूतो भावी ।२।७
८१ मासाद्वयसि यत्खञौ ।
८२ द्विगोर्यप् ।
८३ षण्मासाण्ण्यच्च ।
८४ अवयसि ठश्च ।२।८
८५ समाया ख ।
८६ द्विगोर्वा ।

८७ रात्र्याहःसंवत्सराच्च ।
८८ वर्षाल्लुक्च ।
८९ चित्तवति नित्यम् ।
९० षष्टिकाः षष्टिरात्रेण पच्यन्ते २.९
९१ वत्सरान्ताच्छश्छन्दसि ।
९२ संपरिपूर्वात्ख च ।
९३ तेन परिजय्यलभ्यकार्यसुकरम् ।
९४ तदस्य ब्रह्मचर्यम् ।२।१०
९५ तस्य च दक्षिणा यज्ञाख्येभ्यः ।२।११
९६ तत्र च दीयते कार्यं भववत् ।२।१२
९७ व्युष्टादिभ्योऽण् ।२।१३
९८ तेन यथाकथाचहस्ताभ्यां णयतौ ।
९९ संपादिनि ।
१०० कर्मवेषाद्यत् ।
१०१ तस्मै प्रभवति संतापादिभ्यः ।
१०२ योगाद्यच्च ।
१०३ कर्मण उकञ् ।
१०४ समयस्तदस्य प्राप्तम् ।
१०५ ऋतोरण् ।
१०६ छन्दसि घस् ।
१०७ कालाद्यत् ।
१०८ प्रकृष्टे ठञ् ।
१०९ प्रयोजनम् ।
११० विशाखाषाढादण्मन्थदण्डयोः ।
१११ अनुप्रवचनादिभ्यश्छः ।
११२ समापनात्सपूर्वपदात् ।
११३ ऐकागारिकट् चौरे ।२।१५
११४ आकालिकडाद्यन्तवचने ।२।१६
११५ तेन तुल्यं क्रिया चेद्वतिः ।२।१६
११६ तत्र तस्येव ।२।१७
११७ तदर्हम् ।२।१८
११८ उपसर्गाच्छन्दसि धात्वर्थे ।२।१९
११९ तस्य भावस्त्वतलौ ।२।२०
१२० आ च त्वात् ।२।२१
१२१ न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवटयुधकतरसलसेभ्यः । २।२२
१२२ पृथ्वादिभ्य इमनिज्वा ।२।२३
१२३ वर्णदृढादिभ्यः ष्यञ् च ।
१२४ गुणवचनब्राह्मणादिभ्यः कर्मणि च ।२।२७
१२५ स्तेनाद्यन्नलोपश्च ।२।२८
१२६ सख्युर्यः ।



१२७ कपिज्ञात्योर्ढक् ।
१२८ पत्यन्तपुरोहितादिभ्यो यक् ।
१२९ प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ।
१३० हायनान्तयुवादिभ्योऽण् ।२।२९
१३१ इगन्ताच्च लघुपूर्वात् ।
१३२ योपधाद्गुरूपोत्तमाद्वुञ् ।
१३३ द्वन्द्वमनोज्ञादिभ्यश्च ।
१३४ गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु ।
१३५ होत्राभ्यश्छः ।
१३६ ब्रह्मणस्त्वः ।

"प्राक्क्रीताच्छताच्च सर्वभूमिसप्तनोऽभ्यासात्तस्मै प्रभवति ननञ्पूर्वात् षोडश" ॥

---

## द्वितीयः पादः ५।२

१ धान्यानां भवने क्षेत्रे खञ् ।
२ व्रीहिशाल्योर्ढक् ।
३ यवयवकषष्टिकाद्यत् ।
४ विभाषा तिलमाषोमाभङ्गाणुभ्यः ।१।१
५ सर्वचर्मणः कृतः खखञौ ।
६ यथामुखसंमुखस्य दर्शनः खः ।१।२
७ तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ।
८ आप्रपदं प्राप्नोति ।
९ अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु ।१।३
१० परोवरपरंपरपुत्रपौत्रमनुभवति ।१।४
११ अवारपारात्यन्तानुकामं गामी ।
१२ समांसमां विजायते ।१।५
१३ अद्यश्वीनाऽवष्टब्धे ।
१४ आगवीनः ।१।६
१५ अनुग्वलंगामी ।
१६ अध्वनो यत्खौ ।
१७ अभ्यमित्राच्छ च ।
१८ गोष्ठात्खञ्भूतपूर्वे ।
१९ अश्वस्यैकाहगमः ।
२० शालीनकौपीने अधृष्टाकार्ययोः । १।७
२१ व्रातेन जीवति ।१।८
२२ साप्तपदीनं सख्यम् ।
२३ हैयंगवीनं संज्ञायाम् ।१।९
२४ तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ ।
२५ पक्षात्तिः ।१।१०
२६ तेन वित्तश्चुञ्चुप्चणपौ ।
२७ विनञ्भ्यां नानाञौ न सह ।
२८ वेः शालच्छङ्कटचौ ।१।१२
२९ संप्रोदश्च कटच् ।१।१३
३० अवात्कुटारच्च ।
३१ नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः ।
३२ नेर्बिडज्बिरीसचौ ।
३३ इनच्पिटच्चिकचि च ।
३४ उपाधिभ्यां त्यकन्नासन्नारूढयोः ।
३५ कर्मणि घटोऽठच् ।
३६ तदस्य संजातं तारकादिभ्य इतच् ।
३७ प्रमाणे द्वयसज्दघ्नञ्मात्रचः ।१।१५
३८ पुरुषहस्तिभ्यामण्च ।
३९ यत्तदेतेभ्यः परिमाणे वतुप् ।१।१६
४० किमिदंभ्यां वो घः ।१।१७
४१ किमः संख्यापरिमाणे डति च ।१।१८
४२ संख्याया अवयवे तयप् ।१।१९
४३ द्वित्रिभ्यां तयस्यायज्वा ।
४४ उभादुदात्तो नित्यम् ।१।२०
४५ तदस्मिन्नधिकमिति दशान्ताड्डः ।१।२१
४६ शदन्तविंशतेश्च ।१।२२
४७ संख्याया गुणस्य निमाने मयट् ।१।२३
४८ तस्य पूरणे डट् ।१।२४
४९ नान्तादसंख्यादेर्मट् ।१।२५
५० थट् च छन्दसि ।
५१ षट्कतिकतिपयचतुरां थुक् ।१।२६
५२ बहुपूगगणसङ्घस्य तिथुक् ।१।२७
५३ वतोरिथुक् ।
५४ द्वेस्तीयः ।
५५ त्रेः संप्रसारणं च ।
५६ विंशत्यादिभ्यस्तमडन्यतरस्याम् ।
५७ नित्यं शतादिमासार्धमाससंवत्सराच्च ।

५८ षष्ठ्यादिश्चासंख्यादेः ।१।२८
५९ मतौ छः सूक्तसाम्नोः ।१।२९
६० अध्यायानुवाकयोर्लुक् ।१।३०
६१ विमुक्तादिभ्योऽण् ।
६२ गोषदादिभ्यो वुन् ।
६३ तत्र कुशलः पथः ।
६४ आकर्षादिभ्यः कन् ।
६५ धनहिरण्यात्कामे ।१।३१
६६ स्वाङ्गेभ्यः प्रसिते ।
६७ उदराट्ठगाद्यूने ।
६८ सस्येन परिजातः ।
६९ अंशं हारी ।
७० तन्त्रादचिरापहृते ।
७१ ब्राह्मणकोष्णिके संज्ञायाम् ।
७२ शीतोष्णाभ्यां कारिणि ।१।३२
७३ अधिकम् ।१।३३
७४ अनुकाभिकाभीकः कमिता ।
७५ पार्श्वेनान्विच्छति ।१।३४
७६ अयःशूलदण्डाजिनाभ्यां ठक्ठञौ ।१।३५
७७ तावतिथं ग्रहणमिति लुग्वा ।१।३६
७८ स एषां ग्रामणीः ।
७९ शृङ्खलमस्य बन्धनं करभे ।१।३७
८० उत्क उन्मनाः ।
८१ कालप्रयोजनाद्रोगे ।
८२ तदस्मिन्नन्नं प्राये संज्ञायाम् ।१।३८
८३ कुल्माषादञ् ।
८४ श्रोत्रियंश्छन्दोऽधीते ।१।३९
८५ श्राद्धमनेन भुक्तमिनिठनौ ।१।४०
८६ पूर्वादिनिः ।
८७ सपूर्वाच्च ।
८८ इष्टादिभ्यश्च ।
८९ छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि ।
९० अनुपद्यन्वेष्टा ।
९१ साक्षाद्द्रष्टरि संज्ञायाम् ।१।४१
९२ क्षेत्रियच्परक्षेत्रे चिकित्स्यः ।१।४२
९३ इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा ।
९४ तदस्यास्त्यस्मिन्निति मतुप् ।२।१
९५ रसादिभ्यश्च ।२।२
९६ प्राणिस्थादातो लजन्यतरस्याम् ।२।३
९७ सिध्मादिभ्यश्च ।२।४
९८ वत्सांसाभ्यां कामबले ।
९९ फेनादिलच्च ।
१०० लोमादिपामादिपिच्छादिभ्यः शनेलचः ।२।५
१०१ प्रज्ञाश्रद्धार्चाभ्यो णः ।२।६
१०२ तपःसहस्राभ्यां विनीनी ।२।७
१०३ अण्च ।२।७
१०४ सिकताशर्कराभ्यां च ।
१०५ देशे लुबिलचौ च ।
१०६ दन्त उन्नत उरच् ।
१०७ ऊषसुषिमुष्कमधो रः ।२।८
१०८ द्युद्रुभ्यां मः ।
१०९ केशाद्वोऽन्यतरस्याम् ।२।९
११० गाण्ड्यजगात्संज्ञायाम् ।
१११ काण्डाण्डादीरन्नीरचौ ।
११२ रजःकृष्यासुतिपरिषदो वलच् ।२।१०
११३ दन्तशिखात्संज्ञायाम् ।
११४ ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः ।
११५ अत इनिठनौ ।२।११
११६ व्रीह्यादिभ्यश्च ।२।१२
११७ तुन्दादिभ्य इलच्च ।
११८ एकगोपूर्वाट्ठञ्नित्यम् ।२।१३
११९ शतसहस्रान्ताच्च निष्कात् ।
१२० रूपादाहतप्रशंसयोर्यप् ।२।१४
१२१ अस्मायामेधास्रजो विनिः ।
१२२ बहुलं छन्दसि ।२।१५
१२३ ऊर्णाया युस् ।
१२४ वाचो ग्मिनिः ।
१२५ आलजाटचौ बहुभाषिणि ।२।१६
१२६ स्वामिन्नैश्वर्ये ।२।१७
१२७ अर्शआदिभ्योऽच् ।
१२८ द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः ।
१२९ वातातीसाराभ्यां कुक्च ।२।१८
१३० वयसि पूरणात् ।
१३१ सुखादिभ्यश्च ।
१३२ धर्मशीलवर्णान्ताच्च ।
१३३ हस्ताज्जातौ ।
१३४ वर्णाद्ब्रह्मचारिणि ।
१३५ पुष्करादिभ्यो देशे ।२।१९
१३६ बलादिभ्यो मतुबन्यतरस्याम् ।
१३७ संज्ञायां मन्माभ्याम् ।
१३८ कंशंभ्यां बभयुस्तितुतयसः ।
१३९ तुन्दिबलिवटेर्भः ।
१४० अहंशुभमोर्युस् ।
"धान्यानां ग्रातेन किमो विमुक्तादिभ्यः कालप्रयोजनात्प्रज्ञाश्रद्धाऽस्माया-मेधाविंशतिः" ॥

---

## तृतीयः पादः ५।३

१ प्राग्दिशो विभक्तिः ।१।१
२ किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ।१।२
३ इदम इश् ।
४ एतेतौ रथोः ।
५ एतदोऽन् ।१।३
६ सर्वस्य सोऽन्यतरस्यां दि ।
७ पञ्चम्यास्तसिल् ।१।४
८ तसेश्च ।१।५
९ पर्यभिभ्यां च ।१।६
१० सप्तम्यास्त्रल् ।१।४
११ इदमो हः ।
१२ किमोऽत् ।
१३ वा ह च च्छन्दसि ।
१४ इतराभ्योऽपि दृश्यन्ते ।१।७
१५ सर्वैकान्यकिंयत्तदः काले दा ।
१६ इदमोर्हिल् ।
१७ अधुना ।१।८
१८ दानीं च ।१।९
१९ तदो दा च ।१।१०
२० तयोर्दार्हिलौ च च्छन्दसि ।१।११
२१ अनद्यतने र्हिलन्यतरस्याम् ।
२२ सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ।१।१२
२३ प्रकारवचने थाल् ।
२४ इदमस्थमुः ।
२५ किमश्च ।
२६ था हेतौ च छन्दसि ।
२७ दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ।१।१३
२८ दक्षिणोत्तराभ्यामतसुच् ।१।१४
२९ विभाषा परावराभ्याम् ।
३० अञ्चेर्लुक् ।
३१ उपर्युपरिष्टात् ।१।१५

३२ पश्चात् ।१।१६
३३ पश्च पश्चा च च्छन्दसि ।
३४ उत्तराधरदक्षिणादातिः ।
३५ एनबन्यतरस्यामदूरेऽपञ्चम्याः । १।१७
३६ दक्षिणादाच् ।१।१८
३७ आहि च दूरे ।
३८ उत्तराच्च ।
३९ पूर्वाधरावराणामसिपुरधवश्चैषाम् ।
४० अस्ताति च ।
४१ विभाषावरस्य ।
४२ संख्याया विधार्थे धा ।१।१९
४३ अधिकरणविचाले च ।
४४ एकाद्धो ध्यमुञन्यतरस्याम् ।१।२०
४५ द्वित्र्योश्च धमुञ् ।१।२१
४६ एधाच्च ।
४७ याप्ये पाशप् ।१।२२
४८ पूरणाद्भागे तीयादन् ।१।२३
४९ प्रागेकादशभ्योऽच्छन्दसि ।
५० षष्ठाष्टमाभ्यां ञ च ।
५१ मानपश्वङ्गयोः कन्लुकौ च ।
५२ एकादाकिनिच्चासहाये ।१।२४
५३ भूतपूर्वे चरट् ।
५४ षष्ठ्या रूप्य च ।
५५ अतिशायने तमबिष्ठनौ ।२।१
५६ तिङश्च ।
५७ द्विवचनविभज्योपपदे तरबीयसुनौ ।२।२
५८ अजादी गुणवचनादेव ।२।३
५९ तुश्छन्दसि ।
६० प्रशस्यस्य श्रः ।
६१ ज्य च ।
६२ वृद्धस्य च ।
६३ अन्तिकबाढयोर्नेदसाधौ ।
६४ युवाल्पयोः कनन्यतरस्याम् ।
६५ विन्मतोर्लुक् ।
६६ प्रशंसायां रूपप् ।२।५
६७ ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ।२।६
६८ विभाषा सुपो बहुच् पुरस्तात्तु।२।७
६९ प्रकारवचने जातीयर् ।
७० **प्रागिवात्कः ।**
७१ अव्ययसर्वनाम्नामकच्प्राक्टेः ।
७२ कस्य च दः ।२।८
७३ अज्ञाते ।
७४ कुत्सिते ।२।९
७५ संज्ञायां कन् ।
७६ अनुकम्पायाम् ।
७७ नीतौ च तद्युक्तात् ।
७८ बह्वचो मनुष्यनाम्नष्ठज्वा ।
७९ घनिलचौ च ।
८० प्राचामुपादेरडज्वुचौ च ।
८१ जातिनाम्नः कन् ।
८२ अजिनान्तस्योत्तरपदलोपश्च ।
८३ ठाजादावूर्ध्वं द्वितीयादचः ।२।१०
८४ शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात् ।२।११
८५ अल्पे ।२।१२
८६ ह्रस्वे ।२।१२
८७ संज्ञायां कन् ।
८८ कुटी[illegible] रः ।२।१३
८९ कुत्वा डुपच् ।
९० कासूगोणीभ्यां ष्टरच् ।
९१ वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे ।२।४
९२ किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच् ।२।५
९३ वा बहूनां जातिपरिप्रश्ने डतमच् ।२।५
९४ एकाच्च प्राचाम् ।२।६
९५ अवक्षेपणे कन् ।२।७
९६ इवे प्रतिकृतौ ।
९७ संज्ञायां च ।
९८ लुम्मनुष्ये ।२।८
९९ जीविकार्थे चापण्ये ।२।९
१०० देवपथादिभ्यश्च ।
१०१ वस्तेर्ढञ् ।
१०२ शिलाया ढः ।
१०३ शाखादिभ्यो यः ।
१०४ द्रव्यं च भव्ये ।
१०५ कुशाग्राच्छः ।
१०६ समासाच्च तद्विषयात् ।२।१०
१०७ शर्करादिभ्योऽण् ।
१०८ अङ्गुल्यादिभ्यष्ठक् ।
१०९ एकशालायाष्ठजन्यतरस्याम् ।
११० कर्कलोहितादीकक् ।
१११ प्रत्नपूर्वविश्वेमात्थाल्छन्दसि ।
११२ पूगाञ्ञ्योऽग्रामणीपूर्वात् ।
११३ व्रातच्फञोरस्त्रियाम् ।
११४ आयुधजीविसंघाञ्ञ्यड्वाहीकेष्वब्राह्मणराजन्यात् ।
११५ वृकाट्टेण्यण् ।
११६ दामन्यादित्रिगर्तषष्ठाच्छः ।
११७ पर्श्वादियौधेयादिभ्योऽणञौ ।
११८ अभिजिद्विदभृच्छालावच्छिखाव[illegible] यञ् ।२।११
११९ ञ्यादयस्तद्राजाः ।
"प्राग्दिशोऽनद्यतने विभाषा ज्य च जातिनाम्नो वस्तेरेकोनविंशतिः"

---

## चतुर्थः पादः ५।४

१ पादशतस्य संख्यादेर्वीप्सायां वुन्लोपश्च ।१।१
२ दण्डव्यवसर्गयोश्च ।
३ स्थूलादिभ्यः प्रकारवचने कन् ।१।२
४ अनत्यन्तगतौ क्तात् ।१।३
५ न सामिवचने ।१।४
६ बृहत्या आच्छादने ।
७ अषडक्षाशितंग्वलंकर्मालंपुरुषाध्युत्तरपदात्खः ।१।५
८ विभाषाञ्चेरदिक्स्त्रियाम् ।१।६
९ जात्यन्ताच्छ बन्धुनि ।
१० स्थानान्ताद्विभाषा सस्थानेनेति चेत् ।
११ किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ।
१२ अमु च च्छन्दसि ।
१३ अनुगादिनष्ठक् ।
१४ णच. स्त्रियामञ् ।१।७
१५ अणिनुणः ।
१६ विसारिणो मत्स्ये ।
१७ संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् ।
१८ द्वित्रिचतुर्भ्यः सुच् ।
१९ एकस्य सकृच्च ।१।८
२० विभाषा बहोर्धाऽविप्रकृष्टकाले ।
२१ तत्प्रकृतवचने मयट् ।
२२ समूहवच्च बहुषु ।
२३ अनन्तावसथेतिहभेषजाञ्ञ्यः ।
२४ देवतान्तात्तादर्थ्ये यत् ।१।९

२५ पादार्घाभ्यां च ।
२६ अतिथेर्ञ्यः ।
२७ देवात्तल् ।१।१०
२८ अवेः कः ।
२९ यावादिभ्यः कन् ।
३० लोहितान्मणौ ।१।११
३१ वर्णे चानित्ये ।
३२ रक्ते ।
३३ कालाच्च ।
३४ विनयादिभ्यष्ठक् ।
३५ वाचो व्याहृतार्थायाम् ।
३६ तद्युक्तात्कर्मणोऽण् ।१।१२
३७ ओषधेरजातौ ।
३८ प्रज्ञादिभ्यश्च ।
३९ मृदस्तिकन् ।
४० सस्नौ प्रशंसायाम् ।
४१ वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि ।
४२ बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ।१।१३
४३ संख्यैकवचनाच्च वीप्सायाम् ।
४४ प्रतियोगे पञ्चम्यास्तसिः ।१।१४
४५ अपादाने चाहीयरुहोः ।
४६ अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः ।
४७ हीयमानपापयोगाच्च ।
४८ षष्ठ्या व्याश्रये ।
४९ रोगाच्चापनयने ।
५० (अभूततद्भावे) कृभ्वस्तियोगे संपद्यकर्तरि च्विः ।१।१५
५१ अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च ।
५२ विभाषा साति कार्त्स्न्ये ।
५३ अभिविधौ संपदा च ।
५४ तदधीनवचने ।
५५ देये त्रा च ।
५६ देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् ।
५७ अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच् ।१।१६
५८ कृञो द्वितीयतृतीयशम्बबीजात्कृषौ ।
५९ संख्यायाश्च गुणान्तायाः ।
६० समयाच्च यापनायाम् ।
६१ सपत्रनिष्पत्रादतिव्यथने ।
६२ निष्कुलान्निष्कोषणे ।
६३ सुखप्रियादानुलोम्ये ।
६४ दुःखात्प्रातिलोम्ये ।
६५ शूलात्पाके ।
६६ सत्यादशपथे ।
६७ मद्रात्परिवापणे ।१।१७
६८ **समासान्ताः** ।१।१८
६९ न पूजनात् ।१।१९
७० किमः क्षेपे ।१।२०
७१ नञस्तत्पुरुषात् ।
७२ पथो विभाषा ।
७३ बहुव्रीहौ संख्येये डजबहुगणात् ।१।२१
७४ ऋक्पूरब्धूःपथामानक्षे ।१।२२
७५ अच् प्रत्यन्ववपूर्वात्सामलोम्नः ।
७६ अक्ष्णोऽदर्शनात् ।१।२३
७७ अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिंदिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः ।१।२४
७८ ब्रह्महस्तिभ्यां वर्चसः ।१।२५
७९ अवसमन्धेभ्यस्तमसः ।
८० श्वसो वसीयःश्रेयसः ।
८१ अन्ववतप्ताद्रहसः ।
८२ प्रतेरुरसः सप्तमीस्थात् ।
८३ अनुगवमायामे ।
८४ द्विस्तावा त्रिस्तावा वेदिः ।
८५ उपसर्गादध्वनः ।
८६ **तत्पुरुषस्याङ्गुलेः संख्याऽव्ययादेः ।**
८७ अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ।१।२६
८८ अह्नोऽह्न एतेभ्यः ।१।२७
८९ न संख्यादेः समाहारे ।
९० उत्तमैकाभ्यां च ।
९१ राजाहःसखिभ्यष्टच् ।
९२ गोरतद्धितलुकि ।
९३ अग्राख्यायामुरसः ।
९४ अनोश्मायःसरसां जातिसंज्ञयोः
९५ ग्रामकौटाभ्यां च तक्ष्णः ।
९६ अतेः शुनः ।
९७ उपमानादप्राणिषु ।
९८ उत्तरमृगपूर्वाच्च सक्थ्नः ।
९९ नावो द्विगोः ।
१०० अर्धाच्च ।
१०१ खार्याः प्राचाम् ।
१०२ द्वित्रिभ्यामञ्जलेः ।
१०३ अनसंतान्नपुंसकाच्छन्दसि ।१।२८
१०४ ब्रह्मणो जानपदाख्यायाम् ।
१०५ कुमहद्भ्यामन्यतरस्याम् ।
१०६ द्वन्द्वाच्चुदषहान्तात्समाहारे ।
१०७ **अव्ययीभावे शरत्प्रभृतिभ्यः ।**
१०८ अनश्च ।
१०९ नपुंसकादन्यतरस्याम् ।
११० नदीपौर्णमास्याग्रहायणीभ्यः ।
१११ झयः ।
११२ गिरेश्च सेनकस्य ।
११३ **बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्** ।१।२९
११४ अङ्गुलेर्दारुणि ।
११५ द्वित्रिभ्यां ष मूर्ध्नः ।१।३०
११६ अप्पूरणीप्रमाण्योः ।१।३१
११७ अन्तर्बहिर्भ्यां च लोम्नः ।
११८ अञ्नासिकायाः संज्ञायां नसं चास्थूलात् ।१।३२
११९ उपसर्गाच्च ।१।३३
१२० सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः ।
१२१ नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् ।
१२२ नित्यमसिच्प्रजामेधयोः ।
१२३ बहुप्रजाश्छन्दसि ।
१२४ धर्मादनिच्केवलात् ।
१२५ जम्भासुहरिततृणसोमेभ्यः ।
१२६ दक्षिणेर्मा लुब्धयोगे ।
१२७ इच्कर्मव्यतिहारे ।
१२८ द्विदण्ड्यादिभ्यश्च ।
१२९ प्रसंभ्यां जानुनोर्ज्ञुः ।
१३० ऊर्ध्वाद्विभाषा ।
१३१ ऊधसोऽनङ् ।१।३४

१ 'अभूततद्भावे' इति वार्तिकमेव सूत्रे योजितम् ॥

१३२ धनुषश्च ।
१३३ वा संज्ञायाम् ।
१३४ जायाया निङ् ।
१३५ गन्धस्येदुत्पूतिसुसुरभिभ्यः । १।३५
१३६ अल्पाख्यायाम् ।
१३७ उपमानाच्च ।
१३८ पादस्य लोपोऽहस्त्यादिभ्यः ।
१३९ कुम्भपदीषु च ।
१४० संख्यासुपूर्वस्य ।
१४१ वयसि दन्तस्य दतृ ।
१४२ छन्दसि च ।
१४३ स्त्रियां संज्ञायाम् ।
१४४ विभाषा श्यावारोकाभ्याम् ।
१४५ अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च ।
१४६ ककुदस्यावस्थायां लोपः ।
१४७ त्रिककुत्पर्वते ।
१४८ उद्विभ्यां काकुदस्य ।
१४९ पूर्णाद्विभाषा ।
१५० सुहृद्दुर्हृदौ मित्रामित्रयोः ।
१५१ उरःप्रभृतिभ्यः कप् ।१।३४
१५२ इनः स्त्रियाम् ।
१५३ नद्यृतश्च ।
१५४ शेषाद्विभाषा ।१।३५
१५५ न संज्ञायाम् ।
१५६ ईयसश्च ।१।३६
१५७ वन्दिते भ्रातुः ।
१५८ ऋतश्छन्दसि ।
१५९ नाडीतन्त्र्योः स्वाङ्गे ।
१६० निष्प्रवाणिश्च ।
"पादशतस्य तत्प्रकृतत्रककुज्येष्ठाभ्यां सपत्नान्ववतप्रात्खार्या नद्दुःसुभ्यो वयसि विंशतिः" ॥

---

## अथ षष्ठोऽध्यायः ।

### प्रथमः पादः ६।१

१ एकाचो द्वे प्रथमस्य ।१।१
२ अजादेर्द्वितीयस्य ।१।२
३ न न्द्राः संयोगादयः ।१।३
४ पूर्वोऽभ्यासः ।१।४
५ उभे अभ्यस्तम् ।१।५
६ जक्षित्यादयः षट् ।१।६
७ तुजादीनां दीर्घोऽभ्यासस्य ।१।७
८ लिटि धातोरनभ्यासस्य ।१।८
९ सन्यङोः ।१।९
१० श्लौ ।
११ चङि ।
१२ दाश्वान्साह्वान्मीढ्वांश्च ।१।१०
१३ ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे ।२।१
१४ बन्धुनि बहुव्रीहौ ।२।२
१५ वचिस्वपियजादीनां किति ।
१६ ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ।२।३
१७ लिट्यभ्यासस्योभयेषाम् ।२।४
१८ स्वापेश्चङि ।२।५
१९ स्वपिस्यमिव्येञां यङि ।
२० न वशः ।२।६
२१ चायः की ।
२२ स्फायः स्फी निष्ठायाम् ।
२३ स्त्यः प्रपूर्वस्य ।
२४ द्रवमूर्तिस्पर्शयोः श्यः ।
२५ प्रतेश्च ।
२६ विभाषाऽभ्यवपूर्वस्य ।
२७ शृतं पाके ।२।७
२८ प्यायः पी ।२।८
२९ लिड्यङोश्च ।
३० विभाषा श्वेः ।२।९
३१ णौ च संश्चङोः ।
३२ ह्वः संप्रसारणम् ।२।१०
३३ अभ्यस्तस्य च ।२।१०[१]
३४ बहुलं छन्दसि ।
३५ चायः की ।
३६ अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताः श्रितमाशीराशीर्ताः ।२।११
३७ न संप्रसारणे संप्रसारणम् ।२।१२
३८ लिटि वयो यः
३९ वश्चास्यान्यतरस्यां किति ।२।१३
४० वेञः ।
४१ ल्यपि च ।
४२ ज्यश्च ।
४३ व्यश्च ।
४४ विभाषा परेः ।
४५ आदेच उपदेशेऽशिति ।३।१
४६ न व्यो लिटि ।
४७ स्फुरतिस्फुलत्योर्घञि ।
४८ क्रीङ्जीनां णौ ।३।२
४९ सिध्यतेरपारलौकिके ।३।३
५० मीनातिमिनोतिदीङां ल्यपि च ३।४
५१ विभाषा लीयतेः ।३।५
५२ खिदेश्छन्दसि ।
५३ अपगुरो णमुलि ।
५४ चिस्फुरोर्णौ ।
५५ प्रजने वीयतेः ।
५६ बिभेतेर्हेतुभये ।३।६
५७ नित्यं स्मयतेः ।
५८ सृजिदृशोर्झल्यमकिति ।३।७
५९ अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ।
६० शीर्षश्छन्दसि ।३।८
६१ ये च तद्धिते ।३।९
( अचि शीर्षः । )[२]
६२ पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु । ३।१०
६३ धात्वादेः षः सः ।३।११
६४ णो नः ।३।१२
६५ लोपो व्योर्वलि ।३।१३
६६ वेरपृक्तस्य ।३।१४
६७ हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ।३।१५
६८ एङ्ह्रस्वात्संबुद्धेः ।३।१६
६९ शेश्छन्दसि बहुलम् ।३।१७
७० ह्रस्वस्य पिति कृति तुक् ।३।१८
७१ संहितायाम् ।३।१९
७२ छे च ।
७३ आङ्माङोश्च ।३।२०
७४ दीर्घात् ।
७५ पदान्ताद्वा ।३।२१
७६ इको यणचि ।३।२२
७७ एचोऽयवायावः ।
७८ वान्तो यि प्रत्यये ।३।२३
७९ धातोस्तन्निमित्तस्यैव ।३।२४
८० क्षय्यजय्यौ शक्यार्थे ।
८१ क्रय्यस्तदर्थे ।३।२५
८२ भय्यप्रवय्ये च च्छन्दसि ।३।२६
८३ एकः पूर्वपरयोः ।४।१
८४ अन्तादिवच्च ।४।२

---

१ 'ह्वः संप्रसारणमभ्यस्तस्य च' इति सूत्रस्य योगविभागो भाष्ये ॥ २ वार्तिकमेतद्, न तु सूत्रम् । प्राचीनपाठेऽस्य सूत्रत्वेन निर्देशादत्र प्रदर्शनमात्रं कृतम् ॥

८५ षत्वतुकोरसिद्धः ।४।३
८६ आद्गुणः ।४।४
८७ वृद्धिरेचि ।
८८ एत्येधत्यूठ्सु ।४।५
८९ आटश्च ।४।६
९० उपसर्गादृति धातौ ।४।७
९१ वा सुप्यापिशलेः ।
९२ औतोम्शसोः ।४।८
९३ **एङि पररूपम्** ।४।९
९४ ओमाङोश्च ।४।१०
९५ उस्यपदान्तात् ।४।११
९६ अतो गुणे ।
९७ अव्यक्तानुकरणस्यात इतौ ।४।१२
९८ नाम्रेडितस्यान्त्यस्य तु वा ।४।१३
( नित्यमाम्रेडिते डाचि )
९९ अकः सवर्णे दीर्घः ।४।१४
१०० प्रथमयोः पूर्वसवर्णः ।५।१
१०१ तस्माच्छसो नः पुंसि ।५।२
१०२ नादिचि ।
१०३ दीर्घाज्जसि च ।
१०४ वा छन्दसि ।
१०५ **अमि पूर्वः** ।५।३
१०६ संप्रसारणाच्च ।५।४
१०७ एङः पदान्तादति ।
१०८ ङसिङसोश्च ।
१०९ ऋत उत् ।
११० ख्यत्यात्परस्य ।५।५
१११ अतो रोरप्लुतादप्लुते ।५।६
११२ हशि च ।
११३ **प्रकृत्यान्तःपादमव्यपरे**[2] ।५।७
११४ अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च ।
११५ यजुष्युरः ।
११६ आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बालेऽम्बिके पूर्वे ।
११७ अङ्ग इत्यादौ च ।
११८ अनुदात्ते च कुधपरे ।
११९ अवपथासि च ।
१२० सर्वत्र विभाषा गोः ।
१२१ अवङ् स्फोटायनस्य ।५।८
१२२ इन्द्रे च ।५।९
१२३ प्लुतप्रगृह्या अचि नित्यम् ।५।१०
१२४ आङोऽनुनासिकश्छन्दसि ।५।११
१२५ इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ।५।१२
१२६ ऋत्यकः ।५।१३
१२७ अप्लुतवदुपस्थिते ।५।१४
१२८ ई ३ चाक्रवर्मणस्य ।५।१५
१२९ दिव उत् ।५।१६
१३० एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ।
१३१ स्यश्छन्दसि बहुलम् ।
१३२ सोऽचि लोपे चेत्पादपूरणम् ।
१३३ सुट्कात्पूर्वः ।५।१७
(ॐ[3] इत्यस्याव्यवायेऽपि ।)
१३४ संपरिभ्यां करोतौ भूषणे ।
१३५ समवाये च ।
१३६ उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु ।
१३७ किरतौ लवने ।
१३८ हिंसायां प्रतेश्च ।
१३९ अपाच्चतुष्पाच्छकुनिष्वालेखने ।५।१८
१४० कुस्तुम्बुरूणि जातिः ।
१४१ अपरस्पराः क्रियासातत्ये ।५।१९
१४२ गोष्पदं सेवितासेवितप्रमाणेषु ।५।२०
१४३ आस्पदं प्रतिष्ठायाम् ।
१४४ आश्चर्यमनित्ये ।५।२२
१४५ वर्चस्केऽवस्करः ।
१४६ अपस्करो रथाङ्गम् ।
१४७ विष्किरः शकुनौ वा ।५।२१
१४८ ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे ।
१४९ प्रतिष्कशश्च कशेः ।
१५० प्रस्कण्वहरिश्चन्द्रावृषी ।
१५१ मस्करमस्करिणौ वेणुपरिव्राजकयोः ।५।२३
१५२ कास्तीराजस्तुन्दे नगरे ।
१५३ कारस्[4]करो वृक्षः ।
१५४ पारस्करप्रभृतीनि च संज्ञायाम् ।५।२४
१५५ **अनुदात्तं पदमेकवर्जम्** ।६।१
१५६ कर्षात्वतो घञोऽन्त **उदात्तः** ।६।२
१५७ उञ्छादीनां च ।
१५८ अनुदात्तस्य च यत्रोदात्तलोपः ।६।३
१५९ धातोः ।६।४
१६० चितः ।६।५
१६१ तद्धितस्य ।
१६२ कितः ।
१६३ तिसृभ्यो जसः ।६।६
१६४ चतुरः शसि ।६।७
१६५ सावेकाचस्तृतीयादिर्विभक्तिः ।६।८
१६६ अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे ।६।९
१६७ अञ्चेश्छन्दस्यसर्वनामस्थानम् ।
१६८ ऊडिदंपदाद्यप्पुम्रैद्युभ्यः ।६।१०
१६९ अष्टनो दीर्घात् ।६।११
१७० शतुरनुमो नद्यजादी ।६।१२
१७१ उदात्तयणो हल्पूर्वात् ।६।१३
१७२ नोङ्धात्वोः ।
१७३ ह्रस्वनुड्भ्यां मतुप् ।६।१४
१७४ नामन्यतरस्याम् ।६।१५
१७५ ङ्याश्छन्दसि बहुलम् ।
१७६ षट्त्रिचतुर्भ्यो हलादिः ।
१७७ झल्युपोत्तमम् ।
१७८ विभाषा भाषायाम् ।
१७९ न गोश्वन्त्साववर्णराडङ्क्रुङ्कृद्भ्यः ।६।१६
१८० दिवो झल् ।
१८१ नृ चान्यतरस्याम् ।
१८२ तित्स्वरितम् ।६।१७
१८३ तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमन्ह्विङोः ।६।१७
१८४ **आदिः** सिचोऽन्यतरस्याम् ।६।१८
१८५ स्वपादिहिंसामच्यनिटि ।६।१९
१८६ अभ्यस्तानामादिः ।
१८७ अनुदात्ते च ।६।२०
१८८ सर्वस्य सुपि ।६।२१
१८९ भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति ।६।२२
१९० लिति ।
१९१ आदिर्णमुल्यन्यतरस्याम् ।
१९२ अचः कर्तृयकि ।६।२३
१९३ थलि च सेटीडन्तो वा ।६।२४

१ वार्तिकमेतत् । प्राचीनपाठेऽस्य सूत्रत्वेन निर्देशादत्र प्रदर्शनमात्रम् । २ 'नान्तःपादम्' इति पाठः । ३ एतदपि वार्तिकमेव । प्राचीनपाठानुरोधेनास्योल्लेखः । ४ कस्कादिगणसूत्रमेतदिति केचित् ।

१९४ ञ्नित्यादिर्नित्यम् ।
१९५ आमन्त्रितस्य च ।
१९६ पथिमथोः सर्वनामस्थाने ।
१९७ अन्तश्च तवै युगपत् ।
१९८ क्षयो निवासे ।
१९९ जयः करणम् ।
२०० वृषादीनां च ।
२०१ संज्ञायामुपमानम् ।६।२५
२०२ निष्ठा च द्व्यजनात् ।६।२६
२०३ शुष्कधृष्टौ ।
२०४ आशितः कर्ता ।६।२७
२०५ रिक्ते विभाषा ।६।२८
२०६ जुष्टार्पिते च च्छन्दसि ।
२०७ नित्यं मन्त्रे ।
२०८ युष्मदस्मदोर्ङसि ।
२०९ ङयि च ।
२१० यतोऽनावः ।
२११ ईडवन्दवृशंसदुहां ण्यतः ।
२१२ विभाषा वेण्विन्धानयोः ।६।२८
२१३ त्यागरागहासकुहश्वठक्रथानाम् ।
२१४ उपोत्तमं रिति ।६।२९
२१५ चङ्यन्यतरस्याम् ।
२१६ मतोः पूर्वमात्संज्ञायां स्त्रियाम् ।
२१७ अन्तोऽवत्याः ।
२१८ ईवत्याः ।६।३०
२१९ चौ ।६।३१
२२० समासस्य ।६।३२

"एकाचश्चायोल्यपि च ये च कृत्य-स्तस्माच्छसोऽवट्स्फोटायनस्यापरस्प-रात्तद्धितस्य तृच संज्ञायां विंशतिः" ॥

## द्वितीयः पादः ६।२

१ बहुव्रीहौ प्रकृत्या पूर्वपदम् ।१।१
२ तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ।१।२
३ वर्णो वर्णेष्वनेते ।
४ गाधलवणयोः प्रमाणे ।
५ दायाद्यं दायादे ।
६ प्रतिबन्धि चिरकृच्छ्रयोः ।
७ पदेऽपदेशे ।
८ निवाते वातत्राणे ।
९ शारदेऽनार्तवे ।
१० अध्वर्युकषाययोर्जातौ ।
११ सदृशप्रतिरूपयोः सादृश्ये ।१।३
१२ द्विगौ प्रमाणे ।
१३ गन्तव्यपण्यं वाणिजे ।
१४ मात्रोपज्ञोपक्रमच्छाये नपुंसके ।
१५ सुखप्रिययोर्हिते ।
१६ प्रीतौ च ।
१७ स्वं स्वामिनि ।
१८ पत्यावैश्वर्ये ।
१९ न भूवाक्चिद्दिधिषु ।
२० वा भुवनम् ।
२१ आशङ्काबाधनेदीयस्सु संभावने ।
२२ पूर्वे भूतपूर्वे ।
२३ सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये ।
२४ विस्पष्टादीनि गुणवचनेषु ।
२५ श्रज्यावमकन्पापवत्सु भावे कर्मधारये ।
२६ कुमारश्च ।
२७ आदिः प्रत्येनसि ।
२८ पूगेष्वन्यतरस्याम् ।
२९ इगन्तकालकपालभगालशरावेषु द्विगौ ।१।४
३० बह्वन्यतरस्याम् ।
३१ दिष्टिवितस्त्योश्च ।
३२ सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात् ।
३३ परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु ।१।५
३४ राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु ।
३५ संख्या ।
३६ आचार्योपसर्जनश्चान्तेवासी ।१।६
३७ कार्तकौजपादयश्च ।
३८ महान्व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु ।१।७
३९ क्षुल्लकश्च वैश्वदेवे ।
४० उष्ट्रः सादिवाम्योः ।
४१ गौः सादसादिसारथिषु ।
४२ कुरुगार्हपत रिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बलो दासीभाराणां च ।१।८
४३ चतुर्थी तदर्थे ।
४४ अर्थे ।
४५ क्ते च ।
४६ कर्मधारयेऽनिष्ठा ।
४७ अहीने द्वितीया ।१।९
४८ तृतीया कर्मणि ।
४९ गतिरनन्तरः ।१।१०
५० तादौ च निति कृत्यतौ ।१।११
५१ तवै चान्तश्च युगपत् ।
५२ अनिगन्तोऽञ्चतौ वप्रत्यये ।१।१२
५३ न्यधी च ।
५४ ईषदन्यतरस्याम् ।
५५ हिरण्यपरिमाणं धने ।
५६ प्रथमोऽचिरोपसंपत्तौ ।
५७ कतरकतमौ कर्मधारये ।
५८ आर्यो ब्राह्मणकुमारयोः ।
५९ राजा च ।
६० षष्ठी प्रत्येनसि ।
६१ क्ते नित्यार्थे ।
६२ ग्रामः शिल्पिनि ।
६३ राजा च प्रशंसायाम् ।
६४ आदिरुदात्तः ।
६५ सप्तमी हारिणौ धर्म्येऽहरणे ।
६६ युक्ते च ।
६७ विभाषाऽध्यक्षे ।
६८ पापं च शिल्पिनि ।
६९ गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे ।
७० अङ्गानि मैरेये ।
७१ भक्ताख्यास्तदर्थेषु ।
७२ गोबिडालसिंहसैन्धवेषूपमाने ।
७३ अके जीविकार्थे ।
७४ प्राचां क्रीडायाम् ।
७५ अणि नियुक्ते ।
७६ शिल्पिनि चाकृञः ।
७७ संज्ञायां च ।
७८ गोतन्तियवं पाले ।
७९ णिनि ।
८० उपमानं शब्दार्थप्रकृतावेव ।१।१३
८१ युक्तारोह्यादयश्च ।
८२ दीर्घकाशतुषभ्राष्ट्रवटं जे ।१।१४
८३ अन्त्यात्पूर्वं बह्वचः ।
८४ ग्रामेऽनिवसन्तः ।
८५ घोषादिषु च ।
८६ छात्र्यादयः शालायाम् ।
८७ प्रस्थेऽवृद्धमकर्क्यादीनाम् ।
८८ मालादीनां च ।

८९ अमहन्नवं नगरेऽनुदीचाम् ।
९० अर्मे चावर्णं द्व्यच्त्र्यच् ।
९१ न भूताधिकसंजीवमद्राश्मकज्जलम् ।१।१५
९२ अन्तः ।१।१६
९३ सर्वं गुणकार्त्स्न्ये ।१।१६
९४ संज्ञायां गिरिनिकाययोः ।
९५ कुमार्यां वयसि ।
९६ उदकेऽकेवले ।
९७ द्विगौ क्रतौ ।
९८ सभायां नपुंसके ।
९९ पुरे प्राचाम् ।
१०० अरिष्टगौडपूर्वे च ।
१०१ न हास्तिनफलकमार्देयाः ।
१०२ कुसूलकूपकुम्भशालं बिले ।
१०३ दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु ।
१०४ आचार्योपसर्जनश्चान्तेवासिनि ।
१०५ उत्तरपदवृद्धौ सर्वं च ।१।१७
१०६ बहुव्रीहौ विश्वं संज्ञायाम् ।१।१८
१०७ उदराश्वेषुषु ।
१०८ क्षेपे । } १।१९
१०९ नदी बन्धुनि ।
११० निष्ठोपसर्गपूर्वमन्यतरस्याम् ।
१११ उत्तरपदादिः ।
११२ कर्णो वर्णलक्षणात् ।
११३ संज्ञौपम्ययोश्च ।
११४ कण्ठपृष्ठग्रीवाजङ्घं च ।
११५ शृङ्गमवस्थायां च ।
११६ नञो जरमरमित्रमृताः ।
११७ सोर्मनसी अलोमोषसी ।१।२०
११८ क्रत्वादयश्च ।
११९ आद्युदात्तं द्व्यच्छन्दसि ।
१२० वीरवीर्यौ च ।
१२१ कूलतीरतूलमूलशालाक्षसममव्ययीभावे १।२१
१२२ कंसमन्थशूर्पपाय्यकाण्डं द्विगौ ।
१२३ तत्पुरुषे शालायां नपुंसके ।
१२४ कन्था च ।
१२५ आदिश्चिहणादीनाम् ।
१२६ चेलखेटकटुककाण्डं गर्हायाम् ।१।२२
१२७ चीरमुपमानम् ।
१२८ पललसूपशाकं मिश्रे ।
१२९ कूलसूदस्थलकर्षाः संज्ञायाम् ।
१३० अकर्मधारये राज्यम् ।
१३१ वर्ग्यादयश्च ।
१३२ पुत्रः पुम्भ्यः ।
१३३ नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः ।
१३४ चूर्णादीन्यप्राणिषष्ठ्याः ।
१३५ षट् च काण्डादीनि ।
१३६ कुण्डं वनम् ।
१३७ प्रकृत्या भगालम् ।
१३८ शितेर्नित्याबह्वज्बहुव्रीहावभसत् ।
१३९ गतिकारकोपपदात्कृत् ।२।१
१४० उभे वनस्पत्यादिषु युगपत् ।
१४१ देवताद्वन्द्वे च ।
१४२ नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु ।
१४३ अन्तः ।२।२
१४४ थाथघञ्क्ताजबित्रकाणाम् ।
१४५ सूपमानात् क्तः ।
१४६ संज्ञायामनाचितादीनाम् ।
१४७ प्रवृद्धादीनां च ।
१४८ कारकाद्दत्तश्रुतयोरेवाशिषि ।२।३
१४९ इत्थंभूतेन कृतमिति च ।
१५० अनोभावकर्मवचनः ।
१५१ मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः ।
१५२ सप्तम्याः पुण्यम् ।
१५३ ऊनार्थकलहं तृतीयायाः ।
१५४ मिश्रं चानुपसर्गमसंधौ ।
१५५ नञो गुणप्रतिषेधे संपाद्यर्हहितालमर्थास्तद्धिताः ।
१५६ ययतोश्चातदर्थे ।
१५७ अच्कावशक्तौ ।
१५८ आक्रोशे च ।
१५९ संज्ञायाम् ।२।४
१६० कृत्योकेष्णुच्चार्वादयश्च ।
१६१ विभाषा तृन्नन्नतीक्ष्णशुचिषु ।
१६२ बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने ।
१६३ संख्यायाः स्तनः ।
१६४ विभाषा छन्दसि ।
१६५ संज्ञायां मित्राजिनयोः ।
१६६ व्यवायिनोऽन्तरम् ।
१६७ मुखं स्वाङ्गम् ।
१६८ नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः ।
१६९ निष्ठोपमानादन्यतरस्याम् ।
१७० जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः ।
१७१ वा जाते ।
१७२ नञ्सुभ्याम् ।
१७३ कपि पूर्वम् ।
१७४ ह्रस्वान्तेऽन्त्यात्पूर्वम् ।
१७५ बहोर्नञ्वदुत्तरपदभूम्नि ।२।५
१७६ न गुणादयोऽवयवाः ।
१७७ उपसर्गात्स्वाङ्गं ध्रुवमपर्शु ।२।६
१७८ वनं समासे ।
१७९ अन्तः ।
१८० अन्तश्च ।
१८१ न निविभ्याम् ।
१८२ परेरभितोभावि मण्डलम् ।
१८३ प्रादस्वाङ्गं संज्ञायाम् ।
१८४ निरुदकादीनि च ।
१८५ अभेर्मुखम् ।
१८६ अपाच्च । } २।७
१८७ स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनामनाम च ।२।८
१८८ अधेरुपरिस्थम् ।
१८९ अनोरप्रधानकनीयसी ।
१९० पुरुषश्चान्वादिष्टः ।
१९१ अतेरकृत्पदे ।२।९
१९२ नेरनिधाने ।
१९३ प्रतेरंश्वादयस्तत्पुरुषे ।
१९४ उपाद्द्व्यजजिनमगौरादयः ।
१९५ सोरवक्षेपणे ।
१९६ विभाषोत्पुच्छे ।
१९७ द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ।२।१०
१९८ सक्थं चाक्रान्तात् ।
१९९ परादिश्छन्दसि बहुलम् । २।११

"बहुव्रीहावाशङ्कागौःसादवते नित्यार्थे युक्ता नहास्तिन कूलतीर देवता विभाषा न निव्येकोनविंशतिः" ॥

---

### तृतीयः पादः ६।३

१ अलुगुत्तरपदे ।१।१
२ पञ्चम्याः स्तोकादिभ्यः ।१।२
३ ओजःसहोम्भस्तमसस्तृतीयायाः ।१।३
४ मनसः संज्ञायाम् ।

५ आज्ञायिनि च ।१।१४
६ आत्मनश्च पूरणे ( वार्तिकम् ) ।
७ वैयाकरणाख्यायां चतुर्थ्याः । १।५
८ परस्य च ।१।५
९ हलदन्तात्सप्तम्याः संज्ञायाम् ।१।६
१० कारनाम्नि च प्राचां हलादौ ।१।७
११ मध्याद्गुरौ ।१।८
१२ अमूर्धमस्तकात्स्वाङ्गादकामे ।
१३ बन्धे च विभाषा ।१।९
१४ तत्पुरुषे कृति बहुलम् ।१।१०
१५ प्रावृट्शरत्कालदिवां जे ।
१६ विभाषा वर्षक्षरशरवरात् ।
१७ घकालतनेषु कालनाम्नः ।
१८ शयवासवासिष्वकालात् ।
१९ नेन्सिद्धबध्नातिषु च ।
२० स्थे च भाषायाम् ।
२१ षष्ठ्या आक्रोशे ।१।११
२२ पुत्रेऽन्यतरस्याम् ।
२३ ऋतो विद्यायोनिसंबन्धेभ्यः ।
२४ विभाषा स्वसृपत्योः ।
२५ आनङृतो द्वन्द्वे ।१।१३
२६ देवताद्वन्द्वे च ।१।१४
२७ ईदग्नेः सोमवरुणयोः ।
२८ इद्वृद्धौ ।१।१५
२९ दिवो द्यावा ।
३० दिवसश्च पृथिव्याम् ।
३१ उषासोषसः ।
३२ मातरपितरावुदीचाम् ।१।१५
३३ पितरामातरा च च्छन्दसि ।१।१६
३४ स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणी-प्रियादिषु ।२।१
३५ तसिलादिष्वाकृत्वसुचः ।२।२
३६ क्यङ्मानिनोश्च ।२।३
३७ न कोपधायाः ।२।४
३८ संज्ञापूरण्योश्च ।
३९ वृद्धिनिमित्तस्य च तद्धितस्यार-क्तविकारे ।
४० स्वाङ्गाच्चेतः ।२।५
४१ जातेश्च ।
४२ पुंवत्कर्मधारयजातीयदेशीयेषु । २।६
४३ घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ।२।७
४४ नद्याः शेषस्यान्यतरस्याम् ।
४५ उगितश्च ।
४६ आन्महतः समानाधिकरणजा-तीययोः ।३।१
४७ द्व्यष्टनः संख्यायामबहुव्रीह्य-शीत्योः ।३।२
४८ त्रेस्त्रयः ।
४९ विभाषा चत्वारिंशत्प्रभृतौ सर्वे-षाम् ।३।३
५० हृदयस्य हृल्लेखयदण्लासेषु ।
५१ वा शोकष्यञ्रोगेषु ।३।४
५२ पादस्य पदाज्यातिगोपहतेषु । ३।५
५३ पद्यत्यतदर्थे ।३।६
५४ हिमकाषिहतिषु च ।
५५ ऋचः शे ।
५६ वा घोषमिश्रशब्देषु ।३।७
५७ उदकस्योदः संज्ञायाम् ।३।८
५८ पेषंवासवाहनधिषु च ।
५९ एकहलादौ पूरयितव्येऽन्यतर-स्याम् ।३।९
६० मन्थौदनसक्तुबिन्दुवज्रभारहार-वीवधगाहेषु च ।
६१ इको ह्रस्वोऽङ्यो गालवस्य ।३।१०
६२ एकतद्धिते च ।३।११
६३ ङ्यापोः संज्ञाछन्दसोर्बहुलम् ।
६४ त्वे च ।
६५ इष्टकेषीकामालानां चिततूलभा-रिषु ।
६६ खित्यनव्ययस्य ।३।१२
६७ अरुर्द्विषदजन्तस्य मुम् ।
६८ इच एकाचोऽम्प्रत्ययवच्च ।३।१३
६९ वाचंयमपुरंदरौ च ।
७० कारे सत्यागदस्य ।३।१४
७१ श्येनतिलस्य पाते ञे ।
७२ रात्रेः कृति विभाषा ।३।१५
७३ नलोपो नञः ।३।१६
७४ तस्मान्नुडचि ।३।१७
७५ नभ्राण्नपान्नवेदानासत्यानमुचि-नकुलनखनपुंसकनक्षत्रनक्रना-केषु प्रकृत्या ।
७६ एकादिश्चैकस्य चादुक् ।३।१८
७७ नगोऽप्राणिष्वन्यतरस्याम् ।
७८ सहस्य सः संज्ञायाम् ।३।१९
७९ ग्रन्थान्ताधिके च ।३।२०
८० द्वितीये चानुपाख्ये ।
८१ अव्ययीभावे चाकाले ।
८२ वोपसर्जनस्य ।३।२१
८३ प्रकृत्याशिषि(अगोवत्सहलेषु) ।
८४ समानस्य च्छन्दस्यमूर्धप्रभृत्यु-दर्केषु ।
८५ ज्योतिर्जनपदरात्रिनाभिनामगो-त्ररूपस्थानवर्णवयोवचनबन्धुषु ।
८६ चरणे ब्रह्मचारिणि ।३।२२
८७ तीर्थे ये ।
८८ विभाषोदरे ।
८९ दृग्दृशवतुषु ।३।२३
९० इदंकिमोरीश्की ।
९१ आ सर्वनाम्नः ।
९२ विष्वग्देवयोश्च टेरद्र्यञ्चतावप्र-त्यये ।३।२५
९३ समः समि ।३।२५
९४ तिरसस्तिर्यलोपे ।
९५ सहस्य सध्रिः ।३।२४
९६ सध मादस्थयोश्छन्दसि ।
९७ द्व्यन्तरुपसर्गेभ्योऽप ईत् ।३।२५
९८ ऊदनोर्देशे ।३।२६
९९ अषष्ठ्यतृतीयास्थस्यान्यस्य दुगा-शीराशास्थास्थितोत्सुकोतिकार-करागच्छेषु ।३।२७
१०० अर्थे विभाषा ।

१ 'पूरणे' इति वार्तिकमिति दीक्षितादीनामाशयः । 'आत्मनश्च पूरणे' इति समग्रमेव वार्तिकमिति नागेशाशयः ॥ २ 'स्वाङ्गाच्चेतोऽमानिनि' इति वैदिकपाठः । तत्र 'अमानिनि' इति वार्तिकम् ॥ ३ 'प्रकृत्याशिषि' इत्येतावदेव सूत्रम् 'अगोवत्सहलेषु' इति वार्तिकोंऽशः ॥ ४ 'समः समि' इत्यस्य प्रतीकधारणं भाष्ये 'विष्वग्देवयोः' इति सूत्रव्याख्यानतः प्रागेव लभ्यते । तत्र कारणं न जानीम इति दाधिमथः ।

१०१ कोः कत्तत्पुरुषेऽचि ।३।२८
१०२ रथवदयोश्च ।
१०३ तृणे च जातौ ।
१०४ का पथ्यक्षयोः ।
१०५ ईषदर्थे ।
१०६ विभाषा पुरुषे ।
१०७ कवं चोष्णे ।
१०८ पथि च च्छन्दसि ।
१०९ पृषोदरादीनि यथोपदिष्टम् ।३।२९
११० संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ ।
१११ ढ्रलोपे पूर्वस्य दीर्घोऽणः ।३।३०
११२ सहिवहोरोदवर्णस्य ।३।३१
११३ साढ्यै साढ्वा साढेति निगमे ।
११४ संहितायाम् ।
११५ कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य ।
११६ नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ।३।२५
११७ वनगिर्योः संज्ञायां कोटरकिंशुलुकादीनाम् ।
११८ वले ।
११९ मतौ बह्वचोऽनजिरादीनाम् ।
१२० शरादीनां च ।
१२१ इको वहेऽपीलोः ।३।३२
१२२ उपसर्गस्य घञ्यमनुष्ये बहुलम् ।३।३३
१२३ इकः काशे ।
१२४ दस्ति ।३।३४
१२५ अष्टनः संज्ञायाम् ।
१२६ छन्दसि च ।
१२७ चितेः कपि ।
१२८ विश्वस्य वसुराटोः ।
१२९ नरे संज्ञायाम् ।
१३० मित्रे चर्षौ ।
१३१ मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ ।
१३२ ओषधेश्च विभक्तावप्रथमायाम् ।
१३३ ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ।
१३४ इकः सुञि ।
१३५ द्व्यचोऽतस्तिङः ।
१३६ निपातस्य च ।
१३७ अन्येषामपि दृश्यते ।
१३८ चौ ।३।३५
१३९ संप्रसारणस्य ।३।३६

"अलुङ्ग्रन्था जातेरिकोऽव्ययीभावे कोः कत्तदिको वहे एकोनविंशतिः" ॥

---

## चतुर्थः पादः ६।४

१ अङ्गस्य ।१।१
२ हलः ।१।२
३ नामि ।१।३
४ न तिसृचतसृ ।
५ छन्दस्युभयथा ।
६ नृ च ।
७ नोपधायाः ।
८ सर्वनामस्थाने चासंबुद्धौ ।
९ वा षपूर्वस्य निगमे ।
१० सान्तमहतः संयोगस्य ।
११ अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् ।
१२ इन्हन्पूषार्यम्णां शौ ।१।४
१३ सौ च ।१।४
१४ अत्वसन्तस्य चाधातोः ।१।५
१५ अनुनासिकस्य क्विझलोः क्ङिति ।
१६ अज्झनगमां सनि ।१।६
१७ तनोतेर्विभाषा ।
१८ क्रमश्च क्त्वि ।
१९ च्छ्वोः शूडनुनासिके च ।१।७
२० ज्वरत्वरस्रिव्यविमवामुपधायाश्च ।
२१ राल्लोपः ।
२२ असिद्धवदत्राभात् ।२।१
२३ श्नान्नलोपः ।२।२
२४ अनिदितां हल उपधायाः क्ङिति ।
२५ दंशसञ्जस्वञ्जां शपि ।
२६ रञ्जेश्च ।
२७ घञि च भावकरणयोः ।
२८ स्यदो जवे ।
२९ अवोदैधोद्मप्रश्रथहिमश्रथाः ।
३० नाञ्चेः पूजायाम् ।
३१ क्त्वि स्कन्दिस्यन्दोः ।
३२ जान्तनशां विभाषा ।
३३ भञ्जेश्च चिणि ।
३४ शास इदङ्हलोः ।२।३
३५ शा हौ ।
३६ हन्तेर्जः ।
३७ अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ।२।४
३८ वा ल्यपि ।
३९ न क्तिचि दीर्घश्च ।
४० गमः क्वौ ।२।५
४१ विड्वनोरनुनासिकस्याऽऽत् ।
४२ जनसनखनां सञ्झलोः ।२।६
४३ ये विभाषा ।
४४ तनोतेर्यकि ।
४५ सनः क्तिचि लोपश्चास्यान्यतरस्याम् ।१।७
४६ आर्धधातुके ।२।८
४७ भ्रस्जो रोपधयो रमन्यतरस्याम् ।२।९
४८ अतो लोपः ।२।१०
४९ यस्य हलः ।२।११
५० क्यस्य विभाषा ।
५१ णेरनिटि ।२।११
५२ निष्ठायां सेटि ।२।१३
५३ जनिता मन्त्रे ।
५४ शमिता यज्ञे ।
५५ अयामन्ताल्वाय्येत्न्विष्णुषु ।२।१४
५६ ल्यपि लघुपूर्वात् ।२।१५
५७ विभाषाऽऽपः ।२।१६
५८ युप्लुवोर्दीर्घश्छन्दसि ।
५९ क्षियः ।
६० निष्ठायामण्यदर्थे ।
६१ वाऽऽक्रोशदैन्ययोः ।
६२ स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ।३।१
६३ दीङो युडचि क्ङिति ।
६४ आतो लोप इटि च ।३।२
६५ ईद्यति ।
६६ घुमास्थागापाजहातिसां हलि ।३।३
६७ एर्लिङि ।
६८ वाऽन्यस्य संयोगादेः ।
६९ न ल्यपि ।
७० मयतेरिदन्यतरस्याम् ।
७१ लुङ्लङ्लृङ्क्ष्वडुदात्तः ।
७२ आडजादीनाम् ।
७३ छन्दस्यपि दृश्यते ।

७४ न माङ्योगे ।३।४
७५ बहुलं छन्दस्यमाङ्योगेऽपि ।
७६ इरयो रे ।
७७ अचि श्नुधातुभ्रुवां य्वोरियङु-वङौ ।३।५
७८ अभ्यासस्यासवर्णे ।
७९ स्त्रियाः ।
८० वाऽम्शसोः ।
८१ इणो यण् ।
८२ एरनेकाचोऽसंयोगपूर्वस्य ।३।६
८३ ओः सुपि ।
८४ वर्षाभ्वश्च ।३।७
८५ न भूसुधियोः ।
८६ छन्दस्युभयथा ।
८७ हुश्नुवोः सार्वधातुके ।३।८
८८ भुवो वुग्लुङ्लिटोः ।
८९ ऊदुपधाया गोहः ३।९
९० दोषो णौ ।३।१०
९१ वा चित्तविरागे ।
९२ मितां ह्रस्वः ।
९३ चिण्णमुलोर्दीर्घोऽन्यतरस्याम् । ३।११
९४ खचि ह्रस्वः ।
९५ ह्लादो निष्ठायाम् ।
९६ छादेर्घेऽद्व्युपसर्गस्य ।३।१२
९७ इस्मन्त्रन्क्विषु च ।
९८ गमहनजनखनघसां लोपः क्ङित्यनङि ।
९९ तनिपत्योश्छन्दसि ।
१०० घसिभसोर्हलि च ।३।१३
१०१ हुझल्भ्यो हेर्धिः ।३।१४
१०२ श्रुशृणुपॄकृवृभ्यश्छन्दसि ।
१०३ अङितश्च ।
१०४ चिणो लुक् ।३।१५
१०५ अतो हेः ।
१०६ उतश्च प्रत्ययादसंयोगपूर्वात् । ३।१६
१०७ लोपश्चास्यान्यतरस्यां म्वोः ।
१०८ नित्यं करोतेः ।
१०९ ये च ।
११० अत उत्सार्वधातुके ।३।१७
१११ श्नसोरल्लोपः ।३।१८
११२ श्नाभ्यस्तयोरातः ।
११३ ई हल्यघोः ।
११४ इद्दरिद्रस्य ।३।१९
११५ भियोऽन्यतरस्याम् ।
११६ जहातेश्च ।
११७ आ च हौ ।
११८ लोपो यि ।
११९ घ्वसोरेद्धावभ्यासलोपश्च ।
१२० अत एकहल्मध्येऽनादेशादेर्लिटि ।३।२०
१२१ थलि च सेटि ।३।२१
१२२ तॄफलभजत्रपश्च
१२३ राधो हिंसायाम् ।३।२२
१२४ वा जॄभ्रमुत्रसाम् ।
१२५ फणां च सप्तानाम् ।
१२६ न शसददवादिगुणानाम् ।
१२७ अर्वणस्त्रसावनञः ।
१२८ मघवा बहुलम् ।३।२३
१२९ भस्य ।४।१
१३० पादः पत् ।
१३१ वसोः संप्रसारणम् ।
१३२ वाह ऊठ् ।४।२
१३३ श्वयुवमघोनामतद्धिते ।४।३
१३४ अल्लोपोऽनः ।
१३५ षपूर्वहन्धृतराज्ञामणि ।४।४
१३६ विभाषा ङिश्योः ।
१३७ न संयोगाद्वमन्तात् ।
१३८ अचः ।
१३९ उद ईत् ।
१४० आतो धातोः ।४।५
१४१ मन्त्रेष्वाङ्यादेरात्मनः ।४।६
१४२ ति विंशतेर्डिति ।४।७
१४३ टेः ।४।८
१४४ नस्तद्धिते ।४।९
१४५ अह्नष्टखोरेव ।
१४६ ओर्गुणः ।
१४७ ढे लोपोऽकद्र्वाः ।
१४८ यस्येति च ।४।१०
१४९ सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ।४।११
१५० हलस्तद्धितस्य ।
१५१ आपत्यस्य च तद्धितेऽनाति ।
१५२ क्यच्व्योश्च ।
१५३ बिल्वकादिभ्यश्छस्य लुक् ।४।१२
१५४ तुरिष्ठेमेयःसु ।४।१३
१५५ टेः ।४।१४
१५६ स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः ।
१५७ प्रियस्थिरस्फिरोरुबहुलगुरुवृद्ध-तृप्रदीर्घवृन्दारकाणां प्रस्थस्फव-र्बंहिगर्वर्षित्रब्द्राघिवृन्दाः ।
१५८ बहोर्लोपो भू च बहोः ।
१५९ इष्ठस्य यिट् च ।४।१५
१६० ज्यादादीयसः ।४।१६
१६१ र ऋतो हलादेर्लघोः ।४।१७
१६२ विभाषर्जोश्छन्दसि ।
१६३ प्रकृत्यैकाच् ।४।१८
१६४ इनण्यनपत्ये ।
१६५ गाथिविदथिकेशिगणिपणिनश्च ।
१६६ संयोगादिश्च ।
१६७ अन् ।
१६८ ये चाभावकर्मणोः ।
१६९ आत्माध्वानौ खे ।
१७० न मपूर्वोऽपत्येऽवर्मणः ।४।१९
१७१ ब्राह्मोऽजातौ ।४।२०
१७२ कार्मस्ताच्छील्ये ।४।२१
१७३ औक्षमनपत्ये ।
१७४ दाण्डिनायनहास्तिनायनाथर्वणि-कजैह्माशिनेयवाशिनायनिभ्रौण-हत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिर-ण्मयानि ।४।२२
१७५ ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिर-ण्ययानि च्छन्दसि ।

"अङ्गस्य राल्लोपो विड्वनोर्वाऽऽक्रोशे-णो हुझल्भ्यस्थलि च मन्त्रेषु र ऋतः पञ्चदश"

---

## सप्तमोऽध्यायः ।

### प्रथमः पादः ७।१

१ युवोरनाकौ ।१।१
२ आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ।१।२
३ झोऽन्तः ।१।३
४ अदभ्यस्तात् ।
५ आत्मनेपदेष्वनतः ।
६ शीङो रुट् ।१।४
७ वेत्तेर्विभाषा ।१।५
८ बहुलं छन्दसि ।१।६
९ अतो भिस ऐस् ।१।६
१० बहुलं छन्दसि ।
११ नेदमदसोरकोः ।१।७
१२ टाङसिङसामिनात्स्याः ।१।८
१३ ङेर्यः ।१।९

१४ सर्वनाम्नः स्मै ।१।१०
१५ ङसिङ्योः स्मात्स्मिनौ ।
१६ पूर्वादिभ्यो नवभ्यो वा ।
१७ जसः शी ।१।११
१८ औङ आपः ।१।१२
१९ नपुंसकाच्च ।
२० जश्शसोः शिः ।१।११
२१ अष्टाभ्य औश् ।१।१३
२२ षड्भ्यो लुक् ।
२३ स्वमोर्नपुंसकात् ।१।१४
२४ अतोऽम् ।
२५ अद्ड्डतरादिभ्यः पञ्चभ्यः ।१।१५
२६ नेतराच्छन्दसि ।१।१६
२७ युष्मदस्मद्भ्यां ङसोऽश् ।१।१७
२८ ङेप्रथमयोरम् ।१।१८
२९ शसो न ।
३० भ्यसो भ्यम् ।१।१९
३१ पञ्चम्या अत् ।
३२ एकवचनस्य च ।
३३ साम आकम् ।१।२०
३४ आत औ णलः ।१।२१
३५ तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् ।
३६ विदेः शतुर्वसुः ।१।२२
३७ समासेऽनञ्पूर्वे क्त्वो ल्यप् ।१।२३
३८ क्त्वाऽपि च्छन्दसि ।
३९ सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ।१।२४
४० अमो मश् ।१।२५
४१ लोपस्त आत्मनेपदेषु ।
४२ ध्वमो ध्वात् ।
४३ यजध्वैनमिति च ।
४४ तस्य तात् ।
४५ तप्तनप्तनथनाश्च ।
४६ इदन्तो मसि ।
४७ क्त्वो यक् ।
४८ इष्ट्वीनमिति च ।
४९ स्नात्व्यादयश्च ।
५० आज्जसेरसुक् ।१।२६
५१ अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ।१।२७
५२ आमि सर्वनाम्नः सुट् ।१।२८
५३ त्रेस्त्रयः ।
५४ ह्रस्वनद्यापो नुट् ।१।२८

५५ षट्चतुर्भ्यश्च ।
५६ श्रीग्रामण्योश्छन्दसि ।१।२९
५७ गोः पादान्ते ।
५८ इदितो नुम्धातोः ।२।१
५९ शे मुचादीनाम् ।२।२
६० मस्जिनशोर्झलि ।
६१ रधिजभोरचि ।
६२ नेट्यलिटि रधेः ।२।३
६३ रभेरशब्लिटोः ।
६४ लभेश्च ।
६५ आङो यि ।२।४
६६ उपात्प्रशंसायाम् ।
६७ उपसर्गात्खल्घञोः ।
६८ न सुदुर्भ्यां केवलाभ्याम् ।२।५
६९ विभाषा चिण्णमुलोः ।२।६
७० उगिदचां सर्वनामस्थानेऽधातोः ।२।७
७१ युजेरसमासे ।
७२ नपुंसकस्य झलचः ।२।८
७३ इकोऽचि विभक्तौ ।२।९
७४ तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ।२।१०
७५ अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ।
७६ छन्दस्यपि दृश्यते ।
७७ ई च द्विवचने ।२।११
७८ नाभ्यस्ताच्छतुः ।२।१२
७९ वा नपुंसकस्य ।
८० आच्छीनद्योर्नुम् ।
८१ शप्श्यनोर्नित्यम् ।२।१३
८२ सावनडुहः ।२।१४
८३ दृक्स्ववःस्वतवसां छन्दसि ।
८४ दिव औत् ।२।१५
८५ पथिमथ्यृभुक्षामात् ।
८६ इतोऽत्सर्वनामस्थाने ।२।१६
८७ थो न्थः ।
८८ भस्य टेर्लोपः ।
८९ पुंसोऽसुङ् ।२।१७
९० गोतो णित् ।२।१८
९१ णलुत्तमो वा ।
९२ सख्युरसंबुद्धौ ।
९३ अनङ् सौ ।
९४ ऋदुशनस्पुरुदंसोऽनेहसां च ।
९५ तृज्वत्क्रोष्टुः ।२।१९
९६ स्त्रियां च ।२।१९

९७ विभाषा तृतीयादिष्वचि ।
९८ चतुरनडुहोरामुदात्तः ।२।२९
९९ अम्संबुद्धौ ।
१०० ऋत इद्धातोः ।
१०१ उपधायाश्च ।
१०२ उदोष्ठ्यपूर्वस्य ।
१०३ बहुलं छन्दसि ।
"युवोरष्टाभ्यो लोपो रधि शप्श्यनोरुपधायास्त्रीणि" ॥

## द्वितीयः पादः ७।२

१ सिचि वृद्धिः परस्मैपदेषु ।१।१
२ अतो ल्रान्तस्य ।१।२
३ वदव्रजहलन्तस्याचः ।१।३
४ नेटि ।
५ ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ।१।४
६ ऊर्णोतेर्विभाषा ।
७ अतो हलादेर्लघोः ।
८ नेड्वशि कृति ।१।५
९ तितुत्रतथसिसुसरकसेषु च ।१।६
१० एकाच उपदेशेऽनुदात्तात् ।१।७
११ श्र्युकः किति ।
१२ सनि ग्रहगुहोश्च ।
१३ कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ।१।८
१४ श्वीदितो निष्ठायाम् ।१।९
१५ यस्य विभाषा ।१।१०
१६ आदितश्च ।
१७ विभाषा भावादिकर्मणोः ।१।११
१८ क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु ।१।१२
१९ धृषिशसी वैयात्ये ।१।१२
२० दृढः स्थूलबलयोः ।१।१४
२१ प्रभौ परिवृढः ।१।१५
२२ कृच्छ्रगहनयोः कषः ।
२३ घुषिरविशब्दने ।१।१६
२४ अर्देः संनिविभ्यः ।
२५ अभेश्चाविदूर्ये ।
२६ णेरध्ययने वृत्तम् ।१।१७
२७ वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ।१।१८
२८ रुष्यमत्वरसंघुषास्वनाम् ।१।१९
२९ हृषेर्लोमसु ।१।२०

३० अपचितश्च ।१।२१
३१ ह्रु ह्वरेश्छन्दसि ।
३२ अपरिह्वृताश्च ।
३३ सोमे ह्वरितः ।
३४ ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ता विशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिवमित्यमितीति च ।
३५ आर्धधातुकस्येड्वलादेः ।१।२२
३६ स्नुक्रमोरनात्मनेपदनिमित्ते ।२।१
३७ ग्रहोऽलिटि दीर्घः ।२।२
३८ वृतो वा ।
३९ न लिङि ।
४० सिचि च परस्मैपदेषु ।
४१ इट् सनि वा ।
४२ लिङ्सिचोरात्मनेपदेषु ।
४३ ऋतश्च संयोगादेः ।
४४ स्वरतिसूतिसूयतिधूञूदितो वा ।२।३
४५ रधादिभ्यश्च ।
४६ निरः कुषः ।
४७ इण्निष्ठायाम् ।२।४
४८ तीषसहलुभरुषरिषः ।२।५
४९ सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ।
५० क्लिशः क्त्वानिष्ठयोः ।
५१ पूङश्च ।
५२ वसतिक्षुधोरिट् ।२।६
५३ अञ्चेः पूजायाम् ।
५४ लुभो विमोहने ।
५५ जॄव्रश्च्योः क्त्वि ।
५६ उदितो वा ।
५७ सेऽसिचि कृतचृतच्छृदतृदनृतः ।
५८ गमेरिट् परस्मैपदेषु ।२।७
५९ न वृद्भ्यश्चतुर्भ्यः ।२।८
६० तासि च क्लृपः ।
६१ अचस्तास्वत्थल्यनिटो नित्यम् ।
६२ उपदेशेऽत्वतः ।२।९
६३ ऋतो भारद्वाजस्य ।२।१०
६४ बभूथाततन्थजगृम्भववर्थेति निगमे ।२।११
६५ विभाषा सृजिदृशोः ।
६६ इडत्त्यर्तिव्ययतीनाम् ।
६७ वस्वेकाजाद्घसाम् ।२।१२
६८ विभाषा गमहनविदविशाम् ।२।१३
६९ सनिंससनिवांसम् ।
७० ऋद्धनोः स्ये ।२।१५
७१ अञ्जेः सिचि ।
७२ स्तुसुधूञ्भ्यः परस्मैपदेषु ।
७३ यमरमनमातां सक्च ।२।१६
७४ स्मिपूङ्रञ्ज्वशां सनि ।
७५ किरश्च पञ्चभ्यः ।
७६ रुदादिभ्यः सार्वधातुके ।
७७ ईशः से ।
७८ ईडजनोर्ध्वे च ।२।१७
७९ लिङः सलोपोऽनन्त्यस्य ।
८० अतो येयः ।२।१८
८१ आतो ङितः ।
८२ आने मुक् ।२।१९
८३ ईदासः ।
८४ अष्टन आ विभक्तौ ।२।२०
८५ रायो हलि ।
८६ **युष्मदस्मदोरनादेशे** ।२।२१
८७ द्वितीयायां च ।
८८ प्रथमायाश्च द्विवचने भाषायाम् ।
८९ योऽचि ।२।२२
९० शेषे लोपः ।२।२३
९१ मपर्यन्तस्य ।२।२४
९२ युवावौ द्विवचने ।
९३ यूयवयौ जसि ।
९४ त्वाहौ सौ ।
९५ तुभ्यमह्यौ ङयि ।
९६ तवममौ ङसि ।
९७ त्वमावेकवचने ।
९८ प्रत्ययोत्तरपदयोश्च ।२।२५
९९ त्रिचतुरोः स्त्रियां तिसृचतसृ ।२।२६
१०० अचि र ऋतः ।२।२७
१०१ जराया जरसन्यतरस्याम् ।२।२८
१०२ त्यदादीनामः ।२।२९
१०३ किमः कः ।
१०४ कु तिहोः ।
१०५ क्वाति ।२।३०
१०६ तदोः सः सावनन्त्ययोः ।२।३१
१०७ अदस औ सुलोपश्च ।२।३२
१०८ इदमो मः ।
१०९ दश्च ।
११० यः सौ ।
१११ इदोऽय् पुंसि ।
११२ अनाप्यकः ।
११३ हलि लोपः ।
११४ मृजेर्वृद्धिः ।२।३३
११५ अचो ञ्णिति ।२।३४
११६ अत उपधायाः ।
११७ तद्धितेष्वचामादेः ।२।३५
११८ किति च ।
"सिचि प्रभाविटसन्यचस्तास्वदातो जराया अष्टादश" ॥

---

## तृतीयः पादः ७।३

१ देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् ।१।१
२ केकयमित्रयुप्रलयानां यादेरियः ।
३ न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ।१।२
४ द्वारादीनां च ।१।३
५ न्यग्रोधस्य च केवलस्य ।
६ न कर्मव्यतिहारे ।
७ स्वागतादीनां च ।
८ श्वादेरिञि ।१।४
९ पदान्तस्यान्यतरस्याम् ।
१० **उत्तरपदस्य** ।१।५
११ अवयवादृतोः ।
१२ सुसर्वार्धाज्जनपदस्य ।
१३ दिशोऽमद्राणाम् ।
१४ प्राचां ग्रामनगराणाम् ।१।६
१५ संख्यायाः संवत्सरसंख्यस्य च ।१।७
१६ वर्षस्याभविष्यति ।
१७ परिमाणान्तस्यासंज्ञाशाणयोः ।
१८ जे प्रोष्ठपदानाम् ।
१९ हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ।
२० अनुशतिकादीनां च ।
२१ देवताद्वन्द्वे च ।
२२ नेन्द्रस्य परस्य ।
२३ दीर्घाच्च वरुणस्य ।
२४ प्राचां नगरान्ते ।
२५ जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम् ।
२६ अर्धात्परिमाणस्य पूर्वस्य तु वा ।
२७ नातः परस्य ।

२८ प्रवाहणस्य ढे ।१।८
२९ तत्प्रत्ययस्य च ।
३० नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम् ।
३१ यथातथयथापुरयोः पर्यायेण ।१।९
३२ हनस्तोऽचिण्णलोः ।१।१०
३३ आतो युक्चिण्कृतोः ।१।११
३४ नोदात्तोपदेशस्य मान्तस्यानाचमेः ।१।१२
३५ जनिवध्योश्च ।
३६ अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ ।
३७ शाच्छासाह्वाव्यावेपां युक् ।१।१३
३८ वो विधूनने जुक् ।
३९ लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने ।
४० भियो हेतुभये षुक् ।
४१ स्फायो वः ।
४२ शदेरगतौ तः ।
४३ रुहः पोऽन्यतरस्याम् ।
४४ प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ।१।१४
४५ न यासयोः ।१।१५
४६ उदीचामातः स्थाने यकपूर्वायाः ।१।१६
४७ भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि ।१।१७
४८ अभाषितपुंस्काच्च ।
४९ आदाचार्याणाम् ।
५० ठस्येकः ।२।१
५१ इसुसुक्तान्तात्कः ।२।२
५२ चजोः कु घिण्यतोः ।
५३ न्यङ्क्वादीनां च ।
५४ हो हन्तेर्ञ्णिन्नेषु ।२।३
५५ अभ्यासाच्च ।२।४
५६ हेरचङि ।२।५
५७ सन्लिटोर्जेः ।२।६
५८ विभाषा चेः ।
५९ न क्वादेः ।२।७
६० अजिव्रज्योश्च ।
६१ भुजन्युब्जौ पाण्युपतापयोः ।२।८
६२ प्रयाजानुयाजौ यज्ञाङ्गे ।
६३ वञ्चेर्गतौ ।
६४ ओक उचः के ।
६५ ण्य आवश्यके ।
६६ यजयाचरुचप्रवचर्चश्च ।२।९
६७ वचोऽशब्दसंज्ञायाम् ।
६८ प्रयोज्यनियोज्यौ शक्यार्थे ।
६९ भोज्यं भक्ष्ये ।२।१०
७० घोर्लोपो लेटि वा ।२।११
७१ ओतः श्यनि ।२।१२
७२ क्सस्याचि ।
७३ लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ।
७४ शमामष्टानां दीर्घः श्यनि ।
७५ ष्ठिवुक्लमुचमां शिति ।२।१३
७६ क्रमः परस्मैपदेषु ।
७७ इषुगमियमां छः ।२।१४
७८ पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ।२।१५
७९ ज्ञाजनोर्जा ।२।१६
८० प्वादीनां ह्रस्वः ।
८१ मीनातेर्निगमे ।
८२ मिदेर्गुणः ।
८३ जुसि च ।२।१७
८४ सार्वधातुकार्धधातुकयोः ।
८५ जाग्रोऽविचिण्णल्ङित्सु ।२।१८
८६ पुगन्तलघूपधस्य च ।२।१९
८७ नाभ्यस्तस्याचि पिति सार्वधातुके ।२।२०
८८ भूसुवोस्तिङि ।२।२१
८९ उतो वृद्धिर्लुकि हलि ।
९० ऊर्णोतेर्विभाषा ।
९१ गुणोऽपृक्ते ।
९२ तृणह इम् ।२।२२
९३ ब्रुव ईट् ।
९४ यङो वा ।
९५ तुरुस्तुशम्यमः सार्वधातुके । २।२३
९६ अस्तिसिचोऽपृक्ते ।
९७ बहुलं छन्दसि ।
९८ रुदश्च पञ्चभ्यः ।
९९ अड्गार्ग्यगालवयोः ।
१०० अदः सर्वेषाम् ।
१०१ अतो दीर्घो यञि ।
१०२ सुपि च ।
१०३ बहुवचने झल्येत् ।२।२४
१०४ ओसि च ।
१०५ आङि चापः ।
१०६ संबुद्धौ च ।
१०७ अम्बार्थनद्योर्ह्रस्वः ।२।२५
१०८ ह्रस्वस्य गुणः ।२।२६
१०९ जसि च ।२।२७
११० ऋतो ङिसर्वनामस्थानयोः ।
१११ घेर्ङिति ।२।२८
११२ आण्नद्याः ।
११३ याडापः ।२।२९
११४ सर्वनाम्नः स्याड्ढ्रस्वश्च ।
११५ विभाषा द्वितीयातृतीयाभ्याम् ।
११६ ङेराम्नद्याम्नीभ्यः ।२।३०
११७ इदुद्भ्याम् ।
११८ औत् ।
११९ अच्च घेः । } ।२।३१
१२० आङो नाऽस्त्रियाम् ।२।३२
"देविकादेवतास्फायो भुजमीनातेरतो दीर्घो विंशतिः" ॥

---

## चतुर्थः पादः ७।४

१ णौ चङ्युपधाया ह्रस्वः ।१।१
२ नाग्लोपिशास्वृदिताम् ।१।२
३ भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ।१।३
४ लोपः पिबतेरीच्चाभ्यासस्य ।
५ तिष्ठतेरित् ।
६ जिघ्रतेर्वा ।
७ उर्ऋत् ।
८ नित्यं छन्दसि ।
९ दयतेर्दिगि लिटि ।१।४
१० ऋतश्च संयोगादेर्गुणः ।१।५
११ ऋच्छत्यॄताम् ।
१२ शॄदॄप्रां ह्रस्वो वा ।१।६
१३ केऽणः ।१।७
१४ न कपि ।
१५ आपोऽन्यतरस्याम् ।
१६ ऋदृशोऽङि गुणः ।
१७ अस्यतेस्थुक् ।
१८ श्वयतेरः ।
१९ पतः पुम् ।
२० वच उम् ।
२१ शीङः सार्वधातुके गुणः ।

२२ अयङ्यि क्ङिति ।
२३ उपसर्गाद्ध्रस्व ऊहतेः ।१।८
२४ एतेर्लिङि ।१।९
२५ अकृत्सार्वधातुकयोर्दीर्घः ।
२६ च्वौ च ।
२७ रीङृतः ।१।१०
२८ रिङ् शयग्लिङ्क्षु ।
२९ गुणोऽर्तिसंयोगाद्योः ।
३० यङि च ।१।११
३१ ई घ्राध्मोः ।
३२ अस्य च्वौ ।
३३ क्यचि च ।
३४ अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु ।
३५ न च्छन्दस्यपुत्रस्य ।१।१२
३६ दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति ।
३७ अश्वाघस्यात्
३८ देवसुम्नयोर्यजुषि काठके ।
३९ कव्यध्वरपृतनस्यर्चि लोपः ।
४० द्यतिस्यतिमास्थामित्ति किति ।
४१ शाच्छोरन्यतरस्याम् ।१।१३
४२ दधातेर्हिः ।
४३ जहातेश्च क्त्वि ।
४४ विभाषा छन्दसि ।
४५ सुधित वसुधित नेमधित धिष्व धिषीय च ।
४६ दो दद्घोः ।१।१४
४७ अच उपसर्गात्तः ।१।१५
४८ अपो भि ।१।१६
४९ सः स्यार्धधातुके ।
५० तासस्त्योर्लोपः ।
५१ रि च ।
५२ ह एति ।
५३ यीवर्णयोर्दीधीवेव्योः ।
५४ सनि मीमाघुरभलभशकपतपदामच इस् ।१।१७
५५ आप्ज्ञप्यृधामीत् ।१।१८
५६ दम्भ इच्च ।
५७ मुचोऽकर्मकस्य गुणो वा ।
५८ अत्र लोपोऽभ्यासस्य ।१।१९
५९ ह्रस्वः ।
६० हलादिः शेषः ।१।२०
६१ शर्पूर्वाः खयः ।१।२१
६२ कुहोश्चुः ।

६३ न कवतेर्यङि ।
६४ कृषेश्छन्दसि ।
६५ दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतःसरीसृपतंवरीवृजन्मर्मृज्यागनीगन्तीति च ।१।२२
६६ उरत् ।
६७ द्युतिस्वाप्योः संप्रसारणम् ।१।२३
६८ व्यथो लिटि ।
६९ दीर्घ इणः किति ।
७० अत आदेः ।
७१ तस्मान्नुड्द्विहलः ।
७२ अश्नोतेश्च ।
७३ भवतेरः ।
७४ ससूवेति निगमे ।
७५ निजां त्रयाणां गुणः श्लौ ।१।२४
७६ भृञामित् ।
७७ अर्तिपिपर्त्योश्च ।१।२५
७८ बहुलं छन्दसि ।
७९ सन्यतः ।
८० ओः पुयण्ज्यपरे ।
८१ स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ।
८२ गुणो यङ्लुकोः ।१।२६
८३ दीर्घोऽकितः ।१।२७
८४ नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् ।
८५ नुगतोऽनुनासिकान्तस्य ।१।२८
८६ जपजभदहदशभञ्जपशां च ।
८७ चरफलोश्च ।
८८ उत्परस्यातः ।
८९ ति च ।
९० रीगृदुपधस्य च ।१।२९
९१ रुग्रिकौ च लुकि ।१।३०
९२ ऋतश्च ।१।३१
९३ सन्वल्लघुनि चङ्परेऽनग्लोपे ।१।३२
९४ दीर्घो लघोः ।
९५ अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम् ।
९६ विभाषा वेष्टिचेष्ट्योः ।
९७ ई च गणः ।

"णौ च श्चीङः शाच्छोः शर्पूर्वाः स्रवतिसप्तदश" ॥

---

## अष्टमोऽध्यायः ।

### प्रथमः पादः ८।१ ·

१ सर्वस्य द्वे ।१।१
२ तस्य परमाम्रेडितम् ।
३ अनुदात्तं च ।
४ नित्यवीप्सयोः ।१।२
५ परेर्वर्जने ।१।३
६ प्रसमुपोदः पादपूरणे ।
७ उपर्यध्यधसः सामीप्ये ।
८ वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु ।१।४
९ एकं बहुव्रीहिवत् ।१।५
१० आबाधे च ।
११ कर्मधारयवदुत्तरेषु ।१।६
१२ प्रकारे गुणवचनस्य ।१।७
१३ अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् ।
१४ यथास्वे यथायथम् ।
१५ द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ।१।८
१६ पदस्य । } ।१।९
१७ पदात् । }
१८ अनुदात्तं सर्वमपादादौ ।१।१०
१९ आमन्त्रितस्य च ।
२० युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ ।
२१ बहुवचनस्य वस्नसौ ।
२२ तेमयावेकवचनस्य ।
२३ त्वामौ द्वितीयायाः ।
२४ न चवाहाहैवयुक्ते ।
२५ पश्यार्थैश्चानालोचने ।
२६ सपूर्वायाः प्रथमाया विभाषा ।१।११
२७ तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ।१।१२
२८ तिङ्ङतिङः ।१।१३
२९ न लुट् ।
३० निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् ।१।१४
३१ नह प्रत्यारम्भे ।
३२ सत्यं प्रश्ने ।
३३ अङ्गाप्रातिलोम्ये ।
३४ हि च ।

३५ छन्दस्यनेकमपि साकाङ्क्षम् ।१।१५
३६ यावद्यथाभ्याम् ।
३७ पूजायां नानन्तरम् ।
३८ उपसर्गव्यपेतं च ।
३९ तुपश्यपश्यताहैः पूजायाम् ।१।१६
४० अहो च ।
४१ शेषे विभाषा ।
४२ पुरा च परीप्सायाम् ।
४३ नन्वित्यनुज्ञैषणायाम् ।
४४ किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम् ।
४५ लोपे विभाषा ।
४६ एहिमन्ये प्रहासे लृट् ।१।१७
४७ जात्वपूर्वम् ।१।१८
४८ किंवृत्तं च चिदुत्तरम् ।
४९ आहो उताहो चानन्तरम् ।
५० शेषे विभाषा ।१।१९
५१ गत्यर्थलोटा लृण्न चेत्कारकं सर्वान्यत् ।२।१
५२ लोट् च ।
५३ विभाषितं सोपसर्गमनुत्तमम् ।
५४ हन्त च ।
५५ आम एकान्तरमामन्त्रितमनन्तिके ।२।२
५६ यद्धितुपरं छन्दसि ।२।३
५७ चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः ।२।४
५८ चादिषु च ।
५९ चवायोगे प्रथमा ।
६० हेति क्षियायाम् ।
६१ अहेति विनियोगे च ।
६२ चाहलोप एवेत्यवधारणम् ।
६३ चादिलोपे विभाषा ।
६४ वैवावेति च च्छन्दसि ।
६५ एकान्याभ्यां समर्थाभ्याम् ।
६६ यद्वृत्तान्नित्यम् ।२।५
६७ पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः ।२।६
६८ सगतिरपि तिङ् ।२।७
६९ कुत्सने च सुप्यगोत्रादौ ।
७० गतिर्गतौ ।२।९
७१ तिङि चोदात्तवति ।२।१०
७२ आमन्त्रितं पूर्वमविद्यमानवत् ।२।११
७३ नामन्त्रिते समानाधिकरणे सामान्यवचनम् ।२।१२
७४ विभाषितं विशेषवचने बहुवचनम् ।

"सर्वस्य बहुवचनस्य शेषे अहेति चतुर्दश" ॥

---

### द्वितीयः पादः ८।२

१ पूर्वत्रासिद्धम् ।१।११
२ नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ।१।२
३ न मु ने ।१।३
४ उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ।१।४
५ एकादेश उदात्तेनोदात्तः ।
६ स्वरितो वाऽनुदात्ते पदादौ ।१।५
७ नलोपः प्रातिपदिकान्तस्य ।१।६
८ न ङिसंबुद्ध्योः ।१।७
९ मादुपधायाश्च मतोर्वोऽयवादिभ्यः ।१।८
१० झयः ।
११ संज्ञायाम् ।
१२ आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती ।१।९
१३ उदन्वानुदधौ च ।
१४ राजन्वान्सौराज्ये ।
१५ छन्दसीरः ।१।१०
१६ अनो नुट् ।१।११
१७ नाद्धस्य ।१।१२
१८ कृपो रो लः ।१।१३
१९ उपसर्गस्यायतौ ।१।१४
२० ग्रो यङि ।
२१ अचि विभाषा ।१।१५
२२ परेश्च घाङ्कयोः ।१।१६
२३ संयोगान्तस्य लोपः ।१।१७
२४ रात्सस्य ।
२५ धि च ।१।१८
२६ झलो झलि ।
२७ ह्रस्वादङ्गात् ।
२८ इट ईटि ।
२९ स्कोः संयोगाद्योरन्ते च ।
३० चोः कुः ।
३१ हो ढः ।
३२ दादेर्धातोर्घः ।१।१९
३३ वा द्रुहमुहष्णुहष्णिहाम् ।
३४ नहो धः ।
३५ आहस्थः ।
३६ व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ।
३७ एकाचो बशो भष् झषन्तस्य स्ध्वोः ।
३८ दधस्तथोश्च ।१।२०
३९ झलां जशोऽन्ते ।
४० झषस्तथोर्धोऽधः ।१।२१
४१ षढोः कः सि ।
४२ रदाभ्यां निष्ठातो नः पूर्वस्य च दः ।२।१
४३ संयोगादेरातो धातोर्यण्वतः ।
४४ ल्वादिभ्यः ।२।२
४५ ओदितश्च ।
४६ क्षियो दीर्घात् ।२।३
४७ श्योऽस्पर्शे ।
४८ अञ्चोऽनपादाने ।२।४
४९ दिवोऽविजिगीषायाम् ।
५० निर्वाणोऽवाते ।२।५
५१ शुषः कः ।
५२ पचो वः ।
५३ क्षायो मः ।
५४ प्रस्त्योऽन्यतरस्याम् ।
५५ अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः ।२।६
५६ नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ।२।७
५७ न ध्याख्यापॄमूर्च्छिमदाम् ।
५८ वित्तो भोगप्रत्यययोः ।२।८
५९ भित्तं शकलम् ।२।९
६० ऋणमाधमर्ण्ये ।
६१ नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि च्छन्दसि ।
६२ क्विन्प्रत्ययस्य कुः ।२।१०
६३ नशेर्वा ।
६४ मो नो धातोः ।

६५ म्वोश्च ।
६६ **ससजुषो रुः ।**
६७ अवयाः श्वेतवाः पुरोडाश्च ।
६८ अहन् ।२।११
६९ रोऽसुपि ।२।१२
७० अम्नरूधरवरित्युभयथा छन्दसि ।२।१३
७१ भुवश्च महाव्याहृतेः ।
७२ वसुस्रंसुध्वंस्वनडुहां दः ।२।१४
७३ तिप्यनस्तेः ।
७४ सिपि धातो रुर्वा ।
७५ दश्च ।
७६ र्वोरुपधाया दीर्घ इकः ।
७७ हलि च ।
७८ उपधायां च ।२।१५
७९ न भकुर्छुराम् ।
८० अदसोऽसेर्दादु दो मः ।२।१६
८१ एत ईद्बहुवचने ।२।१७
८२ **वाक्यस्य टेः प्लुत उदात्तः** ।२।१८
८३ प्रत्यभिवादेऽशूद्रे ।२।१९
८४ दूराद्धूते च ।२।२०
८५ हैहेप्रयोगे हैहयोः ।२।२१
८६ गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् ।२।२२
८७ ओमभ्यादाने ।
८८ ये यज्ञकर्मणि ।२।२३
८९ प्रणवष्टेः ।२।२४
९० याज्यान्तः ।२।२५
९१ ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः ।
९२ अग्नीत्प्रेषणे परस्य च ।२।२६
९३ विभाषा पृष्टप्रतिवचने हेः ।
९४ निगृह्यानुयोगे च ।
९५ आम्रेडितं भर्त्सने ।२।२७
९६ अङ्गयुक्तं तिङाकाङ्क्षम् ।
९७ विचार्यमाणानाम् ।
९८ पूर्वं तु भाषायाम् ।
९९ प्रतिश्रवणे च ।
१०० **अनुदात्तं प्रश्नान्ताभिपूजितयोः ।**
१०१ चिदिति चोपमार्थे प्रयुज्यमाने ।
१०२ उपरिस्विदासीदिति च ।
१०३ स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु ।२।२८
१०४ क्षियाशीःप्रैषेषु तिङाकाङ्क्षम् ।
१०५ अनन्त्यस्यापि प्रश्नाख्यानयोः ।
१०६ प्लुतावैच इदुतौ ।२।२९
१०७ एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ ।२।३०
१०८ तयोर्य्वावचि संहितायाम् ।२।३१
"पूर्वत्रासिद्धे षढोर्नसस्तैत ईचिदिल्यष्टौ"

---

## तृतीयः पादः ८।३

१ **मतुवसो रु संबुद्धौ छन्दसि** ।१।१
२ अत्रानुनासिकः पूर्वस्य तु वा ।
३ आतोऽटि नित्यम् ।
४ अनुनासिकात्परोऽनुस्वारः ।
५ समः सुटि ।१।२
६ पुमः खय्यम्परे ।१।२
७ नश्छव्यप्रशान् ।
८ उभयथर्क्षु ।
९ दीर्घादटि समानपादे ।
१० नॄन्पे ।
११ स्वतवान्पायौ ।
१२ कानाम्रेडिते ।१।२
१३ ढो ढे लोपः ।१।३
१४ रो रि ।
१५ खरवसानयोर्विसर्जनीयः ।१।४
१६ रोः सुपि ।१।५
१७ भोभगोअघोअपूर्वस्य योऽशि ।१।७
१८ व्योर्लघुप्रयत्नतरः शाकटायनस्य ।
१९ **लोपः शाकल्यस्य ।**
२० ओतो गार्ग्यस्य ।१।७
२१ उञि च पदे ।१।८
२२ हलि सर्वेषाम् ।
२३ मोऽनुस्वारः ।
२४ नश्चापदान्तस्य झलि ।
२५ मो राजि समः क्वौ ।
२६ हे मपरे वा ।१।९
२७ नपरे नः ।
२८ ङ्णोः कुक्टुक्शरि ।
२९ डः सि धुट् ।
३० नश्च ।१।१०
३१ शि तुक् ।
३२ ङमो ह्रस्वादचि ङमुण्नित्यम् ।१।१०,११
३३ मय उञो वो वा ।१।१२
३४ विसर्जनीयस्य सः ।१।१३
३५ शर्परे विसर्जनीयः ।
३६ वा शरि ।१।१४
३७ कुप्वोः ≍क ≍पौ च ।१।१५
३८ सोऽपदादौ ।१।१६
३९ इणः षः ।१।१७
४० नमस्पुरसोर्गत्योः ।
४१ इदुदुपधस्य चाप्रत्ययस्य ।१।१८
४२ तिरसोऽन्यतरस्याम् ।
४३ द्विस्त्रिश्चतुरिति कृत्वोऽर्थे ।१।१९
४४ इसुसोः सामर्थ्ये ।
४५ नित्यं समासेऽनुत्तरपदस्थस्य । १।२०
४६ अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ।
४७ अधःशिरसीपदे ।
४८ कस्कादिषु च ।
४९ छन्दसि वाऽप्राम्रेडितयोः ।
५० कःकरत्करतिकृधिकृतेष्वनदितेः ।
५१ पञ्चम्याः परावध्यर्थे ।
५२ पातौ च बहुलम् ।
५३ षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु ।
५४ इडाया वा ।
५५ **अपदान्तस्य मूर्धन्यः** ।१।२१
५६ सहेः साडः सः ।२।१
५७ इण्कोः ।२।२
५८ नुम्विसर्जनीयशर्व्यवायेऽपि ।२।२
५९ आदेशप्रत्यययोः ।२।३
६० शासिवसिघसीनां च ।
६१ स्तौतिण्योरेव षण्यभ्यासात् ।२।४
६२ सः स्विदिस्वदिसहीनां च ।
६३ प्राक्सितादड्व्यवायेऽपि ।
६४ स्थादिष्वभ्यासेन चाभ्यासस्य । २।५
६५ उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् ।२।६

---

१ 'ङ्णोः कुक् टुक् शरि' इत्यस्य 'शितुक्' इत्युत्तरमेव पाठो भाष्ये ।
९० सि० कौ०

६६ सदिरप्रतेः।
६७ स्तम्भेः।२।७
६८ अवाच्चालम्बनाविदूर्ययोः।
६९ वेश्च स्वनो भोजने।
७० परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्।
७१ सिवादीनां वाऽड्व्यवायेऽपि।
७२ अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु।२।८
७३ वेः स्कन्देरनिष्ठायाम्।
७४ परेश्च।२।९
७५ परिस्कन्दः प्राच्यभरतेषु।
७६ स्फुरतिस्फुलत्योर्निर्निविभ्यः।
७७ वेः स्कभ्नातेर्नित्यम्।
७८ इणः षीध्वंलुङ्लिटां धोऽङ्गात्।२।१०
७९ विभाषेटः।२।१०
८० समासेऽङ्गुलेः सङ्गः।
८१ भीरोः स्थानम्।
८२ अग्नेः स्तुत्स्तोमसोमाः।२।११
८३ ज्योतिरायुषः स्तोमः।
८४ मातृपितृभ्यां स्वसा।
८५ मातुःपितुर्भ्यामन्यतरस्याम्।२।१२
८६ अभिनिसः स्तनः शब्दसंज्ञायाम्।
८७ उपसर्गप्रादुर्भ्यामस्तिर्यच्परः।।२।१३
८८ सुविनिर्दुर्भ्यः सुपिसूतिसमाः।२।१४
८९ निनदीभ्यां स्नातेः कौशले।
९० सूत्रं प्रतिष्णातम्।
९१ कपिष्ठलो गोत्रे।२।१५
९२ प्रष्ठोऽग्रगामिनि।
९३ वृक्षासनयोर्विष्टरः।
९४ छन्दोनाम्नि च।
९५ गवियुधिभ्यां स्थिरः।
९६ विकुशमिपरिभ्यः स्थलम्।
९७ अम्बाम्बगोभूमिसव्येऽपद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः।२।१६
९८ सुषामादिषु च।२।१७
९९ एति संज्ञायामगात्।(गणसूत्रम्)
१०० नक्षत्राद्वा। (गणसूत्रम्)
१०१ ह्रस्वात्तादौ तद्धिते।२।१८
१०२ निसस्तपतावनासेवने।
१०३ युष्मत्तत्ततक्षुष्वन्तः पादम्।
१०४ यजुष्येकेषाम्।
१०५ स्तुतस्तोमयोश्छन्दसि।२।१९
१०६ पूर्वपदात्।
१०७ सुञः
१०८ सनोतेरनः।२।२०
१०९ सहेः पृतनर्ताभ्यां च।
११० न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्।२।२१
१११ सात्पदाद्योः।
११२ सिचो यङि।२।२२
११३ सेधतेर्गतौ।
११४ प्रतिस्तब्धनिस्तब्धौ च।
११५ सोढः।२।२३
११६ स्तम्भुसिवुसहां चङि।२।२४
११७ सुनोतेः स्यसनोः।२।५
११८ सदेः परस्य लिटि।२।३४
११९ निव्यभिभ्योऽड्व्यवाये वा छन्दसि।
"मतुवसोरुत्वि चेदुदुपधस्य स्तौतिण्योर्भीरोर्ह्रस्वात्तादावेकोनविंशतिः"॥

---

**चतुर्थः पादः ८।४**

१ **रषाभ्यां नो णः समानपदे** १।१
२ अट्कुप्वाङ्नुम्व्यवायेऽपि।१।२
३ पूर्वपदात्संज्ञायामगः।१।३
४ वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः।
५ प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि।
६ विभाषौषधिवनस्पतिभ्यः।१।४
७ अह्नोऽदन्तात्।१।५
८ वाहनमाहितात्।१।६
९ पानं देशे।
१० वा भावकरणयोः।१।७
११ प्रातिपदिकान्तनुम्विभक्तिषु च १।८
१२ एकाजुत्तरपदे णः।
१३ कुमति च।१।९
१४ उपसर्गादसमासेऽपि णोपदेशस्य १।१०
१५ हिनु मीना।१।११
१६ आनि लोट्।१।१२
१७ नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च १।१३
१८ शेषे विभाषाऽकखादावषान्त उपदेशे।
१९ अनितेः।१।१४
२० अन्तः।२।१४
२१ उभौ साभ्यासस्य।१।१५
२२ हन्तेरत्पूर्वस्य।१।१६
२३ वमोर्वा।
२४ अन्तरदेशे।
२५ अयनं च।
२६ छन्दस्यृदवग्रहात्।
२७ नश्च धातुस्थोरुषुभ्यः।
२८ उपसर्गादनोत्परः।१।१७
२९ कृत्यचः।१।१४
३० णेर्विभाषा।१।१९
३१ हलश्चेजुपधात्।
३२ इजादेः सनुमः।१।२०
३३ वा निंसनिक्षनिन्दाम्।
३४ न भाभूपूकमिगमिप्यायीवेपाम् १।२१
३५ षात्पदान्तात्।१।२१
३६ नशेः षान्तस्य।१।२३
३७ पदान्तस्य।
३८ पदव्यवायेऽपि।१।२४
३९ क्षुभ्नादिषु च।१।२५
४० **स्तोः श्चुना श्चुः**।१।२६
४१ ष्टुना ष्टुः।२।२७
४२ न पदान्ताट्टोरनाम्।१।२८
४३ तोः षि।
४४ शात्।
४५ यरोऽनुनासिकेऽनुनासिको वा १।२९
४६ **अचो रहाभ्यां द्वे**।
४७ अनचि च।१।३०

---

१ 'उपसर्गाद्बहुलम्' इत्येवं भाष्यकृता व्यवस्थापितम्।

४८ नादिन्याक्रोशे पुत्रस्य ।१।३१
४९ शरोऽचि ।
५० त्रिप्रभृतिषु शाकटायनस्य ।
५१ सर्वत्र शाकल्यस्य ।
५२ दीर्घादाचार्याणाम् ।
५३ झलां जश्झशि ।
५४ अभ्यासे चर्च ।१।३४
५५ खरि च ।
५६ वाऽवसाने ।
५७ अणोऽप्रगृह्यस्यानुनासिकः ।
५८ अनुस्वारस्य ययि परसवर्णः ।
५९ वा पदान्तस्य ।
६० तोर्लि ।
६१ उदः स्थास्तम्भोः पूर्वस्य ।१।३२
६२ झयो होऽन्यतरस्याम् ।
६३ शश्छोऽटि ।१।३३
६४ हलो यमां यमि लोपः ।
६५ झरो झरि सवर्णे ।१।३५
६६ उदात्तादनुदात्तस्य स्वरितः ।
६७ नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् ।
६८ अ अ ।१।३६

रषाभ्यामुभौ ष्टुनोदः
स्याऽष्टौ ।

---


इति श्रीपाणिनिमुनिप्रणीतोऽष्टाध्यायीसूत्रपाठः
समाप्तः ।



---

१ अत्रेत्थं पाठक्रमो वृत्त्यनुसारेण ॥ भाष्यक्रमस्तु—"दीर्घादाचार्याणाम् । अनुस्वारस्य ययि परसवर्णः । वा पदान्तस्य । तोर्लि । उदः स्थास्तम्भोः पूर्वस्य । झयो होऽन्यतरस्याम् । शश्छोऽटि । झलां जश् झशि । अभ्यासे चर्च । खरि च । वाऽवसाने । अणोऽप्रगृह्यस्यानुनासिकः । हलो यमां यमि लोपः ।" इति शम् ॥

# अथ गणपाठः ।

## प्रथमोऽध्यायः ।

२१३ । **सर्वादीनि सर्वनामानि** १।१।२७ ॥ सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः । त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् ॥ **इति सर्वादिः** ॥ १ ॥

४४८ । **स्वरादिनिपातमव्ययम्** १।१।३७॥ स्वर अन्तर् प्रातर्, **अन्तोदात्ताः** । पुनर् सनुतर् उच्चैस् नीचैस् शनैस् ऋधक् ऋते युगपत् आरात् [ अन्तिकात् ] पृथक्, **आद्युदात्ताः** । ह्यस् श्वस् दिवा रात्रौ सायम् चिरम् मनाक् ईषत् [ शश्वत् ] जोषम् तूष्णीम् बहिस् [ अधस् ] अवस् समया निकषा स्वयम् मृषा नक्तम् नञ् हेतौ [ हे है ] इद्धा अद्धा सामि, **अन्तोदात्ताः** । वत् [ ५।१,१५ ] ब्राह्मणवत् क्षत्रियवत् सना सनत् सनात् उपधा तिरस्, **आद्युदात्ताः** । अन्तरा । **अन्तोदात्तः** । अन्तरेण [ मक् ] ज्योक् [ योक् नक् ] कम् शम् सना सहसा [ श्रद्धा ] अलम् स्वधा वषट् विना नाना स्वस्ति अन्यत् अस्ति उपांशु क्षमा विहायसा दोषा मुधा दिष्ट्या वृथा मिथ्या । क्त्वातोसुन्कसुनः । कृन्मकारसंध्यक्षरान्तोऽव्ययीभावश्च । पुरा मिथो मिथस् प्रायस् मुहुस् प्रवाहुकम् प्रवाहिका आर्यहलम् अभीक्ष्णम् साकम् सार्धम् [ सत्रम् समम् ] नमस् हिरुक् । तसिलादयस्तद्धिता एधाच्च पर्यन्ताः [ ५।३।७–४६ ] शस्तसी कृत्वसुच् सुच् आस्थालौ । च्व्यर्थाश्च । [ अथ ] अम् आम् प्रताम् प्रतान् प्रशान् । **आकृतिगणोऽयम्** । तेनान्येऽपि । तथाहि—माङ् श्रम् कामम् [ प्रकामम् ] भूयस् परम् साक्षात् साचि ( साचि ) सत्यम् मंक्षु संवत् अवश्यम् सपदि प्रादुस् आविस् अनिशम् नित्यम् नित्यदा सदा अजस्रम् सन्ततम् उषा ओम् भूर् भुवर् झटिति तरसा सुष्ठु कु अञ्जसा अ मिथु ( अमिथु ) विथक् भाजक् अन्वक् चिराय चिरम् चिररात्राय चिरस्य चिरेण चिरात् अस्तम् आनुषक् अनुपक् अनुपद् अम्नस् (अम्भस्) अम्नर् (अम्भर्) स्थाने वरम् दुष्ठु बलात् शु अर्वाक् सुदि वदि **इत्यादि** । तसिलादयः प्राक्पाशपः [५।३।७–४७] शस्प्रभृतयः प्राक्समासान्तेभ्यः [ ५।४।४२–६७ ] मान्तः कृत्वोर्थः । तसिवती । नानाञाविति ॥ **इति स्वरादिः** ॥ २ ॥

२० **चादयोऽसत्त्वे** १।४।५७॥ च वा ह अह एव एवम् नूनम् शश्वत् यूपत् युगपत् भूयस् सूपत् कूपत् कुवित् नेत् चेत् चण् कच्चित् यत्र तत्र नह हन्त माकिम् माकीम् माकिर् नकिम् नकीम् नकिर् आकीम् माङ् नञ् तावत् यावत् त्वा त्वै द्वै न्वै रै [ रे ] श्रौषट् वौषट् स्वाहा स्वधा ओम् तथा तथाहि खलु किल अथ सुष्ठु स्म अ इ उ ऋ लृ ए ऐ ओ औ आदह उञ् उकञ् वेलायाम् मात्रायाम् यथा यत् तत् किम् पुरा वधा ( वध्वा ) धिक् हाहा हेहै ( हहे ) पाट् प्याट् आहो उताहो हो अहो नो ( नौ ) अथो ननु मन्ये मिथ्या असि ब्रूहि तु नु इति इव वत् वात् वन बत [ सम् वशम् शिकम् दिकम् ] सनुकं शंवट् ( छंबट् ) शङ्के शुकम् खम् सनात् सनुतर् नहिकम् सत्यम् ऋतम् अद्धा इद्धा नोचेत् नचेत् नहि जातु कथम् कुतः कुत्र अव अनु हा हे [ है ] आहोस्वित् शम् कम् खम् दिष्ट्या पशु वट् सह [ अनुषट् ] आनुषक् अङ्ग फट् ताजक् भाजक् अये अरे वाट् ( चाटु ) कुम् खुम् घुम् अम् ईम् सीम् सिम् सि वै । उपसर्गसविभक्तिस्वरप्रतिरूपकाश्च निपाताः ॥ **आकृतिगणोऽयम्** ॥ **इति चादयः** ॥ ३ ॥

२१ **प्रादयः** १।४।५८॥ प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उद् अभि प्रति परि उप ॥ **इति प्रादयः** ॥ ४ ॥

७६३ **ऊर्यादिच्विडाचश्च** १।४।६१॥ ऊरी उररी तन्थी ताली आताली वेताली धूली धूसी शकला शंसकला ध्वंसकला भ्रंसकला गुलगुधा सजूस् सजुष् फल फली विक्ली आक्ली आलोष्ठी केवाली केवासी सेवासी पर्याली शेवाली वर्षाली अत्यूमशा वश्मसा मस्मसा मसमसा औषट् श्रौषट् वौषट् वषट् स्वाहा स्वधा ( बन्धा ) पापी प्रादुस् श्रत् आविस् ॥ **इत्यूर्यादयः** ॥५॥

७७६ **साक्षात्प्रभृतीनि च** १।४।७४॥ साक्षात् मिथ्या चिन्ता भद्रा रोचना आस्था अमा अद्धा प्राजर्या प्राजरुहा बीजर्या बीजरुहा संसर्या अर्थे लवणम् उष्णम् शीतम् उदकम् आर्द्रम् अग्नौ वशे विकसने प्रसहने प्रतपने प्रादुस् नमस् । **आकृतिगणोऽयम्** ॥ **इति साक्षात्प्रभृतयः** ॥ ६ ॥ **इति प्रथमोऽध्यायः** ।

---

## द्वितीयोऽध्यायः ।

६७२ **तिष्ठद्गुप्रभृतीनि च** २।१।१७॥ तिष्ठद्गु वहद्गु आयतीगवम् खलेयवम् खलेबुसम् लूनयवम् लूयमानयवम् पूतयवम् पूयमानयवम् संहृतयवम् संह्रियमाणयवम् संहृतबुसम् संह्रियमाणबुसम् समभूमि समपदाति सुषमम् विषमम्

दुःषमम् निःषमम् अपसमम् आयतीसमम् [ प्रोढम् ] पापसमम् पुण्यसमम् प्राह्णम् प्ररथम् प्रमृगम् प्रदक्षिणम् [ अपरदक्षिणम् ] संप्रति असंप्रति । इच्प्रत्ययः समासान्तः । [ ५।४।१२७–१२८ ] ॥ **इति तिष्ठद्गुप्रभृतयः ॥ ७ ॥**

**७१८ सप्तमी शौण्डैः** २।१।४०॥ शौण्ड धूर्त कितव व्याड प्रवीण संवीत अन्तर अधि पटु पण्डित कुशल चपल निपुण ॥ **इति शौण्डादयः ॥ ८ ॥**

**७२६ पात्रेसमितादयश्च** २।१।४८॥ पात्रेसमिताः पात्रेबहुलाः उदुम्बरमशकः उदुम्बरकृमिः कूपकच्छपः अवटकच्छपः कूपमण्डूकः कुम्भमण्डूकः उदपानमण्डूकः नगरकाकः नगरवायसः मातरिपुरुषः पिण्डीशूरः पितरिशूरः गेहेशूरः गेहेनर्दी गेहेक्ष्वेडी गेहेविजिती गेहेव्याडः गेहेमेही गेहेदाही गेहेदृप्तः गेहेधृष्टः गर्भेतृप्तः आखनिकवकः गोष्ठेशूरः गोष्ठेविजिती गोष्ठेक्ष्वेडी गोष्ठेपटुः गोष्ठेपण्डितः गोष्ठेप्रगल्भः कर्णेटिरिटिरा कर्णेचुरुचुरा ॥ **आकृतिगणोऽयम् ॥ इति पात्रेसमितादयः ॥ ९ ॥**

**७३६ उपमितं व्याघ्रादिभिः सामान्याप्रयोगे** २।१।५६॥ व्याघ्र सिंह ऋक्ष ऋषभ चन्दन वृक वृष वराह हस्तिन् तरु कुञ्जर रुरु पृषत् पुण्डरीक पलाश कितव ॥ **इति व्याघ्रादयः ॥ १० ॥ आकृतिगणोऽयम् ।** तेन–मुखपद्मम् मुखकमलम् करकिसलयम् पार्थिवचन्द्रः इत्यादि ॥ ५ ॥

**७३९ (१)श्रेण्यादयः (२)कृतादिभिः** २।१।५९॥ (१) श्रेणि एक पूग मुकुन्द राशि निचय विषय निधन पर इन्द्र देव मुण्ड भूत श्रमण वदान्य अध्यापक अभिरूपक ब्राह्मण क्षत्रिय [ विशिष्ट ] पटु पण्डित कुशल चपल निपुण कृपण ॥ **इत्येते श्रेण्यादयः ॥ ११ ॥** (२) कृत मित मत भूत उक्त [ युक्त ] समाज्ञात समाम्नात समाख्यात संभावित [संसेवित] अवधारित अवकल्पित निराकृत उपकृत उपाकृत [ दृष्ट कलित दलित उदाहृत विश्रुत उदित ] । **आकृतिगणोऽयम् ॥ इति कृतादयः ॥ १२ ॥**

**७४० * शाकपार्थिवादीनामुपसंख्यानम् *** २।१।६०॥ शाकपार्थिव कुतुपसौश्रुत अजातौल्वलि । **आकृतिगणोऽयम् ।** कृतापकृत भुक्तविभुक्त पीतविपीत गतप्रत्यागत यातानुयात क्रयाक्रयिका पुटापुटिका फलाफलिका मानोन्मानिका ॥ **इति शाकपार्थिवादयः ॥ १३ ॥**

**७५३ कुमारः श्रमणादिभिः** २।१।७०॥ श्रमणा प्रव्रजिता कुलटा गर्भिणी तापसी दासी बन्धकी अध्यापक अभिरूपक पण्डित पटु मृदु कुशल चपल निपुण ॥ **इति श्रमणादयः ॥ १४ ॥**

**७५५ मयूरव्यंसकादयश्च** २।१।७२॥ मयूरव्यंसक छात्रव्यंसक कम्बोजमुण्ड यवनमुण्ड । छन्दसि । हस्तेगृह्य ( हस्तगृह्य ) पादेगृह्य ( पादगृह्य ) लाङ्गूलेगृह्य ( लाङ्गूलगृह्य ) पुनर्दाय । **एहीडादयोऽन्यपदार्थे ।** एहीडं एहियवं एहिवाणिजा–क्रिया अपेहिवाणिजा प्रेहिवाणिजा एहिस्वागता अपेहिस्वागता एहिद्वितीया अपेहिद्वितीया प्रेहिद्वितीया एहिकटा अपेहिकटा प्रेहिकटा आहरकटा प्रेहिकर्दमा प्रोहकर्दमा विधमचूडा उद्धमचूडा ( उद्धरचूडा ) आहरचेला आहरवसना [ आहरसेना ] आहरवनिता ( आहरविनता ) कृन्तविचक्षणा उद्धरोत्सृजा उद्धरावसृजा उद्धमविधमा उत्पचनिपचा उत्पतनिपता उच्चावचम् उच्चनीचम् आचोपचम् आचपराचम् [ नखप्रचम् ] निश्चप्रचम् अकिंचन स्नात्वाकालक पीत्वास्थिरक भुक्त्वासुहित प्रोष्यपापीयान् उत्पत्यपाकला निपत्यरोहिणी निषण्णश्यामा अपेहिप्रघसा एहिविघसा इहपञ्चमी इहद्वितीया । **जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति ।** जहिजोडः । जहिजोडम् । जहिस्तम्बम् । जहिस्तम्बः [उज्जहिस्तम्बम् ] । **आख्यातमाख्यातेन क्रियासातत्ये ।** अश्नीतपिबता पचतभृज्जता खादतमोदता खादतवमता । खादताचमता । आहरनिवपा । आहरनिष्किरा । आवपनिष्किरा । उत्पचविपचा भिन्धिलवणा कृन्धिविचक्षणा पचलवणा प्रचप्रकूटा । **आकृतिगणोऽयम् ॥** तेन—अकुतोभयः । कान्दिशीकः । कान्देशीकः । आहोपुरुषिका अहमहमिका यदृच्छा एहिरेयाहिरा उन्मृजावमृजा द्रव्यान्तरम् आवश्यकार्यम् ॥ **इति मयूरव्यंसकादयः ॥ १५ ॥**

**७०४ याजकादिभिश्च** २।२।९॥ याजक पूजक परिचारक परिवेषक परिषेचक स्नापक अध्यापक उत्साह उद्वर्तक होतृ भर्तृ रथगणक पत्तिगणक ॥ **इति याजकादयः ॥ १६ ॥**

**९०४ राजदन्तादिषु परम्** २।२।३१॥ राजदन्तः अग्रेवणम् लिप्तवासितम् नग्नमुषितम् सिक्तसंमृष्टम् मृष्टलुञ्चितम् अवक्लिन्नपक्वम् अर्पितोप्तम् ( अर्पितोतम् ) उप्तगाढम् उलूखलमुसलम् तण्डुलकिण्वम् दृषदुपलम् आरड्वायनि । आरग्वायनबन्धकी । चित्ररथबाह्लीकम् । अवन्त्यश्मकम् शूद्रार्यम् स्नातकराजानौ विष्वक्सेनार्जुनौ अक्षिभ्रुवम् दारगवम् शब्दार्थौ धर्मार्थौ कामार्थौ अर्थशब्दौ अर्थधर्मौ अर्थकामौ वैकारिमतम् गाजवाजम् । गोजवाजम् । गोपालिधानपूलासम् । गोपालधानीपूलासम् । पूलासकारण्डम् । पूलासककुरण्डम् । स्थूलासम् । स्थूलपूलासम् । उशीरबीजम् । [जिज्ञास्थि] सिञ्जास्थम् । ( सिञ्जाश्वत्थम् ) । चित्रास्वाती । ( चित्रस्वाती ) । भार्यापती दंपती जंपती जायापती पुत्रपती पुत्रपशू केशश्मश्रू शिरो-

विजु। शिरोबीजम्। शिरोजानु सर्पिर्मधुनी मधुसर्पिषी ( आद्यन्तौ ) अन्तादी गुणवृद्धी वृद्धिगुणौ ॥ **इति राजदन्तादय** ॥ १७ ॥

९०२ **वाहिताग्न्यादिषु** २।२।३७॥ आहिताग्नि जातपुत्र जातदन्त जातश्मश्रु तैलपीत घृतपीत [ मद्यपीत ] ऊढभार्य गतार्थ ॥ **आकृतिगणोऽयम्**। तेन—गड्डकण्ठ अस्युद्यत ( अरमुद्यत ) दण्डपाणिप्रभृतयोऽपि ॥ **इत्याहिताग्न्यादयः** ॥ १८ ॥

७५२ **कडाराः कर्मधारये** २।२।३८॥ कडार गड्डुल खञ्ज खोड काण कुण्ठ खलति गौर वृद्ध भिक्षुक पिङ्ग पिङ्गुल ( पिङ्गल ) तड तनु [ जठर ] बधिर मठर कञ्ज बर्बर ॥ **इति कडारादयः** ॥ १९ ॥

५८५ ***नौकाकान्नशुकशृगालवर्जेषु*** २।३।१७॥ नौ काक अन्न शुक शृगाल ॥ **इति नावादयः** ॥ २० ॥

५६२ **प्रकृत्यादिभ्य उपसंख्यानम्** २।३।१८॥ प्रकृति प्राय गोत्र सम विषम द्विद्रोण पञ्चक साहस्र ॥ **इति प्रकृत्यादयः** ॥ २१ ॥

९१७ **गवाश्वप्रभृतीनि च** २।४।११॥ गवाश्वम् गवाविकम् गवैडकम् अजाविकम् अजैडकम् कुब्जवामनम् कुब्जकिरातम् पुत्रपौत्रम् श्वचण्डालम् स्त्रीकुमारम् दासीमाणवकम् शाटीपटीरम् शाटीप्रच्छदम् शाटीपट्टिकम् उष्ट्रखरम् उष्ट्रशशम् मूत्रशकृत् मूत्रपुरीषम् यकृन्मेद मांसशोणितम् दर्भशरम् दर्भपूतीकम् अर्जुनशिरीषम् अर्जुनपुरुषम् तृणोपलम् [ तृणोलपम् ] दासीदासम् कुटीकुटम् भागवतीभागवतम् ॥ **इति गवाश्वप्रभृतीनि** ॥ २२ ॥

९२० **न दधिपयआदीनि** २।४।१४॥ दधिपयसी सर्पिर्मधुनी मधुसर्पिषी ब्रह्मप्रजापती शिववैश्रवणौ स्कन्दविशाखौ परिव्राजककौशिकौ ( परिवाट्कौशिकौ ) प्रवर्ग्योपसदौ शुक्लकृष्णौ इध्माबर्हिषी दीक्षातपसी [ श्रद्धातपसी मेधातपसी ] अध्ययनतपसी उलूखलमुसले आद्यवसाने श्रद्धामेधे ऋक्सामे वाङ्मनसे ॥ **इति दधिपयआदीनि** ॥ २३ ॥

८१७ **अर्धर्चाः पुंसि च** २।४।३१॥ अर्धर्च गोमय कषाय कार्षापण कुपत कुसप ( कुणप ) कपाट शङ्ख गूथ यूथ ध्वज कबन्ध पद्म गृह सरक कंस दिवस यूष अन्धकार दण्ड कमण्डलु मण्ड भूत द्वीप द्यूत चक्र धर्म कर्मन् मोदक शतमान यान नख नखर चरण पुच्छ दाडिम हिम रजत सक्तु पिधान सार पात्र घृत सैन्धव औषध आढक चषक द्रोण खलीन पात्रीव षष्टिक वारबाण ( वारवारण ) प्रोथ कपित्थ [ शुष्क ] शाल शील शुक्ल (शुल्क) शीधु कवच रेणु [ ऋण ] कपट शीकर मुसल सुवर्ण वर्ण पूर्व चमस क्षीर कर्ष आकाश अष्टापद मङ्गल निधन निर्यास जृम्भ वृत्त पुस्त बुस्त क्ष्वेडित शृङ्ग निगड [ खल ] मूलक मधु मूल स्थूल शराव नाल वप्र विमान मुख प्रग्रीव शूल वज्र कटक कण्टक [ कर्पट ] शिखर कल्क ( वल्कल ) नटमस्तक ( नाटमस्तक ) वलय कुसुम तृण पङ्क कुण्डल किरीट [ कुमुद ] अर्बुद अङ्कुश तिमिर आश्रय भूषण इक्कस ( इष्वास ) मुकुल वसन्त तटाक ( तडाग ) पिटक विटङ्क विडङ्ग पिण्याक माष कोश फलक दिन दैवत पिनाक समर स्थाणु अनीक उपवास शाक कर्पास [ विशाल ] चषाल ( चखाल ) खण्ड दर विटप [ रण बल मक ] मृणाल हस्त आर्द्र हल [ सूत्र ] ताण्डव गाण्डीव मण्डप पटह सौध योध पार्श्व शरीर फल [ छल ] पुर ( पुरा ) राष्ट्र अम्बर बिम्ब कुट्टिम मण्डल ( कुक्कुट ) कुडप ककुद खण्डल तोमर तोरण मञ्चक पञ्चक पुङ्ख मध्य [ बाल ] छाल वल्मीक वर्ष वस्त्र वसु देह उद्यान उद्योग स्नेह स्तेन [ स्तन स्वर ] सगम निष्क क्षेम शूक क्षत्रपवित्र [ यौवन कलह ] मालक ( पालक ) मूषिक [ मण्डल वल्कल ] कुज ( कुञ्ज ) विहार लोहित विषाण भवन अरण्य पुलिन दृढ आसन ऐरावत शूर्प तीर्थ लोमन ( लोमश ) तमाल लोह दण्डक शपथ प्रतिसर दारु धनुस् मान वर्चस्क कूर्च तण्डक मठ सहस्र ओदन प्रवाल शकट अपराह्ण नीड शकल तण्डुल ॥ **इत्यर्धर्चादिः** ॥ २४ ॥

१०८६ **पैलादिभ्यश्च** २।४।५९॥ पैल शालङ्कि सात्यकि सात्यकामि राहवि रावणि औदञ्चि औदव्रजि औदमेघि औदव्यज्रि ( औदमज्जि औदमृजि ) दैवस्थानि पैङ्गलौदायनि राहक्षति भौलिङ्गि राणि औदन्यि औद्गाहमानि औजिहानि औदशुद्धि तद्राजाच्चाण ( तद्राज ) ॥ **आकृतिगणोऽयम्** ॥ **इति पैलादिः** ॥ २५ ॥

१०८८ **न तौल्वलिभ्यः** २।४।६१॥ तौल्वलि धारणि पारणि रावणि दैलीपि दैवति वार्कलि नैवति ( नैवकि ) दैवमित्रि ( दैवमति ) दैवयज्ञि चाफट्टकि बैल्वकि वैकि ( वैङ्कि ) आनुहारति ( आनुराहति ) पौष्करसादि आनुरोहति आनुति प्रादोहनि नैमिश्रि प्राडाहति बान्धकि वैशीति आसिनासि आहिंसि आसुरी नैमिषि आसिबन्धकि पौष्पि कारेणुपालि वैकर्णि वैरकि वैहति ॥ **इति तौल्वल्यादिः** ॥ २६ ॥

११४८ **यस्कादिभ्यो गोत्रे** २।४।६३॥ यस्क लह्य द्रुह्य अयस्थूण ( अय स्थूण ) तृणकर्ण सदामत्त कम्बलहार बहिर्योग पर्णाढक कर्णाढक पिण्डीजङ्घ वकसस्थ ( वकसक्थ ) विश्रि कुद्रि अजवस्ति मित्रयु रक्षोमुख जङ्घारथ उत्कास कटुक मथक ( मन्थक ) पुष्करद् ( पुष्करसद् ) विषपुट उपरिमेखल क्रोष्टुकमान ( क्रोष्टुमान ) क्रोष्टुपाद क्रोष्टुमाय शीर्षमाय खरप पदक वर्षुक भलन्दन भडिल भण्डिल भडित ॥ **एते यस्कादयः** ॥ २७ ॥

११५१ न गोपवनादिभ्यः २।४।६७॥ गोपवन शेग्रु (शिग्रु) बिन्दु भाजन अश्वावतान श्यामाक (श्योनाक) श्यामक श्यापर्ण ॥ विदाद्यन्तर्गणोऽयम् ४।१।१०४॥ गोपवनादिः ॥ २८ ॥

११५२ तिककितवादिभ्यो द्वन्द्वे २।४।६८॥ तिककितवाः वङ्करभण्डीरथाः उपकलमकाः पफकनरकाः बकनख-गुदपरिणद्धाः उब्जककुभाः लङ्कशान्तमुखाः उत्तरशलङ्कटाः कृष्णाजिनकृष्णसुन्दराः भ्रष्टककपिष्ठलाः अग्निवेशदशेरुकाः ॥ एते तिककितवादयः ॥ २९ ॥

११५३ उपकादिभ्योऽन्यतरस्यामद्वन्द्वे २।४।६९॥ उपक लमक भ्राष्टक कपिष्ठल कृष्णाजिन कृष्णसुन्दर चूडा-रक आडारक गडुक उदङ्क सुधायुक अबन्धक पिङ्गलक पिष्टक सुपिष्ट (सुपिष्ठ) मयूरकर्ण खरीजङ्घ शलाथल पतञ्जल पदञ्जल कठेरणि कुषीतक कशकृत्स्न (काशकृत्स्न) निदाघ कलशीकण्ठ दामकण्ठ कृष्णपिङ्गल कर्णक पर्णक जटिरक बधिरक जन्तुक अनुलोम अनुपद प्रतिलोम अपजग्ध प्रतान अनभिहित कमक वराटक लेखाभ्र कमन्दक पिञ्जूलक वर्णक मसूरकर्ण मदाघ कवन्तक कमन्तक कदामत्त दामकण्ठ ॥ एते उपकादयः ॥ ३० ॥ इति द्वितीयोऽध्यायः ।

---

## तृतीयोऽध्यायः ।

२६६७ भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ३।१।१२॥ भृश शीघ्र चपल मन्द पण्डित उत्सुक सुमनस् दुर्मनस् अभिमनस् उन्मनस् रहस् रोहत् रेहत् संश्चत् तृपत् शश्वत् भ्रमत् वेहत् शुचिस् शुचिवर्चस् अण्डर वर्चस् ओजस् सुरजस् अरजस् ॥ एते भृशादयः ॥ ३१ ॥

२६६८ लोहितादिडाज्भ्यः क्यष् ३।१।१३॥ लोहित चरित नील फेन मद्र हरित दास मन्द ॥ लोहितादि-राकृतिगणः ॥ ३२ ॥

२६७४ सुखादिभ्यः कर्तृवेदनायाम् ३।१।१८॥ सुख दुःख तृप्त कृच्छ्र अस्र आस्र अलीक प्रतीप करुण कृपण सोढ ॥ इत्येतानि सुखादीनि ॥ ३३ ॥

२६७८ कण्ड्वादिभ्यो यक् ३।१।२७॥ कण्डूञ् मन्तु हृणीङ् वल्गु असु [ मनस् ] महीङ् लाट् लेट् इरस् इरज इरञ् दुवस् उषस् वेट् मेधा कुषुभ ( नमस् ) मगध तन्तस् पम्पस् ( पपस् ) सुख दुःख [ भिक्ष चरण चरम अवर ] सपर अरर ( अरर् ) भिषज् भिष्णज् [ अपर आर ] इषुध वरण चुरण तुरण भुरण गद्गद एला केला खेला [ बेला शेला ] लिट् लोट् [ लेखा लेख ] रेखा द्रवस् तिरस् अगद उरस् तरण ( तरिण ) पयस् संभूयस् सम्बर ॥ आकृतिगणोऽयम् ॥ इति कण्ड्वादिः ॥ ३४ ॥

२८९६ नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३।१।१३४॥(१) नन्दिवाशिमदिदूषिसाधिवर्धिशोभिरोचिभ्यो ण्यन्तेभ्यः संज्ञायाम् । नन्दनः वाशनः मदनः दूषणः साधनः वर्धनः शोभनः रोचनः । सहितपिदमः संज्ञायाम् । सहनः तपनः दमनः जल्पनः रमणः दर्पणः संक्रन्दनः संकर्षणः संहर्षणः जनार्दनः यवनः मधुसूदनः विभीषणः लवणः चित्तविनाशनः कुलदमनः [ शत्रुदमनः ] ॥ इति नन्द्यादिः ॥ ३५ ॥ (२) ग्राही उत्साही उद्दासी उद्भासी स्थायी मन्त्री संमर्दी । रक्षश्रुवपशां नौ । निरक्षी निश्रावी निवापी निशायी । याचृव्याहृसंव्याहृव्रजवदवसां प्रतिषिद्धानाम् । अयाची अव्याहारी असंव्याहारी अव्राजी अवादी अवासी । अचामचित्तकर्तृकाणाम् अकारी अहारी अविनायी [ विशायी विषायी ] विशयी विषयी देशे । विशयी विषयी देशः । अभिभावी भूते । अपराधी उपरोधी परिभवी परिभावी ॥ इति ग्राह्यादिः ॥ ३६ ॥ (३) पच वच वप वद चल पत नदट् भषट् प्लवट् चरट् गरट् तरट् चोरट् गाहट् सरट् देवट् [ दोषट् ] जर ( रज ) मर ( मद ) क्षम ( क्षप ) सेव मेष कोप ( कोष ) मेध नर्त व्रण दर्श सर्प [ दम्भ दर्प ] जारभार श्वपच ॥ पचादिराकृतिगणः ॥ ३७ ॥

२९१९ कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम् ३।२।५॥ मूलविभुज नखमुच काकगुह कुमुद महीध्र कुध्र गिध्र ॥ आकृतिगणोऽयम् ॥ इति मूलविभुजादयः ॥ ३८ ॥

२९२९ पार्श्वादिषूपसंख्यानम् ३।२।१५॥ पार्श्व उदर पृष्ठ उत्तान अवमूर्धन् ॥ इति पार्श्वादिः ॥ ३९ ॥

३१७१ भविष्यति गम्यादयः ३।३।३॥ गमी आगमी भावी प्रस्थायी प्रतिरोधी प्रतियोधी प्रतिबोधी प्रतियायी प्रतियोगी ॥ एते गम्यादयः ॥ ४० ॥

३२७२ ॐ संपदादिभ्यः क्विप् (वा.) ३।३।९४॥ संपद् विपद् आपद् प्रतिपद् परिषद् ॥ एते संपदादयः ॥४१॥

३२८१ षिद्भिदादिभ्योऽङ् ३।३।१०४॥ भिदा विदारणे । छिदा द्वैधीकरणे । विदा । क्षिपा । गुहा गिर्योषध्योः श्रद्धा मेधा गोधा । आरा शस्त्र्याम् । हारा । कारा बन्धने । क्षिया । तारा ज्योतिषि । धारा प्रपातने । रेखा चूडा पीडा वपा वसा मृजा । कृपेः संप्रसारणं च । कृपा ॥ इति भिदादिः ॥ ४२ ॥

३१७३ **भीमादयोऽपादाने** ३।४।७४॥ भीम भीष्म भयानक वह चर ( वह चरु ) प्रस्कन्दन प्रतपन ( प्रपतन ) समुद्र स्रुव स्रुक् वृष्टि ( दृष्टि ) रक्षः संकसुक ( शङ्कु सुक ) मूर्ख खलति ॥ **आकृतिगणोऽयम्** ॥ **इति भीमादिः** ॥ ४३ ॥ **इति तृतीयोऽध्यायः** ।

---

## चतुर्थोऽध्यायः ।

४५५ **अजाद्यतष्टाप्** ४।१।४॥ अजा एडका कोकिला चटका अश्वा मूषिका बाला होडा पाका वत्सा मन्दा विलाता पूर्वापिहाणा ( पूर्वापहाणा ) अपरापहाणा । संभस्त्राजिनशणपिण्डेभ्यः फलात् । सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात् । शूद्रा चामहत्पूर्वा जातिः । कुञ्चा उष्णिहा देवविशा ज्येष्ठा कनिष्ठा । मध्यमा पुंयोगेऽपि । मूलान्नञः । दंष्ट्रा ॥ **एतेऽजादयः** ॥४४॥

३०८ **न षट्स्वस्रादिभ्यः** ४।१।१०॥ स्वसृ दुहितृ ननान्दृ यातृ मातृ तिसृ चतसृ ॥ **इति स्वस्रादिः** ॥ ४५ ॥

४९३ **नित्यं सपत्न्यादिषु** ४।१।३५॥ समान एक वीर पिण्ड श्व ( शिरी ) भ्रातृ भद्र पुत्र । दासाच्छन्दसि ॥ **इति समानादिः** ॥ ४६ ॥

४९९ **षिद्गौरादिभ्यश्च** ४।१।४१॥ गौर मत्स्य मनुष्य शृङ्ग पिङ्गल हय गवय मुकय ऋष्य [ पुट तूण ] द्रुण द्रोण हरिण कोकण ( काकण ) पटर उणक [ आमल ] आमलक कुवल बिम्ब बदर फर्करक ( कर्करक ) तर्कार शर्कार पुष्कर शिखण्ड सलद शष्कण्ड सनन्द सुषम सुषव अलिन्द गडुल पाण्डश आढक आनन्द आश्वत्थ सृपाट आखक ( आपच्चिक ) शष्कुल सूर्य ( सूर्मि ) शूर्प सूप यूप ( पूप ) यूथ सूप मेथ बल्लक धातक सल्लक माल्लक मालत साल्वक वेतस वृक्ष ( वृस ) अतस [ उभय ] भृङ्ग मह मठ छेद पेश मेद श्वन् तक्षन् अनडुही अनड्वाही । एषणः करणे । देह देहल काकादन गवादन तेजन रजन लवण औद्गाहमानि आद्गाहमानि गौतम ( गोतम ) [ पारक ] अयस्थूण ( अयःस्थूण ) भौरिकि भौलिकि भौलिङ्गि यान मेघ आलम्बि आलजि आलब्धि आलक्षि केवाल आपक आरट नट टोट नोट मूलाट शातन [ पोतन ] पातन पाठन ( पानठ ) आस्तरण अधिकरण अधिकार अग्रहायणी ( आग्रहायणी ) प्रत्यवरोहिणी [ सेचन ] सुमङ्गलात्संज्ञायाम् । अण्डर सुन्दर मण्डल मन्थर मङ्गल पट पिण्ड [ षण्ड ] उर्द गुर्द शम सूद औड ( आर्द्र ) हृद ( हृद ) पाण्ड [ भाण्डल ] भाण्ड [ लोहाण्ड ] कदर कन्दर कदल तरुण तलुन कल्माष बृहत् महत् [ सोम ] सौधर्म । रोहिणी नक्षत्रे । रेवती नक्षत्रे । विकल निष्कल पुष्कल । कटाच्छ्रोणिवचने । पिप्पल्यादयश्च । पिप्पली हरितकी ( हरीतकी ) कोशातकी शमी वरी शरी पृथिवी क्रोष्टु मातामह पितामह ॥ **इति गौरादिः** ॥ ४७ ॥

५०४ **बह्वादिभ्यश्च** ४।१।४५॥ बहु पद्धति अञ्चति अङ्कति अंहति शकटि ( शकति ) । शक्तिः शस्त्रे । शारि वारि राति राधि [ शाधि ] अहि कपि यष्टि मुनि । इतः प्राण्यङ्गात् । कृदिकारादक्तिनः । सर्वतोऽक्तिन्नर्थादित्येके । चण्ड अराल कृपण कमल विकट विशाल विशङ्कट भरुज ध्वज चन्द्रभागान्नद्याम् ( चन्द्रभागा नद्याम् ) कल्याण उदार पुराण अहन् कोड नख खुर शिखा बाल शफ गुद ॥ **आकृतिगणोऽयम्** । तेन भग गल राग इत्यादि ॥ **इति बह्वादयः** ॥ ४८ ॥

५२८ **शार्ङ्गरवाद्यञो ङीन्** ४।१।७३॥ शार्ङ्गरव कापटव गौग्गुलव ब्राह्मण बैद गौतम कामण्डलेय ब्राह्मणकृतेय [ आनिचेय ] आनिधेय आशोकेय वात्स्यायन मौञ्जायन कैकस काप्य ( काव्य ) शैब्य एहि पर्येहि आश्मरथ्य औदपान अराल चण्डाल वतण्ड । भोगवद्गौरिमतोः संज्ञायां घादिषु [ ६।३।४३ ] नित्यं ह्रस्वार्थम् । नृनरयोर्वृद्धिश्च ॥ **इति शार्ङ्गरवादिः** ॥ ४९ ॥

१२०२ **क्रौड्यादिभ्यश्च** ४।१।८०॥ क्रौडि लाडि व्याडि आपिशलि आपक्षिति चौपयत चैटयत ( वैटयत ) सैकयत बैल्वयत सौधातकि । सूत युवत्याम् । भोज क्षत्रिये । यौतकि कौटि भौरिकि भौलिकि [ शाल्मलि ] शालास्थलि कापिष्ठलि गौकक्ष्य ॥ **इति क्रौड्यादिः** ॥ ५० ॥

१०७६ **अश्वपत्यादिभ्यश्च** ४।१।८४॥ अश्वपति [ ज्ञानपति ] शतपति धनपति गणपति [ स्थानपति यज्ञपति ] राष्ट्रपति कुलपति गृहपति [ पशुपति ] धान्यपति धन्वपति [ बन्धुपति धर्मपति ] सभापति प्राणपति क्षेत्रपति ॥ **इत्यश्वपत्यादिः** ॥ ५१ ॥

१०८० **उत्सादिभ्योऽञ्** ४।१।८६॥ उत्स उदपान विकर विनद महानद महानस महाप्राण तरुण तलुन । बष्कयासे । पृथिवी [ धेनु ] पङ्क्ति जगति त्रिष्टुप् अनुष्टुप् जनपद भरत उशीनर ग्रीष्म पीलुकुण । उदस्थान देशे । पृषदंश भल्लकीय रथंतर मध्यंदिन बृहत् महत् सत्त्वत् कुरु पञ्चाल इन्द्रावसान उष्णिह् ककुभ् सुवर्ण देव ग्रीष्मादच्छन्दसि ॥ **इत्युत्सादिः** ॥ ५२ ॥

१०९८ **बाह्वादिभ्यश्च** ४।१।९६॥ बाहु उपबाहु उपवाकु निवाकु शिवाकु वटाकु उपनिन्दु ( उपविन्दु ) वृषली वृकला चूडा बलाका मूषिका कुशला भगला ( छगला ) ध्रुवका [ धुवका ] सुमित्रा दुर्मित्रा पुष्करसद् अनुहरत् देवशर्मन्

अग्निशर्मन् [ भद्रशर्मन् ] सुशर्मन् कुनामन् ( सुनामन् ) पञ्चन् सप्तन् अष्टन् । अमितौजसः सलोपश्च । सुधावत् उदञ्चु शिरस् माष शराविन् मरीचि क्षेमवृद्धिन् शृङ्खलतोदिन् खरनादिन् नगरमर्दिन् प्राकारमर्दिन् लोमन् अजीगर्त कृष्ण युधिष्ठिर अर्जुन साम्ब गद प्रद्युम्न राम रक्तम् (उदङ्क) उदकः संज्ञायाम् । संभूयोम्भसोः सलोपश्च ॥ **आकृतिगणोऽयम्** ॥ तेन सात्त्वकिः सात्यकिः जाङ्घिः ऐन्दशर्मिः आजधेनविः इत्यादि ॥ **इति बाह्वादयः** ॥ ५३ ॥

**११०१ गोत्रे कुञ्जादिभ्यश्च्फञ्** ।४।१।९८॥ कुञ्ज ब्रध्न शङ्ख भस्मन् गण लोमन् शठ शाक शुण्डा शुभ विपाश् स्कन्द स्कम्भ ॥ **इति कुञ्जादिः** ॥ ५४ ॥

**११०३ नडादिभ्यः फक्** ४।१।९९॥ नड चर (वर) बक मुञ्ज इतिक इतिश उपक ( एक ) लमक शलङ्कु शलङ्कं च । सप्तल वा जप्य तिक । अग्निशर्मन्वृषगणे । प्राण नर सायक दास मित्र द्वीप पिङ्गर पिङ्गल किङ्कर किङ्कल ( कातर ) कातल काश्यप ( कुश्यप ) काश्य काल्य ( काव्य ) अज अमुष्य ( अमुष्म ) कृष्णरणौ ब्राह्मणवासिष्ठे । अमित्र लिगु चित्र कुमार क्रोष्टु क्रोष्टं च । लोह दुर्ग स्तम्भ शिंशपा अग्र तृण शकट सुमनस् सुमत मिमत ऋच् जलंधर अध्वर युगंधर हंसक दण्डिन् हस्तिन् [ पिण्ड ] पञ्चाल चमसिन् सुकृत्य स्थिरक ब्राह्मण चटक बदर अश्वल खरप लङ्क इन्ध अस्त्र कामुक ब्रह्मदत्त उदुम्बर शोण अलोह दण्डप ॥ **इति नडादिः** ॥ ५५ ॥

**११०८ अनृष्यानन्तर्ये बिदादिभ्योऽञ्** ४।१।१०४॥ बिद उर्व ( उर्ब ) कश्यप कुशिक भरद्वाज उपमन्यु किलात कन्दर्प ( किंदर्भ ) विश्वानर ऋषिषेण ( ऋष्टषेण ) ( ऋष्टिषेण ) ऋतभाग हर्यश्व प्रियक आपस्तम्ब कूचवार शरद्वत् शुनक ( शुनक् ) धेनु गोपवन शिग्रु बिन्दु [ भोगक ] भाजन ( शमिक ) अश्वावतान श्यामाक श्यामक ( श्यावलि ) श्यापर्ण हरित किंदास बह्यस्क अर्कजूष ( अर्कलूष ) बध्योग विष्णुवृद्ध प्रतिबोध रचित ( रथीतर ) रथन्तर गविष्ठिर निषाद ( शबर अलस ) मठर ( मृडाकु ) सुपाकु मृदु पुनर्भू पुत्र दुहितृ ननान्दृ । परस्त्री परशुं च ॥ **इति बिदादिः** ॥ ५६ ॥

**११०९ गर्गादिभ्यो यञ्** ४।१।१०५॥ गर्ग वत्स । वाजासे । संकृति अज व्याघ्रपात् विदभृत् प्राचीनयोग ( अगस्ति ) पुलस्ति चमस रेभ अग्निवेश शङ्ख शट शक एक धूम अवट मनस् धनंजय वृक्ष विश्वावसु जरमाण लोहित शंसित बभ्रु वल्गु मण्डु गण्डु शङ्कु लिगु गुहलु मन्तु मङ्क्षु अलिगु जिगीषु मनु तन्तु मनायी सूनु कथक कन्थक ऋक्ष तृक्ष ( वृक्ष ) [ तनु ] तरुक्ष तलुक्ष तण्ड वतण्ड कपिकत ( कपि कत ) कुरुकत अनडुह कण्व शकल गोकक्ष अगस्त्य कण्डिनी यज्ञवल्क पर्णवल्क अभयजात विरोहित वृषगण रहूगण शण्डिल वर्णक ( चणक ) चुलुक मुद्गल मुसल जमदग्नि पराशर जतूकर्ण ( जातूकर्ण ) महित मन्त्रित अश्मरथ शर्कराक्ष पूतिमाष स्थूरा अदरक ( अररक ) एलाक पिङ्गल कृष्ण गोलन्द उलूक तितिक्ष भिषज ( भिषज् ) [ भिष्णज ] भडित भण्डित दल्भ चेकित चिकित्सित देवहू इन्द्रहू एकलु पिप्पलु बृहदग्नि [ सुलोहिन् ] सुलाभिन् उक्थ कुटीगु ॥ **इति** ॥ **गर्गादिः** ॥ ५७ ॥

**१११५ अश्वादिभ्यः फञ्** ४।१।११०॥ अश्व अश्मन् शङ्ख शूद्रक विद पुट रोहिण खर्जूर ( खजूर ) [ खञ्जार वस्त ] पिजूल भडिल भण्डिल भडित भण्डित [ प्रकृत रामोद ] क्षान्त [काश तीक्ष्ण गोलाङ्क अर्क स्वर स्फुट चक्र श्रविष्ठ ] पविन्द पवित्र गोमिन् श्याम धूम धूम्र वाग्मिम् विश्वानर कुट । शप आत्रेये । जन जड खड ग्रीष्म अर्ह कित विशंप विशाल गिरि चपल चुप दासक बैल्य ( बैल्व ) प्राच्य [ धर्म्य ] आनडुह्य । पुंसि जाते । अर्जुन [ प्रहृत ] सुमनस् दुर्मनस् मन ( मनन ) [ प्रान्त ] ध्वन । आत्रेय भरद्वाजे । भरद्वाज आत्रेये । उत्स आतव कितव [ वद धन्य पाद ] शिव खदिर ॥ **इत्यश्वादिः** ॥ ५८ ॥

**१११७ शिवादिभ्योऽण्** ४।१।११२॥ शिव प्रोष्ठ प्रोष्ठिक चण्ड जम्भ भूरि दण्ड कुठार ककुभ् ( ककुभा ) अनभिम्लान कोहित सुख संधि मुनि ककुत्स्थ कहोड कोहड कहूय कहय रोद कपिञ्जल ( कुपिञ्जल ) खञ्जन वतण्ड तृणकर्ण क्षीरहद जलहद परिल ( पथिक ) पिष्ट हैहय [ पार्षिका ] गोपिका कपिलिका जटिलिका बधिरिका मञ्जीरक मजिरक वृष्णिक खञ्जास खञ्जाद खञ्जार खञ्जाल [ कर्मार ] रेख लेख आलेखन विश्रवण रवण वर्तनाक्ष ग्रीवाक्ष [ पिटक विटप ] पिटाक तृक्षाक नभक ऊर्णनाभ जरत्कारु [ पृथा उत्क्षेप ] पुरोहितिका सुरोहितिका सुरोहिका आर्यश्वेत ( अर्यश्वेत ) सुपिष्ट मसुरकर्ण मयूरकर्ण [ खर्जूरकर्ण ] कदूरक तक्षन् ऋष्टिषेण गङ्गा विपाश यस्क लह्य द्रुह्य अयस्थूण तृणकर्ण ( तृण कर्ण ) पर्ण भलन्दन विरूपाक्ष भूमि इला सपत्नी ( इलासपत्नी ) । द्व्यचो नद्याः । त्रिवेणी त्रिवर्णं च ॥ **इति शिवादिः** ॥ **आकृतिगणः** ॥ ५९ ॥

**११२८ शुभ्रादिभ्यश्च** ४।१।१२३॥ शुभ्र विष्ट पुर ( विष्टपुर ) ब्रह्मकृत शतद्वार शलाथल शलाकाभ्रू लेखाभ्रू ( लेखाभ्र ) विकंसा ( विकास ) रोहिणी रुक्मिणी धर्मिणी दिश् शालूक अजबस्ति शकंधि विमातृ विधवा शुक विश देवतर शकुनि शुक्र उग्र ज्ञातल ( शातल ) ( शतल ) बन्धकी सृकण्डु विश्रि अतिथि गोदन्त कुशाम्ब मकष्टु शाताहर, पवष्टुरिक सुनामन् । लक्ष्मणश्यामयोर्वासिष्ठे । गोधा कृकलास अणीव प्रवाहण भरत ( भारत ) भरम मृकण्डु कर्पूर इतर अन्यतर

आलीढ सुदन्त सुदक्ष सुवक्षस् सुदामन् कद्रु तुद अकशाय कुमारिका कुठारिका किशोरिका अम्बिका जिह्माशिन् परिधि वायुदत्त शकल शलाका खडूर कुबेरिका अशोका गन्धपिङ्गला खडोन्मत्ता अनुदृष्टिन् ( अनुदृष्टि ) जरतिन् बलीवर्दिन् विप्र बीज जीव श्वन् अश्मन् अश्व अजिर ॥ **इति शुभ्रादिः ॥ आकृतिगणः** ॥ ६० ॥

**११३३ कल्याण्यादीनामिनङ् च** ४।१।१२६॥ कल्याणी सुभगा दुर्भगा बन्धकी अनुदृष्टि अनुसृति ( अनुसृष्टि ) जरती बलीवर्दी ज्येष्ठा कनिष्ठा मध्यमा परस्त्री ॥ **इति कल्याण्यादिः** ॥ ६१ ॥

**११४५ गृष्ट्यादिभ्यश्च** ४।१।१३६॥ गृष्टि हृष्टि बलि हलि विश्रि कुद्रि अजबस्ति मित्रयु ॥ **इति गृष्ट्यादिः** ॥ ६२ ॥

**११७१ रेवत्यादिभ्यष्ठक्** ४।१।१४६॥ रेवती अश्वपाली मणिपाली द्वारपाली वृकवञ्चिन् वृकबन्धु वृकग्राह कर्णग्राह दण्डग्राह कुकुटाक्ष ( ककुदाक्ष ) चामरग्राह ॥ **इति रेवत्यादिः** ॥ ६३ ॥

**११७७ कुर्वादिभ्यो ण्यः** ४।१।१५१॥ कुरु गर्गर मङ्गुष अजमार रथकार वावदूक । सम्राजः क्षत्रिये । कवि मति (विमति) कापिञ्जलादि वाक् वामरथ पितृमत् इन्द्रजाली एजि वातकि दामोष्णीषि गणकारि कैशोरि कुट शालाका ( शलाका ) मुर पुर एरका शुभ्र अभ्र दर्भ केशिनी । वेनाच्छन्दसि । शूर्पणाय श्यावनाय श्यावरथ श्यावपुत्र सत्यकार वडभीकार पथिकार मूढ शकन्धु शङ्कु शाक शालिन् शालीन कर्तृ हर्तृ इन पिण्डी तक्षन् । वामरथस्य कण्वादिवत्स्वरवर्जम् ॥ **इति कुर्वादिः** ॥ ६४ ॥

**११८० तिकादिभ्यः फिञ्** ४।१।१५४॥ तिक कितव संज्ञाबालशिख ( संज्ञा बाला शिखा ) उरस् शाठ्य सैन्धव यमुन्द रूप्य ग्राम्य नील अमित्र गोकक्ष गोकक्ष्य ( गौकक्ष्य ) कुरु देवरथ तैतिल औरस् कौरव्य भौरिकि भौलिकि चौपयत चैटयत शीकयत क्षैतयत वाजवत चन्द्रमस् शुभ गङ्गा वरेण्य सुयामन् आरब्ध वाह्यक खल्वक वृष लोमक वादन्य उदन्य यज्ञ ॥ **इति तिकादिः** ॥ ६५ ॥

**११८४ वाकिनादीनां कुक्च** ४।१।१५८॥ वाकिन गौधेर कार्कश काक लङ्का । चर्मिवर्मिणोर्नलोपश्च ॥ **इति वाकिनादिः** ॥ ६६ ॥

**११९६ कम्बोजाल्लुक्** ४।१।१७५॥ कम्बोज चोल केरल शक यवन ॥ **इति कम्बोजादिः** ॥ ६७ ॥

**११९९ न प्राच्य(१)भर्गादि(२)यौधेयादिभ्यः** ४।१।१७८॥ (१) भर्ग करूश केकय कश्मीर साल्व सुस्थाल उरस कौरव्य ॥ **इति भर्गादिः** ॥ ६८ ॥ ( २ ) यौधेय शौकेय शौभ्रेय ज्यावाणेय धार्तेय धार्तेय त्रिगर्त भरत उशीनर ॥ **इति यौधेयादिः** ॥ ६९ ॥

**१२४६ भिक्षादिभ्योऽण्** ४।२।३८॥ भिक्षागर्भिणी ( भिक्षा गर्भिणी ) क्षेत्र करीष अङ्गार ( अङ्गार ) चर्मिन् धर्मिन् सहस्र युवति पदाति पद्धति अथर्वन् दक्षिणा ( भूत ) भरत विषय श्रोत्र ॥ **इति भिक्षादिः** ॥ ७० ॥

**१२५६ खण्डिकादिभ्यश्च** ४।२।४५॥ खण्डिका वडवा । क्षुद्रकमालवात् सेनासंज्ञायाम् । भिक्षुक शुक उलूक श्वन् अहन् युगवरत्रा ( युगवरत्र ) हलबन्धा ( हलबन्ध ) ॥ **इति खण्डिकादिः** ॥ ७१ ॥

**१२६० पाशादिभ्यो यः** ४।२।४९॥ पाश तृण धूम वात अङ्गार पाटल पोत गल पिटक पिटाक शकट हल नट वन ॥ **इति पाशादिः** ॥ ७२ ॥

**१२६२ ॐ खलादिभ्य इनिर्वक्तव्यः ॐ** ४।२।५१॥ खल डाक कुटुम्ब शाक कुण्डलिनी ॥ **इति खलादिराकृतिगणः** ॥ ७३ ॥

**१२६४ राजन्यादिभ्यो वुञ्** ४।२।५३॥ राजन्य आनृत वाभ्रव्य शालङ्कायन दैवयातव ( दैवयात् ) [ अव्रीड वरत्रा ] जालंधरायण [ राजायन ] तेलु आत्मकामेय अम्बरीषपुत्र वसाति बैल्ववन शैलूष उदुम्बर तीव्र बैल्वल आर्जुनायन संप्रिय दाक्षि ऊर्णनाभ ॥ **इति राजन्यादिराकृतिगणः** ॥ ७४ ॥

**१२६५ (१)भौरिक्याद्यै(२)षुकार्यादिभ्यो विधलभक्तलौ** ४।२।५४॥ ( १ ) भौरिकी भौलिकी चौपयत चौटयत ( चैटयत ) काणेय वाणिजक वाणिकाज्य ( वालिकाज्य ) सैकयत वैकयत ॥ **इति भौरिक्यादिः** ॥ ७५ ॥ ( २ ) ऐषुकारि सारस्यायन (सारसायन) चान्द्रायण द्व्याक्षायण त्र्याक्षायण औडायन जौलायन खाडायन दासमित्र (दासमित्रि) दासमित्रायण शौद्रायण दाक्षायण शापण्डायन ( शायण्डायन ) तार्क्ष्यायण शौभ्रायण सौवीर [ सौवीरायण ] शपण्ड ( शयण्ड ) शौण्ड शयाण्डि ( शयाण्ड ) वैश्वमानव वैश्वधेनव ( वैश्वधेनव ) नड तुण्डदेव विश्वदेव [ सापिण्डि ] ॥ **इत्यैषुकार्यादिः** ॥७६॥

**१२७२ क्रतूक्थादिसूत्रान्ताट्ठक्** ४।२।६०॥ उक्थ लोकायत न्यास न्याय पुनरुक्त निरुक्त निमित्त द्विपदा ज्योतिष अनुपद अनुकल्प यज्ञ धर्म चर्चा क्रमेतर श्लक्ष ( श्लक्ष्ण )( श्लक्षण ) संहिता पदक्रम संघट ( संघट्ट ) वृत्ति परिषद् संग्रह गण [ गुण ] आयुर्वेद ( आयुर्वेद ) ॥ **इत्युक्थादिः** ॥ ७७ ॥

**१२७३ क्रमादिभ्यो वुन्** ४।२।६१॥ क्रम पद शिक्षा मीमांसा सामन् ॥ **इति क्रमादिः** ॥ ७८ ॥

**१२७५ वसन्तादिभ्यष्ठक्** ४।२।६३॥ वसन्त ग्रीष्म वर्षा शरद् शरत् हेमन्त शिशिर प्रथम गुण ( चरम् ) चरम अनुगुण अथर्वन् अथर्वण ॥ **इति वसन्तादिः** ॥ ७९ ॥

**१२८९ संकलादिभ्यश्च** ४।२।७५॥ संकल पुष्कल उत्तम उडुप उद्वेप उत्पुट कुम्भ निधान सुदक्ष सुदत्त सुभूत सुपूत सुनेत्र सुमङ्गल सुपिङ्गल सूत सिकत पूतिका ( पूतिक ) पूलास कूलास पलाश निवेश ( गवेश) (गवेष) गम्भीर इतर आन् अहन् लोमन् वेमन् चरण (वरुण) बहुल सद्योज अभिषिक्त गोभृत् राजभृत् भल्ल मल्ल माल ॥ **इति संकलादिः** ॥८०॥

**१२९१ सुवास्त्वादिभ्योऽण्** ४।२।७७॥ सुवास्तु ( सुवस्तु ) वर्णू भण्डु खण्डु ( सेवानिन् ) सेवालिन् कर्पूरिन् शिखण्डिन् गर्त कर्कश शकटीकर्ण (शकटी कर्ण) कृष्णकर्ण [कर्क] कर्कन्धुमती गोह अहिसक्थ ॥ **इति सुवास्त्वादिः** ॥८१॥

**१२९४ वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्णसुतंगमप्रगदिन्वराहकुमुदादिभ्यः** ४।२।८०॥(१) अरीहण (अहीरण) द्रुघण द्रुहण भलग (भगल) उलन्द किरण सांपरायण क्रौष्ट्रायन (क्रोष्ट्रायण) औष्ट्रायण त्रैगर्तायन मैत्रायण भास्त्रायण वैसतायण (वैमतायन) गौमतायन सौमतायन (सौमनायन) सौसायन धौमतायन सौमायन ऐन्द्रायण कौद्रायण (कौन्द्रायण) खाडायन शाण्डिल्यायन रायस्पोष विपथ विपाश उद्दण्ड उदञ्चन खाण्डवीरण वीरण काशकृत्स्न ( कशकृत्स्न ) जाम्बवत शिंशपा रैवत (रेवत) विल्व सुयज्ञ शिरीष बधिर जम्बु खदिर सुशर्मन् ( सशर्मन् ) (भलतृ) दलतृ भलन्दन खण्डु कलन (कनल) ( वालन ) यज्ञदत्त ॥ **इत्यरीहणादिः** ॥८२॥(२) कृशाश्व अरिष्ट अरिश्म वेश्मन् विशाल लोमश रोमश लोमक रोमक शबल कूट वर्चल सुवर्चल सुकर सूकर प्रातर ( प्रतर ) सदृश पुरग पुराग सुख (मुख) धूम अजिन विनत अवनत कुविद्यास (कुविद्यास) पराशर अरुस् अयस् मौद्गल्याकर ( मौद्गल्युकर ) ॥ **इति कृशाश्वादिः** ॥ ८३ ॥ ( ३ ) ऋश्य ( ऋष्य ) हृश्य न्यग्रोध शर निलीन [ निवास निवात ] निधान निबन्धन ( निबन्ध ) [ विबद्ध ] परिगूढ [ उपगूढ ] असनि सित मत् वेश्मन् उत्तराश्मन् अश्मन् स्थूल बाहु खदिर शर्करा अनडुह ( अनहुह् ) अरडु परिवंश वेणु वीरण (वरिण ) खण्ड दण्ड परिवृत्त कर्दम अंशु ॥ **इत्यृश्यादिः** ॥८४॥ ( ४ ) कुमुद शर्करा न्यग्रोध इक्कट संकट कंकट गर्त बीज परिवाप निर्यास शकट कच मधु शिरीष अश्व अश्वत्थ बल्वज यवास कूप विकङ्कत दशग्राम ॥ **इति कुमुदादिः** ॥ ८५ ॥ ( ५ ) काश पाश अश्वत्थ पलाश पीयूक्षा चरण वास नड वन कर्दम कच्छूल कङ्कट गुह बिस तृण कर्पूर बर्बर मधुर ग्रह कपित्थ जतु सीपाल ॥ **इति काशादिः** ॥ ८६ ॥ ( ६ ) तृण नड मूल वन पर्ण वर्ण वराण बिल ( विल ) पुल फल अर्जुन अर्ण सुवर्ण बल चरण बुस ॥ **इति तृणादिः** ॥ ८७ ॥ ( ७ ) प्रेक्षा फलका ( हलका ) बन्धुका ध्रुवका क्षिपका न्यग्रोध इक्कट कङ्कट संकट कट कूप बुक पुक पुट मह परिवाप यवाष ध्रुवका गर्त कूपक हिरण्य ॥ **इति प्रेक्षादिः** ॥ ८८ ॥( ८ ) अश्मन् ( अश्मन् ) यूथ ऊष मीन मद ( नद ) दर्भ वृन्द गुद खण्ड नग शिखा कोट पाम कन्द कान्द कुल गह्व गुड ( गुण ) कुण्डल पीन गुह ॥ **इत्यश्मादिः** ॥ ८९ ॥ ( ९ ) सखि अग्निदत्त वायुदत्त सखिदत्त [ गोपिल ] भल्लपाल ( भल्ल पाल ) चक्र चक्रवाक छगल अशोक करवीर वासव वीर पूर वज्र कुशीरक शीहर ( सीहर ) सरक सरस समर समल सुरस रोह तमाल कदल सप्तल ॥ **इति सख्यादिः** ॥ ९० ॥ ( १० ) संकाश कपिल कश्मीर [समीर] सूरसेन सरक सूर । सुपन्थिन्पन्थ च । यूप ( यूथ ) अंश अङ्ग नासा पलित अनु नाश (कनुनाश) अश्मन् कूट मलिन दश कुम्भ शीर्ष चिरन्त ( विरत ) समल सीर पञ्जर मन्थ नल रोमन् लोमन पुलिन सुपरि कटिप सकर्णक वृष्टि तीर्थ अगस्ति विकर नासिका ॥ **इति संकाशादिः** ॥९१॥ बल चुल नल दल वट लकुल उरल पुख (पुल) मूल उलडुल ( उल डुल ) वन कुल (वनकुल) ॥ **इति बलादिः** ॥ ९२ ॥ ( १२ ) तुक्ष पक्ष तुष कुण्ड अण्ड कम्बलिका वलिक (बलिक) चित्र अस्ति । पथः पन्थ च । कुम्भ सीरक सरक सकल सरस समल अतिश्वन् रोमन् लोमन् हस्तिन् मकर लोमक शीर्ष निवात पाक सहक ( सिंहक ) अङ्कुश सुवर्णक हंसक हिंसक कुत्स बिल (विल) खिल यमल हस्त कला सकर्णक ॥ **इति पक्षादिः** ॥९३॥ (१३) कर्ण वसिष्ठ अर्क अर्कलूष द्रुपद आनडुह्य पाञ्चजन्य स्फिग (स्फिज्) कुम्भी कुन्ती जित्वन् जीवन्त कुलिश आण्डीवत् (आण्डीवत) जव जैत्र आकन (आनक) ॥ **इति कर्णादिः** ॥ ९४ ॥ (१४) सुतंगम मुनिचित विप्रचित्त महाचित्त महापुत्र स्वन श्वेत गडिक ( खडिक ) शुक्र विग्र (विप्र) बीजावापिन् (बीजवापिन् ) (बीज वापिन् ) अर्जुन श्वन् अजिर जीव (खण्डित) खण्डिन कर्ण विग्रह ॥ **इति सुतंगमादिः** ॥ ९५ ॥ ( १५ ) प्रगदिन् मगदिन् मददिन् कविल खण्डित गदित चूडार मडार मन्दार कोविदार ॥ **इति प्रगद्यादिः** ॥ ९६ ॥ ( १६ ) वराह पलाशा ( पलाश ) शेरिष (शेरीष) ( शिरीष ) पिनद्ध निबद्ध बलाह स्थूल विदग्ध [विजग्ध] विभग्न [निमग्न ] बाहु खदिर शर्करा ॥ **इति वराहादिः** ॥ ९७ ॥ ( १७ ) कुमुद गोमथ रथकार दशग्राम अश्वत्थ शाल्मलि [ शिरीष ] मुनिस्थल कुण्डल (कुट) कूट मधुकर्ण घासकुन्द शुचिकर्ण ॥ **इति कुमुदादिः** ॥ ९८ ॥

**१३०३ वरणादिभ्यश्च** ४।२।८२॥ वरणा शृङ्गी शाल्मलि शुण्डि (शुण्डी) शयाण्डी पर्णी ताम्रपर्णी गोद आलिङ्ग्यायन जालपदी ( जानपदी ) जम्बू पुष्कर चम्पा पम्पा वल्गु उज्जयिनी गया मथुरा तक्षशिला उरसा गोमती वलभी ॥ **इति वरणादिः** ॥ ९९ ॥

**१३०७ मध्वादिभ्यश्च** ४।२।८६॥ मधु बिस स्थाणु वेणु कर्कन्धु शमी करीर हिम किशरा शर्याण मरुत् वार्दाली शर इष्टका आसुति शक्ति आसन्दी शकल शलाका आमिषी इक्षु रोमन् रुष्टि रुप्य तक्षशिला कड (खड) वट वेट ॥ **इति मध्वादिः ॥ १०० ॥**

**१३११ उत्करादिभ्यश्छः** ४।२।९०॥ उत्कर संफल शफर पिप्पल पिप्पलीमूल अश्मन् सुवर्ण खलाजिन तिक कितव अणक त्रैवण पिचुक अश्वत्थ काश क्षुद्र भस्त्रा शाल जन्या अजिर चर्मन् उत्क्रोश क्षान्त खदिर शूर्पणाय श्यावनाय नैवाकव तृण वृक्ष शाक पलाश विजिगीषा अनेक आतप फल संपर अर्क गर्त अग्नि वैराणक इडा अरण्य निशान्त पर्ण (पण) नीचायक शंकर अवरोहित क्षार विशाल वेत्र अरीहण खण्ड वातागार मन्त्रणार्ह इन्द्रवृक्ष नितान्तवृक्ष (नितान्तावृक्ष) आर्द्रवृक्ष ॥ **इत्युत्करादिः ॥ १०१ ॥**

**१३१२ नडादीनां कुक्च** ४।२।९१॥ नड प्लक्ष बिल्व वेणु वेत्र वेतस इक्षु काष्ठ कपोत तृण । कुञ्चा ह्रस्वत्वं च । तक्षन्नलोपश्च ॥ **इति नडादिः ॥ १०२ ॥**

**१३१७ कत्र्यादिभ्यो ढकञ्** ४।२।९५॥ कत्रि उम्भि पुष्कर पुष्कल मोदन कुम्भी कुण्डिन नगरी माहिष्मती वर्मती उख्या ग्राम । कुल्याया यलोपश्च ॥ **इति कत्र्यादिः ॥ १०३ ॥**

**१३१९ नद्यादिभ्यो ढक्** ४।२।९७॥ नदी मही वाराणसी श्रावस्ती कौशाम्बी वनकौशाम्बी ( वनकोशाम्बी ) काशपरी काशफारी ( काशफरी ) खादिरी पूर्वनगरी पाठा माया शाल्वा दार्वा ( शाल्वदार्वा ) सेतकी । वडवाया वृषे ॥ **इति नद्यादिः ॥ १०४ ॥**

**१३३३ प्रस्थोत्तरपदपलद्यादिकोपधादण्** ४।२।११०॥ पलदी परीषद् रोमक वाहीक कलकीट बहुकीट जालकीट ( जालकटि ) कमलकीट कमलकीकर कमलभिदा गौष्ठी नैकती परिखा शूरसेन गोमती पटच्चर उदपान यकृल्लोम ॥ **इति पलद्यादिः ॥ १०५ ॥**

**१३४२ काश्यादिभ्यष्ठञ्ञिठौ** ४।२।११६॥ काशि चेदि ( वेदि ) सांयाति संवाह अच्युत मोदमान शकुलाद हस्तिकर्षू कुनामन् ( हिरण्या ) हिरण्य करण गोवासन भारङ्गी अरिंदम अरित्र देवदत्त दशग्राम शौवावतान युवराज उपराज देवराज मोदन सिन्धुमित्र दासमित्र सुधामित्र सोममित्र छागमित्र साधमित्र । ( सधमित्र ) । आपदादिपूर्वपदात्कालान्तात् । आपद् ऊर्ध्व तत् ॥ **इति काश्यादिः ॥ १०६ ॥**

**१३५३ धूमादिभ्यश्च** ४।२।१२७॥ धूम षण्ड ( षडण्ड ) शशादन अर्जुनाव माहकस्थली आनकस्थली माहिषस्थली मानस्थली अट्टस्थली मद्रकस्थली समुद्रस्थली दाण्डायनस्थली राजस्थली विदेह राजगृह सात्रासाह शष्प मित्रवर्ध्र (मित्रवर्ध) (मज्जाली) भक्षाली मद्रकूल आजीकूल द्वाहव त्र्याहव (त्र्याहाव) त्र्यहव (त्र्याहव) (त्र्याहाव) संस्फाय बर्बर वर्ज्य गर्त आनर्त माठर पाथेय घोष पल्ली आराज्ञी धार्तराज्ञी आवय तीर्थ । कूलात्सौवीरेषु । समुद्रान्नावि मनुष्ये च । (समुद्रान्नावि मनुष्ये च) कुक्षि अन्तरीप द्वीप अरुण (अरण) उज्जयनी पट्टार दक्षिणापथ साकेत ॥ **इति धूमादिः ॥ १०७ ॥**

**१३५९ कच्छादिभ्यश्च** ४।२।१३३॥ कच्छ सिन्धु वर्ण वर्णु गन्धार मधुमत् कम्बोज कश्मीर साल्व कुरु अनुशण्ड (अनुषण्ड) द्वीप अनूप अजवाह विजापक कलूतर रङ्कु ॥ **इति कच्छादिः ॥ १०८ ॥**

**१३६४ गहादिभ्यश्च** ४।२।१३८॥ गह अन्तस्थ सम विषम मध्य 'मध्यंदिन चरणे' उत्तम अङ्ग वङ्ग मगध पूर्वपक्ष अपरपक्ष अधमशाख उत्तमशाख एकशाख समानशाख समानग्राम एकग्राम एकवृक्ष एकपलाश इष्वग्र इष्वनीक अवस्यन्दन कामप्रस्थ शाडिकाडायनि (खाडायन) काठेरणि लावेरणि सौमित्रि शैशिरि (शौशिरि)आसुत (आसुत्) दैवशर्मि श्रौति आहिंसि आमित्रि व्याडि वैजि आध्यश्वि आनृशसि ( आनृशंसि) शौङ्गि आग्निशर्मि भौजि वाराटकि (वराटकी) वाल्मिकि ( वाल्मीकि ) क्षेमवृद्धि आश्वत्थि औद्गाहमानि ऐकविन्दवि दन्ताग्र हंस तत्वग्र ( तन्त्वग्र ) उत्तर अन्तर ( अनन्तर) मुखपार्श्वतसोर्लोपः । जनपरयोः कुक्च देवस्य च । वेणुकादिभ्यश्छण् ॥ **इति गहादिः ॥ आकृतिगणः ॥ १०९ ॥**

**१३८९ संधिवेलाद्यृतुनक्षत्रेभ्योऽण्** ४।३।१६॥ संधिवेला संध्या अमावास्या त्रयोदशी चतुर्दशी पञ्चदशी पौर्णमासी प्रतिपत् । संवत्सरात्फलपर्वणोः ॥ **इति संधिवेलादिः ॥ ११० ॥**

**१४३१ दिगादिभ्यो यत्** ४।३।५४॥ दिश् वर्ग पूग (पूगा) गण पक्ष धाय्य मित्र मेधा अन्तर पथिन् रहस् अलीक उखा साक्षिन् देश आदि अन्त मुख जघन मेघ यूथ । उदकात्संज्ञायाम् । ञाय ( न्याय ) वंश वेश काल आकाश ॥ **इति दिगादिः ॥ १११ ॥**

**॥परिमुखादिभ्यश्च॥** ४।३।५९॥ परिमुख परिहनु पर्योष्ठ पर्युलूखल परिसीर उपसीर उपस्थूण उपकलाप अनुपथ अनुपद अनुगङ्ग अनुतिल अनुसीत अनुसाय अनुसीर अनुमाष अनुयव अनुयूप अनुवंश प्रतिशाख ॥ **इति परिमुखादिः ॥ ११२ ॥**

१४३९ ॐ **अध्यात्मादिभ्यश्च** ॐ ४।३।६०॥ अध्यात्म अधिदेव अधिभूत इहलोक परलोक ॥ **इत्यध्यात्मादिः ॥ आकृतिगणः ॥ ११३ ॥**

१४५४ **अणृगयनादिभ्यः** ४।३।७३॥ ऋगयन पदव्याख्यान छन्दोमान छन्दोभाषा छन्दोविचिति न्याय पुनरुक्त निरुक्त व्याकरण निगम वास्तुविद्या क्षत्रविद्या अङ्गविद्या विद्या उत्पाद उत्पात उद्याव संवत्सर मुहूर्त उपनिषद् निमित्त शिक्षा भिक्षा ॥ **इत्यृगयनादिः ११४ ॥**

१४५७ **शुण्डिकादिभ्योऽण्** ४।३।७६॥ शुण्डिक कृकण कृपण स्थण्डिल उदपान उपल तीर्थ भूमि तृण पर्ण ॥ **इति शुण्डिकादिः ॥ ११५ ॥**

१४७४ **शण्डिकादिभ्यो ञ्यः** ४।३।९२॥ शण्डिक सर्वसेन सर्वकेश शक शट रक शङ्ख बोध ॥ **इति शण्डिकादिः ॥ ११६ ॥**

१४७५ **(१)सिन्धु(२)तक्षशिलादिभ्योऽणञौ** ४।३।९३॥ (१) सिन्धु वर्णु मधुमत् कम्बोज साल्व कश्मीर गन्धार किष्किन्धा उरसा दरद ( दरद् ) गन्दिका ॥ **इति सिन्ध्वादिः ॥ ११७ ॥** ( २ ) तक्षशिला वत्सोद्धरण कैमेंदुर ग्रामणी छगल क्रोष्टुकर्ण सिंहकर्ण संकुचित किंनर काण्डधार पर्वत अवसान बर्बर कंस ॥ **इति तक्षशिलादिः ॥ ११८ ॥**

१४८८ **शौनकादिभ्यश्छन्दसि** ४।३।१०६॥ शौनक वाजसनेय शार्ङ्गरव शापेय शाष्पेय खाडायन स्तम्भ स्कन्ध (स्तम्भस्कन्ध) देवदर्शन रज्जभार रज्जुकण्ठ कठशाठ कषाय तल दण्ड पुरुषांसक अश्वपेज ॥ **इति शौनकादिः ॥११९॥**

१५०० **कुलालादिभ्यो वुञ्** ४।३।११८॥ कुलाल वरुड चाण्डाल निषाद कर्मार सेना सिरिन्ध्र (सिरिन्ध्रि) सिरिध्रि सैरिन्ध्र देवराज पर्षत् ( परिषत् ) वधू मधु रुहू रुरु रुद्र अनडुह् ब्रह्मन् कुम्भकार श्वपाक वैजवापि ॥ **इति कुलालादिः ॥१२०॥**

१५१३ **रैवतिकादिभ्यश्छः** ४।३।१३१॥ रैवतिक स्वापिशि क्षैमवृद्धि गौरग्रीव ( गौरग्रीवि ) औदमेघि औदवापि बैजवापि ॥ **इति रैवतिकादिः ॥ १२१ ॥**

१५१७ **बिल्वादिभ्योऽण्** ४।३।१३५॥ बिल्व व्रीहि काण्ड मुद्ग मसूर गोधूम इक्षु वेणु गवेधुका कर्पासी पाटली (ककन्धु) कर्कन्धू कुटीर ॥ **इति बिल्वादिः ॥ १२२ ॥**

१५२२ **पलाशादिभ्यो वा** ४।३।१४०॥ पलाश खदिर शिंशपा स्पन्दन पूलाक करीर शिरीष यवास विकङ्कत ॥ **इति पलाशादिः ॥ १२३ ॥**

१५२३ **नित्यं वृद्धशरादिभ्यः** ४।३।१४३॥ शर दर्भ मृद् ( मृत् ) कुटी तृण सोम बल्वज ॥ **इति शरादिः ॥ १२४ ॥**

१५३१ **तालादिभ्योऽण्** ४।३।१५१॥ तालाद्धनुषि । बार्हिण इन्द्रालिश इन्द्रादृश इन्द्राशिष इन्द्रायुध चय श्यामाक पीयूक्षा ॥ **इति तालादिः ॥ १२५ ॥**

१५३३ **प्राणिरजतादिभ्योऽञ्** ४।३।१५३॥ रजत सीस लोह उदुम्बर नीप दारु रोहितक (रोहितक) बिभीतक पीतदारु तीव्रदारु त्रिकण्टक कण्टकार ॥ **इति रजतादिः ॥ १२६ ॥**

१५४३ **प्लक्षादिभ्योऽण्** ४।३।१६३॥ प्लक्ष न्यग्रोध अश्वत्थ इङ्गुदी शिग्रु रुरु कक्षतु बृहती ॥ **इति प्लक्षादिः ॥ १२७ ॥**

१५४७ **हरीतक्यादिभ्यश्च** ४।३।१६६॥ हरीतकी कोशातकी नखरजनी शष्कण्डी दाडी दोडी श्वेतपाकी अर्जुनपाकी द्राक्षा काला ध्वाक्षा गभीका कण्टकारिका पिप्पली चिम्पा ( चिञ्चा ) शेफालिका ॥ **इति हरीतक्यादिः ॥ १२८ ॥**

१५४९ ॐ **माशब्दादिभ्य उपसंख्यानम्** ॐ ४।४।१॥ माशब्दः नित्यशब्दः कार्यशब्दः ॥ **इति माशब्दादिः ॥ १२९ ॥**

१५५० ॐ **आहौ प्रभूतादिभ्यः** ॐ ४।४।१॥ प्रभूत पर्याप्त ॥ **इति प्रभूतादिः ॥ १३० ॥**

१५५० ॐ **पृच्छतौ सुस्नातादिभ्यः** ॐ ४।४।१॥ सुस्नात सुखरात्रि सुखशयन ॥ **इति सुस्नातादिः ॥ १३१ ॥**

१५५० ॐ **गच्छतौ परदारादिभ्यः** ॐ ४।४।१॥ परदार गुरुतल्प ॥ **इति परदारादिः ॥ १३२ ॥**

१५५९ **पर्पादिभ्यः ष्ठन्** ४।४।१०॥ पर्प अश्व अश्वत्थ रथ जाल न्यास व्याल । पादः पच्च ॥ **इति पर्पादिः ॥ १३३ ॥**

१५६३ **वेतनादिभ्यो जीवति** ४।४।१२॥ वेतन वाहन अर्धवाहन ( अर्धवाह ) धनुर्दण्ड जाल वेश उपवेश प्रेषण उपवस्ति सुख शय्या शक्ति उपनिषद् उपदेश स्फिज् (स्फिज) पाद उपस्थ उपस्थान उपहस्त ॥ **इति वेतनादिः ॥१३४॥**

१५६६ **हरत्युत्सङ्गादिभ्यः** ४।४।१५॥ उत्सङ्ग उडुप उत्पूत (उत्पुत) उत्पन्न उत्पुट पिटक पिटाक ॥ **इत्युत्सङ्गादिः ॥ १३५ ॥**

१५६७ **भस्त्रादिभ्यः ष्ठन्** ४।४।१६॥ भस्त्रा भरट भरण शीर्षभार शीर्षेभार अंसभार अंसेभार ॥ **इति भस्त्रादिः** ॥ १३६ ॥

१५७० **निर्वृत्तेऽक्षद्यूतादिभ्यः** ४।४।१९॥ अक्षद्यूत [ जानुप्रहृत ] ( जानूप्रहृत ) जङ्घाप्रहृत जङ्घाप्रहत पादस्वेदन कण्टकमर्दन गतानुगत गतागत यातोपयात अनुगत ॥ **इत्यक्षद्यूतादिः** ॥ १३७ ॥

१५९९ **अण्महिष्यादिभ्यः** ४।४।४८॥ महिषी प्रजापति प्रजावती प्रलेपिका विलेपिका अनुलेपिका पुरोहिता (पुरोहित) मणिपाली अनुवारक [ अनुचारक ] होतृ यजमान ॥ **इति महिष्यादिः** ॥ १३८ ॥

१६०४ **किसरादिभ्यः ष्ठन्** ४।४।५३॥ किसर नरद नलद स्थागल तगर गुग्गुलु उशीर हरिद्रा हरिद्रु पर्णी ( पर्णी ) ॥ **इति किसरादिः** ॥ १३९ ॥

१६१३ **छत्रादिभ्यो णः** ४।४।६२॥ छत्र शिक्षा प्ररोहस्था बुभुक्षा चुरा तितिक्षा उपस्थान कृषि कर्मन् विश्वधा तपस् सत्य अनृत विशिखा ( विशिका ) विशिका भक्षा उदस्थान पुरोडा विक्षा चुक्षा मन्द्र ॥ **इति छत्रादिः** ॥ १४० ॥

१६५२ **प्रतिजनादिभ्यः खञ्** ४।४।९९॥ प्रतिजन इदंयुग संयुग समयुग परयुग परकुल परस्यकुल अमुष्यकुल सर्वजन विश्वजन महाजन पञ्चजन ॥ **इति प्रतिजनादिः** ॥ १४१ ॥

१६५५ **कथादिभ्यष्ठक्** ४।४।१०२॥ कथा विकथा विश्वकथा संकथा वितण्डा कुष्टविद् ( कुष्टविद् ) जनवाद जनेवाद जनोवाद वृत्ति संग्रह गुणगण आयुर्वेद ॥ **इति कथादिः** ॥ १४२ ॥

१६५६ **गुडादिभ्यष्ठञ्** ४।४।१०३॥ गुड कुल्माष सक्तु अपूप मांसौदन इक्षु वेणु सङ्ग्राम संघात संक्राम संवाह प्रवास निवास उपवास ॥ **इति गुडादिः** ॥ १४३ ॥

इति चतुर्थोऽध्यायः ।

---

## पञ्चमोऽध्यायः ।

१६६३ **उगवादिभ्यो यत्** ५।१।२॥ गो हविस् अक्षर विष बर्हिस् अष्टका स्खदा ( स्खदा ) युग मेधा ( स्रुच ) स्रुच् । नाभि नभं च । शुनः संप्रसारणं वा च दीर्घत्वं, तत्संनियोगेन चान्तोदात्तत्वम् । ऊधसोऽनङ् च । कूप खद दर खर असुर अध्वन् ( अध्वन ) क्षर वेद बीज दीस दास ( दीप्त ) **इति गवादिः** ॥ १४४ ॥

१६६५ **विभाषा हविरपूपादिभ्यः** ५।१।४॥ अपूप तण्डुल अभ्युष ( अभ्यूष ) अभ्योष अवोष अभ्येष पृथुक ओदन सूप पूप किण्व प्रदीप मुसल कटक कर्णवेष्टक इर्गल (ईर्गल) अर्गल। अन्नविकारेभ्यश्च । यूप स्थूणा दीप अश्व पत्र ॥ **इत्यपूपादिः** ॥ १४५ ॥

१६८३ **असमासे निष्कादिभ्यः** ५।१।२०॥ निष्क पण पाद माष वाह द्रोण षष्टि ॥ **इति निष्कादिः** ॥ १४६ ॥

१७०५ **गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत्** ५।१।३९॥ अश्व अश्मन् गण ऊर्णा ( उर्म ) उमा भङ्गा क्षण ( गङ्गा ) वर्षा वसु ॥ **इत्यश्वादिः** ॥ १४७ ॥

१७१६ **तद्धरति वहत्यावहति भाराद्वंशादिभ्यः** ५।१।५०॥ वंश कुटज बल्वज (बल्वज) मूल स्थूणा (स्थूण ) अक्ष अश्मन् अश्व श्लक्ष्ण इक्षु खट्वा ॥ **इति वंशादिः** ॥ १४८ ॥

१७२९ **छेदादिभ्यो नित्यम्** ५।१।६४॥ छेद भेद द्रोह दोह नर्ति ( नर्त ) कर्ष तीर्थ संप्रयोग विप्रयोग प्रयोग विप्रकर्ष प्रेषण संप्रश्न विप्रश्न विकर्ष प्रकर्ष । विराग विरङ्गं च ॥ **इति छेदादिः** ॥ १४९ ॥

१७३१ **दण्डादिभ्यो यत्** ५।१।६६॥ दण्ड मुसल मधुपर्क कशा अर्घ मेघ मेधा सुवर्ण उदक वध युग गुहा भाग इभ भङ्ग ॥ **इति दण्डादिः** ॥ १५० ॥

१७५८ ❀ **महानाम्न्यादिभ्यः षष्ठ्यन्तेभ्य उपसंख्यानम्** ❀ ५।१।९४॥ महानाम्नी आदित्यव्रत गोदान ॥ **इति महानाम्न्यादिः** ॥ १५१ ॥

१७५८ ❀ **अवान्तरदीक्षादिभ्यो डिनिर्वक्तव्यः** ❀ ५।१।९४॥ अवान्तरदीक्षा तिलव्रत देवव्रत ॥ **इत्यवान्तर-दीक्षादिः** ॥ १५२ ॥

१७६१ **व्युष्टादिभ्योऽण्** ५।१।९७॥ व्युष्ट नित्य निष्क्रमण प्रवेशन उपसंक्रमण तीर्थ आस्तरण सङ्ग्राम संघात ॥ **इति व्युष्टादिः** ॥ १५३ ॥

❀ **अग्निपदादिभ्य उपसंख्यानम्** ❀ ५।१।९७॥ अग्निपद पीलुपद (पीलुमूल) प्रवास उपवास ॥ **इत्यग्निपदादिराकृतिगणः** ॥ १५४ ॥

१७६५ **तस्मै प्रभवति संतापादिभ्यः** ५।१।१०१॥ संताप संनाह संग्राम संयोग संपराय संवेशन संपेष निष्पेष सर्ग निसर्ग विसर्ग उपसर्ग प्रवास उपवास संघास संवेष संवास संमोदन सक्तु । मांसौदनाद्विगृहीतादपि ॥ **इति संतापादिः** ॥ १५५ ॥

१७६९ ॐ तदप्रकरणे उपवस्त्रादिभ्य उपसंख्यानम् ॐ ५।१।१०५॥ उपवस्तृ (उपवस्त्र) प्राशितृ चूडा श्रद्धा ॥ इत्युपवस्त्रादिः ॥ १५६ ॥

१७७४ अनुप्रवचनादिभ्यश्छः ५।१।१११॥ अनुप्रवचन उत्थापन उपस्थापन संवेशन प्रवेशन अनुप्रवेशन अनुवासन अनुवचन अनुवाचन अन्वारोहण प्रारम्भण आरम्भण आरोहण ॥ इत्यनुप्रवचनादिः ॥ १५७ ॥

१७७४ ॐ स्वर्गादिभ्यो यद्वक्तव्यः ॐ ५।१।१११॥ स्वर्ग यशस् आयुस् काम धन ॥ इति स्वर्गादिः ॥ १५८ ॥

१७७४ ॐ पुण्याहवाचनादिभ्यो लुग्वक्तव्यः ॐ ५।१।१११॥ पुण्याहवाचन स्वस्तिवाचन शान्तिवाचन ॥ इति पुण्याहवाचनादिः ॥ १५९ ॥

१७८४ पृथ्वादिभ्य इमनिज्वा ५।१।१२२॥ पृथु मृदु महत् पटु तनु लघु बहु साधु आशु उरु गुरु बहुल खण्ड दण्ड चण्ड अकिंचन बाल होड पाक वत्स मन्द स्वादु ह्रस्व दीर्घ प्रिय वृष ऋजु क्षिप्र क्षुद्र अणु ॥ इति पृथ्वादिः ॥ १६० ॥

१७८७ वर्णदृढादिभ्यः ष्यञ्च ५।१।१२३॥ दृढ वृढ परिवृढ भृश कृश वक्र शुक्र चुक्र आम्र कृष्ट लवण ताम्र शीत उष्ण जड बधिर पण्डित मधुर मूर्ख मूक स्थिर । वेर्यातलातमतिमनः शारदानाम् । समो मतिमनसोः । जवन ॥ इति दृढादिः ॥ १६१ ॥

१७८८ गुणवचनब्राह्मणादिभ्यः कर्मणि च ५।१।१२४॥ ब्राह्मण वाडव माणव । अर्हतो नुम्च । चोर धूर्त आराधय विराधय अपराधय उपराधय एकभाव द्विभाव त्रिभाव अन्यभाव अक्षेत्रज्ञ संवादिन् संवेशिन् संभाषिन् बहुभाषिन् शीर्षघातिन् विघातिन् समस्थ विषमस्थ परमस्थ मध्यमस्थ अनीश्वर कुशल चपल निपुण पिशुन कुतूहल क्षेत्रज्ञ निश्न बालिश अलस दुःपुरुष (दुष्पुरुष) कापुरुष राजन् गणपति अधिपति गडुल दायाद विशस्ति विषम विपात निपात । सर्ववेदादिभ्यः स्वार्थे । चतुर्वेदस्योभयपदवृद्धिश्च । शौटीर ॥ आकृतिगणोऽयम् ॥ इति ब्राह्मणादिः ॥ १६२ ॥

१७८९ ॐ चतुर्वेदादिभ्य उभयपदवृद्धिश्च ॐ ५।१।१२४॥ चतुर्वेद चतुर्वर्ण चतुराश्रम सर्वविद्य त्रिलोक त्रिस्वर षड्गुण सेना अनन्तर संनिधि समीप उपमा सुख तदर्थ इतिह मणिक ॥ इति चतुर्वेदादिः ॥ १६३ ॥.

१७९३ पत्यन्तपुरोहितादिभ्यो यक् ५।१।१२८॥ पुरोहित । राजासे । ग्रामिक (पिण्डित) पिण्डिक सुहित बालमन्द बालमद (बाल मन्द) खण्डिक दण्डिक वर्मिक कर्मिक धर्मिक शितिक ( शीलिक ) सूतिक मूलिक तिलक अञ्जलिक ( अन्तलिक) रूपिक ऋषिक पुत्रिक अविक छत्रिक पर्षिक पथिक चर्मिक प्रतिक सारथि आस्थिक (आस्तिक) सूचिक संरक्ष सूचक (संरक्षसूचक) नास्तिक अजानिक शाकर नागर चूडिक ॥ इति पुरोहितादिः ॥ १६४ ॥

१७९४ प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ५।१।१२९॥ उद्गातृ उन्नेतृ प्रतिहर्तृ प्रशास्तृ होतृ पोतृ हर्तृ रथगणक पत्तिगणक सुष्टु दुष्टु अध्वर्यु वधू सुभग मन्त्र ॥ इत्युद्गात्रादिः ॥ १६५ ॥

१७९५ हायनान्तयुवादिभ्योऽण् ५।१।१३०॥ युवन् स्थविर होतृ यजमान । पुरुषासे । भ्रातृ कुतुक श्रमण (श्रवण) कटुक कमण्डलु कुस्त्री सुस्त्री दुःस्त्री सुहृदय दुर्हृदय सुहृद् दुर्हृद् सुभ्रातृ दुर्भ्रातृ वृषल परिव्राजक सब्रह्मचारिन् अनृशंस । हृदयासे । कुशल चपल निपुण पिशुन कुतूहल क्षेत्रज्ञ । श्रोत्रियस्य यलोपश्च ॥ इति युवादिः ॥ १६६ ॥

१७९८ द्वन्द्वमनोज्ञादिभ्यश्च ५।१।१३३॥ मनोज्ञ प्रियरूप अभिरूप कल्याण मेधाविन् आढ्य कुलपुत्र छान्दस छात्र श्रोत्रिय चोर धूर्त विश्वदेव युवन् कुपुत्र ग्रामपुत्र ग्रामकुलाल ग्रामड ( ग्रामषण्ड ) ग्रामकुमार सुकुमार बहुल अवश्यपुत्र अमुष्यपुत्र अमुष्यकुल ( आमुष्यकुल ) सारपुत्र शतपुत्र ॥ इति मनोज्ञादिः ॥ १६७ ॥

१८२५ तस्य पाकमूले (१)पील्वादि(२)कर्णादिभ्यः कुणब्जाहचौ ५।२।२४॥ ( १ ) पीलु कर्कन्धू (कर्कन्धु) शमी करीर बल ( कुवल ) बदर अश्वत्थ खदिर ॥ इति पील्वादिः ॥ १६८ ॥

( २ ) कर्ण अक्षि नख मुख केश पाद गुल्फ भ्रू शृङ्ग दन्त ओष्ठ पृष्ठ ॥ इति कर्णादिः ॥ १६९ ॥

१८३७ तदस्य संजातं तारकादिभ्य इतच् ५।२।३६॥ तारका पुष्प कर्णक मञ्जरी ऋजीष क्षण सूत्र मूत्र निष्क्रमण पुरीष उच्चार प्रचार विचार कुड्मल कण्टक मुसल मुकुल कुसुम कुतूहल स्तबक ( स्तवक ) किसलय पल्लव खण्ड वेग निद्रा मुद्रा बुभुक्षा धेनुष्या पिपासा श्रद्धा अभ्र पुलक अङ्गारक वर्णक द्रोह दोह सुख दुःख उत्कण्ठा भर व्याधि वर्मन् व्रण गौरव शास्त्र तरङ्ग तिलक चन्द्रक अन्धकार गर्व कुमुर ( मुकुर ) हर्ष उत्कर्ष रण कुवलय गर्ध क्षुध् सीमन्त ज्वर गर रोग रोमाञ्च पण्डा कज्जल तृष् कोरक कल्लोल स्थपुट फल कञ्चुक शृङ्गार अङ्कुर शैवल बकुल श्वभ्र आराल (अराल) कलङ्क कर्दम कन्दल मूर्च्छा अङ्गार हस्तक प्रतिबिम्ब विघ्नतन्त्र प्रत्यय दीक्षा गर्ज । गर्भादप्राणिनि ॥ इति तारकादिराकृतिगणः ॥ १७० ॥

१८६१ विमुक्तादिभ्योऽण् ५।२।६१॥ विमुक्त देवासुर रक्षोसुर उपसद् सुवर्ण परिसारक सदसत् वसु मरुत् पत्नी-

वत् वसुमत् महीयत्त्व सत्वत् वर्हवत् दशार्ण दशार्ह वयस् हविर्धान पतत्रिन् महित्री अस्यहत्य सोमापूषन् इडा अग्नाविष्णू उर्वशी वृत्रहन् ॥ **इति विमुक्तादिः ॥ १७१ ॥**

**१८६२ गोपदादिभ्यो वुन्** ५।२।६२॥ गोषद ( गोषद् ) इषेत्वा मातरिश्वन् देवस्यत्वा देवीरापः । कृष्णोऽस्याखरेष्ठः देवींधिया ( देवींधियम् ) रक्षोहण युञ्जान अञ्जन प्रभूत प्रतूर्त कृशानु (कृशाकु) ॥ **इति गोषदादिः ॥ १७२ ॥**

**१८६४ आकर्षादिभ्यः कन्** ५।२।६४॥ आकर्ष ( आकष ) त्सरु पिशाच पिचण्ड अशनि अश्मन् निचय चय विजय जय आचय नय पाद दीप ह्रद ह्राद ह्लाद गद्गद शकुनि ॥ **इत्याकर्षादिः ॥ १७३ ॥**

**१८८८ इष्टादिभ्यश्च** ५।२।८८॥ इष्ट पूर्त उपासादित निगदित परिगदित परिवादित निकथित निपादित निपठित संकलित परिकलित संरक्षित परिरक्षित अर्चित गणित अवकीर्ण आयुक्त गृहीत आम्नात श्रुत अधीत अवधान आसेवित अवधारित अवकल्पित निराकृत उपकृत उपाकृत अनुयुक्त अनुगणित अनुपठित व्याकुलित ॥ **इतीष्टादिः ॥ १७४ ॥**

**१८९५ रसादिभ्यश्च** ५।२।९५॥ रस रूप वर्ण गन्ध स्पर्श शब्द स्नेह भाव । गुणात् एकाचः ॥ **इति रसादिः ॥१७५॥**

**१९०४ सिध्मादिभ्यश्च** ५।२।९७॥ सिध्म गडु मणि नाभि बीज वीणा कृष्ण निष्पाव पांसु पार्श्व पर्शु हनु सक्तु (हनुसक्तु) मास (मांस) पार्ष्णिधमन्योर्दीर्घश्च । वातदन्तबलललाटानामूङ् च । जटा घटाकटाकालाः क्षेपे । पर्ण उदक प्रज्ञा सक्थि कर्ण स्नेह शीत श्याम पिङ्ग पित्त पुष्क पृथु मृदु मञ्जु मण्ड पत्र चटु कपि गण्डु ग्रन्थि श्री कुश धारा वर्ष्मन् पक्ष्मन् श्लेष्मन् पेश निष्पाद् कुण्ड । क्षुद्रजन्तूपतापयोश्च ॥ **इति सिध्मादिः ॥ १७६ ॥**

**१९०७ (१)लोमादि(२)पामादि(३)पिच्छादिभ्यः शनेलचः** ५।२।१००॥ ( १ ) लोमन् रोमन् बभ्रु हरि गिरि कर्क कपि मुनि तरु ॥ **इति लोमादिः ॥ १७७ ॥**

( २ ) पामन् वामन् वेमन् हेमन् श्लेष्मन् कद्रु ( कद्रू ) वलि ( वलि ) सामन् ऊष्मन् कृमि । अङ्गात्कल्याणे । शाकीपलालीदद्रूणां ह्रस्वत्वं च । विष्वगित्युत्तरपदलोपश्चाकृतसंधेः । लक्ष्म्या अच्च ॥ **इति पामादिः ॥ १७८ ॥**

( ३ ) पिच्छा उरस् ध्रुवक ध्रुवक । जटाघटाकालाः क्षेपे । वर्ण उदक पङ्क प्रज्ञा ॥ **इति पिच्छादिः॥ १७९ ॥**

**१९१० ॐ ज्योत्स्नादिभ्य उपसंख्यानम् ॐ** ५।२।१०३॥ ज्योत्स्ना तमिस्रा कुण्डल कुतप विसर्प विपादिका ॥ **इति ज्योत्स्नादिः ॥ १८० ॥**

**१९२३ व्रीह्यादिभ्यश्च** ५।२।११६॥ व्रीहि माया शाला शिखा माला मेखला केका अष्टका पताका चर्मन् कर्मन् वर्मन् दंष्ट्रा संज्ञा वडवा कुमारी नौ वीणा बलाका यवखदनौ कुमारी । शीर्षान्नञः ॥ **इति व्रीह्यादिः ॥ १८१ ॥**

**१९२४ तुन्दादिभ्य इलच्च** ।५।२।११७॥ तुन्द उदर पिचण्ड यव व्रीहि । स्वाङ्गाद्विवृद्धौ ॥ **इति तुन्दादिः ॥ १८२ ॥**

**१९३३ अर्श आदिभ्योऽच्** ५।२।१२७॥ अर्शस् उरस् तुन्द चतुर कलित ( पलित ) जटा घटा घाटा अभ्र अघ कर्दम अम्ल लवण । स्वाङ्गाद्धीनात् । वर्णात् ॥ **इत्यर्श आदिराकृतिगणः ॥ १८३ ॥**

**१९३७ सुखादिभ्यश्च** ५।२।१३१॥ सुख दुःख तृप्र ( तृप्र ) कृच्छ्र अस्र ( आस्र ) आस्र अलीक कठिण सोढ प्रतीप शील हल । माला क्षेपे । कृपण प्रणाय ( प्रणय ) दल कक्ष ॥ **इति सुखादिः ॥ १८४ ॥**

**१९४१ पुष्करादिभ्यो देशे** ५।२।१३५॥ पुष्कर पद्म उत्पल तमाल कुमुद नड कपित्थ बिस मृणाल कर्दम शालूक बिगर्ह करीष शिरीष यवास ( प्रवास ) प्रवाह हिरण्य कैरव कल्लोल तट तरङ्ग पङ्कज सरोज राजीव नालीक सरोरुह पुटक अरविन्द अम्भोज अब्ज कमल पयस् ॥ **इति पुष्करादिः ॥ १८५ ॥**

**१९४२ बलादिभ्यो मतुबन्यतरस्याम्** ५।२।१३६॥ बल उत्साह उद्भास उद्वास उद्दास शिखा कुल चूडा सुल कूल आयाम व्यायाम उपयाम आरोह अवरोह परिणाह युद्ध ॥ **इति बलादिः ॥ १८६ ॥**

**१९६३ ॐ दशिग्रहणाद्भवदादियोग एव ॐ** ५।३।१४॥ भवान् दीर्घायुः देवानांप्रियः आयुष्मान् ॥ **इति भवदादिः ॥ १८७ ॥**

**२०५५ देवपथादिभ्यश्च** ५।३।१००॥ देवपथ ( हंसपथ वारिपथ रथपथ ) स्थलपथ करिपथ अजपथ राजपथ शतपथ शङ्कुपथ सिन्धुपथ सिद्धगति उष्ट्रग्रीव वामरज्जु हस्त इन्द्र दण्ड पुष्प मत्स्य ॥ **इति देवपथादिराकृतिगणः ॥ १८८ ॥**

**२०५८ शाखादिभ्यो यः** ५।३।१०३॥ शाखा मुख जघन शृङ्ग मेघ अभ्र चरण स्कन्ध स्कद ( स्कन्द ) उरस् शिरस् अग्र ( शाण ) शरण ॥ **इति शाखादिः ॥ १८९ ॥**

**२०६२ शर्करादिभ्योऽण्** ५।३।१०७॥ शर्करा कपालिका कपाटिका कपिष्ठिका ( कनिष्ठिका ) पुण्डरीक शतपत्र गोलोमन् लोमन् गोपुच्छ नराची ( गोपुच्छनराची ) नकुल सिकता ॥ **इति शर्करादिः ॥ १९० ॥**

**२०६३ अङ्गुल्यादिभ्यष्ठक्** ५।३।१०८॥ अङ्गुली भरुज बभ्रु वल्गु मण्डर मण्डल शष्कुली हरि कपि मुनि रुह खल उदश्वित् गोणी उरस् कुलिश ॥ **इत्यङ्गुल्यादिः ॥ १९१ ॥**

**२०६९ दामन्यादित्रिगर्तषष्ठाच्छः** ५।३।११६॥ दामनी औलपि बैजवापि औदकि औदङ्कि अच्युतन्ति ( आच्युतन्ति) अच्युतदन्ति (आच्युतदन्ति) शाकुन्तकि आकिदन्ति (आक्रिदन्ति) औडवि काकदन्तकि शात्रुंतपि सार्वसेनि बिन्दु बैन्दवि तुलभ मौञ्जायन मौञ्जायनि काकन्दि सावित्रीपुत्र ॥ **इति दामन्यादिः** ॥ १९२ ॥

**२०७० (१)पर्श्वादि(२)यौधेयादिभ्योऽणञौ** ५।३।११७॥ ( १ ) पर्शु असुर रक्षस् बाह्लीक वयस् वसु मरुत् सत्त्वत् दशार्ह पिशाच अशनि कार्षापण कर्षापण ॥ **इति पर्श्वादिः** ॥ १९३ ॥

(२) यौधेय कौशेय शौक्रेय शौभ्रेय धौर्तेय धार्तेय घार्तेय ज्यावाणेय त्रिगर्त भरत उशीनर ॥ **इति यौधेयादिः** ॥१९४॥

**२०७५ स्थूलादिभ्यः प्रकारवचने कन्** ५।४।३॥ स्थूल अणु माषेषु ( माष इषु ) कृष्ण तिलेषु । यव व्रीहिषु । इक्षु तिल । पाद्य कालावदात सुरायाम् । गोमूत्र आच्छादने । सुराया अहौ ( सुरा अहौ ) । जीर्ण शालिषु । पत्रमूल समस्तौ व्यस्तश्च । कुमारीपुत्र कुमारीश्वशुर मणि ॥ **इति स्थूलादिः** ॥ १९५ ॥

**२०९७ यावादिभ्यः कन्** ५।४।२९॥ याव मणि अस्थि तालु जानु सान्द्र पीत स्तम्ब । ऋतावुष्णशीते । पशौ लूनवियाते । अणु निपुणे । पुत्र कृत्रिमे । स्नात वेदसमाप्तौ । शून्य रिक्ते । दान कुत्सिते । तनु सूत्रे । ईयसश्च । ज्ञात अज्ञात । कुमारीक्रीडनकानि च ( कुमारक्रीडनकानि च ) ॥ **इति यावादिः** ॥ १९६ ॥

**२१०२ विनयादिभ्यष्ठक्** ५।४।३४॥ विनय समय । उपायो ह्रस्वत्वं च । संप्रति संगति कथंचित् अकस्मात् समाचार उपचार समाय ( समयाचार ) व्यवहार संप्रदान समुत्कर्ष समूह विशेष अत्यय ॥ **इति विनयादिः** ॥ १९७ ॥

**२१०६ प्रज्ञादिभ्यश्च** ५।४।३८॥ प्रज्ञ वणिज् उशिज् उष्णिज् प्रत्यक्ष विद्वस् विदन् वेदन् षोडन् विद्या मनस् । श्रोत्र शरीरे । जुह्वत् । कृष्ण मृगे । चिकीर्षत् । चोर शत्रु योध चक्षुस् वसु एनस् मरुत् क्रुञ्च सत्वत् दशार्ह वयस् व्याकृत असुर रक्षस् पिशाच अशनि कार्षापण देवता बन्धु ॥ **इति प्रज्ञादिः** ॥ १९८ ॥

**२१११ * आद्यादिभ्य उपसंख्यानम् *** ५।४।४४॥ आदि मध्य अन्त पृष्ठ पार्श्व ॥ **इत्याद्यादिराकृतिगणः** ॥ १९९ ॥

**६७८ अव्ययीभावे शरत्प्रभृतिभ्यः** ५।४।१०७ ॥ शरद् विपाश् अनस् मनस् उपानह् अनडुह् दिव् हिमवत् हिरुक् विद् सद् दिश् दृश् विश् चतुर् त्यद् तद् यद् एतद् कियत् । जराया जरस् च । प्रतिपरसमनुभ्योऽक्ष्णः । पथिन् ॥ **इति शरदादिः** ॥ २०० ॥

**८६९ द्विदण्ड्यादिभ्यश्च** ५।४।१२८॥ द्विदण्डि द्विमुसलि उभाञ्जलि उभयाञ्जलि उभादन्ति उभयादन्ति उभाहस्ति उभयाहस्ति उभाकर्णि उभयाकर्णि उभापाणि उभयापाणि उभाबाहु उभयाबाहु एकपदी प्रोष्ठपदी आढ्यपदी ( आव्यपदी ) सपदि ( निकुच्यकर्णि ) निकुच्यकरणि संहतपुच्छि अन्तेवासी अन्तवासी ॥ **इति द्विदण्ड्यादिः**॥ २०१ ॥

**८७९ पादस्य लोपोऽहस्त्यादिभ्यः** ५।४।१३८॥ हस्तिन् कुद्दाल अश्व कशिक कुरुत कटोल कटोलक गण्डोल गण्डोलक कण्डोल कण्डोलक अज कपोत जाल गण्ड महिला दासी गणिका कुसूल ॥ **इति हस्त्यादिः** ॥ २०२ ॥

**८८० कुम्भपदीषु च** ५।४।१३९॥ कुम्भपदी एकपदी जालपदी शूलपदी मुनिपदी गुणपदी शतपदी सूत्रपदी गोधापदी कलशीपदी विपदी तृणपदी द्विपदी त्रिपदी षट्पदी दासीपदी शितिपदी ( शितपदी ) विष्णुपदी सुपदी निष्पदी आर्द्रपदी कुणिपदी कृष्णपदी शुचिपदी द्रोणीपदी ( द्रोणपदी ) द्रुपदी सूकरपदी शकृत्पदी अष्टापदी स्थूणापदी अपदी सूचीपदी ॥ **इति कुम्भपद्यादिः** ॥ २०३ ॥

**८९१ उरःप्रभृतिभ्यः कप्** ५।४।१५१॥ उरस् सर्पिस् उपानह् पुमान् अनड्वान् पयः नौः लक्ष्मीः दधि मधु शाली शालिः । अर्थान्नञः ॥ **इत्युरःप्रभृतयः** ॥ २०४ ॥

---

## षष्ठोऽध्यायः ।

**७९ * शकन्ध्वादिषु पररूपं वाच्यम् *** ६।१।९४॥ शकन्धुः कर्कन्धुः कुलटा । सीमन्तः केशवेशे । हलीषा मनीषा लाङ्गलीषा पतञ्जलिः । सारङ्गः पशुपक्षिणोः ॥ **इति शकन्ध्वादिः** ॥ २०५ ॥

**१०७२ पारस्करप्रभृतीनि च संज्ञायाम्** ६।१।१५७॥ पारस्करो देशः । कारस्करो वृक्षः । रथस्था ( रयस्था ) नदी । किष्कुः प्रमाणम् । किष्किन्धा गुहा । तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च । प्रात्तुम्पतौ गवि कर्तरि ॥ **इति पारस्करादिः** ॥ २०६ ॥

**३६७८ उञ्छादीनां च** ६।१।१६०॥ उञ्छ म्लेच्छ जञ्ज नल्प तल्प (जल्प) जप वध । युग कालविशेषे रथाद्युपकरणे च । गरो दूष्ये । अवन्तः । वेदवेगवेष्टबन्धाः करणे । स्तुयुद्रुवश्छन्दसि । वर्तनि स्तोत्रे । श्वभ्रे दरः । साम्वतापौ भावगर्हायाम् । उत्तमशश्वत्तमौ सर्वत्र । भक्षमन्थभोगमन्थाः ( देहाः ) ॥ **इत्युञ्छादिः** ॥ २०७ ॥

**३६८८ वृषादीनां च** ६।१।२०३॥ वृषः जनः ज्वरः ग्रहः हयः मयः गयः तायः तयः चयः अमः (श्रमः) वेदः सूदः अंशः गुहा । शमरणौ संज्ञायां संमतौ भावकर्मणोः । मन्त्रः शान्तिः कामः यामः आरा धारा कारा वहः कल्पः पादः ॥ **इति वृषादिराकृतिगणः** ॥ अविहितलक्षणमाद्युदात्तत्वं वृषादिषु ज्ञेयम् ॥ २०८ ॥

**३७५५ विस्पष्टादीनि गुणवचनेषु** ६।२।२४ ॥ विस्पष्ट विचित्र विचित्त व्यक्त संपन्न पटु पण्डित कुशल चपल निपुण ॥ **इति विस्पष्टादिः** ॥ २०९ ॥

**३७६८ कार्तकौजपादयश्च** ६।२।३७ ॥ कार्तकौजपौ सावर्णिमाण्डकेयौ ( सावर्णिमाण्डूकेयौ ) अवन्त्यश्मकाः पैलश्यापर्णेयाः कपिश्यापर्णेयाः शैतिकाक्षपाञ्चालेयाः कटुकवाधूलेयाः शाकलशुनकाः शाकलशणकाः शणकबाभ्रवाः आर्चाभिमौद्गलाः कुन्तिसुराष्ट्राः चिन्तिसुराष्ट्राः तण्डवतण्डाः अविमत्तकामविद्धाः बाभ्रवशालङ्कायनाः बाभ्रवदानच्युताः कठकालापाः कठकौथुमाः कौथुमलौकाक्षाः स्त्रीकुमारम् मौद्गपैप्पलादाः वत्सजरन्तः सौश्रुतपार्थिवाः जरामृत्यू याज्यानुवाक्ये ॥ **इति कार्तकौजपादिः** ॥ २१० ॥

**३७७३ कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बलो दासीभाराणां च** ६।२।४२॥ दासीभारः देवहूतिः देवभीतिः देवलातिः वसुनीतिः ( वसूनितिः ) औषधिः चन्द्रमाः ॥ **इति दासीभारादिराकृतिगणः** ॥ २११ ॥

**३८१२ युक्तारोह्यादयश्च** ६।२।८१॥ युक्तारोही आनतरोही (आगतरोही) आगतयोधी आगतवञ्ची आगतनन्दी आगतप्रहारी आगतमत्स्यः क्षीरहोता भगिनीभर्ता ग्रामगोधुक् अश्वत्रिरात्रः गर्गत्रिरात्रः व्युष्टित्रिरात्रः गणपादः एकशितिपाद् । पात्रेसमितादयश्च ॥ **इति युक्तारोह्यादिराकृतिगणः** ॥ २१२ ॥

**३८१६ घोषादिषु च** ६।२।८५॥ घोष घट ( कट ) वल्लभ ह्रद बदरी पिङ्गल ( पिङ्गली ) पिशङ्ग माला रक्षा शाला ( वृन्द् ) कूट शाल्मली अश्वत्थ तृण शिल्पी मुनि (प्रेक्षाकू) प्रेक्षाक ( प्रेक्षा ) ॥ **इति घोषादिः** ॥ २१३ ॥

**३८१७ छात्र्यादयः शालायाम्** ६।२।८६॥ छात्रि पेलि भाण्डि व्याडि आखण्डि आटि (आघाटि) गोमी (गोमि) ॥ **इति छात्र्यादिः** ॥ २१४ ॥

**३८१८ प्रस्थेऽवृद्धमकर्क्यादीनाम्** ६।२।८७॥ कर्कि ( कर्की ) मघ्नी मकरी कर्कन्धु शमी करीरि ( करीर ) कन्दुक कुवल ( कवल ) बदरी ॥ **इति कर्क्यादिः** ॥ २१५ ॥

**३८१९ मालादीनां च** ६।२।८८॥ माला शाला शोणा ( शोण ) द्राक्षा स्राक्षा क्षामा काञ्ची एक काम दिवोदास वध्र्यश्व ॥ **इति मालादिराकृतिगणः** ॥ २१६ ॥

**३८४९ क्रत्वादयश्च** ६।२।११८॥ क्रतु दृशीक प्रतीक प्रतूर्ति हव्य भव्य भग ॥ **इति क्रत्वादिः** ॥ २१७ ॥

**३८५६ आदिश्चिहणादीनाम्** ६।२।१२५॥ चिहण मदुर मद्रुर वैतुल पटत्क वैडालिकर्णक वैडालिकर्णि कुक्कुट चिक्कण चित्कण ॥ **इति चिहणादिः** ॥ २१८ ॥

**३८६२ वर्ग्यादयश्च** ६।२।१३१॥ दिगादिषु वर्ग्यादयस्त एव कृतयदन्ता वर्ग्यादयः । **इति वर्ग्यादयः** ॥ २१८ ॥

**३८६५ चूर्णादीन्यप्राणिषष्ठ्याः** ६।२।१३४॥ चूर्ण करिष करीष शाकिन शाकट द्राक्षा तूस्त कुन्दम दलप चमसी चक्कन चौल ॥ **इति चूर्णादिः** ॥ २२० ॥

**३८६६ षट्च काण्डादीनि** ६।२।१३५॥ काण्ड चीर पलल सूप शाक कूल ॥ **इति काण्डादिः** ॥

**३८७१ उभे वनस्पत्यादिषु युगपत्** ६।२।१४०॥ वनस्पतिः बृहस्पतिः शचीपतिः तनूनपात् नराशंसः शुनःशेपः शण्डामर्कौ तृष्णावरूत्री लम्बाविश्ववयसौ मर्मृत्युः ॥ **इति वनस्पत्यादिः** ॥ २२१ ॥

**३८७७ संज्ञायामनाचितादीनाम्** ६।२।१४६॥ आचित पर्याचित आस्थापित परिगृहीत निरुक्त प्रतिपन्न अपश्लिष्ट प्रश्लिष्ट उपहित उपस्थित संहितागवि ॥ **इत्याचितादिः** ॥ २२२ ॥

**३८७८ प्रवृद्धादीनां च** ६।२।१४७॥ प्रवृद्धं यानम् । प्रवृद्धो वृषलः । प्रयुता सूष्णवः । आकर्षे अवहितः । अवहितो भोगेषु । खट्वारूढः । कविशस्तः ॥ **इति प्रवृद्धादिः** ॥ २२३ ॥ **आकृतिगणोऽयम्** ॥ तेन । प्रवृद्धं यानम् । अप्रवृद्धो वृषक्तो रथ इत्यादि ॥

**३८९१ कृत्योकेष्णुच्चार्वादयश्च** ६।२।१६०॥ चारु साधु यौधिक (यौधकि) अनङ्गमेजय वदान्य अकस्मात् । वर्तमानवर्धमानत्वरमाणध्रियमाणक्रियमाणरोचमानशोभमानाः संज्ञायाम् । विकारसदृशे व्यस्तसमस्ते । गृहपति गृहपतिक । राजाह्वोश्छन्दसि ॥ **इति चार्वादिः** ॥ २२४ ॥

**३९०७ न गुणादयोऽवयवाः** ६।२।१७६॥ गुण अक्षर अध्याय सूक्त छन्दोमान ॥ **इति गुणादिराकृतिगणः** ॥ २२५ ॥

**३९१५ निरुदकादीनि च** ६।२।१८४॥ निरुदक निरुपल निर्मक्षिक निर्मशक निष्कालक निष्कालिक निष्पेष दुस्तरीप निस्तरीप निस्तरीक निरजिन उदजिन उपाजिन । परेर्हस्तपादकेशकर्षाः ॥ **इति निरुदकादिराकृतिगणः** ॥ २२६ ॥

३९२४ **प्रतेरंश्वादयस्तत्पुरुषे** ६।२।१९३॥ अंशु जन [ राजन् ] उष्ट्र खेटक अजिर आर्द्रा श्रवण कृत्तिका अर्धपुर ॥ **इत्यंश्वादिः** ॥ २२७ ॥

३९२५ **उपाद्द्यजजिनमगौरादयः** ६।२।१९४॥ गौर तैष तैल लेट लोट जिह्वा कृष्ण कन्या गुध कल्प पाद ॥ **इति गौरादिः** ॥ २२८ ॥

३९३० ॐ **त्रिचक्रादीनां छन्दस्युपसंख्यानम्** ॐ ६।२।१९९॥ त्रिचक्र त्रिवृत् त्रिवङ्कर ॥ **इति त्रिचक्रादिराकृतिगणः** ॥ २२९ ॥

८३२ **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु** ६।३।३४॥ प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा भक्तिः सचिवा स्वसा ( स्वा ) कान्ता [ क्षान्ता ] समा चपला दुहिता वामा अबला तनया ॥ **इति प्रियादिः** ॥ २३० ॥

८३७ **तसिलादिष्वाकृत्वसुचः** ६।३।३५॥ तसिल् त्रल् तरप् तमप् चरट् जातीयर् कल्पप् देशीयर् रूपप् पाशप् थल् थाल् दार्हिल् तिल् थ्यन् ॥ **इति तसिलादयः** ॥ २३१ ॥

८३७ ॐ **कुक्कुट्यादीनामण्डादिषु** ॐ ६।३।४२॥ कुक्कुटी मृगी काकी ॥ अण्ड पद शाव भ्रकुंस (भृकुंस) भ्रकुटी (भृकुटी) ॥ **इति कुक्कुट्यादिरण्डादिश्च** ॥२३२ ॥ २३३ ॥

१०३६ **पृषोदरादीनि यथोपदिष्टम्** ६।३।१०९॥ पृषोदर पृषोत्थान बलाहक जीमूत श्मशान उलूखल पिशाच वृसी मयूर ॥ **इति पृषोदरादिराकृतिगणः** ॥ २३४ ॥

१०४० **वनगिर्योः संज्ञायां (१)कोटर(२)किंशुलुकादीनाम्** ६।३।११७॥ ( १ ) कोटर मिश्रक सिध्रक पुरग सारिक ( शारिक ) ॥ **इति कोटरादिः** ॥ २३५ ॥

( २ ) किंशुलुक शाल्व नड अञ्जन भञ्जन लोहित कुक्कुट ॥ **इति किंशुलुकादिः** ॥ २३६ ॥

१०४३ **मतौ बह्वचोऽनजिरादीनाम्** ६।३।११९॥ अजिर खदिर पुलिन हंसक ( हंस ) कारण्ड ( कारण्डव ) चक्रवाक ॥ **इत्यजिरादिः** ॥ २३७ ॥

१०४४ **शरादीनां च** ६।३।१२०॥ शर वंश धूम अहि कपि मणि मुनि शुचि हनु ॥ **इति शरादिः** ॥ २३८ ॥

१०४५ ॐ **अपीलवादीनामिति वक्तव्यम्** ॐ ६।३।१२१॥ पीलु दारु रुचि चारु गम् कम् ॥ **इति पील्वादिः** ॥२३९॥

१३१३ **विल्वकादिभ्यश्छस्य लुक्** ६।४।१५३॥ बिल्वक वेणु वेत्र वेतस तृण इक्षु काष्ठ कपोत कुञ्चा तक्षन् ॥ **नडाद्यन्तर्गणो बिल्वादिः** ॥ छविधानार्थं ये नडादयस्ते यदा छसंनियोगे कृतकुगागमास्ते **बिल्वकादयः** ॥ २४० ॥ **इति षष्ठोऽध्यायः** ।

---

## सप्तमोऽध्यायः ।

३५६९ **स्नात्व्यादयश्च** ७।१।४९॥ स्नात्वी पीत्वी ॥ **इति स्नात्व्यादिराकृतिगणः** ॥ २४१ ॥

१३८८ **द्वारादीनां च** ७।३।४॥ द्वार स्वर स्वग्राम स्वाध्याय व्यल्कश स्वस्ति स्वर् ( स्वर ) स्फ्यकृत् स्वादु मृदु श्वस् श्वन् स्व ॥ **इति द्वारादिः** ॥ २४२॥

१५५१ **स्वागतादीनां च** ७।३।७॥ स्वागत स्वध्वर स्वङ्ग व्यङ्ग व्यड व्यवहार स्वपति स्वपिति ॥ **इति स्वागतादिः** ॥ २४३ ॥

१४४० **अनुशतिकादीनां च** ७।३।२०॥ अनुशतिक अनुहोड अनुसंवरण ( अनुसंचरण ) अनुसंवत्सर अङ्गारवेणु असिहत्य [ अस्यहत्य ] अस्यहेति वध्योग पुष्करसद् अनुहरत् कुरुकत कुरुपञ्चाल उदकशुद्ध इहलोक परलोक सर्वलोक सर्वपुरुष सर्वभूमि प्रयोग परस्त्री । राजपुरुषात्ष्यञि । सूत्रनड ॥ **इत्यनुशतिकादिराकृतिगणोऽयम्** ॥ २४४ ॥ तेन अभिगम अधिभूत अधिदेव चतुर्विद्या इत्यादयोऽप्यन्ये विज्ञेयाः ॥

४६४ ॐ **क्षिपकादीनां चोपसंख्यानम्** ॐ ७।३।४५॥ क्षिपका ध्रुवका चरका सेवका करका चटका अवका (हलका) लहका अलका कन्यका ध्रुवका एडका ॥ **इति क्षिपकादिराकृतिगणः** ॥ १४५ ॥

२८६४ **न्यङ्क्वादीनां च** ७।३।५३॥ न्यङ्कु मद्गु भृगु दूरेपाक (फलेपाक) बलेपाक क्षणपाक दूरेपाका फलेपाका दूरेपाकु फलेपाकु तक्र ( तत्र ) वक्र ( चक्र ) व्यतिषङ्ग अनुषङ्ग अवसर्ग उपसर्ग श्वपाक मांसपाक ( मासपाक ) मूलपाक कपोतपाक उलूकपाक । संज्ञायां मेघनिदाघावदाघार्घाः । न्यग्रोध वीरुत् ॥ **इति न्यङ्क्वादिः** ॥ १४६ ॥

२५८३ ॐ **काण्यादीनां वेति वक्तव्यम्** ॐ ७।४।३॥ कण रण भण श्रण लुप हेठ ह्वायि वाणि ( चाणि ) लोटि ( लोठि ) लोपि ॥ **इति काण्यादिः** ॥ १४७ ॥ **इति सप्तमोऽध्यायः** ।

---

## अष्टमोऽध्यायः ।

३९३१ **तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः** ८।१।२७॥ गोत्र ब्रुव प्रवचन प्रहसन प्रकथन प्रत्ययन प्रपञ्च प्राय न्याय प्रचक्षण विचक्षण अवचक्षण स्वाध्याय भूयिष्ठ ( भूयिष्ठ ) वानाम ॥ **इति गोत्रादिः ॥ २४८ ॥**

३९७१ **पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः** ८।१।६७॥ काष्ठ दारुण अज्ञात पुत्र अमातापुत्र वेश अनाज्ञात अनुज्ञात अपुत्र अयुत अद्भुत अनुक्त भृश घोर सुख परम सु अति ॥ **इति काष्ठादिः ॥ २४९ ॥**

१८९७ **मादुपधायाश्च मतोर्वोऽयवादिभ्यः** ८।२।९॥ यव दल्मि ऊर्मि ( उर्मि ) भूमि कृमि कुञ्चा वशा द्राक्षा ध्राक्षा ध्रजि ध्वजि निजि सिजि सञ्जि हरित् ककुद् मरुत् गरुत ( इक्षु द्रु ) इक्षुद्रु मधु ॥ **इति यवादिराकृतिगणः ॥ २५० ॥**

२३५० ॐ **कपिलकादीनां संज्ञाच्छन्दसोर्वेति वाच्यम्** ॐ ८।२।१८॥ कपिलक निर्विलीक लोमानि पांसुल कल्प शुक्ल कपिलिका तर्पिलिका तर्पिलि ॥ **आकृतिगणोऽयम् । इति कपिलकादिः ॥**

१७२ ॐ **(१)अहरादीनां (२)पत्यादिषु वा रेफः** ॐ ८।२।७०॥ (१) अहर् गीर् धुर् ॥ **इत्यहरादिः ॥२५१॥**

२ पति गण पुत्र ॥ **इति पत्यादिः ॥ २५२ ॥**

१४४ **कस्कादिषु च** ८।३।४८॥ कस्कः कौतस्कुतः भ्रातुष्पुत्रः शुनस्कर्णः सद्यस्कालः सद्यस्क्रीः साद्यस्कः कांस्कान् सर्पिष्कुण्डिका धनुष्कपालम् बर्हिष्पलम् ( बर्हिष्पलम् ) यजुष्पात्रम् अयस्कान्तः तमस्काण्डः अयस्काण्डः मेदस्पिण्डः भास्करः अहस्करः ॥ **इति कस्कादिराकृतिगणः ॥ २५३ ॥**

१०२४ **सुषामादिषु च** ८।३।९८॥ सुषामा निःषामा दुःषामा सुषेधः निषेधः ( निःषेधः ) दुःषेधः सुषंधिः निःषंधिः दुःषंधिः सुष्ठु दुष्ठु । गौरिषक्थः संज्ञायाम् । प्रतिष्णिका जलाषाहम् ( जलाषाढम् ) नौषेचनम् दुन्दुभिषेवणम् ( दुन्दुभिषेचनम् ) । एति संज्ञायामगात् । नक्षत्राद्वा । हरिषेणः रोहिणीषेणः ॥ **इति सुषामादिराकृतिगणः ॥ २५४ ॥**

३१६८ **न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्** ८।३।११०॥ सवने सवने । सूते सूते । सोमे सोमे । सवनमुखे सवनमुखे । किंसं किंसम् ( किंसः किंसः ) । अनुसवनमनुसवनम् । गोसनि गोसनिम् । अश्वसनिमश्वसनिम् । **पाठान्तरम्**—सवने सवने । सवनमुखे सवनमुखे । अनुसवनमनुसवनम् । संज्ञायां बृहस्पतिसवः । शकुनिसवनम् । **सोमे** सोमे (सुमे सुमे) । सुते सुते । संवत्सरे संवत्सरे । बिसं बिसम् । किसं किसम् । मुसलं मुसलम् । गोसनिम् अश्वसनिम् ॥ **इति सवनादिः ॥ २५५ ॥**

१०५३ ॐ **इरिकादिभ्यः प्रतिषेधो वक्तव्यः** ॐ ८।४।६॥ इरिका मिरिका तिमिरा ॥ **इतीरिकादिराकृतिगणः ॥ २५६ ॥**

१०५६ ॐ **वाप्रकरणे गिरिनद्यादीनां वोपसंख्यानम्** ८।४।१०॥ गिरिनदी गिरिनख गिरिनद्ध गिरिनितम्ब चक्रनदी चक्रनितम्ब तूर्यमान माषोन आर्गयन ॥ **इति गिरिनद्यादिराकृतिगणः ॥ २५७ ॥**

१०५७ ॐ **युवादेर्न** ॐ युवन् पक्व अहन् ॥ **इति युवादिः** ॥ ( आर्ययूना क्षत्रिययूना प्रपक्वानि परिपक्वानि दीर्घाह्नी ) **आकृतिगणोऽयम् ॥**

७९३ **क्षुभ्नादिषु च** ८।४।३९॥ क्षुभ्न नृगमन (नृनमन) नन्दिन् नन्दन नगर । एतान्युत्तरपदानि संज्ञायां प्रयोजयन्ति । हरिनन्दी हरिनन्दनः गिरिनगरम् । नृतिर्यङि प्रयोजयन्ति । नरीनृत्यते । नर्तन गहन नन्दन निवेश निवास अग्नि अनूप । एतान्युत्तरपदानि प्रयोजयन्ति । परिनर्तनम् परिगहनम् परिनन्दनम् शरनिवेशः शरनिवासः शराग्निः दर्भानूपः । आचार्यादणत्वं च । आचार्यभोगीनः ॥ **आकृतिगणोऽयम् ॥ पाठान्तरम् ॥** क्षुभ्ना तृप्नु नृनमन नरनगर नन्दन । यङ्नृती । गिरिनदी गृहगमन निवेश निवास अग्नि अनूप आचार्यभोगीन चतुर्हायन । इरिकादीनि वनोत्तरपदानि संज्ञायाम् । इरिका तिमिर समीर कुबेर हरि कर्मार ॥ **इति क्षुभ्नादिः ॥ २५८ ॥ इत्यष्टमोऽध्यायः ॥**

**इति श्रीपाणिनिमुनिप्रणीतो गणपाठः समाप्तः ॥**

# अथ धातुपाठः ।

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् । कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥
वाक्यकारं वररुचिं भाष्यकारं पतञ्जलिम् । पाणिनिं सूत्रकारं च प्रणतोऽस्मि मुनित्रयम् ॥

**उदात्तः परस्मैभाषः ।**

१ भू सत्तायाम् ।
(अथ षट्त्रिंशत्तवर्गीयान्ता आत्मनेपदिनः)
२ एध वृद्धौ ।
३ स्पर्ध संघर्षे ।
४ गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च ।
५ बाधृ लोडने ।
६ नाथृ
७ नाधृ याच्ञोपतापैश्वर्याशीःषु ।
८ दध धारणे ।
९ स्कुदि आप्रवणे ।
१० श्विदि श्वैत्ये ।
११ वदि अभिवादनस्तुत्योः ।
१२ भदि कल्याणे सुखे च ।
१३ मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु ।
१४ स्पदि किंचिच्चलने ।
१५ क्लिदि परिदेवने ।
१६ मुद हर्षे ।
१७ दद दाने ।
१८ ष्वद
१९ स्वर्द आस्वादने ।
२० उर्द माने क्रीडायां च ।
२१ कुर्द
२२ खुर्द
२३ गुर्द
२४ गुद क्रीडायामेव ।
२५ षूद क्षरणे ।
२६ ह्राद अव्यक्ते शब्दे ।
२७ ह्लादी सुखे च ।
२८ स्वाद आस्वादने ।
२९ पर्द कुत्सिते शब्दे ।
३० यती प्रयत्ने ।
३१ युतृ
३२ जुतृ भासने ।
३३ विथृ
३४ वेथृ याचने ।
३५ श्रथि शैथिल्ये ।
३६ ग्रथि कौटिल्ये ।
३७ कत्थ श्लाघायाम् ।

**एधादय उदात्ता अनुदात्तेत आत्मनेभाषाः ।**

(अथाष्टत्रिंशत्तवर्गीयान्ताः)
३८ अत सातत्यगमने ।
३९ चिती संज्ञाने ।
४० च्युतिर् आसेचने ।
४१ श्च्युतिर् ।
४२ (श्चुतिर् क्षरणे ।)
४३ मन्थ विलोडने ।
४४ कुथि
४५ पुथि
४६ लुथि
४७ मथि हिंसासंक्लेशनयोः ।
४८ षिध गत्याम् ।
४९ षिधू शास्त्रे माङ्गल्ये च ।
५० खादृ भक्षणे ।
५१ खद स्थैर्ये हिंसायां च ।
५२ बद स्थैर्ये ।
५३ गद व्यक्तायां वाचि ।
५४ रद विलेखने ।
५५ णद अव्यक्ते शब्दे ।
५६ अर्द गतौ याचने ।
५७ नर्द
५८ गर्द शब्दे ।
५९ तर्द हिंसायाम् ।
६० कर्द कुत्सिते शब्दे ।
६१ खर्द दन्दशूके ।
६२ अति
६३ अदि बन्धने ।
६४ इदि परमैश्वर्ये ।
६५ बिदि अवयवे ।
६६ भिदि इत्येके ।
६७ गडि वदनैकदेशे ।
६८ णिदि कुत्सायाम् ।
६९ टुनदि समृद्धौ ।
७० चदि आह्लादे ।
७१ त्रदि चेष्टायाम् ।
७२ कदि
७३ क्रदि
७४ क्लदि आह्वाने रोदने च ।
७५ क्लिदि परिदेवने ।
७६ शुन्ध शुद्धौ ।

**अतादय उदात्ता उदात्तेतः परस्मैभाषाः ।**

(अथ कवर्गीयान्ता आत्मनेपदिनो द्विचत्वारिंशत्)
७७ शीकृ सेचने ।
७८ लोकृ दर्शने ।
७९ श्लोकृ संघाते ।
८० द्रेकृ
८१ ध्रेकृ शब्दोत्साहयोः ।
८२ रेकृ शङ्कायाम् ।
८३ सेकृ
८४ स्रेकृ
८५ स्रकि
८६ श्रकि
८७ श्लकि गतौ ।
८८ शकि शङ्कायाम् ।
८९ अकि लक्षणे ।
९० वकि कौटिल्ये ।
९१ मकि मण्डने ।
९२ कक लौल्ये ।
९३ कुक
९४ वृक आदाने ।
९५ चक तृप्तौ प्रतिघाते च ।
९६ ककि
९७ वकि
९८ श्वकि
९९ त्रकि
१०० ढौकृ
१०१ त्रौकृ
१०२ ष्वष्क
१०३ वस्क
१०४ मस्क
१०५ टिकृ
१०६ टीकृ
१०७ तिकृ
१०८ तीकृ
१०९ रघि
११० लघि गत्यर्थाः । तृतीयो दन्त्यादिरित्येके । लघि भोजननिवृत्तावपि ।
१११ अघि
११२ वघि
११३ मघि गत्याक्षेपे । मघि कैतवे च ।
११४ राघृ
११५ लाघृ
११६ द्राघृ सामर्थ्ये ।
११७ ध्राघृ इत्यपि केचित् । द्राघृ आयामे च ।
११८ श्लाघृ कत्थने ।

**शीकादय उदात्ता अनुदात्तेत आत्मनेभाषाः ।**

( अथ कवर्गीयान्ताः परस्मैपदिनः पञ्चाशत् )
११९ फक्क नीचैर्गतौ ।
१२० तक हसने ।
१२१ तकि कृच्छ्रजीवने ।
१२२ बुक्क भषणे ।
१२३ कख हसने ।
१२४ ओखृ
१२५ राखृ
१२६ लाखृ
१२७ द्राखृ
१२८ ध्राखृ शोषणालमर्थयोः ।
१२९ शाखृ
१३० श्लाखृ व्याप्तौ ।
१३१ उख
१३२ उखि
१३३ वख
१३४ वखि
१३५ मख
१३६ मखि
१३७ णख
१३८ णखि
१३९ रख
१४० रखि
१४१ लख
१४२ लखि

१४३ इख
१४४ इखि
१४५ ईखि
१४६ वल्ग
१४७ रगि
१४८ लगि
१४९ अगि
१५० वगि
१५१ मगि
१५२ तगि
१५३ त्वगि
१५४ श्रगि
१५५ श्लगि
१५६ इगि
१५७ रिगि
१५८ लिगि गत्यर्थाः ।
१५९ रिख
१६० त्रख
१६१ त्रिखि
१६२ शिखि इत्यपि केचित् । त्वगि कम्पने च ।
१६३ युगि
१६४ जुगि
१६५ बुगि वर्जने ।
१६६ घघ हसने ।
१६७ मघि मण्डने ।
१६८ शिघि आघ्राणे ।

**फक्काद्य उदात्ता उदात्तेतः परस्मैभाषाः ।**

**(अथ चवर्गीयान्ता आत्मनेपदिन एक-एकविंशतिः )**

१६९ वर्च दीप्तौ ।
१७० षच सेचने सेवने च ।
१७१ लोचृ दर्शने ।
१७२ शच व्यक्तायां वाचि ।
१७३ श्वच
१७४ श्वचि गतौ ।
१७५ कच बन्धने ।
१७६ कचि
१७७ काचि दीप्तिबन्धनयोः ।
१७८ मच
१७९ मुचि कल्कने । कथन इत्यन्ये ।
१८० मचि धारणोच्छ्रायपूजनेषु ।
१८१ पचि व्यक्तीकरणे।
१८२ ष्टुच प्रसादे ।
१८३ ऋज गतिस्थानार्जनोपार्जनेषु।
१८४ ऋजि
१८५ भृजी भर्जने ।
१८६ एजृ
१८७ भ्रेजृ
१८८ भ्राजृ दीप्तौ ।
१८९ ईज गतिकुत्सनयोः ।

**वर्चाद्य उदात्ता अनुदात्तेत आत्मनेभाषाः ।**

**( अथ चवर्गीयान्ता व्रज्यन्ताः परस्मैपदिनः द्विसप्ततिः )**

१९० शुच शोके ।
१९१ कुच शब्दे तारे।
१९२ कुञ्च
१९३ क्रुञ्च कौटिल्याल्पीभावयोः ।
१९४ लुञ्च अपनयने।
१९५ अञ्चु गतिपूजनयोः ।
१९६ वञ्चु
१९७ चञ्चु
१९८ तञ्चु
१९९ त्वञ्चु
२०० म्रुञ्चु
२०१ म्लुञ्चु
२०२ म्रुचु
२०३ म्लुचु गत्यर्थाः।
२०४ ग्रुचु
२०५ ग्लुचु
२०६ कुजु
२०७ खुजु स्तेयकरणे।
२०८ ग्लुञ्चु
२०९ षस्ज गतौ ।
(षस्जिरात्मनेपद्यपि)
२१० गुजि अव्यक्ते शब्दे ।
२११ अर्च पूजायाम्।
२१२ म्लेच्छ अव्यक्ते शब्दे ।
२१३ लछ
२१४ लाछि लक्षणे ।
२१५ वाछि इच्छायाम् ।
२१६ आछि आयामे ।
२१७ ह्रीछ लज्जायाम्।
२१८ हुर्छा कौटिल्ये ।
२१९ मुर्छा मोहसमुच्छाययोः ।
२२० स्फुर्छा विस्तृतौ।
२२१ युच्छ प्रमादे ।
२२२ उछि उञ्छे ।
२२३ उच्छी विवासे ।
२२४ ध्रज
२२५ ध्रजि
२२६ धृज
२२७ धृजि
२२८ ध्वज
२२९ ध्वजि गतौ ।
( ध्रिज च )
२३० कूज अव्यक्ते शब्दे ।
२३१ अर्ज
२३२ षर्ज अर्जने ।
२३३ गर्ज शब्दे ।
२३४ तर्ज भर्त्सने ।
२३५ कर्ज व्यथने ।
२३६ खर्ज पूजने च ।
२३७ अज गतिक्षेपणयोः ।
२३८ तेज पालने ।
२३९ खज मन्थे ।
(कज मद इत्येके)
२४० खजि गतिवैकल्ये ।
२४१ एजृ कम्पने ।
२४२ टुओस्फूर्जा वज्रनिर्घोषे ।
२४३ क्षि क्षये ।
२४४ क्षीज अव्यक्ते शब्दे ।
२४५ लज
२४६ लजि भर्जने ।
२४७ लाज
२४८ लाजि भर्त्सने च
२४९ जज
२५० जजि युद्धे ।
२५१ तुज हिंसायाम्।
२५२ तुजि पालने ।
२५३ गज
२५४ गजि
२५५ गृज
२५६ गृजि
२५७ मुज
२५८ मुजि शब्दार्थाः । गज मदने च ।
२५९ वज
२६० व्रज गतौ ।

**शुचाद्य उदात्ता उदात्तेतः (क्षिवर्ज) परस्मैभाषाः ।**

**( अथ टवर्गीयान्ता श्लाड्यन्ता आत्मनेपदिनः षट्त्रिंशत् )**

२६१ अट्ट अतिक्रमहिंसनयोः ।
२६२ वेष्ट वेष्टने ।
२६३ चेष्ट चेष्टायाम् ।
२६४ गोष्ट
२६५ लोष्ट संघाते ।
२६६ घट्ट चलने ।
२६७ स्फुट विकसने ।
२६८ अठि गतौ ।
२६९ वठि एकचर्यायाम् ।
२७० मठि
२७१ कठि शोके ।
२७२ मुठि पालने ।
२७३ हेठ विबाधायाम् ।
२७४ एठ च ।
२७५ हिडि गत्यनादरयोः ।
२७६ हुडि संघाते ।
२७७ कुडि दाहे ।
२७८ वडि विभाजने ।
२७९ मडि च ।
२८० भडि परिभाषणे ।
२८१ पिडि संघाते ।
२८२ मुडि मार्जने ।
२८३ तुडि तोडने ।
२८४ हुडि वरणे हरण इत्येके ।
२८५ चडि कोपे ।
२८६ शडि रुजायां संघाते च ।
२८७ तडि ताडने
२८८ पडि गतौ ।
२८९ कडि मदे ।
२९० खडि मन्थे ।
२९१ हेडृ
२९२ होडृ अनादरे ।
२९३ वाडृ आप्लाव्ये ।
२९४ द्राडृ
२९५ ध्राडृ विशरणे ।
२९६ शाडृ श्लाघायाम्।

**अट्टाद्य उदात्ता अनुदात्तेत आत्मनेभाषाः ।**

**(अथ आटवर्गीयान्तसमाप्तेः परस्मैपदिनः)**

२९७ शौटृ गर्वे ।
२९८ यौटृ बन्धे ।
२९९ म्लेटृ
३०० म्रेडृ उन्मादे ।
३०१ कटे वर्षावरणयोः ।
३०२ चटे इत्येके ।
३०३ अट
३०४ पट गतौ ।
३०५ रट परिभाषणे ।
३०६ लट बाल्ये
३०७ शट रुजाविशरणगत्यवसादनेषु ।
३०८ वट वेष्टने ।
३०९ किट

३१० खिट त्रासे ।
३११ शिट
३१२ षिट अनादरे
३१३ जट
३१४ झट संघाते ।
३१५ भट भृतौ ।
३१६ तट उच्छ्राये
३१७ खट काङ्क्षायाम् ।
३१८ णट नृत्तौ ।
३१९ पिट शब्दसंघातयोः ।
३२० हट दीप्तौ ।
३२१ षट अवयवे ।
३२२ लुट विलोडने ।
३२३ डान्तोऽयमित्येके ।
३२४ चिट परप्रेष्ये ।
३२५ विट शब्दे ।
३२६ बिट आक्रोशे ।
३२७ हिट इत्येके ।
३२८ इट
३२९ किट
३३० कटी गतौ ।
(इ,ई-इति प्रश्लेषः)
३३१ मडि भूषायाम् ।
३३२ कुडि वैकल्ये ।
३३३ कुटि इत्येके ।
३३४ मुड
३३५ प्रुड मर्दने ।
३३६ चुडि अल्पीभावे ।
३३७ मुडि खण्डने ।
३३८ पुडि चेत्येके ।
३३९ रुठि
३४० लुठि स्तेये ।
३४१ रुटि
३४२ लुटि इत्येके ।
३४३ रुडि
३४४ लुडि इत्यपरे ।
३४५ स्फुटिर् विशरणे ।
३४६ स्फुटि इत्यपि केचित् ।
३४७ पठ व्यक्तायां वाचि ।
३४८ वठ स्थौल्ये ।
३४९ मठ मदनिवासयोः ।
३५० कठ कृच्छ्रजीवने ।
३५१ रट परिभाषणे ।
३५२ रठ इत्येके ।
३५३ हठ प्लुतिशठत्वयोः । बलात्कार इत्यन्ये ।
३५४ रुठ
३५५ लुठ
३५६ उठ उपघाते ।
३५७ ऊठ इत्येके ।
३५८ पिठ हिंसासंक्लेशनयोः ।
३५९ शठ कैतवे च ।
३६० शुठ गतिप्रतिघाते ।
३६१ शुठि इति स्वामी ।
३६२ कुठि च ।
३६३ लुठि आलस्ये प्रतिघाते च ।
३६४ शुठि शोषणे ।
३६५ रुठि
३६६ लुठि गतौ ।
३६७ चुड्ड भावकरणे ।
३६८ अड्ड अभियोगे ।
३६९ कड्ड कार्कश्ये । चुड्डादयस्त्रयो दोपधाः ।
३७० क्रीडृ विहारे ।
३७१ तुडृ तोडने ।
३७२ तूडृ इत्येके ।
३७३ हुडृ
३७४ हूडृ
३७५ होडृ गतौ ।
३७६ रौडृ अनादरे ।
३७७ रोडृ
३७८ लोडृ उन्मादे ।
३७९ अड उद्यमे ।
३८० लड विलासे ।
३८१ लल इत्येके ।
३८२ कड मदे ।
३८३ कडि इत्येके ।
३८४ गडि वदनैकदेशे ।

**शौट्रादय उदात्ता उदात्तेतः परस्मैभाषाः ।**

( अथ पवर्गीयान्ता आत्मनेपदिनः स्तोभत्यन्ताश्चतुस्त्रिंशत् )

३८५ तिपृ
३८६ तेपृ
३८७ ष्टिपृ
३८८ ष्टेपृ क्षरणार्थाः । तेपृ कम्पने च ।
३८९ ग्लेपृ दैन्ये ।
३९० टुवेपृ कम्पने ।
३९१ केपृ
३९२ गेपृ
३९३ ग्लेपृ च ।
३९४ मेपृ
३९५ रेपृ
३९६ लेपृ गतौ ।
३९७ त्रपूष् लज्जायाम् ।
३९८ कपि चलने ।
३९९ रबि
४०० लबि
४०१ अबि शब्दे । लबि अवस्रंसने च ।
४०२ कबृ वर्णे ।
४०३ क्लीबृ अधार्ष्ट्ये ।
४०४ क्षीबृ मदे ।
४०५ शीभृ कत्थने ।
४०६ चीभृ च ।
४०७ रेभृ शब्दे ।
४०८ अभि-
४०९ रभी क्वचित्पठ्येते ।
४१० ( लभि च )
४११ ष्टभि
४१२ स्कभि प्रतिबन्धे ।
४१३ जभी
४१४ जृभि गात्रनामे ।
४१५ शल्भ कत्थने
४१६ वल्भ भोजने ।
४१७ गल्भ धार्ष्ट्ये ।
४१८ श्रम्भु प्रमादे । दन्त्यादिश्च ।
४१९ ष्टुभु स्तम्भे ।

**तिप्यादय उदात्ता अनुदात्तेत आत्मनेभाषाः । तिपिस्त्वनुदात्तः ।**

( अथ पवर्गीयान्ताः परस्मैपदिन एकचत्वारिंशत् )

४२० गुपू रक्षणे ।
४२१ धूप संतापे ।
४२२ जप
४२३ जल्प व्यक्तायां वाचि । जप मानसे च ।
४२४ चप सान्त्वने ।
४२५ षप समवाये ।
४२६ रप
४२७ लप व्यक्तायां वाचि ।
४२८ चुप मन्दायां गतौ ।
४२९ तुप
४३० तुम्प
४३१ त्रुप
४३२ त्रुम्प
४३३ तुफ
४३४ तुम्फ
४३५ त्रुफ
४३६ त्रुम्फ हिंसार्थाः ।
४३७ पर्प
४३८ रफ
४३९ रफि
४४० अर्ब
४४१ पर्ब
४४२ लर्ब
४४३ बर्ब
४४४ मर्ब
४४५ कर्ब
४४६ खर्ब
४४७ गर्ब
४४८ शर्ब
४४९ षर्ब
४५० चर्ब गतौ ।
४५१ कुबि आच्छादने ।
४५२ लुबि
४५३ तुबि अर्दने ।
४५४ चुबि वक्त्रसंयोगे ।
४५५ षृभु
४५६ षृम्भु हिंसार्थौ ।
४५७ षिभु
४५८ षिम्भु इत्येके ।
४५९ शुभ
४६० शुम्भ भाषणे । भासन इत्येके । हिंसायामित्यन्ये ।

**गुपादय उदात्ता उदात्तेतः परस्मैभाषाः**

( अथानुनासिकान्ताः कम्यन्ता आत्मनेपदिनो दश )

४६१ घिणि
४६२ घुणि
४६३ घृणि ग्रहणे ।
४६४ घुण
४६५ घूर्ण भ्रमणे ।
४६६ पण व्यवहारे स्तुतौ च ।
४६७ पन च ।
४६८ भाम क्रोधे ।
४६९ क्षमूष् सहने ।
४७० कमु कान्तौ ।

**घिण्यादय उदात्ता अनुदात्तेत आत्मनेभाषाः ।**

( अथ क्रम्यन्ताः परस्मैपदिनस्त्रिंशत् )

४७१ अण
४७२ रण
४७३ वण
४७४ भण

४७५ मण
४७६ क्रण
४७७ क्कण
४७८ व्रण
४७९ भ्रण
४८० ध्वण शब्दार्थाः ।
४८१ (धणि इत्यपि केचित् ।)
४८२ ओणृ अपनयने ।
४८३ शोणृ वर्णगत्योः ।
४८४ श्रोणृ संघाते ।
४८५ श्लोणृ च ।
४८६ पैणृ गतिप्रेरण-श्लेषणेषु ।
४८७ प्रैणृ इत्यपि
४८८ ध्रण शब्दे ।
४८९ (बण इत्यपि केचित् ।)
४९० कनी दीप्तिकान्तिगतिषु ।
४९१ ष्टन
४९२ वन शब्दे ।
४९३ ( वन )
४९४ षण संभक्तौ ।
४९५ अम गत्यादिषु
४९६ द्रम
४९७ हम्म
४९८ मीमृ गतौ ।
४९९ चमु
५०० छमु
५०१ जमु
५०२ झमु अदने ।
५०३ (जिमि इति केचित् ।)
५०४ क्रमु पादविक्षेपे ।

**अणादय उदात्ता उदात्तेतः परस्मैभाषाः ।**

**(अथ रेवत्यन्ता आत्मनेपदिनोऽष्टत्रिंशत् )**

५०५ अय
५०६ वय
५०७ पय
५०८ मय
५०९ चय
५१० तय
५११ णय गतौ ।
५१२ दय दानगतिरक्षणहिंसादानेषु ।
५१३ रय गतौ ।
५१४ लय च ।
५१५ ऊयी तन्तुसंताने ।
५१६ पूयी विशरणे दुर्गन्धे च ।
५१७ क्नूयी शब्दे उन्दे च ।
५१८ क्ष्मायी विधूनने ।
५१९ स्फायी
५२० ओप्यायी वृद्धौ ।
५२१ तायृ संतानपालनयोः ।
५२२ शल चलनसंवरणयोः ।
५२३ वल
५२४ वल्ल संवरणे संचरणे च ।
५२५ मल
५२६ मल्ल धारणे ।
५२७ भल
५२८ भल्ल परिभाषणहिंसादानेषु ।
५२९ कल शब्दसंख्यानयोः ।
५३० कल्ल अव्यक्ते शब्दे । अशब्द इति स्वामी ।
५३१ तेवृ
५३२ देवृ देवने ।
५३३ षेवृ
५३४ गेवृ
५३५ ग्लेवृ
५३६ पेवृ
५३७ मेवृ
५३८ म्लेवृ सेवने ।
५३९ शेवृ
५४० खेवृ
५४१ क्लेवृ इत्येके ।
५४२ रेवृ प्लवगतौ ।

**अयादय उदात्ता अनुदात्तेत आत्मनेभाषाः ।**

**( अथावत्यन्ताः परस्मैपदिनः )**

५४३ मव्य बन्धने
५४४ सूर्क्ष्य
५४५ ईर्क्ष्य
५४६ ईर्ष्य ईर्ष्यार्थाः ।
५४७ हय गतौ ।
५४८ शुच्य अभिषवे ।
५४९ चुच्य इत्येके ।
५५० हर्य गतिकान्त्योः ।
५५१ अल भूषणपर्याप्तिवारणेषु । अयं स्वरितेदित्येके ।
५५२ ञिफला विशरणे ।
५५३ मील
५५४ श्मील
५५५ स्मील
५५६ क्ष्मील निमेषणे ।
५५७ पील प्रतिष्टम्भे ।
५५८ नील वर्णे ।
५५९ शील समाधौ ।
५६० कील बन्धने ।
५६१ कूल आवरणे ।
५६२ शूल रुजायां संघोषे च ।
५६३ तूल निष्कर्षे ।
५६४ पूल संघाते ।
५६५ मूल प्रतिष्ठायाम् ।
५६६ फल निष्पत्तौ ।
५६७ चुल्ल भावकरणे ।
५६८ फुल्ल विकसने ।
५६९ चिल्ल शैथिल्ये भावकरणे च ।
५७० तिल गतौ ।
५७१ तिल्ल इत्येके ।
५७२ वेलृ
५७३ चेलृ
५७४ केलृ
५७५ खेलृ
५७६ क्ष्वेलृ
५७७ वेल्ल चलने ।
५७८ पेलृ
५७९ फेलृ
५८० शेलृ गतौ ।
५८१ षेलृ इत्येके
५८२ स्खल संचलने ।
५८३ खल संचये ।
५८४ गल अदने ।
५८५ षल गतौ ।
५८६ दल विशरणे ।
५८७ श्वल
५८८ श्वल्ल आशुगमने ।
५८९ खोलृ
५९० खोर्ऋ गतिप्रतिघाते ।
५९१ धोर्ऋ गतिचातुर्ये ।
५९२ त्सर छद्मगतौ ।
५९३ क्मर हूर्च्छने ।
५९४ अभ्र
५९५ वभ्र
५९६ मभ्र
५९७ चर गत्यर्थाः । चरतिर्भक्षणेऽपि ।
५९८ ष्ठिवु निरसने ।
५९९ जि जये ।
६०० जीव प्राणधारणे ।
६०१ पीव
६०२ मीव
६०३ तीव
६०४ णीव स्थौल्ये ।
६०५ क्षिवु
६०६ क्षेवु निरसने ।
६०७ उर्वी
६०८ तुर्वी
६०९ थुर्वी
६१० दुर्वी
६११ धुर्वी हिंसार्थाः ।
६१२ गुर्वी उद्यमने ।
६१३ मुर्वी बन्धने ।
६१४ पुर्व
६१५ पर्व
६१६ मर्व पूरणे ।
६१७ चर्व अदने ।
६१८ भर्व हिंसायाम्
६१९ कर्व
६२० खर्व
६२१ गर्व दर्पे ।
६२२ अर्व
६२३ शर्व
६२४ षर्व हिंसायाम् ।
६२५ इवि व्याप्तौ ।
६२६ पिवि
६२७ मिवि
६२८ णिवि सेचने ।
६२९ पिवीत्येके । सेवन इत्येके ।
६३० हिवि
६३१ दिवि
६३२ धिवि
६३३ जिवि प्रीणनार्थाः ।
६३४ रिवि
६३५ रवि
६३६ धवि गत्यर्थाः ।
६३७ कृवि हिंसाकरणयोश्च ।
६३८ मव बन्धने ।
६३९ अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु ।

**मव्यादय उदात्ता उदात्तेतः परस्मैभाषाः । जिस्त्वनुदात्तः ।**

६४० धावु गतिशुद्ध्योः ।

**उदात्तः स्वरिते-**
**तुभयतोभाषः ।**
**(अथोष्मान्ता आत्म-**
**नेपदिनो द्विपञ्चाशत्)**
६४१ धुक्ष
६४२ धिक्ष संदीपन-
क्लेशनजीवनेषु ।
६४३ वृक्ष वरणे ।
६४४ शिक्ष विद्यो-
पादाने ।
६४५ भिक्ष भिक्षाया-
मलाभे लाभे च ।
६४६ क्लेश अव्यक्तायां
वाचि । बाधन
इति दुर्गः ।
६४७ दक्ष वृद्धौ शी-
घ्रार्थे च ।
६४८ दीक्ष मौण्ड्ये-
ज्योपनयननि-
यमव्रतादेशेषु
६४९ ईक्ष दर्शने ।
६५० ईष गतिहिंसा-
दर्शनेषु ।
६५१ भाष व्यक्तायां
वाचि ।
६५२ वर्ष स्नेहने ।
६५३ गेषृ अन्विच्छा-
याम् ।
६५४ ग्लेषृ इत्येके ।
६५५ पेषृ प्रयत्ने ।
(एषृ इत्येके। येषृ
इत्यप्यन्ये ) ।
६५६ जेषृ
६५७ णेषृ
६५८ एषृ
६५९ प्रेषृ गतौ ।
६६० रेषृ
६६१ हेषृ
६६२ ह्रेषृ अव्यक्ते
शब्दे ।
६६३ कासृ शब्दकु-
त्सायाम् ।
६६४ भासृ दीप्तौ ।
६६५ णासृ

६६६ रासृ शब्दे ।
६६७ णसु कौटिल्ये ।
६६८ भ्यस भये ।
६६९ आङः शसि
इच्छायाम् ।
६७० ग्रसु
६७१ ग्लसु अदने ।
६७२ ईह चेष्टायाम् ।
६७३ वहि
६७४ महि वृद्धौ ।
( बंहीत्येके )
६७५ अहि गतौ ।
६७६ गर्ह
६७७ गल्ह कुत्सायाम् ।
६७८ बर्ह
६७९ बल्ह प्राधान्ये ।
६८० वर्ह
६८१ वल्ह परिभाष-
णहिंसाच्छा-
दनेषु ।
६८२ प्लिह गतौ ।
६८३ वेहृ (बेहृ)
६८४ जेहृ
६८५ बाहृ(वाहृ)प्रयत्ने
जेहृ गतावपि ।
६८६ द्राहृ निद्राक्षये ।
निक्षेप इत्येके ।
६८७ काशृ दीप्तौ ।
६८८ ऊह वितर्के ।
६८९ गाहू विलोडने ।
६९० गृहू ग्रहणे ।
६९१ ग्लह च ।
६९२ घुषि कान्ति-
करणे ।
६९३ घष इति
केचित् ।
**घुक्षादय उदात्ता**
**अनुदात्तेत आ-**
**त्मनेभाषाः ।**
**गृहिस्तु वेट् ।**
**(अथार्हत्यन्ताः पर-**
**स्मैपदिन एकनवतिः)**
६९४ घुषिर् अवि-
शब्दने । शब्द
इति अन्ये पेठुः ।

६९५ अक्षू व्याप्तौ ।
६९६ तक्षू
६९७ त्वक्षू तनूकरणे ।
६९८ उक्ष सेचने ।
६९९ रक्ष पालने ।
७०० णिक्ष चुम्बने ।
७०१ तृक्ष
७०२ ष्टृक्ष ( त्रक्ष ष्ट्रक्ष )
७०३ णक्ष गतौ ।
७०४ वक्ष रोषे । स-
ङ्घात इत्येके ।
७०५ मृक्ष सङ्घाते ।
७०६ म्रक्ष इत्येके ।
७०७ तक्ष त्वचने ।
७०८ पक्ष परिग्रह
इत्येके ।
७०९ सूर्क्ष आदरे ।
७१० षर्क्ष इति
केचित् ।
७११ काक्षि
७१२ वाक्षि
७१३ माक्षि काङ्क्षा-
याम् ।
७१४ द्राक्षि
७१५ ध्राक्षि
७१६ ध्वाक्षि घोरवा-
सिते च ।
७१७ चूष पाने ।
७१८ तूष तुष्टौ ।
७१९ पूष वृद्धौ ।
७२० मूष स्तेये ।
७२१ लूष
७२२ रूष भूषायाम् ।
७२३ शूष प्रसवे ।
७२४ यूष हिंसायाम् ।
७२५ जूष च ।
७२६ भूष अलङ्कारे ।
७२७ ऊष रुजायाम् ।
७२८ ईष उञ्छे ।
७२९ कष
७३० खष
७३१ शिष
७३२ जष
७३३ झष

७३४ शष
७३५ वष
७३६ मष
७३७ रुष
७३८ रिष हिंसार्थाः ।
७३९ भष भर्त्सने ।
७४० उष दाहे ।
७४१ जिषु
७४२ विषु
७४३ मिषु सेचने ।
७४४ पुष पुष्टौ ।
७४५ श्रिषु
७४६ श्लिषु
७४७ प्रुषु
७४८ प्लुषु दाहे ।
७४९ पृषु
७५० वृषु
७५१ मृषु सेचने ।
मृषु सहने च ।
इतरौ हिंसासं-
क्लेशनयोश्च ।
७५२ घृषु सङ्घर्षे ।
७५३ हृषु अलीके ।
७५४ तुस
७५५ ह्रस
७५६ ह्लस
७५७ रस शब्दे ।
७५८ लस श्लेषणक्रीड-
नयोः ।
७५९ घस्लृ अदने ।
७६० जर्ज
७६१ चर्च
७६२ झर्झ परिभाषण-
हिंसातर्जनेषु ।
७६३ पिसृ
७६४ पेसृ गतौ ।
७६५ हसे हसने ।
७६६ णिश समाधौ ।
७६७ मिश
७६८ मश शब्दे
रोषकृते च
७६९ शव गतौ ।
७७० शश प्लुतगतौ ।
७७१ शसु हिंसायाम् ।

७७२ शंसु स्तुतौ ।
दुर्गताविति दुर्गः ।
७७३ चह परिकल्कने ।
७७४ मह पूजायाम् ।
७७५ रह त्यागे ।
७७६ रहि गतौ ।
७७७ दृह
७७८ दृहि
७७९ बृह
७८० बृहि वृद्धौ ।
बृहि शब्दे च ।
७८१ बृहिर् चेत्येके ।
७८२ तुहिर्
७८३ दुहिर्
७८४ उहिर् अर्दने ।
७८५ अर्ह पूजायाम् ।
**घुषिरादय उदात्ता**
**उदात्तेतः परस्मै-**
**भाषाः । घसि-**
**स्त्वनुदात्तः ।**
**(अथ कृपूपर्यन्ता आ-**
**त्मनेपदिनष्षड्विं-**
**शतिः) ।**
७८६ द्युत दीप्तौ ।
७८७ श्विता वर्णे ।
७८८ ञिमिदा स्नेहने ।
७८९ ञिष्विदा स्नेहन-
मोचनयोः । मो-
हनयोरित्येके ।
७९० ञिक्ष्विदा
चेत्येके ।
७९१ रुच दीप्तावभि-
प्रीतौ च ।
७९२ घुट परिवर्तने ।
७९३ रुट
७९४ लुट
७९५ लुठ प्रतिघाते ।
७९६ शुभ दीप्तौ ।
७९७ क्षुभ सञ्चलने ।
७९८ णभ
७९९ तुभ हिंसायाम् ।
आद्योऽभा-
वेऽपि ।
८०० स्रंसु

८०१ ध्वंसु
८०२ भ्रंसु अवस्रंसने । ध्वंसु गतौ च ।
८०३ भ्रंशु इत्यपि केचित् । तृतीय एव तालव्यान्त इत्यन्ये ।
८०४ स्रम्भु विश्वासे ।
८०५ वृतु वर्तने ।
८०६ वृधु वृद्धौ ।
८०७ शृधु शब्दकुत्सायाम् ।
८०८ स्यन्दू प्रस्रवणे ।
८०९ कृपू सामर्थ्ये ।

**द्युतादय उदात्ता अनुदात्तेत आत्मनेभाषाः । वृत् ।**

(अथ त्वरत्यन्ताः त्रयोदशात्मनेपदिनः षितश्च ।)

८१० घट चेष्टायाम् ।
८११ व्यथ भयसंचलनयोः ।
८१२ प्रथ प्रख्याने ।
८१३ प्रस विस्तारे ।
८१४ म्रद मर्दने ।
८१५ स्खद स्खदने ।
८१६ क्षजि गतिदानयोः ।
८१७ दक्ष गतिहिंसनयोः ।
८१८ कृप कृपायां गतौ च ।
८१९ कदि
८२० क्रदि
८२१ क्लदि वैक्लव्ये । वैकल्य इत्येके । त्रयोऽप्यनिदित इति नन्दी । इदित इति स्वामी । कदिक्रदी इदितौ । क्रद क्लद इति चानिदितौ इति मैत्रेयः ।
८२२ त्रिवरा संभ्रमे ।

**घटादयः षितः । उदात्ता अनुदात्तेत आत्मनेभाषाः ।**

(अथ फणान्ताः परस्मैपदिनः ।)

८२३ ज्वर रोगे ।
८२४ गड सेचने ।
८२५ हेड वेष्टने ।
८२६ वट
८२७ भट परिभाषणे ।
८२८ णट नृत्तौ । नतावित्येके । गतावित्यन्ये ।
८२९ ष्टक प्रतिघाते
८३० चक तृप्तौ ।
८३१ कखे हसने ।
८३२ रगे शङ्कायाम् ।
८३३ लगे सङ्गे ।
८३४ ह्रगे
८३५ ह्लगे
८३६ षगे
८३७ ष्टगे संवरणे ।
८३८ कगे नोच्यते ।
८३९ अक
८४० अग कुटिलायां गतौ ।
८४१ कण
८४२ रण गतौ
८४३ चण
८४४ शण
८४५ श्रण दाने च । शण गताविल्यन्ये ।
८४६ श्रथ ( श्नथ क्नथ )
८४७ श्लथ
८४८ क्रथ
८४९ क्लथ हिंसार्थाः ।
८५० वन च ।
८५१ वनु च नोच्यते ।
८५२ ज्वल दीप्तौ ।
८५३ ह्वल
८५४ ह्मल चलने ।
८५५ स्मृ आध्याने ।
८५६ दॄ भये ।
८५७ नॄ नये ।
८५८ श्रा पाके ।
८५९ मारणतोषणनिशामनेषु ज्ञा । निशानेष्विति पाठान्तरम् ।
८६० कम्पने चलिः
८६१ छदिर् ऊर्जने ।
८६२ जिह्वोन्मथने लडिः ।
८६३ मदी हर्षग्लेपनयोः ।
८६४ ध्वन शब्दे ।
८६५ दलि
८६६ वलि
८६७ स्खलि
८६८ रणि
८६९ ध्वनि
८७० त्रपि
८७१ क्षपयश्चेति भोजः ।
८७२ स्वन अवतंसने । घटादयो मितः ।
८७३ जनी
८७४ जॄष्
८७५ क्नसु
८७६ रञ्जोऽमन्ताश्च ।
८७७ ज्वल
८७८ ह्वल
८७९ ह्मल
८८० नमामनुपसर्गाद्वा ।
८८१ ग्ला
८८२ स्ना
८८३ वनु
८८४ वमां च ।
न
८८५ कमि
८८६ अमि
८८७ चमाम् ।
८८८ शमोऽदर्शने ।
८८९ यमोऽपरिवेषणे ।
८९० स्खदिर् अवपरिभ्यां च ।
८९१ फण गतौ ।

**घटादयः फणान्ता मितः । वृत् ।**

**ज्वरादय उदात्ता उदात्तेतः परस्मैभाषाः ।**

८९२ राजृ दीप्तौ ।

**उदात्तः स्वरितेदुभयतोभाषः ।**

८९३ टुभ्राजृ
८९४ टुभ्राशृ
८९५ टुभ्लाशृ दीप्तौ ।

**उदात्ता अनुदात्तेत आत्मनेभाषाः ।**

(अथ क्षरत्यन्ताः परस्मैपदिनः ।)

८९६ स्यमु
८९७ स्वन
८९८ ध्वन शब्दे ।
फणादयो गताः ।
८९९ षम
९०० ष्टम अवैकल्ये ।

**वृत् ।**

९०१ ज्वल दीप्तौ ।
९०२ चल कम्पने ।
९०३ जल घातने ।
९०४ टल
९०५ ट्वल वैक्लव्ये
९०६ ष्ठल स्थाने ।
९०७ हल विलेखने ।
९०८ णल गन्धे । बंधन इत्येके ।
९०९ पल गतौ ।
९१० बल प्राणने धान्यावरोधने च ।
९११ पुल महत्त्वे ।
९१२ कुल संस्त्याने बन्धुषु च ।
९१३ शल
९१४ हुल
९१५ पत्लृ गतौ । (हुल हिंसायां संवरणे च) ।
९१६ क्वथे निष्पाके ।
९१७ पथे गतौ
९१८ मथे विलोडने ।
९१९ टुवम उद्गिरणे ।
९२० भ्रमु चलने ।
९२१ क्षर सञ्चलने ।

**स्यमादय उदात्तेतः परस्मैभाषाः ।**

९२२ षह मर्षणे ।

**उदात्तोऽनुदात्तेदात्मनेभाषः ।**

९२३ रमु क्रीडायाम् ।
९२४ रम इति माधवः ।

**अनुदात्तोऽनुदात्तेदात्मनेभाषः ।**

(अथ कसन्ताः परस्मैपदिनः ।)

९२५ षद्लृ विशरणगत्यवसादनेषु ।
९२६ शद्लृ शातने ।
९२७ क्रुश आह्वाने रोदने च ।

**षदादयस्त्रयोऽनुदात्ता उदात्तेतः परस्मैभाषाः ।**

९२८ कुच संपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु ।
९२९ बुध अवगमने ।
९३० रुह बीजजन्मनि प्रादुर्भावे च ।
९३१ कस गतौ ।

**वृत् ।**

**कुचादय उदात्तेतः परस्मैभाषाः । रुहिस्त्वनुदात्तः । ज्वलादिर्गतः ।**
**( अथ गुहूत्यन्ताः स्वरितेतः । )**
९३२ हिक्क अव्यक्ते शब्दे ।
९३३ अञ्चु गतौ याचने च ।
९३४ अचु इत्येके ।
९३५ अचि इत्यपरे ।
९३६ टुयाचृ याञ्चायाम् ।
९३७ रेटृ परिभाषणे ।
९३८ चते
९३९ चदे याचने ।
९४० प्रोथृ पर्याप्तौ ।
९४१ मिदृ
९४२ मेदृ मेधाहिंसनयोः ।
९४३ थान्ताविमाविति स्वामी ।
९४४ धान्ताविति न्यासः ।
९४५ मेधृ सङ्गमे च ।
९४६ णिदृ
९४७ णेदृ कुत्सासन्निकर्षयोः ।
९४८ शृधु
९४९ मृधु उन्दने ।
९५० बुधिर् बोधने
९५१ उबुन्दिर् निशामने ।
९५२ वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु ।
९५३ नान्तोऽप्ययम् ।
९५४ खनु अवदारणे
९५५ चीवृ आदानसंवरणयोः ।
९५६ चायृ पूजानिशामनयोः ।
९५७ व्यय गतौ ।
९५८ दाशृ दाने ।
९५९ भेषृ भये । गतावित्येके ।
९६० भ्रेषृ
९६१ भ्लेषृ गतौ ।
९६२ अस गतिदीप्त्यादानेषु ।
९६३ अष इत्येके ।
९६४ स्पश बाधनस्पर्शनयोः ।
९६५ लष कान्तौ ।
९६६ चष भक्षणे ।
९६७ छष हिंसायाम् ।
९६८ झष आदानसंवरणयोः ।
९६९ भ्रक्ष
९७० भ्लक्ष अदने ।
९७१ भक्ष इति मैत्रेयः ।
९७२ दासृ दाने ।
९७३ माहृ माने ।
९७४ गुहू संवरणे ।

**हिक्कादय उदात्ताः स्वरितेत उभयतोभाषाः ।**
**(अथाजन्ता उभयपदिनः । )**
९७५ श्रिञ् सेवायाम् ।

**उदात्त उभयतोभाषः ।**
९७६ भृञ् भरणे ।
९७७ हृञ् हरणे ।
९७८ धृञ् धारणे ।
९७९ णीञ् प्रापणे ।

**भृञादयश्चत्वारोऽनुदात्ता उभयतोभाषाः ।**
**(अथ अजन्ताः परस्मैपदिनः ।)**
९८० धेट् पाने ।
९८१ ग्लै
९८२ म्लै हर्षक्षये ।
९८३ द्यै न्यक्करणे ।
९८४ द्रै स्वप्ने ।
९८५ ध्रै तृप्तौ ।
९८६ ध्यै चिन्तायाम् ।
९८७ रै शब्दे ।
९८८ स्त्यै
९८९ ष्ट्यै शब्दसंघातयोः ।
९९० खै खदने ।
९९१ क्षै
९९२ जै
९९३ षै क्षये ।
९९४ कै
९९५ गै शब्दे ।
९९६ शै
९९७ श्रै पाके । स्रै इति केषुचित्पाठः ।
९९८ पै
९९९ ओवै शोषणे ।
१००० ष्टै वेष्टने ।
१००१ ष्णै वेष्टने । शोभायां चेत्येके ।
१००२ दैप् शोधने ।
१००३ पा पाने ।
१००४ घ्रा गन्धोपादाने ।
१००५ ध्मा शब्दाग्निसंयोगयोः ।
१००६ ष्ठा गतिनिवृत्तौ ।
१००७ म्ना अभ्यासे ।
१००८ दाण् दाने ।
१००९ ह्वृ कौटिल्ये ।
१०१० स्वृ शब्दोपतापयोः ।
१०११ स्मृ चिन्तायाम् ।
१०१२ ह्वृ संवरणे ।
१०१३ सृ गतौ ।
१०१४ ऋ गतिप्रापणयोः ।
१०१५ गृ
१०१६ घृ सेचने ।
१०१७ ध्वृ हूर्च्छने ।
१०१८ स्रु गतौ ।
१०१९ षु प्रसवैश्वर्ययोः ।
१०२० श्रु श्रवणे ।
१०२१ ध्रु स्थैर्ये ।
१०२२ दु
१०२३ द्रु गतौ ।
१०२४ जि
१०२५ ज्रि अभिभवे ।

**धयत्यादयोऽनुदात्ताः परस्मैभाषाः ।**
**(अथ डीङन्ता ङितः ।)**
१०२६ ष्मिङ् ईषद्धसने ।
१०२७ गुङ् अव्यक्ते शब्दे ।
१०२८ गाङ् गतौ ।
१०२९ कुङ्
१०३० घुङ्
१०३१ उङ
१०३२ ङुङ् शब्दे ।
१०३३ उङ्
१०३४ कुङ्
१०३५ खुङ्
१०३६ गुङ्
१०३७ घुङ्
१०३८ ङुङ् इत्यन्ये ।
१०३९ च्युङ्
१०४० ज्युङ्
१०४१ प्रुङ्
१०४२ प्लुङ् गतौ ।
१०४३ क्लुङ् इत्येके ।
१०४४ रुङ् गतिरेषणयोः ।
१०४५ धृङ् अवध्वंसने ।
१०४६ मेङ् प्रणिदाने ।
१०४७ देङ् रक्षणे
१०४८ श्यैङ् गतौ ।
१०४९ प्यैङ् वृद्धौ ।
१०५० त्रैङ् पालने ।

**ष्मिङादयोऽनुदात्ता आत्मनेभाषाः ।**
१०५१ पूङ् पवने ।
१०५२ मूङ् बन्धने ।
१०५३ डीङ् विहायसा गतौ ।

**पूङादयस्त्रय उदात्ता आत्मनेभाषाः ।**
१०५४ तॄ प्लवनतरणयोः ।

**उदात्तः परस्मैभाषः ।**
**( अथाष्टावात्मनेपदिनः । )**
१०५५ गुप गोपने ।
१०५६ तिज निशाने ।
१०५७ मान पूजायाम् ।
१०५८ बध बन्धने ।

**गुपादयश्चत्वार उदात्ता अनुदात्तेत आत्मनेभाषाः ।**
१०५९ रभ राभस्ये ।
१०६० डुलभष् प्राप्तौ ।
१०६१ ष्वञ्ज परिष्वङ्गे ।
१०६२ हद पुरीषोत्सर्गे ।

**रभादयश्चत्वार उदात्ता अनुदात्तेत आत्मनेभाषाः ।**
१०६३ ञिष्विदा अव्यक्ते शब्दे ।

**उदात्त उदात्तेत् परस्मैभाषः ।**
१०६४ स्कन्दिर् गतिशोषणयोः ।
१०६५ यभ मैथुने ।
१०६६ णम प्रह्वत्वे शब्दे च ।
१०६७ गम्लृ
१०६८ सृप्लृ गतौ ।
१०६९ यम उपरमे ।

१०७० तप संतापे ।
१०७१ त्यज हानौ ।
१०७२ षञ्ज सङ्गे ।
१०७३ दृशिर् प्रेक्षणे ।
१०७४ दंश दशने ।
१०७५ कृष विलेखने ।
१०७६ दह भस्मीकरणे ।
१०७७ मिह सेचने ।

**स्कन्दादयोऽनुदात्ता उदात्तेतः परस्मैभाषाः ।**

१०७८ कित निवासे रोगापनयने च ।

**उदात्तेत् परस्मैभाषः ।**

**( अथ वहत्यन्ताः स्वरितेतः । )**

१०७९ दान खण्डने ।
१०८० शान तेजने ।

**उदात्तौ स्वरितेताबुभयतोभाषौ ।**

१०८१ डुपचष् पाके ।
१०८२ षच समवाये ।
१०८३ भज सेवायाम् ।
१०८४ रञ्ज रागे
१०८५ शप आक्रोशे ।
१०८६ त्विष दीप्तौ ।
१०८७ यज देवपूजासंगतिकरणदानेषु ।
१०८८ डुवप् बीजसंताने । छेदनेऽपि ।
१०८९ वह प्रापणे ।

**पचादयोऽनुदात्ताः स्वरितेत उभयतोभाषाः । पचिस्तूदात्तः ।**

१०९० वस निवासे ।

**अनुदात्त उदात्तेत् परस्मैभाषः ।**

१०९१ वेञ् तन्तुसन्ताने ।
१०९२ व्येञ् संवरणे ।
१०९३ ह्वेञ् स्पर्धायां शब्दे च ।

**वेञादयस्त्रयोऽनुदात्ता उभयतोभाषाः ।**

**(अथ परस्मैपदिनौ ।)**

१०९४ वद व्यक्तायां वाचि ।
१०९५ टुओश्वि गतिवृद्ध्योः । वृत् ।

यजादिः समाप्तः । अयं वदतिश्चोदात्तौ परस्मैभाषौ । ज्वलम्पल्यादिश्च भ्वादौ द्रष्टव्याः, तस्य आकृतिगणत्वात् । ऋतिः सौत्रश्च सजुगुप्साकृपयोः ।

**इति शब्विकरणा भ्वादयः । (१०९५)**

**(अथ अदादयः ।)**

१०९६ अद भक्षणे ।
१०९७ हन हिंसागत्योः ।

**अनुदात्तावुदात्तेतौ परस्मैपदिनौ ।**

**( अथ चत्वारः स्वरितेतः । )**

१०९८ द्विष अप्रीतौ ।
१०९९ दुह प्रपूरणे ।
११०० दिह उपचये ।
११०१ लिह आस्वादने ।

**द्विषादयोऽनुदात्ताः स्वरितेत उभयतोभाषाः ।**

११०२ चक्षिङ् व्यक्तायां वाचि । अयं दर्शनेऽपि ।

**अनुदात्तोऽनुदात्तेदात्मनेपदी ।**

**( अथ पृच्यन्ता अनुदात्तेतो दश ।)**

११०३ ईर गतौ कम्पने च ।
११०४ ईड स्तुतौ ।
११०५ ईश ऐश्वर्ये ।
११०६ आस उपवेशने ।
११०७ आङः शासु इच्छायाम् ।
११०८ वस आच्छादने ।
११०९ कसि गतिशासनयोः । अयमनिदिति केचित् ।
१११० कस इत्येके ।
११११ कश इत्यपि ।
१११२ णिसि चुम्बने ।
१११३ णिजि शुद्धौ ।
१११४ शिजि अव्यक्ते शब्दे ।
१११५ पिजि वर्णे । संपर्चन इत्येके । उभयत्रेत्यन्ये । अवयव इत्येके । अव्यक्ते शब्दे इतीतरे ।
१११६ पृजि इत्येके ।
१११७ वृजी वर्जने ।
१११८ वृजि इत्यन्ये ।
१११९ पृची संपर्चने ।

**ईरादय उदात्ता अनुदात्तेत आत्मनेभाषाः ।**

११२० षूङ् प्राणिगर्भविमोचने ।
११२१ शीङ् स्वप्ने ।

**उदात्तावात्मनेभाषौ ।**

**( अथ स्नौत्यन्ताः परस्मैपदिनो दश ।)**

११२२ यु मिश्रणेऽमिश्रणे च ।
११२३ रु शब्दे । तु इति सौत्रो धातुः गतिवृद्धिहिंसासु
११२४ णु स्तुतौ ।
११२५ टुक्षु शब्दे ।
११२६ क्ष्णु तेजने ।
११२७ ष्णु प्रस्रवणे ।

**युप्रभृतय उदात्ता उदात्तेतः परस्मैभाषाः ।**

११२८ ऊर्णुञ् आच्छादने ।

**उदात्त उभयतोभाषः ।**

११२९ द्यु अभिगमने ।
११३० षु प्रसवैश्वर्ययोः ।
११३१ कु शब्दे ।
११३२ ष्टुञ् स्तुतौ ।

**द्युप्रभृतयोऽनुदात्ताः परस्मैभाषाः । स्तौतिस्तूभयतोभाषः ।**

११३३ ब्रूञ् व्यक्तायां वाचि ।

**उदात्त उभयतोभाषः ।**

**(अथ शास्यन्ताः परस्मैपदिनः ।)**

११३४ इण् गतौ ।
११३५ इङ् अध्ययने । नित्यमधिपूर्वः ।
११३६ इक् स्मरणे । अयमप्यधिपूर्वः ।
११३७ वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु । ( ई च )
११३८ या प्रापणे ।
११३९ वा गतिगन्धनयोः ।
११४० भा दीप्तौ ।
११४१ ष्णा शौचे ।
११४२ श्रा पाके ।
११४३ द्रा कुत्सायां गतौ ।
११४४ प्सा भक्षणे ।
११४५ पा रक्षणे ।
११४६ रा दाने ।
११४७ ला आदाने । द्वावपि दाने इति चन्द्रः ।
११४८ दाप् लवने ।
११४९ ख्या प्रकथने ।
११५० प्रा पूरणे ।
११५१ मा माने ।
११५२ वच परिभाषणे ।

**इण्प्रभृतयोऽनुदात्ताः परस्मैभाषाः ।**

**इङ् त्वात्मनेपदी ।**

११५३ विद ज्ञाने ।
११५४ अस् भुवि ।
११५५ मृजू शुद्धौ ।
११५६ रुदिर् अश्रुविमोचने ।

**विदादय उदात्ता उदात्तेतः परस्मैभाषाः ।**

११५७ ञिष्वप् शये ।

**अनुदात्तः परस्मैभाषः ।**

११५८ श्वस प्राणने ।
११५९ अन च ।
११६० जक्ष भक्षहसनयोः । वृत् ।
११६१ जागृ निद्राक्षये ।
११६२ दरिद्रा दुर्गतौ
११६३ चकासृ दीप्तौ ।

११६४ शासु अनुशिष्टौ।
**श्वसादय उदात्ता उदात्तेतः परस्मैभाषाः।**
( अथ पञ्चधातवश्छान्दसाः। )
११६५ दीधीङ् दीप्तिदेवनयोः।
११६६ वेवीङ् वेतिना तुल्ये।
**उदात्तावात्मनेभाषौ।**
११६७ षस
११६८ षस्ति स्वप्ने।
११६९ वश कान्तौ।
**षसादय उदात्ता उदात्तेतः परस्मैभाषाः।**
**चर्करीतं च।**
११७० हुङ् अपनयने।
**अनुदात्त आत्मनेभाषः।**
**इति लुग्विकरणा अदादयः॥ २॥**
(७५)
**( अथ जुहोत्यादयः। )**
११७१ हु दानादनयोः। आदाने चेत्येके। प्रीणनेऽपीति भाष्यम्।
११७२ ञिभी भये।
११७३ ह्री लज्जायाम्।
**जुहोत्यादयोऽनुदात्ताः परस्मैभाषाः।**
११७४ पॄ पालनपूरणयोः।
११७५ पृ इत्येके।
**उदात्तः परस्मैभाषः।**
११७६ डुभृञ् धारणपोषणयोः।
**अनुदात्त उभयतोभाषः।**
११७७ माङ् माने शब्दे च।
११७८ ओहाङ् गतौ।
**अनुदात्तावात्मनेपदिनौ।**
११७९ ओहाक् त्यागे।
**अनुदात्तः परस्मैपदी।**
११८० डुदाञ् दाने।
११८१ डुधाञ् धारणपोषणयोः। दाने इत्यप्येके।
**अनुदात्तावुभयतोभाषौ।**
( अथ त्रयः स्वरितेतः। )
११८२ णिजिर् शौचपोषणयोः। विजिर् पृथग्भावे।
११८३ विष्लृ व्याप्तौ।
**णिजिरादयोऽनुदात्ताः स्वरितेत उभयतोभाषाः।**
( अथ आगणान्ता एकादश परस्मैपदिनश्छान्दसाश्च। )
११८४ घृ क्षरणदीप्त्योः।
११८५ हृ प्रसह्यकरणे।
११८६ ऋ
११८७ सृ गतौ।
**घृप्रभृतयोऽनुदात्ताः परस्मैभाषाः।**
११८८ भस भर्त्सनदीप्त्योः।
**उदात्त उदात्तेत् परस्मैपदी।**
११८९ कि ज्ञाने।
**अनुदात्तः परस्मैपदी।**
११९० तुर त्वरणे।
११९१ धिष शब्दे।
११९२ धन धान्ये।
११९३ जन जनने।
**तुरादय उदात्ता उदात्तेतः परस्मैभाषाः।**
११९४ गा स्तुतौ।
**अनुदात्तः परस्मैभाषः। घृप्रभृतय एकादश च्छन्दसि। इयर्तिर्भाषायामपि।**
**इति श्लुविकरणा जुहोत्यादयः॥३॥**
(७४)
**अथ दिवादयः।**
( अथ उदात्ताः क्षूषन्ताः परस्मैपदिनः। )
११९५ दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु।
११९६ षिवु तन्तुसन्ताने।
११९७ स्रिवु गतिशोषणयोः।
११९८ ष्ठिवु निरसने। केचिदिहेमं न पठन्ति।
११९९ ष्णुसु अदने। आदान इत्येके। अदर्शन इत्यपरे।
१२०० ष्णसु निरसने।
१२०१ क्नसु ह्वरणदीप्त्योः।
१२०२ व्युष दाहे।
१२०३ प्लुष च।
१२०४ नृती गात्रविक्षेपे।
१२०५ त्रसी उद्वेगे।
१२०६ कुथ पूतीभावे।
१२०७ पुथ हिंसायाम्।
१२०८ गुध परिवेष्टने।
१२०९ क्षिप प्रेरणे।
१२१० पुष्प विकसने।
१२११ तिम
१२१२ ष्टिम
१२१३ ष्टीम आर्द्रीभावे।
१२१४ व्रीड चोदने लज्जायां च।
१२१५ इष गतौ।
१२१६ षह
१२१७ षुह चक्यर्थे।
१२१८ जृष्
१२१९ झृष् वयोहानौ।
**दिवादय उदात्ता उदात्तेतः परस्मैभाषाः।**
**क्षिपिस्त्वनुदात्तः।**
१२२० षूङ् प्राणिप्रसवे।
१२२१ दूङ् परितापे।
**उदात्तावात्मनेभाषौ।**
१२२२ दीङ् क्षये।
१२२३ डीङ् विहायसा गतौ।
१२२४ धीङ् आधारे।
१२२५ मीङ् हिंसायाम्।
१२२६ रीङ् श्रवणे।
१२२७ लीङ् श्लेषणे।
१२२८ व्रीङ् वृणोत्यर्थे।
**वृत्। स्वादय ओदितः।**
१२२९ पीङ् पाने।
१२३० माङ् माने।
१२३१ ईङ् गतौ।
१२३२ प्रीङ् प्रीतौ।
**दीङादय आत्मनेपदिनोऽनुदात्ताः।**
**डीङ् तूदात्तः।**
( अथ चत्वारः परस्मैपदिनः। )
१२३३ शो तनूकरणे।
१२३४ छो छेदने।
१२३५ षो अन्तकर्मणि।
१२३६ दो अवखण्डने।
**श्यतिप्रभृतयोऽनुदात्ताः परस्मैभाषाः।**
( अथ आत्मनेपदिनः पञ्चदश। )
१२३७ जनी प्रादुर्भावे।
१२३८ दीपी दीप्तौ।
१२३९ पूरी आप्यायने।
१२४० तूरी गतित्वरणहिंसनयोः।
१२४१ धूरी
१२४२ गूरी हिंसागत्योः।
१२४३ घूरी
१२४४ जूरी हिंसावयोहान्योः।
१२४५ शूरी हिंसास्तम्भनयोः।
१२४६ चूरी दाहे।
१२४७ तप ( पत ) ऐश्वर्ये वा।
१२४८ वृतु वरणे।
१२४९ वावृतु इति केचित्।
१२५० क्लिश उपतापे।
१२५१ काशृ दीप्तौ।
१२५२ वाश्ट शब्दे।

**जन्यादय उदात्ता अनुदात्तेत आत्मनेभाषाः । तपिस्त्वनुदात्तः ।**
**(अथ पञ्च स्वरितेतः।)**
१२५३ मृष तितिक्षायाम् ।
१२५४ शुचिर् पूतीभावे ।
**उदात्तौ स्वरितेतावुभयतो भाषौ ।**
१२५५ णह बन्धने ।
१२५६ रञ्ज रागे ।
१२५७ शप आक्रोशे ।
**णहादयस्त्रयोऽनुदात्ताः स्वरितेत उभयतो भाषाः ।**
**( अथ एकादश आत्मनेपदिनः । )**
१२५८ पद गतौ ।
१२५९ खिद दैन्ये ।
१२६० विद सत्तायाम् ।
१२६१ बुध अवगमने ।
१२६२ युध संप्रहारे ।
१२६३ अनो रुध कामे ।
१२६४ अण प्राणने ।
१२६५ अन इत्येके ।
१२६६ मन ज्ञाने ।
१२६७ युज समाधौ ।
१२६८ सृज विसर्गे ।
१२६९ लिश अल्पीभावे ।
**पदादयोऽनुदात्ता अनुदात्तेत आत्मनेभाषाः । अण् तूदात्तः ।**
**( अथ आगणान्ताः परस्मैपदिनः अष्टषष्टिः । )**
१२७० राधोऽकर्मकाद्वृद्धावेव ।
१२७१ व्यध ताडने ।
१२७२ पुष पुष्टौ ।
१२७३ शुष शोषणे ।
१२७४ तुष प्रीतौ ।
१२७५ दुष वैकृत्ये ।
१२७६ श्लिष आलिङ्गने ।
१२७७ षक विभाषितो मर्षणे । उभयपदी ।
१२७८ ष्विदा गात्रप्रक्षरणे ।
१२७९ ञिष्विदा इत्येके ।
१२८० क्रुध क्रोधे ।
१२८१ क्षुध बुभुक्षायाम् ।
१२८२ शुध शौचे ।
१२८३ षिधु संराद्धौ ।
**राधादयोऽनुदात्ता उदात्तेतः परस्मैभाषाः । वेटः ।**
१२८४ रध हिंसासंराध्योः ।
१२८५ णश अदर्शने ।
१२८६ तृप प्रीणने ।
१२८७ दृप हर्षमोहनयोः ।
१२८८ द्रुह जिघांसायाम् ।
१२८९ मुह वैचित्त्ये ।
१२९० ष्णुह उद्गिरणे ।
१२९१ ष्णिह प्रीतौ ।
वृत् ।
**रधादयो वेट उदात्तेतः परस्मैभाषाः ।**
१२९२ शमु उपशमे ।
१२९३ तमु काङ्क्षायाम् ।
१२९४ दमु उपशमे ।
१२९५ श्रमु तपसि खेदे च ।
१२९६ भ्रमु अनवस्थाने ।
१२९७ क्षमू सहने ।
१२९८ क्लमु ग्लानौ ।
१२९९ मदी हर्षे ।
वृत् ।
**शमादय उदात्ता उदात्तेतः परस्मैभाषाः ।**
**क्षमू तु वेट् ।**
१३०० असु क्षेपणे ।
१३०१ यसु प्रयत्ने ।
१३०२ जसु मोक्षणे ।
१३०३ तसु उपक्षये ।
१३०४ दसु च ।
१३०५ वसु स्तम्भे ।
१३०६ भसु इति केचित् ।
१३०७ व्युष विभागे ।
१३०८ व्युस इत्यन्ये ।
१३०९ बुस इत्यपरे ।
१३१० प्लुष दाहे ।
१३११ बिस प्रेरणे ।
१३१२ कुस संश्लेषणे ।
१३१३ बुस उत्सर्गे ।
१३१४ मुस खण्डने ।
१३१५ मसी परिणामे ।
१३१६ समी इत्येके ।
१३१७ लुठ विलोडने ।
१३१८ उच समवाये ।
१३१९ भृशु
१३२० भ्रंशु अधःपतने ।
१३२१ वृश वरणे ।
१३२२ कृश तनूकरणे ।
१३२३ ञितृषा पिपासायाम् ।
१३२४ हृष तुष्टौ ।
१३२५ रुष
१३२६ रिष हिंसायाम् ।
१३२७ डिप क्षेपे ।
१३२८ कुप क्रोधे ।
१३२९ गुप व्याकुलत्वे ।
१३३० युप
१३३१ रुप
१३३२ लुप विमोहने । (लुप गमुच्छाये ।)
१३३३ लुभ गार्ध्ये । (गाध्न्ये । )
१३३४ क्षुभ संचलने ।
१३३५ णभ
१३३६ तुभ हिंसायाम् । क्षुभिनभितुभयो द्युतादौ क्र्यादौ च पठ्यन्ते ।
१३३७ क्लिदु आर्द्रीभावे ।
१३३८ ञिमिदा स्नेहने ।
१३३९ ञिक्ष्विदा स्नेहनमोचनयोः ।
१३४० ऋधु वृद्धौ ।
१३४१ गृधु अभिकाङ्क्षायाम् । वृत् ।
**असुप्रभृतय उदात्तेतः परस्मैभाषाः ।**
**( दिवादिराकृतिगण इति केचित् । )**
**इति श्यन्विकरणा दिवादयः ॥ ४ ॥**
**( १४७ )**
**( अथ स्वादयः । )**
१३४२ षुञ् अभिषवे ।
१३४३ षिञ् बन्धने ।
१३४४ शिञ् निशाने ।
१३४५ डुमिञ् प्रक्षेपणे ।
१३४६ चिञ् चयने ।
१३४७ स्तृञ् आच्छादने ।
१३४८ कृञ् हिंसायाम् ।
१३४९ वृञ् वरणे ।
१३५० धुञ् कम्पने ।
१३५१ धूञ् इत्येके ।
**स्वादयोऽनुदात्ता उभयतोभाषाः । वृञ् उदात्तः ।**
**( अथ परस्मैपदिन अष्टौ । )**
१३५२ टुदु उपतापे ।
१३५३ हि गतौ वृद्धौ च ।
१३५४ पृ प्रीतौ ।
१३५५ स्पृ प्रीतिपालनयोः । प्रीतिचलनयोः इत्यन्ये । 'चलनं जीवनम्' इति स्वामी ।
१३५६ स्मृ इत्येके ।
पृणोत्यादयस्त्रयोऽपि छान्दसा इत्याहुः ।
१३५७ आप्लृ व्याप्तौ ।
१३५८ शक्लृ शक्तौ ।
१३५९ राध
१३६० साध संसिद्धौ ।
**दुनोतिप्रभृतयोऽनुदात्ताः परस्मैभाषाः ।**
**( अथ द्वौ आत्मनेपदिनौ । )**
१३६१ अशू व्याप्तौ सङ्घाते च ।
१३६२ ष्टिघ आस्कन्दने ।
**अशिस्तिघी उदात्तावनुदात्तेतावात्मनेभाषौ ।**
**( अथ आगणान्ताः परस्मैपदिनः षोडश । )**
१३६३ तिक
१३६४ तिग गतौ च ।

१३६५ षघ हिंसायाम्।
१३६६ जिधृषा प्रागल्भ्ये ।
१३६७ दम्भु दम्भने।
१३६८ ऋधु वृद्धौ ।
१३६९ तृप प्रीणने इत्येके । छन्दसि ।
( अथ आगणान्ताश्छान्दसाः । )
१३७० अह व्याप्तौ ।
१३७१ दघ घातने पालने च ।
१३७२ चमु भक्षणे ।
१३७३ रि
१३७४ क्षि
१३७५ चिरि
१३७६ जिरि
१३७७ दाश
१३७८ दृ हिंसायाम् ।
१३७९ क्षिर् भाषायाम् इत्येके ।
१३८० ऋक्षीत्येक एवाजादिरित्येके ।
१३८१ रेफवानित्यन्ये । वृत् ।

**तिकादय उदात्ता उदात्तेतः परस्मैभाषाः ।**

**इति श्नुविकरणाः स्वादयः ॥५॥ (४०)**

**अथ तुदादयः ।**

( अथ षडुभयपदिनः । )
१३८२ तुद व्यथने ।
१३८३ णुद प्रेरणे ।
१३८४ दिश अतिसर्जने ।
१३८५ भ्रस्ज पाके ।
१३८६ क्षिप प्रेरणे ।
१३८७ कृष विलेखने ।

**तुदादयोऽनुदात्ताः स्वरितेत उभयतोभाषाः ।**

१३८८ ऋषी गतौ ।

**उदात्त उदात्तेत्परस्मैपदी ।**

( अथ चत्वार आत्मनेपदिनः । )
१३८९ जुषी प्रीतिसेवनयोः ।
१३९० ओविजी भयचलनयोः ।
१३९१ ओलजी
१३९२ ओलस्जी व्रीडायाम् ।

**जुषादय उदात्ता अनुदात्तेत आत्मने भाषाः ।**

(अथ परस्मैपदिनः । )
१३९३ ओव्रश्चू छेदने ।
१३९४ व्यच व्याजीकरणे ।
१३९५ उछि उञ्छे ।
१३९६ उच्छी विवासे ।
१३९७ ऋच्छ गतींन्द्रियप्रलयमूर्तिभावेषु ।
१३९८ मिच्छ उत्क्लेशे।
१३९९ जर्ज
१४०० चर्च
१४०१ झर्झ परिभाषणभर्त्सनयोः ।
१४०२ त्वच सम्वरणे ।
१४०३ ऋच स्तुतौ ।
१४०४ उब्ज आर्जवे ।
१४०५ उज्झ उत्सर्गे ।
१४०६ लुभ विमोहने ।
१४०७ रिफ कत्थनयुद्धनिन्दाहिंसादानेषु ।
१४०८ रिह इत्येके ।
१४०९ तृप
१४१० तृम्फ तृप्तौ । द्वावपि–
१४११ फान्ताविल्येके।
१४१२ तुप
१४१३ तुम्प
१४१४ तुफ
१४१५ तुम्फ हिंसायाम् ।
१४१६ दृप
१४१७ दृम्फ उत्क्लेशे । प्रथमोऽपि–
१४१८ द्वितीयान्त इत्येके ।
१४१९ ऋफ
१४२० ऋम्फ हिंसायाम् ।
१४२१ गुफ
१४२२ गुम्फ ग्रन्थे ।
१४२३ उभ
१४२४ उम्भ पूरणे ।
१४२५ शुभ
१४२६ शुम्भ शोभार्थे ।
१४२७ दृभी ग्रन्थे ।
१४२८ चृती हिंसाश्रन्थनयोः ।
१४२९ विध विधाने ।
१४३० जुड गतौ ।
१४३१ जुन इत्येके ।
१४३२ मृड सुखने ।
१४३३ पृड च ।
१४३४ पृण प्रीणने ।
१४३५ वृण च ।
१४३६ मृण हिंसायाम् ।
१४३७ तुण कौटिल्ये ।
१४३८ पुण कर्मणि शुभे ।
१४३९ मुण प्रतिज्ञाने ।
१४४० कुण शब्दोपकरणयोः ।
१४४१ शुन गतौ ।
१४४२ द्रुण हिंसागतिकौटिल्येषु ।
१४४३ घुण
१४४४ घूर्ण भ्रमणे ।
१४४५ षुर ऐश्वर्यदीप्त्योः ।
१४४६ कुर शब्दे ।
१४४७ खुर छेदने ।
१४४८ मुर संवेष्टने ।
१४४९ क्षुर विलेखने ।
१४५० घुर भीमार्थशब्दयोः ।
१४५१ पुर अग्रगमने ।
१४५२ वृहू उद्यमने ।
१४५३ वृहू इत्यन्ये ।
१४५४ तृहू,
१४५५ स्तृहू,
१४५६ तृन्हू हिंसार्थाः ।
१४५७ इष इच्छायाम् ।
१४५८ मिष स्पर्धायाम् ।
१४५९ किल श्वैत्यक्रीडनयोः ।
१४६० तिल स्नेहने ।
१४६१ चिल वसने ।
१४६२ चल विलसने ।
१४६३ इल स्वप्नक्षेपणयोः ।
१४६४ विल सम्वरणे ।
१४६५ बिल भेदने ।
१४६६ णिल गहने ।
१४६७ हिल भावकरणे ।
१४६८ शिल
१४६९ षिल उञ्छे ।
१४७० मिल श्लेषणे ।
१४७१ लिख अक्षरविन्यासे ।
१४७२ कुट कौटिल्ये ।
१४७३ पुट संश्लेषणे ।
१४७४ कुच संकोचने ।
१४७५ गुज शब्दे ।
१४७६ गुड रक्षायाम् ।
१४७७ डिप क्षेपे ।
१४७८ छुर छेदने ।
१४७९ स्फुट विकसने ।
१४८० मुट आक्षेपमर्दनयोः ।
१४८१ त्रुट छेदने ।
१४८२ तुट कलहकर्मणि ।
१४८३ चुट
१४८४ छुट छेदने ।
१४८५ जुट बन्धने ।
१४८६ कड मदे ।
१४८७ लुठ संश्लेषणयोः ।
( लुट इत्येके । लुड इत्यन्ये ) ।
१४८८ कृड घनत्वे ।
१४८९ कुड बाल्ये ।
१४९० पुड उत्सर्गे ।
१४९१ घुट प्रतिघाते।
१४९२ तुड तोडने ।
१४९३ थुड,
१४९४ स्थुड संवरणे ।
१४९५ खुड
१४९६ छुड इत्येके ।
१४९७ स्फुर
१४९८ स्फुल संचलने । स्फुर स्फुरणे ।
१४९९ स्फल सञ्चलने इत्येके ।
१५०० स्फर इत्यन्ये।
१५०१ स्फुड
१५०२ चुड
१५०३ व्रुड संवरणे ।
१५०४ क्रुड
१५०५ भृड निमज्जन इत्येके ।

**व्रश्चादय उदात्ता उदात्तेतः परस्मैभाषाः ।**

१५०६ गुरी उद्यमने ।

**उदात्तोऽनुदात्तेदात्मनेपदी ।**
( अथ चत्वारः परस्मैपदिनः । )
१५०७ णू स्तवने ।
१५०८ धू विधूनने ।
**उदात्तौ परस्मैभाषौ ।**
१५०९ गु पुरीषोत्सर्गे ।
१५१० ध्रु गतिस्थैर्ययोः ।
१५११ ध्रुव इत्येके ।
**अनुदात्तौ परस्मैपदिनौ ।**
१५१२ कुङ् शब्दे ।
**उदात्त आत्मनेपदी ।**
१५१३ दीर्घान्त इति कैयटादयः ।
१५१४ ह्रस्वान्त इति न्यासः । वृत् ।
**( कुटादयो गताः । )**
१५१५ पृङ् व्यायामे ।
१५१६ मृङ् प्राणत्यागे ।
**अनुदात्तावात्मनेभाषौ ।**
**( अथ परस्मैपदिनः सप्त । )**
१५१७ रि
१५१८ पि गतौ ।
१५१९ धि धारणे ।
१५२० क्षि निवासगत्योः ।
१५२१ रियत्यादयोऽनुदात्ताः परस्मैभाषाः ।
१५२२ षू प्रेरणे ।
१५२३ कॄ विक्षेपे ।
१५२४ गॄ निगरणे ।
**उदात्ताः परस्मैभाषाः ।**
१५२५ दृङ् आदरे ।
१५२६ धृङ् अवस्थाने ।

**अनुदात्तावात्मनेभाषौ ।**
( अथ षोडश परस्मैपदिनः । )
१५२७ प्रच्छ ज्ञीप्सायाम् । वृत् ।
( किरादयो गताः । )
१५२८ सृज विसर्गे ।
१५२९ टुमस्जो शुद्धौ ।
१५३० रुजो भङ्गे ।
१५३१ भुजो कौटिल्ये ।
१५३२ छुप स्पर्शे ।
१५३३ रुश
१५३४ रिश हिंसायाम् ।
१५३५ लिश गतौ ।
१५३६ स्पृश संस्पर्शने ।
१५३७ विच्छ गतौ ।
१५३८ विश प्रवेशने ।
१५३९ मृश आमर्शने ।
१५४० णुद प्रेरणे ।
१५४१ षद्लृ विशरणगत्यवसादनेषु ।
१५४२ शद्लृ शातने ।
**पृच्छत्यादयोऽनुदात्ता उदात्तेतः परस्मैभाषाः ।**
**विच्छस्तूदात्तः ।**
( अथ षट् स्वरितेतः । )
१५४३ मिल सङ्गमे ।
**उदात्तः स्वरितेदुभयतोभाषः ।**
१५४४ मुच्लृ मोक्षणे ।
१५४५ लुप्लृ छेदने ।
१५४६ विद्लृ लाभे ।
१५४७ लिप उपदेहे ।
१५४८ षिच क्षरणे ।

**मुचादयोऽनुदात्ताः स्वरितेत उभयतोभाषाः ।**
**विन्दतिस्तूदात्तः ।**
१५४९ कृती छेदने ।
**उदात्त उदात्तेत्परस्मैपदी ।**
१५५० खिद परिघाते ।
**अनुदात्त उदात्तेत्परस्मैपदी ।**
१५५१ पिश अवयवे । अयं दीपनायामपि ।
**उदात्त उदात्तेत्परस्मैपदी । वृत् ।**
( मुचादयः तुदादयश्च वृत्ताः । )
**इति शविकरणास्तुदादयः ॥ ६ ॥**
**( १७० )**
**अथ रुधादयः ।**
( आद्या नवस्वरितेतः । )
१५५२ रुधिर् आवरणे ।
१५५३ भिदिर् विदारणे ।
१५५४ छिदिर् द्वैधीकरणे ।
१५५५ रिचिर् विरेचने ।
१५५६ विचिर् पृथग्भावे ।
१५५७ क्षुदिर् संपेषणे ।
१५५८ युजिर् योगे ।
**रुधादयोऽनुदात्ताः स्वरितेत उभयतो भाषाः ।**
१५५९ उच्छृदिर् दीप्तिदेवनयोः ।
१५६० उतृदिर् हिंसाऽनादरयोः ।
**उदात्तौ स्वरितेतावुभयतोभाषौ ।**
१५६१ कृती वेष्टने ।
**उदात्त उदात्तेत्परस्मैपदी ।**
१५६२ ञिइन्धी दीप्तौ ।

**उदात्तोऽनुदात्तेदात्मनेपदी ।**
१५६३ खिद दैन्ये ।
१५६४ विद विचारणे ।
**अनुदात्तावनुदात्तेतावात्मनेपदिनौ ।**
( अथ परस्मैपदिनः । )
१५६५ शिष्लृ विशेषणे ।
१५६६ पिष्लृ संचूर्णने ।
१५६७ भञ्जो आमर्दने ।
१५६८ भुज पालनाभ्यवहारयोः ।
**शिषादयोऽनुदात्ता उदात्तेतः परस्मैभाषाः ।**
१५६९ तृह
१५७० हिसि हिंसायाम् ।
१५७१ उन्दी क्लेदने ।
१५७२ अञ्जू व्यक्तिमर्षणकान्तिगतिषु ।
१५७३ तञ्चु सङ्कोचने ।
१५७४ ओविजी भयचलनयोः ।
१५७५ वृजी वर्जने ।
१५७६ पृची सम्पर्के ।
**तृहादय उदात्ता उदात्तेतः परस्मैपदिनः । वृत् ।**
**इति श्नम्विकरणा रुधादयः ॥ ७ ॥**
**( २५ )**
**अथ तनादयः ।**
( आद्याः सप्त स्वरितेतः । )
१५७७ तनु विस्तारे ।
१५७८ षणु दाने ।
१५७९ क्षणु हिंसायाम् ।
१५८० क्षिणु च ।

१५८१ ऋणु गतौ ।
१५८२ तृणु अदने ।
१५८३ घृणु दीप्तौ ।
**तनादय उदात्ताः स्वरितेत उभयतोभाषाः ।**
१५८४ वनु याचने । अयं चन्द्रमते परस्मैपदी ।
१५८५ मनु अवबोधने ।
**उदात्तावनुदात्तेतावात्मनेभाषौ ।**
१५८६ डुकृञ् करणे ।
**अनुदात्त उभयतोभाषः । वृत् ।**
**इत्युविकरणास्तनादयः ॥ ८ ॥**
**( १० )**
**अथ क्र्यादयः ।**
१५८७ डुक्रीञ् द्रव्यविनिमये ।
१५८८ प्रीञ् तर्पणे कान्तौ च ।
१५८९ श्रीञ् पाके ।
१५९० मीञ् बन्धने ।
१५९१ षिञ् बन्धने ।
१५९२ स्कुञ् आप्रवणे ।
( स्तम्भु, स्तुम्भु, स्कम्भु, स्कुम्भु रोधन इत्येके ) ।
प्रथमतृतीयौ स्तम्भे इति माधवः । द्वितीयो निष्कोषणे चतुर्थो धारण इत्यन्ये । चत्वार इमे परस्मैपदिनः सौत्राश्च ।
१५९३ युञ् बन्धने ।
**क्र्यादयोऽनुदात्ता उभयतो भाषाः ।**
१५९४ क्नूञ् शब्दे ।

१५९५ द्रूञ् हिंसायाम्।
१५९६ पूञ् पवने।
१५९७ लूञ् छेदने।
१५९८ स्तॄञ् आच्छादने।
१५९९ कॄञ् हिंसायाम्।
१६०० वृञ् वरणे।
१६०१ धूञ् कम्पने।
**क्र्यादिप्रभृतय उदात्ता उभयतोभाषाः।**
( अथ बध्नात्यन्ताः परस्मैपदिनः। )
१६०२ शॄ हिंसायाम्।
१६०३ पॄ पालनपूरणयोः।
१६०४ वॄ वरणे। भरण इत्येके।
१६०५ भॄ भर्त्सने। भरणेऽप्येके।
१६०६ मॄ हिंसायाम्।
१६०७ दॄ विदारणे।
१६०८ जॄ वयोहानौ।
१६०९ झॄ इत्येके।
१६१० धॄ इत्यन्ये।
१६११ नॄ नये।
१६१२ कॄ हिंसायाम्।
१६१३ ऋ गतौ।
१६१४ गॄ शब्दे।
**शृणातिप्रभृतय उदात्ता उदात्तेतः परस्मैपदिनः।**
१६१५ ज्या वयोहानौ।
१६१६ री गतिरेषणयोः।
१६१७ ली श्लेषणे।
१६१८ व्ली वरणे।
१६१९ प्ली गतौ वृत्।
**ल्वादयो गताः।**
**प्वादयोऽपीत्येके।**
१६२० व्री वरणे।
१६२१ भ्री भये। भरणे इत्येके।
१६२२ क्षीष हिंसायाम्।
१६२३ ज्ञा अवबोधने।
१६२४ बन्ध बन्धने।
**ज्यादयोऽनुदात्तेत उदात्तेतः परस्मैभाषाः।**
१६२५ वृङ् सम्भक्तौ।
**उदात्त आत्मनेपदी।**
१६२६ श्रन्थ विमोचनप्रतिहर्षयोः।
१६२७ मन्थ विलोडने।
१६२८ श्रन्थ
१६२९ ग्रन्थ सन्दर्भे।
१६३० कुन्थ संश्लेषणे। संक्लेश इत्येके।
१६३१ कुथ इति दुर्गः।
१६३२ मृद क्षोदे।
१६३३ मृड च। अयं सुखेऽपि।
१६३४ गुध रोषे।
१६३५ कुष निष्कर्षे।
१६३६ क्षुभ सञ्चलने।
१६३७ णभ
१६३८ तुभ हिंसायाम्।
१६३९ क्लिशू विबाधने।
१६४० अश भोजने।
१६४१ उध्रस उञ्छे।
१६४२ इष आभीक्ष्ण्ये।
१६४३ विष विप्रयोगे।
१६४४ प्रुष
१६४५ प्लुष स्नेहनसेवनपूरणेषु।
१६४६ पुष पुष्टौ।
१६४७ मुष स्तेये।
१६४८ खच भूतप्रादुर्भावे।
१६४९ वान्तोऽयमित्येके।
१६५० हेठ च।
**अन्थादय उदात्ता उदात्तेतः परस्मैभाषाः।**
**क्लिशिस्तु वेट्।**
**विषस्त्वनुदात्तः।**
१६५१ ग्रह उपादाने।
**उदात्तः स्वरितेदुभयतोभाषः।**
**इति श्नाविकरणाः क्र्यादयः॥ ९॥**
**( ९१ )**
**अथ चुरादयः।**
१६५२ चुर स्तेये।
१६५३ चिति स्मृत्याम्।
१६५४ यत्रि सङ्कोचे।
१६५५ स्फुडि परिहासे।
१६५६ स्फुटि इत्यपि।
१६५७ लक्ष दर्शनाङ्कनयोः।
१६५८ कुद्रि अनृतभाषणे।
१६५९ कुट इत्येके।
१६६० कुडि इत्यपरे।
१६६१ लड उपसेवायाम्।
१६६२ मिदि स्नेहने।
१६६३ अयमनिदिदिति क्षीरस्वामिकौशिकौ।
१६६४ ओलडि उत्क्षेपणे।
१६६५ ओकारो धात्ववयव इत्येके।
१६६६ नेत्यपरे।
१६६७ उलडि इत्यन्ये।
१६६८ जल अपवारणे।
१६६९ लज इत्येके।
१६७० पीड अवगाहने।
१६७१ नट अवस्यन्दने।
१६७२ श्रथ प्रयत्ने। प्रस्थान इत्येके।
१६७३ बध संयमने।
१६७४ बन्ध इति चान्द्राः।
१६७५ पॄ पूरणे।
१६७६ ऊर्ज बलप्राणनयोः।
१६७७ पक्ष परिग्रहे। ( चूर्ण प्रेषणे )
१६७८ वर्ण
१६७९ चूर्ण प्रेरणे। वर्ण वर्णन इत्येके।
१६८० प्रथ प्रख्याने।
१६८१ पृथ प्रक्षेपे।
१६८२ पथ इत्येके।
१६८३ षम्ब सम्बन्धने।
१६८४ शम्ब च।
१६८५ साम्ब इत्येके।
१६८६ भक्ष अदने।
१६८७ कुट्ट छेदनभर्त्सनयोः।
१६८८ पूरण इत्येके।
१६८९ पुट्ट
१६९० चुट्ट अल्पीभावे
१६९१ अट्ट
१६९२ षुट्ट अनादरे।
१६९३ लुण्ट स्तेये।
१६९४ लुण्ठ इति केचित्।
१६९५ शठ
१६९६ श्वठ असंस्कारगत्योः।
१६९७ श्वठि इत्येके।
१६९८ तुजि
१६९९ पिजि हिंसाबलादाननिकेतनेषु।
१७०० तुज
१७०१ पिज इति केचित्।
१७०२ लजि
१७०३ लुजि इत्येके।
१७०४ पिस गतौ।
१७०५ षान्त्व सामप्रयोगे।
१७०६ श्वल्क
१७०७ वल्क परिभाषणे।
१७०८ ष्णिह स्नेहने।
१७०९ स्फिट इत्येके।
१७१० स्मिट अनादरे।
१७११ ष्मिङ् इत्येके।
१७१२ श्लिष श्लेषणे।
१७१३ पथि गतौ।
१७१४ पिच्छ कुट्टने
१७१५ छदि संवरणे।
१७१६ श्रण दाने।
१७१७ तड आघाते।
१७१८ खड
१७१९ खडि
१७२० कुडि भेदने।
१७२१ कुडि रक्षणे।
१७२२ गुडि वेष्टने। रक्षणे इत्येके।
१७२३ कुठि इत्यन्ये।
१७२४ गुठि इत्यपरे।
१७२५ खुडि खण्डने।
१७२६ वटि विभाजने।
१७२७ वडि इति केचित्।
( चडि कोपे। चण्डेत्यन्ये। )
१७२८ मडि भूषायां हर्षे च।
१७२९ भडि कल्याणे।
१७३० छर्द वमने।
१७३१ पुस्त
१७३२ बुस्त आदरानादरयोः।
१७३३ चुद संचोदने।
१७३४ नक्क
१७३५ धक्क नाशने।
१७३६ चक्क
१७३७ चुक्क व्यथने।
१७३८ क्षल शौचकर्मणि।
१७३९ तल प्रतिष्ठायाम्।

१७४० तुल उन्माने ।
१७४१ दुल उत्क्षेपे ।
१७४२ पुल महत्त्वे ।
१७४३ चुल समुच्छ्राये ।
१७४४ मूल रोहणे ।
१७४५ कल
१७४६ विल क्षेपे ।
१७४७ बिल भेदने ।
१७४८ तिल स्नेहने ।
१७४९ चल भृतौ ।
१७५० पाल रक्षणे ।
१७५१ लूष हिंसायाम् ।
१७५२ शुल्ब माने ।
१७५३ शूर्प च ।
१७५४ चुट छेदने ।
१७५५ मुट संचूर्णने ।
१७५६ पडि
१७५७ पसि नाशने ।
१७५८ व्रज मार्गसंस्कारगत्योः ।
१७५९ शुल्क अतिस्पर्शने । अतिसर्जन इत्येके ।
१७६० चपि गत्याम् ।
१७६१ क्षपि क्षान्त्याम् ।
१७६२ छजि कृच्छ्रजीवने ।
१७६३ श्वर्त गत्याम् ।
१७६४ श्वभ्र च ।
१७६५ ज्ञप ज्ञानज्ञापनमारणतोषणनिशाननिशामनेषु । मिच्चेत्येके ।
१७६६ यम च परिवेषणे चान्मित् ।
१७६७ चह परिकल्कने ।
१७६८ चप इत्येके ।
१७६९ रह त्यागे ।
१७७० बल प्राणने ।
१७७१ चिञ् चयने । नान्ये मितोऽहेतौ ।
१७७२ घट्ट चलने ।
१७७३ मुस्त सङ्घाते ।
१७७४ खट्ट संवरणे ।
१७७५ षट्ट
१७७६ स्फिट्ट
१७७७ चुबि हिंसायाम् ।
१७७८ पूल सङ्घाते ।
१७७९ पूर्ण इत्येके ।
१७८० पुण इत्यन्ये ।
१७८१ पुंस अभिवर्धने ।
१७८२ टकि बन्धने । ( व्यप क्षेपे । व्ययविप इत्येके । )
१७८३ धूस कान्तिकरणे ।
१७८४ मूर्धन्यान्त इत्येके ।
१७८५ तालव्यान्त इत्यन्ये ।
१७८६ कीट वर्णे ।
१७८७ चूर्ण सङ्कोचने ।
१७८८ पूज पूजायाम् ।
१७८९ अर्क स्तवने । तपन इत्येके ।
१७९० शुठ आलस्ये ।
१७९१ शुठि शोषणे ।
१७९२ जुड प्रेरणे ।
१७९३ गज
१७९४ मार्ज शब्दार्थौ ।
१७९५ मर्च च ।
१७९६ घृ प्रस्रवणे । स्रावण इत्येके ।
१७९७ पचि विस्तारवचने ।
१७९८ तिज निशातने ।
१७९९ कृत संशब्दने ।
१८०० वर्ध छेदनपूरणयोः ।
१८०१ कुबि आच्छादने ।
१८०२ कुभि इत्येके ।
१८०३ लुबि
१८०४ तुबि अदर्शने । अर्दन इत्येके ।
१८०५ ह्लप व्यक्तायां वाचि ।
१८०६ क्लृप इत्येके ।
१८०७ ह्रप इत्यन्ये ।
१८०८ चुटि छेदने ।
१८०९ इल प्रेरणे ।
१८१० म्रक्ष म्लेच्छने ।
१८११ म्लेच्छ अव्यक्तायां वाचि ।
१८१२ ब्रूस
१८१३ बर्ह हिंसायाम् । केचिदिह—
१८१४ गर्ज
१८१५ गर्द शब्दे ।
१८१६ गर्ध अभिकाङ्क्षायाम् इति पठन्ति ।
१८१७ गुर्द पूर्वनिकेतने ।
१८१८ जसि रक्षणे । मोक्षण इति केचित् ।
१८१९ ईड स्तुतौ ।
१८२० जसु हिंसायाम् ।
१८२१ पिडि सङ्घाते ।
१८२२ रुष रोषे ।
१८२३ रुठ इत्येके ।
१८२४ डिप क्षेपे ।
१८२५ ष्टुप समुच्छ्राये ।

**आकुस्मादात्मनेपदिनः ।**

१८२६ चित संचेतने ।
१८२७ दशि दंशने ।
१८२८ दसि दर्शनदंशनयोः ।
१८२९ दस इत्यप्येके ।
१८३० डप
१८३१ डिप सङ्घाते ।
१८३२ तत्रि कुटुम्बधारणे ।
१८३३ कुटुम्बेतिधात्वन्तरमिति चान्द्राः ।
१८३४ मन्त्रि गुप्तपरिभाषणे ।
१८३५ स्पश ग्रहणसंश्लेषणयोः ।
१८३६ तज
१८३७ भर्त्स तर्जने ।
१८३८ बस्त
१८३९ गन्ध अर्दने ।
१८४० विष्क हिंसायाम् ।
१८४१ हिष्क इत्येके ।
१८४२ निष्क परिमाणे ।
१८४३ लल ईप्सायाम् ।
१८४४ कूण सङ्कोचे ।
१८४५ तूण पूरणे ।
१८४६ भ्रूण आशाविशङ्कयोः ।
१८४७ शठ श्लाघायाम् ।
१८४८ यक्ष पूजायाम् ।
१८४९ स्यम वितर्के ।
१८५० गूर उद्यमने ।
१८५१ शम
१८५२ लक्ष आलोचने ।
१८५३ कुत्स अवक्षेपणे ।
१८५४ त्रुट छेदने ।
१८५५ कुट इत्येके ।
१८५६ गल स्रवणे ।
१८५७ भल आभण्डने ।
१८५८ कूट आप्रदाने । अवसादन इत्येके ।
१८५९ कुट्ट प्रतापने ।
१८६० वञ्चु प्रलम्भने ।
१८६१ वृष शक्तिबन्धने ।
१८६२ मद तृप्तियोगे ।
१८६३ दिवु परिकूजने ।
१८६४ गॄ विज्ञाने ।
१८६५ विद चेतनाख्याननिवासेषु ।
१८६६ मान ( मन ) स्तम्भे ।
१८६७ यु जुगुप्सायाम् ।
१८६८ 'कुस्म नाम्नो वा' कुत्सितस्मयने ।

**इत्याकुस्मीयाः ।**

१८६९ चर्च अध्ययने ।
१८७० बुक्क भषणे ।
१८७१ शब्द उपसर्गादाविष्कारे च ।
१८७२ कण निमीलने ।
१८७३ जभि नाशने ।
१८७४ षूद क्षरणे ।
१८७५ जसु ताडने ।
१८७६ पश बन्धने ।
१८७७ अम रोगे ।
१८७८ चट
१८७९ स्फुट भेदने ।
१८८० घट सङ्घाते । हन्त्यर्थाश्च ।
१८८१ दिवु मर्दने ।
१८८२ अर्ज प्रतियत्ने ।
१८८३ घुषिर् विशब्दने ।
१८८४ आङः क्रन्द सातत्ये ।
१८८५ लस शिल्पयोगे ।

१८८६ तसि
१८८७ भूष अलङ्क-
रणे ।
( घोष आसने ।
मोक्ष आसने ) ।
१८८८ अर्ह पूजायाम् ।
१८८९ ज्ञान नियोगे ।
१८९० भज विश्राणने ।
१८९१ शृधु प्रसहने ।
१८९२ यत निकारो-
पस्कारयोः ।
१८९३ रक
१८९४ लग आस्वा-
दने ।
१८९५ रघ इत्येके ।
१८९६ रग इत्यन्ये ।
१८९७ अञ्चु विशेषणे ।
१८९८ लिगि चित्री-
करणे ।
१८९९ मुद संसर्गे ।
१९०० त्रस धारणे ।
ग्रहण इत्येके ।
वारण इत्यन्ये ।
१९०१ उध्रस उञ्छे ।
१९०२ उकारोधात्व-
वयव इत्येके ।
१९०३ न इत्यन्ये ।
१९०४ मुच प्रमोचने
मोदने च ।
१९०५ वस स्नेहच्छे-
दापहरणेषु ।
१९०६ चर संशये ।
१९०७ च्यु सहने ।
हसने चेत्येके ।
१९०८ च्युस इत्येके ।
१९०९ भुवोऽवक-
ल्कने । चि-
न्तन इत्येके ।
कृपेश्च ।
आस्वादः सक-
र्मकात् । अतः
परं खदिमभि-
व्याप्य सम्भ-
वत्कर्मकेभ्य
एव णिच् ।
१९१० ग्रस ग्रहणे ।
१९११ पुष धारणे ।
१९१२ दल विदारणे ।
१९१३ पट
१९१४ पुट
१९१५ लुट
१९१६ तुजि
१९१७ मिजि
१९१८ पिजि
( लिजि )
१९१९ लुजि
१९२० भजि
१९२१ लघि
१९२२ त्रसि
१९२३ पिसि
१९२४ कुसि
१९२५ दशि
१९२६ कुशि
१९२७ घट
१९२८ घटि
१९२९ बृहि
१९३० बर्ह
१९३१ बल्ह
१९३२ गुप
१९३३ धूप
१९३४ विच्छ
१९३५ चीव
१९३६ पुथ
१९३७ लोकृ
१९३८ लोचृ
१९३९ णद
१९४० कुप
१९४१ तर्क
१९४२ वृतु
१९४३ वृधु भाषार्थाः ।
१९४४ रुट
१९४५ लजि
१९४६ अजि
१९४७ दसि
१९४८ भृशि
१९४९ रुशि
१९५० शीक
१९५१ रुसि
१९५२ नट
१९५३ पुटि
१९५४ जि
१९५५ चि ( जुचि )
१९५६ रघि
१९५७ लघि
१९५८ अहि
१९५९ रहि
१९६० महि च ।
१९६१ लडि
१९६२ तड
१९६३ नल च ।
१९६४ पूरी आप्या-
यने ।
१९६५ रुज हिंसायाम् ।
१९६६ ष्वद आस्वा-
दने ।
१९६७ स्वाद इत्येके ।
आधृषाद्वा ।
इत ऊर्ध्व
धृषधातुमभि-
व्याप्य वैक-
ल्पिकणिचः ।
१९६८ युज
१९६९ पृच संयमने ।
१९७० अर्च पूजा-
याम् ।
१९७१ षह मर्षणे ।
१९७२ ईर क्षेपे ।
१९७३ ली द्रवीकरणे ।
१९७४ वृजी वर्जने ।
१९७५ वृञ् आवरणे ।
१९७६ जॄ वयोहानौ ।
१९७७ ज्रि च ।
१९७८ रिच वियो-
जनसंपर्च-
नयोः ।
१९७९ शिष असर्वो-
पयोगे ।
१९८० तप दाहे ।
१९८१ तृप तृप्तौ ।
संदीपन
इत्येके ।
१९८२ छृदी संदीपने ।
१९८३ चृप
१९८४ छृप
१९८५ दृप संदीपन
इत्येके ।
१९८६ दृभी ग्रन्थे
( भये ) ।
१९८७ दृभ सन्दर्भे ।
१९८८ श्रथ मोक्षणे ।
हिंसायाम्
इत्यन्ये ।
१९८९ मी गतौ ।
१९९० ग्रन्थ बन्धने ।
१९९१ शीक आमर्षणे
१९९२ चीक च ।
१९९३ अर्द हिंसा-
याम् ।
स्वरितेत् ।
१९९४ हिसि हिंसा-
याम् ।
१९९५ अर्ह पूजायाम् ।
१९९६ आङः षद
पद्यर्थे ।
१९९७ शुन्ध शौच-
कर्मणि ।
१९९८ छद अपवा-
रणे स्वरितेत् ।
१९९९ जुष परित-
र्कणे । परित-
र्पण इत्यन्ये ।
२००० धूञ् कम्पने ।
२००१ प्रीञ् तर्पणे ।
२००२ श्रन्थ
२००३ ग्रन्थ सन्दर्भे ।
२००४ आपॢ लम्भने ।

**स्वरितेदयमित्येके ।**

२००५ तनु श्रद्धोप-
करणयोः ।
उपसर्गाच्च
दैर्घ्ये ।
२००६ चन श्रद्धोप-
हननयोरि-
त्येके ।
२००७ वद संदेश-
वचने ।

**स्वरितेत् ।**

**अनुदात्तेदित्येके ।**

२००८ वच परिभा-
षणे ।
२००९ मान पूजा-
याम् ।
२०१० भू प्राप्तावा-
त्मनेपदी ।
णिच्संनियोगे-
नैव आत्मने-
पदमित्येके ।
२०११ गर्ह विनि-
न्दने ।
२०१२ मार्ग अन्वे-
षणे ।
२०१३ कठि शोके ।
प्रायेण उत्पूर्वः
उत्कण्ठा-
वचनः ।
२०१४ मृजू शौचा-
लङ्कारयोः ।
२०१५ मृष तितिक्षा-
याम् ।

**स्वरितेत् ।**

२०१६ धृष प्रसहने ।

**इत्याधृषीयाः ।**

**अथादन्ताः ।**

२०१७ कथ वाक्य-
प्रबन्धे ।
२०१८ वर ईप्सायाम् ।
२०१९ गण सङ्ख्याने ।
२०२० शठ
२०२१ श्वठ सम्यग-
वभाषणे ।
२०२२ पट
२०२३ वट ग्रन्थे ।
२०२४ रह त्यागे ।
२०२५ स्तन
२०२६ गदी देवशब्दे ।
२०२७ पत गतौ वा ।
(अदन्त इत्येके ।)

२०२८ पष अनुपसर्गात् (गतौ) ।
२०२९ खर आक्षेपे ।
२०३० रच प्रतियत्ने ।
२०३१ कल गतौ सङ्ख्याने च ।
२०३२ चह परिकल्कने ।
२०३३ मह पूजायाम् ।
२०३४ सार
२०३५ कृप
२०३६ श्रथ दौर्बल्ये ।
२०३७ स्पृह ईप्सायाम् ।
२०३८ भाम क्रोधे ।
२०३९ सूच पैशुन्ये ।
२०४० खेट भक्षणे ।
२०४१ तृतीयान्त इत्येके ।
२०४२ खोट इत्यन्ये ।
२०४३ क्षोट क्षेपे ।
२०४४ गोम उपलेपने ।
२०४५ कुमार क्रीडायाम् ।
२०४६ शील उपधारणे ।
२०४७ साम सान्त्वप्रयोगे ।
२०४८ वेल कालोपदेशे ।
२०४९ काल इति पृथग्धातुरित्येके ।
२०५० पल्पूल लवनपवनयोः ।
२०५१ वात सुखसेवनयोः । गतिसुखसेवनेष्वित्येके ।
२०५२ गवेष मार्गणे ।
२०५३ वास उपसेवायाम् ।
२०५४ निवास आच्छादने ।
२०५५ भाज पृथक्कर्मणि ।
२०५६ सभाज प्रीतिदर्शनयोः । प्रीतिसेवनयोरित्येके ।
२०५७ ऊन परिहाणे ।
२०५८ ध्वन शब्दे ।
२०५९ कूट परितापे । परिदाह इत्यन्ये ।
२०६० सङ्केत,
२०६१ ग्राम,
२०६२ कुण,
२०६३ गुण चामन्त्रणे । चात्कूटोऽपि इति मैत्रेयः ।
२०६४ केत श्रावणे निमन्त्रणे च ।
२०६५ कूण सङ्कोचनेऽपि । स्तेन चौर्ये ।

**आगर्वादात्मनेपदिनः ।**

२०६६ पद गतौ ।
२०६७ गृह ग्रहणे ।
२०६८ मृग अन्वेषणे ।
२०६९ कुह विस्मापने ।
२०७० शूर
२०७१ वीर विक्रान्तौ ।
२०७२ स्थूल परिबृंहणे ।
२०७३ अर्थ उपयाच्ञायाम् ।
२०७४ सत्र सन्तानक्रियायाम् ।
२०७५ गर्व माने ।

**इत्यागर्वीयाः ।**

२०७६ सूत्र वेष्टने ॥
२०७७ मूत्र प्रस्रवणे
२०७८ रूक्ष पारुष्ये ।
२०७९ पार
२०८० तीर कर्मसमाप्तौ ।
२०८१ पुट संसर्गे ।
२०८२ धेक दर्शन इत्येके ।
२०८३ कत्र शैथिल्ये ।
२०८४ कर्त इत्यप्येके ।
(ग) 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च'
(ग) 'तत्करोति तदाचष्टे'
(ग) 'तेनातिक्रामति' ।
(ग) 'धातुरूपं च' ।
(वा) 'आख्यानात्कृतस्तदाचष्टे । कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्' ।
(ग) 'कर्तृकरणाद्धात्वर्थे' ।
२०८५ बष्क दर्शने ।
२०८६ चित्र चित्रीकरणे । कदाचिद्दर्शने ।
२०८७ अंस समाघाते ।
२०८८ वट विभाजने ।
२०८९ लज प्रकाशने ।
२०९० वटि
२०९१ लजि इत्येके ।
२०९२ मिश्र सम्पर्के ।
२०९३ सङ्ग्राम युद्धे ।

**अनुदात्तेत् ।**

२०९४ स्तोम श्लाघायाम् ।
२०९५ छिद्र कर्णभेदने करणभेदने इत्येके ।
२०९६ कर्ण इति धात्वन्तरमित्यन्ये ।
२०९७ अन्ध दृष्ट्युपघाते । उपसंहार इत्यन्ये ।
२०९८ दण्ड दण्डनिपातने ।
२०९९ अङ्क पदे लक्षणे च ।
२१०० अङ्ग च ।
२१०१ सुख
२१०२ दुःख तत्क्रियायाम् ।
२१०३ रस आस्वादनस्नेहनयोः ।
२१०४ व्यय वित्तसमुत्सर्गे ।
२१०५ रूप क्रियायाम् ।
२१०६ छेद द्वैधीकरणे ।
२१०७ छद अपवारणे ।
२१०८ लाभ प्रेरणे ।
२१०९ व्रण गात्रविचूर्णने ।
२११० वर्ण वर्णक्रियाविस्तारगुणवचनेषु । बहुलमेतन्निदर्शनम् ।
२१११ पर्ण हरितभावे ।
२११२ विष्क दर्शने ।
२११३ क्षिप प्रेरणे ।
२११४ वस निवासे ।
२११५ तुत्थ आवरणे ।
( एवं आन्दोलयति । प्रेङ्खोलयति । विडम्बयति । अवधीरयति इत्यादि । अन्ये तु दशगणीपाठो बहुलमित्याहुः । तेनेह अपठिता अपि सौत्रलौकिकाः वैदिका अपि द्रष्टव्या इत्याहुः । इतरे तु नवगणीपठितेभ्योऽपि क्वचित् स्वार्थे णिज्भवति, बहुलग्रहणात् । तेन 'रामो राज्यमचीकरत्' इत्यादिसिद्धिरित्याहुः । चुरादिभ्य एव बहुलं णिजित्यन्ये । )
णिङ्ङ्गान्निरसने । श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च । पुच्छादिषु प्रातिपदिकाद्धात्वर्थ इत्येव सिद्धम् ।

**इति स्वार्थणिजन्ताश्चुरादयः ॥ १० ॥**

**इति श्रीपाणिनिमुनिप्रणीतो धातुपाठः समाप्तः ॥**

# लिङ्गानुशासनसूत्रपाठः ।

( अथ स्त्रीलिङ्गाधिकारः )

१ लिङ्गम् ।
२ स्त्री ।
३ ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः ।
४ अन्यूप्रत्ययान्तो धातुः ।
५ अशनिभरण्यरणयः पुंसि च ।
६ मिन्यन्तः ।
७ वह्निवृष्ण्यग्नयः पुंसि ।
८ श्रोणियोन्यूर्मयः पुंसि च ।
९ क्तिन्नन्तः ।
१० ईकारान्तश्च ।
११ ऊङ्याबन्तश्च ।
१२ य्वन्तमेकाक्षरम् ।
१३ विंशत्यादिरानवतेः ।
१४ दुन्दुभिरक्षेषु ।
१५ नाभिरक्षत्रिये ।
१६ उभावप्यन्यत्र पुंसि ।
१७ तलन्तः ।
१८ भूमिविद्युत्सरिल्लतावनिताऽभिधानानि ।
१९ यादो नपुंसकम् ।
२० भाःस्रुक्स्रग्दिगुष्णिगुपानहः ।
२१ स्थूणोर्णे नपुंसके च ।
२२ गृहशशाभ्यां क्लीबे ।
२३ प्रावृड्विप्रुड्रुट्तृड्विट्त्विषः ।
२४ दर्विविदिवेदिखनिशान्यश्रिवेशिकृष्योषधिकट्यङ्गुलयः ।
२५ तिथिनाडिरुचिवीचिनालिधूलिकिकिकेलिच्छविनीविरात्र्यादयः ।
२६ शष्कुलिराजिकुट्यशनिवर्तिभ्रुकुटित्रुटिवलीपंक्तयः ।
२७ प्रतिपदापद्विपत्संपच्छरत्संसत्परिषदुषःसंवित्क्षुत्पुन्मुत्समिधः ।
२८ आशीर्धूःपूर्गीर्द्वारः ।
२९ अप्सुमनस्समासिकतावर्षाणां बहुत्वं च ।
३० स्रक्त्वग्ज्योग्वाग्यवागूनौस्फिचः ।
३१ तृटिसीमासम्बध्याः ।
३२ चूल्लिवेणिखार्यश्च ।
३३ ताराधाराज्योत्स्नादयश्च ।
३४ शलाका स्त्रियां नित्यम् ।

( अथ पुंल्लिंगाधिकारः )

१ पुमान् ।
२ घञबन्तः ।
३ घाजन्तश्च ।
४ भयलिङ्गभगपदानि नपुंसके ।
५ नङन्तः ।
६ याच्ञा स्त्रियाम् ।
७ क्यन्तो घुः ।
८ इषुधिः स्त्री च ।
९ देवासुरात्मस्वर्गगिरिसमुद्रनखकेशदन्तस्तनभुजकण्ठखड्गशरपङ्काभिधानानि ।
१० त्रिविष्टपत्रिभुवने नपुंसके ।
११ द्यौः स्त्रियाम् ।
१२ इषुबाहू स्त्रियां च ।
१३ बाणकाण्डौ नपुंसके च ।
१४ नान्तः ।
१५ क्रतुपुरुषकपोलगुल्फमेघाभिधानानि ।
१६ अभ्रं नपुंसकम् ।
१७ उकारान्तः ।
१८ धेनुरज्जुकुहूसरयूतनुरेणुप्रियङ्गवः स्त्रियाम् ।
१९ समासे रज्जुः पुंसि च ।
२० श्मश्रुजानुवसुस्वाद्वश्रुजतुत्रपुताल्लूनि नपुंसके ।
२१ वसु चार्थवाचि ।
२२ मद्गुमधुसीधुशीधुसानुकमण्डलूनि नपुंसके च ।
२३ रुत्वन्तः ।
२४ दारुकसेरुजतुवस्तुमस्तूनि नपुंसके ।
२५ सक्तुर्नपुंसके च ।
२६ प्राग्रश्मेरकारान्तः ।
२७ कोपधः ।
२८ चिबुकशाल्कप्रातिपदिकांशुकोल्मुकानि नपुंसके ।
२९ कण्टकानीकसरकमोदकचषकमस्तकपुस्तकतडाकनिष्कशुष्कवर्चस्कपिनाकभाण्डकपिण्डककटकशण्डकपिटकतालकफलकपुलाकानि नपुंसके च ।
३० टोपधः
३१ किरीटमुकुटललाटवटविटशृङ्गाटकराटलोष्टानि नपुंसके ।
३२ कुटकूटकपटकवाटकर्पटनटनिकटकीटकटानि नपुंसके च ।
३३ णोपधः ।
३४ ऋणलवणपर्णतोरणरणोष्णानि नपुंसके ।
३५ कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचूर्णतृणानि नपुंसके च ।
३६ थोपधः ।
३७ काष्ठपृष्ठसिक्थोक्थानि नपुंसके ।
३८ काष्ठा दिगर्थाः स्त्रियाम् ।
३९ तीर्थप्रोथयूथगाथानि नपुंसके च ।
४० नोपधः ।
४१ जघनाजिनतुहिनकाननवनवृजिनविपिनवेतनशासनसोपानमिथुनश्मशानरत्ननिम्नचिह्नानि नपुंसके ।
४२ मानयानाभिधाननलिनपुलिनोद्यानशयनासनस्थानचन्दनालानसम्मानभवनवसनसम्भावनविभावनविमानानि नपुंसके च ।
४३ पोपधः ।
४४ पापरूपोडुपतल्पशिल्पपुष्पशष्पसमीपान्तरीपाणि नपुंसके ।
४५ शूर्पकुतपकुणपद्वीपविटपानि नपुंसके च
४६ भोपधः ।
४७ तलभं नपुंसकम् ।
४८ जृम्भं नपुंसके च ।
४९ मोपधः ।
५० रुक्मसिध्मयुग्मेध्मगुल्माध्यात्मकुङ्कुमानि नपुंसके ।
५१ संग्रामदाडिमकुसुमाश्रमक्षेमक्षौमहोमोद्दामानि नपुंसके च ।

५२ योपधः ।
५३ किसलयहृदयेन्द्रियोत्तरीयाणि नपुंसके ।
५४ गोमयकषायमलयान्वयाव्ययानि नपुंसके च ।
५५ रोपधः ।
५६ द्वाराग्रस्फारतक्रवक्रवप्रक्षिप्रक्षुद्रनारतीरदूरकृच्छ्ररन्ध्राश्रश्वभ्रभीरगभीरक्रूरविचित्रकेयूरकेदारोदराजस्रशरीरकन्दरमन्दारपञ्जराजरजठराजिरवैरचामरपुष्करगह्वरकुहरकुटीरकुलीरचत्वरकाश्मीरनीराम्बरशिशिरतन्त्रयंत्रनक्षत्रक्षेत्रमित्रकलत्रचित्रमूत्रसूत्रवक्त्रनेत्रगोत्रांगुलित्रभलत्रास्त्रशस्त्रशास्त्रवस्त्रपत्रपात्रनक्षत्राणि नपुंसके ।
५७ शुक्रमदेवतायाम् ।
५८ चक्रवज्रान्धकारसारावारपारक्षीरतोमरश्रृङ्गारभृङ्गारमन्दारोशीरतिमिरशिशिराणि नपुंसके च ।
५९ षोपधः ।
६० शिरीषर्जीषाम्बरीषपीयूषपुरीषकिल्बिषकल्माषाणि नपुंसके ।
६१ यूषकरीषामिषविषवर्षाणि नपुंसके च ।
६२ सोपधः ।
६३ पनसबिसबुससाहसानि नपुंसके ।
६४ चमसांसरसनिर्यासोपवासकार्पासवासभासकासकांसमांसानि नपुंसके च ।
६५ कंसं चाप्राणिनि ।
६६ रश्मिदिवसाभिधानानि ।
६७ दीधितिः स्त्रियाम् ।
६८ दिनाहनी नपुंसके ।
६९ मानाभिधानानि ।
७० द्रोणाढकौ नपुंसके च ।
७१ खारीमानिके स्त्रियाम् ।
७२ दाराक्षतलाजासूनां बहुत्वं च ।
७३ नाड्यपजनोपपदानि व्रणाङ्गपदानि ।
७४ मरुद्गरुदुत्तरदृत्विजः ।
७५ ऋषिराशिदृतिग्रन्थिक्रिमिध्वनिबलिकौल्मिमौलिरविकविकपिमुनयः ।
७६ ध्वजगजमुञ्जपुञ्जाः ।
७७ हस्तकुन्तान्तवातव्रातदूतधूर्तसूतचूतमुहूर्ताः ।
७८ षण्डमण्डकरण्डभरण्डवरण्डतुण्डगण्डमुण्डपाषण्डशिखण्डाः ।
७९ वंशांशपुरोडाशाः ।
८० ह्रदकन्दकुन्दबुद्बुदशब्दाः ।
८१ अर्धपथिमथ्यृभुक्षिस्तम्बनितम्बपूगाः ।
८२ पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गतुरङ्गगन्धस्कन्धमृदङ्गसङ्गसमुद्गपुङ्खाः ।
८३ सारथ्यतिथिकुक्षिबस्तिपाण्यञ्जलयः ।

**( अथ नपुंसकाधिकारः )**

१ **नपुंसकम् ।**
२ भावे ल्युडन्तः ।
३ निष्ठा च ।
४ त्वष्यञौ तद्धितौ ।
५ कर्मणि च ब्राह्मणादिगुणवचनेभ्यः ।
६ यद्यढग्यगञ्ण्वुञ्छाश्च भावकर्मणि ।
७ द्वन्द्वैकत्वम् ।
८ अभाषायां हेमन्तशिशिरावहोरात्रे च ।
९ अनञ्कर्मधारयस्तत्पुरुषः ।
१० अनल्पे छाया ।
११ राजाऽमनुष्यपूर्वा सभा ।
१२ सुरासेनाच्छायाशालानिशा स्त्रियां च ।
१३ शिष्टः परवत् ।
१४ अपथपुण्याहे नपुंसके ।
१५ संख्यापूर्वा रात्रिः ।
१६ द्विगुः स्त्रियां च ।
१७ इसुसन्तः ।
१८ अर्चिः स्त्रियां च ।
१९ छदिः स्त्रियामेव ।
२० मुखनयनलोहवनमांसरुधिरकार्मुकविवरजलहलधनान्नाभिधानानि ।
२१ सीरार्थोदनाः पुंसि ।
२२ वक्त्रनेत्रारण्यगाण्डीवानि पुंसि च ।
२३ अटवी स्त्रियाम् ।
२४ लोपधः ।
२५ तुलोपलतालकुसूलतरलकम्बलदेवलवृषलाः पुंसि ।
२६ शीलमूलमङ्गलसालकमलतलमुसलकुण्डलपललमृणालवालबालनिगलपलालबिडालखिलशूलाः पुंसि च ।
२७ शतादिः संख्या ।
२८ शतायुतप्रयुताः पुंसि च ।
२९ लक्षाकोटी स्त्रियाम् ।
३० शङ्कुः पुंसि च ।
३१ सहस्रः क्वचित् ।
३२ मन्व्यच्कोऽकर्तरि ।
३३ ब्रह्मन्पुंसि च ।
३४ नामरोमणी नपुंसके ।
३५ असन्तो द्व्यच्कः ।
३६ अप्सराः स्त्रियाम् ।
३७ त्रान्तः ।
३८ यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव ।
३९ भृत्रामित्रच्छात्रपुत्रमन्त्रवृत्रमेढ्रोष्ट्राः पुंसि ।
४० पत्रपात्रपवित्रसूत्रच्छत्राः पुंसि च ।
४१ बलकुसुमशुल्बयुद्धपत्तनरणाभिधानानि ।
४२ पद्मकमलोत्पलानि पुंसि च ।
४३ आहवसंग्रामौ पुंसि ।
४४ आजिः स्त्रियामेव ।
४५ फलजातिः ।
४६ वृक्षजातिः स्त्रियामेव ।
४७ वियज्जगत्सकृत्शकन्पृषच्छकृद्यकृदुदश्वितः ।
४८ नवनीतावतान्ततामृतनिमित्तवित्तचित्तपित्तव्रतरजतवृत्तपलितानि ।
४९ श्राद्धकुलिशदैवपीठकुण्डाङ्कदधिसक्थ्यक्ष्यस्थ्यास्पदाकाशकण्वबीजानि ।
५० दैवं पुंसि च ।
५१ धान्याज्यसस्यरूप्यपण्यवर्ण्यधृष्यहव्यकव्यकाव्यसत्यापत्यमूल्यशिक्यकुड्यमद्यहर्म्यतूर्यसैन्यानि ।
५२ द्वन्द्वबर्हदुःखबडिशपिच्छबिम्बकुटुम्बकवचवरशरवृन्दारकाणि ।
५३ अक्षमिन्द्रिये ।

**( अथ स्त्रीपुंसाधिकारः )**

**१ स्त्रीपुंसयोः ।**

२ गोमणियष्टिमुष्टिपाटलिवस्तिशाल्मलित्रुटिमसिमरीचयः ।

३ मृत्युसीधुकर्कन्धुकिष्कुकण्डुरेणवः ।

४ गुणवचनमुकारान्तं नपुंसकं च ।

५ अपत्यार्थतद्धिते ।

**( अथ पुंनपुंसकाधिकारः )**

**१ पुंनपुंसकयोः ।**

२ घृतभूतमुस्तक्ष्वेलितैरावतपुस्तकबुस्तलोहिताः ।

३ शृङ्गार्धनिदाघोद्यमशल्यदृढाः ।

४ व्रजकुञ्जकुथकूर्चप्रस्थदर्पार्भार्धर्चदर्भपुच्छाः ।

५ कबन्धौषधायुधान्ताः ।

६ दण्डमण्डखण्डशवसैन्धवपार्श्वाकाशकुशकाशाङ्कुशकुलिशाः ।

७ गृहमेहदेहपट्टपटहाष्टापदाम्बुदककुदाश्च ।

**१ अवशिष्टलिङ्गम् ।**

२ अव्ययं कतियुष्मदस्मदः ।

३ ष्णान्ता संख्या ।

४ गुणवचनं च ।

५ कृत्याश्च ।

६ करणाधिकरणयोर्ल्युट् ।

७ सर्वादीनि सर्वनामानि ।

---

**इति श्रीपाणिनिमुनिप्रणीतं लिङ्गानुशासनं समाप्तम् ।**

# शाकटायनप्रणीत उणादिसूत्रपाठः ।

१ कृवापाजिमिस्वदिसाध्यशूभ्य उण् ।
२ छन्दसीणः ।
३ दृसनिजनिचरिचटिभ्यो ञुण् ।
४ किंजरयोः श्रिणः ।
५ त्रो रश्च लः ।
६ कृके वचः कश्च ।
७ भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः ।
८ अणश्च ।
९ धान्ये नित् ।
१० शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च ।
११ स्यन्देः सम्प्रसारणं धश्च ।
१२ उन्देरिचादेः ।
१३ ईषेः किच्च ।
१४ स्कन्देस्तलोपश्च ।
१५ सृजेरसुम् च ।
१६ कृतेराद्यन्तविपर्ययश्च ।
१७ नावञ्चेः ।
१८ फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च ।
१९ वलेर्गुक्च ।
२० शः कित्सन्वच्च ।
२१ यो द्वे च ।
२२ कुर्भ्रश्च ।
२३ पॄभिदिव्यधिगृधिधृषिभ्यः ।
२४ कृग्रोरुच्च ।
२५ अपदुःसुषु स्थः ।
२६ रपेरिच्चोपधायाः ।
२७ अर्जिदृशिकम्यमिपशिबाधामृजिपशितुग्धुग्दीर्घहकाराश्च ।
२८ प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च ।
२९ लङ्घिबंह्योर्नलोपश्च ।
३० ऊर्णोतेर्नुलोपश्च ।
३१ महति ह्रस्वश्च ।
३२ श्लिषेः कश्च ।
३३ आङ्परयोः खनिशॄभ्यां डिच्च ।
३४ हरिमितयोर्द्रुवः ।
३५ शते च ।
३६ खरुःशङ्कुपीयुनीलङ्गुलिगु ।
३७ मृगय्वादयश्च ।
३८ मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् ।
३९ व्यथेः सम्प्रसारणं किच्च ।
४० मुकुरदर्दुरौ ।
४१ मद्गुरादयश्च ।
४२ असेरुरन् ।
४३ मसेश्च ।
४४ शावशेराप्तौ ।
४५ अविमह्योष्टिषच् ।
४६ अमेर्दीर्घश्च ।
४७ रुहेर्वृद्धिश्च ।
४८ तवेर्णिद्वा ।
४९ नञि व्यथेः ।
५० किलेर्बुक्च ।
५१ इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिवन्धिशुषिभ्यः किरच् ।
५२ अशेर्णित् ।
५३ अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः ।
५४ सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच् ।
५५ कमेः पश्च ।
५६ गुपादिभ्यः कित् ।
५७ मिथिलादयश्च ।
५८ पतिकठिकुठिगडिगुडिदंशिभ्य एरक् ।
५९ कुम्बेर्नलोपश्च ।
६० शदेस्त च ।
६१ मूलेरादयः ।
६२ कबेरोतः पश्च ।
६३ भातेर्डवतुः ।
६४ कटिचकिभ्यामोरन् ।
६५ किशोरादयश्च ।
६६ कपिगडिगण्डिकटिपटिभ्य ओलच् ।
६७ मीनातेरूरन् ।
६८ स्यन्देः संप्रसारणं च ।
६९ सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ।
७० पः किच्च ।
७१ अर्तेश्च तुः ।
७२ कमिमनिजनिगाभायाहिभ्यश्च ।
७३ चायः किः ।
७४ आप्नोतेर्ह्रस्वश्च ।
७५ वसेस्तुन् ।
७६ अगारे णिच्च ।
७७ कृञः क्रतुः ।
७८ एधिवह्योश्च तुः ।
७९ जीवेरातुः ।
८० आतृकन्वृद्धिश्च ।
८१ कृपिचमितनिधनिसर्जिखर्जिभ्य ऊः ।
८२ मृजेर्गुणश्च ।
८३ वहो धश्च ।
८४ कषेश्छश्च ।
८५ णित्कसिपद्यर्तेः ।
८६ अणो डश्च ।
८७ नञि लम्बेर्नलोपश्च ।
८८ के श्र एरङ् चास्य ।
८९ त्रो दुट् च ।
९० दरिद्रातेर्यालोपश्च ।
९१ नृतिशृध्योः कूः ।
९२ ऋतेरम् च ।
९३ अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः ।
९४ मृग्रोरुतिः ।
९५ ग्रो मुट् च ।
९६ हृषेरुलच् ।
९७ हृसृरुहियुषिभ्य इतिः ।
९८ ताडेर्णिलुक् च ।
९९ शमेर्ढः ।
१०० कमेरठः ।
१०१ रमेर्वृद्धिश्च ।
१०२ शमेः खः ।
१०३ कणेष्ठः ।
१०४ कलस्तृपश्च ।

१०५ शपेर्बश्च ।
१०६ वृषादिभ्यश्चित् ।
१०७ मृजेष्टिलोपश्च ।
१०८ चुपेरच्चोपधायाः ।
१०९ शकिशम्योर्नित् ।
११० छो गुग्घ्रस्वश्च ।
१११ जमन्ताड्डः ।
११२ कादिभ्यः कित् ।
११३ स्थाचतिमृजेरालज्वालञालीयचः
११४ पतिचण्डिभ्यामालञ् ।
११५ तमिविशिबिडिमृणिकुलिकपिप-
लिपञ्चिभ्यः कालन् ।
११६ पतेरङ्गच्पक्षिणि ।
११७ तरत्यादिभ्यश्च ।
११८ बिडादिभ्यः कित् ।
११९ सृवृभ्योर्वृद्धिश्च ।
१२० गन्गम्यद्योः ।
१२१ छापूखडिभ्यः कित् ।
१२२ सृजः किन्तुट् च ।
१२३ श्रणातेर्ह्रस्वश्च ।
१२४ गण्शकुनौ ।
१२५ मुदिग्रोर्गग्गौ ।
१२६ अण्डन्कृसृभूवृञः ।
१२७ शॄदॄभसोऽदिः ।
१२८ दृणातेः षुग्घ्रस्वश्च ।
१२९ त्यजितनियजिभ्यो डित् ।
१३० एतेस्तुट् च ।
१३१ सर्तेरटिः ।
१३२ लंघेर्नलोपश्च ।
१३३ पारयतेरजिः ।
१३४ प्रथः कित्सम्प्रसारणं च ।
१३५ भियः षुग्घ्रस्वश्च ।
१३६ युष्यसिभ्यां मदिक् ।
१३७ अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदि-
यक्षिनीभ्यो मन् ।
१३८ जहातेः सन्वदालोपश्च ।
१३९ अवतेष्टिलोपश्च ।
१४० ग्रसेरा च ।
१४१ अविसिविसिशुषिभ्यः कित् ।
१४२ इषियुधीन्धिदसिश्याधूसूभ्यो मक्
१४३ युजिरुचितिजां कुश्च ।
१४४ हन्तेर्हि च ।
१४५ भियः षुग्वा ।
१४६ घर्मः ।
१४७ ग्रीष्मः ।
१४८ प्रथेः षिवन्संप्रसारणं च ।
१४९ अशूप्रुषिलटिकणिखटिविशिभ्यः
क्वन् ।
१५० इण्शीभ्यां वन् ।
१५१ सर्वनिघृष्वरिष्वलष्वशि-
वपद्वप्रह्वेष्वा अतन्त्रे ।
१५२ शेवयह्वजिह्वाग्रीवाप्वमीवाः ।
१५३ कृगृशॄदॄभ्यो वः ।
१५४ कनिन्युवृषितक्षिराजिध-
न्विद्युप्रतिदिवः ।
१५५ सप्यशूभ्यां तुट् च ।
१५६ नञि जहातेः ।
१५७ श्वन्नुक्षन्पूषन्प्लीहन्क्लेद-
न्स्नेहन्मूर्धन्मज्जन्नर्यमन्वि-
श्वप्सन्परिज्मन्मातरिश्व-
न्मघवन्निति ।

इत्युणादिषु प्रथमः पादः ।

१५८ कृहृभ्यामेणुः ।
१५९ हनिकुषिनीरमिकाशिभ्यः क्थन् ।
१६० अवे भृञः ।
१६१ उषिकुषिगर्तिभ्यस्थन् ।
१६२ सर्तेर्णित् ।
१६३ जॄवृञ्भ्यामूथन् ।
१६४ पातॄतुदिवचिरिचिसिचिभ्यस्थक् ।
१६५ अर्तेर्निरि ।
१६६ निशीथगोपीथावगथाः ।
१६७ गश्चोदि ।
१६८ समीणः ।
१६९ तिथपृष्ठगूथयूथप्रोथाः ।
१७० स्फायितञ्चिवञ्चिशकि-
क्षिपिक्षुदिसृपितृपिदृपि-
वन्द्युन्दिश्वितिवृत्यजिनी-
पदिमदिमुदिखिदिच्छि-
दिभिदिमन्दिचन्दिदहिद-
सिदम्भिवसिवाशिशीङ्-
हसिसिधिशुभिभ्यो रक् ।
१७१ चकिरम्योरुच्चोपधायाः ।
१७२ वौ कसेः ।
१७३ अमितम्योर्दीर्घश्च ।
१७४ निन्देर्नलोपश्च ।
१७५ अर्देर्दीर्घश्च ।
१७६ शुचेर्दश्च ।
१७७ दुरीणो लोपश्च ।
१७८ कृतेश्छः क्रू च ।
१७९ रोदेर्णिलुक् च ।
१८० बहुलमन्यत्रापि संज्ञाछन्दसोः ।
१८१ जोरी च ।
१८२ सुसूधागृधिभ्यः क्रन् ।
१८३ शुसिचिमीनां दीर्घश्च ।
१८४ वाविन्धेः ।
१८५ वृधिवपिभ्यां रन् ।
१८६ ऋज्रेन्द्राग्रवज्रविप्रकुब्रचु-
ब्रक्षुरखुरभद्रोग्रभेरमेलशु-
क्रशुक्लगौरवन्रेरामालाः ।
१८७ समि कस उकन् ।
१८८ पचिनशोर्णुकन्कनुमौ च ।
१८९ भियः क्रुकन् ।
१९० कुन्शिल्पिसंज्ञयोरपूर्वस्यापि ।
१९१ रमेरश्च लो वा ।
१९२ जहातेर्द्वे च ।
१९३ ध्मो धम च ।
१९४ हनो वध च ।
१९५ बहुलमन्यत्रापि ।
१९६ कृषेर्वृद्धिश्चोदीचाम् ।
१९७ उदकं च ।
१९८ वृश्चिकृषोः किकन् ।
१९९ प्राङि पणिकषः ।
२०० मुषेर्दीर्घश्च ।
२०१ स्यमेः संप्रसारणं च ।
२०२ क्रिय इकन् ।
२०३ आङि पणिपनिपतिखनिभ्यः ।
२०४ श्यास्त्याहृञविभ्य इनच् ।
२०५ वृजेः किच्च ।
२०६ अजेरज च ।
२०७ बहुलमन्यत्रापि ।
२०८ द्रुदक्षिभ्यामिनन् ।
२०९ अर्त्तेः किदिच्च ।
२१० वेपितुह्योर्ह्रस्वश्च ।
२११ तलिपुलिभ्यां च ।
२१२ गर्वेरत उच्च ।
२१३ रुहेश्च ।
२१४ महेरिनण्च ।
२१५ क्विन्वचिप्रच्छिश्रिस्रुद्रु-
प्रुज्वां दीर्घोऽसंप्रसारणं च ।
२१६ आप्नोतेर्ह्रस्वश्च ।
२१७ परौ व्रजेः षः पदान्ते ।

२१८ हुवः श्लुवच्च ।
२१९ सुवः कः ।
२२० चिक्च ।
२२१ तनोतेरनश्च वः ।
२२२ ग्लानुदिभ्यां डौः ।
२२३ च्विरव्ययम् ।
२२४ रातेर्डैः ।
२२५ गमेर्डोः ।
२२६ भ्रमेश्च डूः ।
२२७ दमेर्डोसिः ।
२२८ पणेरिजादेश्च वः ।
२२९ वशेः कित् ।
२३० अञ्च ऊच्च ।
२३१ जसिसहोरुरिन् ।
२३२ सुयुरुवृञो युच् ।
२३३ अशेरश च ।
२३४ उन्देर्नलोपश्च ।
२३५ गमेर्गश्च ।
२३६ बहुलमन्यत्रापि ।
२३७ रञ्जेः क्युन् ।
२३८ भूसूधूभ्रस्जिभ्यश्छन्दसि ।
२३९ कॄपॄवृजिमन्दिनिधाञः क्युः ।
२४० धृषेर्धिष् च संज्ञायाम् ।
२४१ वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च ।
२४२ संश्चत्तृपद्वेहत् ।
२४३ छन्दस्यसानच्छुजॄभ्याम् ।
२४४ ऋञ्जिवृधिमन्दिसहिभ्यः कित् ।
२४५ अर्तेर्गुणः शुट् च ।
२४६ सम्यानच् स्तुवः ।
२४७ युधिबुधिदृशिभ्यः किच्च ।
२४८ हुर्च्छेः सनो लुक् छलोपश्च ।
२४९ श्वितेर्दश्च ।
२५० तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ ।
२५१ बहुलमन्यत्रापि ।
२५२ नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ ।
२५३ सुव्यसेर्ऋन् ।
२५४ यतेर्वृद्धिश्च ।
२५५ नञि च नन्देः ।
२५६ दिवेर्ऋः ।
२५७ नयतेर्डिच्च ।
२५८ सव्ये स्थश्छन्दसि ।
२५९ अर्तिसृधृधम्यम्यश्यवितॄभ्योऽनिः
२६० आङि शुषेः सनश्छन्दसि ।
२६१ कृषेरादेश्च चः ।
२६२ अदेर्मुट् च ।
२६३ वृतेश्च ।
२६४ क्षिपेः किच्च ।
२६५ अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः ।
२६६ बृंहेर्नलोपश्च ।
२६७ द्युतेरिसिन्नादेश्च जः ।
२६८ वसौ रुचेः संज्ञायाम् ।
२६९ भुवः कित् ।
२७० सहो धश्च ।
२७१ पिबतेस्थुक् ।
२७२ जनेरुसिः ।
२७३ मनेर्धश्छन्दसि ।
२७४ अर्तिपॄवपियजितनिधनितपिभ्यो नित् ।
२७५ एतेर्णिच्च ।
२७६ चक्षेः शिच्च ।
२७७ मुहेः किच्च ।
२७८ बहुलमन्यत्रापि ।
२७९ कॄगॄशॄवृञ्चतिभ्यः ष्वरच् ।
२८० नौ सदेः ।

**इत्युणादिषु द्वितीयः पादः ।**

२८१ छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्वरसंयद्वराः ।
२८२ इण्सिञ्जिदीङुष्यविभ्यो नक् ।
२८३ फेनमीनौ ।
२८४ कृषेर्वर्णे ।
२८५ बन्धेर्ब्रधिबुधी च ।
२८६ धापॄवस्यज्यतिभ्यो नः ।
२८७ लक्षेरट् च ।
२८८ वनेरिच्चोपधायाः ।
२८९ सिवेष्टेर्यू च ।
२९० कॄवॄजॄसिद्रुपन्यनिस्वपिभ्यो नित् ।
२९१ धेट इच्च ।
२९२ तृषिशुषिरसिभ्यः कित् ।
२९३ सुञो दीर्घश्च ।
२९४ रमेस्त च ।
२९५ रास्नासास्नास्थूणावीणाः ।
२९६ गादाभ्यामिष्णुच् ।
२९७ कृत्यशूभ्यां क्स्नः ।
२९८ तिजेर्दीर्घश्च ।
२९९ श्लिषेरच्चोपधायाः ।
३०० यजिमनिशुन्धिदसिजनिभ्यो युच् ।
३०१ भुजिमृङ्भ्यां युक्त्युकौ ।
३०२ सर्तेरयुः ।
३०३ पानीविषिभ्यः पः ।
३०४ च्युवः किच्च ।
३०५ स्तुवो दीर्घश्च ।
३०६ सुशॄभ्यां निच्च ।
३०७ कुयुभ्यां च ।
३०८ खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः ।
३०९ स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच् ।
३१० कृहनिभ्यां क्त्नुः ।
३११ गमेः सन्वच्च ।
३१२ दाभाभ्यां नुः ।
३१३ वचेर्गश्च ।
३१४ धेट इच्च ।
३१५ सुवः कित् ।
३१६ जहातेर्द्वेऽन्तलोपश्च ।
३१७ स्थो णुः ।
३१८ अजिवृरीरिभ्यो निच्च ।
३१९ विषेः किच्च ।
३२० किदाधारार्चिकलिभ्यः कः ।
३२१ सृवृभूशुषिमुषिभ्यः कक् ।
३२२ शुकवल्कोल्काः ।
३२३ इण्भीकापाशल्यतिमर्चिभ्यः कन् ।
३२४ नौ हः ।
३२५ नौ सदेर्डिच्च ।
३२६ स्यमेरीट् च ।
३२७ अजियुधुनीभ्यो दीर्घश्च ।
३२८ ह्रियो रश्च लो वा ।
३२९ शकेरुनोन्तोन्त्युनयः ।
३३० भुवो झिच् ।
३३१ कन्युच्क्षिपेश्च ।
३३२ अनुङ् नदेश्च ।
३३३ कॄवृदारिभ्य उनन्
३३४ त्रो रश्च लो वा ।
३३५ क्षुधिपिशिमिथिभ्यः कित् ।
३३६ फलेर्गुक्च ।
३३७ अशोर्लशश्च ।
३३८ अर्जेर्णिलुक् च

३३९ तृणाख्यानां चित् ।
३४० अर्तेश्च ।
३४१ अजियमिशीङ्भ्यश्च ।
३४२ वृतृवदिहनिकमिकशिभ्यः सः ।
३४३ प्लुषेरच्चोपधायाः ।
३४४ मनेर्दीर्घश्च ।
३४५ अशेर्देवने ।
३४६ स्नुव्रश्चिकृत्यृषिभ्यः कित् ।
३४७ ऋषेर्जातौ ।
३४८ उन्दिगुधिकुषिभ्यश्च ।
३४९ गृधिपण्योर्दकौ च ।
३५० अशेः सरः ।
३५१ वसेश्च ।
३५२ सपूर्वाच्चित् ।
३५३ कृधूमदिभ्यः कित् ।
३५४ पते रश्च लः ।
३५५ तन्त्रिषिभ्यां क्सरन् ।
३५६ पीयुक्कणिभ्यां कालन्ह्रस्वः संप्रसारणं च ।
३५७ कटिकुषिभ्यां काकुः ।
३५८ सर्तेर्दुक्च ।
३५९ वृतेर्वृद्धिश्च ।
३६० प्रदेर्निर्त्संप्रसारणमल्लोपश्च ।
३६१ सृयुवचिभ्योन्युजागूजक्नुचः ।
३६२ आनकः शीङ्भियः ।
३६३ आणको लूधूशिङ्घिधाञ्भ्यः ।
३६४ उल्मुकदर्विहोमिनः ।
३६५ ह्रियः कुक्रश्च लो वा ।
३६६ हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन् ।
३६७ नञ्याप इट् च ।
३६८ तनिमृङ्भ्यां किच्च ।
३६९ अञ्जिघृसिभ्यः क्तः ।
३७० दुतनिभ्यां दीर्घश्च ।
३७१ जेर्मुट् चोदात्तः ।
३७२ लोष्टपलितौ ।
३७३ ह्रस्याभ्यामितन् ।
३७४ रुहे रश्च लो वा ।
३७५ पिशेः किच्च ।
३७६ श्रुदक्षिस्पृहिगृहिभ्य आय्यः ।
३७७ दिधिषाय्यः ।
३७८ वृञ एण्यः ।
३७९ स्तुवः क्सेय्यश्छन्दसि ।
३८० राजेरन्यः ।
३८१ शरण्योश्च ।
३८२ अर्तेर्निच ।
३८३ पर्जन्यः ।
३८४ वदेरान्यः ।
३८५ अमिनक्षियजिवधिपतिभ्योऽत्रन् ।
३८६ गडेरादेश्च कः ।
३८७ वृत्रश्चित् ।
३८८ सुविदेः कत्रः ।
३८९ कृतेर्नुम्च ।
३९० भृमृदृशियजिपर्विपच्यमितमिनमिहर्यैभ्योऽतच् ।
३९१ पूषिरञ्जिभ्यां कित् ।
३९२ खलतिः ।
३९३ शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः ।
३९४ भृञश्चित् ।
३९५ रुदिविदिभ्यां ङित् ।
३९६ उपसर्गे वसेः ।
३९७ अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् ।
३९८ वेञस्तुट् च ।
३९९ बहियुभ्यां णित् ।
४०० वयश्च ।
४०१ दिवः कित् ।
४०२ कृशृशलिकलिगर्दिभ्योऽभच् ।
४०३ ऋषिवृषिभ्यां कित् ।
४०४ रुषेर्निर्लुक्च ।
४०५ रासिवल्लिभ्यां च ।
४०६ जृविशिभ्यां झच् ।
४०७ रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि ।
४०८ तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च ।
४०९ हन्तेर्मुट् हि च ।
४१० भन्देर्नलोपश्च ।
४११ ऋच्छेररः ।
४१२ अर्तिकमिभ्रमिचमिदेविवासिभ्यश्चित् ।
४१३ कुवः क्रन् ।
४१४ अङ्गिमदिमन्दिभ्य आरन् ।
४१५ गडेः कड च ।
४१६ शृङ्गारभृङ्गारौ ।
४१७ कञ्जिभृजिभ्यां चित् ।
४१८ कमेः किदुच्चोपधायाः ।
४१९ तुषारादयश्च ।
४२० दीङो नुट् च ।
४२१ सर्तेरपः षुक् च ।
४२२ उषिकुटिदलिकच्चिखजिभ्यः कपन् ।
४२३ क्वणेः संप्रसारणं च ।
४२४ कपश्याकवर्मणस्थ ।
४२५ विटपपिष्टपविशिपोलपाः ।
४२६ वृतेस्तिकन् ।
४२७ कृतिभिदिलतिभ्यः कित् ।
४२८ इष्यशिभ्यां तकन् ।
४२९ इणस्तशन्तशसुनौ ।
४३० वीपतिभ्यां तनन् ।
४३१ दृदलिभ्यां भः
४३२ आर्तिगृभ्यां भन् ।
४३३ इणः कित् ।
४३४ असिसञ्जिभ्यां क्थिन् ।
४३५ प्लुषिकुषिशुषिभ्यः क्सिः ।
४३६ अशेर्नित् ।
४३७ इषेः क्सुः ।
४३८ अवितॄस्तृतन्त्रिभ्य ईः ।
४३९ यापोः किद्द्वे च ।
४४० लक्षेर्मुट् च ।

## इत्युणादिषु तृतीयः पादः ।

४४१ वातप्रमीः ।
४४२ ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कलिज्यतुजलिजिष्ठुजिष्ठसन्स्यनिथिनुल्यसासानुकः ।
४४३ श्रः करन् ।
४४४ पुषः कित् ।
४४५ कलश्च ।
४४६ गमेरिनिः ।
४४७ आङि णित् ।
४४८ भुवश्च ।
४४९ प्रे स्थः ।
४५० परमे कित् ।
४५१ मन्थः ।
४५२ पतस्थ च ।
४५३ खजेराकः ।
४५४ बलाकादयश्च ।
४५५ पिनाकादयश्च ।
४५६ कषिदुषिभ्यामीकन् ।

४५७ अनिहृषिभ्यां किच्च
४५८ चङ्कणः कङ्कणश्च ।
४५९ शॄपॄवृञां द्वे रुक्चाभ्यासस्य ।
४६० फर्फरीकादयश्च ।
४६१ ईषेः किद्ध्रस्वश्च ।
४६२ ऋजेश्च ।
४६३ सर्तेर्नुम् च ।
४६४ मृडः कीकन्कङ्कणौ ।
४६५ अलीकादयश्च ।
४६६ कृतॄभ्यामीषन् ।
४६७ शॄपॄभ्यां किच्च ।
४६८ अर्जेॠज् च ।
४६९ अम्बरीषः ।
४७० कॄशॄपॄकटिपटिशौटिभ्य ईरन् ।
४७१ वशेः कित् ।
४७२ कशेर्मुट् च ।
४७३ कुञ उच्च ।
४७४ घसेः किच्च ।
४७५ गभीरगम्भीरौ ।
४७६ विषा विहा ।
४७७ पच एलिमच् ।
४७८ शीङो धुक्लक्वलञ्वालनः ।
४७९ मृकणिभ्यामूकोकणौ ।
४८० कलेरूकः ।
४८१ उलूकादयश्च ।
४८२ शलिमण्डिभ्यामूकण् ।
४८३ नियो मिः ।
४८४ अर्तेरुच्च ।
४८५ भुवः कित् ।
४८६ अश्नाते रश्च ।
४८७ दल्मिः ।
४८८ वीज्याज्वरिभ्यो निः ।
४८९ सृवृषिभ्यां कित् ।
४९० अग्नेर्नलोपश्च ।
४९१ वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् ।
४९२ घृणिपृश्निपार्ष्णिचूर्णिभूर्णि ।
४९३ वृदृभ्यां विन् ।
४९४ जॄशॄस्तॄजागृभ्यः क्विन् ।
४९५ दिवो द्वे दीर्घश्चाभ्यासस्य ।
४९६ कृविघृष्विच्छविस्थविकिकीदिवि ।
४९७ पातेर्डतिः ।
४९८ शकेॠतिन् ।
४९९ अमेरतिः ।
५०० वहिवस्यर्तिभ्यश्चित् ।
५०१ अङ्केः को वा ।
५०२ हन्तेरंह च ।
५०३ रमेर्नित् ।
५०४ सूङः क्रिः ।
५०५ अदिशदिभूशुभिभ्यः क्रिन् ।
५०६ वङ्क्र्यादयश्च ।
५०७ राशदिभ्यां त्रिप् ।
५०८ अदेस्त्रिनिश्च ।
५०९ पतेरत्रिन् ।
५१० मृकणिभ्यामीचिः ।
५११ श्वयतेश्चित् ।
५१२ वेञो ङिच्च ।
५१३ ऋहनिभ्यामूषन् ।
५१४ पुरः कुषन् ।
५१५ पृनहिकलिभ्य उषच् ।
५१६ पीयेरूषन् ।
५१७ मस्जेर्नुम् च ।
५१८ गडेश्च ।
५१९ अर्तेररुः ।
५२० कुटः किच्च ।
५२१ शकादिभ्योऽटन् ।
५२२ कृकदिकडिकटिभ्योऽम्बच् ।
५२३ कदेर्णित्पक्षिणि ।
५२४ कलिकर्द्योरमः ।
५२५ कुणिपुल्योः किन्दच् ।
५२६ कुपेर्वा वश्च ।
५२७ नौ षञ्जेर्घथिन् ।
५२८ उदर्तेश्चित् ।
५२९ सर्तेर्णिच्च ।
५३० खर्जिपिञ्जादिभ्य ऊरोलचौ ।
५३१ कुवश्चट् दीर्घश्च ।
५३२ समीणः ।
५३३ सिवेष्टेरू च ।
५३४ शमेर्बन् ।
५३५ उल्वादयश्च ।
५३६ स्थः स्तोऽम्बजबकौ ।
५३७ शाशपिभ्यां ददनौ ।
५३८ अब्दादयश्च ।
५३९ वलिमलितनिभ्यः कयन् ।
५४० वृहोः षुग्दुकौ च ।
५४१ मिपीभ्यां रुः ।
५४२ जत्र्वादयश्च ।
५४३ रुशातिभ्यां कुन् ।
५४४ जनिदाच्युसृवृमदिषमिनमिभृञ्भ्य इत्वन्त्वन्त्वलण्क्विनन्शक्स्यढडटाटचः ।
५४५ अन्येभ्योऽपि दृश्यन्ते ।
५४६ कुसेरुम्भोमेदेताः ।
५४७ सानसिवर्णसिपर्णसिनण्डुलांकुशचषालेल्वलपधिष्ण्यशल्याः ।
५४८ मूशक्यविभ्यः क्लः ।
५४९ माछासासिभ्यो यः ।
५५० जनेर्यक् ।
५५१ अघ्न्यादयश्च ।
५५२ स्नामदिपद्यर्तिपृशकिभ्यो वनिप् ।
५५३ शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप् ।
५५४ ध्याप्योः संप्रसारणं च ।
५५५ अदेर्ध च ।
५५६ प्रईरशदोस्तुट् च ।
५५७ सर्वधातुभ्य इन् ।
५५८ हृपिषिरुहिवृतिविदिछिदिकीर्तिभ्यश्च ।
५५९ इगुपधात्कित् ।
५६० भ्रमेः संप्रसारणं च ।
५६१ क्रमितमिशतिस्तम्भामत इच्च ।
५६२ मनेरुच्च ।
५६३ वर्णेर्बलिश्चाहिरण्ये ।
५६४ वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारीभ्य इञ् ।
५६५ नहो भश्च ।
५६६ कृषेर्वृद्धिश्छन्दसि ।
५६७ श्वः शकुनौ ।
५६८ कृञ उदीचां कारुषु ।
५६९ अनिघसिभ्यामिण् ।
५७० अज्यतिभ्यां च ।
५७१ पादे च ।
५७२ अशिपणाय्योरुडायलुकौ च ।
५७३ वातेर्डिच्च ।
५७४ प्रे हरतेः कूपे ।
५७५ नौ व्यो यलोपः पूर्वस्य च दीर्घः ।
५७६ समाने ख्यः स चोदात्तः ।
५७७ आङि श्रीहनिभ्यां ह्रस्वश्च ।
५७८ अच इः ।
५७९ खनिकष्यज्यसिवसिवनिसनिग्रन्थिकलिभ्यश्च ।
५८० वृतेश्छन्दसि ।
५८१ भुजेः किच्च ।

५८२ कृगृशृपृकुटिभिदिछिदिभ्यश्च ।
५८३ कुडिकम्प्योर्नलोपश्च ।
५८४ सर्वधातुभ्यो मनिन् ।
५८५ बृंहेर्नोच्च ।
५८६ अशिशकिभ्यां छन्दसि ।
५८७ हृभृधृसृस्तृशृभ्य इमनिच् ।
५८८ जनिमृङ्भ्यामिमनिन् ।
५८९ वेञः सर्वत्र ।
५९० नामन्सीमन्व्योमन्रोमन्पाप्मन्-धामन् ।
५९१ मिथुने मनिः ।
५९२ सातिभ्यां मनिन्मनिणौ ।
५९३ हनिमशिभ्यां सिकन् ।
५९४ कोररन् ।
५९५ गिर उडच् ।
५९६ इन्देः कमिर्नलोपश्च ।
५९७ कायतेर्डिमिः ।
५९८ सर्वधातुभ्यः ष्ट्रन् ।
५९९ अस्जिगमिनमिहनिविश्यशां वृद्धिश्च ।
६०० दिवेर्ऋुच्च ।
६०१ उषिखनिभ्यां कित् ।
६०२ सिविमुच्योष्टेरू च ।
६०३ अमिचिमिशसिभ्यः क्त्रः ।
६०४ पुवो ह्रस्वश्च ।
६०५ स्त्यायतेर्ड्रट् ।
६०६ गुधृवीपचियदिसदिक्षदिभ्यस्त्रन् ।
६०७ हुयामाश्रुभसिभ्यस्त्रन् ।
६०८ गमेरा च ।
६०९ दादिभ्यश्छन्दसि ।
६१० भूवादिगृभ्यो णित्रन् ।
६११ चरेर्वृत्ते ।
६१२ अशित्रादिभ्य इत्रोत्रौ ।
६१३ अमेर्द्विषति चित् ।
६१४ आः समिण्निकषिभ्याम् ।
६१५ चितेः कणः कश्च ।
६१६ सूचेः स्मन् ।
६१७ पातेर्डुम्सुन् ।
६१८ रुचिभुजिभ्यां किष्यन् ।
६१९ वसेस्तिः ।
६२० सावसेः ।
६२१ वौ तसेः ।
६२२ पदिप्रथिभ्यां नित् ।
६२३ दृणातेर्ह्रस्वश्च ।
६२४ कृतॄतृपिभ्यः कीटन् ।
६२५ रुचिवचिकुचिकुटिभ्यः कितच् ।
६२६ कुटिकुषिभ्यां क्मलन् ।
६२७ कुषेर्लश्च ।
६२८ सर्वधातुभ्योऽसुन् ।
६२९ रपेरत एच्च ।
६३० अशेर्देवने युट् च ।
६३१ उब्जेर्बले बलोपश्च ।
६३२ श्वेः संप्रसारणं च ।
६३३ श्रयतेः स्वाङ्गे शिरः किच्च ।
६३४ अर्तेरुच्च ।
६३५ व्याधौ शुट् च ।
६३६ उदके नुट् च ।
६३७ इण आगसि ।
६३८ रिचेर्धने घिच्च ।
६३९ चायतेरन्ने ह्रस्वश्च ।
६४० वृङ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् च ।
६४१ स्रुरीभ्यां तुट् च ।
६४२ पातेर्बले जुट् च ।
६४३ उदके थुट् च ।
६४४ अन्ने च ।
६४५ अदेर्नुम् धौ च ।
६४६ स्कन्देश्च स्वाङ्गे ।
६४७ आपः कर्माख्यायाम् ।
६४८ रूपे जुट् च ।
६४९ उदके नुम्भौ च ।
६५० नहेर्दिवि भश्च ।
६५१ इण आगोऽपराधे च ।
६५२ अमेर्हुक् च ।
६५३ रमेश्च ।
६५४ देशे ह च ।
६५५ अञ्च्यञ्जियुजिभृजिभ्यः कुश्च ।
६५६ भूरञ्जिभ्यां कित् ।
६५७ वसेर्णित् ।
६५८ चन्देरादेश्च छः ।
६५९ पचिवचिभ्यां सुट् च ।
६६० वहिहाधाञ्भ्यश्छन्दसि ।
६६१ इण आसिः ।
६६२ मिथुनेऽसिः पूर्ववच्च सर्वम् ।
६६३ नञि हन एह च ।
६६४ विधाञो वेध च ।
६६५ नुवो धुट् च ।
६६६ गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वं च ।
६६७ चन्द्रे मो डित् ।
६६८ वयसि धाञः ।
६६९ पयसि च ।
६७० पुरसि च ।
६७१ पुरूरवाः ।
६७२ चक्षेर्बहुलं शिच्च ।
६७३ उषः कित् ।
६७४ दमेरुनसिः ।
६७५ अङ्गतेरसिरिरुडागमश्च ।
६७६ सर्तेरप्पूर्वादसिः ।
६७७ विदिभुजिभ्यां विश्वे ।
६७८ वेशः कनसिः ।

**इत्युणादिषु चतुर्थः पादः ।**

६७९ अदिभुवो डुतच् ।
६८० गुधेरूमः ।
६८१ मसेरूरन् ।
६८२ स्थः किच्च ।
६८३ पातेरतिः ।
६८४ वातेर्नित् ।
६८५ अर्तेश्च ।
६८६ तृहेः क्नो हलोपश्च ।
६८७ वृञ्लुटितनिताडिभ्य उलच् तण्डश्च ।
६८८ दंसेष्टटनौ न आ च ।
६८९ दंशेश्च ।
६९० उदि चेर्डैसिः ।
६९१ नौ दीर्घश्च ।
६९२ सौ रमेः क्तो दमे पूर्वपदस्य च दीर्घः ।
६९३ पूञो यण्णुक् ह्रस्वश्च ।
६९४ संसेः शिः कुट् किच्च ।
६९५ अर्तेः क्युरुच्च ।
६९६ हिंसेरीरन्नीरचौ ।
६९७ उदि दृणातेरजलौ पूर्वपदान्त्यलोपश्च ।
६९८ डित् खनेर्मुट् स चोदात्तः ।
६९९ अमेः सन् ।
७०० मुहेः खो मूर्च ।
७०१ नहेर्हलोपश्च ।
७०२ शीङो ह्रस्वश्च ।
७०३ माङ ऊखो मय् च ।
७०४ कलिगलिभ्यां फगस्योच्च ।

७०५ स्पृशेः श्वण्शुनौ पृ च ।
७०६ श्मनि श्रयतेर्डुन् ।
७०७ अश्वादयश्च ।
७०८ जनेष्टन् लोपश्च ।
७०९ अच् तस्य जङ्घ च ।
७१० हन्तेः शरीरावयवे द्वे च ।
७११ क्लिशेरन् लो लोपश्च ।
७१२ फलेरितजादेशश्च पः ।
७१३ कृञादिभ्यः संज्ञायां वुन् ।
७१४ चीकयते राद्यन्तविपर्ययश्च ।
७१५ पचिमच्योरिच्चोपधायाः ।
७१६ जनेररष्ठ च ।
७१७ घचिमनिभ्यां चिच्च ।
७१८ कर्जिदृणातेरलचौ पूर्वपदान्तलोपश्च ।
७१९ कृदरादयश्च ।
७२० हन्तेर्युनाद्यन्तयोर्घत्वतत्वे ।
७२१ क्रमिगमिक्षमिभ्यस्तुन्वृद्धिश्च ।
७२२ हर्यतेः कन्यन् हिरच् ।
७२३ कृञः पासः ।
७२४ जनेस्तु रश्च ।
७२५ ऊर्णोतेर्डः ।
७२६ दधातेर्यन्नुट् च ।
७२७ जीर्यतेः क्रिन् रश्च घः ।
७२८ मव्यतेर्यलोपो मश्चापतुट् चालः ।
७२९ ऋजेः कीकन् ।
७३० तनोतेर्डउः सन्वच्च ।
७३१ अर्भकपृथुकपाका वयसि ।
७३२ अवद्यावमाधमार्वरेफाः कुत्सिते ।
७३३ लीरीङो ह्रस्वः पुट् च तरौ श्लेषणकुत्सनयोः ।
७३४ क्लिशेरीचोपधायाः कन् लोपश्च लो नाम् च ।
७३५ अश्नोतेराशुकर्मणि वरट् च ।
७३६ चतेरुरन् ।
७३७ प्राततेररन् ।
७३८ अमेस्तुट् च ।
७३९ दहेर्गो लोपो दश्च नः ।
७४० सिचेः संज्ञायां हनुमौ कश्च ।
७४१ व्याङि घ्रातेश्च जातौ ।
७४२ हन्तेरच् घुर च ।
७४३ क्षमेरुपधालोपश्च ।
७४४ तरतेर्ड्रिः ।
७४५ प्रहेरनिः ।
७४६ प्रथेरमच् ।
७४७ चरश्च ।
७४८ मङ्गेरलच् ।

इत्युणादिषु पञ्चमः पादः ॥

**इति शाकटयनप्रणीत उणादिसूत्रपाठः ।**

# अथ शान्तनवाचार्यप्रणीतः फिट्सूत्रपाठः ।



१ फिषोऽन्त उदात्तः ।
२ पाटलापालङ्काम्बासागरार्थानाम् ।
३ गेहार्थानामस्त्रियाम् ।
४ गुदस्य च ।
५ ध्यपूर्वस्य स्त्रीविषयस्य ।
६ खान्तस्याश्मादेः ।
७ द्विष्ठवत्सरतिशत्थान्तानाम् ।
८ दक्षिणस्य साधौ ।
९ स्वाङ्गाख्यायामादिर्वा ।
१० छन्दसि च ।
११ कृष्णस्यामृगाख्या चेत् ।
१२ वा नामधेयस्य ।
१३ शुक्लगौरयोरादिः ।
१४ अङ्गुष्ठोदकबकवशानां छन्दस्यन्तः ।
१५ पृष्ठस्य च ।
१६ अर्जुनस्य तृणाख्या चेत् ।
१७ आर्यस्य स्वाम्याख्या चेत् ।
१८ आशाया अदिगाख्या चेत् ।
१९ नक्षत्राणामाब्विषयाणाम् ।
२० न कुपूर्वस्य कृत्तिकाख्या चेत् ।
२१ घृतादीनां च ।
२२ ज्येष्ठकनिष्ठयोर्वयसि ।
२३ बिल्वतिष्ययोः स्वरितो वा ।

**इति प्रथमः पादः ॥**

२४ अथादिः प्राक् शकटेः ।
२५ ह्रस्वान्तस्य स्त्रीविषयस्य ।
२६ नब्विषयस्यानिसन्तस्य ।
२७ तृणधान्यानां च द्व्यषाम् ।
२८ त्रः संख्यायाः ।
२९ स्वाङ्गशिटामदन्तानाम् ।
३० प्राणिनां कुपूर्वम् ।
३१ खय्युवर्णं कृत्रिमाख्या चेत् ।
३२ उनर्वन्नन्तानाम् ।
३३ वर्णानां तणतिनितान्तानाम् ।
३४ ह्रस्वान्तस्य ह्रस्वमनृत्ताच्छील्ये ।
३५ अक्षस्यादेवनस्य ।
३६ अर्धस्यासमद्योतने ।
३७ पीतद्वर्थानाम् ।
३८ ग्रामादीनां च ।
३९ लुबन्तस्योपमेयनामधेयस्य ।
४० न वृक्षपर्वतविशेषव्याघ्रसिंहमहिषाणाम् ।
४१ राजविशेषस्य यमन्वा चेत् ।
४२ लघावन्ते द्वयोश्च बह्वषो गुरुः ।
४३ स्त्रीविषयवर्णाक्षुपूर्वाणाम् ।
४४ शकुनीनां च लघुपूर्वम् ।
४५ नर्तुप्राण्याख्यायाम् ।
४६ धान्यानां च वृद्धक्षान्तानाम् ।
४७ जनपदशब्दानामषान्तानाम् ।
४८ हयादीनामसंयुक्तलान्तानामन्तः पूर्वं वा ।
४९ इगन्तानां च द्व्यषाम् ।

**इति द्वितीयः पादः ॥**

५० अथ द्वितीयं प्रागीषात् ।
५१ त्र्यचां प्राङ्मकारात् ।
५२ स्वाङ्गानामकुर्वादीनाम् ।
५३ मादीनां च
५४ शादीनां शाकानाम् ।
५५ पान्तानां गुर्वादीनाम् ।
५६ युतान्यण्यन्तानाम् ।
५७ मकरवरूढपारेवतवितस्तेक्ष्वार्जिद्राक्षाकलोमाकाष्ठापेष्ठाकाशीनामादिर्वा ।
५८ छन्दसि च ।
५९ कर्दमादीनां च ।
६० सुगन्धितेजनस्य ते वा ।
६१ नपः फलान्तानाम् ।
६२ यान्तस्यान्त्यात्पूर्वम् ।
६३ थान्तस्य च नालघुनी ।
६४ शिशुमारोदुम्बरबलीवर्दोष्ट्रारपुरूरवसां च ।
६५ सांकाश्यकाम्पिल्यनासिक्यदार्वाघाटानाम् ।
६६ ईषान्तस्य हयादेरादिर्वा ।
६७ उशीरदाशेरकपालपलालशैवालश्यामाकशारीरशरावहृदयहिरण्यारण्यापत्यदेवराणाम् ।
६८ महिष्यषाढयोर्जायेष्टकाख्या चेत् ।

**इति तृतीयः पादः ॥**

६९ शकटिशकट्योरक्षरमक्षरं पर्यायेण ।
७० गोष्ठजस्य ब्राह्मणनामधेयस्य ।
७१ पारावतस्योपोत्तमवर्जम् ।
७२ धूम्रजानुमुञ्जकेशकालवालस्थालीपाकानामधूजलस्थानाम् ।
७३ कपिकेशहरिकेशयोश्छन्दसि ।
७४ न्यङ्स्वरौ स्वरितौ ।
७५ न्यर्बुदव्यल्कशयोरादिः ।
७६ तिल्यशिक्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः ।
७७ बिल्वभक्ष्यवीर्याणि च्छन्दसि ।
७८ त्वत्त्वसमसिमेत्यनुच्चानि ।
७९ सिमस्याथर्वणेऽन्त उदात्तः ।
८० निपाता आद्युदात्ताः ।
८१ उपसर्गाश्चाभिवर्जम् ।
८२ एवादीनामन्तः ।
८३ वाचादीनामुभावुदात्तौ ।
८४ चादयोऽनुदात्ताः ।
८५ यथेति पादान्ते ।
८६ प्रकारादिद्विरुक्तौ परस्यान्त उदात्तः ।
८७ शेषं सर्वमनुदात्तम् ।

**इति चतुर्थः पादः ॥**

**इति शान्तनवाचार्यप्रणीतः फिट्सूत्रपाठः ॥**

# अष्टाध्यायीसूत्राणां सूची ।

| सूत्राङ्कः | सूत्रम् |
|---|---|
| ३२६ | एकाचो बशो भष् झ ८।२।३७ |
| २०४९ | एकाच्च प्राचाम् ५।३।९४ |
| ३०७ | एकाजुत्तरपदेणः ८।४।१२ |
| १९९८ | एकादाकिनिच्चास० ५।३।५२ |
| ८१२ | एकादिश्चैकस्य चादुक् ६।३।७६ |
| ३६५५ | एकादेश उदात्तेनोदात्तः ८।२।५ |
| १९९० | एकाद्धोध्यमुञन्य० ५।३।४४ |
| ३९६९ | एकान्याभ्यां सम० ८।१।६५ |
| १०९५ | एको गोत्रे ४।१।९३ |
| ८६ | एङः पदान्तादति ६।१।१०९ |
| ७८ | एङि पररूपम् ६।१।९४ |
| १३४० | एङ् प्राचां देशे १।१।७५ |
| १९३ | एङ्ह्रस्वात्संबुद्धेः ६।१।६९ |
| ३२३ | एच इग्घ्रस्वादेशे १।१।४८ |
| ३६२४ | एचोऽप्रगृह्यस्या० ८।२।१०७ |
| ६१ | एचोऽयवायावः ६।१।७८ |
| २९४१ | एजेः खश् ३।२।२८ |
| १५३७ | एण्या ढञ् ४।३।१५९ |
| ४३९ | एत ईद्बहुवचने ८।२।८१ |
| २३५३ | एत ऐ ३।४।९३ |
| १७६ | एतत्तदोः सुलोपो० ६।१।१३२ |
| १९६२ | एतदस्त्रतसोस्त्रतसौ० २।४।३३ |
| १९५१ | एतदोऽन् ५।३।५ |
| १०२५ | एति संज्ञायामगात् ८।३।९९(ग) |
| २८५७ | एतिस्तुशास्वृदृजु० ३।१।१०९ |
| १९५० | एतेतौ रथोः ५।३।४ |
| २४५७ | एतेर्लिङि ७।४।२४ |
| ७३ | एत्येधत्यूठ्सु ६।१।८ |
| १९९२ | एधाच्च ५।३।४६ |
| ६११ | एनपा द्वितीया २।३।३१ |
| १९८४ | एनबन्यतरस्यामदूरे० ५।३।३५ |
| ३२३१ | एरच् ३।३।५६ |
| २७२ | एरनेकाचोऽसंयोग० ६।४।८२ |
| २११६ | एरुः ३।४।८६ |
| २३७४ | एर्लिङि ६।४।६७ |
| ३९५० | एहि मन्ये प्रहासे लृट् ८।१।४६ |
| १७७६ | ऐकागारिकट् चौरे ५।१।११३ |
| १३२८ | ऐषमोह्यःश्वसोऽन्य० ४।२।१०५ |
| २५७७ | ओः पुयण्ज्यपरे ७।४।८० |
| २८१ | ओः सुपि ६।४।८३ |
| २८८० | ओक उचः के ७।३।६४ |
| १५७७ | ओजःसहोम्भसा० ४।४।२७ |
| ९६२ | ओजःसहोऽम्भस्तम० ६।३।३ |

| सूत्राङ्कः | सूत्रम् |
|---|---|
| ३४७६ | ओजसोऽहनि यत्खौ ४।४।१३० |
| १०४ | ओत् १।१।१५ |
| २५१० | ओतः श्यनि ७।३।७१ |
| १६९ | ओतो गार्ग्यस्य ८।३।२० |
| ३०१९ | ओदितश्च ८।२।४५ |
| ३६०४ | ओमभ्यादाने ८।२।८७ |
| ८० | ओमाङोश्च ६।१।९५ |
| १२८५ | ओरञ् ४।२।७१ |
| १५१९ | ओरञ् ४।३।१३९ |
| २८८६ | ओरावश्यके ३।१।१२५ |
| ८४९ | ओर्गुणः ६।४।१४६ |
| १३४५ | ओर्देशे ठञ् ४।२।११९ |
| २१०५ | ओषधेश्च जातौ ५।४।४७ |
| ३५३३ | ओषधेश्च विभक्ता० ६।३।१३२ |
| २०७ | ओसि च ७।३।१०४ |
| ११६१ | औक्षमनपत्ये ६।४।१७३ |
| २८७ | औङः आपः ७।१।१८ |
| २५६ | औत् ७।३।११८ |
| २८५ | औतोऽम्शसोः ६।१।९३ |
| ३६३३ | कः करत्करति कृ० ८।३।५० |
| १९४४ | कंशंभ्यां बभयुस्ति० ५।२।१३८ |
| ३८५३ | कंसमन्थशूर्पपा० ६।२।१२२ |
| १६९० | कंसाट्टिठन् ५।१।२५ |
| १५४७ | कंसीयपरशव्ययो० ४।३।१६८ |
| ८८६ | ककुदस्यावस्थायां० ५।४।१४६ |
| १३५२ | कच्छाग्निवक्त्र० ४।२।१२६ |
| १३५९ | कच्छादिभ्यश्च ४।२।१३३ |
| १४८९ | कठचरकाल्लुक् ४।३।१०७ |
| १६२३ | कठिनान्तप्रस्तारसं० ४।४।७२ |
| १७३३ | कडंकरदक्षिणाच्छ च ५।१।६९ |
| ७५२ | कडाराः कर्मधारये २।२।३८ |
| ७६८ | कणेमनसी श्रद्धाप्र० १।४।६६ |
| ३८४५ | कण्ठपृष्ठग्रीवाजङ्घं च ६।२।११४ |
| २६७८ | कण्ड्वादिभ्यो यक् ३।१।२७ |
| १३३४ | कण्वादिभ्यो गोत्रे ४।२।१११ |
| ३७८८ | कतरकतमौ कर्म० ६।२।५७ |
| ७४३ | कतरकतमौ जाति० २।१।६३ |
| १३१७ | कत्र्यादिभ्यो ढकञ् ४।२।९५ |
| १६५४ | कथादिभ्यष्ठक् ४।४।१०२ |
| ३४४९ | कद्रुकमण्डल्वोश्छ० ४।१।७१ |
| ३८५५ | कन्था च ६।२।१२४ |
| १३६८ | कन्थापलदनगर० ४।२।१४२ |
| १३२४ | कन्थायाष्ठक् ४।२।१०२ |

| सूत्राङ्कः | सूत्रम् |
|---|---|
| ११२१ | कन्यायाः कनीन च ४।१।११६ |
| १७९२ | कपिज्ञात्योर्ढक् ५।१।१२७ |
| ३९०४ | कपि पूर्वम् ६।२।१७३ |
| १११२ | कपिबोधादाङ्गिरसे ४।१।१०७ |
| ३०८४ | कपिष्ठलो गोत्रे ८।३।९१ |
| २३१० | कमेर्णिङ् ३।१।३० |
| १६६३ | कम्बलाच्च संज्ञायाम् ५।१।३ |
| ११९६ | कम्बोजाल्लुक् ४।१।१७५ |
| ३२९३ | करणाधिकरणयोश्च ३।३।११७ |
| ६०५ | करणे च स्तोकाल्प० २।३।३३ |
| २९९६ | करणे यजः ३।२।८५ |
| ३२५९ | करणेऽयोविद्रुषु ३।३।८२ |
| ३३५८ | करणे हनः ३।४।३७ |
| २०६५ | कर्कलोहितादीकक ५।३।११० |
| १४४६ | कर्णललाटात्कनलं० ४।३।६५ |
| १०३८ | कर्णे लक्षणस्यावि० ६।३।११५ |
| ३८४३ | कर्णो वर्णलक्षणात् ६।२।११२ |
| २६८० | कर्तरि कर्मव्यतिहारे १।३।१४ |
| २८३२ | कर्तरि कृत् ३।४।६७ |
| ७११ | कर्तरि च २।२।१६ |
| ३१६७ | कर्तरि चर्षिदेवतयोः ३।२।१८६ |
| २९७४ | कर्तरि भुवः खिष्णुच्० ३।२।५७ |
| २१६७ | कर्तरि शप् ३।१।६८ |
| २९८९ | कर्तर्युपमाने ३।२।७९ |
| २६६५ | कर्तुः क्यङ् सलोपश्च ३।१।११ |
| ५३६ | कर्तुरीप्सिततमं कर्म १।४।४९ |
| ५६२ | कर्तृकरणयोस्तृतीया २।३।१८ |
| ६९५ | कर्तृकरणे कृता बहु० २।१।३२ |
| ६२४ | कर्तृकर्मणोः कृति २।३।६५ |
| ३३०८ | कर्तृकर्मणोश्च भूकृ० ३।३।१२७ |
| २७१० | कर्तृस्थे चाशरीरे क० १।३।३७ |
| ३३६४ | कर्त्रोर्जीवपुरुषयोर्न० ३।४।४३ |
| १७६७ | कर्मण उकञ् ५।१।१०३ |
| ५७० | कर्मणा यमभिप्रैति १।४।३२ |
| १८३६ | कर्मणि घटोऽठच् ५।२।३५ |
| ७०९ | कर्मणि च २।२।१४ |
| ३२९१ | कर्मणि च येन सं० ३।३।११६ |
| ३३५० | कर्मणि दृशिविदोः ३।४।२९ |
| ५६८ | कर्मणि द्वितीया २।३।२ |
| २९३६ | कर्मणि भृतौ ३।२।२२ |
| २९९७ | कर्मणि हनः ३।२।८६ |
| ३००३ | कर्मणीनिविक्रियः ३।२।९३ |
| २६७१ | कर्मणो रोमन्थत० ३।१।१५ |

| सूत्राङ्कः | सूत्रम् |
|---|---|
| ११०९ | गर्गादिभ्यो यञ् ४।१।१०५ |
| १३६३ | गर्तोत्तरपदाच्छः ४।२।१३७ |
| २७९९ | गर्हायां लडपि० ३।३।१४२ |
| २८०६ | गर्हायां च ३।३।१४९ |
| ९१७ | गवाश्वप्रभृतीनि च २।४।११ |
| ९६९ | गवियुधिभ्यां स्थिरः ८।३।९५ |
| २९०८ | गः स्थकन् ३।१।१४६ |
| १३६४ | गहादिभ्यश्च ४।२।१३८ |
| २४६१ | गाङ्कुटादिभ्योऽञ्णि० १।२।१ |
| २४५९ | गाङ् लिटि २।४।४९ |
| १९१७ | गाण्ड्यजगात्संज्ञा० ५।२।११० |
| २२२३ | गातिस्थाघुपाभूभ्यः० २।४।७७ |
| १२७७ | गाथिविदथिकेशि० ६।४।१६५ |
| ३७३५ | गाधलवणयोः प्रमाणे ६।२।४ |
| २९२२ | गापोष्टक् ३।२।८ |
| ६८४ | गिरेश्च सेनकस्य ५।४।११२ |
| १६५५ | गुडादिभ्यष्ठञ् ४।४।१०३ |
| १७८८ | गुणवचनब्राह्मणा० ५।१।१२४ |
| २४४८ | गुणोऽपृक्ते ७।३।९१ |
| २६३० | गुणो यङ्लुकोः ७।४।८२ |
| २३८० | गुणोऽर्तिसंयोगाद्योः ७।४।२९ |
| २३०३ | गुपूधूपविच्छिपणि० ३।१।२८ |
| ३४०४ | गुपेश्छन्दसि ३।१।५० |
| २३९३ | गुप्तिज्किद्भ्यः सन् ३।१।५ |
| ९७ | गुरोरनृतोऽनन्त्यस्या० ८।२।८६ |
| ३२८० | गुरोश्च हलः ३।३।१०३ |
| २७३९ | गृधिवञ्च्योः प्रलम्भने १।३।६९ |
| ११४५ | गृष्ट्यादिभ्यश्च ४।१।१३६ |
| १६४२ | गृहपतिना संयुक्ते ञ्यः ४।४।९० |
| २९०६ | गेहे कः ३।१।१४४ |
| ३५७२ | गोः पादान्ते ७।१।५७ |
| ३२९८ | गोचरसंचरवहव्र० ३।३।११९ |
| ३८०९ | गोतन्तियवं पाले ६।२।७८ |
| २८४ | गोतो णित् ७।१।९० |
| १४८१ | गोत्रक्षत्रियाख्येभ्यो० ४।३।९९ |
| १७९९ | गोत्रचरणाच्छ्लाघा० ५।१।१३४ |
| १५०८ | गोत्रचरणाद्वुञ् ४।३।१२६ |
| ११७३ | गोत्रस्त्रियाः कुत्स० ४।१।१४७ |
| १४६१ | गोत्रादङ्कवत् ४।३।८० |
| १०९६ | गोत्राद्यून्यस्त्रियाम् ४।१।९४ |
| ३८५० | गोत्रान्तेवासिमाणव० ६।२।६९ |
| १२०१ | गोत्रावयवात् ४।१।७९ |
| ११०१ | गोत्रे कुञ्जादिभ्यः० ४।१।९८ |

| सूत्राङ्कः | सूत्रम् |
|---|---|
| १०८३ | गोत्रेऽलुगचि ४।१।८९ |
| १२४८ | गोत्रोक्षोष्ट्रोरभ्रराज० ४।२।३९ |
| १७०५ | गोद्व्यचोऽसंख्या० ५।१।३९ |
| ११३७ | गोधाया ढ्रक् ४।१।१२९ |
| १५३८ | गोपयसोर्यत् ४।३।१६० |
| १५५४ | गोपुच्छाट्ठञ् ४।४।६ |
| १३६२ | गोयवाग्वोश्च ४।२।१३६ |
| ७३० | गोरतद्धितलुकि ५।४।९२ |
| ३८०३ | गोबिडालसिंहसैन्धव० ६।२।७२ |
| १५२५ | गोश्च पुरीषे ४।३।१४५ |
| १८६२ | गोषदादिभ्यो वुन् ५।२।६२ |
| १८१९ | गोष्ठात्खञ्भूतपूर्वे ५।२।१८ |
| १०६२ | गोष्पदं सेवितासे० ६।१।१४५ |
| ६५७ | गोस्त्रियोरुपसर्जनस्य १।२।४८ |
| ३७७२ | गौः सादसादिसार० ६।२।४१ |
| १०१२ | ग्रन्थान्ताधिके च ६।३।७९ |
| ३५८० | ग्रसितस्कभितस्त० ७।२।३४ |
| ३२३४ | ग्रहवृदनिश्चिगमश्च ३।३।५८ |
| २४१२ | ग्रहिज्यावयिव्यधिव० ६।१।१६ |
| २५६२ | ग्रहो लिटि दीर्घः ७।२।३७ |
| ३७९३ | ग्रामः शिल्पिनि ६।२।६२ |
| ७९८ | ग्रामकौटाभ्यां च त० ५।४।९५ |
| १३७९ | ग्रामजनपदैकदेशाद० ४।३।७ |
| १२५३ | ग्रामजनबन्धुभ्यस्तल् ४।२।४३ |
| १४४२ | ग्रामात्पर्यनुपूर्वात् ४।३।६१ |
| १३१६ | ग्रामाद्यखञौ ४।२।९४ |
| ३८१५ | ग्रामेऽनिवसन्तः ६।२।८४ |
| ९४१ | ग्राम्यपशुसङ्घेष्वतरु० १।२।७३ |
| १४३६ | ग्रीवाभ्योऽण्च ४।३।५७ |
| १४२३ | ग्रीष्मवसन्तादन्यत० ४।३।४६ |
| १४२६ | ग्रीष्मावरसमाद्वुञ् ४।३।४९ |
| २६३९ | ग्रो यङि ८।२।२० |
| ३११९ | ग्लाजिस्थश्च ग्स्नुः ३।२।१३९ |
| ९७७ | घकालतनेषु काल० ६।३।१७ |
| ३४६३ | घच्छौ च ४।४।११७ |
| १२६९ | घञः सास्यां क्रिये० ४।२।५८ |
| ३२३६ | घञपोश्च २।४।३८ |
| ३१८९ | घञि च भावकरणयोः ६।४।२७ |
| २०३४ | घनिलचौ च ५।३।७९ |
| ९८७ | घरूपकल्पचेलड्ब्रुव० ६।३।४३ |
| ३५४८ | घसिभसोर्हलि च ६।४।१०० |
| २४६२ | घुमास्थागापाजहा० ६।४।६६ |
| ३०६३ | घुषिरविशब्दने ७।२।२३ |

| सूत्राङ्कः | सूत्रम् |
|---|---|
| २४५ | घेर्ङिति ७।३।१११ |
| ३५८२ | घोर्लोपो लेटि वा ७।२।७० |
| ३८१६ | घोषादिषु च ६।२।८५ |
| २४७१ | घ्वसोरेद्धावभ्यास० ६।४।११९ |
| १३४ | ङमो ह्रस्वादचि ङमु० ८।३।३२ |
| ३६९७ | ङयि च ६।१।२१२ |
| २४६ | ङसिङसोश्च ६।१।११० |
| २१६ | ङसिङ्योः स्मात्स्मिनौ ७।१।१५ |
| ४३ | ङिच्च १।१।५३ |
| २९६ | ङिति ह्रस्वश्च १।४।६ |
| ३८२ | ङेप्रथमयोरम् ७।१।२८ |
| २७० | ङेराम्नद्याम्नीभ्यः ७।३।११६ |
| २०४ | ङेर्यः ७।१।१३ |
| १३० | ङ्णोः कुक्टुक्शरि ८।३।२८ |
| १००३ | ङ्यापोः संज्ञाछन्द० ६।३।६३ |
| १८२ | ङ्याप्प्रातिपदिकात् ४।१।१ |
| ३७२१ | ङ्याश्छन्दसि बहु० ६।१।१७८ |
| २४३६ | चक्षिङः ख्याञ् २।४।५४ |
| २३१५ | चङि ६।१।११ |
| ३६७६ | चङ्यन्यतरस्याम् ६।१।२१८ |
| २८६३ | चजोः कुघिण्यतोः ७।३।५२ |
| ११३६ | चटकाया ऐरक् ४।१।१२८ |
| ३६७९ | चतुरः शसि ६।१।१६४ |
| ३३१ | चतुरनडुहोरामुदात्तः ७।१।९८ |
| ६३२ | चातुर्थी चाशिष्यायु० २।३।७३ |
| ६९९ | चतुर्थी तदर्थार्थब० २।१।३६ |
| ३७७४ | चतुर्थी तदर्थे ६।२।४३ |
| ५७१ | चतुर्थी संप्रदाने २।३।१३ |
| ३३९६ | चतुर्थ्यर्थे बहुलं छ० २।३।६२ |
| ७५४ | चतुष्पादो गर्भिण्या २।१।७१ |
| ११४२ | चतुष्पाद्भ्यो ढञ् ४।१।१३५ |
| ३९६१ | चनचिदिवगोत्रादि० ८।१।५७ |
| १०१६ | चरणे ब्रह्मचारिणि ६।३।८६ |
| १२५७ | चरणेभ्यो धर्मवत् ४।२।४६ |
| १५५६ | चरति ४।४।८ |
| २६३६ | चरफलोश्च ७।४।८७ |
| २९३० | चरेष्टः ३।२।१६ |
| १६७७ | चर्मणोऽण् ५।१।१५ |
| ३३५२ | चर्मोदरयोः पूरेः ३।४।३१ |
| ३१२८ | चलनशब्दार्थाद० ३।२।१४८ |
| ३९६३ | चवायोगे प्रथमा ८।१।५९ |
| २० | चादयोऽसत्वे १।४।५७ |
| ३९६७ | चादिलोपे विभाषा ८।१।६३ |

सूत्राङ्कः सूत्रम्

३९६२ चादिषु च ८।१।५८
२६४७ चायः की ६।१।२१
३५१० चायः की ६।१।३५
९०३ चार्थे द्वन्द्वः २।२।२९
३९६६ चाहलोप एवेत्यव० ८।१।६२
२३२८ चिणो लुक् ६।४।१०४
२७६२ चिण्णमुलोर्दीर्घोऽन्य० ६।४।९३
२५१३ चिण्ते पदः ३।१।६०
२७५८ चिण्भावकर्मणोः ३।१।६६
३७०७ चितः ६।१।१६३
१०४९ चितेः कपि ६।३।१२७
१७५५ चित्तवति नित्यम् ५।१।८९
२८९३ चित्याग्निचित्ये च ३।१।१३२
२८०७ चित्रीकरणे च ३।३।१५०
३६१८ चिदिति चोपमार्थे० ८।२।१०१
३२८२ चिन्तिपूजिकथि० ३।३।१०५
२५६९ चिस्फुरोर्णौ ६।१।५४
३८५८ चीरमुपमानम् ६।२।१२७
१८९ चुटू १।३।७
१५७३ चूर्णादिनिः ४।४।२३
३८६५ चूर्णादीन्यप्राणि० ६।२।१३४
३८५७ चेलखेटकटुकका० ६।२।१२६
३३५४ चेले क्नोपेः ३।४।३३
३७८ चोः कुः ८।२।३०
३६५० चौ ६।१।२२२
४१८ चौ ६।३।१३८
२५६१ च्छ्वोः शूडनुनासिके च६।४।१९
२२२१ च्लि लुङि ३।१।४३
२२२२ च्लेः सिच् ३।१।४४
२१२० च्वौ च ७।४।२६
१४९१ छगलिनो ढिनुक् ४।३।१०९
१२३२ छ च ४।२।२८
१६१२ छत्रादिभ्यो णः ४।४।६२
१६७५ छदिरुपधिवलेर्ढञ् ५।१।१३
३४२१ छन्दसि गत्यर्थेभ्यः ३।३।१२९
३४९४ छन्दसि घस् ५।१।१०६
३४९१ छन्दसि च ५।१।६७
३५०६ छन्दसि च ५।४।१४२
३५३१ छन्दसि च ६।३।१२६
३४४८ छन्दसि ठञ् ४।३।१९
३४०७ छन्दसि निष्टर्क्य० ३।१।१२३
१८८९ छन्दसि परिपन्थि० ५।२।८९
३३९१ छन्दसि परेऽपि १।४।८१
३३८७ छन्दसि पुनर्वस्वोरे० १।२।६१
३०९३ छन्दसि लिट् ३।२।१०५
३४२३ छन्दसि लुङ् लङ्० ३।४।६
३४०८ छन्दसि वनसनर० ३।२।२७
३६३२ छन्दसि वा प्राम्रे० ८।३।४९
३४३२ छन्दसि शायजपि ३।१।८४
३४०९ छन्दसि सहः ३।२।६३
३५९८ छन्दसीरः ८।२।१५
१६४५ छन्दसो निर्मिते ४।४।९३
१४५२ छन्दसो यदणौ ४।३।७१
३९३९ छन्दस्यनेकमपि० ८।१।३५
३५४३ छन्दस्यपि दृश्यते ६।४।७३
३५७३ छन्दस्यपि दृश्यते ७।१।७६
३४३५ छन्दस्युभयथा ३।४।११७
३५२८ छन्दस्युभयथा ६।४।५
३५४६ छन्दस्युभयथा ६।४।८६
३६४६ छन्दस्यृदवग्रहात् ८।४।२६
१५११ छन्दोगौक्थिकया० ४।३।१२९
३२०५ छन्दोनाम्नि च ३।३।३४
३२०६ छन्दोनाम्नि च ८।३।९४
१२८० छन्दोब्राह्मणानि च त० ४।२।६६
३८१८ छात्र्यादयः शालायां ६।२।८६
३२९७ छादेर्घेऽद्व्युपसर्गस्य ६।४।९६
८२६ छायाबाहुल्ये २।४।२२
१४६ छे च ६।१।७३
१७२९ छेदादिभ्यो नित्यम् ५।१।६४
३१२ जश्शसोः शिः ७।१।२०
४२९ जक्षित्यादयः षट् ६।१।६
१४३४ जङ्गलधेनुवलजान्त० ७।३।२५
१३५० जनपदतदवध्योश्च ४।२।१२४
११८८ जनपदशब्दात्क्ष० ४।१।१६८
१४८२ जनपदिनां जनपद० ४।३।१००
१२९५ जनपदे लुप् ४।२।८१
३४१३ जनसनखनक्रमग० ३।२।६७
२५०४ जनसनखनां सञ्झलोः६।४।४२
५९४ जनिकर्तुः प्रकृतिः १।४।३०
३५४० जनिता मन्त्रे ६।४।५३
२५१२ जनिवध्योश्च ७।३।३५
२६३८ जपजभदहदशभञ्ज० ७।४।८६
१५४४ जम्ब्वा वा ४।३।१६५
८६६ जम्भासुहरिततृण० ५।४।१२५
३६८७ जयः करणम् ६।१।२०२
२२७ जराया जरसन्य० ७।२।१०१
३१३५ जल्पभिक्षकुट्टलुण्ट० ३।२।१५५
२१४ जसः शी ७।१।१७
२४१ जसि च ७।३।१०९
२४९८ जहातेश्च ६।४।११६
३३३१ जहातेश्च क्त्वि ७।४।४३
३१४५ जागरूकः ३।२।१६५
२४८० जाग्रोऽविचिण्ण० ७।३।८५
१५३१ जातरूपेभ्यः प० ४।३।१५३
३९०१ जातिकालसुखा० ६।२।१७०
२०३७ जातिनाम्नः कन् ५।३।८१
९१२ जातिरप्राणिनाम् २।४।६
२८०४ जातुयदोर्लिङ् ३।३।१४७
५१९ जातेरस्त्रीविषयाद० ४।१।६३
८४३ जातेश्च ६।३।४१
२०८१ जात्यन्ताच्छ बन्धुनि० ५।४।९
८१८ जात्याख्यायामेक० १।२।५८
३९५१ जात्वपूर्वम् ८।१।४७
५०१ जानपदकुण्ड० ४।१।४२
३३३० जान्तनशां विभाषा ६।४।३२
८७४ जायाया निङ् ५।४।१३४
३३०३ जालमानायः ३।३।१२४
६१८ जासिनिप्रहणनाट० २।३।५६
२५८९ जिघ्रतेर्वा ७।४।६
३१३७ जिदृक्षिविश्री० ३।२।१५७
१४४३ जिह्वामूलाङ्गुलेश्छः ४।३।६२
३०९२ जीर्यतेरतृन् ३।२।१०४
१०९२ जीवति तु वंश्ये० ४।१।१६३
२०५४ जीवकार्थे चापण्ये० ५।३।९९
७८१ जीविकोपनिषदावौ० १।४।७९
३१३० जुचङ्क्रम्यदन्द्र० ३।२।१५०
३६९४ जुष्टार्पिते च च्छ० ६।१।२०९
२४८१ जुसि च ७।३।८३
२४८९ जुहोत्यादिभ्यः श्लुः २।४।७५
३३२७ जॄव्रश्च्योः क्त्वि ७।२।५५
२२९१ जॄस्तम्भुम्रुचु० ३।१।५८
१४११ जे प्रोष्ठपदानाम् ७।३।१८
२५११ ज्ञाजनोर्जा ७।३।७९
२७३१ ज्ञाश्रुस्मृदृशां सनः १।३।५७
६१३ ज्ञोऽविदर्थस्य करणे २।३।५१
२०११ ज्य च ५।३।६१
३३४० ज्यश्च ६।१।४२
२०१२ ज्यादादीयसः ६।४।१६०
१०२३ ज्योतिरायुषः स्तोमः ८।३।८३

सूत्राङ्कः सूत्रम्

